श्री

# वाल्मीकि रामायणम्

(१) तिलक-(२) शिरोमणि-(३) भूषणाख्य
टीकात्रयोपेतम्

## (५) सुन्दरकाण्डम्

# VALMEEKI RAMAYAN

WITH

TILAK, SHIROMANI & BHOOSHAN
COMMENTARIES

## (5) SUNDAR KANDA

प्रकाशकप्राप्तिस्थानम्-
"गुजराती" प्रिन्टिंग प्रेस
कोट मुंबई-१
मूल्यम् रु. [illegible]

2-3

# RÂMÂYAN

OF

## VÂLMÎKI

WITH THREE COMMENTARIES CALLED

**TILAKA, SHIROMANI, and BHOOSHANA**

WITH NUMEROUS READINGS AND NOTES

**SUNDARKANDA**

EDITED BY

**SHASTRI SHRINIVASA KATTI MUDHOLKARA**

SANSKRITA ADHYAPAKA IN THE ELPHINSTONE COLLEGE,—BOMBAY



**THE NEWS PRINTING PRESS**

**of the "Gujarati"**

BAKE HOUSE LANE, FORT,

**BOMBAY.**

श्रीमद्वाल्मीकिमहामुनिप्रणीतं

# रामायणम् ।

रामायणतिलक-रामायणशिरोमणि-रामायणभूषणेति-
टीकात्रयोपेतम् ।

## सुन्दरकाण्डम् ।

एल्फिन्स्टन्कॉलेजूसंज्ञकांग्लपाठशालायां संस्कृताध्यापकैर्मुधोळकरोपाह्व-
कट्टी-श्रीनिवासशास्त्रिभिः
संशोधितं पाठान्तरैः सनाथीकृतं स्थलविशेषेषु टिप्पणीभिः समलंकृतं च ।

प्राप्तिस्थानम्
"गुजराती"पत्रस्य धी न्युस प्रिंटिंग मुद्रणालयः ।
काळाघोडा, बेक-हाउस लेन, कोट, मुंबई.

॥ श्रीः ॥

आदिकविश्रीवाल्मीकिमहामुनिप्रणीतं

# रामायणम् ।

तिलक-रामायणशिरोमणि-गोविन्दराजीये(भूषणे)ति-
टीकात्रयसमलंकृतम्

## सुन्दरकाण्डम् ।

### प्रथमः सर्गः ।

सीतामन्वेष्टुं लङ्कां जिगमिषुर्हनुमान् महेन्द्रशिखरादुत्प्लुत्य जलमध्यादुद्गत्य स्वशिखरे विश्राममर्थयमानं मैनाकं करतलसंस्पर्शनेन संमान्य स्वबलपरिरक्षया वरदानपूर्वकं देवैः प्रेषितां निट्चरीरूपधारिणीं सुरसां मुखं व्यादाय परिपालयन्तीं धृतसूक्ष्मरूपस्तदुदरं प्रविश्यापि अहिंसितैव बहिर्निरगच्छत् । तथैव सिंहिकाख्यनिट्चरीं मुखं व्यादाय प्रसितुं प्रतिपालयन्तीं स्वीकृतसूक्ष्मदेहस्तदुदरं प्रविश्य विदारणपूर्वकं व्यापादयत् । अथ च राक्षसजनसंभ्रमं वारयिष्यन्निजदेहं तनूकृत्य लङ्काबहिःस्थलम्बगिरिशिखरे न्यपतत् ।

ततो रावणनीतायाः सीतायाः शत्रुकर्षणः । इयेष पदमन्वेष्टुं चारणाचरिते पथि ॥ १ ॥

तिलकटीका ।

सुन्दरे यस्य दासोऽब्धिं तीर्त्वा दृष्ट्वा च मैथिलीम् ।
दृष्टा सीतेत्यभ्यवोचत्तं रामं नौमि चिद्घनम् ॥

१ ] अथ समुद्रकूर्दनमिच्छति स्म—तत इति । ततः शत्रुकर्षणो हनुमान्रावणनीताया रावणहृतायाः सीतायाः पदमवस्थितिस्थानमन्वेष्टुं चारणैर्देवजातिविशेषैराचरिते क्रियमाणसंचारे पथ्याकाशमार्गे गमनायेयेष ॥ १ ॥

रामायणशिरोमणिः ।

स्वस्ति श्रीमनुवंशवर्धनपरं सर्वेश्वरैः संस्तुतं
श्रीरामं सह लक्ष्मणं सुरतरुप्रख्यं सदा मारुतिम् ।
सीताध्यानपरायणं सुरनुतं ज्ञानप्रदं सत्कृतं
रामेणाखिलराजराजितपदा वन्देऽप्यभीष्टप्रदम् ॥ १ ॥
वन्दे त्रिवेणीं निखिलार्थवेणीं
वन्दे प्रयागं सुविशालयागम् ।
वन्दे महान्तं गुरुमार्यभान्तं
वन्दे गणेशं सुखसर्वदेशम् ॥ २ ॥
वाल्मीकेश्चरणौ नत्वा तदीयरचिते परे ।
सुन्दरे विदधे कुर्मो रामायणशिरोमणिम् ॥ ३ ॥
यस्य सान्निध्यमात्रेण ब्रह्मत्वं प्राप्यते जनैः ।
तं वन्दे सर्वदातारं त्रिवेणतिटमुत्तमम् ॥ ४ ॥
सीतारामसमारम्भां शुकाचार्यादिमध्यगाम् ।
अस्मदाचार्यपर्यन्तां वन्दे गुरुपरम्पराम् ॥ ६ ॥

रा० टी०—जाम्बवत्कर्तृकसागरतरणोद्देश्यकप्रोत्साहनानन्तरकालिकं वृत्तान्तमाह—तत इत्यादिभिः । ततः स्ववीर्यस्मरणानन्तरं सीतायाः पदं स्थितिप्रदेशमन्वेष्टुं चारणैर्देवजातिविशेषैः आचरिते अतिसंचारविशिष्टे पथि आकाशमार्गे प्राप्तुमिति शेषः, इयेष ववाञ्छ ॥ १ ॥

भूषणटीका ।

तत्त्वज्ञानसमुच्चयो घनदयासारस्य सारो महा-
न्निष्कर्षः कमलानिवासचरणद्वन्द्वानुरागस्मृतेः ।
अक्लेशः परिपाक एष जगतामक्षय्यपुण्यावले-
रस्माकं निधिरक्षयो विजयते श्रीमान् शठारिर्गुरुः ॥ १ ॥

१ कर्शन इति गो. पाठः ।

दुष्करं निष्प्रतिद्वन्द्वं चिकीर्षन्कर्म वानरः । समुदग्रशिरोग्रीवो गवां पतिरिवाबभौ ॥ २ ॥
अथ वैदूर्यवर्णेषु शाद्वलेषु महाबलः । धीरः सलिलकल्पेषु विचचार यथासुखम् ॥ ३ ॥
द्विजान्वित्रासयन्धीमानुरसा पादपान्हरन् । मृगांश्च सुबहून्निघ्नन्प्रवृद्ध इव केसरी ॥ ४ ॥
नीललोहितमाञ्जिष्ठपद्मवर्णैः सितासितैः । स्वभावसिद्धैर्विमलैर्धातुभिः समलंकृतम् ॥ ५ ॥
कामरूपिभिराविष्टमभीक्ष्णं सपरिच्छदैः । यक्षकिंनरगन्धर्वैर्देवकल्पैः सपन्नगैः ॥ ६ ॥
स तस्य गिरिवर्यस्य तले नागवरायुते । तिष्ठन्कपिवरस्तत्र ह्रदे नाग इवाबभौ ॥ ७ ॥

---

श्रीरामायणभूषायै प्रवृत्तो रामभक्तितः ।
व्याख्यां सुन्दरकाण्डस्य तिलकं कलयाम्यहम् ॥ २ ॥

उक्तं परत्वासाधारणं समस्तकल्याणगुणाकरत्वं किष्किन्धाकाण्डे अत्र सर्वसंहर्तृत्वमुच्यते वक्ष्यति हि–'तत् ब्रह्मा स्वयंभूः' इत्यादिना । यद्वा पूर्वस्मिन्काण्डे सर्वथा मित्रसंरक्षणं कार्यमित्युक्तम् अत्र दूतेन पतिव्रतया चैवं वर्तितव्यमित्यर्थः प्रतिपाद्यते । यद्वा पूर्वत्र सर्वरक्षणप्रवृत्तस्य विष्णोराचार्यरूपपुरुषकारलाभ उक्तः । अधुना आचार्यकृत्यमुच्यते । तत्र प्रथमे सर्गे शिक्षणीयशिष्यान्वेषणमुपपाद्यते—तत इत्यादि । ततः जाम्बवत्प्रोत्साहनानन्तरं चारणाः संचचारिणो देवगायकाः तैराचरिते पथि आकाशे रावणनीतायाः सीतायाः पदं स्थानमन्वेष्टुमियेष शत्रुकर्शनः तदन्वेषणविरोधिनिरसनसमर्थः । यद्वा चारणाचरिते पथि गत्वा सीतायाः पदमन्वेष्टुमियेष । यद्वा यथापाठमेवान्वयः आकाशेऽपि पदन्यासान्वेषणसमर्थोऽयमिति बुद्धिचातुर्यातिशय उच्यते। अनेन शिष्यस्थानान्वेषणपरगुरुस्वरूपमुच्यते । ततः मुद्राप्रदानपूर्वकभगवदनुज्ञालाभानन्तरं शत्रुकर्शनः । 'गुशब्दस्त्वन्धकारः स्याद्रुशब्दस्तन्निरोधकः । अन्धकारनिरोधित्वाद्गुरुरित्यभिधीयते ॥' इत्युक्तरीत्या अज्ञाननिवर्तनशीलो गुरुः चारयन्ति आचारयन्ति धर्मानिति चारणाः पूर्वाचार्याः तैराचरिते पथि 'महाजनो येन गतः स पन्थाः' इत्युक्तसदाचारे स्थित इति शेषः । रावयति असत्प्रलापान्कारयतीति रावणः अविवेकः तेन नीतायाः स्ववशं प्रापितायाः सीतायाः अनादिभगवत्परतन्त्रचेतनस्य सीताशब्देनायोनिजत्वोक्तिः स्त्रीलिङ्गेन पारतन्त्र्योक्तेश्च स्त्रीप्रायमितरत्सर्वमिति ह्युक्तम् पदं स्थानं संसारमण्डलमन्वेष्टुं सात्त्विकसंभाषणादि चिह्नं वा । तथोक्तम्–'विष्णोः कटाक्षश्चाद्वेष आभिमुख्यं च सात्त्विकैः । संभाषणं षडेतानि त्वाचार्यप्राप्तिहेतवः' इति । यद्वा पदं व्यवसायमन्वेष्टुं कस्य चेतनस्य भगवत्प्राप्तावध्यवसाय इत्यन्वेष्टुम् इयेष । 'पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु' इत्यमरः । अत्रैकादशसहस्रश्लोका गताः । द्वादशसहस्रस्यादिमोऽयं श्लोकः। अत्र गायत्र्याः द्वादशमक्षरं प्रयुक्तम् तदवलोकनीयं विद्वद्भिः ॥ १ ॥

२]ति० टी०–निष्प्रतिद्वन्द्वं सहायान्तररहितं प्रतिबन्धरहितं च अन्यैर्दुष्करं कर्म लङ्घनपूर्वं सीतान्वेषणकर्म । समुदग्रमुन्नतं शिरो ग्रीवा च यस्य सः, अत एव गवां पतिर्वृष इवाबभौ॥२॥

रा० टी०–दुष्करमिति । दुष्करमन्यैः कर्तुमशक्यम् अत एव निर्गतः प्रतिद्वन्द्वः द्वितीयः कर्ता विघ्नो वा यस्य तत्कर्म चिकीर्षन् समुदग्रं सम्यग् उन्नतं शिरोग्रीवं यस्य स हनूमान् गवाम्पतिः महावृषभ इव आबभौ ॥ २ ॥

गो० टी०–दुष्करमिति । निष्प्रतिद्वन्द्वं यथा भवति तथा दुष्करं चिकीर्षन् समुदग्रशिरोग्रीवः समुन्नतशिरोग्रीवः गवां पतिः वृषभः ॥ २ ॥

३-४ ]ति० टी०–वैदूर्यवर्णशाद्वलप्रदेशस्य समुद्रजलवच्छ्यामत्वमृदुत्वाभ्यामुरसा प्लवनसदृशक्रियाकालिकोरःपेषणेन प्रवृद्धः केसरीव विचचार ॥ ३ ॥ ४ ॥

रा० टी०–अथेति । सलिलकल्पेषु राशीभूतत्वेन सागरजलसदृशेषु वैदूर्यवर्णेषु वैदूर्यवर्णसदृशवर्णविशिष्टेषु शाद्वलेषु गिरिकोमलतृणेषु यथासुखम् अथ समङ्गलं महाबलो हनूमान् द्विजान् पक्षिणः वित्रासयन् उरसा पादपान् हरन् विदारयन् मृगांश्च निघ्नन् प्रवृद्धः केसरी सिंह इव विचचार । श्लोकद्वयमेकान्वयि ॥ ३ ॥ ४ ॥

गो० टी०–अथेति । शाद्वलानां सलिलकल्पत्वं वैदूर्यवर्णतया ॥ ३ ॥

गो० टी०–द्विजानिति । केसरीव बभाविति शेषः ॥४॥

५–७ ] ति० टी०–नीललोहितो रक्तश्यामः । माञ्जिष्ठः कृष्णपाण्डुर इति कतकः । माञ्जिष्ठः पाटल इत्यन्ये । पद्मवर्णः प्रसिद्धः । सितासितैः कल्मापैः कृष्णपाण्डुरैरिति यावत् । स्वभावसिद्धैः शैलस्वभावसिद्धैरुक्तरूपैर्धातुभिः समलंकृतम् । कामरूपित्वादिविशेषणवद्भिर्यक्षादिभिरभीक्ष्णमाविष्टं यत्तस्य गिरिवर्यस्य तलं तत्र नागवरैरासमन्तायुते तिष्ठन्स कपिर्ह्रदे नाग इवाबभौ । गिरौ ह्रदसाम्यं श्यामलत्वेन ॥ ५–७ ॥

रा० टी०–नीलेति । नीललोहिताः अरुणत्वश्यामत्वोभयाक्रान्ताः पद्मवर्णाः पद्मरागाः सितासिताः कल्मापाः सर्वे मणिविशेषाः तैः स्वभावसिद्धैर्गिरिस्वभावनिष्पन्नैः विमलैर्धातुभिश्च समलंकृतं कामरूपिभिः यक्षादिभिराविष्टं यत् तस्मिन् नागवरायुते तस्य गिरिवर्यस्य तले तिष्ठन् सन् कपिवरो हनू-

---



१ वैडूर्येति गो. पाठः । २ विहितैश्चित्रैरिति गो. पाठः । ३ चेति गो. पाठः ।

स सूर्याय महेन्द्राय पवनाय स्वयंभुवे । भूतेभ्यश्चाञ्जलिं कृत्वा चकार गमने मतिम् ॥ ८ ॥
अञ्जलिं प्राङ्मुखं कुर्वन्पवनायात्मयोनये । ततो हि ववृधे गन्तुं दक्षिणो दक्षिणां दिशम् ॥ ९ ॥
प्लवगप्रवरैर्दृष्टः प्लवने कृतनिश्चयः । ववृधे रामवृद्ध्यर्थं समुद्र इव पर्वसु ॥ १० ॥
निष्प्रमाणशरीरः सँल्लिलङ्घयिषुरर्णवम् । बाहुभ्यां पीडयामास चरणाभ्यां च पर्वतम् ॥ ११ ॥
स चचालाचलश्चाशु मुहूर्तं कपिपीडितः । तरूणां पुष्पिताग्राणां सर्वं पुष्पमशातयत् ॥ १२ ॥
तेन पादपमुक्तेन पुष्पौघेण सुगन्धिना । सर्वतः सँवृतः शैलो बभौ पुष्पमयो यथा ॥ १३ ॥
तेन चोत्तमवीर्येण पीड्यमानः स पर्वतः । सलिलं संप्रसुस्राव मँदमत्त इव द्विपः ॥ १४ ॥
पीड्यमानस्तु बलिना महेन्द्रस्तेन पर्वतः । रीतीर्निर्वर्तयामास काञ्चनाञ्जनराजतीः ॥ १५ ॥

---

मान् ह्रदे नागो गज इव आबभौ । श्लोकत्रयमेकान्वयि ॥ ६—७ ॥

गो॰ टी॰—नीलेति । अत्र यच्छब्दोऽध्याहार्यः यदेवंविधं तलं तत्र तिष्ठन्नित्यन्वयः । पत्रवर्णैः पत्रश्यामैः । 'पालाशो हरितो हरित्' इति हलायुधः । सितासितैः कल्माषैः स्वभावविहितैः स्वतःसिद्धैः ॥ ६–७ ॥

८ ] ति॰ टी॰—स्वयंभुवे पवनाय पूयते येन स्वज्ञानेन योगिवृन्दं स पवनो भगवान्प्रत्यक्तत्त्वभूतो रामः । एतेन सकलविघ्ननिवारणायेष्टदेवताप्रार्थनापूर्वं यात्रा कर्तव्येति सदाचारो बोधितः ॥ ८ ॥

रा॰ टी॰—स इति । सूर्यादिभ्योऽञ्जलिं कृत्वा स हनूमान् गमने मतिं बुद्धिं चकार ॥ ८ ॥

गो॰ टी॰—स सूर्यायेति । स्वयंभुवे चतुर्मुखाय भूतेभ्यः देवयोनिभ्यः ॥ ८ ॥

९ ] ति॰ टी॰—आत्मयोनये पवनाय स्वजनकवायव इत्यर्थः । दक्षिणः कुशलः ॥ ९ ॥

रा॰ टी॰—अञ्जलिमिति । दक्षिणः सर्वकार्यकुशलो हनूमान् आत्मयोनये स्वप्रादुर्भूतिकारणाय पवनायाञ्जलिं कृत्वा ववृधे ॥ ९ ॥

गो॰ टी॰—अञ्जलिमिति । आत्मयोनये स्वकारणभूताय दक्षिणः समर्थः हनुमान् प्राङ्मुखः सन् आत्मयोनये पवनाय अञ्जलिं कृत्वा ततो दक्षिणां दिशं गन्तुं ववृध इत्यन्वयः । हिः पादपूरणे । अञ्जलिं प्राङ्मुखः कुर्वन्निति पाठस्त्वयुक्तः शतृप्रत्ययेन प्राङ्मुखविशिष्टाञ्जलिकरणदक्षिणदिग्गमनोद्योगयोरेककालिकत्वप्रतीत्या विरोधात् नहि प्राङ्मुखस्यैव सतो दक्षिणदिग्गमनोद्योगो युज्यते ॥ ९ ॥

१० ] ति॰ टी॰—रामवृद्ध्यर्थं रामाभ्युदयाय ॥ १० ॥

रा॰ टी॰—प्लवगेति । प्लवगप्रवरैः दृष्टोऽवलोकितो हनूमान् पर्वसु समुद्र इव ववृधे ॥ १० ॥

गो॰ टी॰—प्लवङ्गेति । रामवृद्ध्यर्थं रामप्रयोजनार्थम् ॥ १० ॥

११ ] ति॰ टी॰—निष्प्रमाणशरीरः परिच्छेदातिक्रान्तदेहः । पीडयामास लिलङ्घयिषासंनाहवशतः ॥ ११ ॥

रा॰ टी॰—निष्प्रमाणेति । निष्प्रमाणमियत्तारहितं शरीरं यस्य सः अर्णवं सलिलं लिलङ्घयिषुः हनूमान् चरणाभ्यां पर्वतं पीडयामास ॥ ११ ॥

गो॰ टी॰—निष्प्रमाणेति । निष्प्रमाणशरीरः निर्मर्यादशरीरः बाहुभ्यामित्युक्तिर्वानरस्य चतुर्भिः संचारात् ॥ ११ ॥

१२ ] ति॰ टी॰—एकेन पीडनव्यापारेण मुहूर्तपर्यन्तं चलनम् । अशातयत् । पर्वतः कर्ता, चलनं करणम् ॥ १२ ॥

रा॰ टी॰—स इति । कपिपीडितः अचलः स महेन्द्रः चचाल अत एव पुष्पिताग्राणां तरूणां पुष्पम् अशातयत् अपातयदित्यर्थः ॥ १२ ॥

गो॰ टी॰—स चचालेति । चापीत्येकमव्ययमप्यर्थकम् अशातयत् अगच्छत् स्वार्थे णिच् ॥ १२–१४ ॥

१३ ] ति॰ टी॰—पुष्पमयो यथा पुष्पप्रचुरः स्वयमिवेत्यर्थः ॥ १३ ॥

रा॰ टी॰—तेनेति । सुगन्धिना शोभनगन्धविशिष्टेन पादपमुक्तेन तरुभ्यः पतितेन पुष्पौघेन संवृतः महेन्द्रः पुष्पमयः संजनितः प्रचुरपुष्पवानिव बभौ ॥ १३ ॥

१४ ] ति॰ टी॰—उत्तमवीर्येण तेन पीड्यमानः स पर्वतसलिलं प्रसुस्राव ॥ १४ ॥

रा॰ टी॰—तेनेति । उत्तमवीर्येण हनुमता पीड्यमानः स महेन्द्रः मदमत्तो द्विप इव सलिलं संप्रसुस्राव ॥ १४ ॥

१५ ] ति॰ टी॰—उक्तार्थस्यैव विवरणम्—पीड्यमान इति । काञ्चनाञ्जनराजतीस्तदाभा रीतीः स्रोतःप्रकारान्निर्वर्तयामास । तदाभत्वमुपाधिकृतम् ॥ १५ ॥

रा॰ टी॰—पीडयमान इति । बलिना हनुमता पीड्यमानो महेन्द्रः काञ्चनाञ्जनराजतीः काञ्चनादिमयीः रीतीः रेखाः निर्वर्तयामास प्रकाशयामास ॥ १५ ॥

गो॰ टी॰—पीड्यमान इति । रीतीः रेखाः काञ्चनाञ्ज-

---

१ प्राङ्मुख इति गो. पाठः । २ प्लवङ्गेति गो. पाठः । ३ चापीति गो. पाठः । ४ संवृत इति गो. पाठः । ५ मदं मत्त इति गो. पाठः ।

मुमोच च शिलाः शैलो विशालाः समनःशिलाः। मध्यमेनार्चिषा जुष्टो धूमराजिरिवानलः ॥ १६ ॥
हरिणा पीड्यमानेन पीड्यमानानि सर्वतः। गुहाविष्टानि सत्त्वानि विनेदुर्विकृतैः स्वरैः ॥ १७ ॥
स महान्सत्त्वसंनादः शैलपीडानिमित्तजः। पृथिवीं पूरयामास दिशश्चोपवनानि च ॥ १८ ॥
शिरोभिः पृथुभिर्नागा व्यक्तस्वस्तिकलक्षणैः। वमन्तः पावकं घोरं ददंशुर्दशनैः शिलाः ॥ १९ ॥
तास्तदा सविषैर्दष्टाः कुपितैस्तैर्महाशिलाः। जज्वलुः पावकोद्दीप्ता बिभिदुश्च सहस्रधा ॥ २० ॥
यानि त्वौषधजालानि तस्मिञ्जातानि पर्वते। विषघ्नान्यपि नागानां न शेकुः शमितुं विषम् ॥ २१ ॥
भिद्यतेऽयं गिरिर्भूतैरिति मत्वा तपस्विनः। त्रस्ता विद्याधरास्तस्मादुत्पेतुः स्त्रीगणैः सह ॥ २२ ॥
पानभूमिगतं हित्वा हैममासनभाजनम्। पात्राणि च महार्हाणि करकांश्च हिरण्मयान् ॥ २३ ॥
लेह्यानुच्चावचान्भक्ष्यान्मांसानि विविधानि च। आर्षभाणि च चर्माणि खड्गांश्च कनकत्सरून् ॥ २४ ॥

---

नरजतगर्भासु शिलासु विदीर्यमाणासु दृश्यमानास्तास्ता भेदधारा इत्यर्थः ॥ १९ ॥

१६] ति० टी०—किं च स शैलः समनःशिला विशालाः शिला मुमोच निपीडनात्, अत एव मध्यमेन मध्यभागेनार्चिषा ज्वालया जुष्टो योऽनलस्तस्य धूमराजिरिव बभावित्यर्थः। यस्येत्यध्याहारः 'धूमराजिरिव' इति ह्रस्वपाठः। तीर्थस्तु—मध्यमेनार्चिषा मध्यमाख्ययाग्निजिह्वया जुष्टो विशिष्टोऽग्निर्धूमराजिरिव धूमनिचयानिवेत्यर्थः 'धूमराजीरिव' इति च पाठ इत्याह॥१६॥

रा० टी०—मुमोचेति। शैलः समनश्शिलाः मनश्शिलासहिताः शिलाः मुमोच। तत्र दृष्टान्तः, मध्यमेन मध्यभागेन अर्चिषा ज्वालया जुष्टः संयुक्तः अनलः धूमराजीः धूमपङ्क्तीरिव ॥ १६ ॥

गो० टी०—मुमोचेति। समनःशिलाः धातुविशेषसहिताः मध्यमेनार्चिषा मध्यमया ज्वालया पार्श्वज्वाला हि न धूमनिवर्तिका ॥ १६ ॥

१७] ति० टी०—हरिणा हनुमता पीड्यमानेन पर्वतेन पीड्यमानानि सत्त्वानि ॥ १७ ॥

रा० टी०—हरिणेति। हरिणा हनूमता पीड्यमानेन पीडितेन पर्वतेन पीड्यमानानि गुहाविष्टानि सत्त्वानि प्राणिनः विकृतैः स्वरैर्विनेदुः ॥ १७ ॥

गो० टी०—गिरिणेति। विकृतैः विकृतिमद्भिः दैन्यव्यञ्जकैरित्यर्थः ॥ १७ ॥

१८] ति० टी०—'स महासत्त्व—' इति पाठे महासत्त्वा महाजन्तवस्तेषां संनाद इति तीर्थः। 'स महान्सत्त्वसंनादः' इति पाठान्तरम् ॥ १८ ॥

रा० टी०—स इति। शैलपीडानिमित्तजः शैलपीडारूपनिमित्ताज्जनितः स प्रसिद्धः महान् सत्त्वसंनादः पृथिव्यादीनि पूरयामास ॥ १८ ॥

गो० टी०—स इति। सत्त्वसन्नादः भूतसन्नादः ॥ १८ ॥

१९] ति० टी०—स्वस्तिकः फणास्थनीलरेखा तच्चिह्नैः शिरोभिरुपलक्षिताः। ददंशुः पीडाजनितक्रोधवशात् ॥ १९ ॥

रा० टी०—शिरोभिरिति। व्यक्तानि स्वस्तिकलक्षणानि फणास्थितनीलरेखारूपचिह्नानि येषु तैः पृथुभिः स्थूलैः शिरोभिः पावकं वमन्तो नागाः दशनैर्दंष्ट्राभिः शिलाः ददंशुः ॥ १९ ॥

गो० टी०—शिरोभिरिति। स्वस्तिकं नाम फणोपरि दृश्यमानार्धचन्द्रकं ददंशुरिति। दंशनं कोपव्यापारः ॥ १९ ॥

२०] ति० टी०—सविषैस्तैः सर्पैर्दष्टाः सत्यः पावकोद्दीप्ता इव जज्वलुः। बिभिदुर्भिन्ना बभूवुश्च ॥ २० ॥

रा० टी०—ता इति। सविषैर्विषसहितैस्तैर्नागैर्दष्टा महाशिलाः पावकोद्दीप्ता इव जज्वलुः सहस्रधा बिभिदुश्च ॥ २० ॥

गो० टी०—ता इति। बिभिदुः भिन्नाः ॥ २० ॥

२१] ति० टी०—शमितुं शमयितुम् ॥ २१ ॥

रा० टी०—यानीति। विषघ्नानि यानि औषधजालानि औषधसमूहाः यस्मिन् पर्वतजातानि तान्यपि नागानां विषं शमितुं न शेकुः ॥ २१ ॥

गो० टी०—यानीति। अत्र तानीत्यध्याहार्यं, शमितुं शमयितुम् ॥ २१ ॥

२२] ति० टी०—भूतैर्ब्रह्मरक्षःप्रभृतिमहाभूतैः ॥ २२ ॥

रा० टी०—भिद्यते इति। अयं गिरिः भूतैर्भुवि पृथिव्याम् उतैर्व्याप्तैर्देवविशेषैः भिद्यते इति मत्वा त्रस्तास्तपस्विनः विद्याधराश्च तस्माद्गिरेः उत्पेतुः ॥ २२ ॥

गो० टी०—भिद्यत इत्यर्धमेकम्। उत्पेतुरित्यनुपज्यते२२

गो० टी०—त्रस्ता इत्यादिसार्धश्लोकद्वयमेकान्वयम्। आसवभाजनं मद्यपात्रं पात्राणि भोजनपात्राणि आर्षभाणि चर्माणि ऋषभचर्मपिनद्धानि खेटकानि त्सरुः मुष्टिबन्धनम् ॥२३॥२४॥

२३] ति० टी०—हित्वेत्यत्र विद्याधराः कर्तारः ॥ २३ ॥

२४] ति० टी०—आर्षभाणि ऋषभचर्मनिर्मितानि चर्माणि फलकानि। त्सरुः खड्गमुष्टिः ॥ २४ ॥

रा० टी०—पानेति। पानभूमिगतं पानभूमौ प्राप्तं हैमं सुवर्णमयम् आसवभाजनं मद्यपात्रं पात्राणि तद्भिन्नभाजनानि च करकांश्च लेह्यादीनि च आर्षभाणि ऋषभचर्मपिनद्धानि

---

१ राजीरिति गो. रा. पाठः। २ गिरिणेति गो. पाठः। ३ भूतानाति गो. पाठः। ४ महासत्त्वेति गो. पाठः। ५ सर्पा इति गो. पाठः। ६ आसवेति गो. रा. पाठः।

कृतकण्ठगुणाः क्षीबा रक्तमाल्यानुलेपनाः । रक्ताक्षाः पुष्कराक्षाश्च गगनं प्रतिपेदिरे ॥ २५ ॥
हारनूपुरकेयूरपारिहार्यधराः स्त्रियः । विस्मिताः सस्मितास्तस्थुराकाशे रमणैः सह ॥ २६ ॥
[ दर्शयन्तो महाविद्यां विद्याधरमहर्षयः । सहितास्तस्थुराकाशे वीक्षांश्चक्रुश्च पर्वतम् ॥
शुश्रुवुश्च तदा शब्दमृषीणां भावितात्मनाम् । चारणानां च सिद्धानां स्थितानां विमलेऽम्बरे ॥]
एष पर्वतसंकाशो हनुमान्मारुतात्मजः । तितीर्षति महावेगः समुद्रं वरुणालयम् ॥ २७ ॥
रामार्थं वानरार्थं च चिकीर्षन्कर्म दुष्करम् । समुद्रस्य परं पारं दुष्प्रापं प्राप्तुमिच्छति ॥ २८ ॥
इति विद्याधरा वाचः श्रुत्वा तेषां तपस्विनाम् । तमप्रमेयं ददृशुः पर्वते वानरर्षभम् ॥ २९ ॥
दुधुवे च स रोमाणि चकम्पे चानलोपमः । ननाद च महानादं सुमहानिव तोयदः ॥ ३० ॥
आनुपूर्व्या च वृत्तं तल्लाङ्गूलं लोमभिश्चितम् । उत्पतिष्यन्विचिक्षेप पक्षिराज इवोरगम् ॥ ३१ ॥
तस्य लाङ्गूलमाविद्धमतिवेगस्य पृष्ठतः । ददृशे गरुडेनेव ह्रियमाणो महोरगः ॥ ३२ ॥

---

चर्माणि फलकानि कनकत्सरून् स्वर्णमयमुष्टिविशिष्टान् खङ्गांश्च हित्वा कृताः प्रकटिताः कण्ठगुणाः स्वरविशेषा यैस्ते पुष्कराक्षाः पद्मदलायतनेत्राः क्षीबाः मत्ताः विद्याधरा इति शेषः, गगनं प्रतिपेदिरे प्रापुः । श्लोकत्रयमेकान्वयि ॥ २३–२५ ॥

२५ ] ति० टी०–कृताः कण्ठेषु गुणाः स्रजो यैस्ते । क्षीबा मत्ताः । पुष्करं पद्मम् ॥ २५ ॥

गो० टी०–कृतेति । कृतकण्ठगुणाः कृतकण्ठस्रजः क्षीबाः मत्ताः रक्ताक्षाः मधुपानात्पुष्कराक्षाः स्वभावत इत्यर्थः ॥ २५ ॥

२६–२८ ] ति० टी०–पारिहार्यशब्दः श्रेष्ठवाचीति कतकः । पारिहार्यो वलय इति तीर्थः । एतदग्रे ‘ दर्शयन्तो महाविद्यां विद्याधरमहर्षयः । सहितास्तस्थुराकाशे वीक्षांचक्रुश्च पर्वतम् ॥ शुश्रुवुश्च तदा शब्दमृषीणां भावितात्मनाम् । चारणानां च सिद्धानां स्थितानां विमलेऽम्बरे ॥ ’ इति श्लोकद्वयं प्रक्षिप्तं क्वचिदिति कतकः ॥ २६–२८ ॥

रा० टी०–हारेति । हारादिधराः स्त्रियः रमणैर्विद्याधरैः सह आकाशे तस्थुः । तत्र पारिहार्यशब्दः श्रेष्ठवाचीति कतकः, वलयवाचीति तीर्थः ॥ २६ ॥

गो० टी०–हारेति । पारिहार्यं वलयं तस्थुः तस्थुश्च ॥ २६ ॥

रा० टी०–दर्शयन्त इति । महाविद्यां महाविद्याजनितनिरवलम्बनस्थितिरूपां स्वशक्तिं दर्शयन्तः सहिता मिलिता विद्याधरमहर्षयः आकाशे तस्थुः पर्वतं वीक्षाञ्चक्रुर्विशेषेण ददृशुश्च । अम्बरे स्थितानामृष्यादीनां शब्दं शुश्रुवुश्च । श्लोकद्वयमेकान्वयि ॥ २७ ॥ २८ ॥

रा० टी०–तच्छब्दाकारमाह–एष इति । दुष्करम् अन्यैः कर्तुमशक्यं कर्म चिकीर्षन् कर्तुमिच्छन् महावेगो हनुमान् समुद्रं तितीर्षति क्लोतुमिच्छति समुद्रस्य पारं प्राप्तुमिच्छति च । श्लोकद्वयमेकान्वयि ॥ २९ ॥ ३० ॥

गो० टी०–दर्शयन्त इति । दर्शयन्तः प्रयोजयन्तः महाविद्याम् अणिमाद्यष्टमहासिद्धिम् विद्याधरमहर्षयः विद्याधरा महर्षय इवेत्युपमितसमासः “ उपमितं व्याघ्रादिभिः सामान्याप्रयोगे ” इत्यनुशासनात् विद्याधरश्रेष्ठा इत्यर्थः । विद्याधरा महर्षयश्चेति द्वन्द्वसमासो न युक्तः । इति विद्याधराः श्रुत्वेत्युपरितनश्लोके विद्याधराणामेवोपादानात् ॥ २७ ॥

गो० टी०–शुश्रुवुरिति । सा पुनरत्राकाशस्थितिः शुश्रुवुः विद्याधरा इति शेषः । इति विद्याधराः श्रुत्वेत्युपसंहारात् २८ ॥ २९

गो० टी०–समुद्रं तितीर्षतीत्युक्तम् । तस्य प्रयोजनकथनायोक्तमनुवदति–रामार्थमिति ॥ ३०–३२ ॥

२९ ] ति० टी०–तेषां तपस्विनामाकाशचारितपस्विनां वाचः ‘ एष पर्वतसंकाशः ’ इत्यादिश्लोकद्वयरूपाः श्रुत्वा विद्याधरास्तमप्रमेयं ददृशुः । तद्वाक्यश्रवणात्पूर्वं तु भूतैरयं गिरिर्भिद्यत इति ज्ञातवन्तः ॥ २९ ॥

रा० टी०–इतीति । विद्याधरास्तपस्विनाम् ऋष्यादीनामिति वाचः श्रुत्वा पर्वते तं हनुमन्तं ददृशुः ॥ ३१ ॥

३० ] ति० टी०–दुधुवे च । स हनूमान् ॥ ३० ॥

रा० टी०–दुधुवे इति । स हनूमान् रोमाणि दुधुवे चकम्पे किंचिच्चचाल च महान् तोयदो मेघ इव ननाद च ॥ ३२ ॥

३१ ] ति० टी०–आनुपूर्व्याद्वृत्तं त्रिवलयं लाङ्गूलं विचिक्षेपेत्यन्वयः ॥ ३१ ॥

रा० टी०–आनुपूर्व्यादिति । आनुपूर्व्यात्क्रमशः वृत्तं वर्तुलं लोमभिश्चितं निबिडं तत्प्रसिद्धं लाङ्गूलमुत्पतिष्यन्सन् पक्षिराज उरगमिव चिक्षेप ॥ ३३ ॥

गो० टी०–आनुपूर्व्येणेति । आनुपूर्व्येण वृत्तं क्रमेण वृत्तम् ॥ ३३ ॥ ३४ ॥

३२ ] ति० टी०–आविद्धमास्फालितं भुग्नं च ॥ ३२ ॥

रा० टी०–तस्येति । आविद्धं प्रवृद्धमतिवेगस्य तस्य हनूमतः पृष्ठतः पश्चाद्भागे विद्यमानं लाङ्गूलं गरुडेन ह्रियमाणो महोरग इव ददृशे ॥ ३४ ॥

---

१ श्लोकावेतावधिकौ गो० रा० पाठे । २ तुला वचसेपां महात्मनामिति गो० पाठः । ३ पूर्व्येण वृत्तं चेति गो० पाठः ।

बाहू संस्तम्भयामास महापरिघसंनिभौ । आससाद कपिः कट्यां चरणौ संचुकोच च ॥ ३३ ॥
संहृत्य च भुजौ श्रीमांस्तथैव च शिरोधराम् । तेजः सत्त्वं तथा वीर्यमाविवेश स वीर्यवान् ॥ ३४ ॥
मार्गमालोकयन्दूरादूर्ध्वंप्रणिहितेक्षणः । रुरोध हृदये प्राणानाकाशमवलोकयन् ॥ ३५ ॥
पद्भ्यां दृढमवस्थानं कृत्वा स कपिकुञ्जरः । निकुच्य कर्णौ हनुमानुत्पतिष्यन्महाबलः ॥ ३६ ॥
वानरान्वानरश्रेष्ठ इदं वचनमब्रवीत् । यथा राघवनिर्मुक्तः शरः श्वसनविक्रमः ॥ ३७ ॥
गच्छेत्तद्वद्गमिष्यामि लङ्कां रावणपालिताम् । नहि द्रक्ष्यामि यदि तां लङ्कायां जनकात्मजाम् ॥ ३८ ॥
अनेनैव हि वेगेन गमिष्यामि सुरालयम् । यदि वा त्रिदिवे सीतां न द्रक्ष्यामि कृतश्रमः ॥ ३९ ॥
बद्ध्वा राक्षसराजानमानयिष्यामि रावणम् । सर्वथा कृतकार्योऽहमेष्यामि सह सीतया ॥ ४० ॥
आनयिष्यामि वा लङ्कां समुत्पाट्य सरावणाम् । एवमुक्त्वा तु हनुमान्वानरो वानरोत्तमः ॥ ४१ ॥

---

३३ ] ति० टी०—बाहू संस्तम्भयामासेत्युत्प्लवनसंनाहाभिनयः । बाह्वोः संस्तम्भनं नाम पर्वतोपरि दृढप्रतिष्ठापनम् । कपिः कट्यां कटिप्रदेशे आससाद कायप्रसारणात्कृशोऽभूत् । उरःशिरसोरूर्ध्वप्रसारणे सपृष्ठचरणभागस्याधःसंकोचने तथात्वं कटिदेशस्येति बोध्यम् ॥ ३३ ॥

रा० टी०—बाहू इति । कपिः बाहू संस्तम्भयामास दृढीचकार । कट्यामाससाद प्राप अतिसंकुचितशरीरो बभूव चेत्यर्थः, चरणौ संचुकोच आचुकुञ्च ॥ ३५ ॥

गो०टी०—लङ्घनोद्योगकालिकावस्थां वर्णयति—बाहू इत्यादिना । बाहू संस्तम्भयामास निश्चलीचकार कट्यां ससाद शरीरं संचुकोचेत्यर्थः । चरणौ संचुकोच च ॥ ३५ ॥

३४ ] ति० टी०—भुजौ संहृत्यांसप्रदेशे संकुच्य । शिरोधरां ग्रीवां कण्ठदेशे संकुच्य । तेजः पराभिभवसामर्थ्यम् सत्त्वं बलं शारीरम् वीर्यमान्तरं बलम् ॥ ३४ ॥

रा० टी०—संहृत्येति । वीर्यवान् स हनुमान् भुजौ संहृत्य अंसप्रदेशे प्रापय्य शिरोधरां ग्रीवां संहृत्य कण्ठदेशे प्रापय्य तेजःप्रभृतीनि आविवेश सस्मार ॥ ३६ ॥

गो० टी०—संहृत्येति । संहृत्य संकोच्य ॥ ३६ ॥

३५ ] ति० टी०—दूरान्मार्गमालोकयन्, अत एवोर्ध्वप्रणिहितेक्षणः । हृदये प्राणप्रतिष्ठास्थाने ॥ ३५ ॥

रा० टी०—मार्गमिति । मार्गमालोकयन् आलोकयितुम् ऊर्ध्वं प्रणिहितेक्षणः ऊर्ध्वकृतदृष्टिर्हनुमान् आकाशमवलोकयन् सन् हृदये प्राणान् रुरुधे ॥ ३७ ॥

गो० टी०—मार्गमिति । प्राणान् उच्छ्वासरूपान् प्राणनिरोधो व्योमोत्पतनार्थम् ॥ ३७—३९ ॥

३६ ] ति० टी०—कर्णौ निकुच्य संकुच्य । उत्पतनसंनाहवशाद्धि कर्णसंकोचो भवति ॥ ३६ ॥

रा० टी०—पद्भ्यामिति । उत्पतिष्यन् स हनुमान् पद्भ्यां दृढमवस्थानं स्थितिविशेषं कृत्वा कर्णौ निकुच्य संकुच्य वानरान् इदं वचनमब्रवीत् । सार्धश्लोक एकान्वयी ॥ ३८ ॥

३७ ] ति० टी०—श्वसनस्य वायोरिव विक्रमो वेगो यस्य सः ॥ ३७ ॥

रा० टी०—तद्वचनाकारमाह—यथेत्यादिभिः । राघवेण निर्मुक्तः श्वसनविक्रमः पवनवेगः शरः यथा गच्छेत् तद्वत् लङ्कां गमिष्यामि ॥ ३९ ॥

३८ ] ति० टी०—तद्वद्गमिष्यामि अनेन तद्वदेव गत्वा कृतकार्य आगमिष्यामीति सूचितम् । तस्यैव प्रपञ्चः—नहीत्यादि ॥ ३८ ॥

रा० टी०—नहीति । लङ्कायां यदि न पश्यामि तदा अनेनैव वेगेन सुरालयं स्वर्गं गमिष्यामि ॥ ४० ॥

गो० टी०—नहीति । हिशब्दः पादपूरणे ॥ ४० ॥

३९ ] ति० टी०—अनेनैव एवंविधेनैव ॥ ३९ ॥

रा० टी०—यदीति । कृतश्रमोऽहं यदि त्रिदिवे सीतां न द्रक्ष्यामि तदा राक्षसराजानं रावणं बद्ध्वा आनयिष्यामि आनेष्यामि एतेन बद्धः सन् सीतावृत्तान्तं कथयिष्यत्येवेति सूचितम्, समासान्तविधेरनित्यत्वाट्टजभावः ॥ ४१ ॥

गो० टी०—यदीति । अकृतश्रमः अप्राप्तश्रमः । राक्षसराजानमित्यत्र टजभाव आर्षः । आनयिष्यामि आनेष्यामि ॥ ४१—४४ ॥

४० ] ति० टी०—आनयिष्याम्यानेष्यामि । सीतया सह मिलित्वेति शेषः ॥ ४० ॥

रा० टी०—तदेव भङ्ग्यन्तरेणाह—सर्वथेति । सीतया सीतादर्शनेन सर्वथा कृतकार्यः सोऽहं इ प्रसिद्धमेष्यामि वा अथवा तद्दर्शनालाभे सरावणां लङ्कामानमिष्यामि आनेष्यामि वा ॥ ४२ ॥

४१ ] ति० टी०—समुत्पाट्येति ओषधिपर्वतोत्पाटनवदिति भावः ॥ ४१ ॥

रा० टी०—एवमिति । अविचारयन् उत्पतनं किंचिदपि श्रमजनकमित्यगणयन् हनुमान्वानरान् एवमुक्त्वा उत्पपात । अथ अतः आत्मानं सुपर्णं शोभितपक्षवन्तं पक्षिराजमिव मेने । सार्धश्लोक एकान्वयी ॥ ४३ ॥

---

१ उर्ध्वमिति गो. पाठः

उत्पपाताथ वेगेन वेगवानविचारयन् । सुपर्णमिव चात्मानं मेने स कपिकुञ्जरः ॥ ४२ ॥
समुत्पतति वेगेत्तु वेगात्ते नगरोहिणः । संहृत्य विटपान्सर्वान्समुत्पेतुः समन्ततः ॥ ४३ ॥
स मत्तकोयष्टिभकान्पादपान्पुष्पशालिनः । उद्वहन्नुरुवेगेन जगाम विमलेऽम्बरे ॥ ४४ ॥
ऊरुवेगोत्थिता वृक्षा मुहूर्तं कपिमन्वयुः । प्रस्थितं दीर्घमध्वानं स्वबन्धुमिव बान्धवाः ॥ ४५ ॥
तमूरुवेगोन्मथिताः सालाश्चान्ये नगोत्तमाः । अनुजग्मुर्हनूमन्तं सैन्या इव महीपतिम् ॥ ४६ ॥
सुपुष्पिताग्रैर्बहुभिः पादपैरन्वितः कपिः । हनूमान्पर्वताकारो बभूवाद्भुतदर्शनः ॥ ४७ ॥
सारवन्तोऽथ ये वृक्षा न्यमज्जँल्लवणाम्भसि । भयादिव महेन्द्रस्य पर्वता वरुणालये ॥ ४८ ॥
स नानाकुसुमैः कीर्णः कपिः साङ्कुरकोरकैः । शुशुभे मेघसंकाशः खद्योतैरिव पर्वतः ॥ ४९ ॥
विमुक्तास्तस्य वेगेन मुक्त्वा पुष्पाणि ते द्रुमाः । व्यवशीर्यन्त सलिले निवृत्ताः सुहृदो यथा ॥ ५० ॥

---

४२ ] ति० टी०—अविचारयँल्लङ्घनक्लेशलेशमप्यगणयन् । तस्यैव प्रपञ्चनम्—सुपर्णमित्यादि ॥ ४२ ॥

रा० टी०—समिति । वेगात्समुत्पतति सति नगरोहिणः शैलस्थतरवः विटपान् स्वशाखाः संहृत्य वेगात्समुत्पेतुः । अर्धद्वयमेकान्वयि ॥ ४४ ॥

४३ ] ति० टी०—वेगाद्धनमति समुत्पतति सति ते नगरोहिणः पर्वतस्थवृक्षाः सर्वान्विटपान्सर्वाः शाखाः संहृत्य संक्षिप्य वेगात्समुत्पेतुः ॥ ४३ ॥

गो० टी०—समुत्पततीति । तस्मिन् हनुमति वेगात्समुत्पतति सति नगरोहिणः शैलरुहा वृक्षाः विटपान् संहृत्य आदाय समुत्पेतुरित्यर्थः ॥ ४५ ॥

४४–४५ ] ति० टी०—मत्ताः कोयष्टिभा येषु तान् । कोयष्टिकोयष्टिभौ पर्यायौ ॥ ४५ ॥ ४६ ॥

रा० टी०—स इति । मत्ताः कोयष्टिका येषु तान् पुष्पशालिनः पादपान् वेगेन उद्वहन् उर्ध्वं प्रापयन् विमले अम्बरे जगाम ॥ ४६ ॥

रा० टी०—ऊर्विति । ऊर्वोर्वेगेन उत्थिता वृक्षा दीर्घमध्वानं प्रस्थितं स्वबन्धुं बान्धवा इव मुहूर्तं कपिमन्वयुः अनुजग्मुः ४६

गो० टी०—संग्रहेणोक्तं विवृणोति—स मत्तेत्यादिना । कोयष्टिभकः कोयष्टिः ॥ ४६ ॥ ४७ ॥

४६ ] ति० टी०—सालाः सर्जवृक्षाः । सैन्यशब्दोऽर्थचादिः ॥ ४६ ॥

रा० टी०—तमिति । ऊरुवेगोन्मथिता अन्ये केचन पादपाः सैन्याः महीपतिमिव हनूमन्तमनुजग्मुः । सैन्यशब्दोऽर्थचादिः ॥ ४७ ॥

गो० टी०—तमिति । तमूरुवेगेति पाठः । ऊरुवेगेन उन्मथिताः सालाः सालवृक्षाः अन्ये नगोत्तमाः अन्ये वृक्षश्रेष्ठाः सैन्याः सेनायां समवेताः पुरुषाः 'सेनायां समवेता ये सैन्यास्ते सैनिकाश्च ते' इत्यमरः ॥ ४८ ॥ ४९ ॥

४७ ] ति० टी०—पर्वताकारः तरवं बृहत्त्वेन पुष्पितवृक्षवत्त्वेन च ॥ ४७ ॥

रा० टी०—सुपुष्पितेति । पादपैरन्वितः कपिः अद्भुतदर्शनो बभूव ॥ ४८ ॥

४८ ] ति० टी०—सारवन्तो गुरुत्वातिशययुक्ताः खदिरादयस्ते गुरुत्वाल्लवणाम्भसि न्यमज्जन् । अर्थादन्ये लघवः सहैव गता इति बोध्यम् । महेन्द्रस्य भयात्पक्षच्छेदभयात्पर्वता इव न्यमज्जन् ॥ ४८ ॥

रा० टी०—सारवन्त इति । सारवन्तो गुरुत्ववन्तो ये वृक्षाः ते महेन्द्रस्य भयात् वरुणालये पर्वता इव लवणाम्भसि न्यमज्जन् । सारवन्त इत्यनेन लघूनां परिभ्रमणमेवेति सूचितम् 'सारो बले स्थिरांशे च' इति कोशः ॥ ४९ ॥

गो० टी०—सारवन्त इति । सारवन्तः स्थिरांशवन्तः 'सारो बले स्थिरांशे च' इत्यमरः ॥ ६० ॥

४९ ] ति० टी०—नानाकुसुमैः स्वानुयायिद्रुमीयैः । साङ्कुरकोरकैः कानिचित्कुसुमान्यङ्कुरितानि, कानिचित्कोरकरूपाणि, कानिचिद्विकसितानीत्यर्थः ॥ ४९ ॥

रा० टी०—स इति । साङ्कुरकोरकैः अङ्कुरकोरकसहितैः कुसुमैः स्वानुयायितरुसंबन्धिपुष्पैः कीर्णः आकीर्णः कपिः खद्योतैः पर्वत इव शुशुभे । अत्राङ्कुरः कलिकात्वम्, कोरको विकसितत्वम् ॥ ६० ॥

गो० टी०—स नानाकुसुमैरिति । मेघसंकाशः स कपिरित्यन्वयः । खद्योतैः रात्राविति शेषः ॥ ६१ ॥

५० ] ति० टी०—तस्य हनुमतो वेगेन विमुक्तास्ततो विभक्तास्ते वृक्षाः सलिले व्यवशीर्यन्त । आर्षोऽडभावः । सुहृदो यथा, बन्धुप्रस्थापनार्थं गताः सुहृदो यथा तान्प्रस्थाप्य निवर्तन्ते तद्वत् ॥ ६० ॥

रा० टी०—विमुक्ता इति । तस्य हनुमतो वेगेन विमुक्ता विमोचिता वियोजिता इत्यर्थः, द्रुमाः पुष्पाणि मुक्त्वा सलिले व्यवशीर्यन्त । तत्र दृष्टान्तः निवृत्ताः प्रस्थितं बन्धुमनुपायागताः सुहृदो यथा ॥ ६१ ॥

गो० टी०—विमुक्ता इति । अवशीर्यन्त अवाशीर्यन्त आगमशास्त्रस्यानित्यत्वादडभावः, स्थितवन्त इत्यर्थः । निवृ-

---

१ तस्मिंस्त्विति गो. पाठः । २ वेगोद्धता इति गो. पाठः । ३ शाला इति रा. पाठः । ४ अवशीर्यन्तेति गो. पाठः ।

लघुत्वेनोपपन्नं तद्विचित्रं सागरेऽपतत् । द्रुमाणां विविधं पुष्पं कपिवायुसमीरितम् ॥ ५१ ॥
[ ताराचितमिवाकाशं प्रबभौ स महार्णवः । ]
पुष्पौघेण सुगन्धेन नानावर्णेन वानरः । बभौ मेघ इवोद्यन्वै विद्युद्गणविभूषितः ॥ ५२ ॥
तस्य वेगसमुद्भूतैः पुष्पैस्तोयमदृश्यत । ताराभिरिव रामाभिरुदिताभिरिवाम्बरम् ॥ ५३ ॥
तस्याम्बरगतौ बाहू ददृशाते प्रसारितौ । पर्वताग्राद्विनिष्क्रान्तौ पञ्चास्याविव पन्नगौ ॥ ५४ ॥
पिबन्निव बभौ चापि सोर्मिजालं महार्णवम् । पिपासुरिव चाकाशं ददृशे स महाकपिः ॥ ५५ ॥
तस्य विद्युत्प्रभाकारे वायुमार्गानुसारिणः । नयने विप्रकाशेते पर्वतस्थाविवानलौ ॥ ५६ ॥
पिङ्गे पिङ्गाक्षमुख्यस्य बृहती परिमण्डले । चक्षुषी संप्रकाशेते चन्द्रसूर्याविव स्थितौ ॥ ५७ ॥
मुखं नासिकया तस्य ताम्रया ताम्रमाबभौ । संध्यया समभिस्पृष्टं यथा स्यात्सूर्यमण्डलम् ॥ ५८ ॥
लाङ्गूलं च समाविद्धं प्लवमानस्य शोभते । अम्बरे वायुपुत्रस्य शक्रध्वज इवोच्छ्रितम् ॥ ५९ ॥

त्ताः बन्धूननुगम्य निवृत्ताः सुहृत्पक्षे सलिल इति सामीप्ये सप्तमी । 'उदकान्तात् स्निग्धो बन्धुमनुव्रजेत्' इत्युक्तेः ॥ ९२ ॥

५१ ] ति० टी०—अपतदिति छेदः । यदपतत्तल्लघुत्वेनोपपन्नमुपपात्तिमत् ॥ ९१ ॥

रा० टी०—लघुत्वेनेति । कपिवायुसमीरितं पुष्पं यतो लघुत्वेनोपपन्नं युक्तं तत् तस्माद्धेतोः विचित्रं साहित्यरहितमित्यर्थः सागर अपतत् ॥ ९२ ॥

गो०टी०—लघुत्वेनेति । लघुत्वेनोपपन्नं लघुत्वेन युक्तम् ९३

५२] ति० टी०—सर्ववर्णानां विद्युत्सु सत्त्वान्नानावर्णपुष्पोद्यानबद्धस्य सविद्युद्गणमेघोपमा ॥ ९२ ॥

रा० टी०—पुष्पौघेणेति । पुष्पौघेण पुष्पसमूहैः विद्युद्गणविभूषित उद्यन्मेघ इव बभौ ॥ ९३ ॥

गो० टी०—तारेत्यर्धमेकं वाक्यम् । ताराचितमिव आकाशं प्रबभौ स महार्णवः ॥ ९४ ॥

गो० टी०—पुष्पौघेणेति । अनुबद्धेन व्याप्तेन ॥९५–९७॥

५३–५४ ] ति० टी०—रामाभी रमणीयाभिः ॥९३॥९४॥

रा० टी०—तस्येति । तस्य हनुमतः वेगसमुद्भूतैः वेगेन पतितैः पुष्पैरुपलक्षितं तोयमुदिताभिस्ताराभिरुपलक्षितमम्बरमिव अदृश्यत ॥ ९४ ॥

रा० टी०—तस्येति । अम्बरगतौ प्रसारितौ तस्य हनुमतो बाहू पर्वताग्राद्विनिष्क्रान्तौ विनिर्गतौ पञ्चास्यौ पन्नगाविव ददृशाते ॥ ९५ ॥

५५ ] ति० टी०—विवृतवक्त्रत्वात्पिबन्निवेति । अधोवक्त्रत्वे इयमुत्प्रेक्षा । ऊर्ध्ववक्त्रत्वे आकाशं पिपासुरिवेति ॥ ९५ ॥

रा० टी०—पिबन्निति । महाकपिः हनूमान् सोर्मिजालम् ऊर्मिसमूहसहितं महार्णवम् आकाशं च पिपासुः पातुमिच्छुरिव ददृशे, ऊर्ध्वमुखत्वे आकाशं पिपासुरिव अधोमुखत्वे महार्णवं पिपासुरिव प्रतीयत इत्यर्थः ॥ ९६ ॥

गो० टी०—पिबन्निवेति । अर्णवं पिबन्निव आकाशं पिपासुरिवेत्याभ्यामस्य महानुद्योगः सूच्यते । लङ्घनवेगेन सहसा क्षीयमाणे सागरविस्तारे स पीयमान इव भवति एवमम्बरं च । ततोऽतिवेगेन गच्छन् स महार्णवं पिबन्निव बभौ तथा आकाशमपीत्याहुः ॥ ९८ ॥ ९९ ॥

५६ ] ति० टी०—विप्रकाशेते विशेषेण प्रकाशेते स्म । अनलौ दावानलौ ॥ ९६ ॥

रा० टी०—तस्येति । वायुमार्गानुसारिणः वायुमार्गेणानुगमनशीलस्य तस्य हनुमतः विद्युत्प्रभाकारे विद्युत्प्रभासदृशप्रभोत्पादके नयने पर्वतस्थौ अनलौ दावानलाविव प्रकाशेते ॥९७॥

५७ ] ति० टी०—पिङ्गे पिङ्गलवर्णे परिमण्डले परितो बद्धप्रभामण्डले स्थितौ चन्द्रसूर्याविव एकागिरावुदये पिङ्गलमण्डलतयाऽवस्थितौ चन्द्रसूर्याविवेत्यर्थः ॥ ९७ ॥

रा० टी०—पिङ्ग इति । पिङ्गाक्षाणां वानराणां मुख्यस्य हनुमतः परि चतुर्दिक्षु मण्डलं प्रभा ययोस्ते चक्षुषी स्थितौ एकत्र विद्यमानौ चन्द्रसूर्याविव संप्रकाशेते ॥ ९८ ॥

गो० टी०—पिङ्गे इति । पिङ्गे पिङ्गलवर्णे पिङ्गाक्षाणां वानराणां मुख्यस्य परिमण्डले मण्डलाकारे । चन्द्रसूर्यावित्यभूतोपमा ॥ ६० ॥

५८–५९ ] ति० टी०—नासिकया युक्तमिति शेषः । संध्याकालिकं सूर्यमण्डलं यथा तथा बभावित्यर्थः ॥९८॥९९॥

रा० टी०—मुखमिति । ताम्रया नासिकया युक्तं ताम्रमरुणं तस्य मुखं संध्यया समभिस्पृष्टं संयुक्तं सूर्यमण्डलं यथा स्यात् तथा आबभौ ॥ ९९ ॥

गो०टी०-मुखमिति। तत्सूर्यमण्डलं सन्ध्यासूर्यमण्डलम् ६१

रा० टी०—लाङ्गूलमिति । समाविद्धम् उन्नतीकृतमुच्छ्रितं शक्रध्वजमिव शोभते ॥ ६० ॥

गो० टी०—लाङ्गूलमिति । समाविद्धम् उन्नतीकृतम् ॥ ६२ ॥ ६३ ॥

१ अर्धमेतदधिकं गो. पाठे । २ अनुबद्धेनेति गो. पाठः । ३ आकाश इति गो. पाठः । ४ समाधूनैरिति गो. पाठः । ५ उदितानिति गो. पाठः । ६ तदिति गो. पाठः । ७ उच्छ्रित इति गो. पाठः ।

लाङ्गूल[1]चक्रो हनुमाञ्शुक्लदंष्ट्रोऽनिलात्मजः । व्यरोचत महाप्राज्ञः परिवेषीव भास्करः ॥ ६० ॥
स्फिग्देशेना[2]तिताम्रेण रराज स महाकपिः । महता दारितेनेव गिरिर्गैरिकधातुना ॥ ६१ ॥
तस्य वानरसिंहस्य प्लवमानस्य सागरम् । कक्षान्तरगतो वायुर्जीमूत इव गर्जति ॥ ६२ ॥
खे यथा [3]निपतत्युल्का [4]उत्तरान्ताद्विनिःसृता । दृश्यते सानुबन्धा च तथा स कपिकुञ्जरः ॥ ६३ ॥
पतत्पतङ्गसंकाशो व्यायतः शुशुभे कपिः । प्रवृद्ध इव मातङ्गः कक्ष्यया बध्यमानया ॥ ६४ ॥
उपरिष्टाच्छरीरेण छायया चावगाढया । सागरे मारुताविष्टा नौरिवासीत्तदा कपिः ॥ ६५ ॥
यं यं देशं समुद्रस्य जगाम स महाकपिः । स तु[5] तस्याङ्गवेगेन सोन्माद इव लक्ष्यते ॥ ६६ ॥
सागरस्योर्मिजालानामुरसा शैल[6]वर्ष्मणा । अभिघ्नंस्तु महावेगः पुप्लुवे स महाकपिः ॥ ६७ ॥

६० ] ति० टी०—शुक्लदंष्ट्रत्वं स्वरूपकथनमात्रम्, न तु परिवेषिभास्करोपमोपयोगि ॥ ६० ॥

रा० टी०—लाङ्गूलेति । लाङ्गूलचक्रः चक्राकारलाङ्गूल-विशिष्टः शुक्लदंष्ट्रो हनुमान् परिवेषी मण्डलवान् भास्कर इव व्यरोचत ॥ ६१ ॥

६१ ] ति० टी०—स्फिग्देशेन कटिप्रदेशेन । तन्मात्र-स्यातिताम्रत्ववर्णनादन्यत्राल्पवद्वर्णत्वम्, अत एव दारितगैरिक-धातुयुक्तगिर्युपमा ॥ ६१ ॥

रा० टी०—स्फिगिति । अभिताम्रेण अत्यरुणेन स्फिग्दे-शेन कट्यधोभागेनोपलक्षितः स हनुमान् दारितेन विदारितेन गैरिकधातुनोपलक्षितो गिरिरिव रराज ॥ ६२ ॥

गो० टी०—स्फिग्देशेनेति । स्फिग्देशेन वालमूलप्र-देशेन ॥ ६४ ॥

६२ ] ति० टी०—जीमूत इति सप्तम्यन्तमिति कतकः । गर्जति जगर्ज ॥ ६२ ॥

रा० टी०—तस्येति । सागरं प्लवमानस्य तस्य हनुमतः, कच्छान्तरगतः कच्छमध्ये प्राप्तो वायुः जीमूतो मेघ इव गर्जति जगर्ज । जीमूते इति सप्तम्यन्तमिति कतक इति भट्टाः तत्रारुचिबीजं तु विनिगमनाविरहः ॥ ६३ ॥

गो० टी०—तस्येति । गर्जति अगर्जत् ॥ ६९ ॥

६३] ति०टी०—उत्तरान्तादुत्तरोर्ध्वदिग्भागात् । सानुबन्धा सूक्ष्मोल्कान्तरानुबद्धा इदं विशेषणं पुच्छसाहित्यात् ॥ ६३ ॥

रा० टी०—खे इति । उत्तरान्तात् उत्तरोर्ध्वदिक्प्रदेशाद्वि-निःसृता सानुबन्धा पुच्छाकृतितेजोविशेषयुक्ता उल्का यथा खे अकाशे निपतति गच्छति तथा सः लाङ्गूलविशिष्टः कपिकुञ्जरो हनुमान् दृश्यते ॥ ६४ ॥

गो० टी०—खे यथेति । सानुबन्धा सपुच्छा । उल्का हि पुच्छयुक्ता निपतति ॥ ६६ ॥

६४ ] ति० टी०—पतत्पतङ्गसंकाशो गच्छत्सूर्यसंकाशो व्यायतो दीर्घः कपिर्वक्षेण बध्यमानया कक्ष्यया गजमध्यबन्ध-नरज्ज्वा युक्तः प्रवृद्धो मातङ्ग इव बभौ । 'कक्ष्या प्रकोष्ठे हर्म्यादेः काञ्च्यां मध्येभबन्धने' इति ॥ ६४ ॥

रा० टी०—पतदिति । व्यायतोऽतिदीर्घः पतत्पतङ्गसंकाशः प्रचलत्सूर्यसदृशः कपिः सलाङ्गूलो हनुमान् बध्यमानया गजश-रीरसंबद्धया कक्ष्यया गजबन्धनेनोपलक्षितः प्रवृद्धो महान्मातङ्ग इव शुशुभे ॥ ६९ ॥

गो० टी०—पतदिति । पतङ्गः सूर्यः व्यायतो दीर्घः । प्रवृद्ध इव दीर्घ इव कक्ष्यायां बध्यमानायां हि मातङ्गो दीर्घो भवति ॥ ६७ ॥

६५ ] ति० टी०—उपरिष्टात्खे गच्छता स्वशरीरेणाधः सागरेऽवगाढया स्वस्य छायया प्रतिबिम्बेन लक्षितः स सागरे मारुताविष्टा नौरिवासीत् । नौश्चोपरि विद्यमानपदार्थेन सह सागरे वायुवशाद्वेगेन चञ्चला गच्छतीति तदुपमा ॥ ६५ ॥

रा० टी०—उपरिष्टादिति । उपरिष्टात् उपरि विद्यमानेन शरीरेण सागरे अवगाढया सागरजलसंलग्नया छायया च उपलक्षितः कपिः मारुताविष्टा शीघ्रनिर्गमायोपरिबद्धमारु-तावरोधनकर्तृवस्त्रविशेषहेतुकवायुयुक्ता नौरिवासीत् ॥ ६६ ॥

गो० टी०—उपरिष्टादिति । नौर्जलावगाढेनाधोभागेन व्योमावगाढेन चोर्ध्वभागेन गच्छति । अयं च उपरिगतशरी-रेणाधोजलावगाढच्छायया चैकाकारः सन् मारुतपूरितकठा नौरिवासीत् ॥ ६८ ॥

६६ ] ति० टी०—सोन्माद इव सापस्मार इव घूर्णन-फेनवमनविक्रोशनादिविकारसाम्यात् ॥ ६६ ॥

रा० टी०—यं यमिति । स हनुमान् समुद्रस्य यं यं देशं जगाम स देशस्तस्य हनुमतो वेगेन सोन्मादः अपस्मा-रादिरोगसहित इव लक्ष्यते । आघूर्णन् बहुफेनः अतिशब्द-वानभवदित्यर्थः ॥ ६७ ॥

गो० टी०—यं यमिति । सोन्माद इव समुद्धर्ष इव समु-द्धतजल इत्यर्थः ॥ ६९ ॥

६७ ] ति० टी०—ऊर्मिजालानामभिघ्नन्, कर्मणः शेष-त्वविवक्षया षष्ठी । तान्यभिघ्नन्निति यावत् । शैलसदृशेन अनेन सागरोर्मीणामत्युन्नतत्वं सूचितम् ॥ ६७ ॥

रा० टी०—सागरस्येति । शैलवर्ष्मणां पर्वताकाराणां

१ चक्रेण महानिति गो. पाठः । २ अभीति गो. रा. पाठः । ३ निपतन्तीति गो. रा. पाठः । ४ ह्युत्तरेति गो. पाठः । ५ स तस्योर्विति गो. पाठः । ६ वर्ष्मणामिति गो. रा. पाठः ।

कपिवातश्च बलवान्मेघवातश्च [1]निर्गतः । सागरं भीम[2]निर्ह्रादं कम्पयामासतुर्भृशम् ॥ ६८ ॥
विकर्षन्नूर्मिजालानि बृहन्ति लवणाम्भसि । पुप्लुवे कपिशार्दूलो विकिरन्निव रोदसी ॥ ६९ ॥
मेरुमन्दरसंकाशा[3]नुद्गतान्सुमहार्णवे । [4]अत्यक्रामन्महावेगस्तरङ्गान्गणयन्निव ॥ ७० ॥
तस्य वेगसमुद्धुष्टं जलं सजलदं तदा । अम्बरस्थं वि[5]बभ्राजे [6]शरदभ्रमिवाततम् ॥ ७१ ॥
तिमिनक्रझषाः कूर्मा दृश्यन्ते विवृतास्तदा । वस्त्रापकर्षणेनेव शरीराणि शरीरिणाम् ॥ ७२ ॥
[7]क्रममाणं समीक्ष्याथ [8]भुजगाः सागरंगमाः । व्योम्नि तं कपिशार्दूलं [9]सुपर्णमिव मेनिरे ॥ ७३ ॥
दशयोजनविस्तीर्णा त्रिंशद्योजनमायता । छाया वानरसिंहस्य जवे चारुतराऽभवत् ॥ ७४ ॥
श्वेताभ्रघनराजीववायुपुत्रानुगामिनी । तस्य सा शुशुभे छाया [10]पतिता लवणाम्भसि ॥ ७५ ॥
शुशुभे स महातेजा महाकायो महाकपिः । वायुमार्गे निरालम्बे पक्षवानिव पर्वतः ॥ ७६ ॥

सागरस्य ऊर्मिजालानाम् उरसा उरोवेगेन अभिघ्नन् सन् महावेगः स हनुमान् पुप्लुवे । ऊर्मिजालानामित्यत्र कर्मणः शेषत्वविवक्षया षष्ठी ॥ ६८ ॥

गो० टी०—सागरस्येति । शैलवर्ष्मणां शैलतुल्यानाम् 'वर्ष्म देहप्रमाणयोः' इति सज्जनः ॥ ७० ॥ ७१ ॥

६८ ] ति० टी०—कपिवातः कपिनोत्थापितो वातः । मेघवातो मेघमण्डलगो वातः ॥ ६८ ॥

रा० टी०—कपीति । निर्गतः प्रादुर्भूतः बलवान् कपिवातः प्रचलितकपिशरीरहेतुकवायुः मेघवातः मण्डलप्राप्तो वायुश्च सागरं भृशं कम्पयामासतुः ॥ ६९ ॥

६९ ] ति० टी०—रोदसी द्यावापृथिव्यौ विकिरन्निव पृथक्क्षिपन्निव ॥ ६९ ॥

रा० टी०—विकर्षन्निति । बृहन्ति अतिस्थूलानि ऊर्मिजालानि विकर्षन् सहैव नयन् सन् रोदसी द्यावापृथिव्यौ लवणाम्भसि विकिरन् प्रक्षिपन्निव कपिशार्दूलः पुप्लुवे ॥ ७० ॥

गो० टी०—विकर्षन्निति । विकिरन्निव विभजन्निव रोदसी द्यावापृथिव्यौ ॥ ७२ ॥

७० ] ति० टी०—अतीत्यातीत्य गमनाद्विगणयन्निवेत्युत्प्रेक्षा ॥ ७० ॥

रा० टी०—मेर्विति । महावेगो हनुमान् सुमहार्णवे उद्गतान् प्रादुर्भूतान् मेरुमन्दरसंकाशान् तरङ्गान् गणयन् संख्यातान् कुर्वन् इव अत्यक्रामत् निरगच्छत् ॥ ७१ ॥

गो० टी०—मेर्विति । अतिक्रामत् अत्यक्रामत् ॥ ७३ ॥

७१ ] ति० टी०—तस्य वेगेन समुद्घुष्टमूर्ध्वंक्षिप्तम्, अत एव सजलदं जलदसहचरं मेघमण्डलपर्यन्तमूर्ध्वं गतमम्बरस्थं जलमाततं विततं शरदभ्रमिव शरन्मेघ इव बभौ । शुक्लत्वादिति भावः ॥ ७१ ॥

रा० टी०—तस्येति । तस्य हनुमतो वेगेन समुद्घुष्टम् ऊर्ध्वं प्रक्षिप्तम् अत एव सजलदं जलदेन सह स्थितम् अम्बरस्थजलम् आततं विस्तृतं शारदाभ्रमिव विबभ्राजे ॥ ७२ ॥

गो० टी०—तस्येति । तस्य हनुमतः वेगेन ऊरुवातेन समुद्धूतं समुत्थापितं सजलदं जलं जलदो जलं चोद्धूतमित्यर्थः ॥ ७४ ॥

७२–७३ ] ति० टी०—विवृता वेगाज्जलोत्सारणेन व्यक्तदेहाः । वस्त्रापकर्षणेन वस्त्रापहारेण शरीराण्यवयवाः ॥ ७२ ॥ ७३ ॥

रा० टी०—तिमीति । वस्त्रापकर्षणेन शरीरिणां मनुष्यादीनां शरीराणीव विवृता जलरूपप्रावरणरहितास्तिम्यादयो दृश्यन्ते ॥ ७३ ॥

रा० टी०—क्रममाणमिति । सागरङ्गमाः भुजगाः व्योम्नि क्रममाणं तं कपिशार्दूलं सुपर्णमिव मेनिरे ॥ ७४ ॥

गो० टी०—तिमीति । तिमयो महामत्स्याः नक्राः ग्राहाः झषाः मकराः विवृताः जलविभेदेन प्रकाशिताः ॥ ७५ ॥ ७६ ॥

७४ ] ति० टी०—छायाप्रमाणवर्णनेन तच्छरीरप्रमाणमपि वर्णितप्रायम् । इयं माध्याह्निकी छाया ॥ ७४ ॥

रा० टी०—दशेति । दशयोजनविस्तीर्णा दशयोजनपरिमितविस्तारविशिष्टा त्रिंशद्योजनमायता दीर्घा वानरसिंहस्य छाया जवे वेगे सति चारुतरा अतिरमणीया अभवत् ॥ ७५ ॥

गो० टी०—दशयोजनविस्तीर्णेति । ननु त्रिंशद्योजनायतत्वे चतुर्थपदेऽपि लङ्काप्राप्तिः स्यात् मैनाकसंवादसुरसासंवादादिकं च विरुध्येत । नहि बिम्बादधिकपरिमाणत्वं प्रतिबिम्बस्य संभवतीति न शङ्कनीयं छायाशब्दो हि नात्र प्रतिबिम्बपरः किन्त्वनातपपरः । प्रातरेव हि समुद्रतरणमुक्तम् तदा तस्य छाया समुद्रे तथाप्रमाणा दृश्येतैव ॥ ७७ ॥

७५–७६ ] ति० टी०—श्वेताभ्रघना राजीवश्वेताभ्रयुक्तमेघपङ्क्तिवत्तस्य च्छाया शुशुभे । शुक्लदंष्ट्रादिना नानावर्णत्वादुक्तोपमानिर्वाहः ॥ ७५ ॥ ७६ ॥

रा० टी०—श्वेतेति । लवणाम्भसि पतिता वायुपुत्रानुगामिनी तस्य वायुपुत्रस्य छाया श्वेताभ्रघनराजीव श्वेताभ्रसंलग्ना घनराजी मेघपङ्क्तिरिव शुशुभे ॥ ७६ ॥

१ निःसृत इति गो. पाठः । २ निर्घोषमिति गो. पाठः । ३ उद्धतान्स इति गो. पाठः । ४ अतिक्रामन्निति गो. पाठः । ५ बभ्राजेति गो. पाठः । ६ शारदेति रा. पाठः । ७ प्लवमानमिति गो. पाठः । ८ भुजङ्गाः सागरालया इति गो. पाठः । ९ सुपर्णं इतीति गो. पाठः । १० विततेति गो. पाठः ।

येनासौ याति बलवान्वेगेन कपिकुञ्जरः । तेन मार्गेण सहसा द्रोणीकृत इवार्णवः ॥ ७७ ॥
आपाते पक्षिसङ्घानां पक्षिराज इव व्रजन् । हनुमान्मेघजालानि प्रकर्षन्मारुतो यथा ॥ ७८ ॥
पाण्डरारुणवर्णानि नीलमञ्जिष्ठकानि च । कपिनाऽऽकृष्यमाणानि महाभ्राणि चकाशिरे ॥ ७९ ॥
प्रविशन्नभ्रजालानि निष्पतंश्च पुनः पुनः । प्रच्छन्नश्च प्रकाशश्च चन्द्रमा इव दृश्यते ॥ ८० ॥
प्लवमानं तु तं दृष्ट्वा प्लवगं त्वरितं तदा । ववृषुस्तत्र पुष्पाणि देवगन्धर्वदानवाः ॥ ८१ ॥
तताप नहि तं सूर्यः प्लवन्तं वानरेश्वरम् । सिषेवे च तदा वायू रामकार्यार्थसिद्धये ॥ ८२ ॥
ऋषयस्तुष्टुवुश्चैनं प्लवमानं विहायसा । जगुश्च देवगन्धर्वाः प्रशंसन्तो वनौकसम् ॥ ८३ ॥
नागाश्च तुष्टुवुर्यक्षा रक्षांसि विविधानि च । प्रेक्ष्य सर्वे कपिवरं सहसा विगतक्लमम् ॥ ८४ ॥
तस्मिन्प्लवगशार्दूले प्लवमाने हनूमति । इक्ष्वाकुकुलमानार्थी चिन्तयामास सागरः ॥ ८५ ॥
साहाय्यं वानरेन्द्रस्य यदि नाहं हनूमतः । करिष्यामि भविष्यामि सर्ववाच्यो विवक्षताम् ॥ ८६ ॥

---

रा० टी०–शुशुभे इति । महातेजाः स हनुमान् निरालम्बे वायुमार्गे पक्षवान् पर्वत इव शुशुभे ॥ ७७ ॥

गो० टी०–श्वेताभ्रेति । अभ्रघनः अभ्रमूर्तिः ॥७८॥७९॥

७७ ] ति० टी०–द्रोणी हर्म्यादौ जलनिर्गमकाष्ठयन्त्रं तज्जलधारायुक्त इव कृतो द्रोणीकृतः । मेघेषु तदाघातेन तेभ्यो जलस्रवणादिति भावः ॥ ७७ ॥

रा० टी०–येनेति । येन मार्गेण असौ कपिकुञ्जरो याति तेन मार्गेण अर्णवः सहसा शीघ्रं द्रोणीव कृतः हर्म्यादौ जलनिर्गमनाय काष्ठयन्त्रे इव प्रापित इत्यर्थः ॥ ७८ ॥

गो० टी०–येनेति । द्रोणी कटाहः ॥ ८० ॥

७८ ] ति० टी०–आपतन्त्यस्मिन्नित्यापातो मार्गः । पाण्डुरत्वादिगुणकानि मेघजालानि प्रकर्षन्मारुतो यथा तथा बभूवेति शेषः ॥ ७८ ॥

रा० टी०–आपात इति । पक्षिसंघानाम् आपाते आपतनमार्गे पक्षिराज इव व्रजन् हनुमान् मेघजालानि प्रकर्षन् सहैव नयन् सन् मारुत इव बभूवेति शेषः ॥ ७९ ॥

गो० टी०–आपात इति । आपाते मार्गे ॥ ८१–८४ ॥

७९–८० ] ति० टी०–कपिनाऽऽकृष्यमाणानि महाभ्राणि चकाशिरे । मारुतेनाकृष्यमाणानीवेति शेषः ॥ ७९॥८० ॥

रा० टी०–पाण्डुरेति । कपिना आकृष्यमाणानि पाण्डुरत्वादिवर्णविशिष्टानि महाभ्राणि चकाशिरे ॥ ८० ॥

रा० टी०–प्रविशन्निति । अभ्रजालानि प्रवेशादि कुर्वन् अत एव प्रच्छन्नः प्रकाशश्च कपिश्चन्द्रमा इव दृश्यते ॥ ८१ ॥

८१ ] ति० टी०–तत्र प्लवगे ॥ ८१ ॥

रा० टी०–प्लवमानमिति । प्लवमानं तं हनुमन्तं दृष्ट्वा देवगन्धर्वदानवाः पुष्पवर्षाणि ववृषुः ॥ ८२ ॥

८२–८३ ] ति० टी०–तं नहि ततापेत्यन्वयः । वायुः सिषेवे श्रमापनयनायेति भावः ॥ ८२ ॥ ८३ ॥

रा० टी०–ततापेति । सूर्यः रामकार्यार्थसिद्धये प्लवन्तम् अत एव हितं वानरेश्वरं न तताप तदा वायुः सिषेवे ॥ ८३ ॥

रा० टी०–ऋषय इति । वनौकसमेनं हनुमन्तमृषयस्तुष्टुवुः प्रशंसन्तो देवगन्धर्वाः जगुश्च ॥ ८४ ॥

गो० टी०–ततापेति । रामकार्यं सीतान्वेषणं तदेवार्थः प्रयोजनं तस्य सिद्धये लाभाय तद्धेतुभूतहनुमच्छ्रमनिवर्तनायेत्यर्थः ॥ ८५ ॥ ८६ ॥

८४ ] ति० टी०–कपिवरं विगतक्लमं वीक्ष्य नागादयस्तुष्टुवुः ॥ ८४ ॥

रा० टी०–नागा इति । विगतक्लमम् अन्यासाध्यव्यापारवत्त्वेऽपि क्लमरहितं कपिवरं प्रेक्ष्य नागादयस्तुष्टुवुः ॥ ८५ ॥

गो० टी०–नागा इति । रक्षांसि दिक्पालकरक्षस्संबन्धीनि ॥ ८७ ॥

८५ ] ति० टी०–इक्ष्वाकुकुलस्य स्वोत्पादकस्य मानं सत्कारमर्थयते तथाभूतः ॥ ८५ ॥

रा० टी०–तस्मिन्निति । हनूमति प्लवमाने सति इक्ष्वाकुकुलमानार्थी इक्ष्वाकुकुलस्य स्वजन्मकारणीभूतस्य मानं सत्कारमर्थयते तच्छीलः सागरश्चिन्तयामास ॥ ८६ ॥

गो० टी०–तस्मिन्निति । मानार्थी बहुमानार्थी । स्वयं सागरत्वादिति भावः ॥ ८८ ॥

८६ ] ति० टी०–विवक्षतां वागिन्द्रियवत्प्राणिनाम् । सर्ववाच्यः सर्वं वाच्यं निन्दा यस्मिंस्तादृशो भविष्यामि सर्वनिन्दास्पदं भविष्यामीत्यर्थः ॥ ८६ ॥

रा० टी०–तच्चिन्तास्वरूपमाह–साहाय्यमिति । हनुमतः साहाय्यं यदि नाहं करिष्यामि तर्हि विवक्षतां कुत्सितजननिन्दां वक्तुमिच्छतां जनानां सर्ववाच्यः सर्वात्मना वक्तव्यः निन्दनीय इत्यर्थः, भविष्यामि ॥ ८७ ॥

गो० टी०–साहाय्यमिति । सर्ववाच्यः सर्वप्रकारेण निन्द्यः विवक्षतां वक्तुमिच्छताम् ॥ ८९–९१ ॥

---

१ माञ्जिष्ठेति गो. रा. पाठः । २ लक्ष्यते इति गो. पाठः । ३ ववर्षुः पुष्पवर्षाणीति गो. पाठः । ४ वानरोत्तममिति गो. पाठः । ५ जग्मुरिति रा. पाठः । ६ महौजसमिति गो. पाठः । ७ विबुधाः खगा इति गो. पाठः ।

अहमिक्ष्वाकुनाथेन [1]सागरेण विवर्धितः । इक्ष्वाकुसचिवश्चायं [2]तन्नार्हत्यवसादितुम् ॥ ८७ ॥
तथा मया विधातव्यं विश्रमेत यथा कपिः । शेषं च मयि विश्रान्तः [3]सुखी सोऽतितरिष्यति ॥ ८८ ॥
इति कृत्वा मतिं साध्वीं समुद्रश्छन्नमम्भसि । हिरण्यनाभं मैनाकमुवाच गिरिसत्तमम् ॥ ८९ ॥
त्वमिहासुरसङ्घानां [4]देवराज्ञा महात्मना । पातालनिलयानां हि परिघः संनिवेशितः ॥ ९० ॥
त्वमेषां [5]ज्ञातवीर्याणां पुनरेवोत्पतिष्यताम् । पातालस्याप्रमेयस्य द्वारमावृत्य तिष्ठसि ॥ ९१ ॥
तिर्यगूर्ध्वमधश्चैव शक्तिस्ते शैल वर्धितुम् । तस्मात्संचोदयामि त्वामुत्तिष्ठ गिरिसत्तम ॥ ९२ ॥
स एष कपिशार्दूलस्त्वामुपर्येति वीर्यवान् । हनूमान्राम[6]कार्यार्थी भीमकर्मा खमाप्लुतः ॥
[ [7]अस्य साह्यं मया कार्यमिक्ष्वाकुकुलवर्तिनः । मम इक्ष्वाकवः पूज्याः परं पूज्यतमास्तव ॥
कुरु साचिव्यमस्माकं न नः कार्यमतिक्रमेत् । कर्तव्यमकृतं कार्यं सतां मन्युमुदीरयेत् ॥
सलिलादूर्ध्वमुत्तिष्ठ तिष्ठत्वेष कपिस्त्वयि । अस्माकमतिथिश्चैव पूज्यश्च प्लवतां वर ॥
चामीकरमहानाभ देवगन्धर्वसेवित । हनुमांस्त्वयि विश्रान्तस्ततः शेषं गमिष्यति ॥
काकुत्स्थस्यानृशंस्यं च मैथिल्याश्च विवासनम् । ] श्रमं च प्लवगेन्द्रस्य समीक्ष्योत्थातुमर्हसि ॥ ९३ ॥

---

८७ ] ति० टी०–उक्तमेव विवृणोति—अहमिति । तत्तस्मादेषोऽवसादितुमवसत्तुं श्रमं गन्तुं नार्हति । सागरेण विवर्धित इत्युक्त्या कश्चिद्देशः सगरखातस्याप्येतत्संबद्ध इति ज्ञायते ॥ ८७ ॥

रा० टी०–तत्र हेतुं वदन्नाह–अहमिति । इक्ष्वाकुनाथेन सगरेणाहं विवर्धितः तत्तस्माद्धेतोः अवसादितुं श्रमं प्राप्तुम् अयम् इक्ष्वाकुसचिवः नार्हति ॥ ८८ ॥

८८ ] ति० टी०–शेषं मार्गशेषम् ॥ ८८ ॥

रा० टी०–तथेति । यथाऽयं कपिः विश्रमेत तथा मया विधातव्यं मयि मद्विहितविश्रान्तिस्थाने विश्रान्तः निवर्तितश्रमः अत एव सुखी स हनुमान् शेषं मार्गम् अतितरिष्यति ॥८९॥

८९ ] ति० टी०–अम्भसि स्वाम्भसि छन्नं हिरण्यनाभं हिरण्यप्रधानम् तन्मयमिति यावत् । 'नाभिः प्रधाने कस्तूर्याम्' इति ॥ ८९ ॥

रा० टी०–इतीति । समुद्रः इति साध्वीं मतिं कृत्वा अम्भसि जले छन्नं हिरण्यनाभं सुवर्णप्रधानं तन्मयमित्यर्थः, मैनाकमुवाच । 'नाभिः प्रधाने कस्तूर्याम्' इति कोशः ॥९०॥

गो० टी०–इतीति । हिरण्यनाभं हिरण्यश्टङ्गं नाभिशब्दो ह्यध्यक्षवाची श्टङ्गं च पर्वतस्याध्यक्षमेव । 'नाभिरध्यक्षकस्तूर्योः' इति दर्पः ॥ ९२ ॥

९० ] ति० टी०–परिघ इति पक्षच्छेदभयात्समुद्रप्रवेशानन्तरं पातालस्थराक्षसनिरोधार्थं द्वारनिरोधकपरिघवन्मैनाकः स्थापित इत्यर्थः ॥ ९० ॥

रा० टी०–तद्वचनाकारमाह–त्वमिति । पातालनिलयानां मार्गनिरोधाय परिघः परिघत्वेन परिकल्पितस्त्वं देवराज्ञा देवराजेन संन्निवेशितः निर्गमबिले संस्थापितः ॥ ९१ ॥

गो० टी०–त्वमिति । परिघः अर्गलम् । 'परिघो मुद्गरेऽर्गले' इति दर्पः ॥ ९३ ॥

९१ ] ति० टी०–ज्ञातवीर्याणां देवराजेनेति शेषः । एषामसुराणाम् ॥ ९१ ॥

रा० टी०–तदेव भङ्ग्यन्तरेणाह–त्वमिति । ज्ञातवीर्याणाम् एषां पुनरप्युत्पतिष्यताम् असुरसंघानां पातालस्य द्वारमावृत्य तिष्ठसि ॥ ९२ ॥

गो० टी०–परिघत्वमेवाह–त्वमेषामिति ॥ ९४ ॥

९२ ] ति० टी०–शक्तिस्ते अस्तीति शेषः । तस्मात्पिहितपातालमुख एव सन्वृद्धिशक्त्या वर्धमानः सन्नूर्ध्वमुत्तिष्ठ ॥ ९२ ॥

रा० टी०–तिर्यगिति । हे शैल ! तिर्यगादिषु वर्धितुं ते शक्तिरस्तीति शेषः । तस्मात् त्वां संचोदयामि अतस्त्वमुत्तिष्ठ९३

गो० टी०–तिर्यगिति । शक्तिः अस्तीति शेषः॥९५॥९६॥

९३ ] ति० टी०–उपर्येति तवोपरिप्रदेशं प्राप्नोति । तस्माद्विश्रामाय त्वमुत्तिष्ठेति पूर्वेणान्वयः । एतदुत्तरम् 'हनूमान्रामकार्यार्थी भीमकर्मा खमाप्लुतः । श्रमं च प्लवगेन्द्रस्य समीक्ष्योत्थातुमर्हसि ॥' इति प्राचीनः पाङ्क्तः पाठः । अत्र खमाप्लुतः इत्यनन्तरं केचिच्छ्लोकाः प्रक्षिप्ताः परैरिति कतकः । यतो रामकार्यार्थी यतश्च श्राम्यति ततस्तस्य श्रमं समीक्ष्योत्थातुमर्हसि ॥ ९३ ॥

रा० टी०–तत्प्रयोजनमाह–स इति । खमाकाशमाप्लुतः प्राप्तः स प्रसिद्धः एष हनूमान् त्वामुपर्येति तवोपरिदेशं प्राप्नोति अतः प्लवगेन्द्रस्य श्रमं समीक्ष्य उत्थातुमर्हसि । सार्धश्लोक एकान्वयी ॥ ९४ ॥ ९५ ॥

गो० टी०–अस्येति । इक्ष्वाकोः कुले वंशे वर्तते शुश्रूषत

---

१ सगरेणेति गो. पाठः । २ नावसीदितुमर्हतीति गो. पाठः । ३ सुखेनातिपतिष्यतीति गो. पाठः । ४ पातालतलवासिनाम् । देवराज्ञा गिरिश्रेष्ठेति गो. पाठः । ५ जातेति गो. पाठः । ६ कार्यार्थमिति गो. पाठः । ७ एते सार्धचत्वारः श्लोकाः गो. अधिकाः ।

हिरण्यगर्भो मैनाको निशम्य लवणाम्भसः । उत्पपात जलात्तूर्णं महाद्रुमलतावृतः ॥ ९४ ॥
स सागरजलं भित्त्वा बभूवात्युच्छ्रितस्तदा । यथा जलधरं भित्त्वा दीप्तरश्मिर्दिवाकरः ॥ ९५ ॥
स महात्मा मुहूर्तेन पर्वतः सलिलावृतः । दर्शयामास शृङ्गाणि सागरेण नियोजितः ॥ ९६ ॥
शातकुम्भमयैः शृङ्गैः सकिंनरमहोरगैः । आदित्योदयसंकाशैरालिखद्भिरिवाम्बरम् ॥ ९७ ॥
तस्य जाम्बूनदैः शृङ्गैः पर्वतस्य समुत्थितैः । आकाशं शस्त्रसंकाशमभवत्काञ्चनप्रभम् ॥ ९८ ॥
जातरूपमयैः शृङ्गैर्भ्राजमानैर्महाप्रभैः । आदित्यशतसंकाशः सोऽभवद्गिरिसत्तमः ॥ ९९ ॥
समुत्थितमसङ्गेन हनूमानग्रतः स्थितम् । मध्ये लवणतोयस्य विघ्नोऽयमिति निश्चितः ॥ १०० ॥
स तमुच्छ्रितमत्यर्थं महावेगो महाकपिः । उरसा पातयामास जीमूतमिव मारुतः ॥ १०१ ॥
स तदासादितस्तेन कपिना पर्वतोत्तमः । बुद्ध्वा तस्य हरेर्वेगं जहर्ष च ननाद च ॥ १०२ ॥

---

इति इक्ष्वाकुकुलवर्ती तस्य पूज्यतमास्तत्र मत्संबन्धादिति भावः । यद्वा त्वदुपकारकवायुपुत्रमुद्दिश्य ॥ ९७ ॥

गो० टी०—कुर्विति । कार्यं प्रयोजनं विश्रान्त्यादि कर्तव्यं कार्यमकृतं सतां मन्युं कोपम् उदीरयेत् प्रेरयेत् उत्पादयेत् ॥ ९८ ॥ ९९ ॥

गो० टी०—चामीकरेति । चामीकरमहानाभ स्वर्णमयमहाशृङ्ग ॥ १०० ॥

गो० टी०—काकुत्स्थस्येति । काकुत्स्थस्यानृशंस्यं रामस्य सीताविषयां दयाम् ॥ १०१ ॥

९४–९६ ] ति० टी०—लवणाम्भसः वचो निशम्येत्यर्थः ॥ ९४—९६ ॥

रा० टी०—हिरण्येति । मैनाकः लवणाम्भसः वचनमिति शेषः, निशम्य श्रुत्वा जलात् तूर्णमुत्पपात ॥ ९६ ॥

रा० टी०—उत्पतनप्रकारमाह—स इति । स मैनाकः सागरजलं भित्त्वा अत्युच्छ्रितो बभूव । तत्र दृष्टान्तः—जलधरं मेघं भित्त्वा दिवाकरो यथा ॥ ९७ ॥

रा० टी०—स इति । सागरेण नियोजितः स मैनाकः मुहूर्तेन शृङ्गाणि दर्शयामास ॥ ९८ ॥

गो० टी०—हिरण्यनाभ इति । निशम्य वचनमिति शेषः ॥ १०२–१०४ ॥

९७ ] ति० टी०—एतदुत्तरम् 'शातकुम्भमयैः' इत्यादि । अत्रापि द्वित्रश्लोकप्रक्षेपः परेषाम् । हिरण्यनाभत्वविवरणम्—शातकुम्भमयैरिति । आदित्योदयसंकाशैरिति उपलक्षित इति शेषः ॥ ९७ ॥

रा० टी०—शातकुम्भैरिति । सकिंनरमहोरगैः किन्नरमहोरगसहितैः शातकुम्भमयैः सुवर्णप्रचुरैः आदित्योदयसंकाशैः आदित्योदयेन प्रकाशमानैः उदयकालिकादित्यसदृशैर्वा अम्बरमुल्लिखद्भिरिव शृङ्गैर्मैनाकः शुशुभे इति शेषः ॥ ९९ ॥

गो० टी०—शातकुम्भेति । शातकुम्भनिभैः स्वर्णसदृशैः आदित्योदयसंकाशैः आदित्योदयतुल्यैरित्यर्थः । शृङ्गैरुपलक्षितः शृङ्गाणि दर्शयामासेति योजना ॥ १०५ ॥

९८–९९ ] ति० टी०—शस्त्रसंकाशं शस्त्रवच्छ्यामममाकाशं काञ्चनप्रभमभवत् ॥ ९८ ॥ ९९ ॥

रा० टी०—तस्येति । समुत्थितैः तस्य शृङ्गैः शस्त्रसंकाशं श्यामत्वेन खड्गसदृशमाकाशं काञ्चनप्रभम् अभवत् ॥ १०० ॥

रा० टी०—जातेति । गिरिसत्तमः स मैनाकः जातरूपमयैः सुवर्णप्रचुरैः अत एव महाप्रभैः अत एव भ्राजमानैः अतिशोभितैः शृङ्गैः स्वशिखरैः आदित्यशतसंकाशोऽभवत् ॥ १०१ ॥

गो० टी०—तस्येति । शस्त्रसंकाशं नीलमित्यर्थः । 'शस्त्रमायुधलोहयोः' इति विश्वः ॥ १०६ ॥ १०७ ॥

१०० ] ति० टी०—असङ्गेनाविलम्बेन ॥ १०० ॥

रा० टी०—तमिति । असङ्गेन विलम्बराहित्येन लवणतोयस्य मध्ये उत्थितं मैनाकं विघ्नोऽयमिति निश्चितः निश्चितवान् हनुमानासीदिति शेषः ॥ १०२ ॥

१०१ ] ति० टी०—पातयामास तमत्यर्थमुच्छ्रितं दृष्ट्वा तच्छृङ्गं पातयामासेत्यर्थः ॥ १०१ ॥

रा० टी०—स इति । स हनुमान् उच्छ्रितमुत्थितं तं मैनाकं जीमूतं मारुत इव उरसा पातयामास ॥ १०३ ॥

गो० टी०—तमिति । निश्चितः निश्चितवान् । कर्तरि निष्ठा ॥ १०८ ॥ १०९ ॥

१०२ ] ति० टी०—सादितोऽवसादितः अधःकृत इति यावत् । 'जहर्ष च ननाद च' इति प्राचीनः पाठः । बलवैभवं दृष्ट्वा जहर्ष स्वोत्थानप्रयोजनावेदनाय ननाद शब्दं कृतवान् । 'ननन्द' इति त्वाधुनिककल्पितः पाठः ॥ १०२ ॥

रा० टी०—स इति । तेन हनुमता आसादितः विद्धः पर्वतोत्तमः स मैनाकः हरेर्हनुमतो वेगं बुद्ध्वा जहर्ष ननाद च१०४

गो० टी०—स इति । जहर्ष विसिस्मिये ॥ ११० ॥

---

१ नाभ इति गो. पाठः । २ युत इति गो. पाठः । ३ अभ्युत्थित इति गो. पाठः । ४ निभैरिति गो. पाठः । ५ आलिखद्भिरिति गो. पाठः । ६ तमेति गो. पाठः । ७ स्वयंप्रभैरिति गो. पाठः । ८ तामिति गो. पाठः । ९ पातित इति गो. पाठः । १० कपेरिति गो. पाठः । ११ ननन्देति गो. पाठः ।

तमाकाशगतं वीरमाकाशे समुपस्थितः । प्रीतो हृष्टमना वाक्यमब्रवीत्पर्वतः कपिम् ॥ १०३ ॥
मानुषं धारयन्रूपमात्मनः शिखरे स्थितः । दुष्करं[1] कृतवान्कर्म त्वमिदं वानरोत्तम ॥ १०४ ॥
निपत्य मम शृङ्गेषु सुखं[2] विश्रम्य गम्यताम् । राघवस्य कुले जातैरुदधिः परिवर्धितः ॥ १०५ ॥
स त्वां रामहिते युक्तं प्रत्यर्चयति सागरः । कृते च प्रतिकर्तव्यमेष धर्मः सनातनः ॥ १०६ ॥
सोऽयं तत्प्रतिकारार्थी त्वत्तः संमानमर्हति । त्वन्निमित्तमनेनाहं बहुमानात्प्रचोदितः ॥ १०७ ॥
योजनानां शतं चापि कपिरेष खमाप्लुतः । तव सानुषु विश्रान्तः शेषं प्रक्रमतामिति ॥ १०८ ॥
तिष्ठ[3] त्वं हरिशार्दूल मयि विश्रम्य गम्यताम् । तदिदं गन्धवत्स्वादु कन्दमूलफलं बहु ॥ १०९ ॥
तदास्वाद्य हरिश्रेष्ठ विश्रान्तोऽर्थं गमिष्यसि । अस्माकमपि संबन्धः कपिमुख्य त्वयाऽस्ति वै ॥
प्रख्यातस्त्रिषु लोकेषु महागुणपरिग्रहः ॥ ११० ॥
वेगवन्तः प्लवन्तो ये प्लवगा मारुतात्मज । तेषां मुख्यतमं मन्ये त्वामहं कपिकुञ्जर ॥ १११ ॥

---

१०३-१०४ ] ति० टी०-तदेव विवृणोति-तमिति ॥ १०३ ॥ १०४ ॥

रा० टी०-तमिति । मानुषं रूपं धारयन् आत्मनः शिखरे शृङ्गे स्थितः आकाशे समुपस्थितः प्राप्तः प्रीतः पर्वतो मैनाकः आकाशगतं कपिं तं हनुमन्तं वाक्यमब्रवीत् । सार्थश्लोक एकान्वयी ॥ १०५ ॥

रा० टी०-तद्वचनाकारमाह-दुष्कृतमिति । हे वानरोत्तम ! त्वमिदं दुष्कृतं कर्म कृतवान् अतः मम शृङ्गेषु निपत्य यथासुखं विश्रम्य गम्यताम् ॥ १०६ ॥

गो०टी०-तमिति । प्रीतः प्रीतिद्योतकव्यापारः१११-११३

१०५ ] ति० टी०-राघवस्य कुले जातैःसगरपुत्रैः॥१०५॥

रा० टी०-ननु कथं तवैतद्बुद्धिर्जातेत्यत आह-राघवस्येति । राघवस्य कुले जातैः सगरैरुदधिः परिवर्धितः अतः सागरः सगरपरिवर्धित उदधिः रामहिते युक्तं त्वां प्रत्यर्चयति । तत्र हेतुः-कृते उपकृते प्रत्युपकारः कर्तव्यमेष सनातनो धर्मः, सामान्ये नपुंसकम् । सार्धश्लोकः संमिलितान्वयी ॥ १०७ ॥ १०८ ॥

१०६ ] ति० टी०-कृतमुपकारः ॥ १०६ ॥

१०७ ] ति० टी०-सोऽयं राघवकुलजः सागरस्तत्प्रतिकारार्थी तत्कुलप्रत्युपकारार्थी । त्वत्तः सत्क्रियमाणाद्द्वारभूतात्संमानं राघवकुलपूजामर्हति । त्वन्निमित्तं त्वत्सत्कारार्थं प्रचोदितः प्रेरितः ॥ १०७ ॥

रा० टी०-ननु तेन तव किमित्यत आह-स इति । तत्प्रतिकारार्थी तस्योपकृतस्य प्रतिकारं प्रत्युपकारमर्थयते तच्छीलः स सागरः त्वत्तः सन्मानं सत्कारमर्हति अत एव त्वन्निमित्तमनेन सागरेण बहुमानादहं प्रचोदितः त्वद्विश्रमणार्थं प्रेरितोऽस्मि ॥ १०९ ॥

गो० टी०-कृत इति । कृते उपकारे त्वत्प्रतिकारार्थी त्वदातिथ्यकरणापेक्षी त्वत्तः संमानमर्हतीति त्वया तत्कृतातिथ्यपरिग्रह एवास्य संमाननमित्यर्थः ॥ ११४ ॥

१०८ ] ति० टी०-प्रेरणाप्रकारः—योजनानामिति । योजनानां शतमपि प्रक्रमितुं खमाप्लुत एष कपिः शेषं प्रक्रान्तावशेषं तव सानुषु विश्रान्तः सन्प्रक्रमतामिति यतः प्रेरितोऽस्मि, अतो मयि तिष्ठ । स्थित्वा विश्रम्य पश्चाद्गम्यतामिति योजना । अत्र 'तिष्ठ त्वम्' इत्यर्धं प्रक्षिप्तमिति केचित् ॥ १०८ ॥

गो० टी०-चोदनाप्रकारमाह—योजनानामिति । प्रक्रमतामिति प्रचोदित इति पूर्वेणान्वयः ॥ ११५ ॥ ११६ ॥

१०९ ] ति० टी०-तत्तस्माद्यदिदं कन्दादि मयि बहु दृश्यते तदास्वाद्येत्यन्वयः ॥ १०९ ॥

रा० टी०-तिष्ठेति । त्वं मयि तिष्ठ विश्रम्य गम्यतां च । अर्थं पृथक् । तदेव भङ्ग्यन्तरेणाह-योजनमिति । योजनानां शतं प्रक्रमितुमिति शेषः । खमाप्लुत एष भवान् मम सानुषु विश्रान्तः सन् शेषमध्वानं प्रक्रमताम् । अर्धद्वयमेकान्वयि ॥ ११० ॥

गो० टी०-तदिति । तत्प्रसिद्धं कन्दः करहाटः मूलं पादः । तत्तस्मात् ॥ ११७ ॥

११० ] ति० टी०-अस्माकमपि संबन्धस्त्वत्साहाय्यकरणप्रयोजक इति शेषः । तं संबन्धं वक्तुमाह—प्रख्यात इति । भवान्महागुणपरिग्रहः बहुव्रीहिरयम्, अतस्त्रिषु लोकेषु प्रख्यातः ॥ ११० ॥

रा० टी०-तदिति । तदुक्तहेतोः तदुत्तममिदं कन्दमूलफलमास्वाद्य विश्रान्तः सन् गमिष्यसि ॥ १११ ॥

रा० टी०-अस्माकमिति । हे कपिमुख्य ! यतः यस्त्वं महागुणानां स्वामिसेवानुकूलानां परिग्रहः परिगृहीता अत एव त्रिषु लोकेषु विख्यातः अतः तेन त्वया सह अस्माकमपि संबन्धोऽस्ति ॥ ११२ ॥

गो० टी०-अस्माकमिति । प्रख्यात इति संबन्धविशेषणं महागुणानां परिग्रहो यस्मिन्स तथा ॥ ११८-१२२ ॥

१११ ] ति० टी०-तादृशं त्वां ये वेगवन्तः प्लवगाः सन्ति तेषां मुख्यतमं मन्ये ॥ १११ ॥

---

१ दुष्कृतमिति रा. पाठः । २ विश्रमस्व यथासुखमिति गो. पाठः । ३ अर्धमेतत्पूर्वतनश्लोकात्प्राक् गो. रा. पाठे । ४ न्विति गो. पाठः ।

अतिथिः किल पूजार्हः प्राकृतोऽपि विजानता । धर्मं जिज्ञासमानेन किं पुनर्यादृशो भवान् ॥ ११२ ॥
त्वं हि देववरिष्ठस्य मारुतस्य महात्मनः । पुत्रस्तस्यैव वेगेन सदृशः कपिकुञ्जर ॥ ११३ ॥
पूजिते त्वयि धर्मज्ञे पूजां प्राप्नोति मारुतः । तस्मात्त्वं पूजनीयो मे शृणु चाप्यत्र कारणम् ॥ ११४ ॥
पूर्वं कृतयुगे तात पर्वताः पक्षिणोऽभवन् । तेऽपि जग्मुर्दिशः सर्वा गरुडा इव वेगिनः ॥ ११५ ॥
ततस्तेषु प्रयातेषु देवसङ्घाः सहर्षिभिः । भूतानि च भयं जग्मुस्तेषां पतनशङ्कया ॥ ११६ ॥
ततः क्रुद्धः सहस्राक्षः पर्वतानां शतक्रतुः । पक्षांश्चिच्छेद वज्रेण ततः शतसहस्रशः ॥ ११७ ॥
स मामुपगतः क्रुद्धो वज्रमुद्यम्य देवराट् । ततोऽहं सहसा क्षिप्तः श्वसनेन महात्मना ॥ ११८ ॥
अस्मिंल्लवणतोये च प्रक्षिप्तः प्लवगोत्तम । गुप्तपक्षः समग्रश्च तव पित्राभिरक्षितः ॥ ११९ ॥
ततोऽहं मानयामि त्वां मान्योऽसि मम मारुते । त्वया ममैष संबन्धः कपिमुख्य महागुणः ॥ १२० ॥
अस्मिन्नेवंगते कार्ये सागरस्य ममैव च । प्रीतिं प्रीतमनाः कर्तुं त्वमर्हसि महामते ॥ १२१ ॥
श्रमं मोक्षय पूजां च गृहाण हरिसत्तम । प्रीतिं च मम मान्यस्य प्रीतोऽस्मि तव दर्शनात् ॥ १२२ ॥
एवमुक्तः कपिश्रेष्ठस्तं नगोत्तममब्रवीत् । प्रीतोऽस्मि कृतमातिथ्यं मन्युरेषोऽपनीयताम् ॥ १२३ ॥
त्वरते कार्यकालो मे अहश्चाप्यतिवर्तते । प्रतिज्ञा च मया दत्ता न स्थातव्यमिहान्तरा ॥ १२४ ॥

---

रा० टी०—वेगवन्त इति । हे मारुतात्मज ! वेगवन्तः प्लवन्तो ये प्लवङ्गाः तेषां मुख्यतमं त्वामहं मन्ये ॥ ११३ ॥

११२ ] ति० टी०—भवान्यादृशस्तादृशः पूज्य इति ।क पुनरिति योजना ॥ ११२ ॥

रा० टी०—त्वं तु ममातीव पूज्य इति बोधयितुमाह—अतिथिरिति । धर्मं जिज्ञासमानेन ज्ञातुमिच्छता विजानता च प्राकृतोऽपि अतिथिः पूजार्हः पूजनीयः, यादृशः प्राकृतविलक्षणो भवान् पूजार्ह इति किं वक्तव्यम् ॥ ११४ ॥

११३] ति० टी०—विवक्षितप्राशस्त्यमेवाह—त्वं हीति ११३

रा० टी०—त्वमिति । मारुतस्य त्वं पुत्रः अत एव वेगेन तस्यैव सदृशोऽसीति शेषः ॥ ११९ ॥

११४-११७ ] ति० टी०—हनुमद्द्वारकमारुतपूजायां कारणान्तरमप्याह—शृणु चापीति ॥ ११४-११७ ॥

रा० टी०—पूजित इति । त्वयि पूजिते सति मारुतः पूजां प्राप्नोति तस्मात्त्वं पूजनीय एव । ननु मारुतपूजया तव किमित्यत आह—अत्र मारुतपूजायां कारणं शृणु ॥ ११६ ॥

रा० टी०—कारणमेवाह—पूर्वमित्यादिभिः । कृतयुगे पूर्वमुत्पत्तिसमये पर्वताः पक्षिणः पक्षविशिष्टाः अभवन् ते पर्वता वेगिनो गरुडा इव सर्वा दिशः जग्मुः ॥ ११७ ॥

रा० टी०—तत इति । ततः सर्वदिग्गमनानन्तरम् ऋषिभिः सह देवसंघाः भूतानि अन्ये प्राणिनश्च तेषां पर्वतानां पतनशङ्कया भयं जग्मुः ॥ ११८ ॥

रा० टी०—तत इति । ततः भीतिप्राप्त्यनन्तरं शतक्रतुः ततस्तेषां शतसहस्रशः पर्वतानां पक्षान् चिच्छेद ॥ ११९ ॥

गो० टी०—संबन्धं विवृणोति—पूर्वमित्यादिना । पक्षिणः पक्षवन्तः । हिः पादपूरणे ॥ १२३—१२६ ॥

११८-११९ ] ति० टी०—क्षिप्त आकाशमुत्क्षिप्तः १८॥१९

रा० टी०—स इति । सः शातितपक्षो देवराट् क्रुद्धः सन् मामुपागतः प्राप्तः अत एव महात्मना श्वसनेन वायुना क्षिप्तः अत्यूर्ध्वं प्रापितः ततः इन्द्रगमनानन्तरम् अस्मिन् लवणतोये प्रक्षिप्तः अत एव तत्र पित्रा गुप्तः पक्षसमग्रो यस्य अत एव अभिरक्षितोऽहमस्मीति शेषः । श्लोकद्वयमेकान्वयि १२०॥१२१

गो० टी०—अस्मिन्निति । समग्रः समग्रपक्षः गुप्तसमग्रपक्षश्च यथा भवामि तथा अभिरक्षितोऽस्मीत्यर्थः ॥१२७—१३१॥

१२० ] ति० टी०—तत उक्तकारणादेष संबन्धः पूजाप्रयोजकः स्वरक्षकपुत्रत्वरूपः ॥ १२० ॥

रा० टी०—तत इति । ततः उक्तहेतोः त्वया सह मम एष संबन्धः अत एव महागुणस्त्वं मम मान्योऽसि अत एव त्वां मानयामि पूजयामि ॥ १२२ ॥

१२१ ] ति० टी०—अस्मिन्कार्ये प्रत्युपकाररूपे । एवंगते सति चिरात्प्राप्ते सति । मया समुद्रेण चेति शेषः । त्वं पूजास्वीकारेण तयोः प्रीतिं कर्तुमर्हसि ॥ १२१ ॥

रा० टी०—अस्मिन्निति । सागरस्य मम च एवमुक्तप्रकारेण कार्ये स्वपितृकर्तृकोपकारे गते ज्ञाते सति प्रीतमनास्त्वं प्रीतिं कर्तुमर्हसि ॥ १२३ ॥

१२२ ] ति० टी०—मान्यस्य वायुसंबन्धात्तव पूज्यस्य मम प्रीतिं कुर्विति शेषः ॥ १२२ ॥

रा० टी०—श्रममिति । श्रमं मोक्षय दूरीकुरु पूजां गृहाण च मम प्रीतिं च गृहाण जानीहि अहं तु मान्यस्य तव दर्शनात् प्रीतोऽस्मि ॥ १२४ ॥

१२३-१२४ ] ति० टी०—मन्युः पूजानङ्गीकारजं दैन्यम् ॥ १२३ ॥ १२४ ॥

---

१ त्वादृशो महानिति गो. पाठः । २ हीति गो. पाठः । ३ इतिलवेगित इति गो. पाठः । ४ तव तवेति गो. पाठः । ५ पक्षसमग्र इति गो. रा. पाठः । ६ मे ह्येष इति गो. पाठः । ७ कपे इति गो. पाठः । ८ बहु मन्यस्वेति गो. पाठः । ९ ऽन्तरे इति गो. पाठः ।

इत्युक्त्वा पाणिना शैलमालभ्य हरिपुङ्गवः । जगामाकाशमाविश्य वीर्यवान्प्रहसन्निव ॥ १२५ ॥
स पर्वतसमुद्राभ्यां बहुमानादवेक्षितः । पूजितश्चोपपन्नाभिराशीर्भिरभिनन्दितः ॥ १२६ ॥
अथोर्ध्वं दूरमागत्य हित्वा शैलमहार्णवौ । पितुः पन्थानमासाद्य जगाम विमलेऽम्बरे ॥ १२७ ॥
भूयश्चोर्ध्वं गतिं प्राप्य गिरिं तमवलोकयन् । वायुसूनुर्निरालम्बो जगाम कपिकुञ्जरः ॥ १२८ ॥
तद्द्वितीयं हनुमतो दृष्ट्वा कर्म सुदुष्करम् । प्रशशंसुः सुराः सर्वे सिद्धाश्च परमर्षयः ॥ १२९ ॥
देवताश्चाभवन्हृष्टास्तत्रस्थास्तस्य कर्मणा । काञ्चनस्य सुनाभस्य सहस्राक्षश्च वासवः ॥ १३० ॥
उवाच वचनं धीमान्परितोषात्सगद्गदम् । सुनाभं पर्वतश्रेष्ठं स्वयमेव शचीपतिः ॥ १३१ ॥
हिरण्यनाभ शैलेन्द्र परितुष्टोऽस्मि ते भृशम् । अभयं ते प्रयच्छामि गच्छ सौम्य यथासुखम् ॥ १३२ ॥

---

रा० टी०—एवमिति । एवमुक्तः मैनाकेन प्रार्थितः कपिश्रेष्ठः तमब्रवीत् । तद्वचनाकारमाह—त्वया आतिथ्यं कृतं परितोषकवचनेनैव सत्कारः कृत इत्यर्थः, अत एव प्रीतोऽस्मि अत एव एषः विश्रान्त्यकारणादिजनितो मन्युर्दैन्यमपनीयताम् ॥ १२९ ॥

रा० टी०—ननु स्थित्यादि किमर्थं न क्रियते इत्यत आह—त्वरत इति । मे कालः त्वरते मां त्वरयति यतः अहो दिनमतिवर्तते एतेन दिन एव लङ्का गन्तव्येति सूचितम् । हेत्वन्तरमाह—इह अस्मिन् अन्तरा सागरतरणमध्ये मया न स्थातव्यम् इति प्रतिज्ञा दत्ता कृता, वानरसमीपे इति शेषः ॥१२६॥

गो० टी०—प्रीतोऽस्मीति । कृतमातिथ्यं तव दर्शनादिनेति भावः । मन्युः कोपः मत्कृता पूजा न गृहीतेति कोपो निरस्यतामित्यर्थः । कार्यकालः त्वरते शीघ्रं गच्छति मां प्ररयति । अहश्चाप्यतिवर्तते अत्र विलम्बः क्रियते चेदिदमहोऽतिवर्तत इत्यर्थः । इह समुद्रे अन्तरे मध्ये मया न स्थातव्यमिति वानरसन्निधौ प्रतिज्ञा कृता ॥ १३२ ॥ १३३ ॥

१२५ ] ति० टी०—शैलमालभ्य स्पृष्ट्वा । प्रहसन्निवेति एतावत्प्लवनेऽपि श्रममारोप्य वृथाऽयं प्रयास एतयोरिति प्रहासः ॥ १२५ ॥

रा० टी०—इतीति । हरिपुंगवः इत्युक्त्वा पाणिना शैलमालभ्य संस्पृश्य अकाशमाविश्य प्रहसन्निव जगाम । इव एवार्थे ॥ १२७ ॥

गो० टी०—इत्युक्त्वेति । प्रहसन्निव प्रसन्नमुख इवेत्यर्थः ॥ १३४ ॥

१२६ ] ति० टी०—उपपन्नाभिस्तत्काले युक्ताभिः॥१२६॥

रा० टी०—स इति । पर्वतसमुद्राभ्यां बहुमानात्पूजितः अवेक्षितः उपपन्नाभिः योग्याभिः आशीर्भिः अभिनन्दितश्च स हनुमान् दूरमूर्ध्वमाप्लुत्य अत एव शैलमहार्णवौ स्वसत्कारार्थमागतगिरिसागरौ हित्वा पितुर्वायोः पन्थानमासाद्य प्राप्य । अथ जगाम मङ्गलगमनं चकार । श्लोकद्वयमेकान्वयि१२८-१२९

१२७ ] ति० टी०—अथोर्ध्वं यत्र देशे स्थितस्ततोऽपि बहूर्ध्वम् । पितुः पन्थानं वायुमार्गम् ॥ १२७ ॥

गो० टी०—अथेति । हित्वा शैलमहार्णवौ मूर्तिमन्तौ तौ हित्वेत्यर्थः । अनेन शैलवत्समुद्रोऽपि मूर्तिमत्तया तत्रादृश्यतेति सूचितम् ॥ १३५ ॥ १३६ ॥

१२८ ] ति० टी०—भूय ऊर्ध्वं ततोऽपि बहूर्ध्वं तं गिरिमधःप्रदेशवर्तिनमवलोकयन् ॥ १२८ ॥

रा० टी०—भूय इति । भूयोऽधिकाम् ऊर्ध्वगतिं प्राप्य गिरिं तं नराकृतिसमुद्रं च अवलोकयन् निरालम्बः वायुसूनुर्जगाम ॥ १३० ॥

१२९ ] ति० टी०—तद्द्वितीयं कर्माविश्रम्यैव पुनरत्यूर्ध्वं पतनरूपं कर्म ॥ १२९ ॥

रा० टी०—तदिति । सुदुष्करम् अन्यैः कर्तुमशक्यं द्वितीयम् । उत्प्लवनापेक्षया द्वित्वसंख्यापूरकं विश्रान्त्यकरणरूपं कर्म दृष्ट्वा सुरादयः प्रशशंसुः ॥ १३१ ॥

गो० टी०—तद्द्वितीयमिति । द्वितीयं समुद्रलङ्घनापेक्षया द्वितीयं तत्पर्वतजयरूपं कर्म ॥ १३७ ॥

१३०–१३१ ] ति० टी०—तत्रस्था मैनाकस्था गगनस्था वा । तस्य काञ्चनस्य काञ्चनमयस्य सुनाभस्य शोभनमध्यस्य मैनाकस्य कर्मणा जलादुत्थानरूपेण देवता इन्द्रश्च तुष्टः ॥ १३० ॥ १३१ ॥

रा० टी०—देवता इति । सुनाभस्य अतिशोभनमध्यभागस्य तस्य मैनाकस्य कर्मणा विश्रान्तदानप्रार्थनादिरूपक्रियया तत्रस्थाः हनुमत्कर्मदर्शनाय तत्र स्थिताः देवता वासवश्च हृष्टा अभवन् ॥ १३२ ॥

रा० टी०—उवाचेति । परितोषात् हनुमत्परितोषणात् हेतोः शचीपतिः गद्गदं स्खलद्वाग्विशिष्टं वच उवाच ॥ १३३ ॥

१३२ ] ति० टी०—अभयं स्वकृतपक्षच्छेदशङ्काजनितभयाभावम् ॥ १३२ ॥

रा० टी०—तद्वचनाकारमाह—हिरण्येति । हे शैलेन्द्र ! अहं परितुष्टोऽस्मि अतः ते तुभ्यम् अभयं मत्कर्तृकपक्षच्छेदशङ्काहेतुकभयाभावं प्रयच्छामि ददामि अतः यथासुखं गच्छ विचर ॥ १३४ ॥

---

१ अनिलात्मज इति गो. पाठः । २ उत्पत्येति गो. पाठः । ३ आस्थायेति गो. पाठः । ४ निरालम्बे इति गो. पाठः । ५ विमलेऽम्बरे इति गो. पाठः । ६ तिष्ठेति गो. पाठः ।

साह्यं कृतं ते सुमहद्विश्रान्तस्य हनूमतः । क्रमतो योजनशतं निर्भयस्य भये सति ॥ १३३ ॥
रामस्यैष [1]हितायैव याति दाशरथेः कपिः । सत्क्रियां कुर्वता शक्त्या तोषितोऽस्मि दृढं त्वया॥१३४॥
स तत्प्रहर्षमलभद्विपुलं पर्वतोत्तमः । देवतानां पतिं दृष्ट्वा परितुष्टं शतक्रतुम् ॥ १३५ ॥
स वै दत्तवरः शैलो बभूवावस्थितस्तदा । हनूमांश्च मुहूर्तेन व्यतिचक्राम सागरम् ॥ १३६ ॥
ततो देवाः सगन्धर्वाः सिद्धाश्च परमर्षयः । अब्रुवन्सूर्यसंकाशां सुरसां नागमातरम् ॥ १३७ ॥
अयं वातात्मजः श्रीमान्प्लवते सागरोऽपरि । हनूमान्नाम तस्य त्वं मुहूर्तं विघ्नमाचर ॥ १३८ ॥
राक्षसं रूपमास्थाय सुघोरं पर्वतोपमम् । दंष्ट्राकरालं पिङ्गाक्षं वक्त्रं कृत्वा नभःस्पृशम् ॥ १३९ ॥
बलमिच्छामहे ज्ञातुं भूयश्चास्य पराक्रमम् । त्वां विजेष्यत्युपायेन विषादं वा गमिष्यति ॥ १४० ॥
एवमुक्ता तु सा देवी दैवतैरभिसत्कृता । समुद्रमध्ये सुरसा बिभ्रती राक्षसं वपुः ॥ १४१ ॥
विकृतं च विरूपं च सर्वस्य च भयावहम् । प्लवमानं हनूमन्तमावृत्येदमुवाच ह ॥ १४२ ॥
मम भक्ष्यः प्रदिष्टस्त्वमीश्वरैर्वानरर्षभः । अहं त्वां भक्षयिष्यामि प्रविशेदं ममाननम् ॥ १४३ ॥
वर एष पुरा दत्तो मम धात्रेति सत्वरा । व्यादाय वक्त्रं विपुलं स्थिता सा मारुतेः पुरः ॥ १४४ ॥

---

१३३-१३५ ] ति० टी०—निर्भयस्यापि भये सतीवोपचारार्थं साह्यं कृतं यतः, अतः परितुष्टः इत्यन्वयः १३३-१३६

रा० टी०—अभयप्रदाने हेतुमाह—साह्यमिति । निर्भयस्य सुग्रीवादन्यतो भयरहितस्य वानरसमूहस्य भये सुग्रीवाद्भीतौ प्राप्ते सति योजनशतं क्रमतो गच्छतो विश्रान्तस्य श्रमाभाववतो हनुमतः साह्यं त्वया कृतम् ॥ १३६ ॥

रा० टी०—रामस्येति । यः कपिः रामस्य हितायैव याति तस्य सत्क्रियां शक्त्या कुर्वता त्वया दृढमत्यन्तं तोषितोऽस्मि ॥ १३६ ॥

रा० टी०—स इति । स मैनाकः परितुष्टं शतक्रतुं दृष्ट्वा विपुलं तत्प्रहर्षमलभत् ॥ १३७ ॥

गो० टी०—साह्यमिति । भये सति समुद्रलङ्घनेऽस्य किं भविष्यतीत्यस्माकं भये सतीत्यर्थः ॥ १४१-१६३ ॥

१३६ ] ति० टी०—अवस्थितः जलान्तरमग्न इत्यर्थः । सागरं मैनाकाधिष्ठितसागरप्रदेशम् ॥ १३६ ॥

रा० टी०—स इति । दत्तो वरो यस्मै स शैलः अवस्थितो बभूव, हनुमान् मुहूर्तेन सागरं व्यतिचक्राम च॥१३८॥

१३७-१३८ ] ति० टी०—अथ देवैर्लङ्कां प्रविष्टस्य हनुमतः कार्यक्षमबलपरीक्षणार्थं सुरसाप्रवर्तनम्—तत इत्यादि ॥ १३७ ॥ १३८ ॥

१३९ ] ति० टी०—नभःस्पृशमिति पुंस्त्वमार्षम् । वक्त्रशब्दोऽर्धर्चादिर्वा ॥ १३९ ॥

रा० टी०—तत इति । ततः हनुमत्प्लवनसमये नागमातरं सुरसां देवादयोऽब्रुवन् ॥ १३९ ॥

रा० टी०—तद्वचनाकारमाह—अयमिति । वातात्मजोऽयं हनुमान् सागरं परिप्लवते तस्य हनुमतः विघ्नं प्लवनविघातं राक्षसं रूपम् आस्थाय कृत्वा नभस्पृशं वक्त्रं मुखं च कृत्वा मुहूर्तमाचर कुरु । श्लोकद्वयमेकान्वयि ॥ १४० ॥ १४१ ॥

१४०-१४१ ] ति० टी०—बलं ज्ञानबलमुपायबलं च पराक्रमं च ज्ञातुमिच्छामहे । तदेव विवृणोति—त्वामिति ॥ १४० ॥ १४१ ॥

१४२ ] ति० टी०—'भयस्य च भयावहम्' इति पाठे सर्वलोकभयस्यापीत्यर्थः ॥ १४२ ॥

रा० टी०—तत्प्रयोजनमाह—बलमिति । पराक्रमं शत्रुविघातकं भूयो अधिकम् अस्य बलं ज्ञानेन्द्रिययोः सामर्थ्यं ज्ञातुमिच्छामहे । ननु विघ्नाचरणेन तज्ज्ञानं कथं भविष्यतीत्यत आह—उपायेन त्वां विजेष्यति विषादं गमिष्यति वा एतेन विजयविषादाभ्यां क्रमेण बलाबलयोर्ज्ञानं भविष्यत्येवेति सूचितम् ॥ १४२ ॥

रा० टी०—एवमिति । दैवतैः एवमुक्ता अभिसत्कृता समुद्रमध्ये विद्यमाना सुरसा विकृतं छिन्ननासिकत्वाद्यनेकविकारविशिष्टम् अत एव विरूपं शुभरूपाद्विरुद्धम् अत एव सर्वस्य भयावहं भीतिप्रापकं राक्षसं वपुः बिभ्रती ती प्लवमानं हनूमन्तम् आवृत्य इदमुवाच । श्लोकद्वयमेकान्वयि ॥ १४३ ॥ १४४ ॥

१४३ ] ति० टी०—ईश्वरैर्देवैः ॥ १४३ ॥

रा० टी०—तद्वचनाकारमाह—ममेति । ईश्वरैः मम भक्ष्यः त्वं प्रदिष्टः अतस्त्वां भक्षयिष्यामि अतः ममाननं प्रविश॥१४६॥

१४४ ] ति० टी०—एष वरः पुर आगतस्य वदनप्रवेशरूपः इत्युक्त्वेति शेषः । सत्वरा त्वरासहिता सा सुरसा ॥ १४४ ॥

रा० टी०—ननु अनपराधिनो मम भक्षणं किमर्थमिच्छसी-

---

१ विक्रान्तस्येति गो. पाठः । २ हि दूत्येनेति गो. पाठः । ३ हरिरिति गो. पाठः । ४ तस्येति गो. पाठः । ५ ततः प्रहर्षमगमदिति गो. पाठः । ६ सममिति गो. पाठः । ७ एष श्लोको गो. नास्ति ।

एवमुक्तः सुरसया [1]प्रहृष्टवदनोऽब्रवीत् । रामो दाशरथिर्नाम प्रविष्टो दण्डकावनम् ॥
लक्ष्मणेन सह भ्रात्रा वैदेह्या चापि भार्यया ॥ १४५ ॥
[2]अस्य कार्यविपक्तस्य बद्धवैरस्य राक्षसैः । तस्य सीता हृता भार्या रावणेन यशस्विनी ॥ १४६ ॥
तस्याः सकाशं दूतोऽहं गमिष्ये रामशासनात् । कर्तुमर्हसि रामस्य साह्यं विषयवासिनि ॥ १४७ ॥
अथवा मैथिलीं दृष्ट्वा रामं चाक्लिष्टकारिणम् । आगमिष्यामि ते वक्त्रं सत्यं प्रतिशृणोमि ते ॥ १४८ ॥
एवमुक्ता हनुमता सुरसा कामरूपिणी । अब्रवीन्नातिवर्तेन्मां कश्चिदेष वरो मम ॥ १४९ ॥
[3]तं प्रयान्तं समुद्वीक्ष्य सुरसा वाक्यमब्रवीत् । बलं जिज्ञासमाना [4]सा नागमाता हनूमतः ॥ १५० ॥
[5]निविश्य वदनं मेऽद्य गन्तव्यं वानरोत्तम । वर एष पुरा दत्तो मम धात्रेति सत्वरा ॥ १५१ ॥
व्यादाय विपुलं वक्त्रं स्थिता सा मारुतेः पुरः । एवमुक्तः सुरसया क्रुद्धो वानरपुङ्गवः ॥ १५२ ॥

---

त्यत आह–वर इति । एष समागतमात्रभक्षणरूपः वरः धात्रा मम मह्यं पुरा दत्तः इत्युक्त्वेति शेषः, विपुलं विस्तीर्णं मुखं व्यादाय मारुतेः पुरः अग्रे स्थिता बभूवेति शेषः ॥१४६॥

१४५ ] ति० टी०–प्रहृष्टवदनः । दत्तभक्षणवराया अपि सकाशान्निस्तारोपायज्ञानजो हर्षः ॥ १४६ ॥

रा० टी०–एवमिति । सुरसया एवमुक्तः प्रहृष्टवदनो हनुमान् अब्रवीत् । अर्थं पृथक् । तद्वचनाकारमाह–राम इत्यादिभिः । रामो नाम दाशरथिः लक्ष्मणेन वैदेह्या च सह दण्डकावनं प्रविष्टः । अर्धद्वयमेकान्वयि ॥ १४७ ॥ १४८ ॥

१४६] ति० टी०–कार्यविपक्तस्य मायामृगवधे प्रसक्तस्य । बद्धवैरस्य शूर्पणखाविरूपकरणादिकर्मणेति शेषः ॥ १४६ ॥

रा० टी०–अन्येति । अन्यकार्यविपक्तस्य देवादिकार्यसाधनाशक्तस्य अत एव राक्षसैर्बद्धवैरस्य तस्य वनं प्रविष्टस्य रामस्य भार्या रावणेन हृता ॥ १४९ ॥

गो० टी०–अन्येति । अन्यकार्यविपक्तस्य मारीचमृगग्रहणव्यासक्तस्य ॥ १६४ ॥

१४७ ] ति० टी०–रामसाह्यकरणे हेतुः–रामस्य विषयवासिनीति । तस्य सर्वाधिपतित्वात् ॥ १४७ ॥

रा० टी०–तस्या इति । तस्याः सीतायाः सकाशं समीपमहं गमिष्ये अतः रामस्य विषये देशे वस्तुं शीलमस्याः सा त्वं रामस्य साह्यं साहाय्यं कर्तुमर्हसि । एतेन मां न भक्षयेति सूचितम् ॥ १६० ॥

गो० टी०–तस्या इति । विषयवासिनी रामराज्यवासिनी ॥ १६६ ॥ १६६ ॥

१४८ ] ति० टी०–रामं चेति । दृष्ट्वा वृत्तान्तं च विज्ञाप्येति शेषः ॥ १४८ ॥

रा० टी०–पक्षान्तरमाह–अथवेति । अथवा भक्षणस्यावश्यकत्वे मैथिलीं रामं च दृष्ट्वा ते वक्त्रमागमिष्यामि इति ते तवाग्रे सत्यं प्रतिशृणोमि प्रतिजानामि ॥ १६१ ॥

१४९ ] ति० टी०–कश्चिदपि मां नातिवर्तेत् अभक्षितो न गच्छेदित्यर्थः परस्मैपदमार्षम् ॥ १४९ ॥

रा० टी०–एवमिति । हनुमता एवमुक्ता सुरसा मां कश्चित् नातिवर्तेत् एषः मम वरः ब्रह्मणा दत्त इति शेषः । एतेन त्वां भक्षयिष्याम्येवेति सूचितम् ॥ १६२ ॥

गो० टी०–एवमिति । नातिवर्तेन्मां ममाननमप्रविश्य न गच्छेत् अतिवर्तेदित्यत्र परस्मैपदमार्षम् । अत्र इतिकरणं द्रष्टव्यम् । अब्रवीन्नातिवर्तेन्मां कश्चिदेष वरो ममेत्यस्यानन्तरं तद्दृष्ट्वा व्यादितं वक्त्रं वायुपुत्रः सुबुद्धिमानित्यादिश्लोका द्रष्टव्याः । मध्ये तं प्रयान्तमित्यादयः केचन श्लोकाः प्रक्षिप्ताः असङ्गताश्च शतयोजनायतत्वे वानरैर्लङ्कावासिभिश्च ज्ञातः स्यादिति विरोधात् । त इमे प्रक्षिप्तश्लोकाः ॥ तं प्रयान्तं समुद्वीक्ष्य सुरसा वाक्यमब्रवीत् । बलं जिज्ञासमाना वै नागमाता हनूमतः ॥ प्रविश्य वदनं मेऽद्य गन्तव्यं वानरोत्तम । वर एष पुरा दत्तो मम धात्रेति सत्वरा ॥ व्यादाय विपुलं वक्त्रं स्थिता सा मारुतेः पुरः । एवमुक्तः सुरसया क्रुद्धो वानरपुङ्गवः ॥ अब्रवीत्कुरु वै वक्त्रं येन मां विषहिष्यसे । इत्युक्त्वा सुरसां क्रुद्धो दशयोजनमायतः ॥ दशयोजनविस्तारो बभूव हनुमांस्तदा । तं दृष्ट्वा मेघसंकाशं दशयोजनमायतम् ॥ चकार सुरसा चास्यं विंशद्योजनमायतम् । हनूमांस्तु ततः क्रुद्धस्त्रिंशद्योजनमायतः ॥ चकार सुरसा वक्त्रं चत्वारिंशत्तथोच्छ्रितम् । बभूव हनुमान्वीरः पञ्चाशद्योजनोच्छ्रितः ॥ चकार सुरसा वक्त्रं षष्टियोजनमायतम् । तथैव हनुमान्वीरः सप्ततीयोजनोच्छ्रितः ॥ चकार सुरसा वक्त्रमशीतीयोजनोच्छ्रितम् । हनुमानचलप्रख्यो नवतीयोजनोच्छ्रितः ॥ चकार सुरसा वक्त्रं शतयोजनमायतमिति १६७

१५० ] ति० टी०–तं प्रयान्तं पुनरागच्छामीत्युक्त्वा वरदानं श्रुत्वाऽपि प्रयाणोन्मुखम् । हनुमतस्तस्य बलं जिज्ञासमाना सुरसा वाक्यमब्रवीत् ॥ १५० ॥

रा० टी०–तमिति । प्रयान्तं हनुमन्तं समुद्वीक्ष्य हनुमतो बलं जिज्ञासमाना सुरसा अब्रवीत् ॥ १६३ ॥

१५१–१५२] ति० टी०–निविश्येति । प्रविश्यैव गन्तव्यम् यदि शक्तिरस्तीत्यर्थः, इत्यब्रवीदित्यन्वयः ॥१६१॥१६२॥

---

१ प्राञ्जलिर्वानरर्षभः । प्रहृष्टवदनः श्रीमानिदं वचनमब्रवीत् इति गो. पाठः । २ अन्येति गो. रा. पाठः । ३ एतदादि शतयोजनमायतमित्यन्तं श्लोकदकं गो. प्रक्षिप्तमित्युपेक्षितम् । ४ वै इति गो. पाठः । ५ प्रविश्येति गो. पाठः ।

अब्रवीत्कुरु वै वक्त्रं येन मां [1]विषहिष्यसि । इत्युक्त्वा सुरसां क्रुद्धो दशयोजनमा[2]यताम् ॥ १५३ ॥
दशयोजनविस्तारो [3]हनूमानभवत्तदा । [ [4]तं दृष्ट्वा मेघसंकाशं दशयोजनमायतम् ॥ ]
चकार सुरसाऽप्यास्यं विंशद्योजनमायतम् ॥ १५४ ॥
[ [5]हनूमांस्तु ततः क्रुद्धः त्रिंशद्योजनमायतः । चकार सुरसा वक्त्रं चत्वारिंशत्तथोच्छ्रितम् ॥
बभूव हनुमान्वीरः पञ्चाशद्योजनोच्छ्रितः । चकार सुरसा वक्त्रं षष्टिं योजनमुच्छ्रितम् ॥
तदैव हनुमान्वीरः सप्ततिं योजनोच्छ्रितः । चकार सुरसा वक्त्रमशीतिं योजनोच्छ्रितम् ॥
हनुमाननलप्रख्यो नवतिं योजनोच्छ्रितः । चकार सुरसा वक्त्रं शतयोजनमायतम् ॥ ]
[6]तं दृष्ट्वा व्यादितं त्वास्यं वायुपुत्रः स बुद्धिमान् । [7]दीर्घजिह्वं सुरसया [8]सुभीमं नरकोपमम् ॥ १५५ ॥
स संक्षिप्यात्मनः कायं जीमूत इव मारुतिः । तस्मिन्मुहूर्ते हनुमान्बभूवाङ्गुष्ठमात्रकः ॥ १५६ ॥
सोऽभि[9]पद्याथ तद्वक्त्रं निष्पत्य च महा[10]बलः । अन्तरिक्षे स्थितः श्रीमानिदं वचनमब्रवीत् ॥ १५७ ॥
प्रविष्टोऽस्मि हि ते वक्त्रं दाक्षायणि नमोऽस्तु ते । गमिष्ये यत्र वैदेही सत्यश्चासीद्वरस्तव ॥ १५८ ॥
तं दृष्ट्वा वदनान्मुक्तं चन्द्रं राहुमुखादिव । अब्रवीत्सुरसा देवी स्वेन रूपेण वानरम् ॥ १५९ ॥

---

रा० टी०—तद्वचनाकारमाह—निविश्येति । एषः मुखेप्रवेशनरूपः वरः धात्रा मम दत्तः अतः मे वदनं मुखं निविश्य त्वया गन्तव्यमित्युक्त्वेति शेषः, सत्वरा वेगवती सा सुरसा वक्त्रं व्यादाय मारुतेः पुरः अग्रे स्थिता बभूवेति शेषः । सार्धश्लोक एकान्वयी ॥ १५४ ॥

रा० टी०—एवमिति । सुरसया एवमुक्तः वानरपुङ्गवो हनुमान् येन यादृशेन मां विसहिष्यसि ग्रसिष्यसि तादृशं वक्त्रं कुरु इत्यब्रवीत् । अर्धद्वयमेकान्वयि ॥ १५५ ॥

१५३ ] ति० टी०—दशयोजनमायताम् आयतवक्त्रामित्यर्थः ॥ १५३ ॥

१५४ ] ति० टी०—'चकार सुरसाऽप्यास्यं विंशद्योजनमायतम्' इत्यनन्तरम् 'त दृष्ट्वा व्यादितं त्वास्यम्' इति प्राचीनः पाठः । अत्र 'तद्दृष्ट्वा मेघसंकाशं विंशद्योजनमायतम् । हनुमांस्तु ततः क्रुद्धस्त्रिंशद्योजनमायतः ॥ चकार सुरसा वक्त्रं चत्वारिंशत्तथोच्छ्रितम् । बभूव हनुमान्वीरः पञ्चाशद्योजनोच्छ्रितः ॥ चकार सुरसा वक्त्रं षष्टियोजनमुच्छ्रितम् । तदैव हनुमान्वीरः सप्ततिं योजनोच्छ्रितः ॥ चकार सुरसा वक्त्रमशीतियोजनोच्छ्रितम् । हनुमाननलप्रख्यो नवतिं योजनोच्छ्रितः ॥ चकार सुरसा वक्त्रं शतयोजनमायतम् ॥' इति श्लोकास्तु प्रक्षिप्ता इति कतकः ॥ १५४ ॥

रा० टी०—इतीति । दशयोजनमायतां दशयोजनविस्तृतमुखां सुरसां हनुमान् इत्युक्त्वा दशयोजनविस्तारोऽभवत् । तदा तस्मिन्काले दशयोजनमायतं मेघसंकाशं तं हनुमन्तं दृष्ट्वा सुरसाऽपि विंशद्योजनमायतम् आस्यं मुखं चकार । ततः सुरसाया विंशद्योजनविस्तृतमुखदर्शनानन्तरं क्रुद्धो हनुमांस्तु त्रिंशद्योजनमायतो बभूवेति शेषः । सार्धश्लोकद्वयमेकान्वयि ॥ १५६–१५८ ॥

गो० टी०—प्रकृतं विलिख्यते—तद्दृष्ट्वा व्यादितं त्वास्यं वायुपुत्रः सुबुद्धिमान् । सुसंक्षिप्यात्मनः कायं बभूवाङ्गुष्ठमात्रकः १५८-१५९

१५५–१५७ ] ति० टी०—व्यादितं व्यात्तम् । दीर्घजिह्वत्वादिगुणविशिष्टं व्यात्तं तत्तस्या आस्यं दृष्ट्वेत्यन्वयः १५५–१५७

रा० टी०—चकारेति । सुरसा तथा तेन प्रकारेण चत्वारिंशदुच्छ्रितं चत्वारिंशद्योजनपरिमितं वक्त्रं चकार । हनूमांस्तु पञ्चाशद्योजनोच्छ्रितो बभूव ॥ १५९ ॥

रा० टी०—चकारेति । सुरसा षष्टिं योजनमुच्छ्रितं चकार । तदेव हनुमान् सप्ततिं योजनोच्छ्रितो बभूवेति शेषः ॥ १६० ॥

रा० टी०—चकारेति । अशीतिं योजनोच्छ्रितं सुरसा चकार । हनुमान् नवतिं योजनोच्छ्रितः । अशीतिमित्यस्य नवतिमित्यस्य च बहिर्भूतत्वेऽप्यन्वय आर्षः ॥ १६१ ॥

रा० टी०—चकारेति । सुरसा शतयोजनमायतं चकार । तस्मिन् मुहूर्ते जीमूतो मेघ इव हनुमान् अङ्गुष्ठमात्रको बभूव । सार्धश्लोक एकान्वयी ॥ १६२ ॥

रा० टी०—स इति । अङ्गुष्ठमात्रकशरीरो हनुमान् तद्वक्त्रं सुरसामुखमभिपद्य प्राप्य निष्पत्य वक्त्रान्निर्गम्य च अन्तरिक्षे स्थितः सन् इदमब्रवीत् । अर्धद्वयमेकान्वयि ॥ १६३ ॥

१५८–१५९ ] ति० टी०—इदं वचनमितीदंशब्दार्थः । प्रविष्ट इति । दाक्षायणि दक्षप्रजापतिसंताने, अत एव नतिः । सत्य आसीत् सत्यो जात इत्यर्थः । वदनप्रवेशरूपत्वात्तस्य ॥ १५८ ॥ १५९ ॥

रा० टी०—तद्वचनाकारमाह—प्रविष्ट इति । हे दाक्षायणि ! ते वक्त्रमहं प्रविष्टोऽस्मि अतः तव वरः सत्य आसीत् अतः यत्र वैदेही तत्र गमिष्ये ते नमोऽस्तु ॥ १६४ ॥

---

१ विषाहिष्यसे इति गो.पाठः । २ आयत इति गो.पाठः । ३ बभूव हनुमांस्तदेति गो.पाठः । ४ अर्धमेतत् रा.पाठे अधिकम् । ५ एतदादि श्लोकचतुष्टयं रा. अधिकम् । ६ श्लोकोऽयं रा. नास्ति । ७ अर्धमेतत् गो. नास्ति । ८ सुमेरुमिति गो. गृहीत पा. । ९ ऽभिपत्येति गो.पा. । १० जव इति गो.पाठः ।

अर्थसिद्ध्यै हरिश्रेष्ठ गच्छ सौम्य यथासुखम् । समानय च वैदेहीं राघवेण महात्मना ॥ १६० ॥
तत्तृतीयं हनुमतो दृष्ट्वा कर्म सुदुष्करम् । साधुसाध्विति भूतानि प्रशशंसुस्तदा हरिम् ॥ १६१ ॥
स सागरमनाधृष्यमभ्येत्य वरुणालयम् । जगामाकाशमाविश्य वेगेन गरुडोपमः ॥ १६२ ॥
सेविते वारिधाराभिः पतगैश्च निषेविते । चरिते कैशिकाचार्यैरैरावतनिषेविते ॥ १६३ ॥
सिंहकुञ्जरशार्दूलपतगोरगवाहनैः । विमानैः संपतद्भिश्च विमलैः समलंकृते ॥ १६४ ॥
वज्राशनिसमस्पर्शैः पावकैरिव शोभिते । कृतपुण्यैर्महाभागैः स्वर्गजिद्भिरधिष्ठिते ॥ १६५ ॥
वहता हव्यमत्यन्तं सेविते चित्रभानुना । ग्रहनक्षत्रचन्द्रार्कतारागणविभूषिते ॥ १६६ ॥
महर्षिगणगन्धर्वनागयक्षसमाकुले । विविक्ते विमले विश्वे विश्वावसुनिषेविते ॥ १६७ ॥
देवराजगजाक्रान्ते चन्द्रसूर्यपथे शिवे । विताने जीवलोकस्य [6]विमले ब्रह्मनिर्मिते ॥ १६८ ॥
बहुशः सेविते वीरैर्विद्याधरगणैर्वृते । जगाम वायुमार्गे च गरुत्मानिव मारुतिः ॥ १६९ ॥
हनुमान्मेघजालानि प्राकर्षन्मारुतो यथा । कालागुरुसवर्णानि रक्तपीतसितानि च ॥ १७० ॥
कपिना कृष्यमाणानि महाभ्राणि चकाशिरे । प्रविशन्नभ्रजालानि निष्पतंश्च पुनः पुनः ॥ १७१ ॥
प्रावृषीन्दुरिवाभाति निष्पतन्प्रविशंस्तथा । प्रदृश्यमानः सर्वत्र हनूमान्मारुतात्मजः ॥ १७२ ॥
भेजेऽम्बरं निरालम्बं पक्षयुक्त इवाद्रिराट् । प्लवमानं तु तं दृष्ट्वा सिंहिका नाम राक्षसी ॥ १७३ ॥

---

रा० टी०–तमिति । राहुमुखात् चन्द्रमिव वदनान्मुक्तं तं दृष्ट्वा स्वेन रूपेणोपलक्षिता सुरसा वानरमब्रवीत् ॥ १६९ ॥

गो० टी०–प्रविष्टोऽस्मीति । दक्षस्यापत्यं दाक्षायणी तत्त्वं च पूर्वं वरप्रदानकथनसमये तयैव कथितमित्यनुवादात् कल्प्यते ॥ १६०–१६४ ॥

१६० ] ति० टी०–अथ साऽनुगृह्णाति—अर्थसिद्ध्यै इति । राघवेण त्वद्विज्ञापितवृत्तान्तेन समानय संगमय १६०

रा० टी०–तद्वचनाकारमाह–अर्थेति । यथासुखं गच्छ राघवेण सह वैदेहीं समानय संगमयस्व ॥ १६६ ॥

१६१–१६२ ] ति० टी०–तत्तृतीयं सुरसावक्त्रान्निष्क्रमणरूपम् ॥ १६१ ॥ १६२ ॥

रा० टी०–तदिति । तत् पूर्वोक्तकर्मद्वयात् तृतीयं कर्म सुरसामुखान्निर्गमक्रियां दृष्ट्वा हरिं हनूमन्तं साधु साध्विति प्रशशंसुः ॥ १६७ ॥

रा० टी०–स इति । स हनूमाननाधृष्यं वरुणालयं सागरं तत्समीपम् अभ्येत्य प्राप्य आकाशमाविश्य जगाम ॥ १६८ ॥

१६३ ] ति० टी०–वारिधारासेवितत्वादिविशेषणके चन्द्रसूर्यपथे जगामेत्यन्वयः एकोनसप्ततितमेन । पतगैः पक्षिभिः कैशिकं गाननृत्यविद्या तदाचार्यैस्तुम्बुरुप्रभृतिगन्धर्वैश्चरिते सेविते । ऐरावतम् ऋजुदीर्घमिन्द्रधनुरिति तीर्थः, गजविशेष इत्यन्ये ॥ १६३ ॥

रा० टी०–मार्गं वर्णयन्नाह–सेवित इत्यादिभिः । वारिधाराभिः सेविते युक्ते पतगैः पक्षिविशेषैः निषेविते कैशिकानां गाननृत्यादिविद्यानामाचार्यैस्तुम्बुरादिगन्धर्वैश्च चरिते ऐरावतैः ऋजुदीर्घेन्द्रचापैर्गजविशेषैर्वा निषेविते ॥ १६९ ॥

गो० टी०–आकाशगमनमिति दुष्करमित्यमुमर्थं कथयितुम् आकाशस्वरूपं वर्ण्यते–सेवित इत्यादिना श्लोकसप्तकेन । कैशिकाचार्यैः कैशिके रागविशेषे आचार्यैः विद्याधरविशेषैरित्यर्थः । वज्राशनिसमाघातैः पावकैः वज्राशनिसमाघातैर्हेतुभिर्जातैः पावकैः हव्यं वहता देवेभ्यो हव्यवहनार्थं गतेन चित्रभानुना वह्निना विश्वे विश्वगते व्यापक इत्यर्थः । देवराजगजाक्रान्ते ऐरावतभिन्नदिग्गजाक्रान्ते । विताने वितानतुल्ये । वितत इति वितानविशेषणम् ॥ १६५–१७३ ॥

१६४ ] ति० टी०–पतगोरगाः पक्षिसर्पाः ॥ १६४ ॥

रा० टी०–संपतद्भिर्गच्छद्भिः सिंहादिभिः समलंकृते १७०॥

१६५ ] ति० टी०–वज्राशनिसमस्पर्शैस्तद्वत्प्राणहरैः पावकैः पञ्चाग्निभिरिव स्वर्गजिद्भिरधिष्ठिते । 'समाघातैः' इति पाठे ताभ्यां तुल्य आघातोऽभिघातो येषां तैरित्यर्थः ॥१६९॥

रा० टी०–वज्राशनिसमः स्पर्शो येषां तैः पावकैः पञ्चाग्निभिरिव स्वर्गजिद्भिः अधिष्ठिते अत एव शोभिते ॥ १७१ ॥

१६६ ] ति० टी०–चित्रभानुना पञ्चाग्निभिन्नोऽयमग्निश्चित्रभानुः ॥ १६६ ॥

रा० टी०–अत्यन्तं हव्यं वहता चित्रभानुना वह्निविशेषेण सेविते ॥ १७२ ॥

१६७ ] ति० टी०–विश्वे विश्वाश्रये । विश्वावसुर्गन्धर्वराजः ॥ १६७ ॥

रा० टी०–विविक्ते विलक्षणे विश्वे जगदाश्रयीभूते विशाले वा ॥ १७३ ॥

१६८–१७३ ] ति० टी०–देवराजानां गजाः पुण्डरीकादयः । वितानेऽवकाशावरणवस्त्रे 'चांदवा' इति प्रसिद्धे ॥ १६८–१७३ ॥

---

१ समानयस्वेति गो. पाठः । २ समाघातैरिति गो. पाठः । ३ उपेति गो. पाठः । ४ अलंकृते इति गो. पाठः । ५ अत्यर्थमिति गो. पाठः । ६ वितते इति गो. पाठः । ७ [illegible] गो. पाठः । ८ खेति गो. पाठः । ९ एतदर्धो सार्धश्लोको गो. न स्तः ।

मनसा चिन्तयामास प्रवृद्धा कामरूपिणी । अद्य दीर्घस्य कालस्य भविष्याम्यहमाशिता ॥ १७४ ॥
इदं मम महासत्त्वं चिरस्य वशमागतम् । इति संचिन्त्य मनसा छायामस्य समाक्षिपत् ॥ १७५ ॥
छायायां गृह्यमाणायां चिन्तयामास वानरः । समाक्षिप्तोऽस्मि सहसा पङ्गूकृतपराक्रमः ॥ १७६ ॥
प्रतिलोमेन वातेन महानौरिव सागरे । तिर्यगूर्ध्वमधश्चैव वीक्षमाणस्तदा कपिः ॥ १७७ ॥
ददर्श स महासत्त्वमुत्थितं लवणाम्भसि । तं दृष्ट्वा चिन्तयामास मारुतिर्विकृताननाम् ॥ १७८ ॥
कपिराज्ञा यथाख्यातं सत्त्वमद्भुतदर्शनम् । छायाग्राहि महावीर्यं तदिदं नात्र संशयः ॥ १७९ ॥
स तां बुद्ध्वाऽर्थतत्त्वेन सिंहिकां मतिमान्कपिः । व्यवर्धत महाकायः प्रावृषीव बलाहकः ॥ १८० ॥
तस्य सा कायमुद्वीक्ष्य वर्धमानं महाकपेः । वक्त्रं प्रसारयामास पातालाम्बरसंनिभम् ॥ १८१ ॥
घनराजीव गर्जन्ती वानरं समभिद्रवत् । स ददर्श ततस्तस्या विकृतं सुमहन्मुखम् ॥ १८२ ॥

---

रा० टी०—जीवलोकस्य विताने वितानसदृशे ॥ १७५ ॥

रा० टी०—वायुमार्गे मारुतिर्हनुमान् गरुत्मान् गरुड इव जगाम । सप्तकमेकान्वयि ॥ १७६ ॥

रा० टी०—हनूमानिति । हनुमान् मेघजालानि मारुत इव प्राकर्षत् अत एव महाभ्राणि चकाशिरे ॥ १७६ ॥

रा० टी०—प्रविशन्निति । अभ्रजालानि पुनः पुनः प्रविशन्निष्पतंश्च सन् हनुमान् प्रावृषि प्रावृट्कालिकमेघ इन्दुरिवाभाति ॥ १७७ ॥

रा० टी०—प्रदृश्यमान इति । सर्वत्र सर्वैः प्रदृश्यमानो हनुमान् निरालम्बमम्बरं पक्षयुक्तोऽद्रिराडिव भेजे ॥ १७८ ॥

रा० टी०—प्लवमान इति । प्लवमानं तं हनुमन्तं दृष्ट्वा प्रवृद्धा बलादिनाऽतिवृद्धिं प्राप्ता सिंहिका नाम राक्षसी चिन्तयामास ॥ १७९ ॥

१७४ ] ति० टी०—आशिता कृतभोजना ॥ १७४ ॥

रा० टी०—चिन्ताप्रकारमाह—अद्येति । इदं महासत्त्वं चिरस्य बहुकालात् मम वशमागतम् अतः दीर्घस्य कालस्य बहुकालपर्यन्तम् आशिता कृतभोजनाऽहं भविष्यामि ॥१८०॥

गो० टी०—अद्येति । दीर्घस्य कालस्य दीर्घकाले गते सति अद्य आशिता आशित्री भुक्तवती भविष्यामि ॥ १७४ ॥

१७५ ] ति० टी०—समाक्षिपज्जग्राह । छायाग्रहणेन तद्वस्तुनिरोधशक्तिस्तस्या ब्रह्मदत्ता ॥ १७५ ॥

रा० टी०—इतीति । इति संचिन्त्य अस्य हनुमतः छायां समाक्षिपत् अगृह्णात् छायायां गृह्यमाणायां वानरश्चिन्तयामास ॥ १८१ ॥

गो० टी०—इतीति । समाक्षिपत् सम्यग्गृहीतवती ॥१७५॥

१७६ ] ति० टी०—पङ्गूकृतः स्तब्धगतिः पराक्रमो यस्य ॥ १७६ ॥

रा० टी०—चिन्ताप्रकारमाह—समिति । प्रतिलोमेन विपरीतेन वातेन सागरे महानौरिव समाक्षिप्तः केनचिद् गृहीतोऽहं सहसा पङ्गूकृतपराक्रमोऽस्मि ॥ १८२ ॥

गो० टी०—समाक्षिप्त इति । पङ्गूकृतपराक्रमः कुण्ठितगतिः । प्रतिलोमेन प्रतिकूलेन ॥ १७६–१७८ ॥

१७७ ] ति० टी०—महानौर्यथा पङ्गूकृतपराक्रमा स्तब्धगतिः प्रतिलोमेन वातेन क्रियते । गम्यदेशगतिनिरोध एवात्र स्तब्धगतित्वम् । यद्वा तेन यथा विपरीतगतिवारणाय यन्त्रैः स्तब्धगतिः कार्यते, तथाऽहं केनचित्स्तब्धगतिः कृतः ॥ १७७ ॥

रा० टी०—तिर्यगिति । तिर्यगादौ वीक्षमाणः कपिः लवणाम्भसि महासत्त्वं ददर्श ॥ १८३ ॥

१७८–१७९ ] ति० टी०—महासत्त्वं स्त्रीरूपं प्राणिनम् ॥ १७८ ॥ १७९ ॥

रा० टी०—तामिति । विकृताननां तां सिंहिकां दृष्ट्वा चिन्तयामास । अर्थं पृथक् ॥ १८४ ॥

रा० टी०—चिन्ताप्रकारमाह—कपीति । अद्भुतदर्शनं छायाग्राहि सत्त्वं प्राणी कपिराज्ञा यथा यथावत् आख्यातं तदिदमेव अत्र संशयो न समासान्तविधेरनित्यत्वाट्टजभावः ॥१८५॥

गो० टी०—छायाग्राहीति । तदिदं छायाग्राहि कपिराजेन कथितं नात्र संशय इति योजना ॥ १७९ ॥ १८० ॥

१८०] ति०टी०—अर्थतत्त्वेन छायाग्रहणरूपार्थक्रियया१८०

रा० टी०—स इति । अर्थतत्त्वेन अर्थस्य सुग्रीवोपदिष्टच्छायाग्रहणरूपवस्तुनः तत्त्वेन याथार्थ्येन तां सिंहिकां बुद्ध्वा प्रावृषि बलाहको मेघ इव स हनुमान् व्यवर्धत ॥ १८६ ॥

१८१–१८२ ] ति० टी०—पातालाम्बरसंनिभं पातालाकाशमध्यभागसदृशम् ॥ १८१ ॥ १८२ ॥

रा० टी०—तस्येति । महाकपेः वर्धमानं कायमुद्वीक्ष्य सा सिंहिका पातालाम्बरसंनिभं पातालाम्बरयोरन्तरालतुल्यं वक्त्रं प्रसारयामास ॥ १८७ ॥

रा० टी०—घनेति । घनराजी मेघपङ्क्तिरिव गर्जंती सिंहिका वानरं समभिद्रवत्, आगमशास्त्रस्यानित्यत्वादडभावः । ततोऽनन्तरं कायमात्रं सिंहिकाशरीरपरिमितं सुमहत् स्वप्रसन-

---

१ हि मे महदिति गो. पाठः । २ तामिति रा. पाठः । ३ आननमिति गो. पाठः । ४ राजेन कथितमिति गो. पाठः । ५ ऽन्तरेति गो. पाठः । ६ विवृतमिति गो. पाठः ।

कायमात्रं च मेधावी मर्माणि च महाकपिः । स तस्या विकृते वक्त्रे वज्रसंहननः कपिः ॥ १८३ ॥
संक्षिप्य मुहुरात्मानं निपपात[1] महाकपिः । आस्ये तस्या निमज्जन्तं ददृशुः सिद्धचारणाः ॥ १८४ ॥
ग्रस्यमानं यथा चन्द्रं पूर्णं पर्वणि राहुणा । ततस्तस्या नखैस्तीक्ष्णैर्मर्माण्युत्कृत्य वानरः ॥ १८५ ॥
उत्पपाताथ वेगेन मनःसंपातविक्रमः । तां तु दिष्ट्या च[2] धृत्या च दाक्षिण्येन निपात्य सः ॥ १८६ ॥
[3]कपिप्रवीरो वेगेन ववृधे पुनरात्मवान् । हृतहृत्सा हनुमता पपात विधुराम्भसि ॥
[4]स्वयंभुवैव हनुमान्सृष्टस्तस्या निपातने ॥ १८७ ॥
तां हतां वानरेणाशु पतितां वीक्ष्य सिंहिकाम् । भूतान्याकाशचारीणि तमूचुः प्लवगोत्तमम् ॥ १८८ ॥
भीममद्य कृतं कर्म महत्सत्त्वं त्वया हतम् । साधयार्थमभिप्रेतमरिष्टं प्लवतां वर ॥ १८९ ॥

---

योग्यमित्यर्थः, तस्याः मुखं मर्माणि भेदनाय मर्मस्थलानि च स हनूमान् ददर्श । सार्धश्लोक एकान्वयी ॥ १८८ ॥

गो० टी०—घनराजीवेति । समभिद्रवत् समभ्यद्रवत् ॥ १८१ ॥

गो० टी०—स ददर्शेति । कायमात्रं देहप्रमाणम् ॥ १८२ ॥

१८३–१८५ ] ति० टी०—कायमात्रं स्वशरीरकवलनपर्याप्तं शरीरप्रमाणमित्यर्थं इति तीर्थः । मात्रशब्दोऽल्पवाचीति कतकः । मर्माणि च भेदनार्थं ददर्शेत्यन्वयः । तस्या वक्त्र आत्मानं मुहुः संक्षिप्याधिकं संकुच्य निपपातेत्यन्वयः ॥ १८३–१८५ ॥

रा० टी०—स इति । स हनूमान् तस्याः सिंहिकायाः वक्त्रे आत्मानं स्वशरीरं संक्षिप्य सूक्ष्मं कृत्वा निपपात ॥ १८९ ॥

रा० टी०—अस्य इति । राहुणा ग्रस्यमानं पूर्णचन्द्रमिव तस्या आस्ये मुखे निमज्जन्तं हनूमन्तं सिद्धचारणा ददृशुः १९०

गो० टी०—स इति । मुहुः संक्षिप्य संनिकर्षानुगुणं संकुच्य ॥ १८३ ॥ १८४ ॥

रा० टी०—तत इति । ततः प्रवेशानन्तरं मनस्संपातवत् मनोगमनवत् विक्रमो गमनं यस्य स हनूमान् तीक्ष्णैर्नखैस्तस्या मर्माणि उत्कृत्य शैथिल्यसंपादनार्थं किंचिद् भित्त्वा उत्पपात मुखद्वारा तच्छरीरान्निर्जगाम ॥ १९१ ॥

गो० टी०—तत इति । ततः तेन रूपेण मनस्संपातविक्रमः मनोवेगतुल्यगतिः ॥ १८५ ॥

१८६ ] ति० टी०—मनःसंपातविक्रमो मनोवेगतुल्यवेगः । दिष्ट्या दैवानुग्रहेण । 'दृष्ट्वा' इति पाठे सूक्ष्मदर्शनेनेत्यर्थः । धृत्या सहजधैर्येण । दाक्षिण्येन कालोचितकृत्यचातुर्येण च तां निपात्य निहत्य वेगेनोत्पपात ॥ १८६ ॥

रा० टी०—तामिति । दिष्ट्या देवादीनां भाग्योदयेन धृत्या स्वधैर्येण च दाक्षिण्येन अतिनिपुणतया च तां सिंहिकां निपात्य शैथिल्यप्रापणपूर्वकं पातयित्वा आत्मवान् अतिप्रयत्नवान् कपिप्रवीरः स हनुमान् पुनर्ववृधे ॥ १९२ ॥

गो० टी०—तामिति । दृष्ट्या दूरादेव दर्शनेन धृत्या अस्य नियमनजननधार्ष्ट्येन दाक्षिण्येन पाटवेन ॥ १८६ ॥

१८७–१८८ ] ति० टी०—नन्नु प्रथमप्रवृत्तवेगस्य सुरसादिभिः कुण्ठीभावे सति कथं पुनराकाशगमनं तत्राह—आत्मवान्वायोरिव स्वाधीन एव तद्गमनविषयो यत्नः । प्रथमं स्वाकाशमार्गप्राप्तिमात्राय महेन्द्रपर्वतालम्बनमितरजनप्रतारणाय वेत्याहुः । हृतहृद्धृस्तहृदयलक्षणप्राणस्थाना, अत एव विधुरा प्राणशून्याम्भसि पपात । अत्र कविरुत्प्रेक्षते—तस्याश्छायाग्रहणमात्रेण भक्षणादिशक्तिमत्याः सिंहिकाया, निपातने निपातनिमित्तं रावणनाशाय स्वात्मरूपरामवत्स्वस्वरूपो हनुमान्सृष्टः ॥ १८७ ॥ १८८ ॥

रा० टी०—हृतेति । हनुमता हृतं विवेकराहित्यं प्रापितं हृत् हृदयं यस्याः सा अत एव विधुरा गर्वेभ्यो वियुक्ता सा सिंहिका अम्भसि सागरजले पपात । तत्र हेतुः—तस्या निपातने स्वयंभुवा ब्रह्मणा हनुमान् एव सृष्टः निर्मितः ॥ १९३ ॥

रा० टी०—तामिति । सिंहिकां हतां ताडितां वीक्ष्य आकाशचारीणि भूतानि तं हनूमन्तमूचुः ॥ १९४ ॥

गो० टी०—हृतहृदिति । विधुरा आर्ता ॥ १८७ ॥

१८९ ] ति० टी०—महत्सत्त्वं महाबला राक्षसी रावणवदशक्यसंहारा त्वया संहृतेत्यर्थः । अरिष्टं बाधारहितम् 'रिष हिंसायाम्' ॥ १८९ ॥

रा० टी०—तद्वचनाकारमाह—भीममिति । भीमं भयङ्करं सत्त्वं यत्त्वया हतं गर्वविध्वंसपूर्वकं ताडितं तन्महत्कर्म कृतम् । अतः अभिप्रेतमिच्छाविषयीभूतमर्थम् अरिष्टं निर्बाधं यथा भवति तथा साधय । अत्र सिंहिकायाः प्राणवियोगपरत्वेन व्याख्यानं हेयमेव परमधर्मज्ञहनुमतोऽत्र स्त्रीप्राणवियोगकर्तृत्वस्यासंभवात् अत एव सुरसावधाभावः सङ्गच्छते अत एव वक्ष्यमाणलङ्काकर्मकप्रहारसमये स्त्री चेति मन्यमानेन नातिक्रोधः स्वयं कृत इत्युक्तिः संगच्छते अत एव न संदर्भाशुद्धिरिति दिक् ॥ १९६ ॥

गो० टी०—भीममित्यादि । अरिष्टं शुभं यथा भवति तथा यस्य सिंहिकारूपसत्त्वस्य दृष्टिः आयतिक्षमसूक्ष्मेक्षणं मतिः अर्थतत्त्वनिश्चयः । क्रियावत्त्वं दाक्ष्यं यथा तव तथा यस्य चत्वारि सन्ति तत्त्वया हतम् । तान्येव चत्वार्याह—धृतिरिति । या धृतिः स्वकर्मसु स्वानुकूल्यकार्येषु नावसीदति या

---

१ निष्पपात महाबल इति गो. पाठः । २ चेति गो. पाठः । ३ स कपिवरो वेगादिति गो. पाठः । ४ अर्धमेतत् गो, नास्ति ।

यस्य त्वेतानि चत्वारि वानरेन्द्र यथा तव । धृतिर्दृष्टिर्मतिर्दाक्ष्यं स कर्मसु न सीदति ॥ १९० ॥
स तैः संपूजितः[1] पूज्यः प्रतिपन्नप्रयोजनैः[2] । जगामाकाशमाविश्य पन्नगाशनवत्कपिः ॥ १९१ ॥
प्राप्तभूयिष्ठपारस्तु सर्वतः परिलोकयन् । योजनानां शतस्यान्ते वनराजीं[3] ददर्श सः ॥ १९२ ॥
ददर्श च पतन्नेव विविधद्रुमभूषितम् । द्वीपं शाखामृगश्रेष्ठो मलयोपवनानि च ॥ १९३ ॥
सागरं सागरानूपान्सागरानूपजान्द्रुमान्[4] । सागरस्य च पत्नीनां मुखान्यपि विलोकयत्[5] ॥ १९४ ॥
स महामेघसंकाशं समीक्ष्यात्मानमात्मवान् । निरुन्धन्तमिवाकाशं चकार मतिमान्मतिम् ॥ १९५ ॥
कायवृद्धिं प्रवेगं च मम दृष्ट्वैव राक्षसाः । मयि कौतूहलं कुर्युरिति मेने महामतिः ॥ १९६ ॥
ततः शरीरं संक्षिप्य तन्महीधरसंनिभम् । पुनः प्रकृतिमापेदे वीतमोह इवात्मवान् ॥ १९७ ॥
तद्रूपमतिसंक्षिप्य हनूमान्प्रकृतौ स्थितः । त्रीन्क्रमानिव विक्रम्य बलिवीर्यहरो हरिः ॥ १९८ ॥

---

दृष्टिर्नावसीदति या मतिर्नावसीदति यद्दाक्ष्यं नावसीदति एतानि चत्वारि यस्य सन्ति तत्त्वया हतमिति योजना ॥१८८॥१८९॥

१९० ] ति० टी०—निर्बाधं कर्मसाधनहेतुमाह—यस्य त्विति ॥ १९० ॥

रा० टी०—यस्येति । यथा तव एतानि धृत्यादीनि चत्वारि सन्ति तथा यस्य सन्ति स कर्मसु क्रियासु न सीदति न दुःखं प्राप्नोति ॥ १९६ ॥

१९१ ] ति० टी०—स तैः संपूजितस्तैः पूर्वोक्तभूतैः । प्रतिपन्नप्रयोजनैरभिमतं साधयेत्यनुमत्यानुऽगृहीतकार्यैः॥१९१॥

रा० टी०—स इति । पूज्यः सर्वेषां पूजनीयः अत एव तैः आकाशचारिभिः संपूजितः अत एव प्रतिपन्नं निश्चितं प्रयोजनं सीतादर्शनं येन, प्रतिपन्नं सिद्धं यस्येति वा स हनूमान् पन्नगाशनवत् आकाशमाविश्य जगाम ॥ १९७ ॥

गो० टी०—स इति । संभावितः पूजितः । प्रतिपन्नप्रयोजनः प्राक्प्रतिभासितकार्यसारः स च स्त्रीत्वे दोषे समानेऽपि सुरसाया जयप्रतिपत्तिः सिंहिकाया वधप्रतिपत्तिश्च ॥ १९० ॥

१९२ ] ति० टी०—प्राप्तभूयिष्ठः प्राप्तकल्पः पारो येन सः ॥ १९२ ॥

रा० टी०—प्राप्तेति । प्राप्तः भूयिष्ठो बहुः पारो येन स हनूमान् योजनानां शतस्यान्ते विद्यमानां वनराजीं ददर्श॥१९८॥

गो० टी०—प्राप्तेति । प्राप्तभूयिष्ठपारः पाप्तप्रायतीरः१९१

१९३ ] ति० टी०—पतन्नेव गच्छन्नेव मलयोपवनानि । अनेनोत्तरतीर इव दक्षिणतीरेऽपि मलयाख्यः पर्वतोऽस्तीति गम्यते ॥ १९३ ॥

रा० टी०—ददर्शेति । शाखामृगश्रेष्ठो हनूमान् पतन् गच्छन् सन्नेव विविधद्रुमभूषितं द्वीपं मलयोपवनानि च सागरं च सागरस्य अनूपान् देशांश्च सागरस्य पत्नीनां नदीनां मुखानि सङ्गमस्थलानि विलोकयन् सन् ददर्श । अर्धचतुष्टयमेकान्वयि ॥ १९९ ॥ २०० ॥

गो० टी०—ददर्शेति । मलयोपवनानि लङ्कामलय इति दक्षिणतीरे स्थितमलयः तस्योपवनानि ॥ १९२ ॥

१९४ ] ति० टी०—सागरं दक्षिणतीरसमीपवर्तिसागरम् । अनूपः कच्छदेशः । सागरस्य पत्नीनां लङ्काद्वीपादागत्य सागरं प्रविशन्तीनां नदीनां मुखानि संगमस्थानानि विलोकयद्व्यलोकयत् ॥ १९४ ॥

गो० टी०—सागरमिति । सागरस्य पत्नीनां नदीनां त्रिकूटोत्पन्नानाम् । आत्मानं स्वशरीरम् । मतिं चकार मेन इति यावत् ॥ १९३ ॥ १९४ ॥

१९५ ] ति० टी०—आत्मानं स्वशरीरं महत्त्वादाकाशं निरुन्धन्तमिव । मतिं कर्तव्यनिश्चयम् ॥ १९५ ॥

रा० टी०—स इति । स हनूमान् आकाशं निरुन्धन्तमिव महामेघसंकाशम् आत्मानं स्वदेहं समीक्ष्य मतिं चिन्तां चकार ॥ २०१ ॥

१९६ ] ति० टी०—कौतूहलम् आश्चर्यधिया दिदृक्षामित्यर्थः ॥ १९६ ॥

रा० टी०—चिन्तास्वरूपमाह—कायेति । मम कायवृद्धिं प्रवेगं च दृष्ट्वैव मयि कौतूहलम् आश्चर्यं कुर्युरिति महामतिर्हनुमान् मेने ॥ २०२ ॥

गो० टी०—कथं मेन इत्यत्राह—कायवृद्धिमिति ॥१९५॥

१९७ ] ति० टी०—प्रकृतिं निजमाकारम् । वीतमोहो वीतो नष्टो वासनावशादागतः कामादिमोहो यस्य सः । आत्मवाञ्जीवन्मुक्तयोगी । प्रकृतिम् भगवदनन्यतत्त्वतालक्षणस्वभावमित्यर्थः ॥ १९७ ॥

रा० टी०—तत इति । ततो विचारानन्तरं महीधरसंनिभं शरीरं संक्षिप्य अल्पत्वं प्रापय्य प्रकृतिं स्वाकृतिं पुनरापेदे । तत्र दृष्टान्तः—वीतमोहः विगतरागः आत्मवान् योगी शरीरं संक्षिप्य तिरस्कृत्य प्रकृतिं नित्यानन्दस्वभावमिव ॥ २०३ ॥

गो० टी०—तत इति । पुनः प्रकृतिमापेदे पुनर्निजाकारं प्राप्तवान् ॥ १९६ ॥

१९८ ] ति० टी०—अतिसंक्षिप्यातिसंकोच्य । त्रीन्क्रमान्पदानि विक्रम्य प्रक्षिप्य बलेर्वीर्यस्य हरो हरिरिव प्रकृतौ स्थितः ॥ १९८ ॥

रा० टी०—तदेव भङ्ग्यन्तरेणाह—तदिति । तत्प्रवृद्धं रूपम् अतिसंक्षिप्य त्रीन् क्रमान् लोकान् विक्रम्य परिमाय बलिवीर्यहरः बलेर्वीर्यस्य ध्वंसकः हरिर्वामन इव प्रकृतौ स्थितः ॥ २०४ ॥



१ संभावित इति गो.पाठः । २ प्रयोजन इति गो. रा. पाठः। ३ राजिमिति गो.पाठः। ४ आनूपमिति गो.पाठः। ५ विलोकयन्निति गो.रा.पाठः।

स चारुनानाविधरूपधारी परं समासाद्य समुद्रतीरम् ।
परैरशक्यं प्रतिपन्नरूपः समीक्षितात्मा समवेक्षितार्थः ॥ १९९ ॥
ततः स लम्बस्य गिरेः समृद्धे विचित्रकूटे निपपात कूटे ।
सकेतकोद्दालकनारिकेले महाभ्रकूटप्रतिमो महात्मा ॥ २०० ॥
ततस्तु संप्राप्य समुद्रतीरं समीक्ष्य लङ्कां गिरिवर्यमूर्ध्नि ।
कपिस्तु तस्मिन्निपपात पर्वते विधूय रूपं व्यथयन्मृगद्विजान् ॥ २०१ ॥
स सागरं दानवपन्नगायुतं बलेन विक्रम्य महोर्मिमालिनम् ।
निपत्य तीरे च महोदधेस्तदा ददर्श लङ्काममरावतीमिव ॥ २०२ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये सुन्दरकाण्डे प्रथमः सर्गः ॥ १ ॥

## द्वितीयः सर्गः ।

रक्षोगणपरिरक्षितलङ्काया दुष्प्रवेशत्वं विचिन्तयन्हनुमान्देहं संकोचयंश्चन्द्रोदयसमये तां प्रविवेश ।

स सागरमनाधृष्यमतिक्रम्य महाबलः । त्रिकूटस्य[2] तटे लङ्कां [3]स्थितः स्वस्थो ददर्श ह ॥ १ ॥

गो० टी०–उक्तं शरीरसंक्षेपं दृष्टान्तार्थमनुवदति–तद्रूपमिति ॥ १९७ ॥

१९९ ] ति० टी०–चारुनानाविधरूपधारी नानावर्णाकृतिरूपधारी । तच्च तद्व्यानेषु स्पष्टम् । परैरशक्यं समुद्रतीरमासाद्येत्यन्वयः । समीक्षितात्मा समालोकितातिप्रमाणस्वशरीरः, समवेक्षितार्थं आलोचितानन्तरकार्यः, प्रतिपन्नरूपोऽङ्गीकृतस्वल्पदेहः अभूदिति शेषः ॥ १९९ ॥

रा० टी०–स इति । चारुनानाविधरूपधारी तत्तत्स्वरूपः समीक्षितः ज्ञातः आत्मा अन्वेषणयत्नो येन अत एव समवेक्षितः निश्चितः अर्थः सीताप्राप्तिर्येन स महाभ्रकूटप्रतिमः महामेघसमूहसदृशो महात्मा हनूमान् परैरशक्यं तरितुमिति शेषः, परं समुद्रतीरं समासाद्य प्राप्य ततः समुद्रतीरात् लम्बस्य लम्बाभिधस्य गिरेः समृद्धे फलपुष्पादिभिः प्रवृद्धे सकेतकोद्दालकनारिकेले केतकादिसहिते विचित्रकूटे विचित्राणि कूटानि शिखराणि यस्मिंस्तस्मिन् कूटे प्रधानशिखरे निपपात । श्लोकद्वयमेकान्वयि ॥ २०५ ॥ २०६ ॥

गो० टी०–स चार्विति । प्रतिपन्नरूपः प्रतिपन्नस्वभावशरीरः अभूदिति शेषः । समीक्षितात्मा समीक्षितदेहः समवेक्षितार्थः निरूपितकार्यः । पूर्वोक्तोपसंहारश्लोक एषः ॥ १९८ ॥

२०० ] ति० टी०–लम्बस्य लम्बाख्यस्य विचित्राणि कूटान्यवान्तरशिखराणि यस्य तादृशे कूटे प्रधानशिखरे । उद्दालकः श्लेष्मातकः ॥ २०० ॥

गो० टी०–तत इति । लम्बस्य लम्बमानस्येव स्थितस्य अविज्ञाताग्रस्येत्यर्थः । विचित्रकूटे विविधाश्चर्यसमूहे । 'कूटस्त्वस्त्रियां पुञ्जपालयोः' इति दर्पणः । उद्दालकाः श्लेष्मातकाः ॥ १९९ ॥

२०१–२०२ ] ति० टी०–गिरिवर्यमूर्ध्नि स्थितामिति शेषः । उपसंहरति––कपिस्त्विति । स कपिरुच्यमानविशेषणं सागरमतिक्रम्य तस्मिंल्लम्बाख्यपर्वते मृगादीन्व्यथयन्पीडयन्निपपात । निपत्य च ततः प्राचीनं रूपं विधूय महोदधेस्तीरेऽमरावतीमिव स्थितां लङ्कां ददर्श ॥ २०१ ॥ २०२ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये सुन्दरकाण्डे प्रथमः सर्गः ॥ १ ॥

रा० टी०–तत इति । समुद्रतीरं समुद्रतीरवर्तिनीं गिरिवर्यमूर्ध्नि विद्यमानां लङ्कां समीक्ष्य अवलोक्य संप्राप्य मनसा गत्वा रूपं स्वदेहं विधूय तिरोधाय कपिर्हनूमान् तस्मिन् गिरिवर्याभिधे पर्वते मृगद्विजान् मृगपक्षिणः व्यथयन् सन् ततः लम्बगिरिपर्वतात् निपपात ॥ २०७ ॥

गो० टी०–व्यथयन् मृगद्विजानित्यादिविशेषं वक्तुमुक्तमर्थमनुवदति–ततस्त्विति । समुद्रतीरं तीरोपर्याकाशं विधूय रूपं पूर्वरूपं विहाय । वृत्तमुपजातिः ॥ २०० ॥ २०१ ॥

अस्मिन्सर्गे सार्धैकाधिकद्विशतश्लोकाः ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने प्रथमः सर्गः ॥ १ ॥

रा० टी०–उपसंहरन्नाह–स इति । दानवपन्नगैः आयुतं व्याप्तं सागरं निष्क्रम्य उल्लङ्घ्य महोदधेस्तीरे निपत्य संप्राप्य अमरावतीमिव विद्यमानां लङ्कां ददर्श ॥ २०८ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ सुन्दरकाण्डे प्रथमः सर्गः ॥ १ ॥

१ ] ति० टी०–त्रिकूटस्य लम्बापरपर्यायस्य पर्वतस्य तटे स्थितः स्वस्थो भूत्वा लङ्कां ददर्श ॥ १ ॥

१ अशक्य इति गो. पाठः । २ त्रिकूटशिखरे इति गो. पाठः । ३ स्थितामिति गो. पाठः ।

ततः पादपमुक्तेन पुष्पवर्षेण वीर्यवान् । अभिवृष्टस्ततस्तत्र बभौ पुष्पमयो हरिः ॥ २ ॥
योजनानां शतं श्रीमांस्तीर्त्वाऽप्युत्तमविक्रमः । अनिःश्वसन्कपिस्तत्र न ग्लानिमधिगच्छति ॥ ३ ॥
शतान्यहं योजनानां क्रमेयं सुबहून्यपि । किं पुनः सागरस्यान्तं संख्यातं शतयोजनम् ॥ ४ ॥
स तु वीर्यवतां श्रेष्ठः प्लवतामपि चोत्तमः । जगाम वेगवाँल्लङ्कां लङ्घयित्वा महोदधिम् ॥ ५ ॥
शाद्वलानि च नीलानि गन्धवन्ति वनानि च । [1]मधुमन्ति च मध्येन जगाम नगवन्ति च ॥ ६ ॥
शैलांश्च तरुसंछन्नान्वनराजीश्च पुष्पिताः । अभिचक्राम तेजस्वी हनूमान्प्लवगर्षभः ॥ ७ ॥
स तस्मिन्नचले तिष्ठन्वनान्युपवनानि च । स नगाग्रे [3]स्थितां लङ्कां ददर्श पवनात्मजः ॥ ८ ॥
सरलान्कर्णिकारांश्च खर्जूरांश्च सुपुष्पितान् । प्रियालान्मुचुलिन्दांश्च कुटजान्केतकानपि ॥ ९ ॥
प्रियङ्गून्गन्धपूर्णांश्च नीपान्सप्तच्छदांस्तथा । असनान्कोविदारांश्च करवीरांश्च पुष्पितान् ॥ १० ॥
पुष्पभारनिबद्धांश्च तथा मुकुलितानपि । पादपान्विहगाकीर्णान्पवनाधूतमस्तकान् ॥ ११ ॥
हंसकारण्डवाकीर्णा वापीः पद्मोत्पलावृताः । आक्रीडान्विविधान्रम्यान्विविधांश्च जलाशयान् ॥ १२ ॥
संततान्विविधैर्वृक्षैः सर्वर्तुफलपुष्पितैः । उद्यानानि च रम्याणि ददर्श कपिकुञ्जरः ॥ १३ ॥

---

रा० टी०—तीर्णसागरस्य हनुमतो वृत्तान्तमेवाह—स इत्यादिभिः । अनाधृष्यं धर्षयितुमशक्यं सागरं स हनूमान् अतिक्रम्य त्रिकूटस्य गिरिवर्याभिधस्य तटे स्वस्थः स्थितः सन् लङ्कां ददर्श ॥ १ ॥

गो० टी०—स सागरमित्यादि ॥ १–३ ॥

२ ] ति० टी०—पुष्पमयः पुष्पमयवानर इव ॥ २ ॥

रा० टी०—तत इति । ततः तत्र स्थित्यनन्तरं पादपमुक्तेन तरुभिः त्यक्तेन पुष्पवर्षेण अभिवृष्टः ततः तस्माद्धेतोः पुष्पमयः हरिर्हनुमान् तत्र त्रिकूटतटे बभौ ॥ २ ॥

३ ] ति० टी०—अनिःश्वसञ्श्रमजश्वासरहितः । तदेवाह—न ग्लानिमिति । कविवाक्यमेतत् ॥ ३ ॥

रा० टी०—योजनानामिति । उत्तमविक्रमः कपिः हनूमान् योजनानां सुबहूनि शतानि अहं क्रमेयं क्रामेयं क्रमितुं शक्त इत्यर्थः, अतः संख्यातं बहुभिर्ज्ञातं शतयोजनपरिमितं सागरस्यान्तं सुबद्धसागरं क्रमेयं पुनरिति किं विचार्येति शेषः, अनिश्वसन् श्रमहेतुकनिश्वासरहितः सन् योजनानां शतं तीर्त्वाऽपि तत्र तरणसमये ग्लानिं नाधिगच्छति अध्यगच्छत् प्राप्नोत् । श्लोकद्वयमेकान्वयि ॥ ३ ॥ ४ ॥

४ ] ति० टी०—अहं योजनानां बहूनि शतान्यपि क्रमेयं क्रामेयं क्रमितुं शक्तः । शतयोजनमिति संख्यातं सागरस्यान्तं परं पारं क्रामेयमिति का गणना ममेति । मन्यते स्मेति शेषः । हनुमदभिप्रायानुवादः कवेः ॥ ४ ॥

गो० टी०—समुद्रलङ्घने कुतो ग्लानिं नाध्यगच्छदित्यत्राह—शतानीति ॥ ४ ॥ ५ ॥

५ ] ति० टी०—जगाम लङ्काम् पर्वतशिखरादवरुह्येति शेषः ॥ ५ ॥

रा० टी०—स इति । स हनूमान् महोदधिं तीर्त्वा लङ्कां जगाम ॥ ५ ॥

६ ] ति० टी०—मध्येन जगाम मध्यमार्गेण वनादीन्पश्यञ्जगाम । नगवन्ति वृक्षवन्ति प्राशस्त्ये मतुप् ॥ ६ ॥

रा० टी०—शाद्वलानीति । शाद्वलानि कोमलदूर्वादिविशिष्टानि नीलानि मधुमन्ति मधुविशिष्टानि नगवन्ति गिरिखण्डवन्ति वनानि मध्येन मध्यवर्तिमार्गेण जगाम, हनूमानिति शेषः॥६॥

गो० टी०—शाद्वलानीति । गण्डवन्ति स्थूलोपलवन्ति । नामैकदेशे नामग्रहणेन गण्डशब्देन गण्डशैल उच्यते ॥ ६॥ ७ ॥

७ ] ति० टी०—शैलाँल्लम्बगिरिपादरूपान् ॥ ७ ॥

रा० टी०—शैलानिति । शैलान् वनराजीः वनपङ्क्तीश्च हनूमान् अभिचक्राम विचचार ॥ ७ ॥

८ ] ति० टी०—स तस्मिँल्लम्बपर्वते तिष्ठँल्लङ्काया वनान्युपवनानि च ददर्श । अपि च स पवनात्मजस्तां लङ्कां नगाग्रे पर्वताग्रस्थितां ददर्श ॥ ८ ॥

रा० टी०—स इति । तस्मिन्नचले गिरिवर्यसमीपे तिष्ठन् स हनूमान् वनान्युपवनानि नगाग्रे गिरिवर्यशिखरे स्थितां लङ्कां च ददर्श ॥ ८ ॥

गो०टी०—स इति । स तस्मिन्नित्यर्थे ददर्शेत्यपकृष्यते॥८॥

९ ] ति० टी०—अस्यैव प्रपञ्चः—सरलानित्यादि । मुचुलिन्दा जम्बीरा इत्याहुः ॥ ९ ॥

१०–११ ] ति० टी०—गन्धपूर्णान्गन्धाढ्यान् ॥१०॥११॥

१२–१३ ] ति० टी०—रावणतपोबलात्तस्यां सर्वे वृक्षाः सर्वदा पुष्पिता इति न कश्चिद्विरोधः । आक्रीडाः क्रीडापर्वताः इति कतकः, साधारणोद्यानान्याक्रीडा इत्यन्ये । राज्ञामसाधारणान्युद्यानान्याक्रीडा इति तीर्थः ॥ १२ ॥ १३ ॥

---

१ यथेति गो. पाठः । २ गण्डवन्तीति गो. पाठः । ३ च तामिति गो. पाठः । ४ आवृताः इति गो. पाठः ।

समासाद्य च लक्ष्मीवाँल्लङ्कां रावणपालिताम् । परिखाभिः सपद्माभिः सोत्पलाभिरलंकृताम् ॥ १४ ॥
सीतापहरणात्तेन रावणेन सुरक्षिताम् । समन्ताद्विचरद्भिश्च राक्षसैरुग्रधन्वभिः[1] ॥ १५ ॥
काञ्चनेनावृतां रम्यां प्राकारेण महापुरीम् । गृहैश्च [2]गिरिसंकाशैः शारदाम्बुदसंनिभैः ॥ १६ ॥
पाण्डुराभिः प्रतोलीभिरुच्चाभिरभिसंवृताम् । अट्टालकशताकीर्णां[3] पताकाध्वजशोभिताम् ॥ १७ ॥
तोरणैः काञ्चनैर्दिव्यैर्लतापङ्क्तिविराजितैः[4] । ददर्श हनुमाँल्लङ्कां [5]देवो देवपुरीमिव ॥ १८ ॥
गिरिमूर्ध्नि स्थितां लङ्कां पाण्डुरैर्भवनैः शुभैः । ददर्श स कपिः[6] श्रीमान्पुरीमाकाशगामिव ॥ १९ ॥
पालितां राक्षसेन्द्रेण निर्मितां विश्वकर्मणा । प्लवमानामिवाकाशे ददर्श हनुमान्कपिः ॥ २० ॥
वप्रप्राकारजघनां विपुलाम्बुवनाम्बराम् । शतघ्नीशूलकेशान्तामट्टालकावतंसकाम्[7] ॥ २१ ॥

रा० टी०–दर्शनमेव विशदयन्नाह–सरलानित्यादिभिः । लक्ष्मीवान् कपिकुञ्जरो हनुमान् परिखाभिरलंकृतां लङ्कां तत्समीपं समासाद्य प्राप्य सरलान् ददर्श । तत्र मुचुलिन्दा जम्बीराः, आक्रीडाः क्रीडागिरयः इति कतकः उद्यानविशेषा एवेत्यन्ये । राज्ञामसाधारणान्युद्यानान्याक्रीडा इति तीर्थः । श्लोकषट्कमेकान्वयि ॥ ९–१४ ॥

गो० टी०–सरलानिति । यूपसरलान् कर्णिकारान्परिव्याधान् खर्जूरान्कण्टकच्छदान् प्रियालान् धनुःपटान् मुचुलिन्दान् जम्बीरान् कुटजान् प्रियङ्गून् फलिनः गन्धपूर्णान् नीपान् असनान् कोविदारान् चमरिकान् आक्रीडान् सर्वसाधारणक्रीडास्थानानि उद्यानानि राजयोग्यानि सर्वर्तुफलपुष्पितैः सर्वर्तुषु फलपुष्पाण्येषां सञ्जातानीति तैः ॥९–१३॥

१४ ] ति० टी०–समासाद्य लङ्कां लङ्कासमीपं प्राप्य वक्ष्यमाणविशेषणां लङ्कां ददर्शेत्यन्वयः ॥ १४ ॥

गो० टी०–समासाद्येति । समासाद्य ददर्शेति क्रियाभेदाल्लङ्कापदावृत्तिः । लक्ष्मीवान् जयहेतुकान्तिमान् उत्पलानि पद्मव्यतिरिक्तानि सरसिजानि सीतापहरणम् अर्थः प्रयोजनं यस्य तेन सुरक्षितत्वे हेतुरयम् विचरद्भिश्चेत्यत्र चकारो भिन्नक्रमः राक्षसैश्च सुरक्षिताम् ग्रहसंकाशैः नवग्रहतुल्यैः पाण्डुराभिः सुधालिप्तभूमिकत्वातिसिताभिः प्रतोलीभिः वीथीभिः अट्टालकाः अट्टाः पताकाध्वजमालिनीं लतादिरेखाविचित्रितपटविशिष्टाः पताकाः मत्स्यमकराद्याकारा ध्वजाः । व्रीह्यादित्वादिनिः । लतापङ्क्तयः लताकाररेखाः ॥ १४–२० ॥

१५–१६ ] ति० टी०–सीतापहरणात् सीतां लङ्कायामपहृत्य स्थापनाद्धेतोरित्यर्थः । राक्षसाश्च रक्षणे करणभूताः ॥ १५ ॥ १६ ॥

१७ ] ति० टी०–प्रतोल्यो रथ्याः । तासां पाण्डुरत्वमुच्चत्वं च तत्रत्यसौधसंबन्धकृतम् । अट्टालकाः प्राकारशिरांसि । पताका ध्वजपटस्तद्युक्तध्वजशोभिताम् ॥ १७ ॥

१८ ] ति० टी०–लतापङ्क्तिस्तदाकारचित्रविशेषास्तया विराजितैः शोभमानैस्तोरणैर्युक्तां देव इन्द्रो देवपुरीममरावतीमिव । अनेन परनगरादिकृतशोभाभावः सूचित इति बोध्यम् १८

रा० टी०–सीतेति । सीतापहरणात् सीतापहरणपूर्वकस्थानात् हेतोः रावणेन राक्षसैश्च सुरक्षितां काञ्चनेन प्राकारेण वृतां गृहैः उच्चाभिः पाण्डुराभिः सुधादिसंस्कृतात्वेन पाण्डुरवर्णविशिष्टाभिः प्रतोलीभिः रथ्याभिश्चाभिसंवृताम् अट्टालकशताकीर्णाम् अनन्ताट्टालकपूर्णां लतापङ्क्तिविराजितैः लतापङ्क्तिवत् शोभितैः तोरणैर्बहिर्द्वारैरुपलक्षितां लङ्कां देवपुरीं देव इव हनुमान् ददर्श । श्लोकचतुष्टयमेकान्वयि ॥१५–१८॥

१९ ] ति० टी०–गिरिमूर्धस्थत्वादाकाशगपुरोपमेयता लङ्कायाः ॥ १९ ॥

रा० टी०–तदेव भङ्ग्यन्तरेणाह—गिरीति । आकाशगा आकाशादूर्ध्वं गो गमनं यस्याः तां पुरीमिव श्रीमान् हनुमान् लङ्कां ददर्श ॥ १९ ॥

२० ] ति० टी०–गिरिमूर्धस्थत्वादेवाकाशे प्लवमानामिव । लङ्कां द्रष्टुर्हनूमत इव तद्वर्णनप्रसक्तस्य कवेरप्याश्चर्यमग्नतया ददर्शेति पुनरुक्तिर्न दोषाय । विस्मयेन पुनः पुनर्ददर्शेति वा तात्पर्यम् ॥ २० ॥

रा० टी०–पालितामिति । आकाशे प्लवमानां गच्छन्तीमिव हनूमान् ददर्श ॥ २० ॥

२१ ] ति० टी०–लङ्कां स्त्रीत्वेन वर्णयति—वप्रेति । वप्रः प्राकाराभ्यन्तरवेदिका तद्युक्तप्राकारजघनाम् । विपुलाम्बुः समुद्रो वनानि चाम्बरं वासो यस्यास्ताम् । अत्राम्बुशब्देन परिखान्तर्जलमिति तीर्थः ॥ २१ ॥

रा० टी०–लङ्कां स्त्रीत्वेन प्रकल्पयन्नाह–वप्रेति । वप्रः प्राकारोऽन्तरवेदिका च जघने यस्याः विपुलाम्बुः सागरः वनानि चाम्बराणि यस्याः शतघ्न्यः शूलानि च केशा यस्याः अट्टालकाः वतंसाः कर्णभूषणानि यस्याः, विश्वकर्मणा निर्मितां मनसा ब्रह्मेच्छामात्रेण कृतामिव लङ्कां तदवयवीभूतमुत्तरद्वारमासाद्य प्राप्य वानरो हनूमान् चिन्तयामास । श्लोकद्वयमेकान्वयि ॥ २१ ॥ २२ ॥

१ धन्विभिरिति गो. रा. पाठः । २ ग्रहेति गो. पाठः । ३ मालिनीमिति गो. पाठः । ४ विचित्रैरिति गो. पाठः । ५ दिवीति गो. पाठः । ६ कपिश्रेष्ठः पुरमाकाशगं यथेति गो. पाठः । ७ अट्टालकवतंसकामिति गो. रा. पाठः ।

मनसेव कृतां लङ्कां निर्मितां विश्वकर्मणा । द्वारमुत्तरमासाद्य चिन्तयामास वानरः ॥ २२ ॥
कैलासनिलयप्रख्यमालिखन्तमिवाम्बरम् । [3]ध्रियमाणमिवाकाशमुच्छ्रितैर्भवनोत्तमैः ॥ २३ ॥
संपूर्णां राक्षसैर्घोरै [ [4]र्नागैर्भोगवतीमिव । अचिन्त्यां सुकृतां स्पष्टां कुबेराध्युषितां पुरा ॥
दंष्ट्रिभिर्बहुभिः शूरैः शूलपट्टिशपाणिभिः । रक्षितां राक्षसैर्घोरै ] र्गुहामाशीविषैरिव ॥
तस्याश्च महतीं गुप्तिं सागरं च निरीक्ष्य सः । रावणं च रिपुं घोरं चिन्तयामास वानरः ॥ २४ ॥
आगत्यापीह हरयो भविष्यन्ति निरर्थकाः । नहि युद्धेन वै लङ्का शक्या जेतुं सुरैरपि ॥ २५ ॥
इमां त्वविषमां लङ्कां दुर्गां रावणपालिताम् । प्राप्यापि सुमहाबाहुः किं करिष्यति राघवः ॥ २६ ॥
अवकाशो न सांत्वस्तु राक्षसेष्वभिगम्यते । न दानस्य न भेदस्य नैव युद्धस्य दृश्यते ॥ २७ ॥
चतुर्णामेव हि गतिर्वानराणां तरस्विनाम् । वालिपुत्रस्य नीलस्य मम राज्ञश्च धीमतः ॥ २८ ॥
यावज्जानामि वैदेहीं यदि जीवति वा नवा । तत्रैव चिन्तयिष्यामि दृष्ट्वा तां जनकात्मजाम् ॥ २९ ॥

---

गो० टी०–वप्रेति । वप्रेत्यादावपि ददर्श हनुमान् कपिरित्यनुवर्तते । वप्रं प्राकारमूर्तिकः प्राकारः सालः विपुलाम्बुपरिघारूपं नवाम्बरं यस्याः सा शतघ्नी यन्त्रविशेषः वतंसः अवतंसः । भागुरिमतेनाल्लोपः वस्तुतो विश्वकर्मणा निर्मितां विचार्यमाणे केनापि मनसा निर्मितामिव स्थितामित्युत्प्रेक्षा ॥ २१ ॥

२२ ] ति० टी०–विश्वकर्मणा निर्मितां तेनापि मनसा कृतामिव स्थिताम् । द्वारमुत्तरमासाद्य समुद्रदक्षिणतटे प्लवनेन तस्यैव प्रथमं प्राप्तेः । चिन्ता वक्ष्यमाणप्रकारा ॥ २२ ॥

गो० टी०–द्वारमिति । उत्तरं द्वारमासाद्य चिन्तयामास मनसा निरूपयामास वैदेहीदर्शनोपायमिति शेषः ॥२२॥

२३ ] ति० टी०–कैलासो निलयः स्थानं यस्यालकाद्वारस्य तत्प्रख्यमुत्तरद्वारम् । उच्छ्रितैर्भवनोत्तमैरम्बरमालिखन्तमिव । आकाशं ध्रियमाणमिवाकाशधारणं कुर्वदिव ॥ २३ ॥

२४ ] ति० टी०–एतदग्रे 'संपूर्णां राक्षसैर्घोरैर्गुहामाशीविषैरिव' इति पाठः, इतरत्प्रक्षिप्तमिति कतकः राक्षसैः संपूर्णां नगरीं महतीं गुप्तिं रिपुं रावणं च सागरं च निरीक्ष्य चिन्तयामास सादरं चिन्तयामासेत्यर्थः ॥ २४ ॥

रा० टी०–चिन्तामेव भङ्ग्यन्तरेणाह–कैलासेति । कैलासनिलयप्रख्यं कैलासशृङ्गगृहसदृशम् अत एव अम्बरमाकाशमालिखन्तमिव भवनोत्तमैराकाशं ध्रियमाणमिव द्वारविशेषमिति शेषः, आशीविषैर्गुहामिव राक्षसैः संपूर्णां लङ्कां च तस्याः लङ्काया महतीं गुप्तिं च सागरं च घोरं रावणं च निरीक्ष्य वानरो हनुमान् चिन्तयामास । सार्धश्लोकद्वयमेकान्वयि ॥ २३ ॥ २४ ॥

गो० टी०–कैलासेत्यादि । डीयमानां गच्छन्तीम् 'डीङ्' विहायसा गतौ इत्यस्माच्छानच् ॥ २३—३० ॥

२५] ति० टी०–चिन्ताप्रकारः–आगत्यापीति । अपिना आगमनस्यैवाशक्यता सूचिता । एवंच सागरनिरीक्षणेन सूचिता । सुरैरपि जेतुमशक्या यदतः ॥ २५ ॥

रा० टी०–चिन्ताकारमाह–आगत्येति । यतः सुरैरपि युद्धेन जेतुं लङ्का न शक्या अतो हरयः वानराः आगत्यापि निरर्थका भविष्यन्ति ॥ २५ ॥

२६ ] ति० टी०–इमां त्विति । अविषमां न विद्यते विषमा यतस्ताम् । प्राप्यापीत्यपिना पदातित्वादागमनमेवाशक्यमिति सूच्यते । किं करिष्यति राघवः प्रायो राघवस्यापि दुःसाध्येत्यर्थः ॥ २६ ॥

रा० टी०–इमामिति । न विद्यते विषमः राक्षसस्वभावाद् विरुद्धस्वभावो रक्षको यस्याः अत एव दुर्गां रावणपालितां लङ्कां राघवोऽपि प्राप्य किं करिष्यति ॥ २६ ॥

२७] ति० टी०–अवकाशो नेति । उपचितार्थत्वाद्बलदर्पपराक्रमसंपन्नत्वात्सुस्निग्धदृढप्रकृतित्वाच्च न सामादीनामवकाश इति भावः ॥ २७ ॥

रा० टी०–अवकाश इति । राक्षसेषु सामादीनां युद्धस्य च अवकाशावसरो न दृश्यते । एतेन तेषामविरोधित्वोपचितार्थत्वबलदर्पपराक्रमसंपन्नत्वदृढप्रकृतिकत्वानि सूचितानि ॥२७॥

२८ ] ति० टी०–पूर्वम् 'आगत्यापीह हरयः' इत्युक्तम्, इदानीं सर्ववानरागमनासंभव एवेत्याह–चतुर्णामेवेति ॥२८॥

रा० टी०–युद्धस्यावकाशाभावे हेतुं वदन्नाह–चतुर्णामिति । वालिपुत्रादीनां चतुर्णामेव गतिः एतेन युद्धयोग्यसैन्यप्राप्तेरसंभवः सूचितः ॥ २८ ॥

२९ ] ति० टी०–ननु जानकीजीवनज्ञाने तन्मोक्षणाय बलाबलादिचिन्ता, अतस्तद्दर्शनचिन्तैव प्रथमं युक्तेत्याह—यावज्जानामीति । "यावत्पुरा–" इति लट् ज्ञास्ये इत्यर्थः । तत्रैव जानकीदर्शनविषये एव प्रथममिति शेषः । प्रथमं तां दृष्ट्वा पश्चाद्यच्चिन्त्यं तत्तदानीमेव चिन्तयामीति शेषः ॥ २९ ॥

रा० टी०–इदानीं चिन्तनस्य न प्रयोजनमित्याह–याव-

---

१ शिखरप्रख्यामिति गो. पाठः । २ लिखन्तीमिति गो. पाठः । ३ डियमानामिति गो. पाठः । ४ सार्धोऽयं श्लोकोऽधिकः गो. पाठे । ५ सान्त्वस्येति गो. पाठः । ६ महात्मनामिति गो. पाठः ।

ततः स चिन्तयामास मुहूर्तं कपिकुञ्जरः । [1]गिरेः शृङ्गे स्थितस्तस्मिन्रामस्या[2]भ्युदयं ततः ॥ ३० ॥
अनेन रूपेण मया न शक्या रक्षसां पुरी । प्रवेष्टुं राक्षसैर्गुप्ता क्रूरैर्बलसमन्वितैः ॥ ३१ ॥
[3]महौजसो महावीर्या [4]बलवन्तश्च राक्षसाः । वञ्चनीया मया सर्वे जानकीं परिमार्गता ॥ ३२ ॥
लक्ष्यालक्ष्येण रूपेण रात्रौ लङ्कापुरी मया । प्राप्तकालं प्रवेष्टुं मे कृत्यं साधयितुं महत् ॥ ३३ ॥
तां पुरीं तादृशीं दृष्ट्वा दुराधर्षां सुरासुरैः । हनूमांश्चिन्तयामास विनिःश्वस्य मुहुर्मुहुः ॥ ३४ ॥
केनोपायेन पश्येयं मैथिलीं जनकात्मजाम् । अदृष्टो राक्षसेन्द्रेण रावणेन दुरात्मना ॥ ३५ ॥
न विनश्येत्कथं कार्यं रामस्य विदितात्मनः । एकामेकस्तु पश्येयं रहिते जनकात्मजाम् ॥ ३६ ॥
भूताश्चार्था [5]विनश्यन्ति देशकालविरोधिताः । विक्लवं दूतमासाद्य तमः सूर्योदये यथा ॥ ३७ ॥

---

दिति । वैदेही जीवति न वा इदानीं संशय एवेत्यर्थः, अतः यदि जीवति तदा जनकात्मजां दृष्ट्वा अन्वेषणेनावलोक्य वैदेहीं यावत् यदि जानामि जीवितात्वेन निश्चेष्यामि तदा तत्र सीतासमीपे एव चिन्तयिष्यामि । वैदेहीत्यध्याहृतम्, जीवतीत्यावर्तते ॥ २९ ॥

गो० टी०—एवं विचार्य नायमेतद्विचारकाल इत्यनुशेते—यावदिति । यावत् यदा जीवति वा न वेति वैदेहीं जानामि तत्रैव काले तां जनकात्मजां दृष्ट्वा चिन्तयिष्यामि । यद्वा यावच्छब्दोऽवधारणे जानाम्येव जीवति वा नवेति जानाम्येव । यदि जीवति तदा तां जनकात्मजां दृष्ट्वा तत्रैव तत्काल एव चिन्तयिष्यामीत्यन्वयः ॥ ३१ ॥

३० ] ति० टी०—रामस्याभ्युदयं तदभ्युदयरूपसीतान्वेषणोपायम् ॥ ३० ॥

रा० टी०—चिन्तान्तरमाह—तत इति । ततोऽनन्तरं गिरेः शृङ्गे स्थितो रामस्याभ्युदये रतो हनुमान् मुहूर्तं चिन्तयामास ॥ ३० ॥

गो० टी०—तत इति । चिन्तयामास वैदेहीदर्शनोपायमिति शेषः ॥ ३२–३४ ॥

३१–३२ ] ति० टी०—चिन्ताप्रकारः—अनेनेति ॥ ३१ ॥ ३२ ॥

रा० टी०—चिन्ताकारमाह—अनेनेति । अनेन स्वकीयेन रूपेण प्रवेष्टुं रक्षसां पुरी लङ्का न शक्या ॥ ३१ ॥

रा० टी०—महौजस इति । जानकीं परिमार्गता मया राक्षसाः वञ्चनीया स्वस्वरूपगोपनेन प्रलम्भनीयाः ॥ ३२ ॥

३३ ] ति० टी०—लक्ष्यं कार्यप्रवृत्त्यानुमेयम् । तच्च तदलक्ष्यं चेन्द्रियागोचरमित्यर्थः । महत्कृत्यं सीतान्वेषणरूपं साधयितुं तेन रूपेण लङ्कापुरीं प्रवेष्टुं प्राप्तकालमुचितम् ॥ ३३ ॥

रा० टी०—लक्ष्येति । प्राप्तः कालः समयो यस्य तन्महत्कृत्यं साधयितुं लक्ष्यालक्ष्येण कार्यहेतुकानुमित्या लक्ष्येण रूपेण चक्षुषा अलक्ष्येण रूपेण रात्रौ मया प्रवेष्टुं लङ्कापुरी शक्येति शेषः ॥ ३३ ॥

गो० टी०—लक्ष्यालक्ष्येति । लक्ष्यशरीरत्वे राक्षसा गृह्णीयुः अलक्ष्यशरीरत्वे सर्वा लङ्का न विचेतुं शक्या । कृत्यं साधयितुं प्रवेष्टुं कृत्यसाधनाय प्रवेष्टुं प्राप्तकालं युक्तम् ॥ ३९ ॥

३४–३५ ] ति० टी०—तेन रूपेणाप्यन्वेषणं कथं घटेतेति पुनश्चिन्तयति—तां पुरीमिति ॥ ३४ ॥ ३५ ॥

रा० टी०—चिन्तान्तरमाह—तामिति । सुरासुरैः दुराधर्षां तादृशीं पुरीं दृष्ट्वा मुहुर्मुहुः विनिःश्वस्य हनुमान् चिन्तयामास ॥ ३४ ॥

रा० टी०—तदाकारमाह—केनेति । केनोपायेन रावणेन अदृष्टोऽहं मैथिलीं पश्येयम् ॥ ३५ ॥

गो० टी०—तामिति । विनिश्चित्य सीतान्वेषणप्रकारं विनिश्चित्य । मुहुर्मुहुस्तमेव चिन्तयामासेत्यर्थः ॥ ३६ ॥ ३७ ॥

३६ ] ति० टी०—नेति । रहिते एकान्ते कथं पश्येयमित्यन्वयः ॥ ३६ ॥

रा०टी०—उक्तवञ्चनाया आवश्यकत्वमित्यभिप्रेत्याह—नेति । रामस्य कार्यं न विनश्येत् अतः रहिते राक्षसासेवितस्थले विद्यमानाम् एकां जनकात्मजामेकोऽहं कथं पश्येयम् ॥ ३६ ॥

गो० टी०—न विनश्येदिति । एकश्च पश्येयमिति । अत्रापि कथमित्यनुषञ्जनीयम् । रहिते एकान्ते ॥ ३८ ॥

३७ ] ति० टी०—ननु सीतादर्शने किमर्थमेकान्तापेक्षा तत्राह—भूताश्चेति । भूतार्थाः सिद्धप्रायकार्याणि विक्लवं कातरमविमृश्यकारिणं दूतमासाद्य देशकालाभ्यामुचितप्रवृत्तिहीनाभ्यां विरोधिताः सन्तः सूर्योदये तम इव विनश्यन्ति अतोऽसहायेन मयैतादृशे देशे काले कार्ये च गुप्तमेव प्रवर्तितव्यमिति भावः ॥ ३७ ॥

रा० टी०—दूताधीनमेव राजकार्यमतो दूतेन अनवधानतया न भवितव्यमिति बोधयन्नाह—भूता इति । भूताः सिद्धा अर्थाः राजकार्याणि विक्लवम् असमीक्ष्यकारिणं दूतमासाद्य प्राप्य देशकालविरोधिता उचितदेशकालयोर्विरोधं प्राप्ताः सन्तः सूर्योदये तम इव विनश्यन्ति ॥ ३७ ॥

गो० टी०—पण्डितेन मुहुर्मुहुर्विचार्य कार्याणि कर्तव्यानि नतु पण्डितमानिना सकृद्विचार्य कर्तव्यानि । तथा सति दोषः

---

१ गिरिशृङ्गे इति गो.पाठः। २ ऽभ्युदये रत इति गो.रा.पाठः। ३ उग्रौजस इति गो.पा.। ४ मायावन्त इति रा.पाठः। ५ विपद्यन्ते इति गो.पाठः।

अर्थानर्थान्तरे बुद्धिर्निश्चिताऽपि न शोभते । घातयन्तीह कार्याणि दूताः पण्डितमानिनः ॥ ३८ ॥
न विनश्येत्कथं कार्यं वैक्लव्यं न कथं भवेत् । लङ्घनं च समुद्रस्य कथं नु न भवेद्वृथा ॥ ३९ ॥
मयि दृष्टे तु रक्षोभी रामस्य विदितात्मनः । भवेद्व्यर्थमिदं कार्यं रावणानर्थमिच्छतः ॥ ४० ॥
नहि शक्यं क्वचित्स्थातुमविज्ञातेन राक्षसैः । अपि राक्षसरूपेण किमुतान्येन केनचित् ॥ ४१ ॥
वायुरप्यत्र नाज्ञातश्चरेदिति मतिर्मम । न ह्यत्राविदितं किंचिद्रक्षसां भीमकर्मणाम् ॥ ४२ ॥
इहाहं यदि तिष्ठामि स्वेन रूपेण संवृतः । विनाशमुपयास्यामि भर्तुरर्थश्च हास्यति ॥ ४३ ॥
तदहं स्वेन रूपेण रजन्यां ह्रस्वतां गतः । लङ्कामभिपतिष्यामि राघवस्यार्थसिद्धये ॥ ४४ ॥

---

स्यादित्याह—भूताश्चेति । भूताश्चार्थाः सम्यगुपायप्रयोगान्निष्पन्नप्राया अप्यर्थाः विक्लवम् अधीरम् अविमृश्यकारिणम् दूतमासाद्य देशकालविरोधिताः सन्तः सूर्योदये तमो यथा तम इव तद्दूतस्याविमृश्यकारित्वेन सद्य एव विपद्यन्ते नश्यन्तीत्यर्थः ॥ ३९ ॥

३८ ] ति० टी०—न केवलं कार्यहानिः, किं त्वन्यदपि स्यादित्याह—अर्थानर्थान्तरे इति । अर्थानर्थान्तरे कार्याकार्यविषये निश्चितापि स्वामिना सचिवैः सह निश्चितापि बुद्धिर्न शोभते । विक्लवं दूतमासाद्येति शेषः । तदेव द्रढयति—घातयन्तीति । एवं सति लोको मत्स्वामिनं बुद्धिशून्यमपि जानीयादित्याशयः ॥ ३८ ॥

रा० टी०—कुत्सितदूतलाभे राजमन्त्रा अपि निरर्थकाः भवन्तीति बोधयन्नाह—अर्थेति । पण्डितमानिनः पण्डितंमन्याः अविवेकिन इत्यर्थः, दूताः कार्याणि घातयन्ति अतः इह अविवेकिदूतप्राप्तौ अर्थानर्थान्तरे कर्तव्याकर्तव्यविषये निश्चितापि बुद्धिः न शोभते ॥ ३८ ॥

गो० टी०—न केवलं कार्यहानिः किंतु स्वाम्यादीनां बुद्धिशून्यतापि स्यादित्याह—अर्थेति । अत्रापि विक्लवं दूतमासाद्येत्यनुवर्तते । अर्थानर्थान्तरे अर्थानर्थयोः प्रयोजनसाधनयोः कार्याकार्ययोः । अन्तरे विषये निश्चिता राज्ञा सचिवैश्च निर्णीता बुद्धिः विक्लवं दूतमासाद्य न शोभते अनर्थकारिणी भवतीत्यर्थः । इदमेव समर्थयते—घातयन्तीति ॥ ४० ॥

३९ ] ति० टी०—यदेवम्, अतः कार्यं राजकार्यं न विनश्येत् । वैक्लव्यं बुद्धिहीनता तत्प्रसिद्धिः स्वस्य स्वस्वामिनश्च ॥ ३९ ॥

रा० टी०—नेति । कार्यं सीतालाभः कथं न विनश्येत् अत एव वैक्लव्यं दूतदोषः कथं न भवेत् मयि प्राप्नुयात् अत एव समुद्रस्य लङ्घनं वृथा कथं न भवेत् ॥ ३९ ॥

गो० टी०—प्रागुक्तदोषाः स्वस्मिन्कथं न स्युरिति चिन्तयति—न विनश्येदिति । कार्यं रामकार्यं कथं केनोपायेन न विनश्येत् । किमद्यापराह्ण एव लङ्का प्रवेष्टव्या उत रात्रौ । किमनेनैव महता रूपेण प्रवेष्टव्या उत ह्रस्वेन रूपेणेत्यर्थः । वैक्लव्यं ममापाण्डित्यं कथं न भवेत् ॥ ४१ ॥

४० ] ति० टी०—रावणानर्थं रावणवधम् ॥ ४० ॥

रा० टी०—वैयर्थ्यसंभावनायां हेतुमाह—मयीति । रक्षोभिर्मयि दृष्टे सति रावणानर्थं रावणविघातमिच्छतो रामस्येदं सीतालाभरूपकार्यं व्यर्थं भवेत् । एतेन रामदूतं मां ज्ञात्वा सीतामतिगुप्तां करिष्यतीति सूचितम् ॥ ४० ॥

गो० टी०—अपराह्णप्रवेशदोषमाह—मयीति ॥ ४२ ॥

४१ ] ति० टी०—अदर्शनेन संचारश्च सर्वथाऽशक्य इत्याह—नहीति ॥ ४१ ॥

रा० टी०—स्वस्यालक्ष्यत्वे अनुपपत्तिमाह—नहीति । राक्षसैः अविज्ञातेन जनेन राक्षसरूपेण अन्येन केनचिद्रूपेण वा क्वचित्स्थातुं नैव शक्यम् । एतेन लङ्कायाः राक्षसव्याप्यत्वं राक्षसानां चातिनिपुणत्वं बोधितम् ॥ ४१ ॥

गो० टी०—महता रूपेण प्रवेशं निराचष्टे—नहीति । स्वेन रूपेण स्वाभाविकमहता रूपेण ॥ ४३–४६ ॥

४२ ] ति० टी०—रक्षसामविदितं रक्षोभिरविदितं न किंचिदस्ति कृत्रिमरूपमिति शेषः । अतः प्राकृतसहजकपिरूपेणैव स्थातव्यमिति भावः ॥ ४२ ॥

रा० टी०—वायुरिति । हि यतः अत्र लङ्कायां रक्षसाम् अविदितं किंचिन्न अतः नाज्ञातः राक्षसैरविदितः वायुरपि अत्र न चरेत् चरितुं शक्नुयात् इति मम मतिर्निश्चयः ॥ ४२ ॥

४३–४४ ] ति० टी०—किं च यावदस्तमयं स्वगोपनमेवोचितमित्याह—इहेति । स्वेन रूपेण संवृतः सन्युक्तः सन्निहाह्नि देशे च यदि तिष्ठामि तदा स्पष्टं परैरवगम्यमानत्वाद्विनाशमुपयास्यामि भर्तुरर्थहानिश्च । तस्माद्रासायमत्रैव क्वचिद्गिरिगुहायां निःशङ्कं स्थित्वा रजन्यामपि स्वेन रूपेणैव, परंतु ह्रस्वतां गतो भूत्वा लङ्कामभिपतिष्यामीत्यन्वयः ॥ ४३ ॥ ४४ ॥

रा० टी०—इहेति । स्वेन रूपेण संवृतः विशिष्टः सन् यदि तिष्ठामि तर्हि विनाशं क्षतादिकमुपयास्यामि अत एव भर्तुरर्थः हास्यति भर्तारं त्यक्ष्यति विनङ्क्ष्यतीत्यर्थः ॥ ४३ ॥

रा० टी०—तदिति । तदुक्तहेतोः राघवस्यार्थसिद्धये स्वेन रूपेण ह्रस्वतां लघुरूपं गतः प्राप्तोऽहं लङ्कामभिपतिष्यामि प्रवेक्ष्यामि । एतेन वायुतोऽपि स्वसामर्थ्याधिक्यं व्यञ्जितम् ॥ ४४ ॥

---

१ हीति गो. पाठः । २ न ह्यस्तीति गो. पाठः । ३ राक्षसानां बलीयसामिति गो. पाठः । ४ हीयते इति गो. पाठः ।

रावणस्य पुरीं रात्रौ प्रविश्य सुदुरासदाम् । प्रविश्य भवनं सर्वं द्रक्ष्यामि जनकात्मजाम् ॥ ४५ ॥
इति [२]निश्चित्य हनुमान्सूर्यस्यास्तमयं कपिः । आचकाङ्क्षे तदा वीरो वैदेह्या दर्शनोत्सुकः ॥ ४६ ॥
सूर्ये चास्तं गते रात्रौ देहं संक्षिप्य मारुतिः । वृषदंशकमात्रोऽथ बभूवाद्भुतदर्शनः ॥ ४७ ॥
प्रदोषकाले हनुमांस्तूर्णमुत्पत्य वीर्यवान् । प्रविवेश पुरीं रम्यां प्रविभक्तमहापथाम् ॥ ४८ ॥
प्रासादमालाविततां स्तम्भैः काञ्चनसंनिभैः । शातकुम्भनिभैर्जालैर्गन्धर्वनगरोपमाम् ॥ ४९ ॥
सप्तभौमाष्टभौमैश्च स ददर्श महापुरीम् । स्थलैः स्फटिकसंकीर्णैः कार्तस्वरविभूषितैः ॥
[ [६]वैडूर्यमणिचित्रैश्च मुक्ताजालविभूषितैः । ] तैस्तैः शुशुभिरे तानि भवनान्यत्र रक्षसाम् ॥ ५० ॥
काञ्चनानि विचित्राणि तोरणानि च रक्षसाम् । लङ्कामुद्योतयामासुः सर्वतः समलंकृताम् ॥ ५१ ॥
अचिन्त्यामद्भुताकारां दृष्ट्वा लङ्कां महाकपिः । आसीद्विषण्णो हृष्टश्च वैदेह्या दर्शनोत्सुकः ॥ ५२ ॥

---

गो० टी०—परिशेषाद्रात्रौ ह्रस्वरूपेणैव प्रवेष्टव्यमित्याह—तदहमिति ॥ ४६–४८ ॥

४५–४६ ] ति० टी०—प्रथमतः पुरीं प्रविश्य ततः सर्वं भवनं रावणगृहं प्रविश्य ॥ ४५ ॥ ४६ ॥

रा० टी०—रावणस्येति । रात्रौ रावणस्य पुरीं प्रविश्य सर्वं भवनं च प्रविश्य जनकात्मजां द्रक्ष्यामि ॥ ४५ ॥

रा० टी०—इतीति । वैदेह्याः दर्शनोत्सुकोऽयं हनुमान् इति निश्चित्य सूर्यस्यास्तमस्तत्वम् आचकाङ्क्षे ॥ ४६ ॥

४७ ] ति० टी०—वृषान्मूषकान्दशतीति वृषदंशको मार्जारस्तन्मात्रस्तत्प्रमाणः ॥ ४७ ॥

रा० टी०—सूर्य इति । अद्भुतानि बह्वाश्चर्याणि पश्यति अद्भुतं दर्शनं यस्यंति वा स मारुतिः स्वशरीरं संक्षिप्य तिरोधाय वृषदंशकमात्रः वृषाणां मूषकाणां दंशको मार्जारः तन्मात्रः तत्परिमाणो बभूव 'वृषो गव्याखुधर्मयोः' इति हैमः ॥ ४७ ॥

गो० टी०—सूर्य इति । स्वेन रूपेण वृषदंशकमात्रः बिडालप्रमाणः ॥ ४५ ॥

४८ ] ति० टी०—प्रविवेश पुरीमिति प्रवेशपूर्वकान्वेषणसंक्षेपोक्तिः ॥ ४८ ॥

रा० टी०—प्रदोषेति । प्रदोषकाले तूर्णमुत्पत्य उत्प्लुत्य प्रविभक्ता महापथा राजमार्गाः यस्यां तां पुरीं प्रविवेश ॥ ४८ ॥

गो० टी०—प्रदोषकाल इति । प्रविवेश प्रवेष्टुमुपक्रान्तः चतुर्थे सर्गे प्रवेशस्य वक्ष्यमाणत्वात् । लङ्कादर्शनं तु त्रिकूटदर्शनस्थितया ॥ ६० ॥

४९ ] ति० टी०—तृतीयान्तेषु उपलक्षितामिति शेषः ॥ ४९ ॥

५० ] ति० टी०—सप्तेति । भूमीनां समूहैः सप्तसंख्यावयवयुक्तैरुपलक्षिताम् । स्फटिकसंकीर्णैः स्फटिकरत्नखचितैः स्थलैरित्यर्थः । स्थलं भूः । ' तलैः ' इति पाठेऽपि स एवार्थः । तैस्तैः प्रासादैरिति शेषः ॥ ५० ॥

रा० टी०—पुरीमेव वर्णयन्नाह—प्रासादेति । प्रासादमालाभिः विततां विस्तृतां काञ्चनसंनिभैः स्तम्भैः शातकुम्भनिभैर्जालैश्च उपलक्षितां गन्धर्वनगरोपमां गन्धर्वनगरसदृशीं यैर्यैः रक्षसां तानि भवनानि शुशुभिरे तैस्तैः सप्तभौमाष्टभौमैः सप्तभूमिकाष्टभूमिकैः स्फटिकसंकीर्णैः स्फटिकमणिरचितैः कार्तस्वरविभूषितैः सुवर्णखचितैः स्थलैरुपलक्षितां पुरीं ददर्श हनुमान् इति शेषः । सार्धश्लोकद्वयमेकान्वयि ॥ ४९ ॥ ५० ॥

गो० टी०—प्रासादेत्यादि । काञ्चनराजतैः स्तम्भैः शातकुम्भमयैर्जालैश्च उपलक्षिताम् । गन्धर्वनगरोपमामिति गन्धर्वनगरं नाम नानारत्नमयगोपुरप्रासादादियुक्तनगरादिवद्भासमानमभ्रचित्रम् तद्वदाश्चर्यावहामित्यर्थः । यथोक्तम् ' अनेन रत्नाकृति खे विराजते पुरं पताकाध्वजतोरणान्वितम् । यदा तदा हस्तिमनुष्यवाजिनां पिबत्यसृग्भूरि रणे वसुन्धरा' इति । सप्तभूमाष्टभूमैश्चेति । भूमिशब्देन आसनशयनादियोग्यं तलमुच्यते । सप्त भूमयो येषां ते सप्तभूमाः । "कृष्णोदक्पाण्डुसंख्यापूर्वाया भूमेरजिष्यते' इत्यच् समासान्तः । एवमष्टभूमाः । सप्तभूमादिशब्देन तादृशाः प्रासादविशेषा उच्यन्ते । यद्वा प्रासादैरिति शेषः । तैरुपलक्षिताम् ॥ ५१–५४ ॥

५१ ] ति० टी०—रक्षसां तोरणानि रक्षोगृहद्वारस्थतोरणानि ॥ ६१ ॥

रा० टी०—काञ्चनानीति । रक्षसां संबन्धीनि काञ्चनानि विचित्राणि तोरणानि सर्वतः समलंकृतां लङ्कामुद्योतयामासुः ५१

५२ ] ति० टी०—अचिन्त्यामशक्यान्वेषणचिन्ताम् । अयं विषादहेतुः । अद्भुताकारामिति हर्षहेतुः ॥ ५२ ॥

रा०टी०—अचिन्त्यामिति । अद्भुतः आकारो यस्यास्ताम् अत एव अचिन्त्यामद्भुतनिर्माणादिना चिन्तयितुमशक्यां लङ्कां वैदेह्या दर्शनोत्सुको हनुमान् विषण्णः वृत्तान्तालाभादुदासीनचित्तः हृष्टः सुशकुनादिना हर्षयुक्तश्चासीत् ॥ ५२ ॥

गो० टी०—अचिन्त्येति । विषण्णः हृष्टश्चेति । अचि-

---

१ विचिन्वन्निति गो. पाठः । २ संचिन्त्येति गो. पाठः । ३ सन्निति गो. पाठः । ४ उत्प्लुत्येति गो. पाठः । ५ स्विति गो. पाठः । ६ राजतैरिति गो. पाठः । ७ मयैरिति गो. पाठः । ८ तलैरिति गो. पाठः । ९ अर्धमेतदधिकं गो. पाठे ।

सपाण्डुराविद्धविमानमालिनीं महार्हजाम्बूनदजालतोरणाम् ।
यशस्विनीं रावणबाहुपालितां क्षपाचरैर्भीमबलैः सुपालिताम् ॥ ५३ ॥
चन्द्रोऽपि साचिव्यमिवास्य कुर्वंस्तारागणैर्मध्यगतो विराजन् ।
जोत्स्नावितानेन वितत्य लोकानुत्तिष्ठतेऽनेकसहस्ररश्मिः ॥ ५४ ॥
शङ्खप्रभं क्षीरमृणालवर्णमुद्गच्छमानं व्यवभासमानम् ।
ददर्श चन्द्रं स कपिप्रवीरः पोप्लूयमानं सरसीव हंसम् ॥ ५५ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये सुन्दरकाण्डे द्वितीयः सर्गः ॥ २ ॥

## तृतीयः सर्गः ।

निशि लङ्कां प्रविशन्तं हनुमन्तं लङ्काभिमानिनी महाराक्षसी प्रत्यक्षीभूय पाणितलेनाभिहत्य प्रत्यषेधत् । अथो हनुमता नारीति वाममुष्टिना मन्दं ताडिताऽपि विह्वला कपिना त्वयि पराजितायां लङ्काविनाशसमयः संप्राप्त इति विद्धीति ब्रह्मणो वचो निवेदयन्ती पुरःप्रवेशमन्वजानात् ।

स लम्बशिखरे लम्बे लम्बतोयदसंनिभे । सत्त्वमास्थाय मेधावी हनुमान्मारुतात्मजः ॥ १ ॥
निशि लङ्कां महासत्त्वो विवेश कपिकुञ्जरः । रम्यकाननतोयाढ्यां पुरीं रावणपालिताम् ॥ २ ॥

---

न्त्या दुष्प्रवेशेति च विषण्णः यतोद्भुताकारा अतो विस्मयनीयतया हृष्टः ॥ ५२ ॥

५३ ] ति० टी०—पाण्डुरा सुधाधवला आविद्धा परस्परसंविद्धा विमानानां सप्तभूमिकप्रासादानां मालाऽस्यामस्ति तां प्रविवेशेति शेषः ॥ ५३ ॥

रा० टी०—स इति । पाण्डुराविद्धमालिनीं पाण्डुराणां पाण्डुरवर्णानाम् आविद्धानां परस्परं संमिलितानां विमानानां सप्तभूमिकप्रासादानां माला समूहोऽस्ति अस्यां तां महार्हजाम्बूनदाः तन्मयाः जालतोरणाः यस्यां, यशस्विनीं स्वकीययशोवर्धिकां क्षपाचरैः राक्षसैः सुपालितां लङ्कां प्रविवेशेति शेषः ॥ ५३ ॥

गो० टी०—स इति । पूर्वश्लोकेनायमेकान्वयः । सुधाधवलनिम्नोन्नतविमानाकारभवनमालिनीमित्यर्थः ॥ ५३ ॥

५४ ] ति० टी०—मध्यगतः खमध्यगतः । अनेकसहस्रेत्यनेन पूर्णत्वम् । अनेकेत्यस्यैव सहस्रेत्यनेन विवरणम् । उत्तिष्ठते आर्षस्तङ् । ज्योत्स्नावितानेन लोकान्वितत्याचार्य सम्यगवलोकनसाधनतयाऽस्य हनुमतः साचिव्यं साहाय्यं कुर्वन्निव । ननु खमध्यगतस्य प्रदोषे उदयोऽष्टम्यां न तदा पूर्णत्वम्, पूर्णस्य तु न खमध्यगतस्योदय इति चेन्न । शुक्लैकादश्यां खमध्यसमीपगतत्वेन मध्यगतत्वोपचारात्पूर्णत्वं च पूर्णकल्पत्वेन व्यवहृतम् । यद्वानेकन्यूनाः सहस्रं रश्मयो यस्येति मध्यमपदलोपितत्पुरुषगर्भो बहुव्रीहिः । अत एव रात्रिशेषे हनुमत्यशोकवनिकास्थे सीतासविधे रावणस्यागमनकाले दीपिकावर्णनं कृतम् । तेन हि तदा चन्द्रास्तत्वानुमानम् । सा चेयं मार्गशीर्षस्य फाल्गुने लङ्कां प्रविष्टायाः सीतायाः 'वर्तते दशमो मासो द्वौ तु शेषौ प्लवंगम' इति हनुमन्तं प्रति वचनात् । हरणदिन एव च सीताया लङ्काप्रवेशनं रामभयादिति स्पष्टमेव ॥ ५४ ॥

५५ ] ति० टी०—पोप्लूयमानं भृशं प्लवमानम् ॥ ५५ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये सुन्दरकाण्डे द्वितीयः सर्गः ॥ २ ॥

रा० टी०—चन्द्र इति । तारागणैः सह अनेकसहस्ररश्मिश्चन्द्रोऽपि अस्य हनुमतः साचिव्यं साहाय्यं कुर्वन्निव ज्योत्स्नावितानेन चन्द्रिकासमूहेन मध्यगतः लङ्कामध्ये प्राप्तान् लोकान् राक्षसान् वितत्य व्याप्य विराजन् प्रकाशयन् सन् उत्तिष्ठते ॥ ५४ ॥

रा० टी०—शङ्खेति । शङ्खप्रभमत एव क्षीरमृणालवर्णं व्यवभासमानं प्रकाशयन्तमुद्गच्छमानम् उदयमानं चन्द्रं सरसि पोप्लूयमानं हंसमिव ददर्श ॥ ५५ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ सुन्दरकाण्डे द्वितीयः सर्गः ॥ २ ॥

गो० टी०—इदानीं चन्द्रोदयकाल इत्याह—चन्द्रोऽपीति । मध्यगतः सन्निधानात्तारागणमध्यगतः । तारागणैरिति सहयोगे तृतीया । ज्योत्स्नावितानेन लोकं वितत्य व्याप्य उत्तिष्ठते आविर्भवति स्म । "उदोऽनूर्ध्वकर्मणि" इत्यात्मनेपदम् ॥ ५४ ॥ ५५ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने द्वितीयः सर्गः ॥ २ ॥

१–२ ] ति० टी०—लम्बशिखरे उन्नतशिखरे लम्बे ल-

---

१ उद्विद्धेति गो. पाठः । २ समाकुलामिति गो. पाठः । ३ लोकानुत्तिष्ठते नैकेति गो. पाठः । ४ हंसगतीति गो. पाठः ।

शारदाम्बुधरप्रख्यैर्भवनैरुपशोभिताम् । सागरोपमनिर्घोषां सागरानिलसेविताम् ॥ ३ ॥
सुपुष्टबलसंपुष्टां यथैव विटपावतीम् । चारुतोरणनिर्यूहां पाण्डुरद्वारतोरणाम् ॥ ४ ॥
भुजगाचरितां गुप्तां शुभां भोगवतीमिव । तां सविद्युद्घनाकीर्णां ज्योतिर्गणनिषेविताम् ॥ ५ ॥
चण्डमारुतनिर्ह्रादां यथा चाप्यमरावतीम् । शातकुम्भेन महता प्राकारेणाभिसंवृताम् ॥ ६ ॥
किङ्किणीजालघोषाभिः पताकाभिरलंकृताम् । आसाद्य सहसा हृष्टः प्राकारमभिपेदिवान् ॥ ७ ॥
विस्मयाविष्टहृदयः पुरीमालोक्य सर्वतः । जाम्बूनदमयैर्द्वारैर्वैदूर्यकृतवेदिकैः ॥ ८ ॥
मणिस्फटिकमुक्ताभिर्मणिकुट्टिमभूषितैः । तप्तहाटकनिर्यूहै राजतामलपाण्डुरैः ॥ ९ ॥
वैदूर्यकृतसोपानैः स्फाटिकान्तरपांसुभिः । चारुसंजवनोपेतैः खमिवोत्पतितैः शुभैः ॥ १० ॥

---

म्बाख्यपर्वते, अत एव लम्बतोयदसंनिभे । सत्त्वं सत्त्वगुणमपेक्षितबलं च । रजस्तमःप्रधानरक्षोजयाय सत्त्वगुणाश्रयणम् । मेधावी कालोचितविचारज्ञः ॥ १ ॥ २ ॥

रा० टी०—हनुमत्कर्तृकलङ्काप्रवेशनमेव वर्णयति—स इत्यादिभिः । लम्बतोयदसंनिभे महामेघसदृशे लम्बे विस्तीर्णे लम्बशिखरे लम्बाभिधगिरिशिखरसमीपे सत्त्वं प्रवेशनयोग्यशनैर्गतिमास्थाय निश्चित्य महासत्त्वोऽतिबलवान् हनुमान् निशि लङ्कां प्रविवेश। सार्धश्लोक एकान्वयी। लङ्कां वर्णयन्नाह—रम्येत्यादिभिः । रम्यकाननतोयाभ्यामाढ्यां पूर्णाम् ॥ १ ॥ २ ॥

गो० टी०—स लम्बेत्यादि । लम्बे लम्बाख्ये । लम्बशिखरे लम्बगिरिशिखरे इति चाहुः । यद्वा लम्बे लम्बमान इव स्थिते लम्बशिखरे त्रिकूटशिखरे सत्त्वं व्यवसायम् धैर्यमिति यावत् । विवेश प्राप ॥ १ ॥ २ ॥

३ ] ति० टी०—सागरोपमनिर्घोषां सागरशब्दसदृशरक्षःशब्दवतीम् ॥ ३ ॥

रा० टी०—शारदाः शरत्कालप्रभवाः ये अम्बुधरा मेघाः तत्प्रख्यैः श्वेतत्वेन तत्सदृशैः राजतैरित्यर्थः, भवनैरुपशोभितां सागरोपमः निर्घोषः राक्षसस्वनो यस्याम् ॥ ३ ॥

गो० टी०—शारदेत्यादि । विटपावतीम् अलकाम् । निर्यूहो मत्तवारणः । पाण्डुरद्वारतोरणां पाण्डुरे द्वारतोरणे यस्यास्ताम् । अभूदिति शेषः ॥ ३–८ ॥

४ ] ति० टी०—विटपावत्यलकापुरी । निर्यूहो मत्तवारणः । चारुस्तोरणस्थनिर्यूहो यस्यास्ताम् । पाण्डुरे सुधाधवले द्वारे तोरणं यस्यां ताम् ॥ ४ ॥

रा० टी०—सुपुष्टानि यानि बलानि सैन्यानि तैः संपुष्टां दृढां विटपावतीं यथा अलकापुरीसदृशीं चारुतोरणेषु बहिर्द्वारेषु निर्यूहा मत्तगजा यस्यां पाण्डुराः सुधासंस्कारादिना श्वेताः द्वारतोरणाः अन्तर्द्वारबहिर्द्वारे यस्यां ताम् ॥ ४ ॥

५ ] ति० टी०—भुजगैराचरितां कृतसंचाराम् । भोगवतीं सर्पनगरीम् । सविद्युद्भिर्घनैर्व्याप्ताम् । ज्योतिषां ग्रहर्क्षादीनां गणैर्निषेवितामित्युत्तरान्वयि ॥ ५ ॥

रा० टी०—भुजगानां नागानामाचरितं रक्षणार्थं संचारो यस्यां तामत एव गुप्तां नागैरभिरक्षितां भोगवतीं सर्पपुरीमिव सविद्युद्घनैः राक्षसमायानिर्मितविद्युत्सहितमेघैः आकीर्णां व्याप्तां ज्योतिर्गणैर्निषेविताम् ॥ ५ ॥

६ ] ति० टी०—चण्डमारुतानां परिवहादीनां शब्दो यस्यां तादृशीममरावतीमिव स्थिताम् । अत्रामराः सन्त्यस्यामित्यमरावती यौः असंज्ञायामपि 'मतौ बह्वचः' इत्यार्षो दीर्घः न त्विहेन्द्रपुर्यमरावती उक्तलक्षणाभावात् लङ्काया उक्तपुसादृश्यं च सालंकारराक्षसवत्त्वाद्बलवद्योधबाहुल्याचेति कतकः शातकुम्भेन स्वर्णमयेन ॥ ६ ॥

रा० टी०—चण्डमारुतस्य निर्ह्रादो यस्माम् अमरावतीं यथा संपत्त्या इन्द्रपुरीसदृशीं शातकुम्भेन सुवर्णप्राकारेण अभिसंवृताम् ॥ ६ ॥

७ ] ति० टी०—किङ्किणीजालैः क्षुद्रघण्टिकासमूहैः शब्दो यासां ताभिः ॥ ७ ॥

रा० टी०—पताकाभिरलंकृतां रावणपालितां पुरीमासाद्य प्राप्य हृष्टो हनुमान् प्राकारमभिपेदिवान् प्राप्तवान्। सार्धपञ्चकमेकान्वयि ॥ ७ ॥

८ ] ति० टी०—वैदूर्यमणिभिः कृता वेदिकाश्चत्वरा येषु तादृशैर्द्वारैः ॥ ८ ॥

९ ] ति० टी०—मणिस्फटिकमुक्ताभिश्च कृतवेदिकैर्द्वारैः सर्वत उपलक्षिताम् कुट्टिमो निबद्धा भूः निर्यूहो मत्तवारणः राजतामलपाण्डुरै रजतमयामलपाण्डुरोपरिप्रदेशैः । सर्वत्र द्वारं विशेष्यम् ॥ ९ ॥

१० ] ति० टी०—वैदूर्यमणिभिः कृतानि सोपानानि येषु तैः । स्फाटिका स्फटिकरचिता अन्तर्मध्यप्रदेशा अपांसवश्च येषु तैर्द्वारैः । चारुसंजवनैः सभाभिरुपेतैर्द्वारैः खमुत्पतितैरिव शुभैर्गृहैरुपलक्षितैर्द्वारैः ॥ १० ॥

रा० टी०—विस्मयेति । वैदूर्यैस्तदभिधमणिभिः कृता वेदिका येषु तैर्मणिकुट्टिमैर्मणिमयबद्धभूमिभिर्भूषितैर्जाम्बूनदमयैः मणिस्फटिकमुक्ताभिः शोभितैरिति शेषः, तप्तहाटक-

---

१ पुष्टामिति गो. पाठः । २ मार्गेति गो. पाठः । ३ मन्दमारुतसंचारां यथेन्द्रस्येति गो. पाठः । ४ वज्रेति गो. पाठः ।

क्रौञ्चबर्हिणसंघुष्टै राजहंसनिषेवितैः । तूर्याभरणनिर्घोषैः सर्वतः परिनादिताम् ॥ ११ ॥
वस्वोकसारप्रतिमां[1] समीक्ष्य नगरीं ततः । खमिवोत्पतितां लङ्कां जहर्ष हनुमान्कपिः ॥ १२ ॥
तां समीक्ष्य पुरीं लङ्कां[2] राक्षसाधिपतेः शुभाम् । अनुत्तमामृद्धिमतीं[3] चिन्तयामास वीर्यवान् ॥ १३ ॥
नेयमन्येन नगरी शक्या धर्षयितुं बलात् । रक्षिता रावणबलैरुद्यतायुधपाणिभिः ॥ १४ ॥
कुमुदाङ्गदयोर्वापि सुषेणस्य महाकपेः । प्रसिद्धेयं भवेद्भूमिर्मैन्दद्विविदयोरपि ॥ १५ ॥
विवस्वतस्तनूजस्य हरेश्च कुशपर्वणः । ऋक्षस्य केतुमालस्य[5] मम चैव गतिर्भवेत् ॥ १६ ॥
समीक्ष्य च महाबाहो राघवस्य पराक्रमम् । लक्ष्मणस्य च विक्रान्तमभवत्प्रीतिमान्कपिः ॥ १७ ॥
तां रत्नवसनोपेतां गोष्ठागारावतंसिकाम् । यन्त्रागारस्तनीमृद्धां प्रमदामिव भूषिताम् ॥ १८ ॥
तां नष्टतिमिरां दीपैर्भास्वरैश्च महाग्रहैः । नगरीं राक्षसेन्द्रस्य स ददर्श महाकपिः ॥ १९ ॥

---

निर्यूहैः प्रतप्तसुवर्णमयमत्तगजविशिष्टैः राजता रजतमया अमलपाण्डुरा उपरिप्रदेशा येषु ते वैदूर्यकृतानि सोपानानि येषु स्फटिकेन निर्मितमन्तर्येषु अत एव न पांशुधूली येषु तान्येव तानीति कर्मधारयः तैश्चारुसंजवनैः रमणीयसभाभिरुपेतैः युक्तैः क्रौञ्चबर्हिणानां संघुष्टानि येषु तै राजहंसनिषेवितैः खमुत्पतितैरिव शुभैर्द्वारैरुपलक्षितां पुरीमालोक्य विस्मयाविष्टहृदय आसीदिति शेषः ।सार्धश्लोकत्रयमेकान्वयि ॥८–१०॥

गो० टी०–पुनर्हर्षहेतूनाह—जाम्बूनदमयैरित्यादिना । जाम्बूनदमयैर्द्वारैरित्यादौ सहयोगे तृतीया । वज्रस्फटिकमुक्ताभिरित्यत्रापि कृतवेदिकैरिति संबध्यते । राजतामलपाण्डुरैः अवयवैः, स्फाटिकान्तरपांसुभिः स्फटिकमयाङ्गणपांसुभिः । सभवनं चतुश्शालम् । वस्वोकसारा अलका । यद्वा वस्वोकसारा पूर्वदिगवस्थिता शक्रपुरी 'वस्वोकसारा शक्रस्य पूर्वस्यां दिशि वै पुरी' इति पुराणवचनात् ॥ ९–१४ ॥

११ ] ति० टी०–संघुष्टैः कृतघोषैर्द्वारैः ॥ ११ ॥

१२–१४ ] ति० टी०–वस्वोकसारालका तत्सदृशीम् । ह्रस्व आर्षः । जाम्बूनदमयद्वारत्वादिना सादृश्यम् । खमिवोत्पतिताम् । गिरिमूर्ध्नि प्रतिष्ठितत्वात् ॥ १२–१४ ॥

रा० टी०–तूर्येति । तूर्याणामाभरणानां नूपुरादीनां च निर्घोषैः सर्वतः परिनादिताम् अत एव वस्वोकसारप्रतिमाम् अलकासदृशीं खमुत्पतितामिव लङ्कां समीक्ष्य हनुमान् जहर्ष । सार्धश्लोक एकान्वयी ॥ ११ ॥ १२ ॥

रा० टी०–तामिति । अनुत्तमां सर्वश्रेष्ठाम् ऋद्धिमतीं सकलर्द्धिविशिष्टां राक्षसाधिपतेः रावणस्य पुरीं लङ्कां समीक्ष्य वीर्यवान् हनूमान् चिन्तयामास ॥ १३ ॥

रा० टी०–चिन्ताकारमाह–नेति । उद्यतायुधाः पाणयो येषां तैः रावणबलैः रक्षिता इयं लङ्का अन्येन रामभिन्नेन जनेन बलात् पराक्रमात् धर्षयितुं न शक्या ॥ १४ ॥

१५ ] ति० टी०–अनेन धर्षयितुमशक्या किम्, सर्वथा नेत्याह–कुमुदेत्यादि । प्रसिद्धा प्रकर्षेण सिद्धगतिका ॥१५॥

रा० टी०–तत्र हेतुमाह–कुमुदेति । प्रसिद्धा इयं लङ्का, कुमुदादीनामेव गतिः प्राप्या भवेत् अन्येषां न गतिरित्यर्थः, तेन नगरीपराभवस्य अशक्यत्वं सूचितम् । श्लोकद्वयमेकान्वयि ॥ १५ ॥ १६ ॥

गो० टी०–प्रसिद्धेयमिति । इयं लङ्का विदिता भवेत् ॥ १५ ॥

१६ ] ति० टी०–कुशपर्वण इति कुशपर्वसदृशरोमवत इत्यर्थकमृक्षस्य विशेषणम् । अतिदीर्घकठोरलोमावृतत्वात्कपिमुख्यस्येति विशेषणं च । तस्यैव मम चैव गतिः । अस्यामिति शेषः ॥ १६ ॥

गो० टी०–विवस्वत इति । गतिस्तु सुग्रीवस्य कुशपर्वणः केतुमालस्य मम चैव भवेत् । पूर्वं नीलादीनामेव गतिरुक्ता । अत्र त्वन्येषामित्युक्तिश्चिन्ताप्रकारविशेषः ॥ १६ ॥ १७ ॥

१७ ] ति० टी०–रामस्य पराक्रमं लक्ष्मणस्य विक्रान्तं शौर्यं च समीक्ष्येदृश्यपि तदीयबाणैरीपत्करध्वंसेति विचार्य प्रीतिमानभूदविषण्णोऽभूत् ॥ १७ ॥

रा० टी०–चिन्तान्तरमाह–समीक्ष्येति । राघवस्य रामस्य लक्ष्मणस्य च पराक्रमं विक्रान्तं वेगं च समीक्ष्य संचिन्त्य कपिः प्रीतिमान् अभवत् । एतेन तत्पराक्रमविक्रान्तयोः सर्वोत्कर्षत्वं ध्वनितम् ॥ १७ ॥

१८ ] ति० टी०–रत्नवसनोपेतां रत्नप्राकारवाससं च । गोष्ठान्यागाराणि चावतंसो यस्यास्ताम् । गोष्ठं गोशाला । इदं वाजिशालादेरप्युपलक्षणम् । यन्त्राणि प्राकारोपरि स्थापितानि क्षेपण्यादीनि तद्गृहस्तनीम् ॥ १८ ॥

१९ ] ति० टी०–तां प्रसिद्धां लङ्काम् । भास्वरैश्च महाग्रहैः चाचन्द्रकिरणैः ॥ १९ ॥

रा० टी०–तामिति । रत्नवसनोपेतां रत्नं रत्नाकरः रत्नमयप्राकारादिश्च तदेव वसनं तेन उपेतां युक्तां गोष्ठा अगाराणि अवतंसः कर्णभूषणं यस्याः तां यन्त्रागाराणि प्राकारोपरि स्थापितनिःक्षेपणीप्रभृतीनां गृहाण्येव स्तनानि यस्याः तां दीपैः प्रकाशकैः दीपचन्द्रादिभिः भास्वरैः प्रकाशमानैर्महागृहैर्मणिभवनैश्च नष्टतिमिरां ध्वस्तान्धकारां तां चोररूपराक्षस-



---

१ पतितुंकामामिति गो. पाठः । २ रम्यामिति गो. पाठः । ३ युतामिति गो. पाठः । ४ धारिभिरिति गो. पाठः । ५ केतुमालस्यति गो. पाठः ।

अथ सा हरिशार्दूलं प्रविशन्तं महाकपिम्[1] । नगरी स्वेन रूपेण ददर्श पवनात्मजम् ॥ २० ॥
सा तं हरिवरं दृष्ट्वा लङ्का रावणपालिता । स्वयमेवोत्थिता तत्र विकृताननदर्शना ॥ २१ ॥
पुरस्तात्तस्य वीरस्य वायुसूनोरतिष्ठत । मुञ्चमाना महानादमब्रवीत्पवनात्मजम् ॥ २२ ॥
कस्त्वं केन च कार्येण इह प्राप्तो वनालय । कथयस्वेह यत्तत्त्वं यावत्प्राणा धरन्ति ते ॥ २३ ॥
न शक्यं खल्वियं लङ्का प्रवेष्टुं वानर त्वया । रक्षिता रावणबलैरभिगुप्ता समन्ततः ॥ २४ ॥
अथ तामब्रवीद्वीरो हनुमानग्रतः स्थिताम्[2] । कथयिष्यामि तत्तत्त्वं[3] यन्मां त्वं परिपृच्छसे[4] ॥ २५ ॥
का त्वं विरूपनयना पुरद्वारेऽवतिष्ठसे । किमर्थं चापि मां क्रोधान्निर्भर्त्सयसि दारुणे[5][6] ॥ २६ ॥
हनुमद्वचनं श्रुत्वा लङ्का सा कामरूपिणी । उवाच वचनं क्रुद्धा परुषं पवनात्मजम् ॥ २७ ॥
अहं राक्षसराजस्य रावणस्य महात्मनः । आज्ञाप्रतीक्षा दुर्धर्षा रक्षामि नगरीमिमाम् ॥ २८ ॥
न शक्यं[7] मामवज्ञाय प्रवेष्टुं नगरीमिमाम्[8] । अद्य प्राणैः परित्यक्तः स्वप्स्यसे निहतो मया ॥ २९ ॥
अहं हि नगरी लङ्का स्वयमेव प्लवङ्गम । सर्वतः परिरक्षामि अतस्ते[9] कथितं मया ॥ ३० ॥

श्रितां तां प्रसिद्धां राक्षसेन्द्रस्य नगरीं ददर्श । श्लोकद्वयमेकान्वयि ॥ १८ ॥ १९ ॥

गो० टी०–तामिति । तां रुलेत्यत्र ददर्शेत्यपकृष्यते । नत्वेकं वाक्यं श्लोकद्वयं तच्छब्दद्वयप्रयोगात्प्रथमे श्लोके श्रीसाम्योक्तेश्च ॥ १८—२३ ॥

२० ] ति० टी०–सा नगरी स्वेन रूपेणाधिष्ठातृदेवतारूपेण युक्ता ददर्श ॥ २० ॥

रा० टी०–अथेति । अथ प्रवेशानन्तरं प्रविशन्तं हरिशार्दूलं नगरी लङ्का स्वेन अधिष्ठात्रीत्वेन रूपेण ददर्श ॥ २० ॥

२१ ] ति० टी०–स्वयमेवोत्थिता । अनन्यप्रेरितेति यावत् ॥ २१ ॥

२२] ति० टी०–अतिष्ठत देवतारूपं प्रकाशितवती ॥२२॥

रा० टी०–दर्शनप्रकारमाह–सेति । सा लङ्का हरिवरं दृष्ट्वा स्वयमेव उत्थिता महानादं मुञ्चमाना च सती वायुसूनोः पुरस्ताद् अग्रे अतिष्ठद् इदमब्रवीच्च । श्लोकद्वयमेकान्वयि ॥ २१ ॥२२ ॥

२३ ] ति० टी०–वनालय वानर ! तत्त्वं सत्याद् ॥२३॥

रा० टी०–तद्वचनाकारमाह–क इति । वनालय हे वानर! त्वं कः कस्य पुत्रादिरित्यर्थः । केन कार्येण च त्वम् इह प्राप्तः यावत्प्राणास्ते त्वां धरन्ति न त्यजन्तीत्यर्थः, तावद् तत्त्वं यथार्थं कथयस्व ॥ २३ ॥

२४–२५ ] ति० टी०–त्वयैषा प्रवेष्टुं न शक्यम् । क्षुदुपहन्तुं शक्यमितिवद् । 'न शक्या' इति पाठस्तु सुगम एव ॥ २४ ॥ २५ ॥

रा० टी०–ननु किमर्थं पृच्छसीत्यत आह–नेति । रावणबलैः समन्ततोऽभिगुप्ता व्याप्ता अत एव रक्षिता इयं लङ्का त्वया प्रवेष्टुं न शक्या । किंच अभितश्चतुर्दिक्षु गुप्ता राक्षसविजातीयनिरीक्षणार्थमलक्ष्यरूपेण स्थिताः राक्षसाः यस्यास्ताम् ॥ २४ ॥

रा० टी०–अथेति । अथ तत्प्रश्नश्रवणानन्तरं यत्त्वं पृच्छसि तदहं कथयिष्यामि इति हनूमान् अब्रवीद् । कथयामीत्यपहाय कथयिष्यामीत्युक्त्या अहमपि किंचित्पृच्छामीति सूचितम् ॥ २५ ॥

गो० टी०–नेति । अभिगुप्ता समावृतेत्यर्थः । अतो न रक्षितेत्यनेन पुनरुक्तिः ॥ २४–३३ ॥

२६–२७ ] ति० टी०–अथ तया पृष्टो हनूमांस्तां प्रति तत्प्रश्नोत्तरकथनं प्रतिज्ञाय, सुरसावदेषा पूज्या वा सिंहिकावद्वध्या वेति निर्णेतुं पृच्छति—का त्वमिति ॥ २६॥२७ ॥

रा० टी०–तत्प्रश्नाकारमाह–केति । विरूपनयना त्वं पुरद्वारे अवतिष्ठसे सा का किंनामादिरित्यर्थ; मां च किमर्थं क्रोधाद् निर्भर्त्सयसि ॥ २६ ॥

रा० टी०–हनुमदिति । हनुमद्वचनं श्रुत्वा क्रुद्धा कामरूपिणी लङ्का परुषं वचनमब्रवीद् ॥ २७ ॥

२८–२९ ] ति० टी०–आज्ञाप्रतीक्षा नियोगपरिपालिका ॥ २८ ॥ २९ ॥

रा० टी०–तद्वचनाकारमाह–अहमिति । दुर्धर्षा धर्षयितुमशक्या अहं रावणस्य आज्ञाप्रतीक्षा सती इमां नगरीं रक्षामि ॥ २८ ॥

रा० टी०–नेति । माम् अवज्ञाय अनादृत्य इमां नगरीं प्रवेष्टुं न शक्यं कैश्चिदिति शेषः, अतः मया निहतः अत एव प्राणैस्त्यक्तस्त्वं स्वप्स्यसे स्वप्स्यसि ॥ २९ ॥

३० ] ति० टी०–अथापि का त्वं तत्राह—अहं हीति । स्वयम् स्वदेवतास्वरूपेणेत्यर्थः ॥ ३० ॥

रा० टी०–अहमिति । हे प्लवङ्गम ! अहं स्वयं स्वेन रूपेण नगरी लङ्काऽस्मीति शेषः, अतः सर्वतः परिरक्षामि अत एव मया कथितं परुषमुक्तम् ॥ ३० ॥

१ वर्ल्मिति गो. पाठः । २ कपिवर्यरयेति गो. पाठः । ३ ते तत्त्वमिति गो. पाठः । ४ पृच्छसीति गो. पाठः । ५ रुद्धेति गो. पाठः । ६ दारुणेति गो. पाठः । ७ [illegible] गो. पाठः । ८ नगरी स्वयमसि गो. पाठः । ९ ह्यतस्ते इति गो. पाठः ।

लङ्कायाः वचनं श्रुत्वा हनूमान्मारुतात्मजः । यत्नवान्स हरिश्रेष्ठः स्थितः शैल इवापरः ॥ ३१ ॥
स तां स्त्रीरूपविकृतां दृष्ट्वा वानरपुङ्गवः । आबभाषेऽथ मेधावी सत्त्ववान्प्लवगर्षभः ॥ ३२ ॥
द्रक्ष्यामि नगरीं लङ्कां साट्टप्राकारतोरणाम् । इत्यर्थमिह संप्राप्तः परं कौतूहलं हि मे ॥ ३३ ॥
वनान्युपवनानीह लङ्कायाः काननानि च । सर्वतो गृहमुख्यानि द्रष्टुमागमनं हि मे ॥ ३४ ॥
तस्य तद्वचनं श्रुत्वा लङ्का सा कामरूपिणी । भूय एव पुनर्वाक्यं बभाषे परुषाक्षरम् ॥ ३५ ॥
मामनिर्जित्य दुर्बुद्धे राक्षसेश्वरपालिताम् । न शक्यं ह्यद्य ते द्रष्टुं पुरीयं वानराधम ॥ ३६ ॥
ततः स हरिशार्दूलस्तामुवाच निशाचरीम् । दृष्ट्वा पुरीमिमां भद्रे पुनर्यास्ये यथागतम् ॥ ३७ ॥
ततः कृत्वा महानादं सा वै लङ्का भयंकरम् । तलेन वानरश्रेष्ठं ताडयामास वेगिता ॥ ३८ ॥
ततः स हरिशार्दूलो लङ्कया ताडितो भृशम् । ननाद सुमहानादं वीर्यवान्मारुतात्मजः ॥ ३९ ॥
ततः संवर्तयामास वामहस्तस्य सोऽङ्गुलीः । मुष्टिनाऽभिजघानैनां हनुमान्क्रोधमूर्च्छितः ॥ ४० ॥
स्त्री चेति मन्यमानेन नातिक्रोधः स्वयं कृतः । सा तु तेन प्रहारेण विह्वलाङ्गी निशाचरी ॥
पपात सहसा भूमौ विकृताननदर्शना ॥ ४१ ॥
ततस्तु हनुमान्वीरस्तां दृष्ट्वा विनिपातिताम् । कृपां चकार तेजस्वी मन्यमानः स्त्रियं च ताम् ॥ ४२ ॥

---

३१ ] ति० टी०—यत्नवाँल्लङ्काधिष्ठातृत्वेनावगतत्वात्तद्विजयोपाये यत्नवान् ॥ ३१ ॥

रा० टी०—लङ्काया इति । यत्नवान् अतिप्रयत्नशीलो हनूमान् अपरशैल इव स्थित इति शेषः ॥ ३१ ॥

३२ ] ति० टी०—स्त्रीरूपविकृतां विकृतस्त्रीरूपाम् । अथ लब्धप्रश्नोत्तरस्तत्प्रश्नोत्तरमाह—आबभाष इति ॥ ३२ ॥

रा० टी०—स इति । स्त्रीरूपं विकृतं यस्याः तां कर्मधारयो वा, किंच स्त्रीरूपेण विकृतां प्रकटितां तां लङ्कां स हनूमान् आबभाषे ॥ ३२ ॥

३३ ] ति० टी०—द्रक्ष्यामीत्यर्थमिह संप्राप्त इत्यन्वयः । दर्शनं प्रयोजनमुद्दिश्येत्यर्थः ॥ ३३ ॥

रा० टी०—तद्गापणप्रकारमाह—द्रक्ष्यामीति । साट्टप्राकारतोरणाम् अट्टादिसहितां नगरीम् अहं द्रक्ष्यामि इत्यर्थमिह संप्राप्तः । दर्शने हेतुः मे परं कौतूहलमाश्चर्यं भातीति शेषः॥ ३३॥

३४ ] ति० टी०—वनं कृत्रिमम्, काननमकृत्रिमम् ॥ ३४॥

रा० टी०—तदेव भङ्ग्यन्तरेणाह—वनानीति । इह अस्मिन् समये लङ्काया वनादीनि द्रष्टुं मे आगमनम् । तत्र वनमकृत्रिमं, काननं कृत्रिमम् इति न पौनरुक्त्यम् ॥ ३४ ॥

गो० टी०—वनानीति । उपवनानि गृहोद्यानानि काननानि शून्यारण्यानि ॥ ३४ ॥

३५–३६ ] ति० टी०—भूयोऽधिकं परुषाक्षरं वाक्यं पुनर्बभाष इति संबन्धः ॥ ३५ ॥ ३६ ॥

रा० टी०—तस्येति । तस्य हनूमतः तद्वचनं श्रुत्वा लङ्का परुषाक्षरं पुनर्बभाषे ॥ ३५ ॥

गो० टी०—तस्येति । भूयः अतिशयेन परुषाक्षरमित्यन्वयः ॥ ३५ ॥

रा० टी०—तद्वचनाकारमाह—मामिति । राक्षसेश्वरपालितां मामनिर्जित्य इयं लङ्का ते द्रष्टुं न शक्या ॥ ३६ ॥

गो० टी०—मामिति । शक्यमित्येतदव्ययम् । तदाह कालिदासः—'शक्यमरविन्दसुरभिः कणवाही मालिनीतरङ्गाणाम् । अङ्गैरनङ्गतप्तैरविरलमालिङ्गितुं पवनः' इति । पुरीरूपं वस्तु शक्यमिति शक्यपुर्योः सामानाधिकरण्यं वा ॥ ३६ ॥

३७ ] ति० टी०—अनिर्जित्य द्रष्टुं न शक्यमित्युक्तेऽपि कस्यापि वस्तुनोऽग्रहणपूर्वकं केवलं दर्शनमात्रे तव का क्षतिरित्याशयेनाह—ततः स इति । स हनूमान् ॥ ३७ ॥

रा० टी०—तत इति । ततस्तद्वचनश्रवणानन्तरं पुरीं दृष्ट्वा अहं यथागतं यास्ये किंचन न ग्रहीष्यामीत्यर्थः, इति निशाचरीं लङ्कामुवाच ॥ ३७ ॥

गो० टी०—तत इति । यास्ये यास्यामि । इत्युवाचेति संबन्धः ॥ ३७ ॥

३८ ] ति० टी०—वेगिता संजातवेगा ॥ ३८ ॥

रा० टी०—तत इति । ततः हनुमद्वचनश्रवणानन्तरं सा लङ्का वानरश्रेष्ठं हनूमन्तं तलेन ताडयामास ॥ ३८ ॥

गो० टी०—तत इति । वेगिता संजातवेगा ॥ ३८ ॥

३९] ति० टी०—महानादं ननादेति निर्भयत्वद्योतनम्॥ ३९॥

रा० टी०—तत इति । ततः लङ्काकर्तृकताडनानन्तरं लङ्कया ताडितो हरिशार्दूलः सुमहानादं यथा भवति तथा ननाद ॥ ३९ ॥

गो०टी०—तत इति । संवर्तयामास संकोचयामास ३९–४४

४० ] ति० टी०—अङ्गुलीः संवर्तयामास । मुष्टिं बबन्धेत्यर्थः ॥ ४० ॥

रा० टी०—तत इति । ततः स्वकृतमहानादानन्तरं वामहस्तस्य अङ्गुलीः संवर्तयामास एकीचकार मुष्टिं बबन्धेत्यर्थः एनां लङ्कां मुष्टिनाऽभिजघान च ॥ ४० ॥

४१–४२ ] ति० टी०—वामहस्तमुष्टिबन्धे आशयमाह—

---

१ हीति गो. नास्ति, २ शयेति रा. पाठः । ३ मयामिहमिति गो. पाठः । ३ कपीति गो. पाठः । ४ अत्रा इति गो. पाठः । ५ स्विति गो. पाठः ।

ततो वै भृशमुद्विग्ना लङ्का सा गद्गदाक्षरम् । उवाचागर्वितं वाक्यं हनुमन्तं प्लवङ्गमम् ॥ ४३ ॥
प्रसीद सुमहाबाहो त्रायस्व हरिसत्तम । समये सौम्य तिष्ठन्ति सत्त्ववन्तो महाबलाः ॥ ४४ ॥
अहं तु नगरी लङ्का स्वयमेव प्लवङ्गम । निर्जिताऽहं त्वया वीर विक्रमेण महाबल ॥ ४५ ॥
इदं च तथ्यं शृणु मे ब्रुवन्त्या वै हरीश्वर । स्वयं स्वयंभुवा दत्तं वरदानं यथा मम ॥ ४६ ॥
यदा त्वां वानरः कश्चिद्विक्रमाद्वशमानयेत् । तदा त्वया हि विज्ञेयं रक्षसां भयमागतम् ॥ ४७ ॥
स हि मे समयः सौम्य प्राप्तोऽद्य तव दर्शनात् । स्वयंभूविहितः सत्यो न तस्यास्ति व्यतिक्रमः ॥ ४८ ॥
सीतानिमित्तं राज्ञस्तु रावणस्य दुरात्मनः । रक्षसां चैव सर्वेषां विनाशः समुपागतः ॥ ४९ ॥
तत्प्रविश्य हरिश्रेष्ठ पुरीं रावणपालिताम् । विधत्स्व सर्वकार्याणि यानि यानीह वाञ्छसि ॥ ५० ॥

प्रविश्य शापोपहतां हरीश्वरः पुरीं शुभां राक्षसमुख्यपालिताम् ।
यदृच्छया त्वं जनकात्मजां सतीं विमार्ग सर्वत्र गतो यथासुखम् ॥ ५१ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये सुन्दरकाण्डे तृतीयः सर्गः ॥ ३ ॥

---

स्त्री चेति । तेन प्रहारेण वामसुष्टिकृतसदयताडनेनापीत्यर्थः । विकृताननदर्शना विकृतवक्त्रदृष्टिः ॥ ४१ ॥ ४२ ॥

रा० टी०—स्त्रीति । इयं स्त्री क्रोधानर्हेत्यर्थः । इति स्वयं मन्यमानेन हनुमता अतिक्रोधो न कृतः । अर्धं पृथक् । सेति । तेन हनुमत्कर्तृकेण प्रहारेण विह्वलाङ्गी निशाचरी सा लङ्का विकृताननं दर्शयति सा सती भूमौ सहसा पपात । अर्धद्वयमेकान्वयि ॥ ४१ ॥

रा० टी०—तत इति । ततः लङ्काया निपातनानन्तरं वीरो हनुमान् तान्दृष्ट्वा स्त्रियं मन्यमानः सन् कृपां चकार कृपालुत्वचेष्टया तस्थावित्यर्थः ॥ ४२ ॥

४३] ति०टी०—उद्विग्ना भीता । अगर्वितं गर्वरहितम् ॥ ४३ ॥

रा० टी०—तत इति । ततः निपतनानन्तरं भृशमुद्विग्ना लङ्का अगर्वितं गद्गदाक्षरं वाक्यमुवाच ॥ ४३ ॥

४४] ति०टी०—त्रायस्व मा प्राणनाशं कुर्वित्यर्थः । तत्र हेतुः—समय इति । स्त्री न हन्तव्येति शास्त्रमर्यादायामित्यर्थः ॥ ४४ ॥

रा० टी०—तद्वचनाकारमाह—प्रसीदस्वेति । यतः सत्त्ववन्तः पुरुषा समये प्रार्थनाकाले तिष्ठन्ति अनुग्रहं कुर्वन्तीत्यर्थः, अतः प्रसीदस्व अत एव त्रायस्व ॥ ४४ ॥

गो० टी०—प्रसीदेति । समये स्त्रीवधवर्जनव्यवस्थायाम् । सत्त्ववन्तः धैर्यवन्तः ॥ ४५ ॥

४५ ] ति० टी०—यद्यप्यहं लङ्काधिष्ठातृदेवतात्वाद्दुर्जया, तथापि त्वया निर्जिता ॥ ४५ ॥

रा० टी०—अहमिति । लङ्काऽहं विक्रमेण स्वयं त्वयैव निर्जिताऽस्मीति शेषः, हं महान् खेदोयम् ॥ ४५ ॥

गो० टी०—अहमिति । अहं त्वित्यर्धं भिन्नं वाक्यम् । एकवाक्यत्वेऽहंशब्दस्य पुनरुक्तिः ॥ ४६ ॥ ४७ ॥

४६ ] ति० टी०—इदं च तथ्यं शृणु । त्वदनुग्रहार्थमुच्यमानमित्यर्थः । वरदानं दत्तम् कृतमित्यर्थः ॥ ४६ ॥

रा० टी०—इदमिति । हे हरीश्वर! तथ्यं ब्रुवन्त्या मम वचो यथावत् शृणु । तद्वचनाकारमाह—स्वयंभुवा ब्रह्मणा मम वरदानं दत्तम् ॥ ४६ ॥

४७ ] ति० टी०—रक्षसां भयमिति । एवं च मज्जयोऽयं सर्वरक्षोजयसूचक इति भावः ॥ ४७ ॥

रा० टी०—तद्वरदानाकारमाह—यदेति । यदा कश्चिद्वानरः विक्रमात्त्वां वशमानयेत् तदा आगतं रक्षसां भयं विनाशः त्वया विज्ञेयम् ॥ ४७ ॥

गो० टी०—वरदानस्वरूपमाह—यदेति । अत्र रावणस्य दिग्विजये नन्दिकेश्वरादिभिर्लङ्कायाः सद्योविनाशशापे दत्ते सा ब्रह्माणं गत्वा प्रार्थयामास विनाशो मे माभूदिति । स च तस्यै वरमदात् तव सद्यो विनाशो न भविष्यति यदा तु वानरस्त्वामभिभविष्यति तदा तु विनाशो भविष्यतीति कथोन्नीयते ॥ ४८–५१ ॥

४८–४९ ] ति० टी०—न तस्यास्ति व्यतिक्रमः भगवद्दत्तवरस्य रावणस्य स्वकृताधिक्षेपक्षुभितनन्दिकेश्वरशापात्तु सद्यः प्राप्तो विनाशः, स्वयंभूवरवशाद्वानरास्कन्दनपर्यन्तं प्रतिबद्ध इति कथात्रानुसंधेयेति तीर्थः ॥ ४८ ॥ ४९ ॥

रा० टी०—स इति । तव दर्शनात् त्वत्कर्तृकदर्शनपूर्वकपराभवात् स राक्षसविनाशकारी समयः प्राप्तः । तत्र हेतुः—स्वयंभूविहितः ब्रह्मणोक्तः सत्यः अतस्तस्य समयस्य व्यतिक्रमो विपर्ययो नास्ति अतः सीतानिमित्तं रावणस्य रक्षसां च विनाशः समुपागतः ॥ ४८ ॥ ४९ ॥

५० ] ति० टी०—विधत्स्वानुतिष्ठ ॥ ५० ॥

रा० टी०—तदिति । तत् राक्षसविनाशस्यावश्यकत्वाद्धेतोः पुरीं लङ्कां प्रविश्य यानि यानि कार्याणि वाञ्छसि तानि सर्वकार्याणि विधत्स्व ॥ ५० ॥

५१ ] ति० टी०—शापोपहतां सत्यसंकल्पभगवद्वचनेन न-

---

१ स्वयंभुवा पुरेति गो. पाठः ।

## चतुर्थः सर्गः ।

लङ्कायां वामपादप्रथमनिक्षेपणपूर्वं प्रविशन्हनुमान्नगरान्तर्वाद्यमाननानावादित्रादि शृण्वन्ननेकविधायुधधारिमूलबलं विलोकयंश्चान्तःपुरमाविवेश ।

स निर्जित्य पुरीं लङ्कां श्रेष्ठां तां कामरूपिणीम् । विक्रमेण महातेजा हनूमान्कपिसत्तमः ॥ १ ॥
अद्वारेण महावीर्यः प्राकारमवपुप्लुवे । निशि लङ्कां महासत्त्वो विवेश कपिकुञ्जरः ॥ २ ॥
प्रविश्य नगरीं लङ्कां कपिराजहितंकरः । चक्रेऽथ पादं सव्यं च शत्रूणां स तु मूर्धनि ॥ ३ ॥
प्रविष्टः सत्त्वसंपन्नो निशायां मारुतात्मजः । स महापथमास्थाय मुक्तपुष्पविराजितम् ॥ ४ ॥
ततस्तु तां पुरीं लङ्कां रम्यामभिययौ कपिः । हसितोत्कृष्टनिनदैस्तूर्यघोषपुरस्कृतैः ॥ ५ ॥
वज्राङ्कुशनिकाशैश्च वज्रजालविभूषितैः । गृहमेधैः पुरी रम्या बभासे द्यौरिवाम्बुदैः ॥ ६ ॥

---

न्दिकेश्वरशापेन च प्रापितनाशकालां हरीश्वरस्त्वं प्रविश्य यदृच्छया सर्वत्र रावणान्तःपुरपर्यन्तं यथासुखं गतः सन्सतीमप्रच्युतपातिव्रत्यां जानकीं विमार्गान्वेषय । अनेन च वचनेन सीताऽकल्मषात्र पुरे वर्तत इत्युपदिष्टम् ॥ ५१ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये सुन्दरकाण्डे तृतीयः सर्गः ॥ ३ ॥

रा० टी०—उपसंहरन्नाह—प्रविश्येति । हरीश्वरस्त्वं शापोपहतां पुरीं लङ्कां यदृच्छया प्रविश्य सतीं पतिव्रताशिरोमणिं सर्वत्रगः सन् यथासुखं विमार्ग ॥ ५१ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ सुन्दरकाण्डे तृतीयः सर्गः ॥ ३ ॥

गो० टी०—प्रविश्येति । शापो नन्दिकेश्वरादिकृतः । यदृच्छयेत्यस्य गत इति संबन्धः । यदृच्छयात्र प्राप्तस्त्वमित्यर्थः ॥ ५२ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने तृतीयः सर्गः ॥ ३ ॥

१ ] ति० टी०—स इति ॥ १ ॥

२ ] ति० टी०—प्राकारमद्वारेणावपुप्लुवे । शत्रोः पुरं ग्रामं गृहं वा । 'अद्वारेण प्रविशेच्छत्रुविनाशाय' इति नीतिस्मृतेरिति भावः ॥ २ ॥

रा० टी०—लङ्कापराभवानन्तरकालिकं हनुमद्वृत्तान्तमाह—स इत्यादिभिः । स प्रसिद्धो हनूमान् निशि विक्रमेण लङ्कां पुरीं निर्जित्य अद्वारेण द्वारमार्गभिन्नेन उत्पथेनेत्यर्थः, प्राकारमवपुप्लुवे लङ्कां विवेश च । श्लोकद्वयमेकान्वयि॥१॥२॥

गो० टी०—स निर्जित्येत्यादि । अद्वारेणेत्यनेन लङ्कापरिभवो राक्षसैर्न ज्ञातुं शक्य इति द्योत्यते ॥ १ ॥

३ ] ति० टी०—अद्वारेण प्रवेशेऽपि सव्यं पादं वामपादं प्रथमतश्चक्रे, यतः स तु प्रथमनिक्षिप्तवामपादस्तु शत्रूणां मूर्धन्येव निहितो भवति । तथा विजयप्रदो भवतीति भावः । उक्तं च—'प्रयाणकाले स्वगृहप्रवेशे विवाहकालेऽपि च दक्षिणाङ्घ्रिम् । कृत्वाऽग्रतः शत्रुपुरप्रवेशे वामं निदध्याच्चरणं नृपालः' इति ॥ ३ ॥

रा० टी०—प्रविश्येति । कपिराजहितङ्करः सुग्रीवहितस्य कारकः स हनूमान् नगरीं लङ्कां प्रविश्य पुरो दक्षिणचरणनिधानेन प्रवेशं कृत्वा अथात एव सव्यं वामपादं शत्रूणां मूर्धनि चक्रे । प्रथमं दक्षिणपादस्य पुरो निधाने वामः पादः शत्रुविध्वंसको भवतीति प्रसिद्धम् । शत्रुपराभवं चक्रे इत्यर्थः । तथाहि—'प्रयाणकाले स्वगृहप्रवेशे विवाहकालेऽपि च दक्षिणाङ्घ्रिम् । कृत्वाऽग्रतः शत्रुपुरप्रवेशे वामं निदध्याच्चरणं नृपालये' इति ॥ ३ ॥

गो० टी०—प्रविश्येति । चक्र इति । शत्रुदेशप्रवेशे प्रथमं सव्यपादः कार्यः स तु शत्रोर्मूर्ध्नि कृतो भवेदिति राजशास्त्रम् । अनेन प्रथमं सव्यं पादं लङ्कायां कृतवानित्यर्थः सिद्धः । तदाह बृहस्पतिः—'प्रयाणकाले च गृहप्रवेशे विवाहकालेऽपि च दक्षिणाङ्घ्रिम् । कृत्वाग्रतः शत्रुपुरप्रवेशे वामं निदध्याच्चरणं नृपालः' इति ॥ २–४ ॥

४ ] ति० टी०—महापथं राजमार्गम् ॥ ४ ॥

रा० टी०—प्रविष्ट इति । ततस्तस्यां निशायां प्रविष्टो मारुतात्मजः मुक्तपुष्पैर्विराजितं विभूषितं महापथं राजमार्गमास्थाय लङ्कामभिययौ । सार्धश्लोक एकान्वयी ॥ ४ ॥

५ ] ति० टी०—हसितैरट्टहासैरुत्पन्ना ये उत्कृष्टनिनदास्तूर्यघोषैः पुरस्कृतास्तैरुपलक्षिताम् ॥ ५ ॥

६ ] ति० टी०—वज्राणामङ्कुशानां निकाशाः प्रतिमा येषु गृहेषु तैर्बभासे । वज्रनिर्मितानि जालानि गवाक्षाणि तद्विभूषितैर्गृहैः ॥ ६ ॥

रा० टी०—हसितेति । तूर्यघोषपुरस्कृतैः अग्रे स्थापिततूर्यघोषैः हसितानामट्टहासानामुत्कृष्टनिनदैर्महास्वनैर्वज्राणामङ्कुशानां च निकाशा प्रतिमा येषु तैः वज्रनिर्मितैर्जालैर्गवाक्षैः पक्षिप्रवेशनिवारकावरणविशेषैर्वा विभूषितैः शोभितैः गृहमेधैः

---

१ कुञ्जर इति रा. पाठः । २ बाहुरिति गो. पाठः । ३ सैरिति गो. पाठः ।

प्रजज्वाल तदा लङ्का रक्षोगणगृहैः शुभैः । सिताभ्रसदृशैश्चित्रैः पद्मस्वस्तिकसंस्थितैः ॥ ७ ॥
वर्धमानगृहैश्चापि सर्वतः सुविभूषितैः । तां चित्रमाल्याभरणां कपिराजहितंकरः ॥ ८ ॥
राघवार्थे चरञ्श्रीमान्ददर्श च ननन्द च । भवनाद्भवनं गच्छन्ददर्श कपिकुञ्जरः ॥ ९ ॥
विविधाकृतिरूपाणि भवनानि ततस्ततः । शुश्राव रुचिरं गीतं त्रिस्थानस्वरभूषितम् ॥ १० ॥
स्त्रीणां मदनविद्धानां दिवि चाप्सरसामिव । शुश्राव काञ्चीनिनदं नूपुराणां च निःस्वनम् ॥ ११ ॥
सोपाननिनदांश्चापि भवनेषु महात्मनाम् । आस्फोटितनिनादांश्च क्ष्वेडितांश्च ततस्ततः ॥ १२ ॥
शुश्राव जपतां तत्र मन्त्रान्रक्षोगृहेषु वै । स्वाध्यायनिरतांश्चैव यातुधानान्ददर्श सः ॥ १३ ॥
रावणस्तवसंयुक्तान्गर्जतो राक्षसानपि । राजमार्गं समावृत्य स्थितं रक्षोगणं महत् ॥ १४ ॥

---

मेघाकारगृहैश्च रम्या पुरी अम्बरैः अम्बरवर्तिगृहाकारमेघैर्वाविवावभासे । सार्धश्लोक एकान्वयी ॥ ६ ॥ ६ ॥

गो० टी०–हसितेति । तूर्यघोषपुरस्सरैः हसितोत्कृष्टनिनदैः हसितानामुत्कृष्टस्वरैः युक्तेत्यर्थः । वज्राङ्कुशनिकाशैः वज्रमङ्कुशो यस्य सः वज्राङ्कुशः ऐरावतः तत्तुल्यैः तद्वच्छुभैरित्यर्थः, वज्राङ्कुशतुल्यसंस्थानैर्वा । वज्रजालविभूषितैः वज्रो रत्नविशेषः । गृहमेघैः गृहश्रेष्ठैः । "उपमितं व्याघ्रादिभिः" इत्युपमितसमासः ॥ ६ ॥

७] ति० टी०–पद्मादिसंज्ञकं संस्थितं संस्थानं येषां तैः॥७॥

रा० टी०–प्रेति । सिताभ्रसदृशैः चित्रैरनेकविधैः पद्मस्वस्तिकानां पद्माद्यभिधचित्राणां संस्थितं विन्यासो येषु तैः पद्मादिसंज्ञकैर्वा रक्षोगणगृहैर्वर्धमानगृहैः वर्धमानाभिधभवनैश्च लङ्का प्रजज्वाल शुशुभे । तथाहि 'चतुःशालं चतुर्द्वारं सर्वतोभद्रसंज्ञकम् । पश्चिमद्वाररहितं नन्द्यावर्ताह्वयं तु तत् ॥ दक्षिणद्वाररहितं वर्धमानं धनप्रदम् । प्राग्द्वाररहितं स्वस्तिकाख्यं पुत्रधनप्रदम्' । सार्धश्लोक एकान्वयी ॥ ७ ॥

गो० टी०–प्रजज्वालेत्यादि । पद्मस्वस्तिकसंस्थितैः पद्मस्वस्तिकनामभ्यां संस्थानविशेषाभ्यां संस्थितैः । वर्धमानगृहैः वर्धमाननाम्ना संस्थानेन संस्थितैः गृहैः । तल्लक्षणानि वराहमिहिरसंहितायां व्यक्तानि विस्तरभयान्न लिख्यन्ते ॥६–९॥

८] ति० टी०–वर्धमानगृहैर्वर्धमाननामकसंस्थानवद्गृहैः । 'चतुःशालं चतुर्द्वारं सर्वतोभद्रसंज्ञितम् । पश्चिमद्वाररहितं नन्द्यावर्ताह्वयं तु तत् ॥ दक्षिणद्वाररहितं वर्धमानं धनप्रदम् । प्राग्द्वाररहितं स्वस्तिकाख्यं पुत्रधनप्रदम् ॥' इत्युक्तेः । हितंकर इत्यार्षः ॥ ८ ॥

रा० टी०–तामिति । चित्रमालाभरणां तां लङ्कां राघवस्यार्थे चरन् हनुमान् ददर्श ननन्द च हितंकर इति अस्मादेव निर्देशात्साधु ॥ ८ ॥

९] ति० टी०–चरंस्तां ददर्शेत्यन्वयः ॥ ९ ॥

रा० टी०–भवनादिति । भवनात् भवनं भवनान्तरं गच्छन् सन् विविधाकृतिरूपाणि भवनानि ददर्श ततस्ततः तत्र तत्र त्रिस्थानस्वरैः उरःकण्ठशिरोरूपस्थानत्रयजनितमन्द-मध्यमतारस्वनविशेषैः भूषितं गीतं शुश्राव च । सार्धश्लोक एकान्वयी ॥ ९ ॥ १० ॥

गो० टी०–शुश्रावेति । त्रिस्थानस्वरभूषितं त्रिस्थानेषु उरःकण्ठशिरस्सु भवैः स्वरैर्भूषितं ते च मन्द्रमध्यताराः ॥१०॥

१०-११ ] ति० टी०–विविधाकृतिरूपाणि विविधा आकारा रूपाणि वर्णाश्च येषां तानि भवनानि ददर्शेति पूर्वेणान्वयः । त्रिस्थानस्वरभूषितमुरःकण्ठशिरोरूपस्थानत्रयजैर्मन्द्रमध्यतारस्वरैर्भूषितम् ॥ १० ॥ ११ ॥

१२ ] ति० टी०–सोपाननिनदान्सोपानसंचरत्कान्ताजनकाञ्चीमञ्जीरनिनदान् । यद्वा सोपानेषु पदाघातजशब्दान् । आस्फोटितं विलासार्थं करास्फालनं तज्जन्यनिनादान् । क्ष्वेडितान्सिंहनिनादान् ॥ १२ ॥

रा० टी०–स्त्रीणामिति । महात्मनां भवनेषु दिवि अप्सरसामिव मदनविद्धानां स्त्रीणां काञ्चीनिनदं नूपुराणां निःस्वनं च सोपाननिनदान् पादाघातहेतुकसोपानजनितस्वनांश्च आस्फोटितनिनदान् आस्फोटितानां विहारार्थं करास्फालनानां निनादांश्च क्ष्वेडितान् सिंहस्वनान् विहारकालकपरस्परपरिहासवचनानि वा शुश्राव । श्लोकद्वयमेकान्वयि ॥ ११ ॥ १२॥

गो० टी०–शुश्राव काञ्चीनिनदमित्यादि । सोपाननिनदांश्च मणिहेमकृतानां सोपानानां नूपुरादिताडनेन ये निनादाः संभवन्ति तान् । आस्फोटितनिनादान् व्यत्यस्तकरतलाभ्यां भुजाग्रास्फालनशब्दान् क्ष्वेलितान् सिंहनादान् ॥ ११ ॥

१३-१४ ] ति० टी०–मन्त्रान्वेदमन्त्रान् । स्वाध्यायेऽध्ययार्थे निरतान् ॥ १३ ॥ १४ ॥

रा० टी०–शुश्रावेति । तत्र तस्मिन् समये जपतां पठतां मन्त्रान् रक्षोगृहेषु शुश्राव स्वाध्यायनिरतान् वेदपाठपरायणान् यातुधानान् रक्षोविशेषान् रावणस्तवसंयुक्तान् रावणस्तुतिकर्तॄन् गर्जतो राक्षसांश्च राजमार्गं समावृत्य स्थितं रक्षोगणं च ददर्श । श्लोकद्वयमेकान्वयि ॥ १३ ॥ १४ ॥

गो० टी०–शुश्राव जपतामिति । मन्त्रान् ऋग्वेदादीन् ॥१२॥

गो० टी०–स्वाध्यायनिरतान् ब्रह्मभागपाठनिरतान् ॥१३॥

गो० टी०–राजमार्गमिति । मध्यमे गुल्मे नगरमध्य-

---

१ भूषितेति गो. पाठः । २ अर्थमिति गो. पाठः । ३ पवनात्मज इति गो. पाठः । ४ बलमिति गो. पाठः ।

ददर्श मध्यमे गुल्मे राक्षसस्य चरान्बहून् । दीक्षिताञ्जटिलान्मुण्डान्गोजिनाम्बरवाससः ॥ १५ ॥
दर्भमुष्टिप्रहरणानग्निकुण्डायुधांस्तथा । कूटमुद्गरपाणींश्च दण्डायुधधरानपि ॥ १६ ॥
एकाक्षानेकवर्णांश्च चलदेकपयोधरान् । करालान्भुग्नवक्त्रांश्च विकटान्वामनांस्तथा ॥ १७ ॥
धन्विनः खड्गिनश्चैव शतघ्नीमुसलायुधान् । परिघोत्तमहस्तांश्च विचित्रकवचोज्ज्वलान् ॥ १८ ॥
नातिस्थूलान्नातिकृशान्नातिदीर्घातिह्रस्वकान् । नातिगौरान्नातिकृष्णान्नातिकुब्जान्न वामनान्॥ १९ ॥
विरूपान्बहुरूपांश्च सुरूपांश्च सुवर्चसः । ध्वजिनः पताकिनश्चैव ददर्श विविधायुधान् ॥ २० ॥
शक्तिवृक्षायुधांश्चैव पट्टिशाशनिधारिणः । क्षेपणीपाशहस्तांश्च ददर्श स महाकपिः ॥ २१ ॥
स्रग्विणस्त्वनुलिप्तांश्च वराभरणभूषितान् । नानावेषसमायुक्तान्यथास्वैरचरान्बहून् ॥ २२ ॥

---

स्थितसैन्यसमाजे । चरान् स्वजनवृत्तान्तजिज्ञासया प्रधानप्रेरितान् प्रणिधीन् ॥ १४ ॥

१५ ] ति० टी०—मध्यमे गुल्मे मध्यमकक्ष्याप्रदेशे । चरान्नगरवृत्तान्तावेदकगूढचारान् । दीक्षितजटिलमुण्डा गृहिवनियतयः गोजिनं गवाजिनं तद्वाससः अम्बरवाससो विवाससः ननु लङ्काया भारतखण्डाद्बहिर्भावेन कर्मभूमित्वाभावात्कथं तत्र रक्षसां दीक्षितत्वमिति चेन्न । नित्यकर्मस्वन्यदेशेऽप्यधिकारात् । रावणादेस्तपोमाहात्म्यात्तत्र काम्यकर्मसिद्धिरपीत्यन्यत् । 'यथा त्वष्टुरमेन्द्रमेव सोममाजह्रे ' इत्यादिशतपथोक्तरीत्या । एतेन देवानामीपद्विकृतानपि यज्ञान्दर्शयतीति भाष्यरीत्या चाङ्गवैकल्येऽप्यनुष्ठितात्कर्मणो वृत्रोत्पत्तिरूपकामनासिद्धिस्तथा प्रकृते देशरूपाङ्गवैकल्येऽपि तत्सिद्धिः । रक्षसामपि देवयोनित्वात् ॥ १५ ॥

१६ ] ति० टी०—अरिष्टनिवारणपूर्वकमनुष्ठाननिर्वाहाय दर्भमुष्टिप्रहरणत्वं केषांचित् ' यथा वज्रं हरेः पाणौ तथा विप्रकरे कुशाः ' इति स्मृतेः । कृत्याद्युत्पादनद्वारा शत्रुमारकतयाग्निकुण्डानामायुधत्वम् । कूटोऽयस्कारकूट आयुधविशेषः ॥१६॥

१७–१८ ] ति० टी०—एकपयोधरान्परभागे सूक्ष्मसंनिवेशस्तेनापि रहितान् । विकटान्विकटाङ्गान् ॥ १७ ॥ १८ ॥

रा० टी०—ददर्शेति । मध्यमे गुल्मे मध्यकक्षायां राक्षसस्य चरान् पुरवृत्तान्तबोधकप्रच्छन्नचारान् दीक्षितान् गृहीतयोग दीक्षावतः गृहस्थानित्यर्थः, गावः किरणा अजिनं चर्म अम्बरमाकाशं वासो वस्त्रं येषां तान् किरणवस्त्रत्वेन शीतनिवारकवस्त्राभावः आकाशवस्त्रत्वेन च नग्नत्वं फलति । किंच गोजिनं गवां चर्म अम्बरं च वासो येषां तान् जटिलान् मुण्डान् यतींश्च ददर्श । दर्भमुष्टयः प्रहरणानि विघ्ननिवारका येषां तान् अग्निकुण्डान्येव आयुधानि कृत्याद्युत्पादकत्वेन शस्त्राणि येषां तांश्च कूटाः रिपुणा चालयितुमशक्याः मुद्गराः पाणौ येषां तांश्च दण्डरूपायुधधरांश्च ददर्श । तत्र विकटाः विषमावयवाः । श्लोकचतुष्टयमेकान्वयि ॥ १५–१८ ॥

गो० टी०—दीक्षितानित्यादि । गोजिनाम्बरधारिणः वृषभचर्मरूपवस्त्रधारिणः । दर्भमुष्टिप्रहरणान् 'यथा वज्रं हरेः पाणौ तथा विप्रकरे कुशः' इति स्मरणादिति भावः । अग्निकुण्डायुधान् जयार्थं होमशीलान् । कूटमुद्गरपाणीन् कूटो नामायस्कारकूटसदृश आयुधविशेषः 'कूटोऽस्त्री पुञ्जमायाद्रिशृङ्गायोघनवेश्मसु । छले बाणान्तरे दम्भे भग्नशृङ्गवृषे तु ना ॥' इति शब्दरत्नाकरे । मुद्गरो द्रुघणः 'मुद्गरो द्रुघणो घनः' इति वैजयन्ती । करालान्भीमान् ' करालो दन्तुरे तुङ्गे विशाले विकृतेऽपि च ' इति भागुरिः । भुग्नवक्त्रान् कुटिलवक्त्रान् 'आविद्धं कुटिलं भुग्नम्' इत्यमरः । विकटान् विषमाङ्गान् । शतघ्नी शतशङ्कुरयोगदा 'अयःकण्टकसंछन्ना शतघ्नी परिकीर्तिता' इति वैजयन्ती । मुसलम् आयसोऽरत्निप्रमाणको दण्डः ' मुसलं त्वायसो दण्डो धार्योऽरत्निप्रमाणकः' इति शब्दरत्नाकरे । परिघः दण्डविशेषः । नातिदीर्घातिह्रस्वकानित्यत्र हकारोपरि ऋकारोच्चारणं वृत्तभङ्गपरिहाराय । एवं ध्वजिन इति वक्तव्ये ध्वजीनित्युक्तिश्च छन्दोभङ्गपरिहारायैव ॥ १५–१९ ॥

१९ ] ति० टी०—नातिदीर्घातिहस्वाकारान् । वृत्तभङ्गो रेफहकारसंयोगपरो गुरुर्लघुकार्यकारीति न ॥ १९ ॥

२० ] ति० टी०—छन्दोभङ्ग आर्षः ॥ २० ॥

रा० टी०—नेति । नातिस्थूलान् अतिस्थूलाभिन्नान् उचितस्थौल्यविशिष्टान् इत्यर्थः । एवमुत्तरत्रापि विरूपादींश्च ददर्श । दीर्घातिह्रस्वकानित्यत्र ह्रप्रेवेत्यनुशासनात् गुरुत्वाभावः । ध्वजिनः पताकिनश्चेत्यत्र छन्दोभङ्ग आर्ष इति भट्टाः । पताकाध्वजिनश्च' इति क्वाचित्कः पाठः । श्लोकद्वयमेकान्वयि ॥ १९ ॥ २० ॥

२१] ति० टी०—वृक्षायुधा वक्रलकुटाद्यायुधाः । पट्टिशाशनी आयुधविशेषे । क्षेपणी भिन्दिपालः ॥ २१ ॥

रा० टी०—शक्तीति । शक्त्यायुधादीन् ददर्श ॥ २१ ॥

गो० टी०—शक्तीत्यादि । पट्टिशः तीक्ष्णधारो लोहदण्डः ' पट्टिशो यो दीर्घदण्डस्तीक्ष्णधारः क्षुरोपमः ' इति निघण्टुः । क्षेपणी क्षेपणीयः । वेषः अलङ्कारः । यथास्वैरगतान् यथेष्टचारिणः ॥ २०–२२ ॥

२२] ति० टी०—यथास्वैरचरान्यथेष्टं स्वैरविहारं गतान्२२

रा० टी०—स्रग्विण इति । यथास्वैरचरान् यथावत्स्वे-

---

१ लम्बोदरेति गो. पाठः । २ वक्त्रांश्चेति गो. रा. पाठः । ३ ध्वजीनिति गो. पाठः । ४ गतानिति गो. पाठः ।

तीक्ष्णशूलधरांश्चैव वज्रिणश्च महाबलान् । शतसाहस्रमव्यग्रमारक्षं मध्यमं कपिः ॥ २३ ॥
रक्षोधिपतिनिर्दिष्टं ददर्शान्तःपुराग्रतः । स तदा तद्गृहं दृष्ट्वा महाहाटकतोरणम् ॥ २४ ॥
राक्षसेन्द्रस्य विख्यातमद्रिमूर्ध्नि प्रतिष्ठितम् । पुण्डरीकावतंसाभिः परिखाभिः समावृतम् ॥ २५ ॥
प्राकारावृतमत्यन्तं ददर्श स महाकपिः । त्रिविष्टपनिभं दिव्यं दिव्यनादविनादितम् ॥ २६ ॥
वाजिहेषितसंघुष्टमद्भुतैश्च हयैस्तथा । रथैर्यानैर्विमानैश्च तथा हयगजैः शुभैः ॥ २७ ॥
वारणैश्च चतुर्दन्तैः श्वेताभ्रनिचयोपमैः । भूषितै रुचिरद्वारं मत्तैश्च मृगपक्षिभिः ॥ २८ ॥
रक्षितं सुमहावीर्यैर्यातुधानैः सहस्रशः । राक्षसाधिपतेर्गुप्तमाविवेश गृहं कपिः ॥ २९ ॥

स हेमजाम्बूनदचक्रवालं महार्हमुक्तामणिभूषितान्तम् ।
परार्ध्यकालागुरुचन्दनार्हं स रावणान्तःपुरमाविवेश ॥ ३० ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये सुन्दरकाण्डे चतुर्थः सर्गः ॥ ४ ॥

---

च्छाविहारनिरतान् तीक्ष्णशूलधरादीन् च अधिपतिना रावणेन निर्दिष्टमाज्ञापितम् अव्यग्रं व्यग्रतारहितम् आरक्षं समंतादक्षकं मध्यमं मध्यकक्षावर्ति शतसाहस्रं लक्षसंख्याकं रक्षश्च अन्तः-पुराग्रतः अन्तःपुराग्रे प्राप्तः कपिः ददर्श । सार्धश्लोकद्वयमेकान्वयि ॥ २२ ॥ २३ ॥

२३ ] ति० टी०—अव्यग्रं सावधानम् । आरक्षमासमन्तादन्तःपुररक्षकं सैन्यम् । मध्यमं मध्यमकक्ष्यास्थितम् ॥ २३ ॥

गो० टी०—शतेति । शतसहस्रमेव शतसाहस्रं स्वार्थे अण् । आरक्षम् गुल्मम् । अन्तःपुराग्रतः अन्तर्नगराग्रतः । रक्षोधिपतिनिर्दिष्टम् मध्यमगुल्मभूतं रावणमूलबलं ददर्शेत्यर्थः ॥ २३ ॥

२४ ] ति० टी०—अन्तःपुराग्रतो रावणान्तःपुरगृहस्याग्रतः । तद्गृहमारक्षावस्थितिगृहं दृष्ट्वा । स प्रकृतः प्रसिद्धः कपिः ॥ २४ ॥

२५–२६ ] ति० टी०—राक्षसेन्द्रस्य गृहमुच्यमानविशेषणं ददर्श । पुण्डरीकावतंसाभिः श्वेतपद्मभूषिताभिः ॥ २५ ॥ २६ ॥

२७ ] ति० टी०—विमानैः पुष्पकादिभिः । विचित्रवर्णादिमत्त्वादद्भुतत्वं हयानाम् । हयगजैर्हयाकारैर्गजैः स्वल्पगजैरितियावत् ॥ २७ ॥

२८ ] ति० टी०—द्वारमित्यस्य ददर्शेति शेषः ॥ २८ ॥

२९ ] ति० टी०—विवेशासखाद ॥ २९ ॥

रा० टी०—स इति । स महाकपिः महाकपित्वसहितः सः हनुमान् तत् लक्षसंख्याकरक्षः दृष्ट्वा अद्रिमूर्ध्नि प्रतिष्ठितं संस्थितं पुण्डरीकावतंसाभिः श्वेतपद्मैः भूषिताभिः परिखाभिः समावृतं विख्यातं प्रसिद्धं महाहाटकाः तन्मयास्तोरणा यस्मिन् तत् राक्षसेन्द्रस्य गृहं ददर्श । श्लोकद्वयमेकान्वयि ॥ २४ ॥ २६ ॥

गो० टी०—स तदेत्यादि श्लोकद्वयमेकान्वयम् । स कपिः तत् आरक्षं दृष्ट्वा सः राक्षसेन्द्रस्य गृहं ददर्शेत्यन्वयः । क्रियाभेदात्तच्छब्दद्वयम् ॥ २४ ॥ २६ ॥

रा० टी०—त्रिविष्टपेति । दिव्यनादैः स्तुतिशब्दैर्विनादितं वाजिहेषितैरश्वशब्दैः संघुष्टं हयादिभिः रुचिराणि द्वाराणि यस्य तत् सहस्रशो यातुधानैः रक्षितं गुप्तं विजातीयैरलक्षितं त्रिविष्टपनिभं स्वर्गसदृशं राक्षसाधिपतेर्गृहं कपिर्हनुमान् आविवेश । सार्धश्लोकत्रयमेकान्वयि ॥ २६–२९ ॥

गो० टी०—त्रिविष्टपेत्यादि । यानैः शिबिकादिभिः विमानैः व्योमयानैः हयगजैरित्यत्र गजशब्दः द्विदन्तगजपरः अतो न वारणैरित्यनेन पुनरुक्तिः । मृगपक्षिभिश्च भूषितमित्यन्वयः । रक्षिभिर्यातुधानैर्गुप्तमिति संबन्धः । आविवेश जगाम गृहप्रवेशस्य दूरे वक्ष्यमाणत्वात् ॥ २६–२८ ॥

३० ] ति० टी०—हेमतप्तवर्णं स्वर्णं तत्सहितेन जाम्बूनदेन षोडशवर्णस्वर्णेन निर्मितं चक्रवालं प्राकारमण्डलं यस्य । महार्हमुक्तामणिभिर्भूषितोऽन्तःशिरोभागो यस्य । परार्ध्याभ्यामुत्तमाभ्यां कालागुरुचन्दनाभ्यामर्होऽर्हणं पूजा यस्य तदन्तःपुरमाविवेश । स हनुमान् ॥ ३० ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये सुन्दरकाण्डे चतुर्थः सर्गः ॥ ४ ॥

रा० टी०—तदेव भङ्ग्यन्तरेणाह—स इति । स हनुमान् सहेम्ना सुवर्णसहितेन जाम्बूनदेन सुवर्णविशेषेण रचितं चक्रवालं प्राकारमण्डलं यस्य तत् महार्हमुक्तामणिभिर्भूषितः अन्तः अन्तर्भागो यस्य तत् परार्ध्यकालागरुचन्दनैः अर्हं पूजितं रावणान्तःपुरमाविवेश ॥ ३० ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ सुन्दरकाण्डे चतुर्थः सर्गः ॥ ४ ॥

गो० टी०—सहेमेति । हेम अन्यत्र जातं सुवर्णम् । जाम्बूनदं जम्बूनद्यां जातम् चक्रवालं प्राकारमण्डलम् रावणान्तःपुरं रावणान्तर्नगरम् ॥ २९ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने चतुर्थः सर्गः ॥ ४ ॥

---

१ प. रैवाभिरलंकृतमिति गो. पाठः । २ हयितसंघुष्टं नादितं भूषणैस्तदिति गो. पाठः । ३ भूषितमिति गो. पाठः ।

## पञ्चमः सर्गः ।

गगनाङ्गणमारोहति[१] भगवति शीतभानौ नानाविधान्निश्चरान्निशाचरीश्च विलोकयन्नपि सीतामपश्यन्हनुमांश्चिन्तां प्रपेदे ।

ततः स मध्यंगतमंशुमन्तं ज्योत्स्नावितानं मुहुरुद्वमन्तम् ।
ददर्श धीमान्भुवि भानुमन्तं गोष्ठे वृषं मत्तमिव भ्रमन्तम् ॥ १ ॥
लोकस्य पापानि विनाशयन्तं महोदधिं चापि समेधयन्तम् ।
भूतानि सर्वाणि विराजयन्तं ददर्श शीतांशुमथाभियान्तम् ॥ २ ॥
या भाति लक्ष्मीर्भुवि मन्दरस्था यथा प्रदोषेषु च सागरस्था ।
तथैव तोयेषु च पुष्करस्था रराज सा चारुनिशाकरस्था ॥ ३ ॥
हंसो यथा राजतपञ्जरस्थः सिंहो यथा मन्दरकन्दरस्थः ।
वीरो यथा गर्वितकुञ्जरस्थश्चन्द्रोऽपि बभ्राज तथाम्बरस्थः ॥ ४ ॥

१ ] ति० टी०—अग्रे 'चन्द्रोऽपि साचिव्यमिवास्य कुर्वंस्तारागणैर्मध्यगतो विराजन् । ज्योत्स्नावितानेन निपत्य लोकानुत्तिष्ठतेऽनेकसहस्ररश्मिः ॥ शङ्खप्रभाक्षीरमृणालवर्णं ह्युद्गम्यमानं ह्यवभासमानम् । ददर्श चन्द्रं स कपिप्रवीरः पोप्लूयमानं सरसीव हंसम् ॥' इति श्लोकद्वयं प्रक्षिप्तम् ॥ १ ॥ २ ॥ ततोऽन्तःपुरप्रवेशोत्तरं रात्रेः प्रथमयामस्य समाप्तिकल्पत्वमत्रेति बोध्यम् मध्यंगतं व्योममध्यं तारामध्यं च प्राप्तम् अंशुमन्तं शीतांशुम् भानुमन्तं सूर्ययोगेन प्रकाशवत्किरणवन्तम् । गोष्ठे भ्रमन्तं मत्तं वृषमिव ॥ १ ॥

रा० टी०—अन्तःपुरप्रवेशानन्तरकालिकं हनुमद्वृत्तान्तमाह—तत इत्यादिभिः । ततः अन्तःपुरप्रवेशानन्तरं धीमान् स हनुमान् मध्यं ताराणामन्तः गतं प्राप्तं भानुमन्तं सूर्यमिव ज्योत्स्नावितानं चन्द्रिकाविस्तारं भुवि उद्वमन्तं कुर्वन्तं गोष्ठे भ्रमन्तं वृषमिव अंशुमन्तं चन्द्रमसं ददर्श । इव उभयान्वयी॥१॥

गो० टी०—ततः स मध्यमित्यादि । दिवि आकाशे मध्यं गतम् आकाशमध्यगतमित्यर्थः । लङ्काप्रवेशे चन्द्रोदयोक्तेः रावणनगरप्रवेशे अर्धरात्र इति सूच्यते । उत्तरश्लोके अभियान्तमित्यनेनाभिगमनमुच्यते दक्षिणां दिशं गच्छतोभिमुखत्वासंभवात् किन्तु गमनमात्रम् सप्तदशे सर्गेऽपि प्रजगाम नभश्चन्द्र इति प्रकर्षेण गमनवचनं नभोमध्यातीतत्वमाचष्टे अंशुमन्तमिति चन्द्र एवोच्यते भानुमन्तं दीप्तिमन्तम् वृषं श्वेतम् । अस्मिन्सर्गे च्छेकानुप्रासः नतु यमकम् अर्थभेदाभावात् । तदुक्तं काव्यप्रकाशे 'भिन्नार्थानां त्र्यादीनां वर्णानां विवृत्तिर्यमकम्' इति ॥ १ ॥

२ ] ति० टी०—पापानि पापजनकदुःखानि नाशयन्तम् लोकाह्लादजनकत्वात् समेधयन्तं वर्धयन्तम् विराजयन्तं प्रकाशयन्तम् अभितो यान्तमन्तःपुरदर्शनसाधनत्वेन खमध्यं प्राप्तम् ॥ २ ॥

रा० टी०—तदेव भङ्ग्यन्तरेणाह—लोकस्येत्यादिभिः । लोकस्य पापानि निशि जायमानचुरादीनि विनाशयन्तं महोदधिं समेधयन्तं भूतानि विराजयन्तं प्रकाशयन्तमभियान्तं शीतांशुं चन्द्रमसं ददर्श ॥ २ ॥

गो० टी०—लोकस्येति । पापानि दुःखानि ॥ २ ॥

३] ति० टी०—भुवि मन्दरस्था भात्यधिकसंनिधाना भवति। पुष्करस्था अह्नीति शेषः । सेदानीं निशाकरस्थेति पर्यायालंकारः पादचतुष्टये स्था इत्येकपदयमकं च भुवि मन्दरे प्रदोषे सागरेऽधिकलक्ष्मीसंनिधानमृषिवचनादेवावसेयम् ॥ ३ ॥

रा० टी०—येति । भुवि पृथिव्यां मध्ये या लक्ष्मीर्मन्दरस्था सती यथा भाति प्रकाशते प्रदोषेषु च सागरस्था या यथा प्रकाशते तोयेषु च पुष्करस्था सती या यथा प्रकाशते सा चारुनिशाकरस्था सती तथैव रराज । मन्दरसागरयोरधिकलक्ष्मीप्रकाशो महात्मनां प्रत्यक्ष इति गम्यते ॥ ३ ॥

गो० टी०—येति । भुवि मन्दरो लक्ष्मीवान् प्रदोषेषु सागरः तोयेषु पद्मं श्रीमत् तद्वत्तदानीं चन्द्रो विशिष्टलक्ष्मीको बभूवेत्यर्थः । अत्रान्यस्यान्यत्र संबन्धान्मन्दरादिलक्ष्मीरिवास्य लक्ष्मीरिति सादृश्याक्षेपान्निदर्शनालङ्कारः । तदुक्तं काव्यप्रकाशे निदर्शनायाम् 'अभिमान्यस्तु संबन्ध उपमापरिकल्पकः' इति ॥ ३ ॥

४ ] ति० टी०—हंसो यथेति । किंचिदाधारप्रतिष्ठितशुक्लवस्तुत्वमात्रेणाम्बरस्थचन्द्रे सादृश्यमिति कतकः । कुञ्जरोऽप्यत्र श्वेत एव अम्बरमपि तत्किरणैरेव श्वेतमिति बोध्यम् । अम्बरस्थोऽम्बरमध्यस्थः ॥ ४ ॥

रा० टी०—हंस इति । राजतपञ्जरस्थादिः हंसादिरिव अम्बरस्थः चन्द्रोऽपि बभ्राज ॥ ४ ॥

गो० टी०—हंस इति । राजतपञ्जरस्थः गगनगर्भस्य ज्योत्स्नाक्षालितत्वात् मन्दरकन्दरस्थः तस्य श्वेतगिरित्वात् गर्वितकुञ्जरस्थः नीलरूपस्य नभस उपर्यवस्थानात् । अत्र पुष्टत्वादीनां साधारणधर्माणामनुपादानाल्लुप्तोपमालंकारः ॥ ४ ॥

१ महदिति गो. पाठः ।

स्थितः ककुद्मानिव तीक्ष्णशृङ्गो महाचलः श्वेत इवोर्ध्वशृङ्गः ।
हस्तीव जाम्बूनदबद्धशृङ्गो विभाति चन्द्रः परिपूर्णशृङ्गः ॥ ५ ॥
विनष्टशीताम्बुतुषारपङ्को महाग्रहग्राहविनष्टपङ्कः ।
प्रकाशलक्ष्म्याश्रयनिर्मलाङ्को रराज चन्द्रो भगवाञ्शशाङ्कः ॥ ६ ॥
शिलातलं प्राप्य यथा मृगेन्द्रो महारणं प्राप्य यथा गजेन्द्रः ।
राज्यं समासाद्य यथा नरेन्द्रस्तथा प्रकाशो विरराज चन्द्रः ॥ ७ ॥
प्रकाशचन्द्रोदयनष्टदोषः प्रवृद्धरक्षःपिशिताशदोषः
रामाभिरामेरितचित्तदोषः स्वर्गप्रकाशो भगवान्प्रदोषः ॥ ८ ॥

---

५ ] ति० टी०—परिपूर्णशृङ्गः परिपूर्णकलङ्करूपहरिणशृङ्ग इत्यर्थः । जाम्बूनदबद्धेति स्वरूपकथनमात्रम् ॥ ५ ॥

रा० टी०—स्थित इति । तीक्ष्णशृङ्गः ककुद्मान् वृष इव स्थितः ऊर्ध्वशृङ्गः श्वेतो महाचलः हिमगिरिरिव जाम्बूनदबद्धशृङ्गः सुवर्णबद्धदन्तः हस्तीव परिपूर्णशृङ्गः उत्थितशृङ्गाकारङ्कवान् इत्यर्थः, चन्द्रो विभाति ॥ ५ ॥

गो० टी०—स्थित इति । परिपूर्णशृङ्गः परिपूर्णकलः । अत्र शृङ्गशब्दस्य विषाणाद्यर्थभेदेऽपि बिम्बप्रतिबिम्बभावेनौपम्यम् ॥ ५ ॥

६ ] ति० टी०—विनष्टः शीताम्बुतुषाररूपः शीतलजलबिन्दुसंपर्करूपः पङ्को यस्य तम् । तत्त्वं च वर्षाकालस्यातीतत्वाद्वस्तुतो हिमकालेऽपि विनष्टः शीतलजलबिन्दुसंपर्करूपः पङ्को यस्य तमित्यर्थः हिमालयस्यातिदूरत्वादिति भावः । विनष्टेति द्वितीयार्थे प्रथमामङ्गीकृत्येदम् । महाग्रहस्य सूर्यस्य ग्राहेण किरणसंक्रमेण विनष्टो विनाशितः पङ्कस्तमो येन सः, अत एव प्रकाशलक्ष्म्याश्रयेण हेतुना निर्मलाङ्को व्यक्तस्फुरल्लाञ्छनो रराज गगनमध्यं प्राप्येति शेषः ॥ ६ ॥

रा० टी०—विनष्टेति । विनष्टः हिमालयस्य दूरत्वात् अपगतः शीताम्बुतुषाररूपपङ्कः यस्य सः महाग्रहः सूर्यः तस्य ग्राहः किरणसंक्रमः तेन विनष्टः विनाशितः पङ्कस्तम्भो येन । किंच महान्तो ये ग्रहग्राहाः ग्रहवशकर्तारः महाग्रहा इत्यर्थः, ते विनष्टपङ्का निरस्तप्रकाशकत्वगर्वा येन सः प्रकाशलक्ष्म्याश्रयेण प्रकाशरूपसंपत्त्याश्रयेण निर्मलः अङ्को लाञ्छनं यस्य स शशाङ्को रराज ॥ ६ ॥

गो० टी०—विनष्टेति । शीताम्बु हिमाम्बु तुषाराः पृषताः पङ्कः तमः विनष्टाः शीताम्बुतुषारा एव पङ्काः यस्मिन् तथा । 'तुषारः शीकरे हिमे' इति विश्वः । महाग्रहाणां शुक्रबृहस्पत्यादीनां ग्राहेण ग्रहणेन आच्छादनेन विनष्टः पङ्को मलं यस्य सः महाग्रहग्राहविनष्टपङ्कः स्वतेजसा महाग्रहतिरस्कारेण व्यक्तनैर्मल्य इत्यर्थः। यद्वा महाग्रहः सूर्यः तस्य ग्राहेण किरणपरिग्रहेण विनष्टः विनाशितः पङ्कः तमः येन सः । तदा तरणिकिरणसंक्रमणेन देदीप्यमानमण्डल इत्यर्थः । तदुक्तं वराहमिहिरेण 'सलिलमये शशिनि रवेर्दीधितयो मूर्च्छितास्तमो नैशम् । क्षपयन्ति दर्पणोदरनिहिता इव मन्दिरस्यान्तः' इति । प्रकाशलक्ष्म्याश्रयनिर्मलाङ्कः तेजस्समृद्धियोगात्स्पष्टकलङ्कः । अतिधवले चन्द्रे परभागयोगेन कलङ्कस्याप्यौज्ज्वल्यं भवतीत्यर्थः । शशाङ्क इति । भूच्छायामयः शशरूपः अङ्कः यस्य सः तथा 'लोकच्छायामयं लक्ष्म तवाङ्के शशसन्निभम्' इति हरिवंशोक्तेः । भगवान्महाप्रभाववान् ॥ ६ ॥

७ ] ति० टी०—शिलातलं गुहाबहिःस्थम् ॥ ७ ॥

रा० टी०—शिलेति । शिलातलादीन्प्राप्य मृगेन्द्रप्रभृतिरिव चन्द्रो विरराज ॥ ७ ॥

गो० टी०—शिलेति । प्रकाशः प्रकाशमानः ॥ ७ ॥

८ ] ति० टी०—प्रकाशयुक्तचन्द्रस्योदयेनोर्ध्वमागमनेन नष्टो नाशितोऽन्तर्गृहेऽपि दोषस्तिमिरजो येन तथाभूतः प्रदोषो रजनीमुखं यामादूर्ध्वतनम् प्रवृद्धा वर्धिता रक्षसां पिशिताशनरूपा दोषा येन पिशितभक्षणस्य दोषत्वमविहितजीवहिंसाहेतुत्वात् । रामाणामभिरामविषयको रमणविषयक ईरितो निरस्तश्चित्तदोषः प्रणयकलहरूपो येन स्वर्गस्य सुखस्य प्रकाशो यतः, अत एव भगवान्पूज्यो रराजेत्यनुकर्षः ॥ ८ ॥

रा० टी०—प्रकाशेति । प्रकाशचन्द्रस्योदयेन नष्टो दोषस्तमो यस्य अत एव रामाणां स्त्रीणामभिरामाय ईरितः प्राप्तः चित्तदोषः पुरुषमनोत्यासक्तिर्यस्मिन् प्रवृद्धा रक्षस्सु पिशिताशदोषा यस्मिन् स्वर्गेऽपि प्रकाशः शोभनत्वेन प्रख्यातिर्यस्य भगवान् धर्मात्मभ्यः सफलैश्वर्यदातेत्यर्थः, प्रदोषः रराजेत्यनुकृष्यते—यद्वा प्रदोषे चन्द्रनियन्तृत्वमारोप्याह—प्रकाशेति । प्रकाशचन्द्रस्य प्रकाशविशिष्टचन्द्रमसः उदयेन नष्टो विनाशितः दोषः स्त्रीविषयकपुरुषदयाभावो येन प्रवृद्धाः रक्षस्सु पिशिताशदोषाः रुधिरपानरूपदुर्गुणाः यस्मिन् रामस्याभिरामाय सीतया सह रमणाय ईरितः चन्द्रो दापनेन प्रापितः चित्तदोषः सीताविषयकराममनोत्यासक्तिरूपदोषो दोषाभासो येन अत एव स्वर्गस्य सुखविशेषस्य प्रकाशः धर्मात्मसुप्रापकः अत एव भगवान् समर्थः प्रदोषो रराजेत्यनुकृष्यते ॥ ८ ॥

---

१ रराजेति गो. पाठः ।

तन्त्रीस्वराः कर्णसुखाः प्रवृत्ताः स्वपन्ति नार्यः पतिभिः सुपृक्ताः ।
नक्तंचराश्चापि तथा प्रवृत्ता विहर्तुमत्यद्भुतरौद्रवृत्ताः ॥ ९ ॥
मत्तप्रमत्तानि समाकुलानि रथाश्वभद्रासनसंकुलानि ।
वीरश्रिया चापि समाकुलानि ददर्श धीमान्स कपिः कुलानि ॥ १० ॥
परस्परं चाधिकमाक्षिपन्ति भुजांश्च पीनानधिविक्षिपन्ति ।
मत्तप्रलापानधिविक्षिपन्ति मत्तानि चान्योन्यमधिक्षिपन्ति ॥ ११ ॥
रक्षांसि वक्षांसि च विक्षिपन्ति गात्राणि कान्तासु च विक्षिपन्ति ।
रूपाणि चित्राणि च विक्षिपन्ति दृढानि चापानि च विक्षिपन्ति ॥ १२ ॥
ददर्श कान्ताश्च समालभन्त्यस्तथापरास्तत्र पुनः स्वपन्त्यः ।
सुरूपवक्त्राश्च तथा हसन्त्यः क्रुद्धाः पराश्चापि विनिःश्वसन्त्यः ॥ १३ ॥

---

गो० टी०—प्रकाशेति । प्रकाशेन चन्द्रोदयेन नष्टः दोषः तिमिरं यस्मिन्सः प्रवृद्धः रक्षसां पिशिताशनानां च दोषः सञ्चाररूपो यस्मिन्स तथा रामाभिः अभिरामैः कान्तैश्च ईरितः त्यक्तः चित्तदोषः कोपाभिमानरूपः यस्मिन् स्वर्गप्रकाशः स्वर्गतुल्यः तद्वदानन्दावह इत्यर्थः । भगवान् श्रीमान् 'भगः श्रीकाममाहात्म्यवीर्ययत्नार्ककीर्तिषु' इत्यमरः । प्रदोषगत इति शेषः ॥ ८ ॥

९ ] ति० टी०—सुपृक्ता भेदग्रहाविषयाः । 'स्ववृत्ताः' इति पाठे स्वं स्वीयं सहजपातिव्रत्यलक्षणं वृत्तं चारित्रं यासां ताः । नक्तंचरा उलूकादयो राक्षसाश्च तथा विहर्तुं प्रवृत्ताः ॥ ९ ॥

रा० टी०—तन्त्रीति । कर्णसुखाः श्रोत्रानन्दप्रदाः तन्त्रीस्वरा वीणानादाः प्रवृत्ता पतिभिः सुपृक्ताः संयुक्ता नार्यः राक्षसपत्न्यः स्वपन्ति अत्यद्भुतरौद्रवृत्ता नक्तंचरा राक्षसा विहर्तुं प्रवृत्ताः ॥ ९ ॥

गो० टी०—तन्त्रीति । स्पष्टम् ॥ ९ ॥

१० ] ति० टी०—ऐश्वर्यादिमत्ताः प्रमत्ता मद्यादिना येषु तानि, अत एव समाकुलानि रक्षसां गृहाणि रथाश्वेति सर्वयानोपलक्षणम् । भद्रासनं स्वर्णपीठम् ॥ १० ॥

रा० टी०—मत्तेति । मत्तैः ऐश्वर्यादिहेतुकमदविशिष्टैर्युक्ताः प्रमत्ता मद्यपानादिहेतुकमदविशिष्टाः सन्ति येषु तानि रथादिभिः संकुलानि व्याप्तानि वीरश्रिया वीरसंपत्त्या च समाकुलानि व्याप्तानि समाकुलानि परस्परं संमिलितानि कुलानि भवनसमूहान् कपिः स हनुमान् ददर्श । भद्रासनं स्वर्णपीठम् ॥ १० ॥

गो० टी०—मत्तेति । मत्ताः मधुमदक्षीबाः प्रमत्ताः प्रस्तुतकार्यविस्मारिणः मत्तप्रमत्तजनयोगात् कुलान्यपि तथोच्यन्ते । कुलानि गृहाणि समाकुलानि समाकुलजनानि वीरश्रिया वीरलक्ष्म्या । वीर इति भिन्नं पदं वा कपिविशेषणम् ॥ १० ॥

११ ] ति० टी०—आक्षिपन्त्युत्तरप्रत्युत्तरं कुर्वन्ति । अधिविक्षिपन्ति परस्परमित्यनुकर्षः । मत्तप्रलापानधिकं विक्षिपन्ति मुञ्चन्ति भर्त्सयन्ति वा । मत्तानि रक्षांसीत्याकर्षः । अधिक्षिपन्ति तिरस्कुर्वन्ति ॥ ११ ॥

१२ ] ति० टी०—वक्षांसि विक्षिपन्ति परस्परमास्फालयन्ति । गात्राणां हस्तादीनां कान्तासु क्षेपो न्यासः । चित्राणि रूपाणि नानाविधवेषान्विक्षिपन्ति कुर्वन्ति कान्ताप्रीतये संपादयन्ति । धनुषां विक्षेपो विस्फारणम् । ईदृशानि रक्षांसि ददर्श । शत्रन्तान्येतानि ॥ १२ ॥

रा० टी०—परस्परमिति । मत्तानि रक्षांसि परस्परम् अधिकमाक्षिपन्ति उत्तरप्रत्युत्तराभ्याम् आक्षेपवचनमुच्चारयन्ति अत एव भुजान् अधिविक्षिपन्ति परिक्षिपन्ति अत एव मत्तप्रलापान् अधिविक्षिपन्ति अधिकमुच्चारयन्ति अत एव अन्योन्यम् अधिक्षिपन्ति तिरस्कुर्वन्ति अत एव वक्षांसि विक्षिपन्ति ताडयन्ति कान्तासु स्वस्वपत्नीषु गात्राणि करादीनि विक्षिपन्ति संस्थापयन्ति रूपाणि प्रशस्तरूपविशिष्टानि चित्राणि विक्षिपन्ति कुर्वन्ति चापानि विक्षिपन्ति आक्षिपन्तीत्यादीनां शत्रन्तत्वे तु मत्तानि रक्षांसि ददर्शेति पूर्वेणोत्तरेण वाऽन्वयो बोध्यः । श्लोकद्वयं संमिलितान्वयि ॥ ११ ॥ १२ ॥

गो० टी०—परस्परं चेत्यादिश्लोकद्वयमेकान्वयम् । ददर्शेति संबध्यते । आक्षिपन्तीत्यादीनि शत्रन्तानि रक्षोविशेषणानि । आक्षिपन्ति अपहसन्ति अधिविक्षिपन्ति अन्योन्यस्योपरि दधति अधिविक्षिपन्ति अधिकं मुञ्चन्ति अधिक्षिपन्ति भर्त्सयन्ति विक्षिपन्ति वितन्वन्ति चित्राणि रूपाणि विविधान् वेषान् । विक्षिपन्ति वितन्वन्ति । चापानि चापान् विक्षिपन्ति विस्फारयन्ति ॥ ११ ॥ १२ ॥

१३ ] ति० टी०—समालभन्त्यः चन्दनादीनीति शेषः । द्वितीयार्थे इमाः प्रथमाः । तत्रासंस्ताश्च ददर्शेति शेषो वा ॥ १३ ॥

रा० टी०—ददर्शेति । समालभन्त्यः चन्दनाद्यनुलेपं कुर्वन्त्यः 'समालम्भोऽनुलेपनम्' इत्यमरः । अपराः अन्याः स्वपन्त्यः अपराः स्वरूपवक्त्रा अवलोकयेति शेषः, हसन्त्यः परा विनि-

---

१ स्वना इति गो. पाठः । २ वृत्ता इति गो. पाठः । ३ मिक्षिपन्तीति गो. पाठः । ४ स्वरूपेति गो. रा. पाठः ।

महागजैश्चापि तथा नदद्भिः सुपूजितैश्चापि तथा सुसद्भिः ।
रराज वीरैश्च विनिःश्वसद्भिर्ह्रदो भुजङ्गैरिव निःश्वसद्भिः ॥ १४ ॥
बुद्धिप्रधानान्रुचिराभिधानान्संश्रद्दधानाञ्जगतः प्रधानान् ।
नानाविधानान्रुचिराभिधानान्ददर्श तस्यां पुरि यातुधानान् ॥ १५ ॥
ननन्द दृष्ट्वा स च तान्सुरूपान्नानागुणानात्मगुणानुरूपान् ।
विद्योतमानान्स च तान्सुरूपान्ददर्श कांश्चिच्च पुनर्विरूपान् ॥ १६ ॥
ततो वरार्हाः सुविशुद्धभावास्तेषां स्त्रियस्तत्र महानुभावाः ।
प्रियेषु पानेषु च सक्तभावा ददर्श तारा इव सुस्वभावाः ॥ १७ ॥
स्त्रियो ज्वलन्तीस्त्रपयोपगूढा निशीथकाले रमणोपगूढाः ।
ददर्श काश्चित्प्रमदोपगूढा यथा विहङ्गा विहगोपगूढाः ॥ १८ ॥

---

स्वसन्त्यः कान्ता ददर्श अपराः स्वरूपवक्रा इति कान्ताविशेषणत्वे तु नावलोक्येति शेषप्रयोजनं समुदायस्य कर्मतयाऽन्वयात् । 'तथाचोत्पत्तयः शुभाः' इत्यादाविव न द्वितीया ॥१३॥

गो० टी०–ददर्शेति । समालभन्त्यः अङ्गरागेणानुलिम्पन्त्यः 'समालपन्त्य' इति च पाठः । सर्वत्र व्यत्ययेन द्वितीयार्थे प्रथमा ॥ १३ ॥

१४ ] ति० टी०–सुसद्भिः सुतरां सन्तो विभीषणादयस्तै रराज। पुरमिति शेषः विनिःश्वसद्भिः स्वापेक्षितयोद्धृलाभात्॥१४॥

रा० टी०–महागजैरिति । नदद्भिर्महागजैः सुपूजितैः सुसद्भिः विभीषणादिभिः विनिःश्वसद्भिर्भुजङ्गैरुपलक्षितो महाह्रद इव रराज ॥ १४ ॥

गो० टी०–महागजैरिति । सा पुरीति शेषः । सुसद्भिः सुतरां सद्भिः विनिःश्वसद्भिः युद्धयोग्यवीरालाभात् ॥ १४ ॥

१५ ] ति० टी०–बुद्धिः प्रधानं प्रधानगुणो येषाम् रुचिरमभिधानं वचनं येषाम् सम्यक्श्रद्दधानानास्तिकान् रुचिराभिधानान्रुचिरनाम्नः । नानाप्रकारं विधानं वेषादेर्येषां तान् ॥ १५ ॥

रा० टी०–बुद्धीति । बुद्धिप्रधानान् अतिबुद्धिमतः रुचिराभिधानान् शोभनवचनान् संश्रद्दधानान् गुरुवाक्यादौ विश्वासयुक्तान् जगतः इतस्ततो गच्छतः नानाविधान् येषां तान् रुचिराभिधानान् शोभननामयुक्तान् प्रधानान् यातुधानान् तस्यां लङ्कायां ददर्श ॥ १५ ॥

गो० टी०–बुद्धीति । बुद्धिप्रधानान् बुद्धया श्रेष्ठान् प्रधानबुद्धीन्वा उत्तमबुद्धीनित्यर्थः, रुचिराभिधानान् शोभनव्यवहारान्संश्रद्दधानान् आस्तिकान् । नानाविधानान्नानाकारान् । रुचिराभिधानान् सुनाम्नः ॥ १५ ॥

१६ ] ति० टी०–आत्मगुणानुरूपांस्तदुचितव्यवहारवतः । कांश्चित्पुनर्विरूपानपि विद्योतमानान्सुरूपानिव ददर्शेत्यर्थः॥१६॥

रा० टी०–ननन्देति । सुरूपान् आत्मगुणानुरूपान् आत्मगुणेन रामसेवकत्वेन अनुरूपान् स्वसदृशान् विद्योतमानान् विभीषणादीन् दृष्ट्वा स तान् चोरत्वेन सहितान् सुरूपान् विरूपांश्च ददर्श ॥ १६ ॥

गो० टी०–ननन्देति । आत्मगुणानुरूपान् आत्मगुणानुरूपव्यवहारान् ॥ १६ ॥

१७] ति० टी०–वरार्हाः श्रेष्ठविभूषणादियोग्या उत्तमोत्तमरूपाश्च । भावाः कटाक्षादयः । अनुभावः प्रभावः । भावोऽन्तःकरणम् । तारास्तारकाः ॥ १७ ॥

रा० टी०–तत इति । ततोऽनन्तरं वरार्हाः उत्तमपूजनसामग्रीमतीः सुविशुद्धः भावोऽन्तःकरणं यासाम् अत एव सुस्वभावाः महानुभावाः अतिप्रभाववतीः प्रियेषु प्रीत्युत्पादकेषु पानेषु सक्तः भावो मनो यासां ताः तारा इव तारकासदृशीः तेषां स्त्रियः तत्र लङ्कायां ददर्श ॥ १७ ॥

गो० टी०–तत इति । वराणां श्रेष्ठानाम् अर्हाः वरार्हाः । सुविशुद्धभावाः कान्तेषु निर्मलहृदयाः महानुभावाः पातिव्रत्यरूपमहाप्रभावाः । यद्वा महानुभावाः अनुभावाः कटाक्षभुजक्षेपादयः सुप्रभावाः शोभनवैभवाः ॥ १७ ॥

१८ ] ति० टी०–ज्वलन्ती रूपसंपदा ज्वलन्तीरिव । त्रपा लज्जा । प्रमदेन हर्षेणोपगूढाः संबद्धा यथा विहंगाः विहंगीरिवेत्यर्थः । इन्द्रनीलमणिमयोर्ध्वगेहेषु नीलतमःसदृशेषु शयनात्तत्सादृश्यम् ॥ १८ ॥

रा० टी०–श्रियेति । श्रिया रूपादिसंपत्त्या ज्वलन्तीः प्रकाशमानाः त्रपया लज्जया उपगूढाः युक्ताः रमणोपगूढाः पत्यालिङ्गिताः अत एव प्रमदोपगूढाः प्रमोदविशिष्टाः काश्चित् स्त्रियः विहगेन पक्षिविशेषेणोपगूढा विहङ्गा इव ददर्श । अत्युन्नतप्रासादेषु शयनादीदृगुपमानोपमेयभावः ॥ १८ ॥

गो० टी०–श्रियेति । प्रमदोपगूढाः हर्षोपगूढाः । विहङ्गाः विहङ्गीः ॥ १८ ॥

---

१ प्रभावा इति गो. पाठः । २ श्रियेति गो. रा. पाठः । ३ कुसुमेति गो. पाठः ।

अन्याः पुनर्हर्म्यतलोपविष्टास्तत्र प्रियाङ्के सुसुखोपविष्टाः ।
भर्तुः परा धर्मपरा निविष्टा ददर्श धीमान्मदनोपविष्टाः ॥ १९ ॥
अप्रावृताः काञ्चनराजिवर्णाः काश्चित्परार्ध्यास्तपनीयवर्णाः ।
पुनश्च काश्चिच्छशलक्ष्मवर्णाः कान्तप्रहीणा रुचिराङ्गवर्णाः ॥ २० ॥
ततः प्रियान्प्राप्य मनोभिरामान्सुप्रीतियुक्ताः सुमनोभिरामाः ।
गृहेषु हृष्टाः परमाभिरामा हरिप्रवीरः स ददर्श रामाः ॥ २१ ॥
चन्द्रप्रकाशाश्च हि वक्रमाला वक्राः सुपक्ष्माश्च सुनेत्रमालाः ।
विभूषणानां च ददर्श मालाः शतह्रदानामिव चारुमालाः ॥ २२ ॥
नत्वेव सीतां परमाभिजातां पथि स्थिते राजकुले प्रजाताम् ।
लतां प्रफुल्लामिव साधुजातां ददर्श तन्वीं मनसाऽभिजाताम् ॥ २३ ॥

---

१९ ] ति० टी०—भर्तुः परा उत्कृष्टत्वेनाभिमताः । धर्मपरा भर्तृसेवालक्षणधर्मतत्पराः । निविष्टा ऊढाः । 'निवेशः शिविरोद्वाहविन्यासेषु' इति कोशः । मदन उपविष्टो यासु मदनाश्रया इत्यर्थः ॥ १९ ॥

रा० टी०—अन्या इति । अन्या उक्ताभ्यो भिन्ना हर्म्यतलोपविष्टाः मदनोपविष्टाः कामयुक्ताः अत एव तत्र हर्म्ये प्रियाङ्केषु सुखोपविष्टाः भर्तुः पराः तर्पिकाः तत्र हेतुर्धर्मपरेषु पतिसेवारूपधर्मेषु आनिविष्टाः स्त्रियः धीमान् हनुमान् ददर्श ॥ १९ ॥

गो० टी०—अन्या इति । निविष्टाः ऊढाः पाणिगृहीता इत्यर्थः । 'निवेशः शिबिरोद्वाहन्यासेषु' इति विश्वः ॥ १९ ॥

२० ] ति० टी०—अप्रावृता उत्तरीयहीनाः काञ्चनराजिवर्णाः कनकरेखाकाराः परार्ध्या उत्तमाः तपनीयवर्णास्तप्तस्वर्णवर्णाः शशलक्ष्मा चन्द्रः कान्तप्रहीणाः प्रियवियुक्ताः रुचिराङ्गवर्णाः सुन्दरदेहकान्तयः प्रथमं ददर्श ॥२०॥

रा० टी०—अप्रावृता इति । अप्रावृताः प्रावरणरहिताः कान्तप्रहीणाः पतिर्रहिताः अत एव काञ्चनराजिवर्णाः सुवर्णरेखासदृशीः कृशाङ्गीरित्यर्थः, काश्चिद्ददर्श । परार्ध्याः अत्युत्तमाः तपनीयवर्णाः सुवर्णवर्णसदृशवर्णविशिष्टाः अतः एव शशलक्ष्मवर्णाः चन्द्रकान्तीः अत एव रुचिराङ्गवर्णाः काश्चिद्ददर्शेति पूर्वेणान्वयः ॥ २० ॥

गो० टी०—अप्रावृता इति । अप्रावृताः अनवकुण्ठिताः काञ्चनराजिवर्णाः कनकरेखाकाराः तपनीयवर्णाः तप्तकाञ्चनवर्णाः शशलक्ष्मवर्णाः चन्द्रपाण्डुराः । कान्तप्रहीणाः विरहिण्यः ॥ २० ॥

२१ ] ति० टी०—प्रियान्प्राप्य प्रीतियुक्ता आसन् । सुमनोभिः पुष्पैरभिरामाः, अत एव हृष्टाः परमया शोभयाऽभिरामाः स्वस्वकान्तमनोहरा रामा गृहेषु ददर्श । 'प्रसमीक्ष्य रामाः' इति पाठे प्रियान्प्राप्य तान्समीक्ष्य प्रीतियुक्ता रामास्तैः प्रिये रम्यमाणाः, अत एव गृहेषु हृष्टा रामाः । ददर्शेति शेषः ॥२१॥

रा० टी०—तत इति । ततोऽनन्तरं मनोभिरामान् प्रियान् प्राप्य सुप्रीतियुक्ताः अत्यन्तप्रीतिविशिष्टाः सुमनोभिरामाः अत्यन्तमनोभिरामदात्र्यः परमाभिरामाः अतिसुन्दरीः हृष्टाः रामाः गृहेषु ददर्श ॥ २१ ॥

गो० टी०—तत इति । प्रियान्प्राप्य अभिसृत्य । सुप्रीतियुक्ताः मनोभिरामाः रामाः प्रसमीक्ष्य गृहेषु रामाश्च ददर्श । अभिसारिकाः कुलपालिकाश्च ददर्शेत्यर्थः ॥ २१ ॥

२२ ] ति० टी०—चद्वौ पादपूरकौ । वक्रमाला वक्रसमूहाः वक्राः वक्रप्रेक्षणाः । सुपक्ष्माः शोभनपक्ष्मयुक्ता नेत्रमाला ददर्श । शतह्रदानां माला इव भूषणानां माला ददर्श । 'वक्राक्षिपक्ष्मा' इति पाठेऽक्षिपदमधिकम् । वक्रपक्ष्मा इत्येवोचितम् । पक्ष्मसु वक्रत्वमपि किमित्यपि चिन्त्यम् ॥ २२ ॥

रा० टी०—चन्द्रेति । चन्द्रप्रकाशाः चन्द्रसदृशप्रकाशविशिष्टाः वक्रमालाः मुखसमूहान् वक्राः कुटिलनिरीक्षणाः सुपक्ष्माः शोभनपक्ष्मविशिष्टाः सुनेत्रमालाश्च शतह्रदानां चारुमाला इव विभूषणानां मालाश्च ददर्श ॥ २२ ॥

गो० टी०—चन्द्रेति । वक्रनेत्रदर्शनं मानुषीत्वराक्षसीत्वविवेकार्थम् । आभरणदर्शनं स्वदृष्टसीताभरणतुल्याभरणदर्शनार्थम् ॥ २२ ॥

२३ ] ति० टी०— पथि स्थिते धर्ममार्गस्थे । नत्वेव ददर्शेत्यन्वयः । साधुजातामिति लताविशेषणम् । मनसाभिजातां धात्रा मनसा सृष्टाम् ॥ २३ ॥

रा० टी०—नेति । मनसा परमात्मसंकल्पमात्रेण पथि सनातनधर्ममार्गे स्थिते राजकुले अभिजातां प्रादुर्भूतां परमत्यैश्वर्यप्रापकमभिजातं प्राकट्यं यस्याः ताम् अत एव साधुजातां शोभनप्राकट्यवर्तीं किं च साधोः साधुतायाः रामकर्तृकमहात्मोपकृतेरित्यर्थः जातं जन्म यस्याः तां प्रजातां प्रफुल्ल-

---

१ प्रियाङ्कोष्विति गो. रा. पाठः । २ मदनाभिविष्टा इति गो. पाठः । ३ प्रसमीक्ष्य रामा इति गो. पाठः । ४ वक्राक्षिपक्ष्मा इति गो. पाठः ।

सनातने वर्त्मनि संनिविष्टां रामेक्षणीं[1] तां मदनाभिविष्टाम् ।
भर्तुर्मनः श्रीमदनुप्रविष्टां स्त्रीभ्यः पराभ्यश्च सदा विशिष्टाम् ॥ २४ ॥
उष्णार्दितां सानुसृतास्रकण्ठीं पुरा वरार्होत्तमनिष्ककण्ठीम् ।
सुजातपक्ष्मामभिरक्तकण्ठीं वने प्रवृत्तामिव नीलकण्ठीम् ॥ २५ ॥
अव्यक्तरेखामिव चन्द्रलेखां पांसुप्रदिग्धामिव हेमरेखाम् ।
क्षतप्ररूढामिव वर्णरेखां[2] वायुप्रभुग्नामिव हेमरेखाम्[3] ॥ २६ ॥
सीतामपश्यन्मनुजेश्वरस्य रामस्य पत्नीं वदतां वरस्य ।
बभूव दुःखोपहतश्चिरस्य[4] प्लवङ्गमो मन्द इवाचिरस्य ॥ २७ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये सुन्दरकाण्डे पञ्चमः सर्गः ॥ ५ ॥

---

लतामिव तन्वीं सूक्ष्माङ्गीं सनातने परंपराप्राप्ते वर्त्मनि पतिव्रताधर्मे सन्निविष्टाम् अत एव रामेक्षणीं राममात्रेक्षणकर्त्रीं मदने वियोगेन प्राप्तदैन्ये अभिविष्टां स्थितां श्रीमत् भर्तुर्मनः अनु प्रविष्टां पराभ्यः स्त्रीभ्यो लक्ष्म्यादिभ्यः सदा नित्यं विशिष्टामधिकाम् उष्णार्दितां वियोगजनिततापपीडिताम् अत एव सानुसृतास्रैः निरन्तरनिस्सृतबाष्पैः सहितः कण्ठो यस्याः तां पुरा संयोगकाले वरः अर्हः प्रशंसा यस्य तेन उत्तमनिष्केण विशिष्टभूषणेन युक्तः कण्ठो यस्यास्तां सुजातपक्ष्मां शोभनपक्ष्मविशिष्टां अभिरक्तः मधुरस्वरवत्त्वेनानुरागोत्पादकः कण्ठो यस्यास्तां नीलकण्ठीं मयूरीमिव वने प्रवृत्तां सीतां नैव ददर्श । श्लोकत्रयमेकान्वयि ॥ २३–२५ ॥

गो० टी०—न त्वित्यादि । परमाभिजाताम् अत्यन्ताभिरामाम् साधुजातां सुरूपाम् मनसाभिजाताम् अयोनिजामित्यर्थः ॥ २३ ॥

२४ ] ति० टी०—सनातने वर्त्मन्यविच्छेदप्रवृत्ते पातिव्रत्यमार्गे । राममीक्षते ध्यायति रामेक्षणी ताम् मदनेन रामविषयेणाभिविष्टां व्याप्ताम् श्रीमद्भर्तुर्मनोऽनुप्रविष्टाम् । अनेन परस्परानुरागो ध्वनितः ॥ २४ ॥

गो० टी०—सनातन इत्यादि । सनातने अविच्छिन्ने वर्त्मनि पातिव्रत्यधर्मे रामेक्षणे अन्तो निश्चयो यस्यास्ताम् । श्रीमत्सीताचिन्तनश्रीमत् विशिष्टाम् उत्कृष्टाम् ॥ २४ ॥

२५ ] ति० टी०—उष्णार्दितां विरहतापपीडिताम् अनुसृतास्रेण प्रवृत्तबाष्पेण सह वर्तमानः कण्ठो यस्यास्ताम् अत्र ङीपार्षः । 'कण्ठाम्' इति वा पाठः । पुरा रामसंनिधिकाले वराणामुत्तमभूषणानामर्हः, अत एवोत्तमनिष्क उत्तमभूषणः कण्ठो यस्यास्ताम् । अभिरक्तो मधुरस्वरः कण्ठो यस्यास्ताम् । नीलकण्ठी मयूरी ॥ २५ ॥

गो० टी०—उष्णेति । सानुसृतास्रकण्ठीम् अनुगतास्रेण अनुगतबाष्पेण कण्ठेन सह वर्तमानाम् । पुरा रामपार्श्वावस्थानकाले वरार्होत्तमनिष्ककण्ठीं वरार्हः उत्तमश्च निष्कः कण्ठे यस्याः ताम् उरःकण्ठसंबन्धी भूषणविशेषो निष्कः । अभिरक्तकण्ठीं स्निग्धकण्ठीम् ॥ २५ ॥

२६ ] ति० टी०—अव्यक्ताश्चादिनाऽस्पष्टा रेखा रेखाकारो यस्यास्ताम् प्रदिग्धां रूषिताम् क्षतप्ररूढां क्षतेन प्ररूढामुत्पन्नां वर्णरेखां बाणव्रणचिह्नं तद्वद्रामस्येदानीं रावणस्य वा ॥ २६ ॥

रा० टी०—अव्यक्तेति । न व्यक्ता रेखा कलङ्को यस्यां तां चन्द्ररेखां द्वितीयाचन्द्रमिव पांशुप्रदिग्धां धूलीधूसरां हेमरेखामिव क्षतेन बाणकृतहिंसनेन प्ररूढां निष्पन्नां वर्णरेखां वर्णनीयव्रणचिह्नमिव वायुप्रभग्नां वायुना चालितां मेघरेखामिव रामस्य पत्नीं सीतां चिरस्य बहुकालमपश्यन् सन् प्लवङ्गमो हनुमान् अचिरस्य अल्पकालं दुःखोपहतः सन् मन्दः शिथिल इव बभूव । श्लोकद्वयमेकान्वयि ॥ २६ ॥ २७ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ सुन्दरकाण्डे पञ्चमः सर्गः ॥ ५ ॥

गो० टी०—अव्यक्तेति । अव्यक्तरेखाम् अव्यक्तस्वरूपां चन्द्ररेखां चन्द्रकलामिव स्थिताम् अत्यन्तकृशत्वे कान्तिहीनत्वे च दृष्टान्तोऽयम् । पांसुप्रदिग्धां पांसुकलुपितां हेमरेखां कनकशलाकामिव स्थिताम् । स्वतःशुद्धस्वभावस्य आगन्तुकमालिन्ये । दृष्टान्तोऽयम् क्षतप्ररूढां क्षतेन प्ररूढाम् औषधादिना समाहिताम् अन्तःशल्यदोषवर्तीं बहिस्समाहिताम् बाणरेखां बाणक्षतिमिव स्थिताम् अन्तर्वेदनातिशये दृष्टान्तोयम् । वायुप्रभग्नामिव मेघलेखां पुनरसमाधेयशैथिल्ये दृष्टान्तोऽयम् ॥ २६ ॥

२७ ] ति० टी०—चिरस्य चिरमित्यर्थेऽव्ययम् । चिरमन्विष्याप्यपश्यन्नचिरस्य सद्यो मन्द इवान्वेषणायकुशल इव दुःखोपहतो बभूव । अत्र सर्गे यमकालंकारः ॥ २७ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये सुन्दरकाण्डे पञ्चमः सर्गः ॥ ५ ॥



१ रामेक्षणान्तामिति गो. पाठः । २ बाणेति गो. पाठः । ३ मेघेति गो. रा. पाठः । ४ दुःखाभिहत इति गो. पाठः ।

## षष्ठः सर्गः ।

हनुमान्पुनर्लङ्कालङ्करणभूतं रावणनिवासमेत्य तदन्तिकस्थप्रहस्तादिभवनेषु वैदेहीमन्विष्य रावणगृहं प्राविशत् ।

स निकामं विमानेषु [1]विचरन्कामरूपधृक् । विचचार [2]कपिर्लङ्कां लाघवेन समन्वितः ॥ १ ॥
आससाद [3]च लक्ष्मीवान्राक्षसेन्द्रनिवेशनम् । प्राकारेणार्कवर्णेन भास्वरेणाभिसंवृतम् ॥ २ ॥
रक्षितं राक्षसैर्भीमैः सिंहैरिव महद्वनम् । समीक्षमाणो भवनं चकाशे कपिकुञ्जरः ॥ ३ ॥
रूप्यकोपहितैश्चित्रैस्तोरणैर्हेमभूषणैः । विचित्राभिश्च कक्ष्याभिर्द्वारैश्च [4]रुचिरावृतम् ॥ ४ ॥
गजास्थितैर्महामात्रैः शूरैश्च विगतश्रमैः । उपस्थितमसंहार्यैर्हयैः स्यन्दनयायिभिः ॥ ५ ॥
सिंहव्याघ्रतनुत्राणैर्दान्तकाञ्चनराजतीः । घोषवद्भिर्विचित्रैश्च सदा विचरितं रथैः ॥ ६ ॥
बहुरत्नसमाकीर्णं पराध्यासनभूषितम् । महारथसमावापं महारथमहास्वनम् ॥ ७ ॥

---

गो टी०—सीतामिति। चिरस्यापश्यन् चिरकालं निरीक्ष्याप्यपश्यन्। अचिरस्य अचिरेण सपदीत्यर्थः। मन्दो मुग्ध इव दुःखाभिहतो बभूव 'मुग्धो मन्दो विवर्णश्च' इति हलायुधः॥२७॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने पञ्चमः सर्गः ॥ ५ ॥

---

१]ति० टी०-विमानेषु सप्तभूमिप्रासादेषु। लाघवेन शैघ्र्येण१

रा० टी०—सीतान्वेषणमेव वर्णयन्नाह—स इत्यादिभिः। लाघवेनातिवेगेन समन्वितः कपिर्हनूमान् विमानेषु सप्तभूमिकप्रासादेषु विचरन् सन् निकामं यथेच्छं लङ्कां विचचार॥१॥

गो० टी०—स निकाममित्यादि । विमानेषु विपण्णः विमानेषु सीतामदृष्ट्वा विपण्ण इत्यर्थः। लाघवेन वेगेन ॥१॥२॥

२ ] ति० टी०—राक्षसेन्द्रनिवेशनमाससाद ॥ २ ॥

रा० टी०—आससादेति। लक्ष्मीवान् अतिवीर्यसंपत्तिविशिष्टो हनुमान् प्राकारेणाभिसंवृतं राक्षसेन्द्रनिवेशनमाससाद प्राप ॥ २ ॥

३ ] ति० टी०—चकाशे चन्द्रसाहित्याद्व्यक्तान्वेषणक्रियो बभूवेत्यर्थः ॥ ३ ॥

रा० टी०—रक्षितमिति। सिंहैर्महद्वनमिव राक्षसैः रक्षितं भवनं समीक्षमाणः कपिकुञ्जरश्चकाशे ॥ ३ ॥

गो० टी०—रक्षितमिति। चकाशे जहर्षेत्यर्थः ॥ ३ ॥

४] ति०टी०—रूप्यकं रजतं तेनोपहितैः शोभार्थं लिखितैः४

रा० टी०—रूप्यकेति। रूप्यकेण रजतेन उपहितैर्लिखितैः चित्रैः हेमभूषितैः तोरणैर्बहिर्द्वारैश्च रुचिरैः द्वारैरन्तर्द्वारैश्च कक्ष्याभिश्च आवृतम् ॥ ४ ॥

गो० टी०—रूप्यकेत्यादि। रूप्यकोपहितैः रजतनिर्मितैः कक्ष्याभिः प्रकोष्ठैः असंहार्यैः अवध्यैः स्यन्दनयायिभिः स्यन्दनवाहकैः। सिंहव्याघ्रतनुत्राणैः सिंहव्याघ्रचर्मपरिवृतैरित्यर्थः। महारथसमावासं महारथानां रक्षसामाकरं महारथमहास्वनं महतां रथानां महान् स्वनः यस्मिन्। अन्तपालैः बाह्यरक्षिभिः। राक्षसेन्द्रनिवेशनं राक्षसेन्द्राः राक्षसश्रेष्ठाः निविशन्ते समीपे निवसन्त्यस्मिन्निति राक्षसेन्द्रनिवेशनमित्यर्थः। अन्यथा वक्ष्यमाणवेश्मपदेन पुनरुक्तिः स्यात्। संह्रादः शब्दः। समुद्रस्वनवन्निःस्वनतीति समुद्रस्वननिःस्वनम् पचाद्यच्। तत्प्रसिद्धम् राजगुणसंपन्नं राजोपचारैर्धूपादिभिः संपन्नम्। अगुरुचन्दनैरित्यत्रापि संपन्नमिति संबध्यते। पर्वसु हुतं होमो यस्मिन् तत् पर्वहुतम्। समुद्रमिव निस्स्वनं निःशब्दम्। रावणभीत्या जनकोलाहलरहितमित्यर्थः। समुद्रस्वनमिति तु बाह्यकक्ष्यापेक्षया ॥ ४-१४ ॥

५ ] ति० टी०—गजास्थितैर्गजारूढैः। महामात्रैर्हस्तिपकैः उपस्थितं युक्तम् असंहार्यैरप्रतिहतवेगैः, स्यन्दनयायिभिः स्यन्दनवाहकैः प्रशस्ताश्वैरित्यर्थः ॥ ५ ॥

रा० टी०—गजेति। गजास्थितैः गजारूढैः महामात्रैः असंहार्यैः संहर्तुमशक्यैः शूरैश्च स्यन्दनयायिभिः रथवाहकैर्हयैश्च उपस्थितं संप्राप्तम् ॥ ५ ॥

६ ] ति० टी०—सिंहव्याघ्रतनुत्राणत्वादिरथविशेषणम्। दन्तादिविकारा दान्तादयस्तत्स्थप्रतिमास्ता धरद्भिरिति शेषः। घोषवत्त्वं किङ्किणीभिः ॥ ६ ॥

रा० टी०—सिंहव्याघ्राः सिंहव्याघ्रचर्मनिर्मितानि तनुत्राणानि वर्माणि येषु तैः दान्तकाञ्चनराजतीः दन्तादिमयीः प्रतिमाः संधारयद्भिरिति शेषः, घोषवद्भिश्चित्रैः रथैः सदा विचरितं संप्राप्तम्६॥

७ ] ति० टी०—महतां रथानामावापः स्थानं समन्ताद्यस्मिंस्तत्। महारथानाम् 'एको दशसहस्राणि योधयेद्यस्तु धन्विनाम्। शस्त्रशास्त्रप्रवीणश्च स महारथ उच्यते ॥' इत्युक्तलक्षणमहारथानां महासनं सदा वासस्थानम् ॥ ७ ॥

रा० टी०—बहुरत्नसमाकीर्णं परार्ध्यासनैर्भूषितं महारथानाम् 'एको दशसहस्राणि योधयेद्यस्तु धन्विनाम्। शस्त्रशास्त्रप्रवीणश्च स महारथ उच्यते' इत्यादावुक्तानां समावापः सदा स्थितिर्यस्मिन् अत एव महारथानां महासनानि यस्मिन् तत् ॥ ७ ॥

---

१ विपण्ण इति गो. पाठः। २ पुनरिति गो. पाठः। ३ अथेति गो. पाठः। ४ घोरैरिति गो. पाठः। ५ भूषितैरिति गो. पाठः। ६ रुचिरैर्वृतमिति गो. पाठः। ७ भाजनमिति गो. पाठः।

दृश्यैश्च परमोदारैस्तैस्तैश्च मृगपक्षिभिः । विविधैर्बहुसाहस्रैः परिपूर्णं समन्ततः ॥ ८ ॥
विनीतैरन्तपालैश्च रक्षोभिश्च सुरक्षितम् । मुख्याभिश्च वरस्त्रीभिः परिपूर्णं समन्ततः ॥ ९ ॥
मुदितप्रमदारत्नं राक्षसेन्द्रनिवेशनम् । वराभरणसंह्रादैः समुद्रस्वननिःस्वनम् ॥ १० ॥
तद्राजगुणसंपन्नं मुख्यैश्च वरचन्दनैः । महाजनसमाकीर्णं सिंहैरिव महद्वनम् ॥ ११ ॥
भेरीमृदङ्गाभिरुतं शङ्खघोषविनादितम् । नित्यार्चितं पर्वसुतं पूजितं राक्षसैः सदा ॥ १२ ॥
समुद्रमिव गम्भीरं समुद्रसमनिःस्वनम् । महात्मनो महद्वेश्म महारत्नपरिच्छदम् ॥ १३ ॥
महारत्नसमाकीर्णं ददर्श स महाकपिः । विराजमानं वपुषा गजाश्वरथसंकुलम् ॥ १४ ॥
लङ्काभरणमित्येव सोऽमन्यत महाकपिः । चचार हनुमांस्तत्र रावणस्य समीपतः ॥ १५ ॥
गृहाद्गृहं राक्षसानामुद्यानानि च सर्वशः । वीक्षमाणोऽप्यसंत्रस्तः प्रासादांश्च चचार सः ॥ १६ ॥
अवप्लुत्य महावेगः प्रहस्तस्य निवेशनम् । ततोऽन्यत्पुप्लुवे वेश्म महापार्श्वस्य वीर्यवान् ॥ १७ ॥
अथ मेघप्रतीकाशं कुम्भकर्णनिवेशनम् । विभीषणस्य च तथा पुप्लुवे स महाकपिः ॥ १८ ॥
महोदरस्य च तथा विरूपाक्षस्य चैव हि । विद्युज्जिह्वस्य भवनं विद्युन्मालेस्तथैव च ॥ १९ ॥
वज्रदंष्ट्रस्य च तथा पुप्लुवे स महाकपिः । शुकस्य च महावेगः सारणस्य च धीमतः ॥ २० ॥
तथा चेन्द्रजितो वेश्म जगाम हरियूथपः । जम्बुमालेः सुमालेश्च जगाम हरिसत्तमः ॥ २१ ॥
रश्मिकेतोश्च भवनं सूर्यशत्रोस्तथैव च । वज्रकायस्य च तथा पुप्लुवे स महाकपिः ॥ २२ ॥
धूम्राक्षस्याथ संपातेर्भवनं मारुतात्मजः । विद्युद्रूपस्य भीमस्य घनस्य विघनस्य च ॥ २३ ॥
शुकनाभस्य[11] चक्रस्य शठस्य कपटस्य[12] च । ह्रस्वकर्णस्य[13] दंष्ट्रस्य लोमशस्य[14] च रक्षसः ॥ २४ ॥

---

८]ति०टी०—दृश्यैर्दर्शनीयैः अत एव परमोदारैरतिसुन्दरैः ८

रा० टी०—परमोदारैः अतिमहद्भिः अत एव दृश्यैर्विविधैः अनेकप्रकारैः तैस्तैः प्रसिद्धैः प्रसिद्धैः बहुसाहस्रैः मृगपक्षिभिः परिपूर्णम् ॥ ८ ॥

९ ] ति० टी०—अन्तपालैः पर्यन्तरक्षकैः ॥ ९ ॥

रा० टी०—विनीतैः अन्तपालैर्बहिःस्थितया रक्षकैः रक्षोभिः सुरक्षितं मुख्याभिः प्रधानाभिर्वरस्त्रीभिः परिपूर्णम् ॥ ९ ॥

१० ] ति० टी०—राक्षसेन्द्राणां महापार्श्वादीनां निवेशनानि यस्मिंस्तत् । भूषणशब्दैः समुद्रस्वनसदृशनिःस्वनम् ॥१०॥

रा० टी०—मुदितानि प्रमदारत्नानि श्रेष्ठप्रमदा यस्मिन् तत् राक्षसेन्द्राणां निवेशनं प्रवेशो यस्मिन् वराभरणसंह्रादैः उत्तमभूषणनिःस्वनैः समुद्रस्वनसदृशः निस्वनो यस्मिन् तत्१०॥

११] ति०टी०—तद्राजगुणसंपन्नं तैः प्रसिद्धै राजभवनगुणैः छत्रचामरादिभिः संपन्नम् । वरचन्दनैश्च संपन्नमित्यनुकर्षः ११

रा० टी०—तद्राजगुणसंपन्नं तैः प्रसिद्धैः राजगुणैः राजकीयपदार्थैः संपन्नं युक्तं वरचन्दनैश्च संपन्नमिति शेषः, सिंहैर्महद्वनमिव महाजनसमाकीर्णम् ॥ ११ ॥

१२ ] ति० टी०—पर्वसु सुतः सोमो यस्मिन्यज्ञार्थे तत्पर्वसुतम् । राक्षसैः सदा पूजितं स्वपूजनीयदेवताकम् ॥ १२ ॥

रा० टी०—भेरीमृदङ्गैः अभिरुतं शब्दितं पर्वसु सुतं सोमसवनं यस्मिन् तत् राक्षसैः पूजितं कृतसंमार्जनादिकम् ॥ १२ ॥

१३-१४ ] ति० टी०—परिच्छदोऽलंकारः । महात्मनो रावणस्य महद्वेश्म ददर्शेत्यन्वयः ॥ १३ ॥ १४ ॥

रा० टी०—समुद्रमिव गम्भीरं महारत्नानि महारत्नमयाः परिच्छदाः अलङ्कारादयो यस्मिन् ॥ १३ ॥

रा० टी०—महात्मनो रावणस्य वपुषा विराजमानं महत् विशालं महात्मनो वेश्म गृहं महाकपिर्हनुमान् ददर्श दशानामेकत्रान्वयः ॥ १४ ॥

१५ ] ति० टी०—अमन्यत तद्रावणवेश्मेति शेषः । रावणस्य रावणभवनस्य समीपतस्तत्प्राकारप्रदेशेषु ॥ १५ ॥

रा० टी०—लङ्केति । तत्र तस्मिन्समये हनुमान् इतीदं गृहं लङ्काभरणममन्यत रावणस्य समीपतो रावणभवनसमीपे चचार च ॥ १५ ॥

गो०टी०—चचारेति । रावणस्य रावणगृहस्य॥१५—२२॥

१६ ] ति० टी०—गृहाद्गृहं राजवेश्म । महाप्राकारान्तर्वर्ति प्रधानरक्षसामेकस्य गृहादपरं गृहमित्यर्थः ॥ १६ ॥

रा० टी०—गृहादिति । राक्षसानां गृहात् गृहं गृहान्तरं सर्वशः उद्यानानि च प्रासादांश्च वीक्षमाणः असंत्रस्तः संत्रासरहितः हनूमान् चचार ॥ १६ ॥

१७-२४ ] ति० टी०—अस्यैव प्रपञ्चः—अवप्लुत्येत्यादि ॥ १७-२४ ॥

---

१ ऽगुरुचन्दनैरिति गो. पाठः । २ महाजनैरिति गो. पाठ । ३ हुतमिति गो. पाठः । ४ समुद्रमिवेति गो. रा. पाठः । ५ वानर इति गो.पाठः । ६ तदेति गो. पाठः । ७ गृहमिति गो. पाठः । ८ वज्रेति गो. रा. पाठः । ९ महातेजा इति गो. पाठः । १० चेति गो. पाठः । ११ नासस्य वक्रस्येति गो. पाठः । १२ विकटस्येति गो. पाठः । १३ [illegible] गो. पाठः । १४ [illegible]मशस्येति गो. पाठः ।

युद्धोन्मत्तस्य मत्तस्य ध्वजग्रीवस्य सादिनः । विद्युज्जिह्वद्विजिह्वानां तथा हस्तिमुखस्य च ॥ २५ ॥
करालस्य विशालस्य शोणिताक्षस्य चैव हि । प्लवमानः क्रमेणैव हनुमान्मारुतात्मजः ॥ २६ ॥
तेषु तेषु महार्हेषु भवनेषु महायशाः । तेषामृद्धिमतामृद्धिं ददर्श स महाकपिः ॥ २७ ॥
सर्वेषां समतिक्रम्य भवनानि समन्ततः । आससादाथ लक्ष्मीवान्राक्षसेन्द्रनिवेशनम् ॥ २८ ॥
रावणस्योपशायिन्यो ददर्श हरिसत्तमः । विचरन्हरिशार्दूलो राक्षसीर्विकृतेक्षणाः ॥ २९ ॥
शूलमुद्गरहस्ताश्च शक्तितोमरधारिणः । ददर्श विविधान्गुल्मांस्तस्य रक्षःपतेर्गृहे ॥ ३० ॥
राक्षसांश्च महाकायान्नानाप्रहरणोद्यतान् । रक्ताञ्श्वेतान्सितांश्चापि हरींश्चापि महाजवान् ॥ ३१ ॥
कुलीनान्रूपसंपन्नान्गजान्परगजारुजान् । शिक्षितान्गजशिक्षायामैरावतसमान्युधि ॥ ३२ ॥
निहन्तॄन्परसैन्यानां गृहे तस्मिन्ददर्श सः । क्षरतश्च यथा मेघान्स्रवतश्च यथा गिरीन् ॥ ३३ ॥
मेघस्तनितनिर्घोषान्दुर्धर्षान्समरे परैः । सहस्रं वाहिनीस्तत्र जाम्बूनदपरिष्कृताः ॥ ३४ ॥
हेमजालैरविच्छिन्नास्तरुणादित्यसंनिभाः । ददर्श राक्षसेन्द्रस्य रावणस्य निवेशने ॥ ३५ ॥

रा० टी०—अवप्लुत्येति । महावेगो हनुमान् प्रहस्तस्य तदभिधराक्षसस्य निवेशनं गृहमवप्लुत्य ततोऽन्यत् महापार्श्वस्य वेश्म पुप्लुवे ॥ १७ ॥

रा० टी०—अथेति । मेघप्रतीकाशं मेघसदृशम् ॥ १८ ॥

रा० टी०—महोदरस्येति । सार्धश्लोक एकान्वयी॥१९॥

गो० टी०—विद्युद्रूपस्येत्यादि । विद्युज्जिह्वेन्द्रजिह्वानामिति बहुवचनं तन्नाम्नां बहूनां सत्त्वात् ॥ २३–२८ ॥

रा० टी०—शुकस्येति । इन्द्रजितः मेघनादस्य वेश्म जगाम ॥ २० ॥

रा० टी०—जाम्बुमालेरिति । अर्धं पृथक् ॥ २१ ॥

रा० टी०—रश्मीति ॥ २२ ॥

रा० टी०—धूम्रेति । क्रमेण धूम्राक्षादीनां भवनेषु प्लवमानो हनुमान् ऋद्धिमतां तेषां राक्षसानां भवनानां वा ऋद्धिं ददर्श । श्लोकपञ्चकमेकान्वयि ॥ २३–२७ ॥

२५–२८ ] ति० टी०—विद्युज्जिह्वद्विजिह्वानामिति बहुवचनमार्षम् । तयोरित्यर्थः 'विद्युज्जिह्वेन्द्रजिह्वानाम्' इति वा पाठान्तरम् ॥ २५–२८ ॥

रा० टी०—सर्वेषामिति । सर्वेषां भवनानि समतिक्रम्य अथ पुनः राक्षसेन्द्रनिवेशनमाससाद ॥ २८ ॥

२९ ] ति० टी०—उपशायिन्यः । 'उपशायोपशायश्च पर्यायशयनार्थकाः' । पर्यायेण शयनस्थानरक्षिका इत्यर्थ इत्याहुः ॥ २९ ॥

रा० टी०—रावणस्येति । रावणस्य उपशायिन्यः उपशायिनीः समीपशयनशीलाः पर्यङ्करक्षिका इत्यर्थः, राक्षसीः हरिसत्तमः हरयः सत्तमाः यस्य सः बहुमहावानराधीश इत्यर्थः, हरिशार्दूलो ददर्श ॥ २९ ॥

गो० टी०—रावणस्येति । उपशायिन्यः पर्यायशायिनीः । रावणे शयाने जाग्रतीरित्यर्थः ॥ २९ ॥ ३० ॥

३० ] ति० टी०—गुल्मान्राक्षसीसमूहान् ॥ ३० ॥

रा० टी०—शूलेति । रक्षःपतेर्गृहे गुल्मान्राक्षसीसमूहान्ददर्श ॥ ३० ॥

३१ ] ति० टी०—हरीनश्वान् ॥ ३१ ॥

३२–३३ ] ति० टी०—परगजारुजाञ्शत्रुगजानारुजन्ति भञ्जयन्ति तान् ॥ ३२ ॥ ३३ ॥

रा० टी०—राक्षसानिति । सितान् बद्धान् रक्तान् श्वेतांश्च हरीन् अश्वांश्च परगजारुजान् रिपुगजविनाशकान् अत एव परसैन्यानां निहन्तॄन् क्षरतो वर्षतो मेघानिव स्रवतः प्रस्रवतो गिरीन् यथाप्रस्रवं गिरिसदृशान् समरे परैर्दुर्धर्षान् गजांश्च ददर्श । सार्धश्लोकत्रयमेकान्वयि ॥ ३१–३३ ॥

गो० टी०—रक्तानित्यादि । सितान् बद्धान् "षिञ्, बन्धने" इत्यस्मात् क्तः । हरीन् अश्वान् परगजानारुजन्ति पीडयन्तीति परगजारुजान् । क्षरतश्चेति श्लोकः पूर्वोक्तगजविशेषकः । क्षरतः किंचिद्वर्षतः स्रवन्मदत्वे दृष्टान्तः स्रवतः निर्झरिणः ॥ ३१–३३ ॥

३४ ] ति० टी०—मेघस्तनितनिर्घोषत्वादिविशिष्टान्गजान्ददर्शेत्यन्वयः । सहस्रं वाहिनीरनेकसेनाः ॥ ३४ ॥

३५ ] ति० टी०—हेमजालैरविच्छिन्नाः सर्वतो भूषिता इति शिबिकाविशेषणम् ॥ ३५ ॥

रा० टी०—सहस्रमिति । जाम्बूनदपरिष्कृताः सुवर्णभूषिताः सहस्रं बह्वीः वाहिनीः सेनाः हेमजालैरपि छन्नाः सर्वतो भूषिता इत्यर्थः, तरुणादित्यसंनिभाः विविधाकाराः शिबिकाश्च रावणस्य निवेशने कपिर्ददर्श । अर्धचतुष्टयमेकान्वयि॥३४॥३५॥

गो० टी०—सहस्रमिति । वाहिनीः सेनाः पदातीनित्यर्थः । जाम्बूनदं जम्बूनदीप्रभवं स्वर्णम् हेम केवलस्वर्णम् । उभयविधस्वर्णमयाभरणयुक्ता इत्यर्थः ॥ ३४ ॥ ३५ ॥

१ नादिन इति गो. पाठः । २ ... ३ ... ४ ... इति गो. पाठः । ५ चैवेति गो.पाठः । ६ निष्ठितानिति गो. पाठः । ७ हेमजालपरीति गो. पाठः । ८ अपि छन्ना इति रा. पाठः ।

शिविका विविधाकाराः स कपिर्मारुतात्मजः । लतागृहाणि चित्राणि चित्रशालागृहाणि च ॥ ३६ ॥
क्रीडागृहाणि चान्यानि दारुपर्वतकानि च । कामस्य गृहकं रम्यं दिवागृहकमेव च ॥ ३७ ॥
ददर्श राक्षसेन्द्रस्य रावणस्य निवेशने । स मन्दरसमप्रख्यं मयूरस्थानसंकुलम् ॥ ३८ ॥
ध्वजयष्टिभिराकीर्णं ददर्श भवनोत्तमम् । अनन्तरत्ननिचयं निधिजालं समन्ततः ॥
धीरनिष्ठितकर्माङ्गं गृहं भूतपतेरिव ॥ ३९ ॥
अर्चिर्भिश्चापि रत्नानां तेजसा रावणस्य च । विरराज चं तद्वेश्म रश्मिवानिव रश्मिभिः ॥ ४० ॥
जाम्बूनदमयान्येव शयनान्यासनानि च । भाजनानि च शुभ्राणि ददर्श हरियूथपः ॥ ४१ ॥
मध्वासवकृतक्लेदं मणिभाजनसंकुलम् । मनोरममसंबाधं कुवेरभवनं यथा ॥ ४२ ॥
नूपुराणां च घोषेण काञ्चीनां निःस्वनेन च । मृदङ्गतलनिर्घोषैर्घोषवद्भिर्विनादितम् ॥ ४३ ॥
प्रासादसंघातयुतं स्त्रीरत्नशतसंकुलम् । सुव्यूढकक्ष्यं हनुमान्प्रविवेश महागृहम् ॥ ४४ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये सुन्दरकाण्डे षष्ठः सर्गः ॥ ६ ॥

---

३६ ] ति० टी०—शिविका ददर्शेत्यनुकर्षः । चित्रशालागृहाणि चित्रयुक्तशालावन्ति गृहाणि ॥ ३६ ॥

३७ ] ति० टी०—दारुनिर्मिताः क्रीडापर्वता दारुपर्वतकानि क्रीवत्वमार्षम् । कामस्य गृहकं रतिगृहकम् दिवागृहकं दिनविहारगृहम् सर्वत्रात्यन्तस्वार्थिकः कन् ॥ ३७ ॥

रा० टी०—लतेति । चित्राणि लतागृहाणि चित्रशालागृहाणि विचित्रशालारूपवेश्मानि च दारुनिर्मिताः पर्वताः येषु तानि क्रीडागृहाणि च कामस्य गृहकं रतिवेश्म दिवागृहकं दिवसविहारगृहं च रावणस्य निवेशने ददर्श । अर्धचतुष्टयमेकान्वयि ॥ ३६ ॥ ३७ ॥

गो० टी०—शिविका इत्यादि । दारुपर्वतकान् क्रीडापर्वतकान् कामस्य गृहकं रतिगृहम् दिवागृहकं दिवाविनोदस्थानम् 'रावणस्य निवेशन' इति पाठः ॥ ३६ ॥ ३७ ॥

३८ ] ति० टी०—मयूरस्थानैः क्रीडामयूरस्थानैः संकुलं व्याप्तम् ॥ ३८ ॥

रा० टी०—स इति । स हनुमान् मन्दरतलप्रख्यं मन्दराचलतलसदृशं मयूरस्थानैः क्रीडाहेतुकमयूरस्थितिभिः संकुलं व्याप्तं ध्वजयष्टिभिराकीर्णं व्याप्तं भवनोत्तमं ददर्श ॥ ३८ ॥

गो० टी०—स इत्यादि । मयूरस्थानं क्रीडामयूरविश्रमस्थानम् । कपोतानामिव मयूराणामपि स्थानानि शिलाभिः कल्प्यन्त इति प्रसिद्धम् । धीरनिष्ठितकर्मान्तं धीरैः कृतकल्पकर्मकम् । भूतपतेः प्रमथाधिपस्य ॥ ३८ ॥ ३९ ॥

३९-४१ ] ति० टी०—निधिजालम् निधिजालवदित्यर्थः । धीरनिष्ठितकर्माङ्गं धीरैर्निर्भयस्थिरचित्तैर्निष्ठितं निर्वर्तितं कर्मणो निधिरक्षादिकर्मणोऽङ्गं महिषादिबलिरूपं यस्मिन् । कश्चित्तु—कर्मान्तमिति पठित्वा धीरैर्निष्ठितस्यानुष्ठितस्य कर्मणस्तपोरूपस्यान्तं फलरूपमित्यर्थमाह । भूतपतेर्महेश्वरस्य यक्षेश्वरस्य वा ॥ ३९-४१ ॥

रा० टी०—अनन्तेति । अनन्तरत्नानां निचयो यस्मिन् निधिजालं निधिसमूहविशिष्टं धीरैः निष्ठितम् अनुष्ठितकर्माङ्गं निधिरक्षकक्रियावयवो यस्मिन् भूतपतेर्ब्रह्मणः गृहमिव गृहसदृशं रत्नानाम् अर्चिर्भिः रावणस्य तेजसा च उपलक्षितं तद्वेश्म रश्मिभिः किरणैः रश्मिमान् सूर्य इव विरराज । श्लोकद्वयमेकान्वयि ॥ ३९ ॥ ४० ॥

रा० टी०—जाम्बूनदेति । जाम्बूनदमयानि शयनादीनि ददर्श ॥ ४१ ॥

गो० टी०—अर्चिर्भिरिति । रश्मिमान् सूर्यः ॥ ४० ॥ ४१ ॥

४२ ] ति० टी०—मध्वासवयोरवान्तरभेदस्ताभ्यां कृतक्लेदम् आर्द्रमित्यर्थः ॥ ४२ ॥

४३-४४ ] ति० टी०—घोषवद्भिर्मृदङ्गातिरिक्तैरपि घोषवद्भिर्वाद्यैर्विनादितम् ॥ ४३ ॥ ४४ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये सुन्दरकाण्डे षष्ठः सर्गः ॥ ६ ॥

रा० टी०—मध्वेति । मध्वासवाभ्यां कृतः क्लेदः आर्द्रत्वं यस्मिन् असंबाधं संबाधारहितं विशालमित्यर्थः, कुवेरभवनं यथा कुवेरभवनसदृशं नूपुरघोषादिभिः घोषवद्भिर्वाद्यान्तरैश्च विनादितं प्रासादसंघातैर्युतं सुव्यूढाः विशालाः कक्ष्या यस्मिन् तत् महागृहं हनुमान् प्रविवेश । श्लोकत्रयमेकान्वयि ॥ ४२-४४ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ सुन्दरकाण्डे षष्ठः सर्गः ॥ ६ ॥

गो० टी०—मध्वासवेति । मध्वासवकृतक्लेदं मध्वासवैः मधुविकारमद्यैः कृतक्लेदं कृतसेकम् । घोषवद्भिः नादवद्भिः ।

---

१ पर्वतकानपीति गो. पाठः । २ गिरीति गो. तलेति रां. पाठः । ३ अनेकरत्नसंकीर्णमिति गो. पाठः । ४ कर्मान्तमिति गो. पाठः । ५ अथेति गो. पाठः । ६ मुख्यानीति गो. पाठः । ७ निमदैरिति गो. पाठः ।

## सप्तमः सर्गः ।

प्रसङ्गाद्रावणभवनं तत्रस्थं पुष्पकविमानं च कविर्वर्णयति ।

स वेश्मजालं बलवान्ददर्श व्यासक्तवैदूर्यसुवर्णजालम् ।
यथा महत्प्रावृषि मेघजालं विद्युत्पिनद्धं सविहङ्गजालम् ॥ १ ॥
निवेशनानां विविधाश्च शालाः प्रधानशङ्खायुधचापशालाः ।
मनोहराश्चापि पुनर्विशाला ददर्श वेश्माद्रिषु चन्द्रशालाः ॥ २ ॥
गृहाणि नानावसुराजितानि देवासुरैश्चापि सुपूजितानि ।
सर्वैश्च दोषैः परिवर्जितानि कपिर्ददर्श स्वबलार्जितानि ॥ ३ ॥
तानि प्रयत्नाभिसमाहितानि मयेन साक्षादिव निर्मितानि ।
महीतले सर्वगुणोत्तराणि ददर्श लङ्काधिपतेर्गृहाणि ॥ ४ ॥
ततो ददर्शोच्छ्रितमेघरूपं मनोहरं काञ्चनचारुरूपम् ।
रक्षोधिपस्यात्मबलानुरूपं गृहोत्तमं ह्यप्रतिरूपरूपम् ॥ ५ ॥

---

नादश्च दीर्घशब्दस्य विरामसमयसंभवो ध्वनिः । व्यूढकक्ष्यं विशालप्रकोष्ठम् ॥ ४२ ॥ ४३ ॥

अस्मिन्सर्गे सार्धचतुश्चत्वारिंशच्छ्लोकाः ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने षष्ठः सर्गः ॥ ६ ॥

---

१ ] ति०टी०—अथ रावणप्रधानगृहं वर्णयति—स इति। व्यासक्तानि संबद्धानि वैदूर्यखचितानि च सुवर्णजालानि स्वर्णगवाक्षाणि यस्मिंस्तत् । सविहंगजालमिति गृहमेघयोर्विशेषणम् ॥ १ ॥

रा० टी०—पुरीमेव वर्णयन्नाह—स इत्यादिभिः । बलवान् स हनुमान् व्यासक्तानि खचितानि वैदूर्याणि येषु तान्येव सुवर्णजालानि स्वर्णमयगवाक्षाणि यस्मिन् सविहङ्गजालं विहङ्गसमूहसहितं वेश्मजालं गृहसमूहं विद्युत्पिनद्धं प्रावृषि मेघजालमिव ददर्श ॥ १ ॥

गो० टी०—स वेश्मजालमित्यादि । व्यासक्तवैदूर्यसुवर्णजालम् वैदूर्यघटितसुवर्णमयजालकरन्ध्रम् ॥ १ ॥

२ ] ति० टी०—प्रधानैः प्रशस्तैः शङ्खादिभिः शालन्ते शोभन्ते तादृशीर्निवेशनानां शाला अवान्तरगृहाणि ददर्श । पुनश्च विशालाश्चन्द्रशाला ददर्श । वेश्माद्रिष्वौन्नत्याददितुल्यवेश्मसु । चन्द्रशालाः शिरोगृहाणि, चन्द्रकान्तमणिबद्धशाला वा २

रा० टी०—निवेशनानामिति । प्रधानैः शङ्खायुधचापैः शालन्ते शोभन्ते ताः निवेशनानां गृहाणां विविधाः शालाः अवान्तरगृहाणि मनोहराः विशालाश्च वेश्माद्रिषु अद्रिसदृशवेश्मसु चन्द्रशालाः शिरोगृहाणि चन्द्रकान्तमणिसंबद्धावान्तरगृहाणि वा पुनर्ददर्श ॥ २ ॥

गो० टी०—निवेशनानामिति । निवेशनानां शालाः गृहान्तःशालाः । प्रधानैर्मुख्यैः शङ्खायुधचापैः शालन्ते प्रकाशन्त इति प्रधानशङ्खायुधचापशालाः पचाद्यच् । वेश्मादिषु हर्म्यप्रासादादिषु । चन्द्रशालाः शिरोगृहाणि ॥ २ ॥

३ ] ति० टी०—वसु धनम् । स्वबलेत्यत्र स्वशब्दो रावणवाची कुबेराद्रावणेन लङ्काया आच्छिद्य गृहीतत्वात् । यद्वा स्वशब्दो हनुमद्वाची । स्वबलेनार्जितानि लब्धप्रवेशानि ॥ ३ ॥

रा० टी०—गृहाणीति । नानावसुभिः अनेकविधधनैः राजितानि देवासुरैरपि सुपूजितानि अतिप्रशंसितानि स्वबलार्जितानि रावणबलेन कुबेरात्प्राप्तानि गृहाणि कपिर्ददर्श ॥ ३ ॥

गो० टी०—गृहाणीति । नानावसुराजितानि नानारत्नराजितानि ॥ ३ ॥

४ ] ति० टी०—प्रयत्नेनाभितः सम्यगाहितानि यथायोगं स्थापितानि प्रयत्नाभिसमाहितानि विश्वकर्मकृतान्यपि मायया विचित्ररचनादक्षेण मयेन निर्मितानीव ॥ ४ ॥

रा० टी०—तानीति । प्रयत्नेन अभिसमाहितानि चतुर्दिक्षु क्रमेण संनिवेशितानि मयेन साक्षान्निर्मितानीव विश्वकर्मणा निर्मितत्वेऽपि अनेकमायामयत्वान्मयनिर्मितसदृशानीत्यर्थः, सर्वगुणोत्तराणि सर्वगुणैः श्रेष्ठानि गृहाणि ददर्श ॥४॥

गो० टी०—तानीति । प्रयत्नाभिसमाहितानि प्रयत्नेन यथायोगं स्थापितानि । मयेनेति विश्वकर्मा लक्ष्यते । महीतले निर्मितानि इवशब्देन मयस्य निर्मातृत्वव्याजमात्रम् रावणप्रयत्नेनैव निर्मितानीत्यर्थः । यद्वा अन्यानि गृहाणि विश्वकर्मनिर्मितानि इमानि तु मयं व्याजीकृत्य स्वयमुपायप्रदर्शनमुखेन निर्मितानीति पूर्वगृहेभ्यो विशेष उच्यते ॥ ४ ॥

५ ] ति० टी०—गृहोत्तमं प्रधानगृहेष्वप्युत्तमम् अप्रतिरूपरूपं निरुपमरूपम् ॥ ५ ॥

महीतले स्वर्गमिव प्रकीर्णं श्रिया ज्वलन्तं बहुरत्नकीर्णम् ।
नानातरूणां कुसुमावकीर्णं गिरेरिवाग्रं रजसाऽवकीर्णम् ॥ ६ ॥
नारीप्रवेकैरिव दीप्यमानं तडिद्भिरम्भोधरमर्च्यमानम् ।
हंसप्रवेकैरिव वाह्यमानं श्रिया युतं खे सुकृतं विमानम् ॥ ७ ॥
यथा नगाग्रं बहुधातुचित्रं यथा नभश्च ग्रहचन्द्रचित्रम् ।
ददर्श युक्तीकृतचारुमेघचित्रं विमानं बहुरत्नचित्रम् ॥ ८ ॥
महीकृता पर्वतराजिपूर्णा शैलाः कृता वृक्षवितानपूर्णाः ।
वृक्षाः कृताः पुष्पवितानपूर्णाः पुष्पं कृतं केसरपत्रपूर्णम् ॥ ९ ॥
कृतानि वेश्मानि च पाण्डुराणि तथा सुपुष्पा अपि पुष्करिण्यः ।
पुनश्च पद्मानि सकेसराणि वनानि चित्राणि सरोवराणि ॥ १० ॥
पुष्पाह्वयं नाम विराजमानं रत्नप्रभाभिश्च विघूर्णमानम् ।
वेश्मोत्तमानामपि चोच्चमानं महाकपिस्तत्र महाविमानम् ॥ ११ ॥

---

६ ] ति० टी०—प्रकीर्णं पातितम्, रत्नकीर्णं रत्नपूर्णम्, रजसा पुष्परजसा ॥ ६ ॥

रा० टी०—तत इति । उच्छ्रितमेघस्य रूपमाकार इव रूपं यस्य काञ्चनस्य चारुरूपमिव रूपं यस्य तत् रक्षोधिपस्य रावणस्य आत्मबलाद्रूपं तद्बलसदृशम् अत एव अप्रतिरूपम् उपमारहितं रूपं स्वरूपं यस्य तत् महीतले प्रकीर्णं पतितं स्वर्गमिव कुसुमावकीर्णं कुसुमैर्व्याप्तं रक्षोधिपस्य गृहोत्तमम् उत्तमं गृहं रजसा पुष्पाणामिति शेषः, अवकीर्णं व्याप्तं गिरेरग्रमिव ददर्श । श्लोकद्वयमेकान्वयि ॥ ५ ॥ ६ ॥

गो० टी०—तदन्तर्वर्तिपुष्पकविमानं दर्शयति—तत इति । अप्रतिरूपरूपम् अप्रतिमसौन्दर्यं प्रकीर्णं दैवाच्च्युतम् । रजसा पुष्परजसा । नारीप्रवेकैः नारीश्रेष्ठैः 'प्रवेकानुत्तमोत्तमाः' इत्यमरः । इवशब्दो वाक्यालंकारे । अर्च्यमानं सर्वैरिति शेषः । हंसप्रवेकैर्वाह्यमानं सुकृतां पुण्यकृतां विमानमिव स्थितमित्यन्वयः । युक्तीकृतमेघचित्रं पुञ्जीकृतमेघचित्रं चित्रमेघसंघातसदृशमित्यर्थः, विमानरत्नं पुष्पकम् ॥ ६–८ ॥

७ ] ति० टी०—नारीप्रवेकैर्नारीश्रेष्ठैः इवश्चार्थे । तडिद्भिरर्च्यमानं युज्यमानमम्भोधरं मेघमिव । हंसश्रेष्ठैर्वाह्यमानमुह्यमानं विमानमिव ॥ ७ ॥

८ ] ति० टी०—नानावर्णैरयुक्तोऽपि तद्युक्तः कृतो युक्तीकृतः स चासौ चारुमेघश्च तद्वद्विचित्रं विमानं पुष्पकाख्यम् ॥८॥

रा० टी०—नारीति । तडिद्भिरर्च्यमानमम्भोधरं मेघमिव नारीप्रवेकैः नारीश्रेष्ठैर्दीप्यमानं हंसप्रवेकैः हंसश्रेष्ठैः खे वाह्यमानं विमानमिव सुकृतं शोभनं कृतं कृतिः रचना यस्मिन् तत् नगाग्रं शैलाग्रं भागमिव युक्तीकृतेन युक्त्या निर्मितेन चारुमेघेन चित्रं विमानं ददर्श । श्लोकद्वयमेकान्वयि ॥ ७ ॥ ८ ॥

९ ] ति० टी०—यत्र पुष्पके मही अनेकजननामाधारस्थानं पर्वतराज्या पूर्णम् । पर्वतादयश्चात्र मणिस्वर्णादिनिर्मिताः, न त्विदं चित्ररूपमिति भ्रमितव्यम् अनन्तवानरसेनाया निर्बाधं तत्रावस्थानस्य वक्ष्यमाणत्वात् । किं च स्वामीच्छानुसारेण संकोचविकासौ तस्य वक्ष्यति स्वेच्छया हनुमद्देहवत् । वितानं समूहः । एकावल्यत्रालंकारः ॥ ९ ॥

रा० टी०—महीति । यत्र विमाने मही स्थितिभूमिः पर्वतराजिपूर्णा कृता निर्मितपर्वतैः पूरितेत्यर्थः, शैलास्तु वृक्षवितानैः तरुसमूहैः पूर्णाः कृताः पुष्पं च केसरपत्राभ्यां पूर्णं कृतम् एकावल्यलङ्कृतिः ॥ ९ ॥

गो० टी०—महीति । यत्रेति शेषः । यत्र विमाने । पर्वतराजिपूर्णा मही कृता चित्ररूपेण लिखिता । एवमुत्तरत्रापि बोध्यम् । अत्र पूर्वंपूर्वं प्रत्युत्तरोत्तरस्य विशेषवत्त्वादधिकालङ्कारः ॥ ९ ॥

१० ] ति० टी०—कृतानि अस्य यत्रेत्यादि शेषः ॥ १० ॥

रा० टी०—यस्मिन् पाण्डुराणि वेश्मानि गृहाणि कृतानि सुपुष्पाः शोभनपुष्पविशिष्टाः पुष्करिण्यः सरस्यः कृताः सकेसराणि पद्मानि कृतानि चित्राणि सरोवराणि वरसरोयुक्तानि वनानि कृतानि ॥ १० ॥

गो० टी०—कृतानीति । अत्रापि यत्रेत्यध्याहार्यम् । पुष्कराणि पुष्करिण्यः ॥ १० ॥

११ ] ति० टी०—पुष्पाह्वयं नाम ददर्शेत्यन्वयः । वेश्मोत्तमानां देववेश्मभूतविमानानां मध्ये उच्चमानं सौभाग्यपरमकाष्ठां प्राप्तम् ॥ ११ ॥

रा० टी०—तत् रत्नप्रभाभिः विराजमानं विघूर्णमानमितस्ततो भ्रमन्तं वेश्मोत्तमानां वेश्मीभूतदेवविमानानां मध्ये

---

१ अम्भोदवदिति गो. पाठः । २ सुकृतामिति गो. पाठः । ३ मेघचित्रं विमानरत्नमिति गो. पाठः । ४ सुपुष्पाण्यपि पुष्कराणीति गो. पाठः । ५ धन्यानीति गो. पाठः । ६ तथा वनानीति गो. पाठः । ७ विवर्धमानमिति गो. पाठः ।

कृताश्च वैदूर्यमया विहङ्गा रूप्यप्रवालैश्च तथा विहङ्गाः ।
चित्राश्च नानावसुभिर्भुजङ्गा जात्यानुरूपास्तुरगाः शुभाङ्गाः ॥ १२ ॥
प्रवालजाम्बूनदपुष्पपक्षाः सलीलमावर्जितजिह्मपक्षाः ।
कामस्य साक्षादिव भान्ति पक्षाः कृता विहङ्गाः सुमुखाः सुपक्षाः ॥ १३ ॥
नियुज्यमानाश्च गजाः सुहस्ताः सकेसराश्चोत्पलपत्रहस्ताः ।
बभूव देवी च कृता सुहस्ता लक्ष्मीस्तथा पद्मिनि पद्महस्ता ॥ १४ ॥
इतीव तद्गृहमभिगम्य शोभमानं सविस्मयो नगमिव चारुकन्दरम् ।
पुनश्च तत्परमसुगन्धि सुन्दरं हिमात्यये नगमिव चारुकन्दरम् ॥ १५ ॥

---

उच्चः अधिकः मानः सत्कारो यस्य तत् पुष्पाढ्यं नाम महाविमानं महाकपिर्ददर्श इत्यनुकृष्यते । श्लोकत्रयमेकान्वयि॥११॥

गो० टी०—पुष्पेति । पुष्पाढ्यं पुष्पकम् उच्चमानम् अधिकमानम् सर्वत्र ददर्शेत्यन्वयः ॥ ११ ॥

१२ ] ति० टी०—कृताश्चेति । तत्र विमान इति शेषः । नानावसुभी रूप्यस्वर्णाद्यैः । जात्यानुरूपा जातितुरङ्गसदृशाः । तुरगविशेषणं चैतत् ॥ १२ ॥

रा० टी०—कृता इति । तस्मिन् विमाने वैदूर्यमयाः विहङ्गाः कृताः रूप्यप्रवालैश्च विहङ्गाः कृताः नानावसुभिः अनेकविधमणिभिः चित्राः भुजङ्गा कृताः अनुरूपाः विमानस्थितियोग्याः जात्या शोभनजात्योपलक्षिताः शुभाङ्गाः तुरगाः अश्वाः कृताः ॥ १२ ॥

गो० टी०—कृताश्चेति । यत्रेति शेषः । नानावसुभिः नानारत्नैः । जात्यानुरूपाः जात्या सदृशाः । स्पष्टजातिस्वभावा इत्यर्थः ॥ १२ ॥

१३ ] ति० टी०—प्रवालजाम्बूनदकृतानि पुष्पाणि पक्षेषु येषाम् । आवर्जिताः संकुचिता जिह्मा वक्राः पक्षा येषां ते । साक्षात्कामस्य पक्षा इव येषां पक्षा भान्ति तदुद्दीपकत्वात् । तादृशा उच्यमानगुणा विहंगास्तत्र कृताः ॥ १३ ॥

रा० टी०—प्रवालेति । प्रवालैः जाम्बूनदपुष्पैश्च युक्ताः पक्षाः येषाम् अत एव सुपक्षाः शोभनपक्षविशिष्टाः सलीलं लीलापूर्वकम् आवर्जिताः शिल्पविशेषेण मक्षिकादिवर्जनक्रियाविशिष्टाः जिह्मपक्षाः येषां ते सुमुखाः विहङ्गाः कृताः अत एव तेषां पक्षाः कामस्य कामाश्रयीभूतमनसः पक्षाः प्रग्रहीतार इव भान्ति तत्पक्षदर्शनमात्रेण विमाने स्थितिः प्रतीयत इत्यर्थः ॥ १३ ॥

गो० टी०—प्रवालेति । प्रवालजाम्बूनदकृतानि पुष्पाणि पक्षेषु येषां ते प्रवालजाम्बूनदपुष्पपक्षाः । सलीलमावर्जितजिह्मपक्षाः सलीलमालम्बितवक्रपक्षाः । कामस्य पक्षा इव कामस्य सहाया इव ॥ १३ ॥

१४ ] ति० टी०—नियुज्यमाना व्याप्रियमाणाः । वक्ष्यमाणाया लक्ष्म्या अभिषेके इति शेषः । हस्तः शुण्डा । पद्माकरविहारिगजाकारनिर्माणात्सकेसरत्वमुत्पलपत्रहस्तत्वं च तेषां तादृशा गजास्तत्र कृता बभूवुरिति शेषः , पद्मिनि पद्मवत्सरसि ॥ १४ ॥

रा० टी०—नियुज्यमाना इति । पद्मिनि पद्मविशिष्टे विमानसरसि उत्पलपत्रहस्ताः अत एव सकेसराः गजा नियुज्यमानाः निर्मिता बभूवुः पद्महस्ता पद्मयुक्तकरा अत एव सुहस्ता शोभनहस्तविशिष्टाः देवीः अतिप्रकाशविशिष्टा लक्ष्मीः कृता निर्मिता बभूव बभूवेति वचनविपरिणामेन पूर्वान्वय्यपि ॥ १४ ॥

गो० टी०—नियुज्यमाना इति । नियुज्यमानाः स्वयमेवात्मानं नियोजयन्तः कर्मकर्तरि यक् । यत्र विमाने पद्मिनि पद्माकरे । स्वयमेवोत्पलपत्राभिषेककर्मणि प्रवर्तमानाः सुहस्ताः शोभनशुण्डादण्डाः सकेसराः कृतजलावगाहत्वेनाङ्गलग्नकिञ्जल्काः । उत्पलपत्रहस्ताः उत्पलपत्रवर्षिणः । गजाश्च कृताः तदभिषिच्यमाना पद्महस्ता अत एव सुहस्ता लक्ष्मीश्च कृता बभूवेत्यर्थः ॥ १४ ॥

१५ ] ति० टी०—इतीवैवंप्रकारं चारुकन्दरं चारुगुहं नगमिव पर्वतमिव चारुदर्शनं तद्गृहमभिगम्य सविस्मयः बभूवेति शेषः । हिमात्यये वसन्ते परमसुगन्धिचारुकन्दरं नगमिव वृक्षमिव कन्दरोऽत्र कोटरः। पुनश्चाभिगम्य सविस्मयोऽभूदिति शेषः परिच्छेदानवगमादिति भावः ॥ १५ ॥

रा० टी०—इतीवेति । चारुकन्दरं शोभनकोटरविशिष्टं परमसुगन्धि नगं वृक्षमिव सुन्दरं परमसुगन्धि नगं पर्वतमिव तत् गृहं पुनः पुनरभि गम्यसविस्मयः विस्मयसहितः अभवदिति शेषः ॥ १५ ॥

गो० टी०—इतीवेति । इवशब्दो वाक्यालंकारे । तद्गृहं तस्य रावणस्य गृहम् । सविस्मयः अभूदिति शेषः । नगं पर्वतमिव स्थितम् । शोभनं शोभमानम् । चारुशोभनं चारुमङ्गलम् । इतीवेत्येकनिपातो वा प्रकारार्थः । इतीव तद्गृहम् अभिगम्य अभिगत्य अद्भुतदर्शनात्पुनश्चाभिगम्य सविस्मयोऽभूदिति योजना । रुचिरा वृत्तमिदम् 'चतुर्ग्रहैरिह रुचिरा जभस्जगाः' इति लक्षणात् ॥ १५ ॥

---

१ पक्षा इवेति रा. पाठः । २ स्थितिं गो. पाठः । ३ शोभनामिति गो. पाठः ।

ततः स तां कपिरभिपत्य पूजितां चरन्पुरीं दशमुखबाहुपालिताम् ।
अदृश्य तां जनकसुतां सुपूजितां सुदुःखितां पतिगुणवेगनिर्जिताम् ॥ १६ ॥
ततस्तदा बहुविधभावितात्मनः कृतात्मनो जनकसुतां सुवर्त्मनः ।
अपश्यतोऽभवदतिदुःखितं मनः सुचक्षुषः प्रविचरतो महात्मनः ॥ ॥ १७ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये सुन्दरकाण्डे सप्तमः सर्गः ॥ ७ ॥

## अष्टमः सर्गः ।

पुनः पुष्पकविमानं विस्तरतो वर्णयति ।

स तस्य मध्ये भवनस्य संस्थितो महद्विमानं मणिरत्नचित्रितम् ।
प्रतप्तजाम्बूनदजालकृत्रिमं ददर्श धीमान्पवनात्मजः कपिः ॥ १ ॥
तदप्रमेयप्रतिकारकृत्रिमं कृतं स्वयं साध्विति विश्वकर्मणा ।
दिवं गते वायुपथे प्रतिष्ठितं व्यराजतादित्यपथस्य लक्ष्म तत् ॥ २ ॥

१६ ] ति० टी०–अभिपत्याभिपत्य चरन्संचरन् । पतिगुणवेगनिर्जितां पतिगुणवेगेन पतिगुणनिरन्तरध्यानेन निर्जितां निर्जितदुःखामदृश्यादृष्ट्वा दुःखितोऽभूदिति शेषः । आर्षो ल्यप् १६

रा० टी०–तत इति । दशमुखबाहुनिर्जितां रावणेन वशीकृतां पूजिताम् अतिप्रशंसाविशिष्टां पुरीं लङ्कामभिपत्य प्राप्य चरन् सीतान्वेषणार्थम् इतस्ततो विचरन् सन् सुपूजितां महात्मभिः अतिप्रशंसितां सुदुःखितां वियोगदुःखं प्राप्तां पतिगुणवेगनिर्जितां पतिगुणानां समाधिकरहितवात्सल्यादीनां वेगेन स्मरणजनितोद्वेगेन निर्जितां स्थातुमशक्यां जनकसुताम् अदृश्य अदृष्ट्वा दुःखितोऽभवदिति शेषः ॥ १६ ॥

गो० टी०–तत इति । अदृश्य अदृष्ट्वा । कपिनिपातनान्नञ्पूर्वेऽपि ल्यप् । सुदुःखितः अभूदिति शेषः । पतिगुणवेगनिर्जितां भर्तृगुणजवेन वशीकृताम् ॥ १६ ॥

१७ ] ति० टी०–बहुविधभावितात्मनो नानाप्रकारेण सर्वजगत्पूजितस्वभावस्य स्वभाववाच्यात्मशब्दः । कृतात्मनो शिक्षितान्तःकरणस्य सुवर्त्मनः शोभननीतिमार्गवर्तिनः सचक्षुषः श्रुतिस्मृतिन्यायरूपचक्षुःसहितस्य ॥ १७ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये सुन्दरकाण्डे सप्तमः सर्गः ॥ ७ ॥

रा० टी०–तदेव भङ्ग्यन्तरेणाह—तत इति । बहुविधेन दास्याद्यनेकप्रकारभावनया भावितः परिशीलितः आत्मा परात्मा रामो येन तस्य अत एव सचक्षुषः अप्राकृतचक्षुर्विशिष्टस्य कृतात्मनः कृतान्वेषणप्रयत्नस्य सुवर्त्मनः शोभनमार्गावलम्बिनः प्रविचरतः जनकसुताम् अपश्यतः महात्मनो हनुमतो मनः अतिदुःखितमभवत् ॥ १७ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ सुन्दरकाण्डे सप्तमः सर्गः ॥ ७ ॥

गो० टी०–ततस्तदेति । बहुविधभावितात्मनः बहुविधं यथा भवति तथा चिन्तितात्मनः कृतात्मनः निश्चितबुद्धेः सुवर्त्मनः सदाचारसंपन्नस्य सुचक्षुषः दूरसूक्ष्मादिदर्शनेषु अप्रतिहतनयनतेजसः महात्मनः महाधैर्यस्य ॥ १७ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने सप्तमः सर्गः ॥ ७ ॥

१ ] ति० टी०–अथ विशिष्य पुष्पकं वर्णयितुमाह—स इति । मणिरत्नैर्मणिश्रेष्ठैश्चित्रितं प्रतप्तजाम्बूनदजालानां तन्मयगवाक्षाणां कृत्रिमं कृतिर्यस्मिंस्तत्तस्य भवनस्य रावणगृहस्य मध्ये महद्विमानं पुष्पकं ददर्श ॥ १ ॥

रा० टी०–विमानमेव वर्णयन्नाह–स इत्यादिभिः । स हनुमान् प्रतप्तजाम्बूनदजालेन कृत्रिमं रचितं महद्विमानं ददर्श १

गो० टी०–पूर्वोक्तविमानवर्णनं विस्तृणीते–स तस्येत्यादि । प्रतप्तजाम्बूनदजालकृत्रिमं निष्टप्तस्वर्णविशेषकृतकृत्रिमपक्ष्यादिकम् ॥ १ ॥

२ ] ति० टी०–अप्रमेयप्रतिकारकृत्रिममप्रमेयैरपरिच्छेद्यसौन्दर्यादिभिः प्रतिकारैः प्रतिमादिभिः कृत्रिमं निर्वृत्तचित्रशोभम् । पाठान्तरं त्वसांप्रदायिकमिति कतकः । विश्वकर्मणा च स्वयं साध्विति कृतम् मन्निर्मितेष्विदमतिसाध्वित्यनुमोदितमित्यर्थः । दिवमाकाशं गते वायुपथे प्रतिष्ठितम्, वायुपथस्यैवादित्यपथत्वात्तस्य चिह्नभूतम् ॥ २ ॥

रा० टी०–तदिति । अप्रमेयैः सौन्दर्यादिभिः प्रमातुमशक्यैः प्रतिकारैः प्रतिमाभिः कृत्रिमं रचितम् विश्वकर्मणा स्वयं साधु निर्मितमितिहेतोर्दिवङ्गते वायुपथे प्रतिष्ठितम् अत एव आदित्यपथस्य लक्ष्मवत् बोधकमिव तद्विमानं व्यराजत । आदित्यपथ इति वायुपथस्य नामान्तरमिति न विरोधः ॥ २ ॥

१ निर्जितामिति रा.पाठः । २ स्थिति गो.पाठः । ३ संश्रित... गो.पाठः । ४ ...इति गो.पाठः । ५ ...प्रमेय...इति गो.पाठः । ६ वदिति गो.पाठः ।

न तत्र किंचिन्न कृतं प्रयत्नतो न तत्र किंचिन्न महार्घरत्नवत् ।
न ते विशेषा नियताः सुरेष्वपि न तत्र किंचिन्न महाविशेषवत् ॥ ३ ॥
तपःसमाधानपराक्रमार्जितं मनःसमाधानविचारचारिणम् ।
अनेकसंस्थानविशेषनिर्मितं ततस्ततस्तुल्यविशेषनि[2]र्मितम् ॥ ४ ॥
मनः समाधाय तु शीघ्रगामिनं दुरासदं मारुततुल्यगामिनम् ।
महात्मनां पुण्यकृतां महर्द्धिनां यशस्विनामग्र्यमुदामिवालयम् ॥ ५ ॥
विशेषमालम्ब्य विशेषसंस्थितं विचित्रकूटं बहुकूटमण्डितम् ।
मनोभिरामं शरदिन्दुनिर्मलं विचित्रकूटं शिखरं गिरेर्यथा ॥ ६ ॥

---

गो० टी०—तदिति । अप्रमेयाप्रतिकारकृत्रिमम् अपरिच्छेद्याप्रतिक्रियकृत्रिमम् । तत्र हेतुमाह—कृतं स्वयं साध्विति । विश्वकर्मणा स्वयं निर्मात्रा विश्वकर्मणा इदं साधु सुन्दरमिति श्लाघापूर्वं कृतम् । सर्वत्राप्रतिहतसंचारं चैतदित्याह—दिवं गतम् आकाशं गतम् । वायुपथप्रतिष्ठितं वायुमार्गभूतान्तरिक्षस्थितम् । मध्ये भवनस्य संस्थितमिति पूर्वमुक्तत्वात् । भूतलप्रत्यासन्नान्तरिक्षस्थितमित्यर्थः । आदित्यपथस्य लक्ष्मवत् । लक्ष्म लक्ष्मणं व्यावर्तकं व्यराजत प्रचकाश इत्यर्थः ॥२॥

३ ] ति० टी०—तत्र तादृशं किंचिन्न यत्प्रयत्नतो न कृतम्, अपि तु सर्वं प्रयत्नकृतमेवेत्यर्थः । यदवयवजातं महार्घरत्नवन्न बहुमूल्यरत्नवन्न तादृशं किंचिदपि तत्र न । ये विशेषा रचनाविशेषास्तत्र नियताः प्रतिष्ठितास्ते सुरेषु सुरविमानेष्वपि न । महाविशेषो गुणाधिक्यम् ॥ ३ ॥

रा० टी०—नेति । यत् संस्थानं प्रयत्नतो न कृतं तत् तत्र विमाने किंचिन्न सर्वं प्रयत्नतः कृतमित्यर्थः, यत् महार्हरत्नवत् न तत् तत्र किञ्चिन्न यत् महाविशेषवत् अतिरचनाविशिष्टं न तत् किञ्चिन्न अत एव ते पुष्पकविमानस्थरचनासदृशा विशेषाः महारचनाः सुरेषु सुरविमानेष्वपि न ॥ ३ ॥

गो० टी०—न तत्रेति । ते विशेषाः तद्विमानास्थितविशेषाः । सुरेष्वपि सुरालयेष्वपि ॥ ३ ॥

४ ] ति० टी०—तपसोपवासादिना समाधानेन भगवति चित्तसमाधानेन लब्धो यः पराक्रमस्तेन रावणार्जितम् । मनःसमाधानेन यत्र विचारो गमनस्य तत्र संचरणशीलं मनःसंकल्पितदेशगमनशीलम् । संस्थानविशेषा रचनाविशेषाः । ततस्ततस्तस्मात्तस्मादाहृतेन तुल्येन दिव्यविमाननिर्माणोचितेन विशेषेण विशिष्टपदार्थेन निर्मितम् ॥ ४ ॥

रा० टी०—तप इति । तपस्समाधानाख्यां कृच्छ्रचान्द्रायणादिदेवविशेषध्यानाख्यां जातेन पराक्रमेण अर्जितं रावणेन प्राप्तं मनस्समाधानस्य एकाग्रमनसः विचारेण गमनेनेव चारो गमनमस्त्यस्मिन् तम् अर्शआदित्वात्पुंस्त्वं संज्ञापूर्वकविधेरनित्यत्वाल्लुगभावो वा । अनेकैर्बहुभिः संस्थानविशेषैः विलक्षणावयवैः निर्मितं ततस्ततः मनोवेगत्वात् विलक्षणावयवविशिष्टत्वाच्च हेतोः तुल्यविशेषयोर्निर्मितिः प्रक्षेपो यस्मात् समाधिकरहितमित्यर्थः ॥ ४ ॥

गो० टी०—तपस्समाधानेत्यादि पञ्चश्लोकी कुलकम् । सर्वत्र ददर्शेति संबन्धः । तपस्समाधानपराक्रमार्जितं तपस्समाधानेन तपोऽनुष्ठानेन पराक्रमेण च अर्जितम् । मनस्समाधानविचारचारिणं समाधानमभिसंधानम् कर्मणि चैतत् विचारो विविधा गतिः मनोभिसंहितविविधगतिचारिणम् । अनेकसंस्थानविशेषनिर्मितम् अनेकैः संस्थानविशेषैः विमानगोपुरादिसन्निवेशैः निर्मितम् ततस्ततस्तुल्यविशेषदर्शनम् तत्र तत्र तुल्यं विशेषदर्शनं यस्मिन् ॥ ४ ॥

५ ] ति० टी०—मनः समाधाय स्वामिमनोऽनुरुध्य तु शीघ्रगामित्वादिधर्मकं दुरासदम् पापिभिरिति शेषः । 'दुरावरम्' इति पाठे शत्रुभिर्दुर्निवारमित्यर्थः । महर्द्धिनाम् दीर्घाभावश्छान्दसः एवं तुल्यगामिनमित्यत्र पुंस्त्वम् विमानशब्दोऽर्धर्चादिर्वा । अग्र्यमुदां महासुखानां पुण्यकृतामेवालयमास्पदम् इवशब्द एवार्थे । अत्र तस्याचेतनत्वेऽपि तदभिमानिदेवतायाश्चित्तज्ञत्वादिति बोध्यम् ॥ ५ ॥

रा० टी०—मनस्समाधाय स्वामिमनोऽनुसृत्यैव शीघ्रगामिदुरासदं पराभवितुमशक्यं महर्द्धिनां महत् ऋद्धं तपोवृद्धिरस्ति येषु तेषाम् एतेन दीर्घाभाव आर्ष इति भट्टोक्तिश्चिन्त्या महात्मनामग्र्यमुदाम् अत्यानन्दानामालयमिव ॥ ५ ॥

गो० टी०—मनस्समाधाय मन एकाग्रीकृत्य । स्वयं मनःस्थेति यावत् । दुरावरं दुर्वारम् । महर्द्धिनां महर्द्धीनाम् अपि माषं मषं कुर्याच्छन्दोभङ्गं न कारयेत्' इत्युक्तरीत्या वृत्तभङ्गभिया ह्रस्वोच्चारणम् । अग्र्यमुदाम् इन्द्रादीनाम् ॥ ५ ॥

६ ] ति० टी०—विशेषं गतिविशेषमालम्ब्य । विशेषे व्योमलक्षणदेशविशेषे संस्थितम् विचित्राणामाश्चर्यवस्तूनां कूटं समवायभूतम् बहुभिः कूटैः शालाभिर्मण्डितम् गिरेर्विचित्रवान्तरशृङ्गवच्छिखरमिव ॥ ६ ॥

रा० टी०—विशेषं विशेषगमनादि आलम्ब्य विशेषे वायुपथे संस्थितं विचित्राणि कूटानि शिखराणि यस्मिन् तत् बहुकूटमण्डितं समीपस्थबहुकूटैः शोभितम् अत एव मनोभिरामं विचित्रकूटं गिरेः शिखरं यथा शृङ्गमिव ॥ ६ ॥



---

१ महार्हेति रा. पाठः । २ दर्शनमिति गो. पाठः ।

वहन्ति यत्कुण्डलशोभितानना महाशना व्योमचरा निशाचराः ।
विवृत्तविध्वस्तविशाललोचना महाजवा भूतगणाः सहस्रशः ॥ ७ ॥
वसन्तपुष्पोत्करचारुदर्शनं वसन्तमासादपि चारुदर्शनम् ।
स पुष्पकं तत्र विमानमुत्तमं ददर्श तद्वानरवीरसत्तमः ॥ ८ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये सुन्दरकाण्डेऽष्टमः सर्गः ॥ ८ ॥

---

## नवमः सर्गः ।

रावणभवने सीतामन्वेषयन्हनुमांस्तत्र स्थितपुष्पकविमानमारुह्यानेकावस्थापन्नप्रसुप्तनारीगणान्विलोकयति ।

तस्यालयवरिष्ठस्य मध्ये [१]विमलमायतम् । ददर्श भवनश्रेष्ठं हनुमान्मारुतात्मजः ॥ १ ॥
अर्धयोजनविस्तीर्णमायतं योजनं [२]महत् । भवनं राक्षसेन्द्रस्य बहुप्रासादसंकुलम् ॥ २ ॥
मार्गमाणस्तु वैदेहीं सीतामायतलोचनाम् । सर्वतः परिचक्राम हनूमानरिसूदनः ॥ ३ ॥
उत्तमं राक्षसावासं हनुमानवलोकयन् । आससादाथ लक्ष्मीवान्राक्षसेन्द्रनिवेशनम् ॥ ४ ॥

---

गो० टी०—विशेषमिति । विशेषमालम्ब्य विशेषसंस्थितं विशेषं गृहीत्वा विशेषेण संस्थितम् । सविशेषविशेषणसंस्थितमिति यावत् । सविशेषसंस्थानविशेषविशिष्टमित्यर्थः । कूटानां विचित्रत्वबहुत्वे विशेषणद्वयेन दर्शयति—विचित्रेत्यादिना । विचित्रकूटं शिखरं गिरेर्यथा । कूटम् अवान्तरशृङ्गं शिखरं महाशृङ्गमिति प्रयोगादवधार्यते ॥ ६ ॥

७ ] ति० टी०—उच्यमानविशेषणा भूतगणा यद्वहन्ति तद्विमानं तत्र ददर्शेत्यन्वयः । विवृत्तानि निघूर्णानि विध्वस्तानि त्यक्तनिमेषाणि विशालानि लोचनानि येषाम् । निशाचरा निशास्वप्यहरविशेषं चरन्ति ते ॥ ७ ॥

रा० टी०—निशाचराः निशायामधिकं चरणशीलाः विवृत्तानि आघूर्णितानि विध्वस्तानि निमेषरहितानि विशालानि लोचनानि येषां ते सहस्रशो भूतगणा यं वहन्ति तत् ॥ ७ ॥

गो० टी०—वहन्तीति । यं यत् आर्षो व्यत्ययः । महाशनाः महाकाया इत्यर्थः । व्योमचराः व्योमचरसदृशसंस्थानाः विवृत्तविध्वस्तविशाललोचनाः विवृत्तानि वर्तुलानि विध्वस्तानि भुग्नानि विशालानि लोचनानि येषां ते तथा महाजवाः महाजवा इव स्थिताः भूतगणाः गोपुरवाहका इव प्रतिमारूपेण स्थिताः अन्यथा रावणान्तःपुरे पुरुषसञ्चारायोगात् कामगस्य विमानस्य वहनासंभवाच्च । यद्वा शिबिकावाहका इव भूतगणा अधोभागे वहन्ति तद्द्वारेणैव कामगत्वमपि चेतनप्रेरणं विना अचेतनसंचारस्यात्यन्तमनुचितत्वाच्च ॥ ७ ॥

८ ] ति० टी०—वसन्तपुष्पोत्करचारुदर्शनं वसन्तकालिकपुष्पसमूहेन चारुदर्शनम् ॥ ८ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये सुन्दरकाण्डेऽष्टमः सर्गः ॥ ८ ॥

रा० टी०—वसन्तपुष्पोत्करेण वसन्तकालिकपुष्पसमूहेन चारु दर्शनं यस्य अत एव वसन्तमासात् वसन्तकालादपि चारु दर्शनं यस्य तत् विमानसत्तमं पुष्पकं वानरवीरसत्तमो हनुमान् ददर्श । श्लोकपञ्चकमेकान्वयि ॥ ८ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ सुन्दरकाण्डेऽष्टमः सर्गः ॥ ८ ॥

गो०टी०—वसन्तेति । उत्करः समूहः ॥ ८ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्यानेऽष्टमः सर्गः ॥ ८ ॥

१ ] ति० टी०—तस्येति । आलयवरिष्ठस्य लङ्कामध्यवर्तिनो गृहसमूहवतो महागृहस्य ॥ १ ॥

रा० टी०—अन्वेषणमेव वर्णयन्नाह—तस्येत्यादिभिः । आलयवरिष्ठस्य महाभवनस्य मध्ये विमलं रजःप्रभृतिमलरहितम् आयतं भवनं ददर्श ॥ १ ॥

गो० टी०—तस्येत्यादि । आलयवरिष्ठस्य पुष्पकस्य ॥ १ ॥

२-३ ] ति० टी०—अर्धयोजनविस्तीर्णं तिर्यक्प्रमाणम् ॥ २ ॥ ३

रा० टी०—अर्धेति । अर्धयोजनविस्तीर्णं योजनम् एकयोजनपरिमितमायतं दीर्घं राक्षसेन्द्रस्य भवनं सीतां मार्गमाणो हनुमान् परिचक्राम । श्लोकद्वयमेकान्वयि ॥ २ ॥ ३ ॥

गो०टी०—तद्भवनं कियत्प्रमाणमित्यत्राह—अर्धयोजनेति २

गो० टी०—मार्गमाण इति । सर्वतः पुष्पकादन्यत्र सर्वत्र । पुष्पकारोहणस्य पश्चाद्वक्ष्यमाणत्वात् ॥ ३ ॥

४ ] ति० टी०—आवासं बहुराक्षससाधारणं वासस्थानम् । राक्षसेन्द्रनिवेशनं तन्मात्रवासस्थानम् ॥ ४ ॥

रा० टी०—उत्तममिति । राक्षसावासं राक्षसानां गृहं



---

१ यमिति गो. रा. पाठः । २ विपुलमिति गो. पाठः । ३ हि तदिति गो. पाठः ।

चतुर्विषाणैर्द्विरदैस्त्रिविषाणैस्तथैव च । परिक्षिप्तमसंबाधं रक्ष्यमाणमुदायुधैः ॥ ५ ॥
राक्षसीभिश्च पत्नीभी रावणस्य निवेशनम् । आहृताभिश्च विक्रम्य राजकन्याभिरावृतम् ॥ ६ ॥
तन्नक्रमकराकीर्णं तिमिङ्गिलझषाकुलम् । वायुवेगसमाधूतं पन्नगैरिव सागरम् ॥ ७ ॥
या हि वैश्रवणे लक्ष्मीर्या चन्द्रे[1] हरिवाहने । सा[2] रावणगृहे रम्या[3] नित्यमेवानपायिनी ॥ ८ ॥
या च राज्ञः कुबेरस्य यमस्य वरुणस्य च । तादृशी तद्विशिष्टा वा ऋद्धी रक्षोगृहेष्विह[4] ॥ ९ ॥
तस्य हर्म्यस्य मध्यस्थवेश्म[5] चान्यत्सुनिर्मितम् । बहुनिर्यूहसंयुक्तं ददर्श पवनात्मजः ॥ १० ॥
ब्रह्मणोऽर्थे कृतं दिव्यं दिवि यद्विश्वकर्मणा । विमानं पुष्पकं नाम सर्वरत्नविभूषितम् ॥ ११ ॥
परेण तपसा लेभे यत्कुबेरः पितामहात् । कुबेरमोजसा जित्वा लेभे तद्राक्षसेश्वरः ॥ १२ ॥
ईहामृगसमायुक्तैः कार्तस्वरहिरण्मयैः । सुकृतैराचितं स्तम्भैः प्रदीप्तमिव च श्रिया ॥ १३ ॥

---

अवलोकयन् सन् लक्ष्मीवान् शौर्यादिसंपत्तिविशिष्टो हनुमान् उत्तमं राक्षसेन्द्रनिवेशनं रावणमुख्यगृहम् आससाद प्राप॥४॥

गो० टी०–उत्तममिति । राक्षसेन्द्रनिवेशनं पुष्पकमध्यस्थालयादन्यन्मूलस्थानम् । राक्षसीभिरित्यादिश्लोकद्वये आससादेति संबध्यते । रावणस्य निवेशनमिति पुनरुपादानमपूर्वविशेषणविवक्षया । नक्रः कुम्भीरः तिमिङ्गिलः महामत्स्यः झषः केवलमत्स्यः ॥ ४–९ ॥

५ ] ति० टी०–परिक्षिप्तं युक्तम् । ईदृशगजादिसत्त्वेऽप्यसंबाधत्वेनातिविस्तृतत्वं सूच्यते ॥ ५ ॥

६ ] ति० टी०–राक्षसीभी राक्षसजातिजाभिः पत्नीभिरावृतम् तथा विक्रम्याहृताभी राजकन्याभिश्चावृतम् ॥ ६ ॥

७ ] ति० टी०–पन्नगैर्युतं सागरमिव तत्पश्यति स्म ॥७॥

रा० टी०–निवेशनमेव वर्णयन्नाह–चतुरित्यादिभिः । चतुर्विषाणैः दन्तचतुष्टयविशिष्टैः त्रिविषाणैश्च द्विरदैः परिक्षिप्तं परिवृतम् उदायुधैः राक्षसैरिति शेषः, राक्षसीभिश्च रक्ष्यमाणम् आहृताभिः पत्नीभिः राजकन्याभिश्च आवृतं नक्रमकराकीर्णं पन्नगैर्युतं सागरमिव सागरसदृशं तत् रावणस्य निवेशनं ददर्शेति शेषः । श्लोकत्रयमेकान्वयि ॥ ५–७ ॥

८ ] ति० टी०–लक्ष्मीः शोभा । रावणगृहे लङ्कायाम्॥८॥

रा० टी०–येति । या लक्ष्मीः वैश्रवणे कुबेरे हरिवाहने हरितास्वरूपवाहनवति इन्द्रे च सा अनपायिनी विनाशरहिता लक्ष्मीः रावणगृहे नित्यमेव वसतीति शेषः ॥ ८ ॥

९ ] ति० टी०–ऋद्धिरैश्वर्यं तद्विशिष्टा ततोऽप्यधिका॥९॥

रा० टी०–तदेव भङ्ग्यन्तरेणाह–येति । कुबेरादिगृहे यादृशी ऋद्धिः तादृशी तद्विशिष्टा ततोऽधिका वा रक्षोगृहेष्वस्ति ॥ ९ ॥

१० ] ति० टी०–तस्य हर्म्यस्यार्धयोजनविस्तीर्णत्वादिधर्मणः । वेश्म सखीकशयनगृहमिति कतकः । वेश्म पुष्पकाख्यमिति तीर्थः अत्र तीर्थव्याख्या ज्यायसी । निर्यूहो मत्तवारणः ॥ १० ॥

रा० टी०–तस्येति । तस्य अर्धयोजनविस्तीर्णत्वादिमतः हर्म्यस्य मध्यस्थं सुनिर्मितं बहुनिर्यूहैर्मत्तगजैः संयुतमन्यद्विलक्षणं वेश्म पुष्पकं ददर्श ॥ १० ॥

गो० टी०–तस्य हर्म्यस्येत्यादि । पूर्वमुक्तार्थस्यापि पुनरुपन्यासः पुष्पकस्य मध्ये रावणस्य निवासभवनमन्यदस्तीत्यस्यार्थस्य स्पष्टीभावार्थम् । निर्यूहः मत्तवारणः ॥ १० ॥

११–१२ ] ति० टी०–पुनर्हनुमदारोहणशेषतया पुष्पकं वर्णयति––ब्रह्मणोऽर्थे इति । भगवतो लीलाफलकमित्यर्थः ॥ ११ ॥ १२ ॥

रा० टी०–ब्रह्मण इति । दिवि स्वर्गे ब्रह्मणोऽर्थे यत्पुष्पकं विश्वकर्मणा कृतं यच्च कुबेरः तपसा पितामहाल्लेभे तत्पुष्पकं राक्षसेश्वरो रावणः कुबेरं जित्वा लेभे । श्लोकद्वयमेकान्वयि ॥ ११ ॥ १२ ॥

गो० टी०–ब्रह्मणोऽर्थ इत्यादि । ब्रह्मणोऽर्थे कृतं यत्कुबेरस्तपसा लेभे तद्वेश्म ददर्शेति पूर्वेण संबन्धः ॥ ११ ॥

गो० टी०–कुबेरमित्यादि । ईहामृगसमायुक्तैः वृकप्रतिकृतियुक्तैः कार्तस्वरहिरण्मयैः कार्तस्वरं सुवर्णं हिरण्यं रजतम् 'कृताकृतं हेमरूप्यं हिरण्यमभिधीयते' इति रजतस्यापि हिरण्यत्वाभिधानात् । जालवातायनैः जालानि तिर्यगूर्ध्वविन्यस्तफलकघटितानि वातायनानि केवलानि रन्ध्राणि अथवैश्वर्यार्थमेकार्थे शब्दद्वयप्रयोगो वा । महानीलाः सिंहलद्वीपोद्भवनीलरत्नानि । महाधनैः महामूल्यैः । निस्तुलाभिः सद्वृत्ताभिः । तलेन निर्मितेनेति शेषः । आदित्यतरुणोपमं तरुणादित्योपमम् एतदन्तं लेभे तद्राक्षसेश्वर इति संबध्यते । अन्यथा कूटागारैरित्यनेन पुनरुक्तिः स्यात् ॥ १२–१९ ॥

१३ ] ति० टी०–कार्तस्वरहिरण्ये स्वर्णजातिविशेषौ रूप्यस्वर्णे इति कश्चित् । ईहामृगो वृकस्तत्प्रतिमायुक्तैः ॥ १३॥

रा० टी०–ईहेति । ईहामृगाः वृकाः तैस्तत्प्रतिमाभिः समायुक्तैः कार्तस्वरहिरण्मयैः सुकृतैः शोभनकृत्या निर्मितैः स्तम्भैः राजितं श्रिया शोभया प्रदीप्तमिव । कार्तस्वरहिरण्ययोः अवान्तरभेदात् न पौनरुक्त्यम् ॥ १३ ॥

---



१ चन्द्रे इति गो. रा. पाठः । २ रावणस्य गृहे इति रा. पाठः । ३ सर्वेति गो. पाठः । ४ अपीति रा. पाठः । ५ मध्यस्थमिति गो. पाठः ।

मेरुमन्दरसंकाशैरुल्लिखद्भिरिवाम्बरम् । कूटागारैः शुभागारैः सर्वतः समलंकृतम् ॥ १४ ॥
ज्वलनार्कप्रतीकाशैः सुकृतं विश्वकर्मणा । हेमसोपानयुक्तं च चारुप्रवरवेदिकम् ॥ १५ ॥
जालवातायनैर्युक्तं काञ्चनैः स्फाटिकैरपि । इन्द्रनीलमहानीलमणिप्रवरवेदिकम् ॥ १६ ॥
विद्रुमेण विचित्रेण मणिभिश्च महाधनैः । निस्तुलाभिश्च मुक्ताभिस्तलेनाभिविराजितम् ॥ १७ ॥
चन्दनेन च रक्तेन तपनीयनिभेन च । सुपुण्यगन्धिना युक्तमादित्यतरुणोपमम् ॥ १८ ॥
[ कूटागारैर्वराकारैर्विविधैः समलंकृतम् । ]
विमानं पुष्पकं दिव्यमारुरोह महाकपिः । तत्रस्थः सर्वतो गन्धं पानभक्ष्यान्नसंभवम् ॥ १९ ॥
दिव्यं संमूर्छितं जिघ्रन्रूपवन्तमिवानिलम् । स गन्धस्तं महासत्त्वं बन्धुर्बन्धुमिवोत्तमम् ॥ २० ॥
इत एहीत्युवाचेव तत्र यत्र स रावणः । ततस्तां प्रस्थितः शालां ददर्श महतीं शिवाम् ॥ २१ ॥
रावणस्य महाकान्तां कान्तामिव वरस्त्रियम् । मणिसोपानविकृतां हेमजालविराजिताम् ॥ २२ ॥

---

१४ ] ति० टी०—कूटागारैर्गुप्तस्वल्पगृहैः शुभागारैर्विहारयोग्यगृहैः ॥ १४ ॥

१५ ] ति० टी०—चार्व्यः सुन्दराः प्रवराः श्रेष्ठा वेदिका यस्मिंस्तत् ॥ १५ ॥

रा० टी०—मेर्विति । मेरुमन्दरसंकाशैः अत एव अम्बरमाकाशमुल्लिखद्भिरिव ज्वलनार्कप्रतीकाशैः कूटागारैः अपरिज्ञेयगृहैः शुभागारैर्विहारोचितगृहैः समलंकृतम् विश्वकर्मणा सुकृतं निर्मितम् हेमसोपानैर्युक्तं चार्व्यो मनोहराः प्रवराः उन्नताः वेदिकाः यस्मिन् तत् ॥ १४ ॥ १५ ॥

१६ ] ति० टी०—जालवातायनयोः काञ्चनकार्तस्वरयोर्मध्वासवयोश्च कंचिद्भेदं परिकल्प्य निर्वाहः एवमिन्द्रनीलमहानीलयोरपि ॥ १६ ॥

रा० टी०—काञ्चनैः स्फाटिकैश्च जालैर्वातायनैर्गवाक्षैश्च युक्तम् इन्द्रनीलमहानीलमणिभ्यां प्रवरा प्रकाशितेत्यर्थः, वेदिका यस्मिन् इन्द्रनीलमहानीलयोः अवान्तरभेदान्न पौनरुक्त्यम् ॥ १६ ॥

१७ ] ति० टी०—निस्तुलाभिर्वर्तुलाभिर्निरुपमाभिर्वा । तलेन कुट्टिमप्रदेशेन ॥ १७ ॥

रा० टी०—विद्रुमादिना निस्तुलाभिः उपमारहिताभिर्मुक्ताभिश्च उपलक्षितेन तलेन कुट्टिमप्रदेशेन अभिविराजितम् ॥१७॥

१८] ति० टी०—आदित्यतरुणोपमं तरुणादित्यसदृशम् १८

रा० टी०—तपनीयनिभेन सुवर्णवर्णेन पुण्यगन्धिना रक्तेन चन्दनेन युक्तम् आदित्यतरुणोपमं तरुणादित्यसदृशं पुष्पकं विमानं महाकपिरारुरोह । सार्धश्लोकपञ्चकमेकान्वयि ॥ १८ ॥

१९ ] ति० टी०—तत्रस्थः पुष्पकविमानस्थः ॥ १९ ॥

रा० टी०—तत्रेति । तत्रस्थः तद्विमानस्थितो हनुमान् संमूर्छितं व्याप्तं दिव्यपानादिसंभवं गन्धं रूपवन्तमनिलमिव जिघ्रत् अजिघ्रत् ॥ १९ ॥

गो० टी०—तत्रस्थ इति । जिघ्रन् अजिघ्रत् ॥२०॥२१॥

२० ] ति० टी०—संमूर्छितं व्याप्तं गन्धवहमनिलमपि तद्गन्धेन रूपवन्तमिव गन्धद्रव्यरूपमिव तद्वायुसंबन्धात्स गन्धः स्वयं महासत्त्वमुत्तमं बन्धुं बन्धुरिव जिघ्रन्नभूत् गन्धापारोक्ष्यात्तद्वहवायुरप्यपरोक्ष इवाभूत् ॥ २० ॥

रा० टी०—स इति । यत्र रावणस्तत्र विद्यमानः स गन्धः महासत्त्वं हनूमन्तं बन्धुरुत्तमं बन्धुमिव इतः अत्र एहि इति उवाच इव ॥ २० ॥

२१ ] ति० टी०—यत्र स रावणस्तत्र स्थाने इत एहीत्युवाचेव उक्तगुणवायुः कर्ता दिव्यगन्धेन रावणशयनगृहं ज्ञातवानित्यर्थः ततस्तस्मात्पुष्पकादवरुह्य गन्धानुमितां तां रावणशयनशालां प्रस्थितस्तां शालां ददर्श यत्तु पुष्पकस्यैव सा शाला तत इत्यस्य तदनन्तरमित्यर्थ इति, तच्चिन्त्यम् प्रस्थित इति पदस्वारस्यात्, अर्धयोजनविस्तीर्णमित्यादिना मूलालयप्रदर्शनोपक्रमाच्च । मूलालयं दृष्ट्वा तद्बहिःस्थं पुष्पकमन्विष्य तत्स्थ एव रावणशयनगृहं तद्गृहवर्त्यनुमाय पुष्पकादवरुह्य तं प्रति स्थितस्तां ददर्शेत्येव न्याय्यमिति कतकः । यस्त्वित्यादिनोक्ता व्याख्यैव युक्तेति मम भाति 'अवतीर्य विमानाच्च हनुमान्मारुतात्मजः' इत्यग्रे उपसंहारात् ॥ २१ ॥

२२ ] ति० टी०—महाकान्तामतिरमणीयामित्यर्थकं शालाविशेषणम् कान्तां कमनीयाम् तां शालामेव विशिनष्टि—मणीत्यादिना श्रियः संजननीमिवेत्यन्तेन । मणिकृतसोपानानि विशेषेण कृतानि यस्याम् ॥ २२ ॥

रा० टी०—तत इति । ततः रावणसमीपात् प्रस्थितो हनुमान् कान्तां शोभितां वरस्त्रियमिव रावणस्य महाकान्ताम् अतीच्छाविषयीभूतां मणिसोपानविकृतां मणिमयेन सोपानेन विशेषतो रचितां हेमजालविराजितां शालां ददर्श । सार्धश्लोक एकान्वयी ॥ २१ ॥ २२ ॥

गो० टी०—ततस्तामित्यादि । दन्तान्तरितरूपिकां दन्तैः व्यवहितरूपिकाम् अन्तरान्तरा कृतदन्तफलकामिति यावत् । सुबहुस्तम्भभूषिताम् अवान्तरबहुस्तम्भभूषिताम्

---

१ कारैरिति गो. पाठः । २ संयुक्तामिति गो. रा. पाठः । ३ अर्धमेतदधिकं गो. पाठे । ४ स सर्वत इति गो. पाठः । ५ षिताम् इति गो. पाठः ।

स्फाटिकैरावृततलां दन्तान्तरितरूपिकाम् । मुक्तावज्रप्रवालैश्च रूप्यचामीकरैरपि ॥ २३ ॥
विभूषितां मणिस्तम्भैः सुबहुस्तम्भभूषिताम् । समैर्ऋजुभिरत्युच्चैः समन्तात्सुविभूषितैः ॥ २४ ॥
स्तम्भैः पक्षैरिवात्युच्चैर्दिवं संप्रस्थितामिव । महत्या कुथयाऽऽस्तीर्णां पृथिवीलक्षणाङ्कया ॥ २५ ॥
पृथिवीमिव विस्तीर्णां स राष्ट्रगृहशालिनीम्[1] । नादितां मत्तविहगैर्दिव्यगन्धाधिवासिताम् ॥ २६ ॥
परार्ध्यास्तरणोपेतां रक्षोधिपनिषेविताम् । धूम्रामगुरुधूपेन विमलां हंसपाण्डुराम् ॥ २७ ॥
पत्र[2]पुष्पोपहारेण कल्माषीमिव सुप्रभाम् । मनसो[3] मोदजननीं वर्णस्यापि प्रसाधिनीम्[4] ॥ २८ ॥
तां शोकनाशिनीं दिव्यां श्रियः संजननीमिव । इन्द्रियाणीन्द्रियार्थैस्तु पञ्चपञ्चभिरुत्तमैः ॥ २९ ॥
तर्पयामास मातेव तदा रावणपालिता । स्वर्गोऽयं देवलोकोऽयमिन्द्रस्यापि[5] पुरी भवेत् ॥
सिद्धिर्वेयं परा हि स्यादित्यमन्यत मारुतिः ॥ ३० ॥
प्रध्यायत इवापश्यत्प्रदीपांस्तत्र काञ्चनान् । धूर्तानिव महाधूर्तैर्देवनेन पराजितान् ॥ ३१ ॥

'सुबहुस्तम्भभूषितैः' इति पाठे सुबहुस्तम्भैः स्तम्भदार्व्यंकारिपङ्क्तैरलंकृतामित्यर्थः अत्युच्चैः अत्यन्तोन्नतैः दिवम् आकाशं कुथया आस्तरणेन पृथिवीलक्षणाङ्कया सरित्समुद्रगिरिवनादिभिः पृथिवीलक्षणैरङ्कितया । कल्माषीं शबलवर्णाम् वसिष्ठधेनुमिव सर्वकामप्रदत्वेन कल्माषीसादृश्यम् वर्णस्यापि प्रसादिनीं वर्णोत्कर्षकरीमित्यर्थः । तां शोकनाशिनीमिति । ततस्तामिति वर्तमाने पुनस्तच्छब्द उपसंहारार्थः । तां प्रति प्रस्थितः ददर्शेति वा संबन्धः ॥ २२–२९ ॥

२३ ] ति० टी०—तलं कुट्टिमभूः । दन्तान्तरितरूपिकामिति । दन्तैरन्तरितानि मध्ये मध्ये निर्मितानि रूपाणि यस्यां सा चामीकरैरप्यन्तरितरूपिकामित्यनुकर्षः ॥ २३ ॥

२४ ] ति० टी०—बहुत्वबोधनाय पुनः स्तम्भानुवादः बहुत्वं च विपुलत्वम् समन्तात्सुविभूषितैः रत्नादिभिरिति शेषः ॥ २४ ॥

२५ ] ति० टी०—अत्युच्चैः पक्षैरिवात्युच्चैः स्तम्भैर्दिवं संप्रस्थितामिवेत्युत्प्रेक्षात्र । कुथया विशालविचित्रकम्बलास्तरणेन । पृथिवीलक्षणं चतुरस्रत्वम् ॥ २५ ॥

२६ ] ति० टी०—सराष्ट्रगृहशालिनीमिति पृथिवीविशेषणम् ॥ २६ ॥

२७ ] ति० टी०—हंसपाण्डुरां हंसवत्पाण्डुराम् ॥ २७ ॥

२८ ] ति० टी०—कल्माषी शबलवर्णा वसिष्ठगौः । अनेन सर्वानन्ददायित्वं रिपूणामधृष्यत्वं च सर्वमनोरथपूरकत्वं च सूच्यते । वर्णस्य देहकान्तेः प्रसाधिनीं संपादिकाम् ॥२८॥

रा० टी०—स्फाटिकैरिति । स्फाटिकैरावृतं तलं कुट्टिमभूमिर्यस्यां सा तां दन्तान्तरितैः प्रतिमध्यभागविन्यासितगजदन्तैः रूपकं प्रशस्तरूपं यस्याः सा तां मुक्तादिभिर्विभूषितां शोभनाः स्तम्भाः येषु तैः स्थलविशेषैर्भूषितां समैः समानाकारैः ऋजुभिर्वक्रतारहितैः पक्षैरिव अत्युच्चैः स्तम्भैः दिवं संप्रस्थितामिव पृथिवीलक्षणाङ्कया पृथिवीलक्षणानां तरुसरित्समुद्रादीनामङ्को रेखा यस्यां तया महत्या विशालया कुथया चित्रकम्बलास्तरणेन आस्तीर्णाम् अत एव पृथिवीमिव मत्तविहगैर्नादितां परार्ध्यैरुत्तमैः आस्तरणैः आस्तरणान्तरैरुपेतां युक्तां हंसवत्पाण्डुरवर्णां पत्रादिनोपहारे कल्माषीं शबलवर्णां वसिष्ठधेनुमिव सुप्रभां सर्वकामप्रदात्रीमित्यर्थः, वर्णस्य शरीरशोभाया अपि प्रसाधिनीं शोकनाशिनीं श्रियः संपत्तेः सञ्जननीमुत्पादिकामिव ददर्श । सार्धश्लोकषट्कानां पूर्वेणान्वयः ॥ २३–२८ ॥

२९ ] ति० टी०—तां शालां ददर्शेति पूर्वेण संबन्धः । पञ्चभिरिन्द्रियार्थैः शब्दस्पर्शरूपरसगन्धैः पञ्चेन्द्रियाणि श्रोत्रत्वक्चक्षूरसनघ्राणानि तर्पयामास हनुमत इति शेषः रावणपालिता शालेति शेषः स्वर्गो ज्योतिष्टोमादिकफलभोगभूमिः देवलोको वायुवरुणादिलोकः इन्द्रस्य पुर्यमरावती ॥ २९ ॥

रा० टी०—इन्द्रियाणीति । तदा रावणपालिता शाला पञ्चभिरिन्द्रियार्थैः शब्दस्पर्शरूपरसगन्धैः पञ्चेन्द्रियाणि श्रोत्रत्वक्चक्षूरसनाघ्राणानि मातेव तर्पयामास ॥ २९ ॥

गो० टी०—इन्द्रियाणीति । हनुमत इति शेषः ॥ ३० ॥

३०] ति० टी०—परा गान्धर्वी सिद्धिस्तन्मायेत्यर्थः ॥३०॥

रा० टी०—स्वर्ग इति । मारुतिः अयं स्वर्गो भवेदित्यमन्यत ॥ ३० ॥

गो० टी०—स्वर्गोऽयमिति । सामान्यतः स्वर्गोऽयम् । तत्रापि देवलोकः त्रयस्त्रिंशद्देवानां लोकः तत्रापीन्द्रस्य पुरी अमरावती परा सिद्धिः ब्रह्मणः स्थानमित्युत्तरोत्तरोत्कर्षः ॥ ३१ ॥

३१ ] ति० टी०—प्रध्यायतो ध्याननिष्ठान् । धूर्तोऽक्षदेवनस्तत्रातिसमर्थो महाधूर्तः महाधूर्तेन देवनेन पराजितो हि धूर्तो धननाशाद्धयायन्निवास्ते काञ्चनान्दीपान्काञ्चनदीपस्तम्भस्थदीपान् विपुलदीपाग्रे क्षुद्रदीपप्रभा इव रावणतेजोभिभूतानपश्यदित्यर्थः ॥ ३१ ॥



१ मालिनीमिति गो. पाठः । २ चित्रामिति गो. पाठः । ३ मनःसंह्लादेति गो. पाठः । ४ प्रसादिनीमिति गो. पाठः । ५ इयमिति गो. पाठः ।

दीपानां च प्रकाशेन तेजसा रावणस्य च । अर्चिर्भिर्भूषणानां च प्रदीप्तेत्यभ्यमन्यत ॥ ३२ ॥
ततोऽपश्यत्कुथासीनं नानावर्णाम्बरस्रजम् । सहस्रं वरनारीणां नानावेषविभूषितम् ॥ ३३ ॥
परिवृत्तेऽर्धरात्रे तु पाननिद्रावशंगतम् । क्रीडित्वोपरतं[1] रात्रौ प्रसुप्तं[2] बलवत्तदा ॥ ३४ ॥
तत्प्रसुप्तं विरुरुचे निःशब्दान्तरभूषितम्[3] । निःशब्दहंसभ्रमरं यथा पद्मवनं महत् ॥ ३५ ॥
तासां संवृतदन्तानि[4] मीलिताक्षीणि[5] मारुतिः । अपश्यत्पद्मगन्धीनि वदनानि सुयोषिताम् ॥ ३६ ॥
प्रबुद्धानीव पद्मानि तासां भूत्वा क्षपाक्षये । पुनः संवृतपत्राणि रात्राविव बभुस्तदा ॥ ३७ ॥
इमानि मुखपद्मानि नियतं मत्तषट्पदाः । अम्बुजानीव फुल्लानि प्रार्थयन्ति पुनः पुनः ॥ ३८ ॥
इति वा[6]मन्यत श्रीमानुपपत्त्या महाकपिः । मेने हि गुणतस्तानि समानि सलिलोद्भवैः ॥ ३९ ॥
सा तस्य शुशुभे शाला ताभिः स्त्रीभिर्विराजिता । शरदीव प्रसन्ना द्यौस्ताराभिरभिशोभिता ॥ ४० ॥
स च ताभिः परिवृतः शुशुभे राक्षसाधिपः । यथा ह्युडुपतिः श्रीमांस्ताराभिरिव संवृतः ॥ ४१ ॥

---

रा० टी०–प्रध्यायत इति । काञ्चनान् काञ्चनमयान् प्रदीपान् मङ्गलार्थं स्तम्भप्रदेशेषु संस्थापितदीपान् देवनेन द्यूतेन महाधूर्तैः अतिवञ्चितैः पराजितान् अत एव ध्यायतः धनविध्वंसात् नयननिमीलनादिचेष्टया ध्यानमिव कुर्वतो धूर्तानिव अपश्यत् । रावणातितेजसा पराभूतत्वात् दीपा न प्रकाशन्ते इत्यर्थः ॥ ३१ ॥

गो० टी०–प्रध्यायत इति । प्रध्यायत इव निश्चलतया प्रकृष्टध्यानयुक्तानिव धूर्तान् अक्षधूर्तान् देवनेन द्यूतेन ॥ ३२ ॥

३२ ] ति० टी०–प्रदीप्ताग्निज्वाला ज्वालिता अनेनाग्रिमोऽग्निदाहः सूचितः ॥ ३२ ॥

रा० टी०–दीपानामिति । दीपादीनां प्रकाशादिना प्रदीप्ता प्रज्वलिता लङ्केति शेषः, इत्यभ्यमन्यत ॥ ३२ ॥

गो० टी०–दीपानामिति । प्रदीप्ता शाला दग्धेति अभ्यमन्यत ॥ ३३ ॥

३३ ] ति० टी०–कुथासीनमास्तीर्णकुथायां शयानम् ॥ ३३ ॥

रा० टी०–तत इति । कुथासीनम् आस्तृतकुथासु शयानं नानावर्णाः अम्बरस्रजो यस्य तत् नारीणां सहस्रमपश्यत् संज्ञापूर्वकविधेरनित्यत्वादम्लुग्विरहः भागुरिमतेन वा समाधेयम् ॥ ३३ ॥

गो० टी०–तत इत्यादि । कुथासीनं कुथशयितम् । नानावर्णाम्बरस्रजमिति हलन्तस्य स्रक्छब्दस्य भागुरिमतेन टाबन्तत्वादजन्तत्वोपपत्तिः ॥ ३४ ॥ ३५ ॥

३४ ] ति० टी०–बलवत्प्रसुप्तमपश्यदित्यनुकर्षः ॥ ३४ ॥

रा० टी०–परीति । अर्धरात्रे प्रवृत्ते प्राप्ते तु क्रीडितोपरतं क्रीडितात् क्रीडाया निवृत्तं पाननिद्रावशं तम् अत एव बलवद्दृढं प्रसुप्तं नारीसहस्रं रात्रौ अपश्यत् इत्यनुकृष्यते ॥ ३४ ॥

३५ ] ति० टी०–तत्प्रसुप्तं प्रसुप्तजनं रावणगृहं निःशब्दान्तरैर्निर्गतस्वस्वशब्दभेदैर्नूपुरसिञ्जिन्यादिभिर्भूषितम् ॥ ३५ ॥

रा० टी०–तदिति । निश्शब्दः शब्दरहितः अन्तरो मध्यभागो यस्य तस्मिन् भूषितं प्रसुप्तं तत् नारीसहस्रं निःशब्दा हंसभ्रमरा यस्मिन् तत्पद्मवनमिव विरुरुचे ॥ ३५ ॥

गो० टी०–तदिति । निःशब्दान्तरभूषणं निःशब्दविशेषाणि भूषणानि यस्य । 'अथान्तरं रन्ध्रेऽप्यपरव्यवधानयोः । अवकाशावसरयोरवसानविनार्थयोः । विशेषमध्यतादर्थ्येषु' इति दर्पः । अतिनिद्रापरवशत्वेन निश्चलाङ्गतया निःशब्दभूषणमित्यर्थः ॥ ३६ ॥ ३७ ॥

३६ ] ति० टी०–निद्रितत्वात्संवृतानि संवृतपक्ष्माणि तादृशानि च तानि दान्तानि ग्लानानि मीलिताक्षीण्यतिसंवृतपक्ष्माणि स्वर्गदेवलोकादेरिव संवृतमीलितयोरपि भेदो बोध्यः । यद्वा संवृतदान्तानीत्यस्यैव व्याख्यानं निर्मीलिताक्षीणीति । यद्वा संवृतत्वमोष्ठयोः ॥ ३६ ॥

रा० टी०–तासामिति । संवृता आच्छादिता दन्ता येषु तानि सुयोषितां वदनानि अपश्यत् ॥ ३६ ॥

३७ ] ति० टी०–क्षपाक्षये पद्मानीव प्रबुद्धानि भूत्वा पुना रात्रौ संवृतपत्राणि पद्मानीव बभूवुरित्यन्वयः ॥ ३७ ॥

रा० टी०–प्रबुद्धानीति । तासां वदनानीति शेषः क्षपाक्षये निशापगमे प्रबुद्धानि विकसितानि भूत्वा रात्रौ पुनः संवृतपत्राणि पद्मानि इव बभुः ॥ ३७ ॥

गो० टी०–प्रबुद्धानीति । अत्र वदनानीत्यनुषज्यते तासां वदनानि क्षपाक्षये दिवसे पद्मानीव प्रबुद्धानि भूत्वा रात्रौ पुनः संवृतपत्राणि सङ्कुचितपत्राणि पद्मानीव बभुः ॥ ३८ ॥

३८ ] ति० टी०–मुखानि दृष्ट्वा हनुमतो जातां संभावनामाह—इमानीति । फुल्लानि प्रार्थयन्तीत्यन्वयः । नियतं नित्यम् ॥ ३८ ॥

३९–४१ ] ति० टी०–उपपत्त्या युक्त्या । सलिलोद्भवैः पद्मैः ॥ ३९–४१ ॥

रा० टी०–इमानीति । इमानि प्रदृश्यमानानि मुखप-

---

१ क्रीडितोपरतमिति रा. पाठः । २ सुष्वापेति गो. पाठः । ३ भूषणमिति गो. पाठः । ४ दन्तानीति गो. रा. पाठः । ५ ऽक्षाणीति गो. पाठः । ६ चेति गो. पाठः ।

याश्च्यवन्तेऽम्बरात्तारा: पुण्यशेषसमावृताः । इमास्ताः संगताः कृत्स्ना इति मेने हरिस्तदा ॥ ४२ ॥
ताराणामिव सुव्यक्तं महतीनां शुभार्चिषाम् । प्रभावर्णप्रसादाश्च विरेजुस्तत्र योषिताम् ॥ ४३ ॥
व्यावृत्तकचपीनस्रक्प्रकीर्णवरभूषणाः । पानव्यायामकालेषु [2]निद्रोपहतचेतसः ॥ ४४ ॥
व्यावृत्ततिलकाः काश्चित्काश्चिदुद्भ्रान्तनूपुराः । पार्श्वे गलितहाराश्च काश्चित्परमयोषितः ॥ ४५ ॥
मुक्ताहारवृताश्चान्याः काश्चित्प्रस्रस्तवाससः । व्याविद्धरशनादामाः किशोर्य इव वाहिताः ॥ ४६ ॥
अकुण्डलधराश्चान्या विच्छिन्नमृदितस्रजः । गजेन्द्रमृदिताः फुल्ला लता इव महावने ॥ ४७ ॥

यानि फुल्लानि अम्बुजानीव षट्पदाः पुनः पुनः प्रार्थयन्ति नित्यं तत्र स्थातुं प्रयाचन्त इत्यर्थः, इत्येव अमन्यत अन्वमिनोत् अत एव तानि वदनानि उपपत्त्याऽनुमानयुक्त्या सलिलोद्भवैः कमलैः समानि मेने। अर्थचतुष्टयमेकान्वयि॥३८॥३९॥

रा० टी०—सेति । स्त्रीभिर्विराजिता शाला ताराभिरभिशोभिता द्यौरिव शुशुभे ॥ ४० ॥

रा० टी०—स इति । ताभिः स्त्रीभिः परिवृतः स रावणः ताराभिः संवृत उडुपतिरिव शुशुभे ॥ ४१ ॥

गो० टी०—इमानीति । प्रार्थयन्ति प्रार्थयेरन् मधुरसलुब्धतया अत्र पुनः पुनः पतेयुरित्यर्थः व्यत्ययेन परस्मैपदम् अनुदात्तत्त्वेनात्मनेपदत्वात् नियतं नूनम् उपपत्त्या युक्त्या उपपत्तिमेवाह—मेन इति । तानि मुखानि गुणतः सौरभादिगुणैः सलिलोद्भवैः पद्मैः ॥ ३९—४३ ॥

४२ ] ति० टी०—पुण्यशेषसमावृतास्तद्युक्ताः संगता एकदेशमिलिताः अनेन सौन्दर्यातिशुक्तिरूपोऽत्युक्त्यलंकारः॥ ४२ ॥

रा० टी०—या इति । तदा तस्मिन् काले पुण्यशेषसमावृता भोगावशिष्टपुण्यैर्युक्ता यास्तारा अम्बरात् स्वर्गात् च्यवन्ते ता एव कृत्स्नाः सकला इमाः प्राप्ता इति हरिर्हनुमान् मेने॥४२॥

४३ ] ति० टी०—तदेवाह—ताराणामिति । प्रभा देहकान्तिः वर्णो रूपम्, प्रसादस्त्वौज्ज्वल्यम् ॥ ४३ ॥

रा० टी०—ताराणामिति । महतीनां ताराणां प्रभा वर्णप्रसादा इव योषितां प्रभावर्णप्रसादा विरेजुः ॥ ४३ ॥

गो० टी०—ताराणामिति । प्रभा कान्तिः वर्णः रूपम् प्रसादः प्रसन्नता ॥ ४४ ॥

४४ ] ति० टी०—व्यावृत्ताः कचाः पीनस्रजश्च यासां ताश्च प्रकीर्णानीतस्ततः श्लथानि वरभूषणानि यासां ताः पानव्यायामकालेषु पानानन्तरकालिकगाननृत्यरत्यादिक्रीडाकालेषूक्तगुणाः, अत एव श्रमान्निद्रोपहतचेतसः ॥ ४४ ॥

रा० टी०—व्यावृत्तेति । पानव्यायामकालेषु पानकालेषु अधररसपानसमयेषु व्यायामकालेषु रतिसमयेषु व्यावृत्ता मर्दिताः कुचाः पीनस्रजश्च यासां ता अत एव प्रकीर्णानि परिक्षिप्तानि वरभूषणानि यासां ताः द्वयोः कर्मधारयः निद्रोपहतचेतसः बभूवुरिति शेषः ॥ ४४ ॥

गो० टी०—व्यावृत्तेति । पानव्यायामकालेषु पानानन्तरं भाविरतिव्यापारसमयेषु व्यावृत्तगुरुपीनस्रक्प्रकीर्णवरभूषणाः विपर्यस्तगुरुपीनस्रजः प्रकीर्णवरभूषणाश्च सत्यः निद्रापहतचेतसः विरेजुः ॥ ४१ ॥

४५ ] ति० टी०—उक्तं भूषणप्रकिरणमेव प्रपञ्चयति—व्यावृत्तेति । उद्भ्रान्ताः स्वस्थानात्स्खलिता नूपुरा यासां ताः । पार्श्वे एकस्मिन्गलिता विस्रस्ता हारा यासां ताः ॥ ४६ ॥

रा० टी०—व्यावृत्तेति । काश्चित् व्यावृत्तानि अपमार्जितानि तिलकानि सिन्दूरकस्तूर्यादिरेखा यासां ताः काश्चित् उद्भ्रान्ताः स्वस्थानात्प्रस्खलिताः नूपुराः यासां ताः काश्चित् पार्श्वे समीपे गलितहाराश्च परमयोषितो दृश्यन्त इति शेषः ॥ ४६ ॥

गो० टी०—व्यावृत्ततिलका इति । व्यावृत्ततिलकाः उन्मृष्टतिलकाः उद्भ्रान्तनूपुराः स्वस्थानानवस्थितनूपुराः ॥४६॥

४६ ] ति० टी०—मुक्ताहारैर्वृताः छिन्नमुक्ताहाराः व्याविद्धं विक्षिप्तं रशनादाम काञ्चीगुणो यासां ताः एवं भूषणबन्धराहित्येन शयने उपमा । वाहिताः किशोर्य इव कृतभारवहनाः श्रान्ताः किशोर्यो वडवा यथाध्वश्रमापनयनाय लुण्ठनेन व्यत्यस्तपल्ययनबन्धाः शेरते तद्वत् ॥ ४६ ॥

रा० टी०—मुक्तेति । अन्याः मुक्ताहारैर्वृताः आच्छन्नाः केशादिग्रथितमुक्ताहारवत्य इत्यर्थः, काश्चित्प्रशस्तवाससः प्रच्युतवसनाः काश्चिद्व्याविद्धरशनादामाः प्रच्युतकाञ्चीगुणा अत एव वाहिताः प्रपतितभाराः किशोर्यः वडवा इव यथोत्तारितभारा वडवा निर्मुक्तबन्धनाः सत्यः श्रमापनयनाय भुवि लुठन्ति तथा अदृश्यन्तेति शेषः ॥ ४६ ॥

गो० टी०—मुक्ताहारेति । मुक्ताहारावृताः मुक्ताहारैरावृत्ताः छिन्नमुक्ताहारा इत्यर्थः व्याविद्धरशनादामाः छिन्नकाञ्चीगुणाः किशोर्यः प्रथमवयस्का वडवाः वाहिताः मार्गश्रमनिवृत्त्यर्थं भूमौ प्रवेष्टनं कारिताः सर्वत्र रेजुरित्यन्वयः ॥ ४७ ॥ ४८ ॥

४७ ] ति० टी०—अकुण्डलधराः कुण्डलधरणरहिताः गलितकुण्डला इति यावत् विच्छिन्ना आमृदिताश्च स्रजो यासां ताः अत्र रेजुरित्यनुकर्षः ॥ ४७ ॥

रा० टी०—अकुण्डलेति । अकुण्डलधराः कुण्डलधारणरहिताः प्रच्युतकुण्डला इत्यर्थः, विच्छिन्नाः आमृदिताश्च स्रजो यासां ताः अन्याः गजेन्द्रमृदिताः फुल्ला लता इव अदृश्यन्तेति शेषः ॥ ४७ ॥



१ गुरुपीनेति गो.; कुचपीनेति रा. पाठः । २ निद्रापहतेति गो. पाठः । ३ विस्रस्तेति गो. पाठः ।

चन्द्रांशुकिरणाभाश्च हाराः कासांचिदुद्गताः । हंसा इव बभुः सुप्ताः स्तनमध्येषु योषिताम् ॥ ४८ ॥
अपरासां च वैदूर्याः कादम्बा इव पक्षिणः । हेमसूत्राणि चान्यासां चक्रवाका इवाभवन् ॥ ४९ ॥
हंसकारण्डवोपेताश्चक्रवाकोपशोभिताः । आपगा इव ता रेजुर्जघनैः पुलिनैरिव ॥ ५० ॥
किङ्किणीजालसंकाशास्ता हेमविपुलाम्बुजाः । भावग्राहा यशस्तीराः सुप्ता नद्य इवाबभुः ॥ ५१ ॥
मृदुष्वङ्गेषु कासांचित्कुचाग्रेषु च संस्थिताः । बभूवुर्भूषणानीव शुभा भूषणराजयः ॥ ५२ ॥
अंशुकान्ताश्च कासांचिन्मुखमारुतकम्पिताः । उपर्युपरि वक्त्राणां व्याधूयन्ते पुनः पुनः ॥ ५३ ॥
ताः पताका इवोद्धूताः पत्नीनां रुचिरप्रभाः । नानावर्णसुवर्णानां वक्त्रमूलेषु रेजिरे ॥ ५४ ॥

४८ ] ति० टी०—अंशवः प्रभाः, किरणास्तदाधाराः । अंशवः सूक्ष्मरश्मयः, किरणाः स्थूलरश्मय इत्यन्ये । वैपरीत्येन स्थिता हारा मुक्ताहाराः ॥ ४८ ॥

रा० टी०—चन्द्रेति । चन्द्रांशूनां सोमकिरणानामाभा इव आभा येषां ते योषितां स्तनमध्येषु उद्गताः संस्थिताः हाराः सुप्ताः हंसा इव बभुः ॥ ४८ ॥

गो० टी०—चन्द्रांश्विति । चन्द्रांशुकिरणाभाः अंशुः सूर्यः। 'अथांशुः स्यान्मयूखे सवितर्यपि' इति दर्पणः । चन्द्रसूर्ययोः किरणानामाभेवाभा येषां ते तथा उत्कटाः स्थूलाः ॥४९–६१॥

४९ ] ति० टी०—वैदूर्या वैदूर्यमणिमालाः कादम्बाः कलहंसाः अत्र कादम्बशब्देन कारण्डवपदवाच्यो जलकाक उच्यते अन्यथा वैदूर्योपमानत्वमसंगतं स्यात् । हेमसूत्राणि च अत्रापि स्तनमध्योद्गतानीत्यनुकर्षः । चक्रवाकानां पीतत्वसादृश्यादुपमानत्वम् ॥ ४९ ॥

रा० टी०—अपरासामिति । अपरासां वैदूर्याः वैदूर्यहाराः कादम्बाः जलकाकाः पक्षिण इव अभवन् अन्यासां हेमसूत्राणि चक्रवाका इव पीतत्वेन चक्रवाकसदृशाः अभवन् ॥ ४९ ॥

५० ] ति० टी०—स्त्रीषु नानावर्णभूषणानि हंसादिस्थानीयानि । स्त्रीकटीपुरोभागो जघनम् ॥ ५० ॥

रा० टी०—हंसेति । पुलिनैरिव जघनैरुपलक्षिताः ताः स्त्रियः हंसैः कारण्डवैर्जलकाकैश्चोपेताः चक्रवाकोपशोभिताः आपगा नद्य इव रेजुः ॥ ५० ॥

५१ ] ति० टी०—किङ्किणीजालसंकाशास्तद्वन्मुकुलितनयनास्तत्स्थाने च नद्यां मुकुलितकुमुदानि हेमविपुलाम्बुजत्वेन वक्त्रनिगरणम् उपमाने तु न निगरणम् 'किङ्किणीजालसंबाधाः' इति पाठे किङ्किणीजालसंबाधत्वमुभयत्रापि स्पष्टमेव । शब्दवत्त्वसाधर्म्यात्किङ्किणीशब्देन लहरीणामप्युक्तेः । भावा विलासा एव स्वाप्निकसुरतभावो वा ग्राहो यासां ताः यशोऽतिगुणवत्त्वकृतयश एव तीरं यासां ताः यशःशब्देन लक्षणया कान्तिरित्यन्ये । सुप्ता नार्यो नद्य इव बभुः ॥ ६१ ॥

रा० टी०—किङ्किणीति । किङ्किणीजालान्येव संकोशा मुकुलानि यासु हेमानि हेमाभरणान्येव विपुलाम्बुजानि यासु ताः भावा शृङ्गारचेष्टाः एव ग्राहाः यासु ताः यशांसि पत्यनुकूलवर्तनजनितकीर्तयः तीराणि यासु ता सुप्ताः ताः स्त्रियः नद्य इव बभुः ॥ ६१ ॥

गो० टी०—अथासां नदीसमाधिं दर्शयति–किङ्किणीति । किङ्किणीजालसंकोशाः किङ्किणीजालान्येव संकोशा मुकुलानि यासां ताः एतत्स्थाने सत्कोशा इति पाठान्तरदर्शनात्संकोशशब्दो मुकुलवाचीत्यवगम्यते भावाः शृङ्गारचेष्टाः त एव ग्राहाः नक्राः यासां ताः सुप्तिदशायामपि वासनावशाद्भावाभिव्यञ्जकसंस्थानवत्त्वाद्भावग्राहा इत्युक्तम् यशस्तीराः यशःशब्देन यशोहेतुभूता पर्यन्तप्रसृतप्रभोच्यते सैव तीरं यासां ताः ॥ ६२ ॥

५२ ] ति० टी०—भूषणराजयो विमर्दजनितरेखाः । 'भूषणराशयः' इति पाठेऽप्ययमेवार्थो लक्षणादिना बोध्यः ॥६२॥

रा० टी०—मृदुष्विति । कासाञ्चित् पतितभूषणानामित्यर्थः, कुचाग्रेषु संस्थिताः भूषणराजयः भूषणजनितरेखा भूषणानीव बभूवुः ॥ ६२ ॥

गो० टी०—मृदुष्विति । संस्थिताः लग्नाः भूषणराजयः भ्रमराणीव भ्रमरा इव व्यत्यय आर्षः कामुका इव बभूवुः 'भ्रमरः कामुके भृङ्गे' इति दर्पणः । केचित्तु भूषणानीति पाठं कल्पयित्वा भूषणराजयः भूषणविमर्दकृतरेखाः विस्रस्तभूषणानामपि कासांचिद्भूषणानीव बभूवुरित्यर्थ इत्याहुः ॥ ६३ ॥

५३ ] ति० टी०—वक्त्राणामुपर्युपरीत्यन्वयः ॥ ६३ ॥

रा० टी०—अंशुकान्ता इति । कासाञ्चित् स्त्रीणां मुखमारुतेन मुखश्वासेन कम्पिताः अंशुकान्ताः पटप्रदेशाः वक्त्राणामुपर्युपरि पुनः पुनर्व्याधूयन्ते कम्पन्ते षष्ठ्याः साधुत्वमत एव निर्देशात् एको परिशब्दार्थो व्याधूननान्वयी वा अधिकं कम्पन्त इति तदर्थः ॥ ६३ ॥

गो० टी०—अंश्विति । मुखमारुतकम्पिताः अंशुकान्ताः सूक्ष्मवस्त्रदशाः उपर्युपरि वक्त्राणां वक्त्राण्युपर्युपरि 'धिगुपर्यादिषु त्रिषु । द्वितीयाम्रेडितान्तेषु' इति द्वितीयाभाव आर्षः । व्याधूयन्त इति श्यन्नार्षः धूनातेः क्र्यादित्वात् ॥ ६४ ॥

५४ ] ति० टी०—व्याधूयमानमंशुकान्तमुत्प्रेक्षते—ता इति । विधेयमपेक्ष्य स्त्रीलिङ्गनिर्देशः । पत्नीनाम्, अर्थाद्राव-

१ उत्कटा इति गो० पाठः । २ कारण्डवाकीर्णा इति गो० पाठः । ३ संकोशा इति गो० रा० पाठः ।

ववल्गुश्चात्र कासांचित्कुण्डलानि शुभार्चिषाम्। मुखमारुतसंकम्पैर्मन्दं मन्दं च योषिताम् ॥ ५५ ॥
शर्करासवगन्धः स प्रकृत्या सुरभिः सुखः। तासां वदननिःश्वासः सिषेवे रावणं तदा ॥ ५६ ॥
रावणाननशङ्काश्च काश्चिद्रावणयोषितः। मुखानि च सपत्नीनामुपाजिघ्रन्पुनः पुनः ॥ ५७ ॥
अत्यर्थं सक्तमनसो रावणे ता वरस्त्रियः। अस्वतन्त्राः सपत्नीनां प्रियमेवाचरंस्तदा ॥ ५८ ॥
बाहूनुपनिधायान्याः पारिहार्यविभूषिताः। अंशुकानि च रम्याणि प्रमदास्तत्र शिश्यिरे ॥ ५९ ॥
अन्या वक्षसि चान्यस्यास्तस्याः काचित्पुनर्भुजम्। अपरा त्वङ्कमन्यस्यास्तस्याश्चाप्यपरा कुचौ ॥ ६० ॥

---

णस्य। अनेकवर्णवत्सुवर्णतन्तुनिर्मितवाससां पताका इवेत्यन्वयः ॥ ५४ ॥

रा० टी०—ता इति। नानापाकादिवशेन अनेकविधानि वर्णानि येषां तानि सुवर्णानि तन्मयाभरणानि यासां तासां पत्नीनां रावणस्त्रीणां वक्त्रमूलेषु रुचिरप्रभाः ताः अंशुकान्तव्यक्तयः उद्धूताः पताका इव रेजिरे ॥ ५४ ॥

गो० टी०—ता इति। विधेयत्वात् स्त्रीलिङ्गता। नानावर्णसुवर्णानां नानाविधशोभनवर्णानाम् ॥ ५९ ॥

५५ ] ति० टी०—शुभार्चिषां कासांचियोषितां कुण्डलानि मुखमारुतसंकम्पैर्मुखमारुतसंसर्गकृतचलनैर्मन्दं मन्दं ववल्गुः। तेन कुण्डलानामतिलघुता, तेन तासां सौकुमार्यातिशयो व्यङ्ग्यः॥ ५५ ॥

रा० टी०—ववल्गुरिति। शुभार्चिषां शोभनदीप्तिमतीनां कासांचित् योषितां कुण्डलानि मुखमारुतसंकम्पैर्मन्दं मन्दं ववल्गुः चकम्पिरे। एतेन कुण्डलानामतिलघुत्वं सूचितं तेन तासां भारासहिष्णुत्वं सूचितं तेन सौकुमार्यातिशयो ध्वनितः ॥५५॥

गो० टी०—ववल्गुरिति। उपधानपरिसरे धनमणिखचिततया लम्बमानानि कुण्डलानि मन्दं मन्दं चेलुरित्यर्थः ॥ ६६–६८ ॥

५६ ] ति० टी०—शर्करासव आसवविशेषस्तद्योगात्तद्गन्धः प्रकृत्या च सुरभिः, अत एव सुखस्तासां वदननिःश्वासो रावणं सिषेवे यद्वा प्रकृत्या असुरभिरपि वायुरिति शेषः। तासां वदननिःश्वासस्तद्युक्तः अर्शआद्यजन्तम् अत एव शर्करासवगन्धो रावणं सिषेवे ॥ ५६ ॥

रा० टी०—शर्करेति। शर्करासवस्य आसवविशेषस्य गन्धः सुगन्धो यस्मिन् सः प्रकृत्या स्वभावतोऽपि सुरभिः शोभनगन्धविशिष्टः अत एव सुखः सुखप्रदः स प्रसिद्धः तासां वदननिःश्वासः रावणं सिषेवे ॥ ५६ ॥

५७ ] ति० टी०—रावणाननशङ्काः मदनिद्राभयजचित्तवैवश्यात् सपत्नीनां च सपत्नीनामपि मुखान्युपाजिघ्रन् ॥ ५७ ॥

रा० टी०—रावणेति। काश्चित् रावणयोषितः रावणाननशङ्का रावणमुखमिदमिति भ्रान्तिविशिष्टाः सत्यः सपत्नीनां मुखानि पुनः पुनरुपाजिघ्रन् ॥ ५७ ॥

५८ ] ति० टी०—ननु सपत्नीभिः कृतं मुखाघ्राणं ताः कथमसहन्तेत्यत आह—अत्यर्थमिति। अत्यासक्तेरेवास्वतन्त्रा मदपारवश्याच्च तथाभूता वरस्त्रियः सपत्नीभिराघ्रातमुखा अपि सपत्नीनां प्रियमेवाचरन्, ता अपि तासां मुखानि रावणमुखशङ्कयोपाजिघ्रन्नित्यर्थः ॥ ५८ ॥

रा० टी०—ननु तदाघ्राणं घ्रायमाणमुखाः कथं न निवारयामासुरित्यत आह—अत्यर्थमिति। रावणे अत्यर्थमत्यन्तं सक्तमनसः अत एव अस्वतन्त्राः ता रावणसंबन्धिन्यो वरस्त्रियः सपत्नीनां प्रियं तदाघ्राणसहनं स्वकर्तृकाघ्राणं च आचरन् अकुर्वन्। अत्यर्थं सक्तमनस इत्यनेन रावण एव जिघ्रतीति तासामपि भ्रान्तिः सूचिता ॥ ५८ ॥

गो० टी०—अत्यर्थमिति। रावणे अत्यर्थं सक्तमनसः अस्वतन्त्राः पाननिद्रापरवशाः ताः सपत्नीभिराघ्रातमुखाः वरस्त्रियः तदा मुखाघ्राणसमये सपत्नीनां प्रियमेवाचरन्रावणोऽजिघ्रदिति बुद्ध्या स्वयमप्यजिघ्रन्नित्यर्थः। अथवा कथं सपत्न्योपि सह स्वपन्तीत्याशङ्क्याह—अत्यर्थमिति ॥ ६९ ॥

५९ ] ति० टी०—पारिहार्यो वलयः उपनिधायोपधानं कृत्वा अंशुकानि चोपनिधायेत्यनुकर्षः ॥ ५९ ॥

रा० टी०—बाहूनिति। अन्याः प्रमदाः पारिहार्यैः वलयैः विभूषितान् बाहून् अंशुकानि वस्त्राणि च उपनिधाय उपबर्हणत्वेन प्रकल्प्य शिश्यिरे ॥ ५९ ॥

गो० टी०—बाहूनिति। पारिहार्यो वलयः। अंशुकानि च उपनिधायेत्यनुपज्यते ॥ ६० ॥

६० ] ति० टी०—अन्येत्यादिश्लोकद्वये शिश्यिर इति पदं यथायोगं वचनविपरिणामेन योज्यम् उपनिधायेति पदं च॥६०॥

रा० टी०—अन्येति। अन्या काचित् अन्यस्याः तस्याः पूर्वोक्तायाः वक्षसि भुजमुपनिधाय शिश्ये इति शेषः एवमुत्तरत्रापि यथायोग्यं शेषकल्पना। अपरा अन्यस्याः कुचौ उपनिधाय शिश्ये ॥ ६० ॥

गो० टी०—अन्या वक्षसि चान्यस्या इत्यादिश्लोकद्वये शिश्यिर इत्येतद्वचनविपरिणामेन यथायोगं संबध्यते उपनिधायेति च ॥ ६१ ॥ ६२ ॥

---

१ संसर्गादिति गो. पाठः। २ स्विति गो. पाठः। ३ गन्धश्चेति गो. पाठः। ४ रस्येति गो. पाठः। ५ भूषिताविति गो. पाठः। ६ भुजाविति गो. पाठः।

ऊरुपार्श्वकटीपृष्ठमन्योन्यस्य समाश्रिताः । परस्परनिविष्टाङ्ग्यो मदस्नेहवशानुगाः ॥ ६१ ॥
[1]अन्योन्यस्याङ्गसंस्पर्शात्प्रीयमाणाः सुमध्यमाः । एकीकृतभुजाः सर्वाः सुषुपुस्तत्र योषितः ॥ ६२ ॥
अन्योन्यभुजसूत्रेण स्त्रीमाला ग्रथिता हि सा । मालेव ग्रथिता सूत्रे शुशुभे मत्तषट्पदा ॥ ६३ ॥
लतानां माधवे मासि फुल्लानां वायुसेवनात् । अन्योन्यमालाग्रथितं संसक्तकुसुमोच्चयम् ॥ ६४ ॥
[2]प्रतिवेष्टितसुस्कन्धमन्योन्यभ्रमराकुलम् । आसीद्वनमिवोद्धूतं स्त्रीवनं रावणस्य तत् ॥ ६५ ॥
उचितेष्वपि सुव्यक्तं न तासां योषितां तदा । [3]विवेकं शक्यमाधातुं भूषणाङ्गाम्बरस्रजाम् ॥ ६६ ॥
रावणे सुखसंविष्टे ताः स्त्रियो विविधप्रभाः । ज्वलन्तः काञ्चना दीपाः [4]प्रेक्षन्तो निमिषा इव ॥ ६७ ॥

---

६१ ] ति० टी०—स्नेहोऽत्र रावणीयः ॥ ६१ ॥

६२] ति० टी०—एकीकृतभुजाः परस्परसंबद्धभुजाः ॥ ६२ ॥

रा० टी०—ऊरू इति । अन्योऽन्यस्य ऊर्वादि समाश्रिताः अत एव परस्परनिविष्टाङ्ग्यः मदस्नेहेन वशानुगाः अत एव अन्योन्यस्य अङ्गसंस्पर्शात् प्रीयमाणाः एकीकृतभुजाः सर्वा योषितः सुषुपुः । अर्धचतुष्टयमेकान्वयि ॥ ६१ ॥ ६२ ॥

६३ ] ति० टी०—अत एवाह—अन्योन्येति । माला पुष्पमाला । उपमेये मत्तषट्पदस्थानीयाः कचभारा नेत्रद्वन्द्वानि च ॥ ६३ ॥

रा० टी०—अन्योऽन्येति । अन्योऽन्यभुज एव सूत्रं तेन ग्रथिता स्त्रीमालामत्ताः षट्पदा भ्रमराः यस्यां सा सूत्रे ग्रथिता माला इव शुशुभे उपमेये षट्पदप्रतिनिधयः कचकुचोपरिभागादयः ॥ ६३ ॥

गो० टी०—अन्योन्येति । मालेव पुष्पमालेव । मत्तषट्पदस्थानीयाः केशाः ॥ ६३ ॥

६४ ] ति० टी०—लतानां वनमिवेत्यन्वयः । अन्योन्यसंबन्धेन मालाकारेण ग्रथितमिव ॥ ६४ ॥

६५ ] ति० टी०—प्रतिवेष्टिता वृक्षाणां नायकानां च शोभनाः स्कन्धा येन तत् अन्योन्यं धावन्तो ये भ्रमरास्तैराकुलम् स्त्रीणामपि पद्मिनीत्वाद्भ्रमराकुलत्वम् केशपाशनेत्रादयो वा तासु भ्रमराः स्त्रीवनं स्त्रीसमूहः ॥ ६५ ॥

रा० टी०—लतानामिति । वायुसेवनात् हेतोः उद्धूतम् अन्योन्यमालाग्रथितं मालाकारेण संबद्धम् अत एव प्रतिवेष्टिता अन्योन्यमश्लिष्टाः सुस्कन्धाः शाखा यस्मिन् तत् अत एव संसक्ताः परस्परं मिलिताः कुसुमोच्चया यस्मिन् अत एव अन्योन्यभ्रमरैः आकुलं व्याप्तं माधवे वसन्ते मासि लतानां वनमिव रावणस्य स्त्रीवनमासीत् । उपमानविशेषणानि उपमेयेऽपि योजनीयानि । तत्र वायुशब्देन मारुतेर्ग्रहणं कुसुमशब्दः वेण्यादिग्रथितकुसुमपरः भ्रमरशब्दः चिकुरपरः 'भ्रमरश्चिकुरः' इति विश्वः । अर्धचतुष्टयमेकान्वयि ॥ ६४ ॥ ६५ ॥

गो० टी०—लतानामित्यादिश्लोकद्वयमेकान्वयम् । तद्रावणस्य स्त्रीवनं लतानां वनमिवासीदिति संबन्धः । विशेषणान्युभयत्र योज्यानि । वायुसेवनाद्धेतोः अन्योन्यमालाग्रथितम् अन्योन्यमालारूपेण ग्रथितं सुखसुखमारुतसेवनादन्योन्यमालाग्रथितमिति स्त्रीपक्षे । संसक्तकुसुमोच्चयम् अन्योन्यसंसक्तनीवीकम् संसक्तकुसुमसमूहं चेत्यर्थः व्यतिवेष्टितसुस्कन्धम् अन्योन्यपरिवेष्टितांसम् अन्योन्यपरिवेष्टितप्रकाण्डं च अन्योन्यं भ्रमरैश्चिकुरैराकुलम् भ्रमरैः भृङ्गैराकुलं च 'भ्रमरश्चिकुरे भृङ्गे' इति विश्वः ॥ ६४ ॥ ६५ ॥

६६ ] ति० टी०—तासां योषितामुचितेषु स्थानेषु सुव्यक्तं प्रतिष्ठितानामपि भूषणाङ्गाम्बरस्रजां विवेकमाधातुं कर्तुं न शक्यम् अपरिमितत्वात् । भूषणभूष्ययोरैकरूप्यात्परस्परसंग्रथितत्वेन सुप्तत्वाच्चेमान्यस्या भूषणानीमान्यन्यस्या इति विवेकः कर्तुमशक्य इति भ्रान्तिमानलंकारोऽत्र व्यङ्ग्यः ॥ ६६ ॥

रा० टी०—उचितेष्वपि उचितेषु योग्येषु सुव्यक्तं सुस्फुटं विन्यस्तानामिति शेषः, तासां योषितां संबन्धिनीनाम् भूषणाङ्गाम्बरस्रजां विवेकम् इमे भूषणादयः अस्या अन्यस्या वेति निश्चयमाधातुं कर्तुं न शक्यम् एतेनान्योन्यसंश्लेषः सूचितः ॥ ६६ ॥

गो० टी०—उचितेष्विति । उचितेषु स्थानेषु स्थितानामपि भूषणाङ्गाम्बरस्रजां साधारण्यादेकतामापन्नानामिति भावः । विवेकः सुव्यक्तमाधातुं न शक्यः अन्योन्यसंग्रथितत्वेन सुप्तत्वात् । इमा अस्या भूषणाङ्गाम्बरस्रजः इमा अपरस्या इति विवेकः कर्तुं न शक्य इत्यर्थः ॥ ६६ ॥

६७ ] ति० टी०—सुखसंविष्टे सुखसुप्ते काञ्चनाः काञ्चनस्तम्भाः दीपा दीपस्थाग्निपुरुषाः कर्तारः स्त्रियः कर्म अनेन रावणे जाग्रति तेषामपि तद्दर्शने भयं सूचितम् ॥ ६७ ॥

रा० टी०—रावणेति । रावणे सुखसंविष्टे सुप्ते सतीत्यर्थः ज्वलन्तः काञ्चना दीपाः तदभिमानिदेवविशेषाः अनिमिषा निमेषरहिताः सन्तः विविधप्रभाः ताः रावणसंबन्धिनीः स्त्रियः प्रेक्षन्ते एतेन रावणजागरणसमये तत्स्त्रीदर्शनं देवानामपि दुर्लभमिति व्यञ्जितं तेन रावणस्य प्रतापातिशयः सूचितः ॥ ६७ ॥

गो० टी०—रावण इति । सुखसंविष्टे सुखसुप्ते काञ्चनाः काञ्चनदीपस्तम्भस्था दीपाः अनिमिषाः सन्तः प्रेक्षन्त इव अनेन रावणस्य जाग्रद्दशायां दीपैरपि ताः स्त्रियो निश्चलं द्रष्टुमशक्या इति गम्यते ॥ ६७ ॥

---

१ श्लोकोऽयं गो. नास्ति । २ व्यतीति गो. पाठः । ३ विवेक इति गो. पाठः । ४ प्रेक्षन्तानिमिषा इति गो. पाठः ।

राजर्षिविप्रदैत्यानां गन्धर्वाणां च योषितः । रक्षसां चाभवन्कन्यास्तस्य कामवशंगताः ॥ ६८ ॥
युद्धकामेन ताः सर्वा रावणेन हृताः स्त्रियः । समदा मदनेनैव मोहिताः काश्चिदागताः ॥ ६९ ॥
न तत्र काश्चित्प्रमदाः प्रसह्य वीर्योपपन्नेन गुणेन लब्धाः ।
न चान्यकामापि न चान्यपूर्वा विना वरार्हां जनकात्मजां तु ॥ ७० ॥
न चाकुलीना न च हीनरूपा नादक्षिणा नानुपचारयुक्ता ।
भार्याऽभवत्तस्य न हीनसत्त्वा न चापि कान्तस्य न कामनीया ॥ ७१ ॥
बभूव बुद्धिस्तु हरीश्वरस्य यदीदृशी राघवधर्मपत्नी ।
इमा महाराक्षसराजभार्याः सुजातमस्येति हि साधुबुद्धेः ॥ ७२ ॥

---

६८ ] ति० टी०—राजर्षयो विप्रदैत्याश्च अस्य ब्रह्मराक्षसत्वादस्ति विप्रकन्याविवाहेऽधिकारः । कामवशंगताः सत्यस्तस्य योषितोऽभवन् । अनेन तासामप्यनुरागः सूचितः ॥ ६८ ॥

रा० टी०—नन्वेवंविधस्त्रीणां प्राप्तिः कथं तस्येत्यत आह—राजर्षीति । राजर्षिप्रभृतीनां कन्याः कामवशं गताः सत्यः तस्य रावणस्य योषितोऽभवन् । कन्या इत्युक्त्या रावणस्याधर्मसंसर्गाभावो ध्वनितः तेन ब्रह्मराक्षसत्वादुक्तकन्याविवाहयोग्यत्वं रावणस्य ध्वनितम् ॥ ६८ ॥

गो० टी०—अथ सीतयैकया अकाम्यत्वं वक्तुं सर्वस्त्रीकाम्यत्वमाह—राजर्षीत्यादिना श्लोकत्रयेण । तस्य कामवशंगताः तं प्रति यः कामः तस्य वशंगताः तं कामयित्वा स्वयमेवागतास्ताः न तु तेन कामयित्वा हृता इत्यर्थः ॥ ६८ ॥

६९ ] ति० टी०—अस्य बहुस्त्रीप्राप्तिर्बलात्स्वारस्याच्चेत्याह—युद्धेत्यादि । सर्वा इति बाहुल्याभिप्रायम् आसां हरणे एतद्बन्धुभिर्युद्धं भविष्यतीति युद्धकामनापूर्वं हृताः । काश्चित्समदास्तरुण्यो मदनमोहिताः स्वयमेवैनं वृतवत्यः ॥ ६९ ॥

रा० टी०—तदागमनप्रकारमाह—युद्धेति । सर्वा बहवः स्त्रियः युद्धकामेन हरणहेतुकतत्पित्रादिभिः युद्धमिच्छता रावणेन हृताः समदाः काश्चित्तु मदनेनैव मोहिताः सत्यः आगताः स्वयं प्राप्ताः एतेन रावणस्य सौन्दर्यातिशयः सूचितः ॥ ६९ ॥

गो० टी०—हृताश्च काश्चन श्रूयन्ते तत्र कथमित्यत्राह—युद्धेति । तासु हृतासु तासां संबन्धिभिः सह युद्धं भविष्यतीति युद्धं कामयित्वाऽनेन हृताः न तु ताः कामयित्वा हृताः ॥ ६९ ॥

७० ] ति० टी०—अस्यैव विवरणम्—न तत्र काश्चिदिति । वीर्योपपन्नेनापि तेन तत्र तासु मध्ये काश्चित्प्रमदाः प्रसह्य न हृताः, किं तु गुणेन निरतिशयैश्वर्यवीर्यसौन्दर्यादिगुणेन स्वत एव लब्धाः तत्र लङ्कायामन्यकामा च नाहृता, अन्यपूर्वा च नाहृता कथमेवं प्रत्यक्षापलापस्तत्राह—विनेति । वरार्हां श्रेष्ठरामार्हाम् ॥ ७० ॥

रा० टी०—जनकात्मजाहरणं रावणविघातार्थमेवेति द्योतयन्नाह—नेति । वरार्हां श्रेष्ठपूजायोग्यां जनकात्मजां विना गुणेन अतिसौन्दर्यादिनोपलक्षिता अपि काश्चित् अनिच्छन्त्यः प्रमदाः वीर्योपपन्नेन रावणेन प्रसह्य हठात् न लब्धाः गृहीताः अन्यकामाः पत्यन्तरमिच्छन्त्यो न लब्धाः स्वेतरेच्छावत्यो न हृता इत्यर्थः, अन्यपूर्वा विवाहिता आत्ममात्रमिच्छन्त्योऽपीत्यर्थः, न लब्धा एतेन रावणविध्वंसोऽचिरं भवितेति सूचितम् ॥ ७० ॥

गो० टी०—अमुमेवार्थं विवृणोति—न तत्रेति । तत्र तासु काश्चिदपि प्रमदाः प्रसह्य वीर्येण न लब्धाः किंतु स्वसंवादेनैवेत्यर्थः वीर्योपपन्नेन रावणेन न लब्धाः अपि तु गुणेन लब्धाः अन्यकामा च काचित्तत्र नास्ति अन्यपूर्वा च न । अन्यत्रासक्ता च न काचिदित्यर्थः ॥ ७० ॥ ७१ ॥

७१ ] ति० टी०—उपचार उत्तमाम्बरभूषणमाल्यादिः । कान्तस्य रावणस्य कामनीया मनोज्ञा न तादृशी च न ॥ ७१ ॥

रा० टी०—नेति । अकुलीना निषिद्धकुलोत्पन्ना तस्य रावणस्य भार्या नाभवत् हीनरूपा च नाभवत् अदक्षिणा अकुशलापि नाभवत् अनुपचारयुक्ता उत्तमभूषणरहिता नाभवत् हीनसत्त्वा हीनबलापि न कान्तस्य रावणस्य न कामनीया अनीप्सितापि भार्या नाभवत् ॥ ७१ ॥

७२ ] ति० टी०—अथ सीताप्येतरख्यन्तर्गता न वेति विकल्पार्थे रावणस्य भद्रमेवेति बुद्धिर्हनूमतो जातेत्याह—बभूवेति । साधुबुद्धेर्हरीश्वरस्येति बुद्धिर्बभूव इमा महाराक्षसराजभार्याः, यथा तद्युक्ताः राघवधर्मपत्न्यपीदृशी एतदन्तर्गतैतद्युक्ता च यदि स्यात्तदास्य रावणस्य सुजातं भद्रमेव भवति रावणभुक्तेति मया निवेदिते सति सीतायां मृतायामिव राघवस्योपेक्षणाद्रावणवधयत्नाप्रसक्तेरिति भावः ॥ ७२ ॥

रा० टी०—बभूवेति । इमा राक्षसराजभार्याः यथा स्वपतिस्मरणादिषु निरताः ईदृशी तथा रामस्मरणादिनिरता यदि राघवधर्मपत्नी तत्स्मरणादीनां विघ्नो न कृतः स्यादित्यर्थः तदा अस्य रावणस्य सुजातं कल्याणमेवेत्यर्थः, इति साधुबुद्धेर्हरीश्वरस्य बुद्धिर्निश्चयो बभूव ॥ ७२ ॥

गो० टी०—बभूवेति । राघवधर्मपत्नी ईदृशी यदि स्वयंवरात्पूर्वमेवास्य धर्मपत्नी चेत् अस्य सुजातं सुकृतम्

---

१ पितृदैत्येति गो. पाठः । २ राक्षसानां [illegible] कन्या इति गो. पाठः । ३ तामिति गो. पाठः ।

पुनश्च सोऽचिन्तयदार्तरूपो ध्रुवं विशिष्टा गुणतो हि सीता ।
अथायमस्यां कृतवान्महात्मा लङ्केश्वरः कष्टमनार्यकर्म ॥ ७३ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये सुन्दरकाण्डे नवमः सर्गः ॥ ९ ॥

## दशमः सर्गः ।

हनुमान्पुष्पकविमाने नानालंकरणोपशोभितोपकरणभासुरशयनोत्तमशायिनं बहुविधाभरणविभूषितवपुषं रावणं ददर्श । तदविदूरतः पणवमृदङ्गवेणुवीणाढक्कादिनानातोद्यालिङ्गितवपुषां सुप्त्यनवस्थाङ्गप्रत्यङ्गानां शैलूषीणां मध्येऽद्भुतशयनशायिनीमुज्ज्वलाभरणोपशोभितां मन्दोदरीं दृष्ट्वा सेयं सीतेति मत्वा संजातहर्षः पुच्छचुम्बनादि कापेयमाविश्चकार ।

तत्र दिव्योपमं मुख्यं स्फाटिकं रत्नभूषितम् । अवेक्षमाणो हनुमान्ददर्श शयनासनम् ॥ १ ॥

इयमसाध्वी बुद्धिः कापेयत्वप्रमादकृता न तु स्वयं तस्य बुद्धिरिति द्योतयितुं साधुबुद्धेरित्युक्तम् एवं प्रमादोपस्थितबुद्ध्या पश्चात्तापोऽभूदित्याह–पुनश्च सोऽचिन्तयदार्तरूप इति । यद्वा इमाः राक्षसराजभार्याः यथा स्वभर्त्रा विशिष्टाः सकलभोगयुक्ताश्च तथा राघवधर्मपत्नी ईदृशी यदि स्वभर्त्रा सहिता भोगयुक्ता च यदि तदास्य रावणस्य सुजातं शोभनं जन्मेति साधुबुद्धेः परसमृद्धिपरस्य हरीश्वरस्य स्वयमाधिपत्यार्हस्य बुद्धिर्बभूव । अयं रावणः राघवधर्मपत्नीं यदि प्रत्यर्पयेत्तदास्य शोभनं जन्म स्यादिति बुद्धिर्जातेत्यर्थः ॥ ७२ ॥

७३ ] ति० टी०–यदीत्यनेन सूचितमस्य पक्षस्यात्यन्तासंभावितत्वमाह—पुनश्चेति । पक्षान्तरं च सोऽचिन्तयत् विचारेण निश्चितवानित्यर्थः । चिन्ताप्रकारः–हि प्रसिद्धमेतत् यत्सीता देवी गुणतः पातिव्रत्यादिगुणैर्विशिष्टा अथ यत इत्यर्थे यतो महात्मा महाबलो लङ्केश्वरः निरवधिकैश्वर्यवैशिष्ट्यमनेन सूचितम् । ईदृशोऽस्यां जानक्यामनार्यकर्मापहरणरूपं कर्म आर्तरूपः परिगृहीतमायारूपः सन्कष्टं सक्लेशं यथा भवति तथा कृतवान् । यद्येषा ऐश्वर्यादौ सरागा स्यात्तदा स्वरसत एव नयनं स्यात्, न च तदस्ति अस्माभिस्तद्विक्रोशनादेव रावणेन क्लेशपूर्वं नयनस्य चानुभवादित्याशयः । ‘ आर्तरूपः ’ इति पाठे आर्तं संजातपीडं रूपं यस्येत्यर्थं हनुमद्विशेषणम् आन्तरपीडासूचकरूप इत्यर्थः ॥ ७३ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये सुन्दरकाण्डे नवमः सर्गः ॥ ९ ॥

रा० टी०–पुनरिति । गुणतः सर्वसद्गुणैर्विशिष्टा सर्वतोऽधिका सीताऽस्तीति ध्रुवं निश्चितम् । अथ अतः महात्मा लङ्केश्वरः यत् अस्यां सीतायामनार्यकर्म अपहरणरूपक्षुद्रक्रियां कृतवान् तत्कष्टम् अनुचितं तद्विघातकमित्यर्थः ॥ ७३ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ सुन्दरकाण्डे नवमः सर्गः ॥ ९ ॥

गो० टी०–किंच चिन्तान्तरमाह–पुनश्चेति । अथ सः हनुमान् । सीता गुणतः पातिव्रत्यादिगुणतः ध्रुवं विशिष्टा हि अस्याम् एतद्विषये महात्मा महाकुलप्रसूतोऽपि अयं लङ्केश्वरः अनार्यकर्म अपहरणरूपं कर्म कृतवान् कष्टमिति आर्तरूपः अत्यन्तमार्तः “ प्रशंसायां रूपप् ” पुनश्चाचिन्तयत् । वैदेह्याः दृढव्रतत्वात्पातिव्रत्यभङ्गो न भवेदेव अपि तु मिथ्यापवादमेवोत्पादितवानिति भृशं दुःखितः सन् चिन्तितवानित्यर्थः । यद्वा बभूवेत्यादि । राक्षसराजपत्नीवत्सीता स्वभर्त्रा संगता चेत्सीतापहरणं न कृतवांश्चेत्तदास्य सुजातमित्युक्तम् । तत्र निरतिशयसौन्दर्यादिशालिन्या मैथिल्याः रक्षःस्त्रीसाम्यं चिन्तयता मया हीनोपमा कृतेति पश्चात्तापयुक्तः सन् अचिन्तयत् । हि यस्मात्सीता गुणतः विशिष्टा अतः आर्तस्वरूपः सन्नचिन्तयत् मया हीनोपमैव कृतेत्यचिन्तयत् । अथ अथापि अस्यां सीतायाम् अनार्यकर्म धर्षणरूपं कर्म कृतवान् कष्टं सर्वमिदं लङ्कैश्वर्यं भ्रष्टं भविष्यतीत्यचिन्तयच्चेत्यर्थः । यद्वा राघवधर्मपत्नी यथा रावणेन बलादानीता तथा राक्षसराजभार्याः बलात्सुग्रीवेण बन्दीकृताश्चेदस्य हरीश्वरस्य सुग्रीवस्य सुजातं दीति साधुबुद्धेः सन्मन्त्रिबुद्धेः अस्य हनुमतः बुद्धिर्बभूवेत्यर्थः । यद्वा इमा राक्षसराजभार्याः यथा रावणेनुरक्ताः ईदृशी राघवधर्मपत्नी यदि एवमनुरक्ता चेत् अस्य सुजातमिति साधुबुद्धेरपि बुद्धिर्बभूव ऐश्वर्यातिशयदर्शनविस्मयादिति भावः अत एव वक्ष्यति–अहो वीर्यमित्यादिना । एवं हठादुक्त्वानुशयितवानित्याह–पुनश्चेति । हि यस्मात्सीता गुणतः पातिव्रत्येन विशिष्टा सर्वोत्कृष्टा अतः आर्तरूपः किं मया व्याहृतमित्यनुतप्तः सन् अस्यामनार्यकर्म कृतवानित्यचिन्तयत् ॥ ७३ ॥

अस्मिन्सर्गे त्रिसप्ततिः श्लोकाः ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने नवमः सर्गः ॥ ९ ॥

१ ] ति० टी०–तत्र शालायाम् । दिव्योपमं दिवि भवेन स्वर्गवर्तिपदार्थेनैवोपमा यस्य तत् शयनस्यासनं पल्यङ्कप्रतिष्ठापनवेदिका अवेक्षमाण इतस्ततः पश्यन् ॥ १ ॥

१ आर्तरूप इति गो० पाठः ।

दान्तकाञ्चनचित्राङ्गैर्वैदूर्यैश्च वरासनैः । महार्हास्तरणोपेतैरुपपन्नं महाधनैः ॥ २ ॥
तस्य चैकतमे देशे [1]दिव्यमालोपशोभितम् । ददर्श पाण्डुरं छत्रं ताराधिपतिसंनिभम् ॥ ३ ॥
जातरूपपरिक्षिप्तं चित्रभानोः समप्रभम् । अशोकमालावितत्तं ददर्श परमासनम् ॥ ४ ॥
वालव्यजनहस्ताभिर्वीज्यमानं समन्ततः । गन्धैश्च विविधैर्जुष्टं वरधूपेन धूपितम् ॥ ५ ॥
परमास्तरणास्तीर्णमाविकाजिनसंवृतम् । दामभिर्वरमाल्यानां समन्तादुपशोभितम् ॥ ६ ॥
तस्मिञ्जीमूतसंकाशं प्रदीप्तोज्ज्वलकुण्डलम् । लोहिताक्षं महाबाहुं महारजतवाससम् ॥ ७ ॥
लोहितेनानुलिप्ताङ्गं चन्दनेन सुगन्धिना । संध्यारक्तमिवाकाशे तोयदं सतडिद्गुणम् ॥ ८ ॥
वृतमाभरणैर्दिव्यैः सुरूपं कामरूपिणम् । सवृक्षवनगुल्माढ्यं प्रसुप्तमिव मन्दरम् ॥ ९ ॥
क्रीडित्वोपरतं रात्रौ वराभरणभूषितम् । प्रियं राक्षसकन्यानां राक्षसानां सुखावहम् ॥ १० ॥

---

२-३] ति० टी०—तस्यैव वर्णनम्—दान्तेत्यादि । गजदन्तमयानि स्वर्णमयानि च चित्राणि चित्रयुतान्यङ्गानि पादादिरूपाणि येषां तैर्महार्हास्तरणोपेतैर्बहुमूल्यास्तरणयुक्तैः वैदूर्यैरित्युपलक्षणम् वैदूर्यैः पद्मरागादिनिर्मितैर्वरासनैः श्रीशयनपल्यङ्कैर्महाधनैर्बहुमूल्यैरुपपन्नम् ॥ २ ॥ ३ ॥

रा० टी०—दर्शनान्तरमाह—तत्रेत्यादिभिः । अवेक्षमाणः सीतान्वेषणं कुर्वन् हनुमान् दिव्योपमं स्वर्गस्थशयनासनसदृशं स्फाटिकं स्फटिकमणिमयं रत्नभूषितं महार्हास्तरणोपेतैर्बहुमूल्यास्तरणयुक्तैर्दान्तकाञ्चनचित्राङ्गैः दन्तमयत्वकाञ्चनमयत्वाभ्यां चित्राण्यङ्गानि पादादीनि येषां तैर्वैदूर्यैर्वैदूर्यमणिमयैश्च महाधनैर्बहुमूल्यकैर्वरासनैरल्पपर्यङ्कैरुपपन्नं महापर्यङ्कावरोहणाय संयोजितं मुख्यं शयनासनं महापर्यङ्कं ददर्श । श्लोकद्वयमेकान्वयि ॥ १ ॥ २ ॥

गो० टी०—तत्र दिव्योपममित्यादि । शयनासनं शयनस्यासनं खट्वामित्यर्थः । दान्तेति । दान्तानि दन्तविकारभूतानि काञ्चनानि काञ्चनमयानि च अत एव चित्राणि नानावर्णानि अङ्गानि येषां तैः प्रान्ते दन्तमयैः ततः परं काञ्चनमयैः सर्वत्र वैदूर्यनिर्मितैरित्यर्थः । महाधनैः महामूल्यैः वरासनैः शयनावरोहणकाले विश्रमाय स्थापितैः उपपन्नम् आवृतम् ॥ १ ॥ २ ॥

रा० टी०—तस्येति । तस्य महापर्यङ्कस्य एकतमे एकस्मिन्देशे दिव्यमाल्योपशोभितं ताराधिपतिसन्निभं पाण्डुरं श्वेतं छत्रं ददर्श ॥ ३ ॥

गो० टी०—तस्येति । एकतमे देशे शिरोभाग इत्यर्थः ॥३॥

४ ] ति० टी०—परमासनं पल्यङ्कस्तस्यैकदेशे ददर्श । अशोकपुष्पमालायुक्तम् यद्वा यत्संनिधाने शोकाभावस्तादृशमालायुतम् । चित्रभानुरग्निः ॥ ४ ॥

५ ] ति० टी०—वालव्यजनं चामरम् । ननु संभोगगृहे तत्रापि निद्राणस्य कथं वालव्यजनवीजनम्, कथं च हनुमतस्ताभिरदर्शनमिति चेन्न यन्त्रनिर्मितस्त्रीप्रतिमादिभिस्तत्रापि तत्संभवात् ॥ ५ ॥

६ ] ति० टी०—आविकाजिनमूर्णायुचर्म तद्धि परममृदुलम् तेन संवृतं संवृतपर्यन्तप्रदेशम् माल्यं पुष्पम् ॥ ६ ॥

रा० टी०—जातरूपेति । जातरूपेण सुवर्णेन परिक्षिप्तं निर्मितं चित्रभानोः सूर्यस्य समप्रभम् अशोकमालावितत्तं शोकापहारकमालाभिः संयुतं विविधैर्गन्धैश्चन्दनैर्जुष्टम् आविकाजिनेन स्वाभाविकातिकोमलोर्णायुचर्मणा संवृत्तम् आस्तीर्णं वरमाल्यानां मनोहरसुगन्धादिनोत्तमपुष्पाणां दामभिर्मालाभिः उपशोभितं वालव्यजनहस्ताभिः समन्ततो वीज्यमानं परमासनं महापर्यङ्कस्थपर्यङ्कविशेषं ददर्श । श्लोकत्रयमेकान्वयि ॥४-६॥

गो० टी०—उक्तमेव पर्यङ्कं पुनर्वर्णयन्नाह—जातरूपेत्यादिना । चित्रभानोः सूर्यस्य आविकाजिनम् ऊर्णायुचर्म तेन पर्यङ्कस्योपरि फलका संधीयते । वरमल्यानाम् अशोकातिरिक्तपुष्पाणाम् ॥ ४-६ ॥

७ ] ति० टी०—तस्मिन् प्रसुप्तमिति शेषः । महारजतं स्वर्णं तत्तन्तुनिर्मितवासोधारिणम् ॥ ७ ॥

रा० टी०—तस्मिन्निति । जीमूतसंकाशं श्यामत्वेन मेघसदृशं प्रदीप्तानि उज्ज्वलकुण्डलानि यस्य महारजतं स्वर्णतन्तुनिर्मितं वासो यस्य ॥ ७ ॥

गो० टी०—तस्मिन्नित्यादि । महारजतवाससम् हेमचित्रितवाससं महारजतं हेम महारजनवासससमिति पाठे कुसुम्भरागरञ्जितवस्त्रमित्यर्थः । सवृक्षवनगुल्माढ्यं सवृक्षैर्वनैः गुल्मैश्चाढ्यम् प्रसुप्तं निश्चलमित्यर्थः ॥ ७-१२ ॥

८ ] ति० टी०—रावणस्य तडित्स्थानीयं सौवर्णं वासः॥८॥

रा० टी०—लोहितेन रक्तेन चन्दनेन अनुलिप्ताङ्गं सतडिद्गुणं तडिद्रूपगुणसहितं संध्यारक्तं संध्याहेतुकारुण्यविशिष्टम् आकाशे तोयदं मेघमिव तडिदुपमेयत्वं स्वर्णवस्त्रस्य ॥ ८ ॥

९-१० ] ति० टी०—सवृक्षवनगुल्माढ्यं पुष्पसहितवृक्षवनगुल्माढ्यं मन्दरमिव स्थितम् बाहवो यस्य वृक्षाः, नासादयो गुल्माः ॥ ९ ॥ १० ॥

रा० टी०—दिव्यैः आभरणैः वृतं सवृक्षवनैर्वृक्षसमूहसहितैर्गुल्मैर्लताविशेषैराढ्यं मन्दरमिव ॥ ९ ॥

---

१ सोऽप्यमालाविभूषितमिति गो. पाठः । २ [illegible]पाण्डुरच्छत्रमिति गो. पाठः । ३ [illegible]मेति गो. पाठः । ४ [illegible]मिति गो. पाठः ।

पीत्वाऽप्युपरतं चापि ददर्श स महाकपिः । भास्वरे शयने वीरं प्रसुप्तं राक्षसाधिपम् ॥ ११ ॥
निःश्वसन्तं यथा नागं रावणं वानरोत्तमः । आसाद्य परमोद्विग्नः सोपासर्पत्सुभीतवत् ॥ १२ ॥
अथारोहणमासाद्य वेदिकान्तरमाश्रितः । क्षीबं राक्षसशार्दूलं प्रेक्षते स्म महाकपिः ॥ १३ ॥
शुशुभे राक्षसेन्द्रस्य स्वपतः शयनं शुभम् । गन्धहस्तिनि संविष्टं यथा प्रस्रवणं महत् ॥ १४ ॥
काञ्चनाङ्गदसंनद्धो ददर्श स महात्मनः । विक्षिप्तौ राक्षसेन्द्रस्य भुजाविन्द्रध्वजोपमौ ॥ १५ ॥
ऐरावतविषाणाग्रैरापीडनकृतव्रणौ । वज्रोल्लिखितपीनांसौ विष्णुचक्रपरिक्षतौ ॥ १६ ॥
पीनौ समसुजातांसौ संगतौ बलसंयुतौ । सुलक्षणनखाङ्गुष्ठौ स्वङ्गुलीयकलक्षितौ ॥ १७ ॥
संवृतौ परिघाकारौ वृत्तौ करिकरोपमौ । विक्षिप्तौ शयने शुभ्रे पञ्चशीर्षाविवोरगौ ॥ १८ ॥
शशक्षतजकल्पेन सुशीतेन सुगन्धिना । चन्दनेन परार्ध्येन स्वनुलिप्तौ स्वलंकृतौ ॥ १९ ॥

---

रा० टी०—प्रसुप्तं सुरूपं शोभनरूपविशिष्टं क्रीडित्वा उपरतं निवृत्तं पीत्वाऽपि उपरतं वराभरणभूषितं कामरूपिणं रावणं तस्मिन् परमासने ददर्श । सार्धश्लोकचतुष्टयमेकान्वयि ॥ १० ॥

११ ] ति० टी०—पीत्वाप्युपरतम् अपिना क्रीडित्वाप्युपरतम् ॥ ११ ॥

१२ ] ति० टी०—यथा नागं गजमिव निःश्वसन्तं रावणमासाद्य प्राप्य परमोद्विग्नोऽयं पापी देवीं हतवानित्येतत्समीपेऽवस्थानमनुचितमिति खिन्नचित्तोऽपासर्पत् । सुभीतवत्सुभीतो यथा भयहेतोः पिशाचादेः संमुखे स्थातुमशक्तोऽपसर्पति तद्वत् ॥ १२ ॥

रा० टी०—भास्वरे इति । भास्वरे प्रकाशमाने शयने प्रसुप्तं नागमिव निःश्वसन्तं रावणं वानरोत्तमो हनुमान् आसाद्य प्राप्य परमोद्विग्नः भविष्यदेतदैश्वर्यध्वंसहेतुकोद्वेगविशिष्टः सन् सुभीतवत् उपासर्पत् एतेन हनुमतो दयालुत्वातिशयः सूचितः । सार्धश्लोक एकान्वयी ॥ ११ ॥ १२ ॥

१३ ] ति० टी०—आरोहणं सोपानम् । वेदिकान्तरं सोपानवेदिकान्तरं सोपानपर्वमध्यम् ॥ १३ ॥

रा० टी०—अथेति । अथ उपसर्पणानन्तरं वेदिकान्तरमासाद्य प्राप्य आरोहणं सोपानमाश्रितः सन् क्षीबं मत्तं राक्षसशार्दूलं प्रेक्षते स्म ॥ १३ ॥

गो० टी०—अथेति । अथ अपसर्पणानन्तरम् आरोहणं सोपानम् आसाद्य अधिरुह्य वेदिकान्तरम् सोपानपर्वमध्यम् ॥ १३ ॥

१४] ति० टी०—यस्य गन्धेनान्ये गजाः पलायन्ते स गन्धगजः मत्तगजेन नितरां संविष्टमधिष्ठितं महत्प्रस्रवणमिव १४

रा० टी०—शुशुभे इति । स्वपतो राक्षसेन्द्रस्य शयनं गन्धहस्तिना संनिविष्टं प्रविष्टं प्रस्रवणं गिरिविशेष इव शुशुभे॥१४॥

गो० टी०—शुशुभ इति । यस्य गन्धेनान्ये हस्तिनो भीता भवन्ति स गन्धहस्ती । प्रस्रवणं निर्झरम् ॥ १४ ॥

१५ ] ति० टी०—महात्मनो महाशरीरस्य । विक्षिप्तौ प्रसारितौ ॥ १५ ॥

रा० टी०—काञ्चनेति । काञ्चनाङ्गदाभ्यां संनद्धौ संयुक्तौ विक्षिप्तौ राक्षसेन्द्रस्य भुजौ ददर्श ॥ १५ ॥

गो० टी०—काञ्चनाङ्गदेत्यादि । विक्षिप्तौ प्रसारितौ विष्णुचक्रपरिक्षतौ विष्णुः उपेन्द्रः संगतौ देहानुरूपौ संहतौ दृढसंधिबन्धौ विक्षिप्तौ शयने निहितौ पञ्चाङ्गुलिमत्तया पञ्चशीर्षाविवेत्युक्तम् एतदन्तस्य ददर्शेत्यनेनान्वयः अत्र द्विभुजत्वैकमुखत्वोक्तिः स्त्रीणां कामनीयत्वाय ॥१५–१८॥

१६ ] ति० टी०—आपीडने युद्धे कृतव्रणौ कृतव्रणकिणौ वज्रेणोल्लिखितौ क्षतौ पीनांसौ ययोस्तौ वज्रचक्रयोरप्यसाध्यमृत्युरिति भावः ॥ १६ ॥

रा० टी०—भुजावेव वर्णयन्नाह–ऐरावतेति । ऐरावतविषाणाग्रैः आपीडने युद्धे कृतं व्रणं ययोस्तौ वज्रेण उल्लिखितौ प्राप्तक्षतौ पीनांसौ ययोः विष्णुचक्रेण परिक्षतौ युद्धे प्राप्तव्रणौ ॥ १६ ॥

१७–१८ ] ति० टी०—समौ सुजातौ चांसौ संगतौ दृढसंधिबन्धौ स्वङ्गुलीयकलक्षितौ शोभनाङ्गुलीयकभूषितौ १७॥१८

रा० टी०—पीनौ स्थूलौ समौ सुजातौ सुन्दरौ अंसौ ययोः सङ्गतौ शरीरसदृशौ बलसंयुतौ बलिष्ठौ सुलक्षणं नखाङ्गुष्ठं ययोः स्वङ्गुलीयकलक्षितौ शोभनाङ्गुलीयकैर्लक्षितौ ॥ १७ ॥

रा० टी०—संहतौ पुष्टौ वृत्तौ वर्तुलौ अत एव करिकरोपमौ शुण्डादण्डसदृशौ पञ्चशीर्षौ उरगाविव ॥ १८ ॥

१९] ति० टी०—शशस्य क्षतजं रक्तमतिलोहितवर्णम्॥१९॥

रा० टी०—शशक्षतजकल्पेन शशरुधिरसदृशेन परार्ध्येन अत्युत्तमेन चन्दनेन स्वनुलिप्तौ स्वलंकृतौ शोभनालङ्कारविशिष्टौ ॥ १९ ॥

गो० टी०—शशक्षतजेत्यादि । यक्षादीन् रावयितुं शीलमनयोरस्तीति तथा ददर्शेति पुनरभिधानं विशेषणान्तरविवक्षया ॥ १९–२१ ॥

---

१ वानरर्षभ इति गो. पाठः । २ सुप्तमिति गो. पाठः । ३ शयनोत्तममिति गो. पाठः । ४ संविष्टे इति गो. पाठः । ५ तलेति गो. पाठः । ६ संहताविति गो. पाठः ।

उत्तमस्त्रीविमृदितौ गन्धोत्तमनिषेवितौ । यक्षपन्नगगन्धर्वदेवदानवराविणौ ॥ २० ॥
ददर्श स कपिस्तस्य बाहू शयनसंस्थितौ । मन्दरस्यान्तरे सुप्तौ महाही रुषिताविव ॥ २१ ॥
ताभ्यां स परिपूर्णाभ्यामुभाभ्यां राक्षसेश्वरः । शुशुभेऽचलसंकाशः शृङ्गाभ्यामिव मन्दरः ॥ २२ ॥
चूतपुंनागसुरभिर्वकुलोत्तमसंयुतः । मृष्टान्नरससंयुक्तः पानगन्धपुरःसरः ॥ २३ ॥
तस्य राक्षसराजस्य निश्चक्राम महामुखात् । शयानस्य विनिःश्वासः पूरयन्निव तद्गृहम् ॥ २४ ॥
मुक्तामणिविचित्रेण काञ्चनेन विराजता । मुकुटेनापवृत्तेन कुण्डलोज्ज्वलिताननम् ॥ २५ ॥
रक्तचन्दनदिग्धेन तथा हारेण शोभिना । पीनायतविशालेन वक्षसाभिविराजता ॥ २६ ॥
पाण्डुरेणापविद्धेन क्षौमेण क्षतजेक्षणम् । महार्हेण सुसंवीतं पीतेनोत्तरवाससा ॥ २७ ॥
माषराशिप्रतीकाशं निःश्वसन्तं भुजङ्गवत् । गाङ्गे महति तोयान्ते प्रसुप्तमिव कुञ्जरम् ॥ २८ ॥
चतुर्भिः काञ्चनैर्दीपैर्दीप्यमानं चतुर्दिशम् । प्रकाशीकृतसर्वाङ्गं मेघं विद्युद्गणैरिव ॥ २९ ॥
पादमूलगताश्चापि ददर्श सुमहात्मनः । पत्नीः स प्रियभार्यस्य तस्य रक्षःपतेर्गृहे ॥ ३० ॥

---

२० ] ति० टी०—उत्तमस्त्रीणां विमृदितं विमर्दनमालिङ्गनादि ययोस्तौ ॥ २० ॥

रा० टी०—उत्तमस्त्रीभिः विमृदितौ शनैर्निपीडितौ यक्षादीनां राविणौ ॥ २० ॥

२१–२२] ति० टी०—ददर्शेत्यादरेण ददर्श नातः पुनरुक्तिः महाही महासर्पौ अत्र द्विभुजत्वकथनाद्युद्धादिकाल एव विंशतिभुजत्वं दशशीर्षत्वं चेति बोध्यम् ॥ २१ ॥ २२॥

रा० टी०—मन्दरस्यान्तरे सुप्तौ रुषितौ क्रुद्धौ महाही इव शयनसंस्थितौ तस्य रावणस्य बाहू कपिर्ददर्श । श्लोकषट्कमेकान्वयि ॥ २१ ॥

रा० टी०—ताभ्यामिति । परिपूर्णाभ्यां सल्लक्षणैर्युक्ताभ्यामुभाभ्यां भुजाभ्यामचलसंकाशो राक्षसेन्द्रः शृङ्गाभ्यां मन्दर इव शुशुभे ॥ २२ ॥

गो० टी०—ताभ्यामिति । परिपूर्णाभ्याम् दीर्घवृत्ताभ्यामित्यर्थः ॥ २२ ॥

२३–२४ ] ति० टी०—वकुलोत्तमसंयुत उत्तमवकुलगन्धयुतः । अयं पुरुषविशेषश्वासधर्म इति कतकः । चूतादिसुरभित्वं तु तदधिवासितवस्तुसेवनात् । मृष्टान्नरससंयुक्तः षड्रसोत्तमान्नगन्धोपेतः पानं मधु राक्षसत्वादेव वामाचारेण पूजाकरणान्मधुपानम् ॥ २३ ॥ २४ ॥

रा० टी०—चूतेति । चूतपुन्नागसुरभिः चूतपुन्नागसुरभिसदृशसुरभिविशिष्टः वकुलोत्तमसंयुतः उत्तमवकुलगन्धमिश्रः मृष्टान्नरससंयुक्तः मृष्टान्नरसगन्धविशिष्टः पानगन्धः सुरादिसुरभिः पुरस्सरो यस्य स राक्षसराजस्य विनिःश्वासः राक्षसराजस्य मुखात् निश्चक्राम । श्लोकद्वयमेकान्वयि ॥२३॥ २४ ॥

गो० टी०—चूतेत्यादि । निःश्वासस्य चूतादिसुरभित्वं तदधिवासितरसावल्यादिमधुसेवनात् । मृष्टान्नरससंयुक्तः षड्रसपदार्थगन्धयुक्तः पानगन्धपुरस्सरः पीयत इति पानं मधु तद्गन्धयुक्तः ॥ २३ ॥ २४ ॥

२५–२६ ] ति० टी०—अपवृत्तेन निद्रावशात्पर्यस्तेन विराजता मुकुटेन उपलक्षितमिति शेषः । शोभिना हारेण शोभनहारवता वक्षसोपलक्षितमिति शेषः ॥ २५ ॥ २६ ॥

रा० टी०—मुक्तेति । काञ्चनेन स्वर्णमयेन विराजता शोभमानेन अपवृत्तेन परिवर्तनादिना विपर्यस्तेन मुकुटेनोपलक्षितं कुण्डलाभ्यामुज्ज्वलितमाननं यस्य ॥ २५ ॥

रा० टी०—रक्तचन्दनदिग्धेन अरुणचन्दनलिप्तेन शोभिना हारेण चाभिविराजता पीनायतविशालेन वक्षसोपलक्षितम् २६

गो० टी०—मुक्तामणीति । अपवृत्तेन स्थानात् किञ्चिच्चलितेन अपविद्धेन पर्यस्तेन क्षौमेण उत्तरीयरूपेण विद्युद्गणैरिव विद्युत्समूहैरिव । रावणं तस्य पत्नीश्च ददर्शेत्यन्वयः ॥ २५–२९ ॥

२७ ] ति० टी०—अपविद्धेन पर्यस्तेन पाण्डुरेण क्षौमेण परिधानीयेन कटेरधः संवीतम् पीतेनोत्तरीयेण सुसंवीतमित्यर्थः ॥ २७ ॥

रा० टी०—अपविद्धेन विपर्यस्तेन पाण्डुरेण क्षौमेण पट्टवस्त्रविशेषेण सुसंवीतं पीतेनोत्तरवाससा च संवीतम् ॥ २७ ॥

२८ ] ति० टी०—तोयान्ते तोयमध्ये ॥ २८ ॥

रा० टी०—माषराशिप्रतीकाशं हरितनीलवर्णत्वेन माषराशिसदृशं भुजङ्गवत् निःश्वसन्तं गाङ्गे गङ्गासंबन्धिनि महति तोयान्ते कुञ्जरमिव प्रसुप्तम् ॥ २८ ॥

२९ ] ति० टी०—काञ्चनैः काञ्चनस्तम्भगैः चतुर्दिशं चतुर्दिक्षु दीप्यमानम् अत्यन्तसंयोगे द्वितीया ‘विद्युल्लतैरिव’ इति पाठे पुंस्त्वमार्षम् ॥ २९ ॥

रा० टी०—चतुर्दिशं चतुर्दिक्षु दीपैर्दीप्यमानं “कालाध्वनो” इति द्वितीया । अत एव विद्युद्गुणैर्मेघमिव प्रकाशीकृतसर्वाङ्गं रावणम् ॥ २९ ॥

३० ] ति टी०—उक्तगुणं रावणं ददर्श पादमूलगास्तत्पत्नीश्च ददर्श । रक्षःपतेर्गृहे इत्युत्तरान्वयि ॥ ३० ॥

---

१ रूपिताविति गो. पाठः । २ सिंहस्येति गो. पाठः । ३ उत्तमेति गो. पाठः । ४ दीप्यमानंचतुर्दिशमिति गो. पाठः ।

शशिप्रकाशवदना वैरकुण्डलभूषणाः । अम्लानमाल्याभरणा ददर्श हरियूथपः ॥ ३१ ॥
नृत्यवादित्रकुशला राक्षसेन्द्रभुजाङ्कगाः । वराभरणधारिण्यो निषण्णा ददृशे कपिः ॥ ३२ ॥
वज्रवैदूर्यगर्भाणि श्रवणान्तेषु योषिताम् । ददर्श तापनीयानि कुण्डलान्यङ्गदानि च ॥ ३३ ॥
तासां चन्द्रोपमैर्वक्त्रैः शुभैर्ललितकुण्डलैः । [4]विराजत विमानं तन्नभस्तारागणैरिव ॥ ३४ ॥
मदव्यायामखिन्नास्ता राक्षसेन्द्रस्य योषितः । तेषु तेष्ववकाशेषु प्रसुप्तास्तनुमध्यमाः ॥ ३५ ॥
अङ्गहारैस्तथैवान्या कोमलैर्नृत्यशालिनी । विन्यस्तशुभसर्वाङ्गी प्रसुप्ता वरवर्णिनी ॥ ३६ ॥
काचिद्वीणां परिष्वज्य प्रसुप्ता संप्रकाशते । महानदीप्रकीर्णेव नलिनी पोतमाश्रिता ॥ ३७ ॥
अन्या कक्षगतेनैव मड्डुकेनासितेक्षणा । प्रसुप्ता भामिनी भाति बालपुत्रेव वत्सला ॥ ३८ ॥
पटहं चारुसर्वाङ्गी न्यस्य शेते शुभस्तनी । चिरस्य रमणं लब्ध्वा परिष्वज्येव कामिनी ॥ ३९ ॥

---

रा० टी०—सप्रियभार्यस्य प्रियभार्यासहितस्य पत्नीश्च रक्षःपतेर्गृहे स्थितो हनुमान् ददर्श । श्लोकषट्कमेकान्वयि ॥ ३० ॥

गो० टी०—पादेति । रक्षःपतेर्गृह इति परशेषः ॥ ३० ॥ ३१ ॥

३१ ] ति० टी०—अम्लानमाल्याभरणाः देवकन्या इत्यर्थः ॥ ३१ ॥

रा० टी०—पत्नीरेव वर्णयन्नाह—शशीति । कपिर्ददर्श ॥ ३१ ॥

३२ ] ति० टी०—राक्षसेन्द्रभुजावङ्कं च गच्छन्ति तास्तथा प्रिया इति यावत् धारिण्यो धारिणीः निषण्णाः शयिताः ॥ ३२ ॥

रा० टी०—नृत्येति । निषण्णाः पत्न्यो ददृशेसमुदायस्य कर्मतया अन्वयात् न द्वितीया ॥ ३२ ॥

गो० टी०—नृत्येति । राक्षसेन्द्रस्य भुजम् अङ्कं गच्छन्तीति राक्षसेन्द्रभुजाङ्कगा उत्सङ्गोपवेशनालिङ्गनाभ्यां लालिता इत्यर्थः वराभरणधारिण्य इति द्वितीयार्थे प्रथमा निषण्णाः शयानाः ददृश इत्यात्मनेपदमार्षम् ॥ ३२ ॥

३३ ] ति० टी०—बाहूपधानत्वादङ्गदानामपि श्रवणान्ते दर्शनं बोध्यम् ॥ ३३ ॥

रा० टी०—वज्रेति । वज्रवैदूर्यगर्भाणि कुण्डलानि अङ्गदानि च श्रवणान्तेषु ददर्श अङ्गदानां श्रवणान्ते दर्शनं तु बाहोरुपबर्हणत्वात् ॥ ३३ ॥

गो० टी०—वज्रेति । श्रवणान्तेष्वङ्गददर्शनं बाहूपधाय शयनात् ॥ ३३–३५ ॥

३४ ] ति० टी०—विमानं मञ्चकविशेषः पुष्पकमित्यन्ये विराजत व्यराजत ॥ ३४ ॥

रा० टी०—तासामिति । ललितानि कुण्डलानि येषु तैः वक्त्रैः विमानं पर्यङ्कविशेषः तारागणैर्नभ इव विराजत व्यराजत ॥ ३४ ॥

३५ ] ति० टी०—मदव्यायामेन रतिजेन ॥ ३५ ॥

रा० टी०—मदेति । मदव्यायामेन मदप्रद्या तद्धेतुकातिरत्येत्यर्थः, खिन्नाः प्राप्तपीडाः योषितः तेषु तेषु अन्यसङ्गमहेतुकेषु अवकाशेषु प्रसुप्ता बभूवुरिति शेषः ॥ ३५ ॥

३६ ] ति० टी०—कोमलैरकर्कशैः अङ्गहारैरङ्गविक्षेपैः नृत्यशालिनीति वासनाबलेन नृत्याभिनयोपेततया सुप्तवतीत्यर्थः । विशेषेण न्यस्तं शुभं येषु धात्रा तादृशानि सर्वाण्यङ्गानि यस्याः ॥ ३६ ॥

रा० टी०—अङ्गेति । विन्यस्तानि विधिना निर्मितानि संस्थापितानि वा शुभान्यङ्गानि यस्याः सा कोमलैरङ्गहारैरुपलक्षिता प्रसुप्ता अन्या नृत्यनिपुणा योषित् नृत्यशालिनी जाग्रद्वासनावशात् नृत्याश्रयीभूता प्रतीताऽभवदिति शेषः ॥ ३६ ॥

गो० टी०—अङ्गहारैरिति । अङ्गहारः नृत्तविशेषादङ्गविक्षेपविशेषः । तथोक्तं भरतशास्त्रे ‘अङ्गानां योग्यदेशेषु हरणेन यथोचितम् । अङ्गनिर्वर्तनीयत्वादङ्गहारस्तथोच्यते ।’ इत्यादि । कोमलैः सुकुमारैः । नृत्तशालिनी सुषुप्त्यवस्थायामपि वासनाबलेन नृत्तसन्निवेशविशिष्टा स्थितेत्युच्यते ॥ ३६ ॥

३७ ] ति० टी०—महानदीप्रकीर्णा महानद्यां प्रकीर्णपुष्पपत्रा दैवात्संगतं पोतं प्लवमाश्रिता नलिनी पद्मिनीव । पोतस्थानेऽत्र वीणा ॥ ३७ ॥

रा० टी०—काचिदिति । वीणां परिष्वज्य प्रसुप्ता काचित् योषित् महानदीप्रकीर्णा महानद्यां प्रक्षिप्ता पोतमाश्रिता अकस्मात् नौकासंनिहिता नलिनी कमलिनीव संप्रकाशते ॥ ३७ ॥

गो० टी०—काचिद्वीणामिति । महानदीप्रकीर्णा महानदीप्रसृता नलिनी समूलनालदलं पद्मजालकम् पोतं यानपात्रम् । वीणां परिष्वज्य प्रसुप्ता काचित् नद्यां प्लवमाना यदृच्छया पोतसंयुक्ता नलिनीव प्रकाशत इत्यर्थः ॥ ३७ ॥

३८ ] ति० टी०—मड्डुको वाद्यभेदः ॥ ३८ ॥

रा० टी०—अन्येति । अन्या कक्षगतेन मड्डुकेन वाद्यभेदेन बालपुत्रा बालपुत्रसहितेव भाति ॥ ३८ ॥

गो० टी०—अन्येति । मड्डुकेन वाद्यविशेषेण ॥ ३८ ॥ ३९ ॥

३९ ] ति० टी०—न्यस्य आलिङ्ग्येत्यर्थः ॥ ३९ ॥

रा० टी०—पटहमिति । चारुसर्वाङ्गी अन्या चिरस्य

---

१ चार्विति गो. पाठः । २ भूषिता इति गो. पाठः । ३ हरिरिति गो. पाठः । ४ विरराजेति गो. पाठः । ५ नृत्तेति गो. पाठः । ६ पीडयति गो. पाठः । ७ भामिनीति गो. पाठः ।

काचि[1]द्वीणां परिष्वज्य सुप्ता कमललोचना । [2]वरं प्रियतमं गृह्य सकामेव [3]हि कामिनी ॥ ४० ॥
विपञ्चीं परिगृह्यान्या नियता नृत्यशालिनी । निद्रावशमनुप्राप्ता सहकान्तेव भामिनी ॥ ४१ ॥
अन्या कनकसंकाशैर्मृदुपीनैर्मनोरमैः । मृदङ्गं [4]परिविध्याङ्गैः प्रसुप्ता मत्तलोचना ॥ ४२ ॥
भुजपाशान्तरस्थेन कक्षगेन कृशोदरी । पणवेन सहानिन्द्या सुप्ता मदकृतश्रमा ॥ ४३ ॥
डिण्डिमं परिगृह्यान्या तथैवासक्तडिण्डिमा । प्रसुप्ता तरुणं वत्समुपगुह्येव भामिनी ॥ ४४ ॥
काचिदाडम्बरं नारी भुजसंभोगपीडितम् । कृत्वा कमलपत्राक्षी प्रसुप्ता मदमोहिता ॥ ४५ ॥
कलशीमपविद्ध्यान्या प्रसुप्ता भाति भामिनी । वसन्ते पुष्पशबला मालेव परिमार्जिता ॥ ४६ ॥
पाणिभ्यां च कुचौ काचित्सुवर्णकलशोपमौ । उपगुह्याबला सुप्ता निद्रा[6]बलमुपागता ॥ ४७ ॥
अन्या कमलपत्राक्षी पूर्णेन्दुसदृशानना । अन्यामालिङ्ग्य सुश्रोणीं [7]निद्रावशमुपागता ॥ ४८ ॥
आतोद्यानि विचित्राणि परिष्वज्य वरस्त्रियः । निपीड्य च कुचैः सुप्ताः कामिन्यः कामुकानिव ॥४९॥

बहुकालात् रमणं पतिं लब्ध्वा अत एव परिष्वज्य कामिनीव पटहं न्यस्य परिष्वज्य शेते ॥ ३९ ॥

४० ] ति० टी०–काचिदिति ॥ ४० ॥

रा० टी०–काचिदिति । काचित् प्रियतमं गृह्य गृहीत्वा सकामा कामिनीव वीणां परिष्वज्य सुप्ता ॥ ४० ॥

गो टी०–काचिद्वंशमिति । वंशं वेणुम् ॥ ४० ॥

४१-४२ ] ति० टी०–विपञ्ची वीणाविशेषः ॥ ४१ ॥४२॥

रा० टी०–विपञ्चीमिति । काचित् भामिनी विपञ्चीं वीणाविशेषं परिगृह्य सहकान्तेव निद्रावशं प्राप्ता ॥ ४१ ॥

रा० टी०–अन्येति । अन्या कनकसंकाशैरङ्गैः मृदङ्गं परिविध्य निपीड्य प्रसुप्ता बभूवेति शेषः ॥ ४२ ॥

गो० टी०–विपञ्चीमिति । विपञ्ची सप्ततन्त्री । षट्तन्त्री वीणा ॥ ४१ ॥ ४२ ॥

४३ ] ति० टी०–मदकृतश्रमा मदवती अर्शआद्यच् । वादनेन कृतश्रमा च ॥ ४३ ॥

रा० टी०–भुजेति । भुजरूपपाशान्तरस्थेन कक्षगेन कक्षं प्राप्तेन पणवेन मर्दलेन सह अनिन्द्या काचित् सुप्ता ॥४३॥

गो० टी०–भुजेति । पणवेन मर्दलेन ॥ ४३ ॥

४४ ] ति० टी०–डिण्डिमं परिगृह्यालिङ्ग्य । आसक्तडिण्डिमा पृष्ठदेशसंबद्धान्यडिण्डिमा । तरुणं रमणं वत्सं पुत्रं च परिगृह्य प्रसुप्तेव ॥ ४४ ॥

रा० टी०–डिण्डिममिति । आसक्तडिण्डिमा अन्या तरुणं वत्समुपगुह्येव डिण्डिमं परिगृह्य प्रसुप्ता ॥ ४४ ॥

गो० टी०–डिण्डिममिति । यथा पूर्वा तथैवासक्तडिण्डिमान्या तं डिण्डिमं परिगृह्य परिष्वज्य प्रसुप्ता कथमिव । तरुणं वत्समुपगुह्येव डिण्डिमः पणवभेदः । यद्वा अन्या भामिनी डिण्डिमं परिगृह्यावलम्ब्य तथैव आसक्तडिण्डिमा आलिङ्गितान्यडिण्डिमा तरुणं रमणमुपगुह्य वत्सं पुत्रं परिगृह्यैव प्रसुप्ता यद्वा डिण्डिमं परिगृह्य वादनार्थं परिगृह्य तथैव वादनकाल एव आसक्तडिण्डिमा अन्या तरुणं वत्समुपगुह्येव प्रसुप्ता ॥ ४४ ॥

४५ ] ति० टी०–आडम्बरं वाद्यभेदः । भुजसंभोगेन भुजाश्लेषेण पीडितमाश्लिष्टं कृत्वा ॥ ४५ ॥

रा० टी०–काचिदिति । काचिन्नारी आडम्बरं वाद्यविशेषं भुजसंभोगेन भुजालिङ्गनेन पीडितं कृत्वा प्रसुप्ता ॥४५॥

गो० टी०–काचिदिति । आडम्बरं तूर्यभेदम् । भुजसंभोगपीडितम् भुजपरिणाहपीडितं भुजपरिश्लेषपीडितं वा॥४५॥

४६-४८] ति० टी०–कलशीं जलसंभृतामपविध्य पर्यस्य । स्वपर्यस्तकलशोदकार्द्रशरीरा नारी वसन्ते परिमार्जिता ग्लानिपरिहाराय कृतजलसेका पुष्पशबला शबलपुष्पमालेव भाति ॥ ४६-४८ ॥

रा० टी०–कलशीमिति । प्रसुप्ता कलशीं जलपूर्णघटीमपविध्य हस्तप्रक्षेपादिना विपर्यास्य परिमार्जिता प्रसुप्ता पुष्पशबला शबलितपुष्पाऽन्या परिमार्जिता ग्लानिदूरीकरणाय कृतमार्जना पुष्पमालेव भाति ॥ ४६ ॥

रा० टी०–पाणिभ्यामिति । काचिदबला पाणिभ्यां कुचौ उपगुह्य निद्रावशमुपागता ॥ ४७ ॥

रा० टी०–अन्येति । अन्या अन्यां सुश्रोणीमालिङ्ग्य निद्रावशमुपागता ॥ ४८ ॥

गो० टी०–कलशीमिति । अपविध्य पर्यस्य । अनेन सलिलसंबन्धः सूच्यते । परिमार्जिता सलिलसंमार्जिता । अपविद्धकलशनिर्गलितगन्धोदकसिक्ता काचित् वसन्ते ग्लानिपरिहाराय सलिलसमुक्षिता मालेव बभातित्यर्थः । पुष्पशबलेत्यनेन कलशस्थजलस्य कुङ्कुमादिरससिक्तत्वमुच्यते सर्वाभरणभूषितत्वं वा इयं च रावणस्य करकधारिणीति गम्यते ॥ ४६-४८ ॥

४९ ] ति० टी०–आतोद्यानि वाद्यानि ॥ ४९ ॥

रा० टी०–आतोद्यानीति । अन्या वरस्त्रियः कामुकान्

१ वंशमिति गो. पाठः । २ रह इति गो. पाठः । ३ चेति गो. पाठः । ४ परिपीड्येति गो. पाठः । ५ पार्श्वैति गो. पाठः । ६ बलपर ।जितेति गो. वशेति रा. पाठः । ७ प्रसुप्ता मदविह्वलेति गो. पाठः ।

तासामेकान्तविन्यस्ते शयानां शयने शुभे । ददर्श रूपसंपन्नामथ तां स कपिः स्त्रियम् ॥ ५० ॥
मुक्तामणिसमायुक्तैर्भूषणैः सुविभूषिताम् । विभूषयन्तीमिव [2]च स्वश्रिया भवनोत्तमम् ॥ ५१ ॥
गौरीं [3]कनकवर्णाभामिष्टामन्तःपुरेश्वरीम् । कपिर्मन्दोदरीं तत्र शयानां चारुरूपिणीम् ॥ ५२ ॥
स तां दृष्ट्वा महाबाहुर्भूषितां मारुतात्मजः । तर्कयामास सीतेति रूपयौवनसंपदा ॥
हर्षेण महता युक्तो ननन्द हरियूथपः ॥ [ दृष्ट्वा सीतेति तत्राऽभूद्दीनश्चारित्रदर्शनात् । ] ॥ ५३ ॥
आस्फोटयामास चुचुम्ब पुच्छं ननन्द चिक्रीड जगौ जगाम ।
स्तम्भानरोहन्निपपात भूमौ निदर्शयन्स्वां प्रकृतिं कपीनाम् ॥ ५४ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये सुन्दरकाण्डे दशमः सर्गः ॥ १० ॥

---

## एकादशः सर्गः ।

मन्दोदर्यां जातां सीतात्वबुद्धिं युक्तिपर्यालोचनेन निवर्तयन्हनुमान्पानभूमिगतं रावणं परितः प्रसुप्ता नानावस्थाः स्त्रियोऽनेकविधपानपात्रादिकं चावालोकयत् । परदारदर्शनजन्यदुरितं विशङ्क्य वशीकृतमनस्कत्वात्तत्संसर्गं निराकुर्वंस्तत्रालब्धसीताशुद्धिरन्यत्रान्वेषणायोपक्रमते ।

अवधूय च तां बुद्धिं बभूवावस्थितस्तदा । जगाम चापरां चिन्तां सीतां प्रति महाकपिः ॥ १ ॥

---

परिष्वज्य कामिन्य इव आतोद्यानि वाद्यविशेषान् कुचैर्निपीड्य सुप्ताः ॥ ४९ ॥

गो० टी०—आतोद्यानीति । आतोद्यानि 'ततं वीणादिकं वाद्यमानद्धं मुरजादिकम् । वंशादिकं तु सुषिरं कांस्यतालादिकं घनम् ॥ चतुर्विधमिदं वाद्यं वादित्रातोद्यनामकम्' इत्यमरः ॥ ४९ ॥ ५० ॥

५०–५१] ति० टी०—अथ प्रधानमहिषीदर्शनम्—तासामिति । एकान्तविन्यस्ते तासां शयनात्पृथग्विन्यस्ते । तां स्त्रियं वक्ष्यमाणगुणां स्त्रियम् ॥ ५०॥५१ ॥

रा० टी०—तासामिति । तासां समीपे एकान्तविन्यस्ते शयने शयानां रूपसंपन्नां ताम् उत्तमां स्वश्रिया सुशोभया भवनोत्तमं विभूषयन्तीं गौरीं गौरवर्णाम् इष्टां रावणोत्कटेच्छाविषयीभूताम् अन्तःपुरेश्वरीं स्त्रियं ददर्श । सार्धश्लोकद्वयमेकान्वयि ॥ ५० ॥ ५१ ॥

गो० टी०—मुक्तामणीत्यादि । किमिव गौरीमित्यत्राह—कनकवर्णाङ्गीमिति । इष्टां रावणस्येति शेषः ॥५१–५३॥

५२] ति० टी०—गौरीं पीताम्, अत एव कनकवर्णाभाम्, इष्टां रावणस्यातिप्रियाम्, अन्तःपुरस्त्रीणामीश्वरीम्, कपिर्मन्दोदरीं ददर्शेत्यन्वयः ॥ ५२ ॥

रा० टी०—कपिरिति । सः कपिः तत्र शयानां मन्दोदरीं दृष्ट्वा रूपयौवनसंपदा अद्भुतरूपादिना सीतेति तर्कयामास ५२॥५३

५३] ति० टी०—तर्कयामास संभावयामास । पृथगेकान्ते परममञ्चेऽतिरूपाया दर्शनात्प्रायेणेयं सीतेति संभावना हनुमतः । तदेवाह—रूपयौवनसंपदा न त्वौचित्यालोचनं कृतवानिति भावः । हर्षो मुखविकासादिः आनन्दो मानसः ॥ ५३ ॥

रा० टी०—हर्षेणेति । चारित्रदर्शनात् अनुचिताचरणावलोकनात् दीनोऽपि हरियूथपः सीतेति दृष्ट्वा निश्चित्य महता हर्षेण आगमनप्रयोजनसिद्धिजनितसंतोषेण युक्तः सन् ननन्द । एतेन तादृशानन्देन दैन्यं पराभूतमिति सूचितम् ॥ ५४ ॥

गो० टी०—हर्षेणेत्यर्धम् । हर्षेण युक्तः ननन्द उत्तरोत्तरमानन्दमवापेत्यर्थः ॥ ५४ ॥

५४ ] ति० टी०—आनन्दं कार्यद्वाराह—आस्फोटयामासेति । आस्फोटपुच्छचुम्बनादि जातिधर्मः । जगाम स्तम्भानित्यनुकर्षः । सर्वा अप्येताश्चेष्टा उपांश्विति बोध्यम् एवं चेष्टायां हेतुः—स्वां कपीनां प्रकृतिं निदर्शयन्निति ॥५४ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये सुन्दरकाण्डे दशमः सर्गः ॥ १० ॥

रा० टी०—आस्फोटयामासेति । स्वां स्वकीयां कपीनां प्रकृतिं दर्शयन् आस्फोटनादिकम् आनन्दसूचकस्वजातिधर्मं चकार अत एव स्तम्भान् अरोहत् निपपात च ॥ ५५ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ सुन्दरकाण्डे दशमः सर्गः ॥ १० ॥

गो० टी०—तदेवोपपादयति—आस्फोटयामासेति । चिक्रीड ननर्तेति यावत् । स्वां प्रकृतिं स्वासाधारणं चापल्यम् ॥ ५५ ॥

अस्मिन्सर्गे सार्धचतुःपञ्चाशच्छ्लोकाः ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने दशमः सर्गः ॥ १० ॥

---

१ ] ति० टी०—अवधूय च तां बुद्धिं सीतासंभावनया

---

१ अपरामिति गो. पाठः । २ तदिति गो. पाठः । ३ वर्णाङ्गीमिति गो. पाठः । ४ अयमर्धश्लोको रा. पाठे ।

न रामेण वियुक्ता सा स्वप्तुमर्हति भामिनी । न भोक्तुं नाप्यलंकर्तुं न पानमुपसेवितुम् ॥ २ ॥
नान्यं नरमुपस्थातुं सुराणामपि चेश्वरम् । न हि रामसमः कश्चिद्विद्यते त्रिदशेष्वपि ॥ ३ ॥
अन्येयमिति निश्चित्य भूयस्तत्र चचार सः । पानभूमौ हरिश्रेष्ठः सीतासंदर्शनोत्सुकः ॥ ४ ॥
क्रीडितेनापराः क्लान्ता गीतेन च तथाऽपराः । नृत्येन चापराः क्लान्ताः पानविप्रहतास्तथा ॥ ५ ॥
मुरजेषु मृदङ्गेषु चेलिकासु च संस्थिताः । तथाऽऽस्तरणमुख्येषु संविष्टाश्चापराः स्त्रियः ॥ ६ ॥
अङ्गनानां सहस्रेण भूषितेन विभूषणैः । रूपसंलापशीलेन युक्तगीतार्थभाषिणा ॥ ७ ॥
देशकालाभियुक्तेन युक्तवाक्याभिधायिना । रताधिकेन संयुक्तां ददर्श हरियूथपः ॥ ८ ॥
अन्यत्रापि वरस्त्रीणां रूपसंलापशायिनाम् । सहस्रं युवतीनां तु प्रसुप्तं स ददर्श ह ॥ ९ ॥

---

प्रवृत्तां कापेयविषयां बुद्धिमवधूय त्यक्त्वाऽवस्थितः स्थिरतास्वभावे प्रतिष्ठितः सीतां प्रति तद्विषयामितरामन्यां चिन्तां पूर्वचिन्ताविघटिकां जगाम ॥ १ ॥

रा० टी०—मन्दोदर्यां जातसीताबुद्धिनिवारकं हनुमतः चिन्तान्तरमुपक्रमते—अवधूयेति । ताम् इयं सीतेत्येतद्रूपां बुद्धिम् अवधूय वक्ष्यमाणहेतुभिर्दूरीकृत्य सीतां प्रति परां चिन्तां जगाम ॥ १ ॥

गो० टी०—अवधूयेत्यादि । तां बुद्धिं मन्दोदर्यां सीताबुद्धिम् । अवस्थितो बभूव स्वस्थचित्तो बभूव ॥ १ ॥

२] ति० टी०—तामेव चिन्तामभिनयति—न रामेणेति॥२॥

रा० टी०—चिन्ताप्रकारमाह—नेति । रामेण वियुक्ता सीता स्वापादि कर्तुं नार्हति ॥ २ ॥

गो० टी०—न रामेणेत्यादि । त्रिदशेष्वपीत्यनन्तरम् अन्येयमित्यर्धम् । पानभूमौ ततोऽन्यत्रेत्यर्थः ॥ २ ॥ ३ ॥

३ ] ति० टी०—अन्यं नरं पुरुषमुपस्थातुमङ्गीकर्तुं नार्हति नाध्यवस्यति । तत्र हेतुः—नहि रामेति ॥ ३ ॥

रा० टी०—नेति । अन्यं नरं सुराणामीश्वरं च उपस्थातुं स्वस्थचित्ततया समीपे आसितुं नार्हतीति शेषः । ननु रामभ्रमात्तिष्ठतु इत्यत आह—त्रिदशेष्वपि रामसमः कश्चिन्न विद्यते॥३॥

४] ति० टी०—यदेवम्, अतोऽन्येयमननुभूतेति निश्चित्य तत्र गृहे पानभूमौ पानशालायां चचार । पुनः सम्यगन्वेषणायेति शेषः ॥ ४ ॥

रा० टी०—अन्येति । इयम् अन्या सीताभिन्ना इति निश्चीय सीतासंदर्शनोत्सुको हनुमान् पानभूमौ चचार ॥ ४ ॥

५ ] ति० टी०—अथ पानभूमौ दर्शनप्रकारः—क्रीडितेनेति । क्रीडितेनाक्षादिक्रीडया क्लान्ताः सत्यस्तथैव निद्रिता इति शेषः। विप्रहता अतिनिद्रिताः स्त्रियः ददर्शेति शेषः॥ ५ ॥

रा० टी०—क्रीडितेनेति । अपराः क्रीडितेन क्लान्ताः बभूवुरिति शेषः, अपराः नृत्येन क्लान्ताः अपराः पानविप्रहताः अतिपानवतीरित्यर्थः, ददर्शेति शेषः ॥ ५ ॥

गो० टी०—क्रीडितेनेत्याद्यपराः स्त्रिय इत्यन्तमेकं वाक्यम् । ददर्शेत्यनुषज्यते क्रीडितेन क्रीडया भावे निष्ठा विप्रहताः क्लान्ता इत्यर्थः संस्थिताः उपधानीकृत्य शयिताः संविष्टाः सुप्ताः ॥ ४ ॥ ५ ॥

६ ] ति० टी०—मुरजेषु मृदङ्गेषु । चेलिकासु चेलिका वाद्यविशेष इत्याहुस्तेषु प्रसक्ता एव संस्थिताः स्थिता एव निद्रिताः संविष्टाः । सुप्ता ददर्शेति शेषः । आकृष्यों वा ॥ ६ ॥

रा० टी०—मुरजेष्विति । अपराः मुरजादिषु वाद्यविशेषेषु संस्थिता आस्थावत्यः सत्यः तथा निद्रितात्वेन आस्तरणमुख्येषु संविष्टाः ददर्शेति शेषः ॥ ६ ॥

७ ] ति० टी०—रूपसंलापशीलेन निद्रोद्भ्रमवशात्तस्यास्तस्या रूपविषयो यः संलापो वर्णनं तच्छीलेन युक्तं यथा भवति तथा गीतार्थस्य भाषणशीलेन ॥ ७ ॥

८ ] ति० टी०—देशकालाभियुक्तेन तद्विषयपरिज्ञानकुशलेन युक्तवाक्यस्य देशकालोचितवाक्यस्याभिधानशीलेन एतत्सर्वं निद्रोद्भ्रमवशादेव बोध्यम् । रताधिकेनोत्तमक्रीडावता संयुक्तां पानभूमिं ददर्श ॥ ८ ॥

रा० टी०—अङ्गनानामिति । विभूषणैर्भूषितेन युक्तगीतार्थभाषिणा उचितोक्तार्थकथनशीलेन देशकालाभियुक्तेन देशकालाभिज्ञेन युक्तवाक्याभिधायिना उचितवाक्यकथनशीलेन रताधिकेन अधिकरतिविशेषेन अङ्गनानां सहस्रेण संयुक्तां पानभूमिं ददर्श । श्लोकद्वयमेकान्वयि ॥ ७ ॥ ८ ॥

गो० टी०—तत्र सीताया अदर्शनात्पुनरपि रावणस्थानमागत्य ददर्शेत्याह—अङ्गनानामिति । रूपसंलापशीलेन स्वसौन्दर्यवर्णनशीलेन रावणविषयरूपप्रशंसाशीलेन वा युक्तगीतार्थभाषिणा युक्तम् उपपन्नं गीतार्थं भाषितुं शीलमस्येति युक्तगीतार्थभाषी तेन देशकालाभियुक्तेन देशकालाभिज्ञेनेत्यर्थः अङ्गनानां सहस्रेण रताभिरतसंसुप्तमित्यन्वयः रतशब्देन बाह्यसुरतमुच्यते अभिरतशब्देन करणबन्धादिकमुच्यते रताभिरतश्चासौ संसुप्तश्च तं तथा नानाउलिङ्गादिवत्समासः क्रीडास्वेदेन सुप्तमित्यर्थः । रावणमिति शेषः॥६—८॥

९ ] ति० टी०—अन्यत्रापीत्यादिश्लोकद्वयं नव्याः प्रमादान्न

---

१ पानभूमाविति गो. पाठः । २ अर्धमेतत् गो. नास्ति । ३ मुरवेष्विति गो. पाठः । ४ पीठिकास्विति गो. पाठः । ५ रताभिरतसंसुप्तमिति गो. पाठः । ६ एतदादिश्लोकद्वयं गो. नास्ति । ७ निश्चित्येति साधु ।

देशकालाभियुक्तं तु युक्तवाक्याभिधायि तत् । रताविरतसंसुप्तं ददर्श हरियूथपः ॥ १० ॥
तासां मध्ये महाबाहुः शुशुभे राक्षसेश्वरः । गोष्ठे महति मुख्यानां गवां मध्ये यथा वृषः ॥ ११ ॥
स राक्षसेन्द्रः शुशुभे ताभिः परिवृतः स्वयम् । करेणुभिर्यथारण्ये परिकीर्णो महाद्विपः ॥ १२ ॥
सर्वकामैरुपेतां च पानभूमिं महात्मनः । ददर्श कपिशार्दूलस्तस्य रक्षःपतेर्गृहे ॥ १३ ॥
मृगाणां महिषाणां च वराहाणां च भागशः । तत्र न्यस्तानि मांसानि पानभूमौ ददर्श सः ॥ १४ ॥
रौक्मेषु च विशालेषु भाजनेष्वप्यभक्षितान् । ददर्श कपिशार्दूलो मयूरान्कुक्कुटांस्तथा ॥ १५ ॥
वराहवार्ध्रीणसकान्दधिसौवर्चलायुतान् । शल्यान्मृगमयूरांश्च हनुमानन्ववैक्षत ॥ १६ ॥

---

पठन्ति अन्यत्रापि पानभूमिभिन्ने रावणशयनगृहे बहिःस्थां पानभूमिं दृष्ट्वा पुनरभ्यन्तरे शयनस्थान आगत्यान्वेषणम् रूपविषयो यः संलापो वर्णनं तत्पूर्वं शयानानां युवतीनां वरस्त्रीणां सहस्रमुच्यमानगुणं ददर्श ॥ ९ ॥

रा० टी०–अन्यत्रेति । अन्यत्र अन्यपानभूमावपि प्रसुप्तं युवतीनां सहस्रं ददर्श ॥ ९ ॥

१० ] ति० टी०–तत्पूर्वदृष्टम् रताविरतसंसुप्तं रतान्ते विरतसुप्तं गाढसुप्तम् ॥ १० ॥

रा० टी०–तदेव भङ्ग्यन्तरेणाह–देशेति । रताविरतसंसुप्तं रताविरतेन रत्यनिवृत्तिजनितश्रमेण संसुप्तं युवतीनां सहस्रमिति शेषः, ददर्श । अत्र अन्यत्रापीत्यादिश्लोकद्वयं नव्याः प्रमादान्न पठन्तीति भट्टैरुक्तम् ॥ १० ॥

११ ] ति० टी०–तासां मध्ये इति ॥ ११ ॥

रा० टी०–तासामिति । तासां स्त्रीणां मध्ये राक्षसेश्वरः रावणः गवां मध्ये वृष इव शुशुभे ॥ ११ ॥

१२ ] ति० टी०–स इति ॥ १२ ॥

रा० टी०–स इति । ताभिः स्त्रीभिः परिवृतः सः रावणः करेणुभिः परिकीर्णः परिवृतः महाद्विप इव शुशुभे ॥ १२ ॥

गो० टी०–स इति । परिकीर्णः परिवृतः ॥ ९ ॥

१३ ] ति० टी०–सस्त्रीकरावणगृहे पुनः सम्यगन्विष्य, पुनर्बहिः पानभूमिमागत्य विचिनोति—सर्वकामैरिति । पूर्वं नृत्यादियुक्ततत्स्थस्त्रीमात्रदर्शनम्, इदानीं तस्याः सर्वकामोपेतत्वदर्शनम् ॥ १३ ॥

रा० टी०–सर्वेति । सर्वकामैरुपेतां रक्षःपतेः पानभूमिं ददर्श ॥ १३ ॥

गो० टी०–सर्वकामैरिति । पानभूमेः पुनर्दर्शनोक्तिस्तत्रत्यपदार्थकथनाय ॥ १० ॥

१४–१५ ] ति० टी०–तदेव प्रपञ्चयति—मृगाणामिति ॥ १४ ॥ १५ ॥

रा० टी०–मृगाणामिति । भागशो न्यस्तानि मृगादीनां मांसानि पानभूमौ ददर्श ॥ १४ ॥

गो० टी०–मृगाणामिति । मयूरादिशब्दाः भागशः पिण्डशः ॥ ११ ॥

रा० टी०–रौक्मेष्विति । रौक्मेषु स्वर्णमयेषु भाजनेषु अभक्षितान् अनुच्छिष्टानित्यर्थः, मयूरान् कुक्कुटांश्च तत्तन्मांसानीत्यर्थः, कपिशार्दूलो हनुमान् ददर्श ॥ १५ ॥

गो० टी०–रौक्मेष्विति । मयूरादिशब्दाः मयूरादिविकारमांसपराः ॥ १२ ॥

१६ ] ति० टी०–पुनः पुनर्वराहादिमृगादिकथनं बहुस्थलवर्तितया भूयस्त्वप्रकाशनाय । वार्ध्रीणसः पक्षिविशेषः 'कृष्णग्रीवो रक्तशिराः श्वेतपक्षो विहंगमः । स वै वार्ध्रीणसः प्रोक्तः' इति विष्णुधर्मोक्तेः । छागविशेषो वा 'त्रिपिबं त्विन्द्रियक्षीणं श्वेतं वृद्धप्रजापतिम् । वार्ध्रीणसं च तं प्राहुर्याज्ञिकाः श्राद्धकर्मणि ॥' इति स्मृतेः । सुखकर्णौ च पानसमये जलं स्पृशन्ति यस्य स त्रिपिबः । 'वार्ध्रीणसः खड्गमृगः' इति हलायुधः । दध्ना सौवर्चलेन लवणविशेषेण च आयुतान्संस्कृतान् ॥ १६ ॥

रा० टी०–वराहेति । दध्ना सौवर्चलेन लवणविशेषेण च आयुतान् यथायोग्यं संमिश्रान् वराहादीनन्ववैक्षत । तत्र वार्ध्रीणसः पक्षिविशेषः तथाहि 'कृष्णग्रीवो रक्तशिराः श्वेतपक्षो विहंगमः । स वै वार्ध्रीणसः प्रोक्तः' इति विष्णुधर्मोक्तवचनम् । छागविशेषश्च । तथाहि 'त्रिपिबं त्विन्द्रियक्षीणं श्वेतं वृद्धमजापतिम् । वार्ध्रीणसं च तं प्राहुर्याज्ञिकाः श्राद्धकर्मणि' इति स्मृत्यन्तरम् । त्रिपिबशब्दार्थस्तु त्रिभिर्मुखकर्णैः पिबतीति प्रसिद्धश्च पानसमये छागानां कर्णयोरपि जलस्पर्शः मृगपरोऽपि 'वार्ध्रीणसः खड्गमृगः' इति हलायुधः । अत्रत्यमयूरशब्दस्य मयूरावान्तरजातिपरत्वान्न पौनरुक्त्यम् । एवमेव गतिरन्यत्रापि ॥ १६ ॥

गो० टी०–वराहेति । वार्ध्राणसाः छागविशेषाः–'त्रिपिबं त्विन्द्रियक्षीणं यूपस्याग्रचरं तथा । रक्तवर्णं च राजेन्द्र च्छागं वार्ध्राणसं विदुः' इति स्मृतेः । पक्षिविशेष इत्यन्ये खड्गमृग इत्यपरे 'वार्ध्राणसः खड्गमृगः' इति हलायुधः । दधिसौवर्चलायुतान् दधिसौवर्चलाभ्यां संस्कृतानित्यर्थः । सौवर्चलं रुचकाख्यो लवणविशेषः 'सौवर्चलेऽक्षरुचके' इत्यमरः । शल्यान् श्वाविदः 'श्वावित्तु शल्यः' इत्यमरः । मृगमयूरादीनां पुनः कथनं प्रदेशभेदात् ॥ १३ ॥

---

१ दरीति गो. पाठः । २ वार्ध्राणसेति गो. पाठः ।

कुकलान्विविधांश्छागान्छशकानर्धभक्षितान् । महिषानेकशल्यांश्च छेदांश्च कृतनिष्ठितान् ॥ १७ ॥
लेह्यानुच्चावचान्पेयाम्भोज्यान्युच्चावचानि च । तथाम्ललवणोत्तंसैर्विविधै रागखाण्डवैः ॥ १८ ॥
महानूपुरकेयूरैरपविद्धैर्महाधनैः । पानभाजनविक्षिप्तैः फलैश्च विविधैरपि ॥ १९ ॥
कृतपुष्पोपहारा भूरधिकां पुष्यति श्रियम् । तत्र तत्र च विन्यस्तैः सुश्लिष्टशयनासनैः ॥ २० ॥
पानभूमिर्विना वह्निं प्रदीप्तेवोपलक्ष्यते । बहुप्रकारैर्विविधैर्वरसंस्कारसंस्कृतैः ॥ २१ ॥
मांसैः कुशलसंयुक्तैः पानभूमिगतैः पृथक् । दिव्याः प्रसन्ना विविधाः सुराः कृतसुरा अपि ॥ २२ ॥
शर्करासवमाध्वीकाः पुष्पासवफलासवाः । वासचूर्णैश्च विविधैर्मृष्टास्तैस्तैः पृथक्पृथक् ॥ २३ ॥

---

१७ ] ति० टी०–कुकलकुकरौ समौ पक्षिविशेषवाचकौ एकशल्या मत्स्यविशेषाः कृतनिष्ठितान्कृतं निष्ठितं निष्ठानं पाको येषां तान् ॥ १७ ॥

रा० टी०–कुकरानिति । कुकरान् पक्षिविशेषान् 'कुरर-ककरौ समौ' इत्यमरः विविधान्छागाँश्च शशकान् अर्धभक्षितान्महिषाँश्च एकशल्यान् मत्स्यविशेषांश्च कृतनिष्ठितान् परिपक्वान् मेषांश्च अम्ललवणौ उत्तंसौ जिह्वाशैथिल्यपरिहारकौ येषु तैः विविधैः रागखाण्डवैः सह लेह्यादींश्चान्ववैक्षतेति पूर्वेणान्वयः रागखाण्डवाश्च 'सितामध्वादिमधुरो द्राक्षादाडिमजो रसः । विरलश्चेत्कृतो रागः सान्द्रश्चेत्खाण्डवः स्मृतः' इत्यादिनोक्ताः । श्लोकद्वयमेकान्वयि ॥ १७ ॥ १८ ॥

गो० टी०–ककरानिति । ककरान् पाक्षिविशेषान् 'कृकणककरौ समौ' इत्यमरः सिद्धान् पक्वान् एकशल्यान्मत्स्यविशेषान् कृतनिष्ठितान् पर्याप्तपक्वान् 'योगपर्याप्तयोः कृतम्' इत्यमरः ॥ १४ ॥ १५ ॥

१८ ] ति० टी०–अम्लरसो लवणरसश्चोत्तंसो जिह्वाजाड्यपरिहारकर्ता येषु भक्ष्यमाणेषु तैः । रागखाण्डवैः 'सितामध्वादिमधुरो द्राक्षादाडिमजो रसः । विरलश्चेत्कृतो रागः सान्द्रश्चेत्खाण्डवः स्मृतः ॥' इत्युक्तैः केशरादिभिः कृतवर्णाः षड्रसोपेताः । पूपा रागखाण्डवा इत्यन्ये ॥ १८ ॥

गो० टी०–तथेत्यादि । आम्ललवणोत्तंसैः आम्लप्रधानैः लवणप्रधानैश्च रागषाडवैः रागयुक्तैः षाडवैः । रागः श्वेतसर्षपः । 'रागः सिद्धार्थको ज्ञेयः' इति सूदशास्त्रम् । षाडवाः षड्रससंयोगकृता भक्ष्यविशेषाः । प्रदीपे त्वन्यथोक्तम्–'सितामध्वादिमधुरो द्राक्षादाडिमजो रसः । विरलश्चेत्कृतो रागः सान्द्रश्चेत् षाडवः स्मृतः' इति ॥ १६–१८ ॥

१९ ] ति० टी०–महाधनैर्बहुमूल्यैः ॥ १९ ॥

रा० टी०–महेति । अपविद्धैः विपर्यस्तैर्महान्नूपुरकेयूरैः विक्षिप्तैः पानभाजनैश्च फलैश्च उपलक्षिता कृतः पुष्पोपहारः पुष्पबलिर्यस्यां सा भूः अधिकां श्रियं पुष्यति पोषयति । सार्धश्लोक एकान्वयी ॥ १९ ॥

२० ] ति० टी०–सुश्लिष्टैः सुकृतसंधिबन्धैः ॥ २० ॥

रा० टी०–तत्रेति । विन्यस्तैः संस्थापितैः सुश्लिष्टैः संमिलितैः शयनासनैरुपलक्षिता पानभूमिः वह्निं विनाऽपि प्रदीप्तेवोपलक्ष्यते । अर्धद्वयमेकान्वयि ॥ २० ॥

२१ ] ति० टी०–उक्तैः सौवर्णरत्नमयशयनासनैः पानभूमिः प्रदीप्तेवोपलक्ष्यते । बहुप्रकारैर्बहूपादानभेदैः, अत एव विविधैर्विविधरसवद्भिः वरसंस्कारेण श्रेष्ठसंस्कारकद्रव्ययोगेन संस्कृतैः ॥ २१ ॥

२२ ] ति० टी०–कुशलसंयुक्तैर्निपुणपाचकपक्वैर्मांसैः सहोच्यमानगुणाः सुरा ददर्श । तत्र दिव्याः सुरा वृक्षेभ्यः कदम्बादिभ्यः स्वतः प्रादुर्भूताः । कृतसुराः शौण्डिकैरुत्पादिताः ॥ २२ ॥

२३ ] ति० टी०–कृतसुरावान्तरभेदानाह–शर्करासवेत्यादि । शर्करोपादानक आसवः शर्करासवः, मधूपादानको माध्वीकः द्राक्षोपादानक इत्यन्ये मधूकपुष्पादिजः पुष्पासवः, खर्जूरफलादिजः फलासवः वासचूर्णैः सुगन्धद्रव्यचूर्णैर्मृष्टाधिवासिताः दृष्टा इति शेषः ॥ २३ ॥

रा०टी०–बह्विति । बहुप्रकारैरितस्ततः संस्थापितैः विविधैः अनेकक्रियादिना अनेकविधैः वरसंस्कारैर्दधिकाश्मीरादिभिः संस्कृतैः कुशलसंयुक्तैः निपुणपक्तृभिः संपादितैः पृथक् पृथक् पानभूमिं गतैः मांसैः सहिताः प्रसन्नाः स्वच्छा विविधा दिव्याः वृक्षकोटरादिद्वारा वरुणादिप्रेषिताः सुराः तैस्तैः तत्तदुपयोगित्वेन प्रसिद्धैः विविधैर्वासचूर्णैर्मृष्टाः संस्कृताः शर्करासवप्रभृतयः कृतसुरा अपि अदृश्यन्तेति शेषः । तत्र शर्करासवः शर्कराजनितः माध्वीको मधुजनितः पुष्पासवः मधूकपुष्पादिकृतः फलासवः खर्जूरफलादिजनित इति विवेकः । सार्धश्लोकद्वयमेकान्वयि ॥ २१–२३ ॥

गो० टी०–बहुप्रकारैरित्यादि । कुशलसंयुक्तैः समर्थसूदसंयोजितैः एवंभूतैः मांसैः सह दृष्टा इति वक्ष्यमाणेनान्वयः । दिव्याः अमृतमथनोद्भूतवारुणीजातीयाः प्रसन्नाः निष्कल्मषाः कृतसुराः कृत्रिमसुराः कृत्रिमसुरा एवाह–शर्करेति । शर्करासवाः शर्करया कृताः माध्वीकाः मधुना कृताः पुष्पासवाः पुष्पमकरन्दकृताः फलासवाः फलरसकृताः तथोक्तमर्णवे–'पानकं द्राक्षमाधूकं खार्जूरं तालमै-

---

१ ककरानिति गो. कुकरानिति रा. पाठः । २ सिद्धांश्चकोरानिति गो. पाठः । ३ छागानिति गो. पाठः । ४ विविधानीति गो. पाठः । ५ षाडवैरिति गो. पाठः । ६ अधिकमिति गो. पाठः । ७ सुश्लिष्टैरिति गो. पाठः । ८ माध्वीकपुष्पेति गो. पाठः ।

संतता शुशुभे भूमिर्माल्यैश्च बहुसंस्थितैः । हिरण्मयैश्च कलशैर्भाजनैः स्फाटिकैरपि ॥ २४ ॥
जाम्बूनदमयैश्चान्यैः करकैरभिसंवृता । राजतेषु च कुम्भेषु जाम्बूनदमयेषु च ॥ २५ ॥
पानश्रेष्ठां तथा भूमिं कपिस्तत्र ददर्श ह । सोऽपश्यच्छातकुम्भानि सीधोर्मणिमयानि च ॥ २६ ॥
तानि तानि च पूर्णानि भाजनानि महाकपिः । क्वचिदर्धावशेषाणि क्वचित्पीतान्यशेषतः ॥ २७ ॥
क्वचिन्नैव प्रपीतानि पानानि स ददर्श ह । क्वचिद्भक्ष्यांश्च विविधान्क्वचित्पानं विभागतः ॥ २८ ॥
क्वचिदर्धावशेषाणि पश्यन्वै विचचार ह । शयनान्यत्र नारीणां शून्यानि बहुधा पुनः ॥
परस्परं समाश्लिष्य काश्चित्सुप्ता वराङ्गनाः ॥ २९ ॥
काचिच्च वस्त्रमन्यस्य अपहृत्योपगुह्य च । उपगम्याबला सुप्ता निद्राबलपराजिता ॥ ३० ॥
तासामुच्छ्वासवातेन वस्त्रं माल्यं च गात्रजम् । नात्यर्थं स्पन्दते चित्रं प्राप्य मन्दमिवानिलम् ॥ ३१ ॥
चन्दनस्य च शीतस्य सीधोर्मधुरसस्य च । विविधस्य च माल्यस्य पुष्पस्य विविधस्य च ॥ ३२ ॥

---

क्षवम् । मधूत्थं शीधुमाध्वीकं मैरेयं नारिकेलजम् ' इति । वासचूर्णैरधिवासचूर्णैः सह दृष्टाः हनुमतेति शेषः । बहुप्रकारैर्मांसैः सह सुराः वासचूर्णैः सह हनुमता तत्र पानभूमौ दृष्टा इति सम्बन्धः । तैस्तैरित्याद्युत्तरशेषः तैस्तैर्मांसविशेषैः सुराविशेषैर्वासचूर्णैश्च पृथक्पृथक् संततेति संबन्धः । बहुसंस्थितैः बहुसंस्थानैः हिरण्मयैरिति अत्रापि संततेति पूर्वेणान्वयः हिरण्मयैः रजतमयैः 'कृताकृतं हेमरूप्यं हिरण्यमभिधीयते' इति वचनात् । तैस्तैः पृथक्पृथक् संतता बहुसंस्थितैर्माल्यैर्हिरण्मयैः स्फाटिकैरपि भाजनैः संतता जाम्बूनदमयैरन्यैः करकैश्चाभिसंवृता भूमिः शुशुभ इति संबन्धः ॥ १९–२३ ॥

२४ ] ति० टी०–अथ भूमिवर्णनम्—बहुषु देशेषु संस्थितैर्माल्यैः संतता व्याप्ता भूमिः शुशुभे उच्यमानविशेषणैः करकैर्घटैश्च संतता ॥ २४ ॥

रा० टी०–संततेति । बहुसंस्थितैः अनेकप्रकारैः माल्यैः कलशैर्भाजनैश्च संतता व्याप्ताः करकैर्द्विमुखपात्रैरभिसंवृता भूमिः शुशुभे । सार्धश्लोक एकान्वयी ॥ २४ ॥

२५ ] ति० टी०–राजतादिषु कुम्भेषु ॥ २५ ॥

रा० टी०–राजतेष्विति । रजतमयादिषु कुम्भेषु पानानि पेयानि श्रेष्ठानि यस्यां तां भूमिं कपिर्ददर्श । अर्धद्वयमेकान्वयि २५

२६ ] ति० टी०–पानश्रेष्ठां संभृतप्रशस्तपानाम् । सीधोर्मद्यस्य भाजनानीत्यन्वयः ॥ २६ ॥

रा० टी०–स इति । सीधोर्मद्यस्य मणिमयानि शातकुम्भानि पूर्णानि भाजनानि पानपात्राणि च महाकपिरपश्यत् २६

गो० टी०–सोऽपश्यदिति । शीधोः मद्यस्य ॥ २४ ॥

२७ ] ति० टी०–भाजनानि पानभाजनानि । अर्धावशेषाण्यर्धावशिष्टपानानि पीतानि पीतासवानि ॥ २७ ॥

रा० टी०–दर्शनप्रकारमाह–क्वचिदिति । अर्धावशेषादीनि ददर्श ॥ २७ ॥

गो० टी०–क्वचिदिति । पानानि पानपात्राणि ॥ २९ ॥

२८ ] ति० टी०–नैव प्रपीतानि पूर्णासवान्येव पानानि पानभाजनानि । विभागतो विभागेन पानं ददर्श । इदमभुक्तमिदमभुक्तमिति विभज्य ददर्शेत्यर्थः ॥ २८ ॥

२९ ] ति० टी०–शून्यानि पतिशून्यानि, अत एव परस्परं समाश्लिष्येति ॥ २९ ॥

३० ] ति० टी०–अपहृत्य बलाद्गृहीत्वोपगुह्य प्राप्त्य उपगम्य तच्छयनस्थानं प्राप्य तां च पश्यन्विचचारेति संबन्धः ॥ ३० ॥

रा० टी०–क्वचिदिति । भक्ष्यादीनि शून्यानि नारीणां शयनानि च पश्यन् विचचार । सार्धश्लोक एकन्वयी॥२८॥२९॥

रा० टी०–परस्परमिति । काश्चित् समाश्लिष्य सुप्ताः निद्राबलपराजिता काचिदबला वस्त्रमपहृत्य उपगम्य तत्समीपं प्राप्य उपगुह्य तामालिङ्ग्य सुप्ता । सार्धश्लोकः संमिलितान्वयी ॥ ३० ॥

गो० टी०–क्वचिद्भक्ष्यानित्यादिनिद्राबलपराजिता इत्यन्तमेकं वाक्यम् । क्वचित्प्रभिन्नैरित्यादिषु सहयोगे तृतीया हेतौ तृतीया वा प्रभिन्नत्वादालोलितत्वाच्च संपृक्तमाल्यानि माल्यमिश्राणीत्यर्थः। परस्परमित्यादि । पश्यन्वै विचचारेति पूर्वेणान्वयः ॥ २६–२९ ॥

३१ ] ति० टी०–गात्रजं गात्रस्थम् ॥ ३१ ॥

रा० टी०–तासामिति । गात्रजं गात्रस्थमित्यर्थः । चित्रं वस्त्रमाल्यं मन्दमनिलं प्राप्येव उच्छ्वासवातेन अत्यर्थं न स्पन्दते ॥ ३१ ॥

गो० टी०–तासामिति । गात्रजं गात्रस्थं मन्दमनिलं प्राप्येव अत्यर्थं न स्पन्दत इत्यन्वयः ॥ ३० ॥

३२ ] ति० टी०–अथ पानभूमितोऽपि बहिरागत्य तत्र स्थिते पुष्पके प्रवृत्तिकाल इव निर्गमकालेऽपि बहुगन्धो वायुर-

---

१ विविधैरिति गो. पाठः । २ स इति गो. पाठः । ३ राजतानीति गो. पाठः । ४ सर्वेष्विति गो. पाठः । ५ पानानि भागश इति गो. पाठः । ६ अन्यस्याः स्वपन्त्याः परिधाय च । आहृत्य चेति गो. पाठः ।

वहुधा मारुतस्तस्य गन्धं विविधमुद्वहन् । स्नानानां चन्दनानां च धूपानां चैव मूर्छितः ॥ ३३ ॥
प्रववौ सुरभिर्गन्धो विमाने पुष्पके तदा । श्यामावदातास्तत्रान्याः काश्चित्कृष्णा वराङ्गनाः ३४ ॥
काश्चित्काञ्चनवर्णाङ्ग्यः प्रमदा राक्षसालये । तासां निद्रावशत्वाच्च मदनेन विमूर्छितम् ॥ ३५ ॥
पद्मिनीनां प्रसुप्तानां रूपमासीद्यथैव हि । एवं सर्वमशेषेण रावणान्तःपुरं कपिः ॥
ददर्श स महातेजा न ददर्श च जानकीम् ॥ ३६ ॥
निरीक्षमाणश्च ततस्ताः स्त्रियः स महाकपिः । जगाम महतीं शङ्कां धर्मसाध्वसशङ्कितः ॥ ३७ ॥
परदारावरोधस्य प्रसुप्तस्य निरीक्षणम् । इदं खलु ममात्यर्थं धर्मलोपं करिष्यति ॥ ३८ ॥
न हि मे परदाराणां दृष्टिर्विषयवर्तिनी । अयं चात्र मया दृष्टः परदारपरिग्रहः ॥ ३९ ॥
तस्य प्रादुरभूच्चिन्ता पुनरन्या मनस्विनः । निश्चितैकान्तचित्तस्य कार्यनिश्चयदर्शिनी ॥ ४० ॥

---

न्यस्त्रियश्चाद्भुता इत्याह—चन्दनस्य चेत्यादि । पानभूम्यादिकमपि पुष्पकस्थमेवेत्यन्ये । सीधुर्मद्यम् ॥ ३२ ॥

रा० टी०—चन्दनस्येति । चन्दनादीनां गन्धमुद्वहन् मारुतो ववाविति शेषः । सार्धश्लोक एकान्वयी ॥ ३२ ॥३३॥

गो० टी०—चन्दनस्येत्यादि । उद्वहन् प्रववावित्यपकृष्यते ॥ ३१ ॥

३३ ] ति टी०—'स्नानानां चन्दनानाम्' इति पाठे स्नानार्हचन्दनानामित्यर्थः । विविधं गन्धमुद्वहन्प्रववौ, अत एव सुरभिर्गन्धो विमाने मूर्छितो व्याप्तः ॥ ३३ ॥

रा० टी०—रसानामिति । रसादीनां तद्गन्धैर्मूर्च्छितः प्रवृद्धः सुरभिर्गन्धः प्रववौ प्रव्याप 'स्नानानां चन्दनानाम्' इति पाठे स्नानार्हचन्दनार्हमित्यर्थ इति भट्टाः ॥ ३४ ॥

गो० टी०—रसानामिति । रसादीनां सुरभिर्गन्धः विमाने मूर्च्छितः व्याप्तः सन् प्रववौ चचार ॥ ३२ ॥

३४ ] ति० टी०—तत्रान्याः । बहिः प्रतिष्ठितपुष्पके इत्यर्थः ॥ ३४ ॥

रा० टी०—श्यामेति । श्यामावदातादयो याः प्रमदाः तासां निद्रावशत्वात् हेतोः मदनेन तद्धेतुकरत्या विमूर्छितं तासां रूपमाकृतिः प्रसुप्तानां रात्रौ मुकुलितानां पद्मिनीनामिवासीत् । श्लोकद्वयमेकान्वयि ॥ ३५ ॥ ३६ ॥

गो० टी०—श्यामा इति । वदाताः अवदाताः । भागुरिमतेनाल्लोपः शुभ्रा इत्यर्थः ॥ ३३ ॥

३५-३६ ] ति० टी०—राक्षसालये आन्तरमध्यबहिःकक्षोपलक्षिते । सर्वत्र निद्रावशत्वान्मदनेन तद्धेतुकरत्यार्धमूर्च्छितं क्लान्तं तासां रूपं प्रसुप्तानां रात्रौ मुकुलितानां पद्मिनीनां नलिनीनां यथा रूपं तथैवासीत् । एवंप्रकारेण ददर्श॥३५॥३६॥

रा० टी०—एवमिति । कपिः रावणान्तःपुरमशेषेण ददर्श जानकीं च न ददर्श ॥ ३७ ॥

गो० टी०—तासामिति । चकारोऽप्यर्थकः । निद्रापरवशानामपि तासां रूपं प्रसुप्तानां पद्मिनीनां रूपमिव रम्यमासीदित्यर्थः ॥ ३४ ॥ ३५ ॥

३७ ] ति० टी०—ततो निरीक्षणानन्तरम् । 'नेक्षेत नग्नां परस्त्रियम्' इति शास्त्रस्मरणादिति शेषः । तदेवाह—धर्मेति । धर्मलोपनिमित्तं यत्साध्वसं भयं तेन शङ्कितः भीत इत्यर्थः॥३७॥

रा० टी०—निरीक्षमाण इति । ताः स्त्रियो निरीक्षमाणो महाकपिः धर्मसाध्वसेन धर्मलोपहेतुकभयेन शङ्कितः सन् महतीं शङ्कां चिन्तां जगाम ॥ ३८ ॥

गो० टी०—निरिक्षमाण इत्यादि । धर्मसाध्वसशङ्कितः धर्मलोपभयाच्छङ्कितः परदारावरोधस्य परदाररूपान्तःपुरस्य न हीति मे दृष्टिः कदाचिदपि परदाराणां विषयवर्तिनी नहि परदारसंबन्धिविषयपरा नहीत्यर्थः । तथाप्ययं परदारपरिग्रहः दृष्टः इदमसंगतमित्यर्थः ॥ ३७-३८ ॥

३८ ] ति० टी०—धर्मलोपं दर्शयति—परदारेति । परदारावरोधस्य दारशब्दः स्त्रीसामान्यवाची, अवरोधशब्दः स्वधर्मयुक्तकुलस्त्रीवाची । प्रसुप्तस्य । अनेन नग्नप्रायत्वं सूचितम् तत्समये वसनानां विपर्यासात् ॥ ३८ ॥

रा० टी०—चिन्ताकारमाह-परेत्यादिभिः । परदारावरोधस्य परस्त्रीसमूहस्य निरीक्षणं धर्मलोपं करिष्यति ॥ ३९ ॥

३९ ] ति० टी०—मे दृष्टिः परदाराणामप्ययावद्विषयवर्तिनी न । किं च परदारपरिग्रहस्तद्दानतिपापी रावणश्च दृष्टः तादृशदर्शनमपि धर्मलोपकारीति भावः ॥ ३९ ॥

रा० टी०—ननु पापदृष्ट्या परदारावलोकनं दोषावहं तव तु नेत्यत आह—नेति । हि यद्यपि मम दृष्टिः परदाराणां विषयवर्तिनी विषयप्रवर्तिका न तथापि परदारपरिग्रहः सीतापहारकः अयं रावणो मया दृष्टः एतेनैतद्दर्शनजनितपापस्य परिहारो न दृश्यते इति सूचितम् ॥ ४० ॥

४० ] ति० टी०—अथ पुनर्विचारेण तद्लोपबुद्धिरप्युत्पन्नेत्याह—तस्येति । अन्या चिन्ता पूर्वचिन्ताविरोधिनी निश्चिते प्रमाणप्रतिपन्ने एकान्ते सिद्धान्ते तद्विषयज्ञाने चित्तं यस्य सः, अत एव सा चिन्ता कार्यनिश्चयदर्शिनी कर्तव्याकर्तव्यनिर्णयसमर्था ॥ ४० ॥

---

१ रसानामिति गो० रा० पाठः । २ चिन्तामिति गो० पाठः ।

कामं दृष्टा मया सर्वा विश्वस्ता रावणस्त्रियः । न तु मे मनसा किंचिद्वैकृत्यमुपपद्यते ॥ ४१ ॥
मनो हि हेतुः सर्वेषामिन्द्रियाणां प्रवर्तने । शुभाशुभास्ववस्थासु तच्च मे सुव्यवस्थितम् ॥ ४२ ॥
नान्यत्र हि मया शक्या वैदेही[2] परिमार्गितुम् । स्त्रियो हि स्त्रीषु दृश्यन्ते सदा संपरिमार्गणे ॥ ४३ ॥
यस्य सत्त्वस्य या योनिस्तस्यां तत्परिमार्गते[1] । न शक्यं प्रमदा नष्टा मृगीषु परिमार्गितुम् ॥ ४४ ॥
तदिदं मार्गितं तावच्छुद्धेन मनसा मया । रावणान्तःपुरं सर्वं दृश्यते न च जानकी ॥ ४५ ॥
देवगन्धर्वकन्याश्च नागकन्याश्च वीर्यवान् । अवेक्षमाणो हनुमान्नैवापश्यत जानकीम् ॥ ४६ ॥
तामपश्यन्कपिस्तत्र पश्यंश्चान्या वरस्त्रियः । अपक्रम्य तदा वीरः प्रस्थातुमुपचक्रमे ॥ ४७ ॥
स भूयः [3]सर्वतः श्रीमान्मारुतिर्यत्नमाश्रितः । आपानभूमिमुत्सृज्य तां विचेतुं प्रचक्रमे ॥ ४८ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये सुन्दरकाण्डे एकादशः सर्गः ॥ ११ ॥

---

रा० टी०—तस्येति । निश्चितेन संसर्गबुद्ध्या एतद्दर्शनाकरणात् यत्नान्तरेण स्वामिकार्यस्यासाध्यत्वाच्चैतद्दर्शनमपि न दोषावहमिति निश्चयेन एकान्तं स्थिरं चित्तं यस्य तस्य चिन्ता हनुमतः कार्यनिश्चयदर्शिनी अन्वेषणबुद्धिसंपादिका अन्या चिन्ता प्रादुरभूत् ॥ ४१ ॥

गो० टी०—तस्येति । निश्चितैकान्तचित्तस्य नियतैकरूपचित्तस्य ॥ ३९ ॥

४१ ] ति० टी०—तां चिन्तामभिनयति—काममिति । विश्वस्ता इतरालोकनशङ्कारहिताः । वैकृत्यं विकारः स्वार्थे ष्यञ् नोपपद्यते न प्राप्नोति ॥ ४१ ॥

रा० टी०—तदाकारं वर्णयितुमाह—काममिति । येन मया रावणस्य स्त्रियो दृष्टास्तस्य मे मनसः वैकृत्यं विकारो न उपपद्यते प्राप्नोति ॥ ४२ ॥

गो० टी०—काममिति । वैकृत्यं विकारः । उपपद्यते उत्पद्यते ॥ ४० ॥

४२ ] ति० टी०—ततः किं तत्राह—मनो हीति । शुभाशुभास्ववस्थासु पुण्यपापकर्मस्विन्द्रियाणां प्रवर्तने मनो हेतुः मनसोऽसत्सदर्थरागद्वेषत इन्द्रियप्रवृत्तिर्हि पापाय, इयं तु मम प्रवृत्तिर्न पापाय, यतस्तन्मे मनः सुष्ठु व्यवस्थितं परदारेषु न रागवत् पुण्यपापव्यवस्थायां च स्वचित्तमेव साक्षीति भावः ॥ ४२ ॥

रा० टी०—ननु किं तेनेत्यत आह—मन इति । यत् मनः शुभाशुभासु धर्माधर्मसंपादिकासु अवस्थासु क्रियासु इन्द्रियाणां प्रवर्तने मन एव हेतुः तत् मे मनः सुव्यवस्थितं धर्मे संस्थितम् । एतेनाधर्मशङ्का नास्तीति सूचितम् ॥ ४३ ॥

गो० टी०—मन इति । शुभाशुभास्ववस्थासु शुभकरणाशुभकरणेषु विषये इन्द्रियाणां प्रवर्तने मन एव हेतुः सुव्यवस्थितं न तदभिलाषि जातमित्यर्थः ॥ ४१ ॥

४३ ] ति० टी०—किं च राजाज्ञानुष्ठानरूपसेवकीयपरमधर्मान्यथानुपपत्त्यापि न दोष इत्याह—नान्यत्रेति । तत्र हेतुः—स्त्रियो हीति । सदा संपरिमार्गणे मार्गणव्यवहारे । लोकैरिति शेषः ॥ ४३ ॥

रा० टी०—ननु वशीकृतेन्द्रियाणामपि स्त्रीसन्निधावागमनमनुचितमित्यत आह—नेति । अन्यत्र परिमार्गितुं वैदेही न शक्या हि यतः संपरिमार्गणे सम्यक्परिमार्गणसमये स्त्रियः स्त्रीष्वेव दृश्यन्ते अन्वेष्यन्ते ॥ ४४ ॥

गो० टी०—ननु परदारदर्शनमपि परिहरणीयं तत्किमर्थं कृतं तत्राह—नान्यत्रेति । अन्यत्र स्त्रीव्यतिरिक्ते संपरिमार्गणे कर्तव्ये । स्त्रीष्वेव हि स्त्रियो दृश्यन्ते ॥ ४२ ॥

४४–४६ ] ति० टी०—सजातीयेष्वेव मार्गणं प्रसिद्धमित्याह—यस्येति । सत्त्वस्य प्राणिनो या योनिर्या समानजातिः परिमार्गते लोक इति शेषः । तत्रैवोपपत्तिमाह—न शक्यमिति । एतेन रावणदर्शनजोऽपि दोषः परिहृतः ४४–४६

रा० टी०—विजातीयेष्वन्वेषणमनुचितमिति बोधयितुमाह—यस्येति । यस्य सत्त्वस्य प्राणिनो या योनिः तस्यामेव तत्परिमार्ग्यते अत एव नष्टा प्रमदा मनुष्यस्त्री मृगीषु परिमार्गितुं न शक्यम् सामान्ये नपुंसकम् ॥ ४५ ॥

गो० टी०—यस्येति । योनिः जातिः सजातीय इत्यर्थः ४३।४४

रा० टी०—तदिति । तत् उक्तहेतोः रावणान्तःपुरं परिमार्गितं जानकी तु न दृश्यते ॥ ४६ ॥

रा० टी०—देवेति । देवकन्यादीनवेक्षमाणो हनुमान् जानकीं नैवापश्यत ॥ ४७ ॥

गो० टी०—देवेति । अपश्यत अपश्यत् ॥ ४५ ॥ ४६ ॥

४७ ] ति० टी०—अपक्रम्य रावणान्तःपुरबहिःकक्षात इति शेषः ॥ ४७ ॥

रा० टी०—तामिति । तां सीतामपश्यन् कपिः अन्याः स्त्रियः पश्यन् सन् अपक्रम्य उत्प्लुत्य प्रस्थातुमुपचक्रमे ॥ ४८ ॥

४८ ] ति० टी०—तां सीतामन्यत्र विचेतुं प्रचक्रमे ॥ ४८ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये सुन्दरकाण्ड एकादशः सर्गः ॥ ११ ॥



१ मार्ग्यत इति गो. रा. पाठः । २ ध्यातुमिति गो. पाठः । ३ तु परमिति गो. पाठः ।

## द्वादशः सर्गः ।

चित्रगृहनिकुञ्जादिनानास्थानेष्वन्विष्याप्यप्राप्तसीतादर्शनो हनुमांस्तस्या रावणेन प्रमापणादि संभाव्याकृतकार्यतया स्वयत्नवैफल्यं मन्वानः सुग्रीवदर्शनादिषु निर्विण्णोऽपि निर्वेदस्यानर्थापादकत्वं विचिन्त्यानिर्वेदस्यैव फलोत्पादकत्वं निश्चिन्वन्पुनरप्यन्वेष्टुमारभते । अन्विष्टाखिलप्रदेशोऽप्यलब्धसीतादर्शनः पुनश्च विषीदति ।

स तस्य मध्ये भवनस्य संस्थितो लताग्रहांश्चित्रगृहान्निशागृहान् ।
जगाम सीतां प्रतिदर्शनोत्सुको न चैव तां पश्यति चारुदर्शनाम् ॥ १ ॥
स चिन्तयामास ततो महाकपिः प्रियामपश्यन्रघुनन्दनस्य ताम् ।
ध्रुवं नु सीता म्रियते यथा न मे विचिन्वतो दर्शनमेति मैथिली ॥ २ ॥
सा राक्षसानां प्रवरेण बाला स्वशीलसंरक्षणतत्परा सती ।
अनेन नूनं प्रति दुष्टकर्मणा हता भवेदार्यपथे परे स्थिता ॥ ३ ॥
विरूपरूपा विकृता विवर्चसो महानना दीर्घविरूपदर्शनाः ।
समीक्ष्य ता राक्षसराजयोषितो भयाद्विनष्टा जनकेश्वरात्मजा ॥ ४ ॥

रा० टी०–स इति । यत्नमास्थितो मारुतिः आपानभूमिमुत्सृज्य त्यक्त्वा विचेतुं प्रचक्रमे ॥ ४९ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ सुन्दरकाण्डे एकादशः सर्गः ॥ ११ ॥

गो० टी०–स भूयस्तु परमिति । तत् रावणान्तःपुरम् ॥ ४७ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने एकादशः सर्गः ॥ ११ ॥

---

१ ] ति० टी०–अथ बहुदुःखचिन्ताकुलोऽन्विष्टमेव पुनः पुनरन्वेषयति स्मेत्याह–स तस्येति । तस्य भवनस्य रावणभवनस्य निशागृहा रात्रिनिवासगृहास्तान्विचेतुं जगाम ॥ १ ॥

रा० टी०–अन्वेषणान्तरमुपक्रमते–स इति । तस्य रावणस्य भवनस्य मध्ये संस्थितो हनुमान् सीतां प्रति दर्शनोत्सुकः सन् लतागृहान् लताच्छादितवेश्मानि चित्रगृहान् अनेकविधचित्रलिखितभवनानि निशागृहान् रात्रिनिवासयोग्यभवनानि च जगाम सीतां च नैव पश्यति ॥ १ ॥

गो० टी०–स तस्येत्यादि । निशागृहान् रात्रिनिवासयोग्यगृहान् । गृहाः पुंसि च भूम्न्येवेति पुँल्लिङ्गत्वम् । पश्यति अपश्यत् ॥ १ ॥

२ ] ति० टी०–न म्रियते न जीवति स्म । 'ध्रुवं नु सीता म्रियते' इति क्वचित्पाठः । तत्र हेतुः–यथेति यत इत्यर्थः ॥ २ ॥

रा० टी०–समिति । ततः तस्मिन् समये रघुनन्दनस्य प्रियाम् अपश्यन् महाकपिः संचिन्तयामास । चिन्ताकारमाह–यथा यथावद्विचिन्वतो मम दर्शनं दृष्टिपथं मैथिली न एति अतः ध्रुवं नित्यमपि स्वजीवनं न म्रियते एतेन सीतायाः अघटितघटनापटीयस्त्वं व्यञ्जितम् ॥ २ ॥

गो० टी०–स इति । यथा यस्मात्कारणात् विचिन्वतो मे मैथिली दर्शनम् नैति तस्मात् म्रियते ममार । यद्वा अथवा नेति वाक्यं पठनीयम् तदा अपश्यन्निति हेतुगर्भम् अदर्शनान्मृता वा अथवा दर्शनं नैति । कुत्रचित् गहने प्रदेशे स्थिता वेत्यर्थः ॥ २ ॥

३ ] ति० टी०–स्वशीलं पातिव्रत्यम् । प्रतिदुष्टकर्मणा प्रति इष्टं दुष्टं कर्म यस्य तेन सकलसज्जनानर्थकारिणेत्यर्थः । आर्यपथे आर्याणां पतिव्रतानां मार्गे ॥ ३ ॥

रा० टी०–चिन्तान्तरमाह–सेति । परे सर्वोत्कृष्टे आर्यपथे महात्मनां रीतौ स्थिता अत एव स्वशीलस्य स्वपतिमात्रनिष्ठत्वस्य संरक्षणे तत्परा अत एव सती पतिव्रताशिरोमणिः सा सीता प्रतिदुष्टकर्मणा सर्वं प्रति दुष्टाचरणेन अनेन रावणेन हता भवेत् ॥ ३ ॥

गो० टी०–सेति । प्रतिदुष्टकर्मणा अतिदुष्टकर्मणा वीप्सायां प्रतिः । 'प्रति प्रतिनिधौ वीप्सालक्षणादौ' इत्यमरः । परे उत्कृष्टे आर्यपथे सन्मार्गे ॥ ३ ॥

४ ] ति० टी०–रावणस्यानुरागात्स्वविषयदोषाद्वा तद्वधेऽप्रवृत्तावपि स्वयमेव भयान्नष्टेत्याह–विरूपेति । दीर्घाणि विरूपाणि दर्शनानि यासां ताः दीर्घपदेन कर्मधारयो वा । राक्षसराजयोषितस्तदाज्ञाकारिणीः ॥ ४ ॥

रा० टी०–चिन्तान्तरमाह—विरूपेति । विरूपाणि छिन्नैकनासिकादिमन्ति शरीराणि यासामत एव विकृताः विविधविकारविशिष्टाः अत एव दीर्घाः बृहच्छरीराः विरूपाणां राक्षसानां दर्शनं निरन्तरं दृष्टिर्यासु ता एव ता इति

---

१ मारुतिरिति गो. पाठः । २ नैति गो.पाठः । ३ म्रियत इति गो. पाठः । ४ जानकीति गो.पाठः । ५ वरे इति गो.पाठः । ६ सति गो.पाठः ।

सीतामदृष्ट्वा ह्यनवाप्य पौरुषं विहृत्य कालं सह वानरैश्चिरम् ।
न मेऽस्ति सुग्रीवसमीपगा गतिः सुतीक्ष्णदण्डो बलवांश्च वानरः[१] ॥ ५ ॥
दृष्टमन्तःपुरं सर्वं दृष्टा राक्षसयोषितः । न सीता दृश्यते साध्वी वृथा जातो मम श्रमः ॥ ६ ॥
किं नु मां वानराः सर्वे गतं वक्ष्यन्ति संगताः । गत्वा तत्र त्वया वीर किं कृतं तद्वदस्व नः ॥ ७ ॥
अदृष्ट्वा किं प्रवक्ष्यामि तामहं जनकात्मजाम् । ध्रुवं प्रायमुपासिष्ये[२] कालस्य व्यतिवर्तने ॥ ८ ॥
किं वा वक्ष्यति वृद्धश्च जाम्बवानङ्गदश्च सः । गतं पारं समुद्रस्य वानराश्च समागताः ॥ ९ ॥
अनिर्वेदः श्रियो मूलमनिर्वेदः परं सुखम् । [३]भूयस्तत्र विचेष्यामि न यत्र विचयः कृतः ॥ १० ॥

---

कर्मधारयः अत एव विवर्चसः भयंकरवर्चोविशिष्टा राक्षसराजयोषितः ताः राक्षसीः समीक्ष्यावलोक्य जनकेश्वरात्मजा भयाद्विनष्टा ॥ ४ ॥

गो० टी०–विरूपेति । विरूपाणि न्यूनाधिकानि रूपाणि शरीरावयवाः यासां ताः विकृताः विकृतवेषाः विवर्चसो निस्तेजस्काः महाननाः अतिविशालमुखाः दीर्घाणि विरूपाणि दर्शनानि चक्षूंषि यासां ताः राक्षसराजयोषितः रावणस्याज्ञाकारिण्यः स्त्रियः ॥ ४ ॥

५–६ ] ति० टी०–पौरुषं समुद्रलङ्घनरूपपराक्रमसाध्यं प्रयोजनम् । कालं विहृत्य सुग्रीवकृतं कालमतिक्रम्य सुग्रीवसमीपं गम्यते यया सा गतिर्मार्गो नास्ति । तत्र हेतुः–सुतीक्ष्णेति ॥ ५ ॥ ६ ॥

रा० टी०–चिन्तान्तरमाह–सीतामिति । वानरैः सह चिरंकालं विहृत्य सीताम् अदृष्ट्वा अत एव पौरुषं पुरुषार्थम् अनवाप्य अप्राप्य सुग्रीवसमीपगा सुग्रीवसमीपप्रापिका मे गतिर्मार्गो नास्ति तत्र हेतुः–वानरः सुग्रीवः तीक्ष्णदण्डः बलवांश्च ॥ ५ ॥

रा० टी०–दृष्टमिति । राक्षसयोषितो दृष्ट्वा सर्वमन्तःपुरं मया दृष्टं सीता तु न दृश्यते अतः मम श्रमः समुद्रलङ्घनादिजनितखेदः वृथा ॥ ६ ॥

गो० टी०–सीतामिति । पौरुषं शत्रुविषयपराक्रमम् । चिरं कालं विहृत्य अतिक्रम्येत्यर्थः । एवंभूतस्य मे सुग्रीवसमीपगा तत्समीपगामिनी गतिः मार्गः नास्ति सुग्रीवसमीपगतिः ममायोग्येत्यर्थः । तत्र हेतुमाह–सुतीक्ष्णेति । यत इति शेषः ॥ ५ ॥ ६ ॥

७ ] ति० टी०–अस्तु सुग्रीवसमीपगमनवार्ता, अङ्गदादिसमीपगमनमपि दुर्लभमित्याह–किं न्विति । किं नु वक्ष्यन्तीति चिन्तां कृत्वा पुनर्विचार्य यद्वक्तव्यं तत्स्वयमेवानुवदति–गत्वेत्यादि । वदस्वेति वक्ष्यन्तीत्यर्थः ॥ ७ ॥

रा० टी०–किमिति । गतं सीतासंदेशं विना प्राप्तं मां हे वीर ! तत्र लंकायां गत्वा त्वया किं कृतं तत् नो वदस्व इति किं नु वक्ष्यन्ति प्रक्ष्यन्त्येवेत्यर्थः ॥ ७ ॥

गो० टी०–किमिति । किन्न्विति सामान्येन निर्वेदोक्तिः । विशेषतश्चाह–गत्वेति । इत्युक्त इति शेषः । वदस्व न इत्युक्तः किम् प्रवक्ष्यामि । यद्वा किन्त्विति पाठः । पूर्ववदर्धत्रयमेकं वाक्यम् किन्त्विति पूर्वस्माद्विशेषोक्तिः । मां वानराः वदस्व न इति वक्ष्यन्ति तदा अदृष्ट्वा किं प्रवक्ष्यामीति योजना ॥ ७ ॥

८ ] ति० टी०–किं प्रवक्ष्यामि तान्प्रतीति शेषः । न किमपीत्यर्थः । यदेवम् अतो–ध्रुवमिति । कालस्य सुग्रीवकल्पितस्य व्यतिवर्तनेऽतिक्रमे ॥ ८ ॥

रा० टी०–ननु किं तेनेत्यत आह—अदृष्ट्वेति । जनकात्मजाम् अदृष्ट्वा अहं किं प्रवक्ष्यामि नोत्तरमस्तीत्यर्थः, अतः कालस्य सुग्रीवपरिकल्पितसमयस्य व्यतिवर्तने उल्लङ्घने स्थितोऽहं प्रायं प्रायोपवेशनं ध्रुवमासिष्ये ॥ ८ ॥

गो० टी०–तर्हि अत्रैव कालविलम्बः क्रियतां तत्राह—ध्रुवमिति । कालस्य व्यतिवर्तने अस्मदागमनकालेऽतीते प्रायमुपैष्यन्ति । जाम्बवत्प्रभृतय इति शेषः ॥ ८ ॥

९ ] ति० टी०–किं वा वक्ष्यति माम् धिक्करिष्यतीत्यर्थः । समागता मिलिता अन्ये वानराश्च धिक्करिष्यन्ति ॥ ९ ॥

रा० टी०–किमिति । समुद्रस्य पारम् उत्तरतीरं गतं प्राप्तं मां जाम्बवान् किं वक्ष्यति वानराश्च किं वक्ष्यन्तीति वचनविपरिणामेनान्वयः ॥ ९ ॥

गो० टी०–सामान्येन निर्वेदं प्रतिवक्ति–किं वेति । समुद्रलङ्घनरूपं महत्कर्म कृतवन्तं मां ते किं वक्ष्यन्ति किमपि वक्ष्यन्ति । यद्वा मद्वृत्तान्तं प्रशंसन् जाम्बवान् तदुत्साहकोऽङ्गदस्तदुपश्रृण्वन्तोऽन्ये च मां किं वा जुगुप्सितं वक्ष्यन्ति । 'किं पृच्छायां जुगुप्सने' इत्यमरः ॥ ९ ॥

१० ] ति० टी०–एवं क्षणमात्रं निर्विद्य पुनरुत्साहमवलम्ब्याह–अनिर्वेद इति । निर्वेदः करणग्रामस्य प्रवृत्तिवैमुख्यं तदभाव उत्साहः ॥ १० ॥

रा० टी०–स्वामिकार्यविघातः दुःसहः इत्युत्साहावलम्बिचिन्तान्तरमाह–अनिर्वेद इत्यादिभिः । अनिर्वेदः कृत्याद् निवृत्तिर्यस्मात् सः उत्साह इत्यर्थः श्रियः संपत्तेः मूलं कारणम् अत एव अनिर्वेदः परं सुखं परमसुखहेतुः अत एव यत्र विचयोऽन्वेषणं न कृतः तत्र भूयो विचेष्यामि ॥ १० ॥

गो० टी०–चिरं निर्वेदे कार्यहानिः स्यादिति मत्वा अनि-

---

१ रावणेति गो. पाठः । २ प्रक्ष्यन्ति इति गो. पाठः । ३ अर्धमेतत् गो. नास्ति ।

अनिर्वेदो हि सततं सर्वार्थेषु प्रवर्तकः । करोति सफलं जन्तोः कर्म यच्च करोति सः ॥ ११ ॥
तस्मादनिर्वेदकरं यत्नं चेष्टेऽहमुत्तमम् । अदृष्टांश्च विचेष्यामि देशान्रावणपालितान् ॥ १२ ॥
आपानशाला विचितास्तथा पुष्पगृहाणि च । चित्रशालाश्च विचिता भूयः क्रीडागृहाणि च ॥ १३ ॥
निष्कुटान्तररथ्याश्च विमानानि च सर्वशः । इति संचिन्त्य भूयोऽपि विचेतुमुपचक्रमे ॥ १४ ॥
भूमीगृहांश्चैत्यगृहान्गृहातिगृहकानपि । उत्पतन्निपतंश्चापि तिष्ठन्गच्छन्पुनः क्वचित् ॥ १५ ॥
अपवृण्वंश्च द्वाराणि कपाटान्यवघट्टयन् । प्रविशन्निष्पतंश्चापि प्रपतन्नुत्पतन्निव ॥ १६ ॥
सर्वमप्यवकाशं स विचचार महाकपिः । चतुरङ्गुलमात्रोऽपि नावकाशः स विद्यते ॥
रावणान्तःपुरे तस्मिन्यं कपिर्न जगाम सः ॥ १७ ॥
प्राकारान्तरवीथ्यश्च वेदिकाश्चैत्यसंश्रयाः । श्वभ्राश्च पुष्करिण्यश्च सर्वं तेनावलोकितम् ॥ १८ ॥
राक्षस्यो विविधाकारा विरूपा विकृतास्तथा । दृष्टा हनुमता तत्र न तु सा जनकात्मजा ॥ १९ ॥
रूपेणाप्रतिमा लोके परा विद्याधरस्त्रियः । दृष्टा हनुमता तत्र न तु राघवनन्दिनी ॥ २० ॥
नागकन्या वरारोहाः पूर्णचन्द्रनिभाननाः । दृष्टा हनुमता तत्र न तु सा जनकात्मजा ॥ २१ ॥

---

र्वेदमवलम्बते—अनिर्वेद इति । अनिर्वेद उत्साहः तत्कृतं तत्प्रयुक्तं यत्नं चेष्टे करोमीत्यर्थः । यत्करोति जन्तुरिति सिद्धम् । जन्तोः सबन्धि तत्सर्वं कर्म सः अनिर्वेद एव सफलं करोतीत्यन्वयः ॥ १० ॥ ११ ॥

११] ति०टी०—यत्कर्म स करोति तत्कर्म सफलं करोति ११

रा० टी०—उत्साहस्य संपत्तिमूलत्वमुपपादयन्नाह—अनिर्वेद इति । सर्वार्थेषु निखिलकर्तव्येषु प्रवर्तकः सोऽनिर्वेदः यत् कर्म जन्तुः करोति तत् जन्तोः कर्म सफलं करोति ॥ ११ ॥

१२-१३ ] ति० टी०—अनिर्वेदकरमुत्साहजननं यत्नं चित्तस्थैर्यं चेष्टे करोमि ॥ १२ ॥ १३ ॥

१४ ] ति० टी०—निष्कुटान्तररथ्या गृहाराममध्यगता वीथीः । विमानानि पुष्पकादीनि ॥ १४ ॥

रा० टी०—तस्मादिति । तस्मात् अनिर्वेदस्य फलसंपादकत्वात् हेतोः अनिर्वेदकरम् अनिर्वेदेनोत्थापितं यत्नमहं चेष्टे करोमि । चेष्टामेवाह—अदृष्टान् देशान् विचेष्यामि ॥ १२ ॥

रा० टी०—आपानेति । आपानशालाप्रभृतयो मया विचिताः अतः अन्यत्र विचेतव्यमित्यर्थः, इति संचिन्त्य विचेतुमुपचक्रमे । तत्र निष्कुटान्तररथ्याः गृहारामवीथ्यः भूमीगृहाः भुवोऽन्तराले निर्मितभवनानि गृहात् गृहकाः गृहोपरिविद्यमानगृहाणीति कतकः मुख्यगृहाद्दूरे विहारार्थं निर्मितानीति तीर्थः । सार्धश्लोक एकान्वयी ॥ १३ ॥ १४ ॥

गो० टी०—भूयस्तावदित्यादि । आपानेति । एता विचिताः अथापि पुनर्विचेष्यामीत्यनुषज्यते ॥ १२ ॥

गो० टी०—निष्कुण्टाः गृहारामाः अन्तररथ्याः अवान्तरवीथ्यः ॥ १३ ॥

गो० टी०—भूमीति । भूमीगृहान् भूमीबिलगृहान् । चैत्यगृहान् चतुष्पथमण्डपान् । गृहानतिगृहान् गृहानतीत्य दूरे स्वैरविहारार्थं निर्मितान् गृहान् ॥ १४ ॥

१५ ] ति० टी०—भूमीगृहान्भूबिलगृहान् । गृहातिगृहका गृहोपरिगृहा इति कतकः । गृहानतीत्यानतिदूरे स्वैरविहारार्थं निर्मितगृहा इति तीर्थः । विचेतुमुपचक्रमे इत्यनुकर्षः । उत्पतन्नुन्नतमारुहेन् । निपतनमवरोहः ॥ १५ ॥

१६ ] ति० टी०—निष्पतनं निष्क्रमणम् । अवघट्टनं संवरणम् ॥ १६ ॥

१७ ] ति० टी०—यं स कपिर्न जगाम स तादृशश्चतुरङ्गुलमात्रोऽप्यवकाशो न विद्यते ॥ १७ ॥

रा० टी०—उत्पतन्निति । उत्पतनादि कुर्वन् महाकपिः अवकाशम् अन्वेषितातिरिक्तदेशमपि विचचार अत एव यमवकाशं महाकपिर्न जगाम सोऽवकाशो देशः चतुरङ्गुलमात्रोऽपि न विद्यते । अर्धषट्कमेकान्वयि ॥ १५-१७ ॥

गो० टी०—उत्पतन्नित्यादि । उत्पतन्निपतन् पूर्वमुच्चस्थानान्यधिरुह्य ततोवरोहन् अवघाटयन् पाटयन् निष्पतन् निर्गच्छन् प्रपतन्नुत्पतन् बिलगृहादीनि नीचस्थानानि प्रथममधिरुह्य ततः समुद्गच्छन् ॥ १५-१७ ॥

१८-१९ ] ति० टी०—प्राकारान्तरवीथ्यः प्राकारमध्यवर्तिमन्त्रिकुमारादिगृहवीथ्यः चैत्यश्चतुष्पथवर्तिवृक्षः श्वभ्रा गर्ताः ॥ १८ ॥ १९ ॥

रा० टी०—प्राकारेति । प्राकारान्तरवीथ्यादि सर्वं तेन हनूमताऽवलोकितं चैत्यः चतुष्पथवर्ती तरुः ॥ १८ ॥

रा० टी०—राक्षसस्य इति । विविधाकाराः राक्षस्यः हनूमता दृष्टाः जनकात्मजा तु न दृष्टा ॥ १९ ॥

गो० टी०—प्राकारेति । प्राकारान्तररथ्याः प्राकारमध्यवर्तिवीथ्यः । वेदिकाश्चैत्यसंश्रयाः चैत्यवृक्षमूलपीठिकाबन्धाः ॥ १८-२१ ॥

२०-२१] ति० टी०—राघवनन्दिनी रामप्रिया ॥२०॥२१॥

---

१ कृतमिति गो. पाठः । २ भूयस्तावदिति गो. पाठः । ३ पुनरिति गो. रा. पाठः । ४ अपावृण्वन्निति गो. रा. पाठः । ५ घाटयन्निति गो. पाठः । ६ रथ्याश्चेति गो. पाठः । ७ दीर्घिका इति गो. पाठः । ८ सीता [illegible] गो. पाठः । ९ आरोहन्निति युक्तं भाति ।

प्रमथ्य राक्षसेन्द्रेण नागकन्या बलाद्धृताः । दृष्टा हनुमता तत्र न सा जनकनन्दिनी ॥ २२ ॥
सो पश्यंस्तां महाबाहुः पश्यंश्चान्या वरास्त्रियः । विषसाद महाबाहुर्हनूमान्मारुतात्मजः ॥ २३ ॥
उद्योगं वानरेन्द्राणां प्लवनं सागरस्य च । व्यर्थं वीक्ष्यानिलसुतश्चिन्तां पुनरुपागतः ॥ २४ ॥
अवतीर्य विमानाच्च हनूमान्मारुतात्मजः । चिन्तामुपजगामाथ शोकोपहतचेतनः ॥ २५ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये सुन्दरकाण्डे द्वादशः सर्गः ॥ १२ ॥

## त्रयोदशः सर्गः ।

पुष्पकविमानान्निर्गतो हनुमान्विगुद्वेगेन सर्वतोऽन्विष्याप्यलब्धसीतादर्शनस्तस्या विनाशमेवादर्शने हेतुत्वेनोत्प्रेक्षते । जानक्या अनुपलब्धौ रामे निवेदिताऽनिवेदिताप्यनेकमहानर्थासादिकेति विचिन्त्य प्रतिप्रयाणान्निवृत्तः प्रायोपवेशनं प्राणमोक्षणं रावणमारणं वा यावद्विचिन्तयति तावदेकां वनवाटिकामनन्वेषितां निर्धार्य तामन्वेष्टुमुपक्रान्तः स्वोद्योगसाफल्यापादनार्थमृषिदेवगणब्रह्मादीन्प्रार्थयते ।

विमानात्तु स संक्रम्य प्राकारं हरियूथपः । हनूमान्वेगवानासीद्यथा विद्युद्घनान्तरे ॥ १ ॥
संपरिक्रम्य हनुमान्रावणस्य निवेशनान् । अदृष्ट्वा जानकीं सीतामब्रवीद्वचनं कपिः ॥ २ ॥
भूयिष्ठं लोलिता लङ्का रामस्य चरता प्रियम् । नहि पश्यामि वैदेहीं सीतां सर्वाङ्गशोभनाम् ॥ ३ ॥
पल्वलानि तटाकानि सरांसि सरितस्तथा । नद्योऽनूपवनान्ताश्च दुर्गाश्च धरणीधराः ॥ ४ ॥

रा० टी०—रूपेणेति । रूपेण अप्रतिमाः विद्याधरस्त्रियः हनूमता दृष्टाः राघवनन्दिनी सीता तु न दृष्टा ॥ २० ॥

रा० टी०—नागेति । नागकन्या दृष्टाः जनकात्मजा न दृष्टा ॥ २१ ॥

२२–२४ ] ति० टी०—प्रमथ्य नागकन्या बलाद्धृता इत्यनेन बन्दीकृतानां ग्रहणम्, पूर्वं तूढानां नागकन्यानां ग्रहणम्, अतो न पुनरुक्तिः ॥ २२—२४ ॥

रा० टी०—तदेव भङ्ग्यन्तरेणाह—प्रमथ्येति ॥ २२ ॥

रा० टी०—स इति । अन्याः स्त्रियः पश्यन् तां सीताम् अपश्यंश्च महाबाहुरातिप्रयत्नवान् महाबाहुर्हनुमान् विषसाद २३

रा० टी०—उद्योगमिति । वानरेन्द्राणाम् उद्योगमन्वेषणं सागरस्य प्लवनं च व्यर्थं निष्फलं वीक्ष्य अनिलसुतः चिन्तामुपागतः ॥ २४ ॥

गो० टी०—प्रमथ्येति । प्रमथ्य प्रसह्य । बलाद्धृता नागकन्या इत्यभिधानादत्र बन्दीकृतानां ग्रहणम् । पूर्वश्लोके ऊढानां नागकन्यानामित्यपुनरुक्तिः ॥ २२–२६ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने द्वादशः सर्गः ॥ १२ ॥

२५ ] ति० टी०—अवतीर्य विमानाच्चेति । पुनरारुह्यावरुह्य चेत्यर्थः । विमान एवैतत्सर्वदर्शनमिति तत्त्वम् ॥ २६ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये सुन्दरकाण्डे द्वादशः सर्गः ॥ १२ ॥

रा० टी०—तदेव भङ्ग्यन्तरेणाह—अवतीर्येति । हनूमान् शोकोपहतचेतनः सन् चिन्तामुपजगाम ॥ २६ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ सुन्दरकाण्डे द्वादशः सर्गः ॥ १२ ॥

१ ] ति० टी०—वेगवान्हनूमान्विमानात्प्राकारं संक्रम्य घनान्तरे यथा विद्युत्सशोभा आसीत्तथासीत् । प्राकारस्येन्द्रनीलकृतत्वमनेन ध्वन्यते ॥ १ ॥

रा० टी०—अन्वेषणान्तरमाह—विमानादित्यादिभिः । स हनूमान् विमानात्प्राकारं संक्रम्य संप्राप्य घनान्तरे विद्युदिव वेगवान् आसीत् ॥ १ ॥

गो० टी०—विमानादित्यादि । इदानीं विमानादवतरणोक्त्या मध्ये विमानमधिरूढ इत्यवगम्यते । वेगवत्त्वे दृष्टान्तमाह—विद्युदिति ॥ १ ॥

२ ] ति० टी०—रावणस्य निवेशनान्गृहान्संपरिक्रम्य पुनः परिक्रमणेन दृष्ट्वा जानकीं चादृष्ट्वाऽब्रवीत् । आत्मनैवेति बोध्यम् ॥ २ ॥

रा० टी०—समिति । हनूमान् रावणस्य निवेशनान् गृहान् संपरिक्रम्य अन्वेषणार्थं संप्राप्य अब्रवीत् ॥ २ ॥

गो० टी०—संपरिक्रम्येति । संपरिक्रम्य प्राकारमिति शेषः । अब्रवीत् स्वयमिति शेषः ॥ २ ॥

३-४ ] ति० टी०—भूयिष्ठं लोलिता बहुशोऽन्विष्टा ॥ ३ ॥ ४ ॥

रा० टी०—तद्वचनाकारमाह—भूयिष्ठमिति । प्रियं चरता

१ मुहुर्धीमानिति गो. पाठः । २ उपागमदिति गो. पाठः । ३ स्विति गो. पाठः । ४ निवेशनादिति गो. पाठः । ५ लोडितेति रा. पाठः ।

लोलिता वसुधा सर्वा न च पश्यामि जानकीम् । इह संपातिना सीता रावणस्य निवेशने ॥
आख्याता गृध्रराजेन न च सा दृश्यते न किम् ॥ ५ ॥
किं तु सीताथ वैदेही मैथिली जनकात्मजा । उपतिष्ठेत विवशा रावणेन हृता बलात् ॥ ६ ॥
क्षिप्रमुत्पततो मन्ये सीतामादाय रक्षसः । बिभ्यतो रामबाणानामन्तरा पतिता भवेत् ॥ ७ ॥
अथवा ह्रियमाणायाः पथि सिद्धनिषेविते । मन्ये पतितमार्याया हृदयं प्रेक्ष्य सागरम् ॥ ८ ॥
रावणस्योरुवेगेन भुजाभ्यां पीडितेन च । तया मन्ये विशालाक्ष्या त्यक्तं जीवितमार्यया ॥ ९ ॥
उपर्युपरि सा नूनं सागरं क्रमतस्तदा । विचेष्टमाना पतिता समुद्रे जनकात्मजा ॥ १० ॥
आहो क्षुद्रेण चानेन रक्षन्ती शीलमात्मनः । अबन्धुर्भक्षिता सीता रावणेन तपस्विनी ॥ ११ ॥

मया लङ्का भूयिष्ठमत्यन्तं लोडिता अन्विष्टा हि तथापि वैदेहीं नैव पश्यामि ॥ ३ ॥

गो० टी०—भूयिष्ठमिति । लोलिता बहुशोऽन्विष्टेत्यर्थः॥३॥

रा० टी०—तदेव भङ्ग्यन्तरेणाह—पल्वलानीति । पल्वलादयः मया लोलिताः । सार्धश्लोक एकान्वयी ॥ ४ ॥

गो० टी०—पल्वलानीत्यादि । सरितः क्षुद्रनद्यः । अनूपवनान्ताः जलप्रायवनप्रदेशाः ॥ ४ ॥ ५ ॥

५ ] ति० टी०—नन्वद्दृष्टपलब्धिप्रमाणादभावनिश्चय एवास्त्वत आह—इहेति । रावणनिवेशने एवाख्याता तद्वचश्च प्रमाणम् दृश्यते तु न किमिदमिति ॥ ५ ॥

रा० टी०—अलाभस्याश्चर्यं मत्वा आह—इहेति । इह अस्मिन् रावणस्य निवेशने सीता स्थितेति शेषः, गृध्रराजेनाख्याता सा सीता किं कथं न दृश्यते अत्र कारणं न पश्यामीत्यर्थः । अर्धद्वयमेकान्वयि ॥ ५ ॥

६ ] ति० टी०—बहुप्रकारं चिन्तयति—किं न्विति । पूर्वदृष्टां मन्दोदरीं सौन्दर्यादिगुणैः पुनः सीतात्वेन संभाव्य तन्निरासकवाक्यम् । रावणेन बलाद्धृता विवशा सती सीतोपतिष्ठेत रावणमिति शेषः । 'रावणं दुष्टचारिणम्' इति पाठे तु यथाश्रुतमेव । इदं किं तु कुत्सितं तु, यतः सा मैथिली सा सीता लाङ्गलपद्धतिजत्वेनायोनिजा । वैदेही जगत्प्रशस्तविदेहवंशसंबद्धा । जनकात्मजा ब्रह्मवित्पुत्री ॥ ६ ॥

रा० टी०—दृष्टमन्दोदरीं सीतात्वेनाशङ्क्य निराकरोति—किमिति । बलात् रावणेन हृता सीता उपतिष्ठेत रावणसमीपं तिष्ठेत् किं नेत्यर्थः । एतेन सा न सीतेति सूचितम् ॥ ६ ॥

गो० टी०—किन्विति । सीता अयोनिजा । वैदेही जन्मभूमिप्रयुक्तातिशयवती । मैथिली आचारप्रधानकुलोत्कर्षवती । अथशब्दः समुच्चये । एवंभूता जनकात्मजा दुष्टचारिणं रावणं विवशा कामपरवशा सती उपतिष्ठेत किं तु नेत्यर्थः ॥ ६ ॥

७ ] ति० टी०—तर्ह्यदर्शनं कुतस्तत्र हेतूनुत्प्रेक्षते—क्षिप्रमिति । एते पक्षा दुःखातिशयात्संपातिवचनविस्मरणमूलकाः बिभ्यतः कराद्भ्रष्टेति शेषः । रामबाणानाम् आघातादिति शेषः । शेषे षष्ठी वा ॥ ७ ॥

रा० टी०—चिन्तान्तरमाह—क्षिप्रमिति । रामबाणानां रामबाणेभ्यो बिभ्यतः अत एव सीतामादाय क्षिप्रमुत्पततः रक्षसः समीपात् अन्तरा मध्ये पतिता भवेत् इति मन्ये ॥७॥

गो० टी०—अथास्या अदर्शने हेतूनुत्प्रेक्षते—क्षिप्रमित्यादिना । रामबाणानां रामबाणेभ्यः ॥ ७ ॥

८ ] ति० टी०—रामपरोक्षं तथा भयायोगात्पक्षान्तरम्—अथवेति । हृदयं पतितं मनउत्क्रान्तम् । मनउत्क्रमणस्यैव मरणत्वात् ॥ ८ ॥

रा० टी०—पातस्यासंभवं मत्वा पक्षान्तरमाह—अथवेति । सिद्धनिषेविते पथि ह्रियमाणाया अत एव सागरं प्रेक्ष्य भीताया इति शेषः, सीतायाः हृदयं मनः पतितम् उत्क्रान्तं मनउत्क्रमणस्य मरणत्वान्मृतेत्यर्थः, इत्यहं मन्ये ॥ ८ ॥

गो० टी०—अथवेति । सागरं प्रेक्ष्य भीतं हृदयं सागरे पतितमिति मन्ये । हृदयस्य भयस्थानत्वेन तन्मूलतया तच्छरीरं लक्ष्यते ॥ ८ ॥

९ ] ति० टी०—पीडितेन पीडनेन ॥ ९ ॥

रा० टी०—चिन्तान्तरमाह—रावणस्येति । उरुवेगेन रावणस्य भुजाभ्यां पीडितेन गाढं ग्रहणेन हेतुना तया सीतया जीवितं त्यक्तम् इति मन्ये ॥ ९ ॥

गो० टी०—रावणस्येति । पीडितेन पीडनेन ॥ ९ ॥

१० ] ति० टी०—विचेष्टमाना विलुठन्ती ॥ १० ॥

रा० टी०—चिन्तान्तरमाह—उपरीति । सागरम् उपरि उपरि क्रमतो रावणस्य समीपे विचेष्टमाना लुण्ठन्ती जनकात्मजा समुद्रे पतिता ॥ १० ॥

गो० टी०—उपर्युपरीति । उपर्युपरि सागरं सागरस्य सन्निहितोपरिप्रदेशे । "उपर्यध्यधसः सामीप्ये" इति द्विर्वचनम् "धिगुपर्यादिषु त्रिषु" इति द्वितीया ॥ १० ॥

११ ] ति० टी०—ननु सर्वमेतदसंभावितं रावणेन सर्वोपायरहितहरणस्यैपत्करत्वादतः पक्षान्तरमाह—आहो इति । अथवेत्यर्थः ॥ ११ ॥

रा० टी०—चिन्तान्तरमाह—अहो इति । आत्मनः शीलं पातिव्रत्यं रक्षन्ती अबन्धुः बन्धुरहिता सीता क्षुद्रेण अनेन रावणेन भक्षिता ॥ ११ ॥

१ न्विति गो. पाठः । २ पश्यामि तामहमिति गो. पाठः । ३ न्विति गो. रा. पाठः । ४ रावणं दुष्टचारिणमिति गो. पाठः । ५ वेति गो. पाठः । ६ अहो इति गो. रा. पाठः । ७ वेति गो. पाठः ।

अथवा राक्षसेन्द्रस्य पत्नीभिरसितेक्षणा । अदुष्टा दुष्टभावाभिर्भक्षिता सा भविष्यति ॥ १२ ॥
[ [1]संपूर्णचन्द्रप्रतिमं पद्मपत्रनिभेक्षणम् । रामस्य ध्यायती वक्त्रं पञ्चत्वं कृपणा गता ॥
हा राम लक्ष्मणेत्येवं हाऽयोध्ये चेति मैथिली । विलप्य बहु वैदेही न्यस्तदेहा भविष्यति ॥ ]
अथवा निहिता मन्ये रावणस्य निवेशने । भृशं लालप्यते बाला पञ्जरस्थेव सारिका ॥ १३ ॥
जनकस्य कुले जाता रामपत्नी सुमध्यमा । कथमुत्पलपत्राक्षी रावणस्य वशं व्रजेत् ॥ १४ ॥
विनष्टा वा प्रणष्टा वा मृता वा जनकात्मजा । रामस्य प्रियभार्यस्य न निवेदयितुं क्षमम् ॥ १५ ॥
निवेद्यमाने दोषः स्याद्दोषः स्यादनिवेदने । कथं नु खलु कर्तव्यं विषमं प्रतिभाति मे ॥ १६ ॥

गो० टी०—अहो इति खेदे ॥ ११ ॥

१२ ] ति० टी०—ननु बहुभक्षणसामग्रीमत्त्वादनुरागवत्त्वाच्च तेन भक्षणमसंभावितमत आह—अथवेति । सापत्न्यदुःखादिति भावः ॥ १२ ॥

रा० टी०—चिन्तान्तरमाह—अथवेति । दुष्टभावाभिः क्रूरस्वभावाभिः राक्षसेन्द्रस्य पत्नीभिः सा सीता भक्षिता भविष्यति ॥ १२ ॥

गो० टी०—अथवेति । दुष्टभावाभिः सापत्न्यप्रयुक्तक्रोधाभिः ॥ १२ ॥ १३ ॥

१३ ] ति० टी०—एतदुत्तरम् 'संपूर्णचन्द्रप्रतिमं पद्मपत्रनिभेक्षणम् । रामस्य ध्यायती वक्त्रं पञ्चत्वं कृपणा गता ॥ हा राम लक्ष्मणेत्येव हाऽयोध्येति च भामिनी । विलप्य बहु वैदेही न्यस्तदेहा भविष्यति ॥' इत्यादि श्लोकद्वयं प्रक्षिप्तमिति कतकः । ननु सपत्नीभिरप्यशक्यं भक्षणं रावणेन स्वभोगार्थमानीतत्वादत आह—अथवेति । निहिता गुप्ततया स्थापिता इति मन्ये । नायमपि पक्षो युक्त इत्याह—भृशमिति । एवमपि सा बाला पञ्जरस्था सारिकेव भृशं मुहुर्मुहू रामेति लालप्यते लालप्येत । न च तद्दृश्यत इति भावः ॥ १३ ॥

रा० टी०—चिन्तान्तरमाह—समिति । संपूर्णचन्द्रप्रतिमं पूर्णचन्द्रसदृशं रामस्य वक्त्रं ध्यायती ध्यायन्ती सीता पञ्चत्वं मरणं गता ॥ १३ ॥

रा० टी०—तदेव भङ्ग्यन्तरेणाह—हेति । हा ! रामेत्यादि बहु विलप्य न्यस्तदेहा भविष्यति ॥ १४ ॥

गो० टी०—हा रामेति । न्यस्तदेहा त्यक्तदेहा भविष्यति । भवेदित्यर्थः ॥ १४ ॥

रा० टी०—चिन्तान्तरमाह—अथवेति । रावणस्य निवेशने क्वचित् गोप्यस्थले निहिता पञ्जरस्था सारिका इव भृशं लालप्यते मरणभावपरीक्षार्थं किंचित् वक्तुं प्रेर्यते ॥१५॥

गो० टी०—अथवेति । निहिता भूगृहादौ गूढं स्थापिता । लालप्यते मुहुर्मुहुः प्रलपति ॥ १५ ॥

१४ ] ति० टी०—ननु तर्हि रावणसमीप एव भवेत्संपातिवचनप्रामाण्यात् मया तु सम्यङ् नान्विष्टमित्याशङ्क्याह—जनकस्येति । तस्मादेतदप्ययुक्तमिति भावः ॥१४॥

रा० टी०—चिन्तान्तरमाह—जनकस्येति । रामपत्नी रावणस्य वशं कथं व्रजेत् प्राप्नुयात् न प्राप्नुयादित्यर्थः ॥ १६ ॥

गो० टी०—एवं निरुद्ध्यमानाऽपि सीता रावणस्य वशं न व्रजेदित्याह—जनकस्येति । कथं व्रजेत् न व्रजेदेवेत्यर्थः ॥१६॥

१५ ] ति० टी०—नन्वनेन विचारेणालम्, यथानुभूतं निवेद्यतां तत्राह—विनष्टेति । अस्य क्वचिद्वर्तत इति शेषः । 'णश अदर्शने' इति धात्वनुसाराददृष्टा सती क्वचिदस्तीति वक्तुमशक्यमक्षमम् सर्वतोऽन्विष्टत्वात् । प्रणष्टा प्रगतं नष्टमदर्शनं यस्याः सा दृष्टेत्यर्थः । एतदपि न वक्तुं क्षमम् स्वयमदृष्टत्वात् । एवं मृतेत्यपि वक्तुं न शक्यम् तत्साधकदृढतरप्रमाणाभावात् । तस्माद्रामस्याग्रे किमपि वक्तुं न शक्यम् । दृश्यदेशे माययाऽदर्शनं विनाशः, अदृश्यदेशेऽवस्थापनं प्रणाश इति तु तीर्थः ॥ १५ ॥

रा० टी०—ननु शीघ्रं गत्वा यथावृत्तं रामसन्निधावुच्यतामित्यत आह—विनष्टेति । विनष्टा अत्रैव क्वचिद्गोपितात्वेन अदृष्टा प्रणष्टा वा इतोऽन्यत्र विद्यमानात्वेन अदृष्टा वा मृता लोकान्तरं प्राप्ता वा प्रियभार्यस्य रामस्याग्रे निवेदयितुं कथयितुं न क्षमम्, त्रयाणामप्यनिश्चितत्वात् किंचिद्वक्तुं न शक्यते इत्यर्थः । सामान्ये नपुंसकम् ॥ १७ ॥

गो० टी०—ननु किं चिन्तया गत्वा यथावृत्तं निवेद्यतामित्याशङ्क्य तदनुचितमित्याह—विनष्टेति । विनष्टा भूगृहादौ स्थापनेनादर्शनं गता "णश, अदर्शने" इति धातोर्निष्ठा । प्रणष्टा समुद्रपतनादिना त्यक्तजीविता "उपसर्गादसमासेऽपि णोपदेशस्य" इति णत्वम् । मृता रामविरहदुःखासहिष्णुतया स्वयं मृता ॥ १७ ॥

१६ ] ति० टी०—तदेव स्पष्टयति—निवेद्यमाने इति । न दृष्टेति निवेद्यमाने दोषो वक्ष्यमाणरामप्राणत्यागरूपः । अनिवेदने स्वामिवञ्चनारूपो दोषः । तस्मान्निवेदनानिवेदनरूपमुभयमपि विषमं दुरवधेयं प्रतिभाति ॥ १६ ॥

रा० टी०—निवेद्यमाने इति । निवेद्यमाने अन्यतमं कथ्यमाने दोषो मिथ्यासंसर्गित्वं स्यात् अनिवेदनेऽपि दोषः मूर्खत्वादिः स्यात् अतः विषममशक्यत्वमित्यर्थः, निवेदनानिवेदनयोरिति शेषः, मे प्रतिभाति अतो मया कथं कर्तव्यम्॥१८॥



१ श्लोकद्वयमेतदाधिकं गो. पाठे । २ नूनमिति गो. पाठः । ३ सीतेति गो. पाठः । ४ सुता सीतेति गो. पाठः ।

अस्मिन्नेवंगते कार्ये प्राप्तकालं क्षमं च किम् । भवेदिति मतिं भूयो हनुमान्प्रविचारयन् ॥ १७ ॥
यदि सीतामदृष्ट्वाऽहं[१] वानरेन्द्रपुरीमितः । गमिष्यामि ततः को मे पुरुषार्थो भविष्यति ॥ १८ ॥
ममेदं लङ्घनं व्यर्थं सागरस्य भविष्यति । प्रवेशश्चैव लङ्काया राक्षसानां च दर्शनम् ॥ १९ ॥
किं वा वक्ष्यति सुग्रीवो हरयो वापि संगताः[२] । किष्किन्धामनुसंप्राप्तं[३] तौ वा दशरथात्मजौ ॥ २० ॥
गत्वा तु यदि काकुत्स्थं वक्ष्यामि परुषं[४] वचः । न दृष्टेति मया सीता ततस्त्यक्ष्यति जीवितम् ॥ २१ ॥
परुषं दारुणं तीक्ष्णं क्रूरमिन्द्रियतापनम् । सीतानिमित्तं दुर्वाक्यं श्रुत्वा स न भविष्यति ॥ २२ ॥
तं तु कृच्छ्रगतं दृष्ट्वा पञ्चत्वगतमानसम् । भृशानुरक्तमेधावी[५] न भविष्यति लक्ष्मणः ॥ २३ ॥
विनष्टौ भ्रातरौ श्रुत्वा भरतोऽपि मरिष्यति । भरतं च मृतं दृष्ट्वा शत्रुघ्नो न भविष्यति ॥ २४ ॥
पुत्रान्मृतान्समीक्ष्याथ न भविष्यन्ति मातरः । कौसल्या च सुमित्रा च कैकेयी च न संशयः ॥ २५ ॥
कृतज्ञः सत्यसंधश्च सुग्रीवः प्लवगाधिपः । रामं तथागतं दृष्ट्वा ततस्त्यक्ष्यति जीवितम् ॥ २६ ॥
दुर्मना व्यथिता दीना निरानन्दा तपस्विनी । पीडिता भर्तृशोकेन रुमा त्यक्ष्यति जीवितम् ॥ २७ ॥

---

गो० टी०—निर्वेद्यमान इति । निर्वेद्यमाने वक्ष्यमाणो दोषः स्यात् । दोषः स्यादनिर्वेदने यथावृत्तानिवेदने स्वामिवञ्चनदोषः स्यात् । विषमं परस्परविरुद्धम् ॥ १८ ॥

१७ ] ति० टी०—एतदनन्तरं कविवाक्यम्—अस्मिन्निति । कार्ये एवंगते सति दुर्निरूपे सतीत्यर्थः । प्राप्तकालं कालोचितं किं क्षमं किं वक्तुं युक्तं भवेदिति भूयो मतिं तद्विषयं पक्षं विचारयन्नभूदिति शेषः ॥ १७ ॥

रा० टी०—अस्मिन्निति । कार्ये कर्तव्ये एवंगते अशक्यत्वं प्राप्ते सति किमपि क्षमसुचितकृत्यं प्राप्तकालं भवेदिति निश्चयं प्रविचारयन् कुर्वन्नास्तेति शेषः ॥ १९ ॥

गो० टी०—अस्मिन्निति । हनुमान् अस्मिन्कार्ये एवं गते एवं विषमत्वं प्राप्ते सति किं प्राप्तकालं कालोचितम् क्षमं समर्थं च भवेदिति मतं पक्षम् भूयः प्रविचारयत् ॥१९॥२०॥

१८–१९ ] ति० टी०—विचारमेव प्रपञ्चयति—यदीति । को भविष्यति न कोऽपीत्यर्थः ॥ १८ ॥ १९ ॥

रा० टी०—निश्चयस्यासत्त्वे दोषमाह—यदीति । यदि सीतामदृष्ट्वा वानरेन्द्रपुरीं गमिष्यामि ततो मे पुरुषार्थः को भविष्यति न कोऽपीत्यर्थः ॥ २० ॥

रा० टी०—ममेति । लङ्घनादि व्यर्थं भविष्यति ॥ २१ ॥

गो० टी०—पुरुषार्थाभावमाह—ममेदमिति ॥ २१॥२२ ॥

२० ] ति० टी०—वक्ष्यति असाध्वेव वक्ष्यतीत्यर्थः ॥२०॥

रा० टी०—किमिति । सुग्रीवप्रभृतिः किं वक्ष्यति धिक् त्वामिति कथयिष्यतीत्यर्थः ॥ २२ ॥

२१ ] ति० टी०—न दृष्टेत्यप्रियं यदि वक्ष्यामि । ततस्तच्छ्रवणानन्तरम् ॥ २१ ॥

रा० टी०—सीतावृत्तान्ताप्राप्तौ सर्वेषां विध्वंसो भवितेति बोधयन्नाह—गत्वेति । काकुत्स्थं रामं गत्वा प्राप्य सीता न दृष्टेति परुषं यदि वक्ष्यामि ततः कथनात् जीवितं त्यक्ष्यति॥२३॥

गो० टी०—निर्वेद्यमाने दोषः स्यादित्येतदुपपादयति—गत्वेत्यादिना । अप्रियमिति छेदः ॥ २३ ॥

२२–२५ ] ति० टी०—परुषं कर्णकठोरम्, अत एव दारुणं भयंकरम् तीक्ष्णमसह्यम् क्रूरमुग्रम् इन्द्रियाणां तापनं संतापकम् सीतानिमित्तं सीताविषयम् स रामः ॥ २२–२५ ॥

रा० टी०—परुषमिति । परुषं रूक्षम् अत एव दारुणं हृदयविदारकम् अत एव इन्द्रियतापनम् अत एव तीक्ष्णं सोढुमशक्यम् अत एव क्रूरं सीतानिमित्तं सीतादर्शनाभावबोधकमित्यर्थः, दुर्वाक्यं स रामः श्रुत्वा न भविष्यति इहलोके न स्थास्यति ॥ २४ ॥

गो० टी०—परुषमिति । परुषं श्रवणकटुकम् दारुणं भयंकरम् क्रूरम् उग्रम् तीक्ष्णम् असह्यम् इन्द्रियतापनम् इन्द्रियक्षोभकम् सीतानिमित्तं सीताविषयम् ॥ २४ ॥

रा० टी०—तमिति । कृच्छ्रगतं कष्टं प्राप्तम् अत एव पञ्चत्वे मरणसदृशे गतं मानसं यस्य तं रामं दृष्ट्वा भृशानुरक्तः तद्विषयकात्यनुरागवान् लक्ष्मणः न भविष्यति ॥ २५ ॥

रा० टी०—विनष्टाविति । भ्रातरौ विनष्टौ श्रुत्वा भरतोऽपि मरिष्यति लोकान्तरं गमिष्यति ॥ २६ ॥

रा० टी०—पुत्रानिति । कौशल्याप्रभृतयः मातरो न भविष्यन्ति ॥ २७ ॥

गो० टी०—तं त्विति । पञ्चत्वगतमानसं मरणे कृतनिश्चयम् ॥ २५–३२ ॥

२६–२७ ] ति० टी०—ततो दिविस्थरामदर्शनात्॥२६॥२७॥

रा० टी०—कृतज्ञ इति । तथागतं रामं दृष्ट्वा सुग्रीवो जीवितं त्यक्ष्यति ॥ २८ ॥

रा० टी०—दुर्मना इति । भर्तृशोकेन पीडिता रुमा जीवितं त्यक्ष्यति ॥ २९ ॥

---



१ मामिति गो.पाठः। २ वा समागता इति गो. पाठः। ३ समन्विति गो.पाठः। ४ परमप्रियमिति गो. पाठः। ५ भृशानुरक्तो मेधावीति गो.रा.पाठः।

वालिजेन तु दुःखेन पीडिता शोककर्शिता । पञ्चत्वमागता राज्ञी ताराऽपि न भविष्यति ॥ २८ ॥
मातापित्रोर्विनाशेन सुग्रीवव्यसनेन च । कुमारोऽप्यङ्गदस्तस्माद्विजहिष्यति जीवितम् ॥ २९ ॥
भर्तृजेन तु दुःखेन अभिभूता वनौकसः । शिरांस्यभिहनिष्यन्ति तलैर्मुष्टिभिरेव च ॥ ३० ॥
सान्त्वेनानुप्रदानेन मानेन च यशस्विना । लालिताः कपिनाथेन प्राणांस्त्यक्ष्यन्ति वानराः ॥३१॥
न वनेषु न शैलेषु न निरोधेषु वा पुनः । क्रीडामनुभविष्यन्ति समेत्य कपिकुञ्जराः ॥ ३२ ॥
सपुत्रदाराः सामात्या भर्तृव्यसनपीडिताः । शैलाग्रेभ्यः पतिष्यन्ति समेषु विषमेषु च ॥ ३३ ॥
विषमुद्बन्धनं वापि प्रवेशं ज्वलनस्य वा । उपवासमथो शस्त्रं प्रचरिष्यन्ति वानराः ॥ ३४ ॥
घोरमारोदनं मन्ये गते मयि भविष्यति । इक्ष्वाकुकुलनाशश्च नाशश्चैव वनौकसाम् ॥ ३५ ॥
सोऽहं नैव गमिष्यामि किष्किन्धां नगरीमितः । नहि शक्ष्याम्यहं द्रष्टुं सुग्रीवं मैथिलीं विना ॥ ३६ ॥
मय्यगच्छति चेहस्थे धर्मात्मानौ महारथौ । आशया तौ धरिष्येते वानराश्च तरस्विनः ॥ ३७ ॥
हस्तादानो मुखादानो नियतो वृक्षमूलिकः । वानप्रस्थो भविष्यामि अदृष्ट्वा जनकात्मजाम् ॥ ३८ ॥

---

२८ ] ति० टी०-वालिजेन वालिमरणजेन । पञ्चत्वमागता पञ्चत्वं प्राप्तुं निश्चयवती ॥ २८ ॥

रा० टी०-वालिजेनेति । वालिजेन वालिवधजनितेन दुःखेन पीडिता अत एव पञ्चत्वम् आगता मरणे कृतनिश्चया तारापि न भविष्यति ॥ ३० ॥

२९-३० [ ति० टी०-तस्मात्तदनन्तरम् ॥ २९ ॥ ३० ॥

रा० टी०-मातेति । तस्मात् तदनन्तरम् अङ्गदोऽपि जीवितं विजहिष्यति विहास्यति ॥ ३१ ॥

रा० टी०-भर्तृजेनेति । भर्तृजेन स्वस्वामिविघातजनितेन दुःखेन अभिभूताः वनौकसः तलैः पाण्यन्तर्भागैर्मुष्टिभिश्च शिरांसि अभिहनिष्यन्ति ॥ ३२ ॥

३१ ] ति० टी०-यशस्विना कपिनाथेन सान्त्वादिभिर्लालिताः प्राणांस्त्यक्ष्यन्ति ॥ ३१ ॥

रा० टी०-सान्त्वेनेति । कपिनाथेन सुग्रीवेण सान्त्वादिना करणेन लालिताः वानराः प्राणांस्त्यक्ष्यन्ति अत एव कपिकुञ्जराः समेत्य एकीभूय क्रीडां नाऽनुभविष्यन्ति प्राप्स्यन्ति । श्लोकद्वयमेकान्वयि ॥ ३३ ॥ ३४ ॥

गो० टी०-सान्त्वेनेति । मानेन प्रत्युत्थानादिना ॥३३॥

३२ ] ति० टी०-निरोधेषु गुहादिसंवृतदेशेषु ॥ ३२ ॥

गो० टी०-न वनेष्विति । निरोधेषु गृहादिसंवृतप्रदेशेषु ॥ ३४ ॥ ३५ ॥

३३ ] ति० टी०-सपुत्रदारा इत्यादेः कपिकुञ्जरा इति विशेष्यम् ॥ ३३ ॥

रा० टी०-मरणप्रकारमाह-सेति । भर्तृव्यसनपीडिताः वानराः शैलाग्रेभ्यः पतिष्यन्ति विषं वा प्रचरिष्यन्ति भक्षयिष्यन्ति उद्बन्धनादि वा प्रचरिष्यन्ति करिष्यन्ति शस्त्रं वा प्रचरिष्यन्ति स्वस्वशरीरे प्रवेशयिष्यन्ति । श्लोकद्वयमेकान्वयि ३५॥३६

३४-३६ ] ति० टी०-शस्त्रं शस्त्रघातं प्रचरिष्यन्ति करिष्यन्ति ॥ ३४-३६ ॥

गो० टी०-विषमिति । प्रचरिष्यन्ति करिष्यन्तीत्यर्थः । शस्त्रं शस्त्रपतनम् ॥ ३६ ॥

रा० टी०-उपसंहरन्नाह—घोरमिति । मयि गते सति आरोदनादि भविष्यति इत्यहं मन्ये ॥ ३७ ॥

रा० टी०-स इति । मैथिलीं मैथिलीवृत्तान्तलाभं विना सुग्रीवं द्रष्टुं नैव शक्ष्यामि अत एव इतः लङ्कायाः किष्किन्धां नैव गमिष्यामि ॥ ३८ ॥

गो० टी०-घोरमिति । आरोदनम् आसमन्ताद्रोदनम् ॥ ३७-३९ ॥

३७ ] ति० टी०-अगच्छति गमनरहिते । आशया सीतावृत्तान्तश्रवणप्रत्याशया धरिष्येते प्राणानिति शेषः ॥ ३७ ॥

रा० टी०-लङ्कायामेव स्थितौ गुणोऽप्यस्तीति आह—मयीति । इहस्थे मयि अगच्छति सति धर्मात्मानौ रामलक्ष्मणौ आशया धरिष्येते प्राणानिति शेषः, अत एव वानराः सुग्रीवाङ्गदप्रभृतयश्च धरिष्यन्ते ॥ ३९ ॥

३८ ] ति० टी०-हस्तादानो हस्तपतितफलादिग्राहकः, तद्भोजीति यावत् एवं मुखादानो मुखपतितभोजी नियतो नियतेन्द्रियः वृक्षमूलिको वृक्षमूलनिवासी ॥ ३८ ॥

रा० टी०-स्वस्थितिप्रकारमाह-हस्तेति । हस्तादानः हस्तप्राप्तफलादिग्रहीता मुखादानः मुखपतितफलादिग्राहको वा वृक्षमूलिकः वृक्षमूलनिवसनशीलः नियतः यतचित्तः वानप्रस्थः अहं भविष्यामि ॥ ४० ॥

गो० टी०-हस्तेति । हस्तादानः हस्तपतितभोजी । मुखादानः मुखपतितभोजी वृक्षमूलिकः वृक्षमूलवासी ॥ ४० ॥

---

१ कस्माद्धारयिष्यतीति गो. पाठः । २ त्यक्ष्यन्तीति गो. पाठः । ३ राजेनेति गो. पाठः । ४ समेत्येति रा. पाठः । ५ मनस्विन इति गो. पाठः । ६ ह्यदृष्ट्वेति गो. पाठः ।

सागरानूपजे देशे बहुमूलफलोदके । [1]चितिं कृत्वा प्रवेक्ष्यामि समिद्धमरणीसुतम् ॥ ३९ ॥
उपविष्टस्य वा सम्यग्लिङ्गिनं साधयिष्यतः । शरीरं भक्षयिष्यन्ति वायसाः श्वापदानि च ॥ ४० ॥
इदमप्यृषिभिर्दृष्टं निर्याणमिति मे मतिः । सम्यगापः प्रवेक्ष्यामि न चेत्पश्यामि जानकीम् ॥ ४१ ॥
सुजातमूला सुभगा कीर्तिमाला यशस्विनी । प्रभग्ना चिररात्राय मम सीतामपश्यतः ॥ ४२ ॥
तापसो वा भविष्यामि नियतो वृक्षमूलिकः । नेतः प्रतिगमिष्यामि तामदृष्ट्वाऽसितेक्षणाम् ॥ ४३ ॥
यदि तु प्रतिगच्छामि सीतामनधिगम्य ताम् । अङ्गदः सहितः सर्वैर्वानरैर्न भविष्यति ॥ ४४ ॥
विनाशे बहवो दोषा जीवन्प्राप्नोति भद्रकम् । तस्मात्प्राणान्धरिष्यामि ध्रुवो जीवति संगमः ॥ ४५ ॥

३९ ] ति० टी०—अरणीसुतमग्निम् ॥ ३९ ॥

रा० टी०—सागरेति । बहुमूलफलोदके बहुमूलादिविशिष्टे सागरानूपजे सागरजलसमीपजे देशे चितिं कृत्वा समिद्धं प्रज्वलितम् अरणीसुतम् अरणीनिष्पन्नवह्निं प्रवेक्ष्यामि ॥४१॥

गो० टी०—सागरानूपज इति । बहुमूलफलोदक इति स्वरूपकथनम् अरणीसुतम् अरण्युत्पन्नम् ॥ ४१ ॥

४० ] ति० टी०—उपविष्टस्य प्रायमुपविष्टस्य । लिङ्गिनं प्राणलिङ्गिनं लिङ्गशरीरवन्तं वात्मानं साधयिष्यतः शरीरेण वियोजयिष्यतः । 'लिङ्गिनीम्' इति पाठे प्राणलिङ्गिनीं चितिम् । चैतन्यमित्यर्थः ॥ ४० ॥

रा० टी०—उपेति । लिङ्गिनम् ऊर्ध्वगतिसाधकचिह्नं सम्यक् साधयिष्यतः अत एव उपविष्टस्य चितां प्रविष्टस्य मम शरीरं वायसाः श्वापदानि च भक्षयिष्यन्ति ॥ ४२ ॥

गो० टी०—उपविष्टस्येति । उपविष्टस्य प्रायोपविष्टस्य । लिङ्गिनीं लिङ्गं संन्यासः अनशनं तद्वती लिङ्गिनी तां साधयिष्यतः । लिङ्गिनमिति क्वचित्पाठः । तत्र लिङ्गं शरीरं तद्वान् लिङ्गी आत्मा तं साधयिष्यतः शरीरादात्मानं मोचयिष्यत इत्यर्थः । श्वापदानि श्वापदाः व्याघ्रादयः ॥ ४२ ॥

४१] ति० टी०—इदं वक्ष्यमाणम् । आपः अप इत्यर्थः॥४१॥

रा० टी०—इदमिति । जानकीं न पश्यामि चेत् आपः अपः प्रवेक्ष्यामि । तत्र हेतुः इदं जलप्रवेशेन मयि निर्याणम् ऋषिभिर्दृष्टम् उत्तमत्वेन निर्दिष्टम् ॥ ४३ ॥

गो० टी०—न चैवमात्मत्यागे दोष इत्याह—इदमिति । निर्याणं मारणम् आपः अपः ॥ ४३ ॥

४२ ] ति० टी०—सीतामपश्यतो मम यशस्विनी यशःसंपादिका । मृतस्य ख्यातिर्यशः सुजातमूला सुजातकारणवती कीर्तिरूपा माला । जीवतः सा कीर्तिः चिररात्रायेत्यव्ययम् चिरायेत्यर्थः । चिराय भग्ना आत्यन्तिकलयं गतेत्यर्थः । तीर्थस्तु—'चिररात्रीयं मम' इति पाठं प्रकल्प्य सीतान्वेषणोपयुक्तत्वेन शोभनमूला सीतान्वेषणसौकर्यापादकचन्द्रिकया सुभगा सीतान्वेषणसहकारिणीति सर्वैः क्रियमाणा कीर्तिरेव माला यस्याः सेयं चिररात्री चिरकालविशिष्टा दीर्घा रात्रिः स्वरूप लङ्काप्रवेशरात्रिः प्रभग्ना निष्फला जातेत्यर्थः । अनेन रामकार्यसहकारिणी स्वेच्छया रात्रिरप्यात्मानं वर्धितवतीति सूच्यत इत्याह ॥ ४२ ॥

रा० टी०—सुजातेति । चिररात्राय बहुकालं सीताम् अपश्यतो मम सुजातमूला सुजातं रामसुग्रीवसंबन्धहेतुकवार्ताहरत्वेन निष्पन्नं मूलं यस्याः सा सुभगा शोभनैश्वर्यदात्री यशस्विनी मुद्रिकादानोपलक्षितरामप्रीतिपात्रत्वहेतुकातियशोविशिष्टा कीर्तिमाला प्रभग्ना अतः तापसो विचारपरो भविष्यामि तां सीतामदृष्ट्वा इतो न प्रतिगमिष्यामि । श्लोकद्वयमेकान्वयि ॥ ४४ ॥ ४५ ॥

गो० टी०—सुजातेति । सुजातमूला आदौ लङ्काधिदेवताजयेन शोभनप्रारम्भा सुभगा चन्द्रोदयेन रम्या कीर्तिमाला मम कीर्तिमयमाला यशस्विनी हनुमतो लङ्काप्रवेशरात्रिरिति लोके विख्याता । चिररात्री जागरणेन दीर्घभूता रात्रिः प्रभग्ना समाप्ता एवं कल्याणीयं रात्रिः सीतामपश्यतो मे व्यर्थैव जातेत्यर्थः । "कृदिकारादक्तिनः" इति दीर्घः ॥ ४४ ॥

४३] ति० टी०—तापसो जटाकाषायादिचिह्नो यतिः॥४३॥

गो० टी०—आत्मत्यागापेक्षया तापसभाव एव ज्यायानित्याह—तापस इति । वाशब्दोऽवधारणे 'वा स्याद्विकल्पोपमयोरेवार्थे च समुच्चये' इति विश्वः ॥ ४५ ॥

४४ ] ति० टी०—अदृष्ट्वा गमने निश्चितमासन्नं दोषमाह—यदि त्विति । न भविष्यति न जीविष्यति ॥ ४४ ॥

रा० टी०—यदीति । अङ्गदो न भविष्यति इह लोके न स्थास्यति ॥ ४६ ॥

गो० टी०—मा भूत्सुग्रीवसमीपगमनम् अङ्गदादिभिः संयुज्यतामित्याशङ्क्याह—यदीत इति ॥ ४६ ॥

४५ ] ति० टी०—एवमगमने निश्चिते मरणजीवितयोः किं श्रेयस्तत्राह—विनाश इति । दोषा बहवः प्रागुक्ताः । चिरं मदगमने सीताविनाशनिश्चयेन रामादयो न स्युरेव, आत्मघातादयश्च । जीवंस्तु ममात्मा भद्रकं प्राप्नोति । वक्ष्यमाणनानाविधोपायाश्रयणेन, तस्मात्प्राणान्धरिष्यामि, यतो मयि जीवति सति संगमः सुखसंगमो रामादीनां ध्रुवः संभावित इत्यर्थः ।

१ चितामिति गो. पाठः । २ लिङ्गिनीमिति गो. पाठः । ३ रात्रीयमिति गो. पाठः । ४ इत इति गो. पाठः । ५ जीवितसंगम इति गो.पाठः ।

एवं बहुविधं दुःखं मनसा धारयन्बहु । नाध्यगच्छत्तदा पारं शोकस्य कपिकुञ्जरः ॥ ४६ ॥
ततो विक्रममासाद्य धैर्यवान्कपिकुञ्जरः । रावणं वा वधिष्यामि दशग्रीवं महाबलम् ॥
काममस्तु हृता सीता प्रत्याचीर्णं भविष्यति ॥ ४७ ॥
अथवैनं समुत्क्षिप्य उपर्युपरि सागरम् । रामायोपहरिष्यामि पशुं पशुपतेरिव ॥ ४८ ॥
इति [3]चिन्तासमापन्नः सीतामनधिगम्य ताम् । ध्यानशोकपरीतात्मा चिन्तयामास वानरः ॥ ४९ ॥
यावत्सीतां न पश्यामि रामपत्नीं यशस्विनीम् । तावदेतां पुरीं लङ्कां विचिनोमि पुनः पुनः ॥ ५० ॥
संपातिवचनाच्चापि रामं यद्यानयाम्यहम् । अपश्यन्राघवो भार्यां निर्दहेत्सर्ववानरान् ॥ ५१ ॥
इहैव नियताहारो वत्स्यामि नियतेन्द्रियः । न मत्कृते विनश्येयुः सर्वे ते नरवानराः ॥ ५२ ॥

---

काव्यलिङ्गमत्रालंकारः । तीर्थस्तु—'अत्र जीवितसंगमः' इति पाठं कल्पयामास ॥ ४६ ॥

रा० टी०—चिन्तान्तरमाह—विनाश इति । विनाशे मद्विध्वंसे बहवो दोषाः उभयकुलविध्वंसो भविष्यतीत्यर्थः तस्मात्प्राणान् धरिष्यामि । ननु तव प्राणधारणेऽपि जानकीवृत्तान्तालाभे वानरैः सुग्रीवसमीपगमने तत्प्राणविघातः गमनाभावे वृत्तान्तलाभानापत्त्या उभयकुलविनाशो भविष्यत्येवेति किं तव प्राणधारणेनेत्यत आह—जीवति सति । संगमः सुखप्राप्तिर्ध्रुवो निश्चितः अतः जीवन्ममात्मा भद्रकं कल्याणं प्राप्नोति प्राप्स्यति ॥ ४७ ॥

गो० टी०—विनाश इति । बहवो दोषाः पूर्वोक्ताः सर्वविनाशादयः । संगमः श्रेयःसंगमः ॥ ४७ ॥ ४८ ॥

४६] ति० टी०—इतः परं कविवाक्यम्—एवमित्यादि ॥ ४६

रा० टी०—एवमिति । एवम् अनेन प्रकारेण बहुविधं दुःखं मनसा बहु धारयन् विचारयन् शोकस्य पारं नाध्यगच्छत् ॥ ४८ ॥

४७ ] ति० टी०—कपिकुञ्जर इत्यस्य इति चिन्तयामासेति शेषः । ध्रुवो जीवति संगम इत्युक्तेराशयं हनूमानाह—रावणं वेति । ननु रावणवधेन किं साधितं स्यात्तत्राह—प्रतीति । प्रत्याचीर्णं वैरनिर्यातनं कृतं भविष्यतीत्यर्थः एवं कृत्वा गमने सर्वेषां सुखमित्याशयः ॥ ४७ ॥

रा० टी०—तत इति । ततः शोककाले धैर्यवान् कपिकुञ्जरः विक्रमं युद्धोत्साहम् आसाद्य प्राप्य वा अथवा रावणं वधिष्यामि । ननु रावणवधेऽपि सीताप्राप्त्यभावे तव किं सेत्स्यतीत्यत आह—सीता हृताऽस्तु प्रत्याचीर्णं वैरनिर्यातनं तु कामं भविष्यति इति चिन्तयामासेति शेषः । सार्धश्लोक एकान्वयी ॥ ४९ ॥ ५० ॥

गो० टी०—रावणमिति । प्रत्याचीर्णं प्रत्याचरितम् । प्रतिकृतमिति यावत् ॥ ४९ ॥

४८ ] ति० टी०—ननु मया हत इतीदं वचोऽविश्वसनीयं स्यात्सीतालाभेन रामदुःखानिवृत्तिश्चेत्यतः पक्षान्तरम्—अथवेति । एवं सति तल्लाभोऽपि संभाव्यत इत्याशयः ॥ ४८ ॥

रा० टी०—चिन्तान्तरमाह—अथवेति । अथवा एनं रावणं सागरमुपर्युपरि समुत्क्षिप्य पशुपतेः पशुपतये पशुमिव रामाय उपहरिष्यामि ॥ ५१ ॥

गो० टी०—अथ वेति । पशुं पशुपतेरिवेति पशुपतेः अग्नेः पशुम् अजमिव । "इमं पशुं पशुपते ते अद्य बध्नाम्यग्ने" इति श्रुतेः । अनेन सुप्रापत्वमुक्तम् ॥ ५० ॥

४९-५०] ति० टी०—रावणस्य बद्ध्वा नयनेऽपि सीतां राक्षसा हन्युरिति तदलाभ एवेत्यतः शोकपरीतः पक्षान्तरं चिन्तयामास—यावत्सीतामिति । वर्तमानसमीपे लट् ॥४९॥५०॥

रा० टी०—इतीति । सीताम् अनधिगम्य अप्राप्य इति उक्ताकारां चिन्तां समापन्नः अत एव ध्यानशोकपरीतात्मा चिन्ताजनितशोकविशिष्टमनाः वानरश्चिन्तयामास ॥ ५२ ॥

गो० टी०—इतीति । प्रथमं चिन्ता विचारः ततो ध्यानं ज्ञातव्यविषयनिरन्तरप्रत्ययः ततश्चिन्तेति दुरन्तचिन्तोच्यते ॥ ५१ ॥

रा० टी०—एतच्चिन्ताकारमाह—यावदिति । यावत् रामपत्नीं न पश्यामि तावत् लङ्कां पुनः पुनर्विचिनोमि ॥५३॥

गो० टी०—चिन्ताप्रकारमाह—यावदिति ॥ ५२ ॥

५१ ] ति० टी०—नन्वत्रावस्थितिनिश्चये पुनः पुनरन्वेषणं सफलं स्यादत आह—संपातिवचनादिति । तद्वचनविश्वासादेवेत्यर्थः । तत्तु तत्पक्षप्ररोहान्निश्चितं प्रमाणम् । ननु तद्वचनविश्वासादेव रामं प्रति सीतात्रास्तीत्युक्त्वा शीघ्रं स एवात्रानेयः, किमनेन कालविलम्बेनेत्यत्राह—रामं यदीति । रावणे हतेऽपि मय्येवान्विष्यमाणा न दृश्येत रामेणापि तददर्शने रामः सर्ववानरनाशं करिष्यतीति भावः ॥ ५१ ॥

रा० टी०—ननु संपातिवचनं प्रमाणीकृत्य राममिहानय किं कालविलम्बकारकान्वेषणेनेत्यत आह—संपातीति । संपातिवचनादेव यदि रामम् आनयामि तर्हि भार्याम् अपश्यन् केनचित्कारणेनानवलोकयन् राघवः सर्ववानरान् निर्दहेत्॥५४॥

गो० टी०—यदि पूर्वमेव संपातिवचनप्रामाण्येन रामोऽत्रानीयेत तदा महान् प्रमादः स्यादित्याह—संपातीति॥५३-५६॥

५२ ] ति० टी०—तस्मादिहैव नियताहारो वत्स्यामि । विनश्येयुः सीतामदृष्ट्वा मद्गमनानन्तरमिति भावः ॥ ५२ ॥

---



१ मुहुरिति गो. पाठः । २ अर्धमेतत् गो. नास्ति । ३ चिन्तां समेति गो. रा. पाठः ।

अशोकवनिका चापि महतीयं महाद्रुमा । इमामधिगमिष्यामि नहीयं विचिता मया ॥ ५३ ॥
[1]वसून्रुद्रांस्तथादित्यानश्विनौ मरुतोऽपि च । नमस्कृत्वा गमिष्यामि रक्षसां शोकवर्धनः ॥ ५४ ॥
जित्वा तु राक्षसान्देवीमिक्ष्वाकुकुलनन्दिनीम् । संप्रदास्यामि रामाय [4]सिद्धीमिव तपस्विने ॥ ५५ ॥
स मुहूर्तमिव ध्यात्वा चिन्ताविग्रथितेन्द्रियः । उदतिष्ठन्महाबाहुर्हनूमान्मारुतात्मजः ॥ ५६ ॥
नमोऽस्तु रामाय सलक्ष्मणाय देव्यै च तस्यै जनकात्मजायै ।
नमोऽस्तु रुद्रेन्द्रयमानिलेभ्यो नमोऽस्तु [6]चन्द्रार्कमरुद्गणेभ्यः ॥ ५७ ॥
स तेभ्यस्तु नमस्कृत्वा सुग्रीवाय च मारुतिः । दिशः सर्वाः समालोक्य सोऽशोकवनिकां प्रति ॥ ५८ ॥
स गत्वा मनसा पूर्वमशोकवनिकां शुभाम् । उत्तरं चिन्तयामास वानरो मारुतात्मजः ॥ ५९ ॥
ध्रुवं तु रक्षोबहुला भविष्यति वनाकुला । अशोकवनिका पुण्या सर्वसंस्कारसंस्कृता ॥ ६० ॥
रक्षिणश्चात्र विहिता नूनं रक्षन्ति पादपान् । भगवानपि [9]विश्वात्मा नातिक्षोभं प्रवायति ॥ ६१ ॥

---

रा० टी०—ननु अन्वेषणेऽपि यदि सीताया अलाभः तर्हि किं करिष्यसीत्यत आह—इहेति । इहैव वत्स्यामि तत्र हेतुः मत्कृते सीतावृत्तान्तलाभाभावसूचकमद्वचनश्रवणनिमित्तं नरवानराः न विनश्येयुः ॥ ५५ ॥

५३ ] ति० टी०—एवं चिन्ताकुलोऽनन्विष्टं देशं दृष्ट्वा संपातिवचनात्तत्र सीतास्थितिं निश्चिन्वान आह—अशोकेति ॥५३॥

रा० टी०—अशोकेति । इयम् अशोकवनिका महती अतः मम मया न विचिता अतः इमाम् । अधिगमिष्यामि विचेष्यामि ॥ ५६ ॥

५४ ] ति० टी०—तत्राप्यप्राप्तिशङ्कया तद्दर्शनप्रतिबन्धकदुरितक्षयाय देवानुकूल्यं संपादयति—वसूनिति । चाद्रामादीन् ५४

रा० टी०—वसूनिति । वस्वादीनि नमस्कृत्वा रक्षसां शोकवर्धनोऽहं गमिष्यामि ॥ ५७ ॥

५५ ] ति० टी०—तपस्विने सिद्धीमिव तपःफलमिव तपःप्रसन्ना देवतेति शेषः ॥ ५५ ॥

रा० टी०—जित्वेति । राक्षसान् जित्वा तपस्विने सिद्धीः तपःफलानीव देवीं सीतां रामाय संप्रदास्यामि ॥ ५८ ॥

गो० टी०—जित्वा त्विति । सिद्धिं तपःफलम् ॥५७॥५८॥

५६ ] ति० टी०—चिन्तया विग्रथितानि संबद्धानि व्याकुलानीन्द्रियाणि यस्य सः ॥ ५६ ॥

रा० टी०—स इति । चिन्तया विग्रथितानि व्याप्तानि इन्द्रियाणि यस्य स हनूमान् मुहूर्तं ध्यात्वा आत्मानुसंधानं कृत्वेव उदतिष्ठत् ॥ ५९ ॥

५७ ] ति० टी०—प्रतिज्ञातं नमस्कारमनुतिष्ठति—नमोऽस्तु रामायेति । अनेन रामस्य भगवदवतारत्वं सूचितम् । रुद्रादिनमस्कारेण विराजो भगवतो नतिः ॥ ५७ ॥

रा० टी०—तात्कालिकं हनुमत्कृतमङ्गलमाह—नम इति । रामादिभ्यः नमोऽस्तु इत्युवाचेति शेषः ॥ ६० ॥

गो० टी०—सर्वान् देवान्नमस्यन्ति रामस्यार्थे यशस्विन इत्युक्तरीत्या अभिमतलाभत्वरया सर्वान्नमस्करोति—नमोऽस्त्विति ॥ ५९ ॥

५८ ] ति० टी०—स्वामित्वात्स्वांशत्वाच्च सुग्रीवनतिः । अशोकवनिकां गतः मनसेति शेषः 'अशोकवनिकां प्रति' इति पाठे गत इत्यध्याहारः ॥ ५८ ॥

रा० टी०—स इति । सः मारुतसदृशः स हनुमान् तेभ्यः पूर्वोक्तेभ्यो नमस्कृत्वा सुग्रीवाय नमस्कृत्वा सर्वा दिशः समालोक्य अशोकवनिकां गतः 'सो वायुः परदेशदूरगमनम्' इत्यभियुक्तोक्तिः ॥ ६१ ॥

गो० टी०—स तेभ्यस्त्वित्यादिश्लोकद्वयमेकान्वयम् । नमस्कृत्यालोकनरूपक्रियाभेदात्तच्छब्दद्वयम् । नमस्कृत्य अशोकवनिकां प्रति उद्दिश्य सर्वा दिशः समालोक्य अशोकवनिकां परिच्छेत्तुं तस्याः सर्वा दिशो दृष्ट्वा तां स मनसा गत्वा उत्तरं चिन्तयामासेति योजना। अशोकशब्दः संक्षेपे व्याख्यातः॥६०॥६१॥

५९ ] ति० टी०—उत्तरं गमनोत्तरकर्तव्यकृत्यम् ॥ ५९ ॥

रा० टी०—स इति । हनूमान् पूर्वं मनसा अशोकवनिकां गत्वा उत्तरं चिन्तयामास ॥ ६२ ॥

६० ] ति० टी०—चिन्ताहेतुं दर्शयति—ध्रुवमिति । वनाकुला काननावृता संस्काराः खननसेकादिरूपवृक्षसंस्काराः अत्र ध्रुवं रक्षोबहुलेत्युत्प्रेक्षया चन्द्रास्तः सूचितः अन्यथा तत्प्रकाशेन निश्चय एव स्यात् ॥ ६० ॥

रा० टी०—चिन्ताकारमाह—ध्रुवमिति । सर्वसंस्कारसंस्कृता अशोकवनिका रक्षोबहुला बहुराक्षसविशिष्टा ध्रुवं भविष्यति ॥ ६३ ॥

गो० टी०—ध्रुवमिति । रक्षोबहुला रक्षकराक्षसबहुला वनाकुला जलावृता द्रुमषण्डमण्डिता वा सर्वसंस्कारैः कर्षणतृणनिरसनादिभिः संस्कृता कृतातिशयाधाना अशोकवनिका ध्रुवं चिन्त्या भविष्यति अवश्यमन्वेषणीया भवेदित्यर्थः ॥६२॥

६१ ] ति० टी०—अत्राशोकवनिकायां विहिता नियुक्ताः । विश्वात्मा वायुः ॥ ६१ ॥

---

१ चेयमिति गो. पाठः । २ वसुरुद्रानिति गो. पाठः । ३ सर्वानिति गो. पाठः । ४ यथा सिद्धिमिति गो. पाठः । ५ तेजा इति गो. पाठः । ६ चन्द्राकैति गो. पाठः । ७ ह्यशोकेति गो. पाठः । ८ चिन्त्येति गो. पाठः । ९ सर्वात्मेति गो. पाठः ।

संक्षिप्तोऽयं मयात्मा च रामार्थे रावणस्य च । सिद्धिं दिशन्तु मे सर्वे देवाः सर्षिगणास्त्विह ॥ ६२ ॥
ब्रह्मा स्वयंभूर्भगवान्देवाश्चैव तपस्विनः । सिद्धिमग्निश्च वायुश्च पुरुहूतश्च वज्रभृत् ॥ ६३ ॥
वरुणः पाशहस्तश्च सोमादित्यौ तथैव च । अश्विनौ च महात्मानौ मरुतः सर्व एव च ॥ ६४ ॥
सिद्धिं सर्वाणि भूतानि भूतानां चैव यः प्रभुः । दास्यन्ति मम ये चान्येऽप्यदृष्टाः पथि गोचराः ॥ ६५ ॥

तदुन्नसं पाण्डुरदन्तमव्रणं शुचिस्मितं पद्मपलाशलोचनम् ।
द्रक्ष्ये तदार्यावदनं कदा न्वहं प्रसन्नताराधिपतुल्यवर्चसम् ॥ ६६ ॥
क्षुद्रेण हीनेन नृशंसमूर्तिना सुदारुणालंकृतवेषधारिणा ।
बलाभिभूता ह्यबला तपस्विनी कथं नु मे दृष्टिपथेऽद्य सा भवेत् ॥ ६७ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये सुन्दरकाण्डे त्रयोदशः सर्गः ॥ १३ ॥

---

रा० टी०–रक्षिण इति । विहिताः नियुक्ताः रक्षिणः पादपान् ध्रुवं रक्षन्ति अतः विश्वात्मा वायुरपि अतिक्षोभं यथा भवति तथा न प्रवाति ॥ ६४ ॥

गो० टी०–रक्षिण इति । अत्र अशोकवनिकायाम् । विहिताः नियुक्ताः । सर्वात्मा सर्वमाप्नोतीति सर्वात्मा वायुः । सोऽपि नातिक्षोभं प्रवाति अतिकम्पनपूर्वकं नात्र सञ्चरतीत्यर्थः ॥ ६३ ॥

६२ ] ति० टी०–मयात्मा शरीरमित्यर्थः । रावणस्य अर्थे इत्यत्रकर्षः रावणकर्तृकदर्शनपरिहारायेत्यर्थः ॥ ६२ ॥

रा० टी०–समिति । रामार्थे रावणस्य वनिकायामयं मयात्मा देहः संक्षिप्तः प्रवेशितः मे सिद्धिं तु सर्षिगणा देवा दिशन्तु किंच संक्षिप्तशब्दस्य लघ्वीकृतत इत्यर्थः रावणस्य समासघटकीभूतार्थेऽन्वयः सविशेषणानामित्यस्य तु न विषयः अर्थस्य विशेष्यत्वात् रावणसंबद्धार्थशब्दस्य विनाशपरत्वं वनिकानिरीक्षणार्थमित्यध्याहारो वा ॥ ६९ ॥

गो० टी०–एवंभूतप्रदेशे भवतः कथं गमनमित्याशङ्क्याह–संक्षिप्त इति । मया अयमात्मा देहः रामार्थे रामप्रयोजनसिद्ध्यर्थम् रावणस्य चार्थे रावणादृश्यत्वार्थं च संक्षिप्तः अल्पीकृतः । एवं मया कार्यानुकूलो यत्नः कृतः कार्यसिद्धिं तु देवा विधास्यन्तीत्याह–सिद्धिमिति । संविधास्यन्ति ददत्वित्यर्थः ॥ ६४ ॥

६३–६४ ] ति० टी०–पुनः सर्वात्मना कार्यसिद्धये स्मरति–ब्रह्मेत्यादि । देवा भगवद्वयवदेवाः । तानेव दर्शयति–अग्निश्चेत्यादि । सिद्धिं दिशन्त्वित्यन्वयः ॥ ६३ ॥ ६४ ॥

रा० टी०–ब्रह्मेति । ब्रह्मादयो मम सिद्धिं दास्यन्ति ये पथि गोचरा मार्गरक्षका अदृष्टा इदानीं मया न स्मृताः तेऽपि सिद्धिं दास्यन्ति । श्लोकत्रयमेकान्वयि ॥ ६६–६८ ॥

गो० टी०–ब्रह्मेत्यादि । शर्वः रुद्रः ॥ ६९ ॥ ६६ ॥

६५ ] ति० टी०–भूतानां प्रभुः प्रजापतिः । दास्यन्ति तेषामप्यस्यार्थस्येष्टत्वादिति भावः । पूर्वं प्रार्थना, इदानीं तु तन्निश्चयः । पथि गोचरा अदृष्टा अपि पथि मार्गे गोचरत्वेन सिद्धिदत्वेन शास्त्रेऽदृष्टा अनुक्ताः, अपिना दृष्टाश्च ये तेऽपि सिद्धिं दास्यन्ति ॥ ६५ ॥

गो० टी०–उक्तमर्थं पुनः संग्रहेणाह–सिद्धिं सर्वाणि भूतानीति । भूतानां प्रभुः उक्तब्रह्मरुद्राद्यधिपतिः परिशेषाद्विष्णुरित्यवगम्यते । पन्थाः गोचरः येषां ते पथिगोचराः मार्गवर्तिनः ॥ ६७ ॥

६६ ] ति० टी०–उच्छ्रिता नासा यस्मिंस्तत्पाण्डुरम् । वियोगवशात् अव्रणमनवद्यम् ॥ ६६ ॥

रा० टी०–तदिति । उन्नसमुन्नतनासं पाण्डुरा दन्ता यस्मिन् अव्रणं विस्फोटकादिहेतुकव्रणरहितं तत् रामसुखात् श्रुतम् आर्यावदनम् सीतामुखं कदा द्रक्ष्ये ॥ ६९ ॥

गो० टी०–तदिति । तत्तस्मात्कारणात् । उन्नता नासिका यस्य तदुन्नसम् । "उपसर्गाच" इति समासान्तोच्प्रत्ययः नसादेशश्च । अव्रणम् अनवद्यम् । तत् अभिज्ञातत्वेन रामेण निवेदितम् ॥ ६८ ॥

६७ ] ति० टी०–सुदारुणोऽप्यलंकृतवेषधारी विश्वसनीयवेषधारी तेन ॥ ६७ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये सुन्दरकाण्डे त्रयोदशः सर्गः ॥ १३ ॥

रा० टी०–क्षुद्रेणेति । अलंकृतवेषधारिणा स्वकल्पितवेषविशिष्टेन रावणेन बलाभिभूता हठात् हृता सा सीता मे दृष्टिपथे कथं भवेत् ॥ ७० ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ सुन्दरकाण्डे त्रयोदशः सर्गः ॥ १३ ॥

गो० टी०–क्षुद्रेणेति । सुदारुणालंकृतवेषधारिणा सुदारुणत्वेऽप्यापातप्रसन्नवेषधारिणा ॥ ६९ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने त्रयोदशः सर्गः ॥ १३ ॥

---

१ दिशन्तु मे इति गो. पाठः । २ शर्व इति गो. पाठः । ३ ह्यदृष्टा इति गो. पाठः । ४ दर्शनमिति गो. पाठः । ५ पापेनेति गो. पाठः । ६ कर्मणेति गो. पाठः ।

## चतुर्दशः सर्गः ।

अशोकवनिकाप्राकारमवप्लुत्य प्राकारस्थ एव वनरामणीयकं पश्यन्वनं प्रविश्य वृक्षाद्वृक्षान्तरेष्ववप्लुत्य शाखाधूननेन पुष्पपर्णादीनि शातयन्सीतां विचिन्वानो हनुमान्मध्येवनं काञ्चनवेदिकामध्यवर्तिकाञ्चनवृक्षपरिवृतं कंचिच्छिंशुपावृक्षं ददर्श । तदुपान्ताद्वहन्तीं सरितं दृष्ट्वा संध्योपास्त्याद्यर्थमत्र सीतागमनं भवेदिति संभावयञ्छिंशुपामधिरुह्य पर्णनिबिडविटपेषु निलीयावस्थितोऽभूत् ।

स मुहूर्तमिव ध्यात्वा मनसा चाधिगम्य ताम् । अवप्लुतो महातेजाः प्राकारं तस्य वेश्मनः ॥ १ ॥
स तु संहृष्टसर्वाङ्गः प्राकारस्थो महाकपिः । पुष्पिताग्रान्वसन्तादौ ददर्श विविधान्द्रुमान् ॥ २ ॥
सालानशोकान्भव्यांश्च चम्पकांश्च सुपुष्पितान् । उद्दालकान्नागवृक्षांश्चूतान्कपिमुखानपि ॥ ३ ॥
तथाम्रवणसंपन्नांल्लताशतसमन्वितान् । ज्यामुक्त इव नाराचः पुप्लुवे वृक्षवाटिकाम् ॥ ४ ॥
स प्रविश्य विचित्रां तां विहगैरभिनादिताम् । राजतैः काञ्चनैश्चैव पादपैः सर्वतो वृताम् ॥ ५ ॥
विहगैर्मृगसङ्घैश्च विचित्रां चित्रकाननाम् । उदितादित्यसंकाशां ददर्श हनुमान्बली ॥ ६ ॥
वृतां नानाविधैर्वृक्षैः पुष्पोपगफलोपगैः । कोकिलैर्भृङ्गराजैश्च मत्तैर्नित्यनिषेविताम् ॥ ७ ॥
प्रहृष्टमनुजां काले मृगपक्षिमदाकुलाम् । मत्तबर्हिणसंघुष्टां नानाद्विजगणायुताम् ॥ ८ ॥

---

१ ] ति० टी०—ध्यात्वोत्प्लवनं निश्चित्य तां सीतां मनसाऽधिगम्य ध्यात्वा तस्य रावणस्य वेश्मनो वेश्मप्राकारात्प्राकारं वनप्राकारमवप्लुत उत्प्लवनेन प्राप्तः ॥ १ ॥

रा० टी०—अशोकवनिकान्वेषणमुपक्रमते—स इति । स हनूमान् मुहूर्तं ध्यात्वा वनिकागमनप्रकारं संचिन्त्य तां सीतां मनसा अधिगम्य प्राप्य तस्य रावणस्य वेश्मनः वेश्मप्राकारात् प्राकारम् अशोकवनिकाया इति शेषः, अवप्लुतः उत्प्लुत्या प्राप्तः ॥ १ ॥

गो० टी०—स मुहूर्तमित्यादि । इवशब्दो वाक्यालंकारे । प्राकारम् अशोकवनिकाप्राकारम् तस्य वेश्मनः रावणस्य गृहात् अवप्लुतः प्राप्तः ॥ १ ॥

२ ] ति० टी०—संहृष्टसर्वाङ्गः पुलकितसर्वाङ्गः । वसन्तादौ वसन्तादिसर्वर्तुषु संनिहितैः पुष्पैः पुष्पिताग्रान् ॥ २ ॥

रा० टी०—स इति । प्राकारस्थः स हनूमान् वसन्तादौ चैत्रे किंच वसन्तः आदीयते नित्यं प्रतीयते यस्यां तस्यां भूमौ पुष्पिताग्रान् द्रुमान्ददर्श ॥ २ ॥

गो० टी०—स त्विति । संहृष्टसर्वाङ्गः पुलकितसर्वाङ्गः । वसन्तादौ पौर्णमास्या मासान् संपादयेति पक्षमनुसृत्य फाल्गुनपौर्णमासीप्रपूर्वदिनत्वेन वसन्तादावित्युक्तम् । सालान् सर्जकान् भव्यान् शुभानित्यशोकविशेषणम् यद्वा भवं रुद्रमर्हन्तीति भव्यान् रुद्रप्रियपुष्पान् वृक्षविशेषान् । उद्दालकान् बहुवारकान् । नागवृक्षान् नागकेसरवृक्षान् । कपिमुखान् मर्कटकान् ॥ २–४ ॥

३ ] ति० टी०—भव्यान्न्युजफलान् । उद्दालका वृक्षविशेषाः । नागवृक्षान्नागकेसरवृक्षान् । कपिमुखान्कपिमुखाकारफलवतः । चूतविशेषणमेतत् ॥ ३ ॥

रा० टी०—द्रुमाणां नामानि निर्दिशन्नाह—सालानिति । आम्रवनसंछन्नान् आम्रवनैरावृतान् लताशतसमावृतान् अनेकलताभिः संयुक्तान् शालादीन् ददर्शेत्यनुकृष्यते । सार्धश्लोक एकान्वयी ॥ ३ ॥

४ ] ति० टी०—ज्यामुक्तः रामेणेति शेषः ॥ ४ ॥

रा० टी०—ज्येति । ज्यामुक्तः नाराच इव पुष्पवाटिकां पुप्लुवे ॥ ४ ॥

५ ] ति० टी०—विचित्रां विचित्रपर्यन्ताम् । राजतै रजतादिसंस्कृतैस्तद्वर्णैर्वा ॥ ५ ॥

६ ] ति० टी०—चित्रकाननां चित्रद्रुमखण्डाम् । उदितादित्यसंकाशाम् पुष्पैरिति शेषः ॥ ६ ॥

७ ] ति० टी०—पुष्पोपगफलोपगैः पुष्पफलयुतैः ॥ ७ ॥

८ ] ति० टी०—काले सर्वस्मिन्नपि प्रहृष्टमनुजां मुखविकासादिलिङ्गकहर्षवज्जनाम् मृगादीन्मदेनाकुलयति ताम् 'प्रहृष्टमनुजे काले' इति पदद्वये सप्तम्यन्तपाठे, तादृक्काले वसन्तप्रागभवे तत्संनिहिते काले इत्यर्थः ॥ ८ ॥

रा० टी०—स इति । स हनूमान् चित्रकाननां चित्रकाननविशिष्टां विहगादिभिर्विचित्रां तां विचित्रमध्याम् उदितादित्यसंकाशां काले सर्वसमये पुष्पाणि उपगानि संप्राप्तानि येषु फलानि उपगानि येषु पुष्पाणि उपगच्छन्ति फलान्युपगच्छन्तीति वा ते एव ते इति कर्मधारयः तैर्वृक्षैर्वृतां कोकिलादिभिर्नित्यं निषेवितां राजपुत्रीं सीतां मार्गमाणा प्रहृष्टा मनुजा जन्तवो यस्यां मृगपक्षिमदैराकुलां तां पुष्पवाटिकां प्रविश्य ददर्श समवलुलोके । श्लोकचतुष्टयमेकान्वयि ॥ ५—८ ॥

गो० टी०—स प्रविश्येत्यादि । काञ्चनैः काञ्चनमयैरिव स्थितैः । चित्रकाननां चित्रावान्तरवनाम् चम्पकवनं चूतवन-

---

१ वणसंछन्नामिति गो. वनसंछन्नानिति रा. पाठः । २ समावृतामिति गो. रा. पाठः । ३ कपिरिति गो. पाठः । ४ वृतामिति गो. रा. पाठः । ५ मनुजे इति गो. पाठः । ६ समाकुले इति गो. पाठः ।

मार्गमाणो वरारोहां राजपुत्रीमनिन्दिताम् । सुखप्रसुप्तान्विहगान्बोधयामास वानरः ॥ ९ ॥
उत्पतद्भिर्द्विजगणैः पक्षैर्वातैः समाहताः । अनेकवर्णा विविधा मुमुचुः पुष्पवृष्टयः ॥ १० ॥
पुष्पावकीर्णः शुशुभे हनूमान्मारुतात्मजः । अशोकवनिकामध्ये यथा पुष्पमयो गिरिः ॥ ११ ॥
दिशः सर्वाभिधावन्तं वृक्षखण्डगतं कपिम् । दृष्ट्वा सर्वाणि भूतानि वसन्त इति मेनिरे ॥ १२ ॥
वृक्षेभ्यः पतितैः पुष्पैरवकीर्णा पृथग्विधैः । रराज वसुधा तत्र प्रमदेव विभूषिता ॥ १३ ॥
तरस्विना ते तरवस्तरसा बहु कम्पिताः । कुसुमानि विचित्राणि ससृजुः कपिना तदा ॥ १४ ॥
निर्धूतपत्रशिखराः शीर्णपुष्पफलद्रुमाः । निक्षिप्तवस्त्राभरणा धूर्ता इव पराजिताः ॥ १५ ॥
हनूमता वेगवता कम्पितास्ते नगोत्तमाः । पुष्पपत्रफलान्याशु मुमुचुः फलशालिनः ॥ १६ ॥
विहङ्गसङ्घैर्हीनास्ते स्कन्धमात्राश्रया द्रुमाः । बभूवुरगमाः सर्वे मारुतेन विनिर्धुताः ॥ १७ ॥
विधूतकेशी युवतिर्यथा मृदितवर्णका । निपीतशुभदन्तोष्ठी नखैर्दन्तैश्च विक्षता ॥ १८ ॥
तथा लाङ्गूलहस्तैस्तु चरणाभ्यां च मर्दिता । तथैवाशोकवनिका प्रभग्नवनपादपा ॥ १९ ॥

मित्येवंविधवनवतीम् । पुष्पाण्युपगच्छन्तीति पुष्पोपगाः पुष्पसंपन्नाः तैः फलोपगैः फलसंपन्नैः । प्रहृष्टमनुजे काले वसन्ते । वसन्तस्य प्रचुरमन्मथत्वात् प्रहृष्टमनुजत्वम् ॥ ५-९ ॥

९]ति० टी०-बोधयामास शाखाचङ्क्रमणेनेति भावः॥९॥

रा० टी०-मार्गमाण इति । प्रसुप्तान् विहगान् तदुपलक्षितविहगादीन् बोधयामास ॥ ९ ॥

१०-११ ] ति० टी०-पक्षैरुत्पतद्भिरित्यन्वयः । समाहताः वृक्षा इति शेषः । पुष्पवृष्टयः पुष्पवृष्टीः ॥ १० ॥ ११ ॥

रा० टी०-उत्पतद्भिरिति । पक्षैः उत्पतद्भिः उड्डीयमानैर्द्विजगणैः पक्षिसमूहैः समाहता अनेकवर्णास्तरवः पुष्पवृष्टयः पुष्पवृष्टीर्मुमुचुः ॥ १० ॥

रा० टी०-पुष्पेति । पुष्पावकीर्णः प्रपतितपुष्पैराछन्नः हनूमान् पुष्पमयो गिरिरिव शुशुभे ॥ ११ ॥

गो० टी०-उत्पतद्भिरिति । सालाः वृक्षाः 'अनोकहः कुटः सालः' इत्यमरः । पुष्पवृष्टयः पुष्पवृष्टीः ॥ १०-१४ ॥

१२-१३ ] ति० टी०-सर्वाभिधावन्तमिति संधिरार्षः । वसन्त इति मेनिरे इति अन्यस्येह वनेऽशक्यप्रवेशत्वाद्वसन्त एव वृक्षसंचारोचितं कपिरूपमास्थाय चरतीति मेनिरे इत्यर्थः । एतेन द्रष्टॄणां तस्मिन्विमतिनिवृत्तिरीश्वरानुग्रहादिति सूचितम् ॥ १२ ॥ १३ ॥

रा० टी०-दिश इति । सर्वा दिशः अभिधावन्तम् । अत एव वृक्षखण्डगतं वृक्षसमूहेषु प्राप्तं कपिं दृष्ट्वा सर्वाणि भूतानि रक्षांसि वसन्तः कपिरूपेण समागतऋतुराजोऽयमिति मेनिरे ॥ १२ ॥

रा० टी०-वृक्षेभ्य इति । पृथग्विधैरनेकप्रकारैः वृक्षेभ्यः पतितैः पुष्पैरवकीर्णा वसुधा भूषिता प्रमदा इव रराज ॥१३॥

१४ ] ति० टी०-बहुप्रकारं कम्पिताः ॥ १४ ॥

रा० टी०-तरस्विनेति । तरस्विना हनूमता तरसा वेगेन बहुकम्पितास्तरवो विचित्राणि कुसुमानि ससृजुः ॥१४॥

१५-१६ ] ति० टी०-निर्धूतपत्राणि शिखराण्यग्राणि च येषां ते । धूर्ता अक्षधूर्ताः ॥ १५ ॥ १६ ॥

रा० टी०-निर्धूतेति । निर्धूतानि पत्रशिखराणि मुख्यपत्राणि येषाम् अत एव शीर्णाः पुष्पफलद्रुमाः पुष्पफलपल्लवा येषां ते तरवः पराजिताः अक्षे पराभूताः अत एव निक्षिप्तवस्त्राभरणाः धूर्ता इव आसन् इति शेषः ॥ १५ ॥

रा० टी०-हनूमतेति । हनुमता कम्पिता नगोत्तमा उत्तमवृक्षाः पुष्पादीनि मुमुचुः ॥ १६ ॥

गो० टी०-निर्धूतेति । धूर्ताः अक्षधूर्ताः ॥ १५ ॥ १६ ॥

१७ ] ति० टी०-स्कन्धमात्रस्याश्रयाः न तु पुष्पादीनाम्, अत एवागमा असेव्याः । मारुतेन तत्पुत्रेण हनूमता विनिर्धुता इति ह्रस्व आर्षं इति कतकस्तद्वृथा ह्रस्वस्यापि धुनः सत्त्वात् ॥ १७ ॥

रा० टी०-विहङ्गेति । मारुतेन हनुमता विनिर्धुताः विनिर्धूताः अत एव विहङ्गसङ्घैर्हीनाः अत एव स्कन्धमात्राश्रयाः अत एव अगमाः गन्तुमयोग्याः बभूवुः ॥ १७ ॥

गो० टी०-विहङ्गेति । स्कन्धमात्राश्रयाः पुष्पादीनामनाश्रया इत्यर्थः । अत एव अगमाः अगम्याः असेव्या इत्यर्थः । निर्धूताः कम्पिताः ॥ १७ ॥

१८ ] ति० टी०-वर्णको विलेपनम् । निपीतः शुभदन्तयुक्त ओष्ठो यस्याः सा ॥ १८ ॥

१९] ति०टी०-लाङ्गूलहस्तैरित्यत्रैकत्वाभाव आर्षः॥१९॥

रा० टी०-विधूतेति । विधूताः प्रकम्पिताः केशाः यस्याः निपीतौ शुभदन्तौ ओष्ठौ च यस्याः नखैर्दन्तैश्च विक्षता मृदितवर्णका विगताङ्गरागा युवतिर्यथा तथा लाङ्गूलहस्तैः चरणाभ्यां च मर्दिता तथा तेनैव हेतुना भग्नपादपा अशोकवनिका अभवदिति शेषः । श्लोकद्वयमेकान्वयि ॥ १८ ॥ १९ ॥

१ साला इति गो. पाठः । २ ऽभिप्रकम्पिता इति गो. पाठः । ३ पर्णैति गो. पाठः । ४ निर्धूतकेशीति गो. पाठः । ५ निष्पीतेति गो. पाठः । ६ चेति गो. पाठः । ७ बभूवेति गो. पाठः ।

महालतानां दामानि व्यधमत्तरसा कपिः । यथा प्रावृषि [1]वेगेन मेघजालानि मारुतः ॥ २० ॥
स तत्र मणिभूमीश्च [2]राजतीश्च मनोरमाः । तथा काञ्चनभूमीश्च [3]विचरन्ददृशे कपिः ॥ २१ ॥
वापीश्च विविधाकाराः पूर्णाः परमवारिणा । महार्हैर्मणिसोपानैरुपपन्नास्ततस्ततः ॥ २२ ॥
मुक्ताप्रवालसिकताः स्फाटिकान्तरकुट्टिमाः । काञ्चनैस्तरुभिश्चित्रैस्तीरजैरुपशोभिताः ॥ २३ ॥
[4]बुद्धपद्मोत्पलवनाश्चक्रवाको[5]पशोभिताः । नत्यूहरुतसंघुष्टा हंससारसनादिताः ॥ २४ ॥
दीर्घाभिर्द्रुमयुक्ताभिः सरिद्भिश्च समन्ततः । अमृतोपमतोयाभिः शिवाभिरुपसंस्कृताः ॥ २५ ॥
लताशतैरवतताः संतानकुसुमावृताः । नानागुल्मावृत[6]वनाः करवीरकृतान्तराः ॥ २६ ॥
ततोऽम्बुधरसंकाशं प्रवृद्धशिखरं गिरिम् । विचित्रकूटं कूटैश्च सर्वतः परिवारितम् ॥ २७ ॥
शिलागृहैरवततं नानावृ[7]क्षसमावृतम् । ददर्श कपिशार्दूलो रम्यं जगति पर्वतम् ॥ २८ ॥
ददर्श च नगात्तस्मान्नदीं निपतितां कपिः । अङ्कादिव समुत्पत्य प्रियस्य पतितां प्रियाम् ॥ २९ ॥
जलेन पतिताग्रैश्च पादपैरुपशोभिताम् । वार्यमाणामिव क्रुद्धां प्रमदां प्रियबन्धुभिः ॥ ३० ॥

गो० टी०—निर्धूतकेशीति । मृदितवर्णका मृष्टाङ्गरागाः । 'अङ्गरागः समालम्भो वर्णकश्च विलेपनम्' इत्युक्तेः । निष्पीतशुभदन्तोष्ठी निष्पीततया शुभदन्ततुल्योष्ठी । महालतानामिति । लतानां दामानि प्रतानानि ॥ १८–२० ॥

२०–२१ ] ति० टी०—दामानि जालानि ॥ २० ॥२१॥

रा० टी०—महेति । प्रावृषि मेघजालानि मारुत इव महालतानां दामानि जालानि कपिर्व्यधमत् ॥ २० ॥

रा० टी०—स इति । कपिः ददृशे ॥ २१ ॥

गो० टी०—स तत्रेत्यादि । नत्यूहाः दात्यूहाः । संतानकाः कल्पवृक्षाः तैः समावृताः । घनाः निबिडाः । नानागुल्मावृताश्च ताः घनाश्चेति समासः । करवीरकृतान्तराः करवीरैः कृतविशेषाः ॥ २१–२६ ॥

२२ ] ति० टी०—उच्यमानविशिष्टा वापीर्ददर्श । श्लोकपञ्चकमेकं वाक्यम् ॥ २२ ॥

२३ ] ति० टी०—मुक्ताप्रवालरूपा एव सिकता यासाम् । आन्तरकुट्टिमा अभ्यन्तरनिबद्धभूमियुताः ॥ २३ ॥

२४ ] ति० टी०—नत्यूहो दात्यूहः ॥ २४ ॥

२५ ] ति० टी०—द्रुमयुक्ताभिस्तीरद्रुमयुक्ताभिः । वापीनां सरिदुपस्कृतत्वं नित्यं पूर्णजलत्वाय ॥ २५ ॥

२६ ] ति० टी०—संतानः कल्पवृक्षः । गुल्मावृतवनाः । वनं जलम् । करवीरैः कृतमन्तरं गवाक्षस्थानीयं यासां ताः२६

रा० टी०—वापीरिति । विविधाकाराः अनेकविधावयवाः परमवारिणा पूर्णाः महार्हैः प्रशंसनीयैः मणिसोपानैः उपपन्नाः युक्ताः मुक्ताप्रवालान्येव सिकता यासु स्फाटिकाः स्फटिकमयाः आन्तरकुट्टिमाः अभ्यन्तरनिबद्धभूमयः यासु तरुभिरुपशोभिताः बुद्धानि विकसितानि पद्मोत्पलवनानि यासु नत्यूहानां दात्यूहानां रुतेन शब्देन संघुष्टा दीर्घाभिः विशालाभिः अमृतोपमतोयाभिः अत एव शिवाभिः सरिद्भिः उपसंस्कृताः नित्यं पूर्णत्वाय प्रापिताः लताशतैरवतताः व्याप्ताः संतानकुसुमैः कल्पवृक्षपुष्पैरावृताः नानागुल्मैरावृतं वनं जलं यासां करवीरैः कृतम् अन्तरं छिद्रं यासु ताः वापीः ददर्श ततोऽनन्तरम् अम्बुधरसंकाशं मेघसदृशं प्रवृद्धानि शिखराणि यस्य तं विचित्राणि कूटानि यस्य तं कूटैः अन्यपर्वतशृङ्गैश्च सर्वतः परिवारितं शिलागृहैः शिलामयभवनैः अवततं व्याप्तं जगति लोके रम्यं मनोहरं पर्वतं पर्वभिः अनेकग्रन्थिभिः तन्यते वर्ध्यते स तं गिरिं च ददर्श । सप्तकमेकान्वयि ॥२२–२८॥

२७ ] ति० टी०—ततो वापीदर्शनानन्तरम् ॥ २७ ॥

२८ ] ति० टी०—जगति लोके रम्यं सुन्दरवस्तुभ्योऽपि परमसुन्दरम् । तीर्थस्तु—जगतीपर्वतमित्यर्थः ह्रस्व आर्षः सूतपर्वतमिति यावदिति व्याचक्षाण उपेक्ष्य एव ॥ २८ ॥

गो० टी०—तत इत्यादि । जगति लोके रम्यम् एतत्सदृशं रम्यं किंचिन्नास्तीत्यर्थः । पर्वतं ददर्शेत्यन्वयः ॥ २७ ॥ २८ ॥

२९ ] ति० टी०—निपतितां निःसृताम् । समुत्पत्य कोपादुत्थाय पतितां भूमिशयिताम् ॥ २९ ॥

रा० टी०—ददर्शेति । प्रियस्य अङ्कात् समुत्पत्य पतितां प्रियामिव तस्मात् नगात् निपतितां नदीं ददर्श ॥ २९ ॥

गो० टी०—अथ नद्या कुपितया निर्गतया सखीसान्त्वनेन पुनरागतया साम्यं दर्शयति—ददर्श चेति । पुनरावृत्ततोयां वृक्षाग्रप्रतिहत्या पुनः पर्वताभिमुखतोयप्रवाहाम् । उपमाने उपमेये चान्वयाय ददर्शेति पदद्वयम् ॥ २९–३१ ॥

३० ] ति० टी०—जलेन पतिताग्रैः पादपैः परिणाहवशादधःप्रसृतशाखाद्वारेण जलनिपतिताग्रत्वं वृक्षाणां कूलातपातेन वा । प्रियं प्रति क्रुद्धां प्रियसमीपादन्यत्र जिगमिषुं प्रियबन्धुभिः सखीभिर्वार्यमाणां प्रमदामिव ॥ ३० ॥

१ विन्ध्यस्येति गो. पाठः । २ राक्षसीरिति गो. पाठः । ३ ददर्श विचरन्निति गो. पाठः । ४ फुल्लेति गो. पाठः । ५ उपकूजिता इति गो. पाठः । ६ घना इति गो. पाठः । ७ वृक्षैरिति गो. पाठः ।

पुनरावृत्ततोयां च ददर्श स महाकपिः । प्रसन्नामिव कान्तस्य कान्तां पुनरुपस्थिताम् ॥ ३१ ॥
तस्यादूरात्स पद्मिन्यो नानाद्विजगणायुताः । ददर्श कपिशार्दूलो हनूमान्मारुतात्मजः ॥ ३२ ॥
कृत्रिमां दीर्घिकां चापि पूर्णां शीतेन वारिणा । मणिप्रवरसोपानां मुक्तासिकतशोभिताम् ॥ ३३ ॥
विविधैर्मृगसङ्घैश्च विचित्रां चित्रकाननाम् । प्रासादैः सुमहद्भिश्च निर्मितैर्विश्वकर्मणा ॥ ३४ ॥
काननैः कृत्रिमैश्चापि सर्वतः समलंकृताम् । ये केचित्पादपास्तत्र पुष्पोपगफलोपगाः ॥ ३५ ॥
सच्छत्राः सवितर्दीकाः सर्वे सौवर्णवेदिकाः । लताप्रतानैर्बहुभिः पर्णैश्च बहुभिर्वृताम् ॥ ३६ ॥
काञ्चनीं शिंशपामेकां ददर्श स महाकपिः । वृतां हेममयीभिस्तु वेदिकाभिः समन्ततः ॥ ३७ ॥
सोऽपश्यद्भूमिभागांश्च नगप्रस्रवणानि च । सुवर्णवृक्षानपरान्ददर्श शिखिसंनिभान् ॥ ३८ ॥
तेषां द्रुमाणां प्रभया मेरोरिव महाकपिः । अमन्यत तदा वीरः काञ्चनोऽस्मीति सर्वतः ॥ ३९ ॥
तान्काञ्चनान्वृक्षगणान्मारुतेन प्रकम्पितान् । किङ्किणीशतनिर्घोषान्दृष्ट्वा विस्मयमागमत् ॥ ४० ॥

---

३१ ] ति० टी०—अत एव कान्तस्य प्रसन्नां पुनरुपस्थितां कान्तामिव, पुनरावृत्ततोयां वृक्षाग्रप्रतिघातात्परावृत्तजलां ददर्श ॥ ३१ ॥

रा० टी०—जलं इति । प्रियबन्धुभिर्वार्यमाणाम् अन्यत्र गमननिरोधाय प्रार्थ्यमानां क्रुद्धां प्रमदामिव जले निपतिताग्रैः पादपैस्तरुभिरुपशोभितां कान्तस्योपरि प्रसन्नाम् अत एव पुनरुपस्थितां प्राप्तां कान्तामिव पुनरावृत्ततोयां परावृत्तजलां तां नदीं ददर्श । श्लोकद्वयमेकान्वयि ॥ ३० ॥ ३१ ॥

३२ ] ति० टी०—तस्य पर्वतस्य । पद्मिन्यः पद्मिनीर-कृत्रिमदीर्घिकाः ॥ ३२ ॥

रा० टी०—तस्येति । तस्य पर्वतस्य अदूरात्समीपे पद्मिन्यः पद्मिनीः पद्मविशिष्टसरः ददर्श ॥ ३२ ॥

गो० टी०—तस्येति । तस्य पर्वतस्य पद्मिन्यः पद्मिनीः कृत्रिमां क्रियया निर्वृत्तां निर्मितामित्यर्थः ॥ ३२–३५ ॥

३३ ] ति० टी०—उच्यमानविशेषणां कृत्रिमां दीर्घिकामपि ददर्श । सिकतशोभितामित्यत्र ह्रस्व आर्षः ॥ ३३ ॥

रा० टी०—कृत्रिमामिति । शीतेन वारिणा पूर्णां मुक्ता एव सिकताः ताभिः शोभितां ह्रस्व आर्षः ॥ ३३ ॥

३४ ] ति० टी०—प्रासादैरित्यस्य युतामिति शेषः ॥ ३४ ॥

रा० टी०—मृगसंघैर्विचित्रां चित्राणि काननानि यस्याः तां विश्वकर्मणा निर्मितैः प्रासादैः कृत्रिमैः काननैश्च सर्वतः समलंकृतां कृत्रिमां दीर्घिकां च ददर्श । सार्धश्लोकद्वयमेकान्वयि ॥ ३४ ॥

३५ ] ति० टी०—ये केचित्तत्र वृक्षास्ते सर्वेऽपि पुष्पफलोभययुता एवेत्यर्थः ॥ ३५ ॥

रा० टी०—ये इति । तत्र दीर्घिकासमीपे ये केचित्पादपाः सन्तीति शेषः ते सर्वे पुष्पोपगफलोपगाः पुष्पादिप्राप्तिमन्तः सच्छत्राः छत्राकारस्थितिमन्तश्च सवितर्दीकाः अधोभागे राजतादिवेदिकासहिताः सौवर्णवेदिकाश्च सन्ति । सौवर्णवेदिका इत्यस्य सुवर्णदातारः कल्पवृक्षविशेषा इत्यर्थो वा । अर्धद्वयमेकान्वयि ॥ ३५ ॥

गो० टी०—ये केचिदिति । सच्छत्राः सवितानाः इत्यर्थः । सवितर्दिकाः सवेदिकाः । सौवर्णवेदिकाः वितर्दिकारोहणार्थं सुवर्णमयसोपानवेदिकायुक्ताः ॥ ३६–३९ ॥

३६ ] ति० टी०—सच्छत्राश्छत्राकारसंस्थानवन्तः । तेन शीतलच्छायत्वं सूचितम् । सवितर्दीकाः सवेदिकाः । सौवर्णवेदिकाः राजतादिमहावेदिकोपरि कृतसौवर्णवेदिका इत्यर्थः । लतेत्यर्धमुत्तरान्वयि ॥ ३६ ॥

३७–३८ ] ति० टी०—एकां मुख्यां वृक्षान्तरसंबन्धरहितां च, काञ्चनीं तद्वर्णां शिंशपाम् । 'पिच्छिला गुरुशिंशपा' इति कोशः ॥ ३७ ॥ ३८ ॥

रा० टी०—लतेति । लताप्रतानादिभिर्वृताम् एकां स्वसजातीयरहितां हेममयीभिर्वेदिकाभिर्वृतां काञ्चनीं शिंशपां वृक्षविशेषं ददर्श । सार्धश्लोक एकान्वयी ॥ ३६ ॥ ३७ ॥

रा० टी०—स इति । भूमिभागादीन् अपश्यत् शिखिसंनिभान् अग्निसदृशान् सुवर्णवृक्षान् ददर्श ॥ ३८ ॥

३९ ] ति० टी०—मेरोः प्रभया दिवाकर इव, तेषां द्रुमाणां प्रभया काञ्चनोऽस्मीत्यमन्यत । काञ्चनवर्णमात्मशरीरं वीक्षते स्मेत्यर्थः ॥ ३९ ॥

रा० टी०—तेषामिति । मेरोरिव द्रुमाणां प्रभयोपलक्षितो महाकपिः अहं काञ्चनोऽस्मीत्यमन्यत ॥ ३९ ॥

४० ] ति० टी०—तान्काञ्चनानिति । किङ्किण्यस्तेषु फलादिवत्सहजाः, अत एव विस्मयमागमत् ॥ ४० ॥

रा० टी०—तानिति । मारुतेन प्रकम्पितान् किङ्किणीशतनिर्घोषान् फलादिवत्स्वाभाविकस्वावयवीभूतानेककिङ्किणीनिःस्वनसहितान् उरुगुणान् मधुस्रवादिगुणविशिष्टान् तरुणाङ्कुरपल्लवान् तरुणाङ्कुरादिविशिष्टान् तान् तरून् दृष्ट्वा विस्मयमागमत् । सार्धश्लोक एकान्वयि ॥ ४० ॥

---

१ हनुमानिति गो. पाठः । २ नगैरिति गो. पाठः । ३ दिवाकर इति गो. पाठः । ४ वानर इति गो. पाठः । ५ तां काननैस्तरुगणैर्मारुतेन च वीजितामिति गो. पाठः । ६ निर्घोषमिति गो. पाठः ।

सुपुष्पिताग्रान्रुचिरांस्तरुणाङ्कुरपल्लवान् । तामारुह्य महावेगः शिंशपां पर्णसंवृताम् ॥ ४१ ॥
इतो द्रक्ष्यामि वैदेहीं रामदर्शनलालसाम् । इतश्चेतश्च दुःखार्तां संपतन्तीं यदृच्छया ॥ ४२ ॥
अशोकवनिका चेयं दृढं रम्या दुरात्मनः । चन्दनैश्चम्पकैश्चापि बकुलैश्च विभूषिता ॥ ४३ ॥
इयं च नलिनी रम्या द्विजसङ्घनिषेविता । इमां सा राजमहिषी नूनमेष्यति जानकी ॥ ४४ ॥
सा रामा राजमहिषी राघवस्य प्रिया सदा । वनसंचारकुशला ध्रुवमेष्यति जानकी ॥ ४५ ॥
अथवा मृगशावाक्षी वनस्यास्य विचक्षणा । वनमेष्यति साद्येह रामचिन्तानुकर्शिता ॥ ४६ ॥
रामशोकाभिसंतप्ता सा देवी वामलोचना । वनवासरता नित्यमेष्यते वनचारिणी ॥ ४७ ॥
वनेचराणां सततं नूनं स्पृहयते पुरा । रामस्य दयिता चार्या जनकस्य सुता सती ॥ ४८ ॥

गो० टी०—तानिति । काञ्चनैस्तरुगणैः उपलक्षितां तां शिंशुपाम् । किङ्किणीशतनिर्घोषाम् । किङ्किण्यः क्षुद्रघण्टिकाः तासां निर्घोषो यस्याः । यद्वा किङ्किणीभिः शतमनन्ताः निर्घोषा यस्याः सा ताम् ॥ ४० ॥

४१ ] ति० टी०—तेषां तरुधर्ममप्याह—सुपुष्पिताग्रानिति । तरुणाः कोमला अङ्कुराः पल्लवाश्च येषां तान्दृष्ट्वा विस्मयं प्राप्त इत्यन्वयः । तां यस्याः पर्यन्तवृक्षा एवंभूतास्तामारुह्य । चिन्तयामासेति शेषः ॥ ४१ ॥

रा० टी०—तामिति । तां शिंशुपामारुह्य चिन्तयामासेतिः शेषः । अर्धं पृथक् ॥ ४१ ॥

गो० टी०—स पुष्पिताग्रमित्याद्यासर्गसमाप्त्येकं वाक्यम् । इतो द्रक्ष्यामि इमामारुह्य द्रक्ष्यामि ल्यब्लोपे पञ्चमी । दुरात्मनः रावणस्य । अथवेति पक्षान्तरे । विचक्षणा तापापनोदनचतुरा । अस्य वनस्याशोकवनस्य । इह वनं नलिनीपरिसरवर्तिवनम् । रामचिन्तानुकर्शिता सती एष्यति । रामविश्लेषजनिततापापनोदनार्थमेतद्वनप्रदेशमागमिष्यतीत्यर्थः । सा आयेति पदच्छेदः । एष्यते एष्यति । वनेचराणां स्पृहयते वनेचरेभ्यः स्पृहयते । संध्याकाले मनः यस्याः सा संध्याकालमनाः सन्ध्योपासनतत्परेत्यर्थः । संध्यार्थं एष्यति प्रतिदिनमिति शेषः । पर्णघने पर्णसमूहे । महात्मा स हनुमान् पुष्पिताग्रत्वादिविशिष्टां तामारुह्य इतो द्रक्ष्यामीत्यारभ्य आगमिष्यति सावश्यमिमां शिवजलां नदीमित्यन्तेन यः प्रकार उक्तः एवमुक्तप्रकारेण मत्वा मनुजेन्द्रपत्नीं प्रतीक्षमाणः अवेक्षमाणः मार्गमाणः । सुपुष्पिते पर्णघने निलीनश्च सन् सर्वं ददर्शेत्यन्वयः ॥ ४१–९२ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने चतुर्दशः सर्गः ॥ १४ ॥

४२ ] ति० टी०—इत इति । आगतामिति शेषः । तदेव स्पष्टयति—इतश्चेतश्चेति ॥ ४२ ॥

रा० टी०—चिन्ताकारमाह—इत इति । दुःखार्ताम् अत एव इतश्चेतः इतस्ततः यदृच्छया संपतन्तीम् अत एव इहाप्यागतामिति शेषः वैदेहीं द्रक्ष्यामि ॥ ४२ ॥

४३ ] ति० टी०—रम्येयमशोकवनिका दुरात्मनो रावणस्यैव दृढं ध्रुवम् । राक्षसान्तरस्यैवंविधतदसंभवात् ॥ ४३ ॥

४४ ] ति० टी०—नलिनी चेयं रम्या सा च राजमहिषीत्वाद्रम्यप्रिया, अत एवेमां नलिनीं नूनमेष्यति ॥ ४४ ॥

रा० टी०—अशोकेति । रम्या रमणीयचन्दनादिभिर्विभूषिता यस्यामियं रम्या नलिनी सेयमशोकवनिका शोकनिवर्तिकात्वेन तदभिधा अतः इमां जानकी नूनमेष्यति एतेनैतन्नामश्रुत्या तत्र गमने ममापि शोकविध्वंसो भवितेति निश्चयवती सीतावश्यं भवेदिति सूचितम् । श्लोकद्वयमेकान्वयि ॥ ४३ ॥ ४४ ॥

४५ ] ति० टी०—अरामा रामवियुक्ता । राजमहिषीत्वादेवोद्यानवनसंचारकुशला ॥ ४५ ॥

रा० टी०—सेति । वनसंचारकुशला सा जानकी ध्रुवमेष्यति ॥ ४५ ॥

४६–४७ ] ति० टी०—अयमेवार्थ आदरेण बुद्धिस्थैर्यार्थं त्रिरावर्त्यते—अथ वेति । सर्वथेत्यर्थः । न तु पक्षान्तरमिदम् तस्यासंभवात् ॥ ४६ ॥ ४७ ॥

४८ ] ति० टी०—अशोकवनिकान्तःशिंशपाप्रदेशे सीताया आगमने हेत्वन्तरमुन्नयति—वनेचराणामिति । मृगपक्ष्यादीनामित्यर्थः ॥ ४८ ॥

रा० टी०—तदेव भङ्ग्यन्तरेणाह—अथवेति । रामचिन्तासु कर्षिता अथवा अत एव अस्य वनस्य विचक्षणा वनसंबन्ध्यन्वेषणादिकुशला सा सीता वनमेष्यति एतेन केनचिद्रूपेण कश्चिद्रामानुचरो मदन्वेषणार्थं तत्रागच्छेदिति सीतासंभावना सूचिता ॥ ४६ ॥

रा० टी०—स्वाभाविकतयाऽप्यत्रागमनं तस्याः संभवतीत्याह—रामेति । वनेचराणां पक्ष्यादीनां पुरा स्पृहयते तद्विषयकातिप्रीतिमतीत्यर्थः, अत एव वनवासरता वनवासविषयकप्रीतिमती अत एव वनचारिणी सा सीता एष्यते एष्यति । श्लोकद्वयमेकान्वयि ॥ ४७ ॥ ४८ ॥

१ स पुष्पिताग्रां रुचिरां तरुणाङ्कुरपल्लवामिति गो. पाठः । २ बाहुरिति गो. पाठः । ३ शिंशुपामिति गो. रा. पाठः । ४ संपतन्तीमिति गो. रा. पाठः । ५ सतीति गो. पाठः । ६ नूनमिति गो. पाठः । ७ सायेहेति गो. पाठः । ८ ...मुकर्शितेति गो. पाठः । ९ ...मिति गो. पाठः ।

संध्याकालमनाः श्यामा ध्रुवमेष्यति जानकी । नदीं चेमां शुभजलां संध्यार्थे वरवर्णिनी ॥ ४९ ॥
तस्याश्चाप्यनुरूपेयमशोकवनिका शुभा । शुभायाः पार्थिवेन्द्रस्य पत्नी रामस्य संमता ॥ ५० ॥
यदि जीवति सा देवी ताराधिपनिभानना । आगमिष्यति सावश्यमिमां शीतजलां नदीम् ॥ ५१ ॥
एवं तु मत्वा[1] हनुमान्महात्मा प्रतीक्षमाणो मनुजेन्द्रपत्नीम् ।
अवेक्षमाणश्च ददर्श सर्वं सुपुष्पिते पर्णघने निलीनः ॥ ५२ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये सुन्दरकाण्डे चतुर्दशः सर्गः ॥ १४ ॥

## पञ्चदशः सर्गः ।

शिंशुपाग्रेऽवस्थाय सर्वतश्चक्षुषी प्रचारयन्हनुमांश्चैत्यप्रासादगतां यथावर्णितगुणावस्थोपलक्षितां तां विलोक्य युक्तैर्बहुभिर्हेतुभिस्तस्याः सीतात्वं निर्धारयति ।

स वीक्षमाणस्तत्रस्थो मार्गमाणश्च मैथिलीम् । अवेक्षमाणश्च महीं सर्वां तामन्ववैक्षत ॥ १ ॥
संतानकलताभिश्च पादपैरुपशोभिताम् । दिव्यगन्धरसोपेतां सर्वतः समलंकृताम् ॥ २ ॥
तां स नन्दनसंकाशां मृगपक्षिभिरावृताम् । हर्म्यप्रासादसंबाधां कोकिलाकुलनिःस्वनाम् ॥ ३ ॥
काञ्चनोत्पलपद्माभिर्वापीभिरुपशोभिताम् । बह्वासनकुथोपेतां बहुभूमिगृहायुताम् ॥ ४ ॥

---

४९ ] ति० टी०—संध्या दिनरात्र्योः संधिरूपानुष्ठानकालो यस्य कर्मणस्तत्र मनो यस्याः सा, तथा संध्यार्थे संध्याकालक्रियमाणस्नानाद्यर्थे । पूर्ववदेवात्राप्युक्तस्यैवार्थस्यावृत्तिः । रात्रिशेषे हनुमतोऽस्य वचसः प्रवृत्तेः संध्याशब्देनात्र प्रातःकालो विवक्षितः । तत्र कर्तव्यस्नानादौ चास्त्येव स्त्रीणामप्यधिकार इति कथं स्त्रीणां संध्यावन्दनमिति परास्तं वेदितव्यम् किं च सम्यग्भगवद्ध्यानस्यैव संध्यापदार्थत्वेनास्त्येव तत्र स्त्रिया अधिकारः । गायत्रीमन्त्रेण तदर्थस्मरणपूर्वकध्याने तु द्विजस्यैवाधिकार इत्यन्यत् ॥ ४९ ॥

रा० टी०—आगमने हेत्वन्तरमाह—संध्येति । संध्याकालः समयो यस्य तस्मिन् स्नानजपादौ मनो यस्याः सा श्यामा नित्यं षोडशवार्षिकीत्वेन प्रतीयमाना जानकी संध्यार्थे सान्ध्यकर्मनिवृत्त्यर्थम् इमां नदीं ध्रुवमेष्यति ॥ ४९ ॥

५०–५१ ] ति० टी०—या रामस्य पत्नी, संमता च पतिव्रतेति सर्वजनस्य, तस्याः शुभाया इयं नयशोकवनिका चानुरूपा योग्या ॥ ५० ॥ ५१ ॥

रा० टी०—तस्या इति । पार्थिवेन्द्रस्य रामस्य संमता या पत्नी तस्याः एव इयमशोकवनिका अनुरूपा योग्या ॥ ५० ॥

रा० टी०—चिन्तान्तरमाह—यदीति । सा सीता यदि जीवति तर्हि साऽवश्यम् अवश्यत्वसहितम् आगमिष्यति ॥ ५१ ॥

५२ ] ति० टी०—प्रतीक्षमाणः सीताया आगमनमिति शेषः । अवेक्षमाण इतस्ततोऽवलोकयन् । पर्णघने सुपुष्पिते शिंशपावृक्षे निलीनः सन्सर्वं वनं ददर्शेत्यन्वयः ॥ ५२ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये सुन्दरकाण्डे चतुर्दशः सर्गः ॥ १४ ॥

रा० टी०—एवमिति । मनुजेन्द्रपत्नीं तदागमनं प्रतीक्षमाणः अत एव अवेक्षमाणः अन्वेषणं कुर्वन् पर्णानि घनानि यस्मिन् तस्मिन् सुपुष्पिते शिंशुपाह्वतरौ निलीनो हनुमान् सर्वं वनं ददर्श ॥ ५२ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ सुन्दरकाण्डे चतुर्दशः सर्गः ॥ १४ ॥

१ ] ति० टी०—वीक्षमाण इतस्ततोऽवलोकयन् । तत्रस्थः शिंशपास्थः । मार्गमाणो मैथिलीहेतुनाथो दृष्ट्वा महीमवेक्षमाणः सर्वां तामशोकवनिकामन्ववैक्षत ॥ १ ॥

रा० टी०—शिंशुपोपरिस्थितहनुमदन्वेषणप्रकारमाह—स इत्यादिभिः । तत्रस्थः शिंशुपाह्वतरौ स्थितः सः हनूमान् मैथिलीं मार्गमाणः अत एव अवेक्षमाणः इतस्ततोऽवलोकयन् अत एव महीम् अवेक्षमाणश्च सन् सर्वां दिशम् अन्ववैक्षत ॥ १ ॥

गो० टी०—स वीक्षमाण इत्यादि । सः तत्रस्थः शिंशुपास्थः मैथिलीं मार्गमाणः मैथिलीमार्गणाद्धेतोः "लक्षणहेत्वोः क्रियायाः" इति शानच् । वीक्षमाणः विविधं चक्षुर्विक्षिपन् महीं चावेक्षमाणः सर्वां ताम् अशोकवनिकाम् अन्ववैक्षतेत्यन्वयः ॥ १ ॥

२ ] ति० टी०—तां विशिनष्टि—संतानकेति । संतानकलताभिः सहितैः पादपैरित्यर्थः ॥ २ ॥

३ ] ति० टी०—तां स ददर्शेत्यन्वयः । नन्दनसंकाशां तद्वच्चन्दनद्राक्षाद्यनेकोपादेयवस्तुमतीम् ॥ ३ ॥

४ ] ति० टी०—बह्वासनैः कुथैरास्तरणैश्चोपेताम् । उपर्युपरि भूमियुक्ता गृहा बहुभूमिगृहाः ॥ ४ ॥

---

१ मत्वेति गो. पाठः ।

सर्वर्तुकुसुमै रम्यैः फलवद्भिश्च पादपैः । पुष्पितानामशोकानां श्रिया सूर्योदयप्रभाम् ॥ ५ ॥
प्रदीप्तामिव तत्रस्थो मारुतिः समुदैक्षत । निष्पत्रशाखां विहगैः क्रियमाणामिवासकृत् ॥ ६ ॥
विनिष्पतद्भिः शतशश्चित्रैः पुष्पावतंसकैः । संमूलपुष्परचितैरशोकैः शोकनाशनैः ॥ ७ ॥
पुष्पभारातिभारैश्च स्पृशद्भिरिव मेदिनीम् । कर्णिकारैः कुसुमितैः किंशुकैश्च सुपुष्पितैः ॥ ८ ॥
स देशः प्रभया तेषां प्रदीप्त इव सर्वतः । पुंनागाः सप्तपर्णाश्च चम्पकोद्दालकास्तथा ॥ ९ ॥
विवृद्धमूला बहवः शोभन्ते स्म सुपुष्पिताः । शातकुम्भनिभाः केचित्केचिदग्निशिखप्रभाः ॥ १० ॥
नीलाञ्जननिभाः केचित्तत्राशोकाः सहस्रशः । नन्दनं [4]विबुधोद्यानं चित्रं चैत्ररथं यथा ॥ ११ ॥
अतिवृत्तमिवाचिन्त्यं दिव्यं रम्यश्रिया युतम् । द्वितीयमिव चाकाशं पुष्पज्योतिर्गणायुतम् ॥ १२ ॥
पुष्परत्नशतैश्चित्रं पञ्चमं सागरं यथा । सर्वर्तुपुष्पैर्निचितं पादपैर्मधुगन्धिभिः ॥ १३ ॥
नानानिनादैरुद्यानं रम्यं मृगगणद्विजैः । अनेकगन्धप्रवहं पुण्यगन्धं मनो[6]हरम् ॥ १४ ॥

---

५ ] ति० टी०—सर्वर्तुषु कुसुमानि येषां तैः पादपैर्युक्ताम् । सूर्योदयप्रभामुद्यत्सूर्यसमकान्तिम् ॥ ५ ॥

६–१० ] ति० टी०—तत्रस्थः शिंशपास्थो मारुतिरशोकपुष्पैः प्रदीप्तामिवोदैक्षतेत्युत्प्रेक्षा । असकृच्छतशो विनिष्पतद्भिश्चित्रैः पुष्पाण्यवतंसवत्प्रतीयमानानि येषां तैर्विहगैर्निबिडशाखामपि निष्पत्रशाखां क्रियमाणाम् बहुपक्षिपक्षपिहितपर्णतया पत्ररहितशाखामिवेत्यर्थः । तथोच्यमानविशेषणैरशोकैः पुष्पभारेण पुष्पसमूहेन जनितातिभारैः, अत एवातिभारवशादतिप्रह्वशाखतया भूमिं स्पृशद्भिः कर्णिकारैः किंशुकैश्च युतः स देशस्तेषां प्रभया प्रदीप्त इव ॥ ६–१० ॥

रा० टी०—संतानकेति । संतानकादिभिः उपशोभिताम् अत एव नन्दनसंकाशां नन्दनवनसदृशीं वापीभिरुपशोभितां बहुभिः आसनैः कुथैः महाराजस्थितियोग्यकम्बलविशेषैरुपेतां सर्वर्तुकुसुमैः पादपैः अशोकानां श्रिया च सूर्योदयप्रभाम् असकृत् विनिष्पतद्भिर्विहगैर्निष्पत्रशाखामिव क्रियमाणां चित्रैः पुष्पावतंसकैरुपलक्षितैः समूलपुष्परचितैः समूलानि मूलसहितानि यानि पुष्पाणि तैः रचितैः पुष्पभारेण अतिपुष्पधारणेन अतिभारो येषां तैर्मेदिनीं स्पृशद्भिरिव शोकनाशनैरशोकैरशोकविशेषैः प्रदीप्तामिव अशोकवनिकां तत्रस्थः शिंशुपायां स्थितो मारुतिः समुदैक्षत । सप्तकमेकान्वयि ॥ २–८ ॥

रा० टी०—स इति । पुन्नागादयः शोभन्ते अत एव स देशः तेषां प्रभया प्रदीप्त इव । सार्धश्लोक एकान्वयी ॥ ९ ॥

रा० टी०—शातेति । केचित् शातकुम्भनिभाः सुवर्णघटसदृशाः तत्र सहस्रशः अशोकाः अशोभन्तेति शेषः । अर्धद्वयमेकान्वयि ॥ १० ॥

गो० टी०—संतानकलताभिरित्यादि । बह्वासनैः कुथैः आस्तरणैश्चोपेताम् । भूमिगृहाणि बिलगृहाणि । सर्वर्तुकुसुमैः पादपैः रम्यामित्यन्वयः । सूर्योदयप्रभाम् उद्यत्सूर्यप्रभाम् । विहगैः निष्पत्रशाखां क्रियमाणामिव स्थिताम् युगपत्पातिपक्षिपक्षविहृतपत्रतया पत्ररहितशाखामिव स्थितामित्यर्थः । पुष्पावतंसकैः चञ्चुपुटलग्नपुष्पालंकृतैरित्यर्थः । आमूलेति । आमूलं पुष्पैर्निचितैः व्याप्तैः पुन्नागादौ तथा दृष्टम् । पुष्पभारः पुष्पसमूहः स एवातिभारो येषां तैः अशोकैरित्यादावुपलक्षणे तृतीया अशोकादिभिरुपलक्षितां समुदैक्षतेति पूर्वेणान्वयः ॥ २–१० ॥

११ ] ति० टी०—नीलाञ्जननिभा इति । एवमुक्त्याऽशोकानामनेकवर्णपुष्पवत्त्वं सूचितम् । विबुधोद्यानं नन्दनम्, यथा नन्दनमाह्लादकं तद्वदाह्लादकम् चैत्ररथं कुबेरवनं यथा चित्रं तद्वच्चित्रम् ॥ ११ ॥

१२ ] ति० टी०—तदुभयमप्यतिवृत्तमिवातिक्रम्येव स्थितम् । पुष्परूपज्योतिर्गणैरायुतम् ॥ १२ ॥

१३ ] ति० टी०—पुष्परूपै रत्नशतैः ॥ १३ ॥

१४ ] ति० टी०—मृगादिभिः स्वीयैर्नानाविधैः शब्दै रम्यं कृतम् । एवंविशेषणकमुद्यानमशोकवनिकान्तर्गतं ददर्शेत्यनुकर्षः ॥ १४ ॥

रा० टी०—नन्दनमिति । विबुधोद्यानं नन्दनवनमिव नन्दनम् आनन्दकं चैत्ररथं कुबेरवनमिव चित्रं यथेत्युभयान्वयि अतिवृत्तम् उपमानीभूतवनद्वयाभ्यामधिकं द्वितीयमाकाशमिव पुष्परूपज्योतिर्गणैः आयुतं व्याप्तं पञ्चमं सागरमिव पुष्परूपानेकरत्नैश्चित्रं सर्वेषु ऋतुषु पुष्पाणि येषु तैः पादपैः निचितं व्याप्तं नानानिनदैः अनेकविधनिनादविशिष्टैः मृगगणद्विजैः रम्यं गन्धाढ्यं द्वितीयं गन्धमादनमिव अनेकगन्धप्रवहम् अत एव पुण्यगन्धैर्मनोहरम् उद्यानं शुशुभे इति शेषः । श्लोकचतुष्टयमेकान्वयि ॥ ११–१४ ॥

गो० टी०—पुनरशोकवनं विविधोपमानदर्शनेन वर्णयति—नन्दनमित्यादिना श्लोकचतुष्टयेन । उद्यानम् अशोकवनम् ।

---

१ रम्यामिति गो. पाठः । २ आमूलपुष्पनिचितैरिति गो. पाठः । ३ शिखोपमा इति गो. पाठः । ४ विविधोद्यानमिति गो. पाठः । ५ रम्यं श्रिया वृतमिति गो. पाठः । ६ रममिति गो. पाठः ।

शैलेन्द्रमिव गन्धाढ्यं द्वितीयं गन्धमादनम् । अशोकवनिकायां तु तस्यां वानरपुङ्गवः ॥ १५ ॥
स [1]ददर्शाविदूरस्थं चैत्यप्रासादमू[2]र्जितम् । मध्ये स्तम्भसहस्रेण स्थितं कैलासपाण्डुरम् ॥ १६ ॥
प्रवालकृतसोपानं तप्तकाञ्चनवेदिकम् । मुष्णन्तमिव चक्षूंषि द्योतमानमिव श्रिया ॥ १७ ॥
[3]निर्मलं प्रांशुभावत्वादुल्लिखन्तमिवाम्बरम् । ततो मलिनसंवीतां राक्षसीभिः समावृताम् ॥ १८ ॥
उपवासकृशां दीनां निःश्वसन्तीं पुनः पुनः । ददर्श शुक्लपक्षादौ चन्द्ररेखामिवामलाम् ॥ १९ ॥
[4]मन्दप्रख्यायमानेन रूपेण रुचिरप्रभाम् । पिनद्धां धूमजालेन शिखामिव विभावसोः ॥ २० ॥
पीतेनैकेन संवीतां क्लिष्टेनोत्तमवाससा । सपङ्कामनलंकारां विपद्मामिव पद्मिनीम् ॥ २१ ॥
[5]पीडितां दुःखसंतप्तां परिक्षीणां तपस्विनीम् । ग्रहेणाङ्गारकेणेव पीडितामिव रोहिणीम् ॥ २२ ॥
अश्रुपूर्णमुखीं दीनां कृशामनशनेन च । शोकध्यानपरां दीनां [7]नित्यं दुःखपरायणाम् ॥ २३ ॥
प्रियं जनमपश्यन्तीं पश्यन्तीं राक्षसीगणम् । स्वगणेन मृगीं हीनां श्वगणेनावृतामिव ॥ २४ ॥

---

अत्र ददर्शेत्यपकृष्यते । नन्दनम् इन्द्रक्रीडावनम् विविधोद्यानं विविधवृक्षषण्डम् चैत्ररथं कुबेरक्रीडावनम् नन्दनमतिवृत्तमिव अतिक्रम्य स्थितमिव । चैत्ररथं यथा चैत्ररथमिव चित्रमित्यन्वयः । आकाशसाम्ये साधारणधर्ममाह–पुष्पेति । एवं सागरौपम्ये पुष्परत्नेति ॥ ११–१४ ॥

१५ ] ति० टी०–शैलेन्द्रो हिमवान् । तस्यां पूर्ववर्णितायाम् ॥ १५ ॥

१६–१७ ] ति० टी०–चैत्यं वर्तुलाकारत्वाद्बुद्धायतनमिव प्रासादम् । स्तम्भसहस्रेणाधारभूतेन स्थितम् ॥ १६ ॥ १७ ॥

रा० टी०–अशोकेति । ऊर्जितम् अत्युच्छ्रितं स्तम्भसहस्रेण स्थितं कैलासवत्पाण्डुरं प्रवालैः कृतानि सोपानानि यस्मिन् चक्षूंषि मुष्णन्तं चोरयन्तमिव श्रिया द्योतमानं निर्मलं प्रांशुभावत्वात् अत्युन्नतत्वात् अम्बरमुल्लिखन्तमिव चैत्यप्रासादं वर्तुलाकारप्रासादविशेषम् अशोकवनिकायां ददर्श । अर्धपञ्चकमेकान्वयि ॥ १५–१७ ॥

गो० टी०–अशोकवनिकायामित्यादि । चैत्यप्रासादं चैत्यं बुद्धमन्दिरं तदाकारं प्रासादम् । प्रांशुभावत्वात् दीर्घस्वभावत्वात् ॥ १५–१७ ॥

१८–१९ ] ति० टी०–प्रांशुभावत्वादुच्चस्वभावत्वात् । ततस्तद्दर्शनानन्तरम् । मलिनवासःसंवीतत्वादिविशेषणवतीं सीतां दूरादेव तन्मूलस्थां ददर्शेत्यनुकर्षः ॥ १८ ॥ १९ ॥

रा० टी०–तत इति । ततः प्रासाददर्शनानन्तरं मलिनसंवीतां मलिनवस्त्रेणाच्छादितां राक्षसीभिः समावृतां पुनः पुनर्निःश्वसन्तीं शुक्लपक्षादौ चन्द्ररेखामिव अमलां दोषसंसर्गरहितां सीतां ददर्श । सार्धश्लोक एकान्वयी ॥ १८ ॥ १९ ॥

गो० टी०–तत इत्यादि । मलिनसंवीतां मलिनवस्त्रेणावृताम् मलिनैरङ्गैः संवीतां वा । शुक्लपक्षादावित्यनेन वर्धिष्णुत्वं द्योतितम् । मन्दं प्रख्यायमानेन इदं तदिति कथञ्चित्प्रत्यभिज्ञायमानेन रूपेणोपलक्षिताम् । पिनद्धामिति मलिनसंवीतत्वे उपमा । पिनद्धां बद्धाम् उत्तरीयराहित्यं द्योतयितुमेकेनेत्युक्तिः । सपङ्कां भूमेराविर्भवन्तीमिव स्थिताम् । अनलंकारां पङ्कं निवर्त्य अलंकुर्वतो सन्निधानादलंकाररहिताम् । विपद्मामिव पद्मिनीं रामागमनेऽप्ययमाश्रयो नोत्सादयितुमर्हतीत्येवं मन्यमानाम् । पद्मरहिताम् सरसीमिव स्थिताम् । ग्रहेण क्रूरग्रहेण । द्वितीय इवशब्दो वाक्यालंकारे । अश्रिवति । कृशां दीनामिति पुनः पुनरुक्तिः कार्श्यदैन्ययोरतिशयप्रदर्शनाय । अत्र उपवासकृशां कृशामनशनेनेत्युक्त्या पूर्वकाण्डान्ते इन्द्रदत्तपायसाशनवृत्तान्तः कल्पित इति तत्रैवोक्तम् । नीलनागाभयाऽऽकृष्टसर्पतुल्यया । नीरदापाये शरदि ॥ १८–२९ ॥

२०] ति० टी०–मन्दप्रख्यायमानेन इदमिदमितीदं तदिति वा कथंचिद्दृश्यमानेन रूपेण स्वरूपेणोपलक्षिताम् ॥ २० ॥

रा० टी०–मन्देति । मन्दं प्रख्यां दैन्यबोधनमयते प्राप्नोति तेन रूपेण रुचिरप्रभा यस्या तां धूमजालेन पिनद्धाम् आच्छादितां विभावसोरग्नेः शिखामिव ॥ २० ॥

२१ ] ति० टी०–क्लिष्टेन जीर्णेन पांसुप्रास्तरणेन वा क्लिष्टेन । सपङ्कां मलवच्छरीराम् । पद्मिनी लक्ष्मीर्लता च ॥ २१ ॥

रा० टी०–क्लिष्टेन जीर्णतया प्रतीतेन पीतेन एकेन उत्तमवाससा संवीताम् अनलङ्काराम् अलङ्कृतिरहिताम् अत एव विपद्मां पद्मरहितां पद्मिनीं सरसीमिव सपङ्कां मलिनाम् ॥ २१ ॥

२२–२३ ] ति० टी०–अङ्गारकेणेव तत्तुल्येन ग्रहेण केतुना पीडितां रोहिणीमिव ॥ २२ ॥ २३ ॥

२४ ] ति० टी०–प्रियं जनं रामलक्ष्मणसुग्रीवादिरूपं जनम् । श्वगणेन शुनां गणेन ॥ २४ ॥

रा० टी०–दुःखसन्तप्तां वियोगजनितदुःखाक्रान्तामत एव अङ्गारकेण भौमेन ग्रहेण पीडितां रोहिणीमिव पीडिताम् ॥ २२ ॥

रा० टी०–अत एव अश्रुपूर्णमुखीम् अत एव दीनां क्षीणां

---

१ ददर्श विदूरस्थमिति रा. पाठः । २ उच्छ्रितमिति गो. पाठः । ३ निर्मलमिति गो. पाठः । ४ मन्दमिति गो. पाठः । ५ व्रीडितामिति गो. पाठः । ६ म्लानामिति गो. पाठः । ७ नित्यदुःखेति रा. पाठः ।

नीलनागाभया वेण्या जघनं गतयैकया । नीलया नीरदापाये वनराज्या महीमिव ॥ २५ ॥
सुखार्हां दुःखसंतप्तां व्यसनानामकोविदाम् । तां विलोक्य विशालाक्षीमधिकं मलिनां कृशाम् ॥ २६ ॥
तर्कयामास सीतेति कारणैरुपपादिभिः । ह्रियमाणा तदा तेन रक्षसा कामरूपिणा ॥ २७ ॥
यथारूपा हि दृष्टा सा तथारूपेयमङ्गना । पूर्णचन्द्राननां सुभ्रूं चारुवृत्तपयोधराम् ॥ २८ ॥
कुर्वतीं प्रभया देवीं सर्वा वितिमिरा दिशः । तां नीलकण्ठीं बिम्बोष्ठीं सुमध्यां सुप्रतिष्ठिताम् ॥ २९ ॥
सीतां पद्मपलाशाक्षीं मन्मथस्य रतिं यथा । इष्टां सर्वस्य जगतः पूर्णचन्द्रप्रभामिव ॥ ३० ॥
भूमौ सुतनुमासीनां नियतामिव तापसीम् । निःश्वासबहुलां भीरुं भुजगेन्द्रवधूमिव ॥ ३१ ॥

तत्त्वेन प्रतीयमानाम् अत एव दीनां प्राप्तग्लानिम् अत एव अनशनेन भोजनाभावेन कृशाम् अत एव शोकध्यानपरां शोकहेतुकचिन्ताक्रान्तां प्रियं जनम् अपश्यन्तीं राक्षसीगणं पश्यन्तीम् अत एव स्वगणेन स्वकीययूथेन हीनां श्वगणेन शुनां समुदायेन च आवृताम् अत एव नित्यदुःखपरायणां मृगीमिव दीनाम् ॥ २३ ॥ २४ ॥

२५–२६ ] ति० टी०–जघनं पृष्ठभागं गतया प्राप्तयैकया हरणदिनकृतैकसंस्कारवत्या । यद्वा पुरोभागीयवेणीद्वयराहित्येन पृष्ठलम्बयैकया वेण्या नीलनागाभया नीलसर्पतुल्यया वेण्योपलक्षिताम् अनेन तत्स्पर्शेऽन्यस्य मरणमेवेति सूचितम् । मेघापाये नीलया वनराज्योपलक्षितां महीमिव स्थिताम् ॥ २५ ॥ २६ ॥

रा० टी०–नीलनागाभयाकृष्णसर्पसदृश्याजघनं पृष्ठान्तदेशं गतया प्राप्तया एकया केशविन्यासाभावेन जटीभूतया वेण्या उपलक्षितां नीरदापाये घनापगमे नीलया वनराज्या महीमिव स्थितां सीतां ददर्शेत्यनुकृष्यते । श्लोकपट्कमेकान्वयि ॥ २५ ॥

रा० टी०–सुखार्हामिति । सुखार्हां सुखयोग्यां व्यसनानां दुःखानाम् अकोविदाम् अविज्ञात्रीं दुःखसंतप्तां तां सीतां विलोक्य उपपादिभिः सीताबोधनसमर्थैः कारणैः इयं सीतेति तर्कयामास । सार्धश्लोक एकान्वयी ॥ २६ ॥

गो० टी०–तामिति । उपपादिभिः उपपादनशीलैः मन्दप्रख्यायमानेनेत्यारभ्य सीतां समीक्ष्य उपपादिभिः कारणैः सीतेति तर्कयामासेत्यन्वयः ॥ २६ ॥

२७ ] ति० टी०–उपपादिभिः सीतात्वनिश्चयोपपादनसमर्थैः । तत्कारणं प्रत्यभिज्ञानमाह—ह्रियमाणेति । यथारूपा दृष्टा यादृग्वेषवर्णादिमत्यनुभूता तथारूपेयम् । भेदे हि प्रत्यभिज्ञानमनुपपन्नमिति भावः ॥ २७ ॥

रा० टी०–तर्कणप्रकारमाह–ह्रियमाणेति । तेन रावणेन ह्रियमाणा सा सीता तदा हरणसमये यथारूपा दृष्टा तथारूपैव इयमङ्गना एतेनेयं सीतैव भवितुमर्हतीति सूचितम् ॥ २७ ॥

गो० टी०–एवं लिङ्गैः सीतेति विचार्य प्रत्यभिज्ञयाऽपि तथा तर्कयामासेत्याह–ह्रियमाणेति । इति तर्कयामासेति शेषः ॥ २७ ॥

२८ ] ति० टी०–पूर्णचन्द्राननत्वादिगुणवतीं निरीक्ष्य तस्य बुद्धिः संदिदिहे इत्यष्टात्रिंशच्छ्लोकेनान्वयः । सुभ्रूं सुभ्रुवम् ॥ २८ ॥

रा० टी०–सीतामेव वर्णयन्नाह–पूर्णेति । पूर्णचन्द्राननां पूर्णचन्द्रसदृशाननविशिष्टां चारू मनोहरौ वृत्तौ वर्तुलौ पयोधरौ यस्यास्ताम् ॥ २८ ॥

गो० टी०–पूर्णचन्द्राननामित्यारभ्य विद्यां प्रशिथिलामिवेत्यन्तमेकं वाक्यम् । सुभ्रूं सुभ्रुवम् उवङभाव आर्षः । कुर्वन्तीमिति । दश मासान् स्नानेन विना मलिनापि प्रभया दिशः वितिमिराः कुर्वन्तीमिति प्रभातिशयोक्तिः । सुप्रतिष्ठितां सुप्रतिष्ठितपादतलाम् न राजतीं न राजन्तीम् तां प्रसिद्धाम् स्मृतिं मन्वाद्युक्तिम् संदिग्धां संदिग्धार्थाम् ऋद्धिं संपदम् निपतितां क्षीणाम् विहताम् अविश्वासबहुलाम् प्रतिहताम् अलब्धकार्याम् सोपसर्गां सविघ्नाम् सकलुषां सकालुष्याम् भावप्रधानो निर्देशः अभूतेन असत्येन रामोपरोधव्यथितां रामप्राप्तिनिरोधेन व्यथिताम् । पुनः सीताशब्दो व्यवहितानुस्मरणार्थः । आम्नायानां वेदानाम् अयोगेन असंबन्धेन प्रशिथिलाम् अप्राप्तप्रतिष्ठाम् विद्यां वेदबाह्यविद्याम् । यद्वा आम्नायानाम् अभ्यासानामभावेन प्रशिथिलाम् अस्थिरपदां विद्यामिव सीतां निरीक्ष्य तस्य हनुमतो बुद्धिः संदिदिहे इत्यन्वयः । कार्श्यमालिन्यादिना तिरोहितरूपत्वादिति भावः ॥ २८–३८ ॥

२९ ] ति० टी०–सर्वा दिशो वितिमिराः कुर्वतीम् नीलकण्ठीं सौभाग्यसूचकेन्द्रनीलमणिमयकण्ठस्थभूषणप्रभया तद्वर्णकण्ठाम् सुप्रतिष्ठितां सुप्रतिष्ठितसर्वावयवसंस्थानाम् ॥ २९ ॥

रा० टी०–प्रभया स्वशरीरकान्त्या सर्वाः दिशः वितिमिराः कुर्वतीं बिम्बोष्ठीम् ॥ २९ ॥

३० ] ति० टी०–चन्द्रप्रभासादृश्यं सर्वानन्दकरत्वेन ॥ ३० ॥

रा० टी०–मन्मथस्य संबन्धिनीं रतिं यथा अतिरूपात्वेन तत्सदृशीं सर्वस्य जगतः इष्टां पूज्याम् ॥ ३० ॥

३१ ] ति० टी०–नियतां भूशयनादिरूपनियमवतीम् तापसीमिव भूमावासीनाम्, भुजगेन्द्रवधूसादृश्यं दुष्प्रधृष्यत्वेन रक्षःकुलनाशकत्वेन च ॥ ३१ ॥

१ वै इति गो. पाठः । २ केशीमिति गो. पाठः ।

शोकजालेन महता विततेन न राजतीम् । संसक्तां धूमजालेन शिखामिव विभावसोः ॥ ३२ ॥
तां स्मृतीमिव संदिग्धामृद्धिं निपतितामिव । विहतामिव च श्रद्धामाशां प्रतिहतामिव ॥ ३३ ॥
सोपसर्गां यथा सिद्धिं बुद्धिं सकलुषामिव । अभूतेनापवादेन कीर्तिं निपतितामिव ॥ ३४ ॥
रामोपरोधव्यथितां रक्षोगणनिपीडिताम् । अबलां मृगशावाक्षीं वीक्षमाणां ततस्ततः ॥ ३५ ॥
बाष्पाम्बुपरिपूर्णेन कृष्णवक्राक्षिपक्ष्मणा । वदनेनाप्रसन्नेन निःश्वसन्तीं पुनः पुनः ॥ ३६ ॥
मलपङ्कधरां दीनां मण्डनार्हाममण्डिताम् । प्रभां नक्षत्रराजस्य कालमेघैरिवावृताम् ॥ ३७ ॥
तस्य संदिदिहे बुद्धिस्तथा सीतां निरीक्ष्य च । आम्नायानामयोगेन विद्यां प्रशिथिलामिव ॥ ३८ ॥
दुःखेन बुबुधे सीतां हनुमाननलंकृताम् । संस्कारेण यथा हीनां वाचमर्थान्तरं गताम् ॥ ३९ ॥
तां समीक्ष्य विशालाक्षीं राजपुत्रीमनिन्दिताम् । तर्कयामास सीतेति कारणैरुपपादयन् ॥ ४० ॥
वैदेह्या यानि चाङ्गेषु तदा रामोऽन्वकीर्तयत् । तान्याभरणजालानि गात्रशोभीन्यलक्षयत् ॥ ४१ ॥

---

रा० टी०—नियतां यतचित्तां तापसीमिव भूमौ आसीनां भुजगेन्द्रवधूमिव भीरुम् ॥ ३१ ॥

३२ ] ति० टी०—न राजतीमराजतीम् । विभावसोः शिखामिव पातिव्रत्यतेजसा ज्वलन्तीम् ॥ ३२ ॥

रा० टी०—विततेन विस्तृतेन महता शोकजालेन न राजतीम् ईषद्दीप्ताम् अत एव धूमजालेन संसक्तां संबद्धां विभावसोः अग्नेः शिखामिव ॥ ३२ ॥

३३ ] ति० टी०—स्मृतीमिवेति दीर्घ आर्षः । संदिग्धामर्थसंदेहवतीम् ऋद्धिमैश्वर्यम् निपतिताम् अन्यायवशादिति भावः । विहताम् नास्तिकबुद्ध्येति भावः । प्रतिहताम् स्वविषयालाभादिति भावः ॥ ३३ ॥

रा० टी०—संदिग्धाम् अर्थनिश्चयविषयकसंदेहविशिष्टां स्मृतीं स्मृतिमिव संदिग्धां शरीरस्थितिविषयकसंदेहविशिष्टां निपतितां भीत्या चौरादिभिः क्वचिन्निःक्षिप्ताम् ऋद्धिं मण्यादिसमूहमिव विहतां नास्तिकबुद्ध्या अनादृतां श्रद्धामिव प्रतिहतां लाभाभावान्निवृत्ताम् आशामिव ॥ ३३ ॥

३४ ] ति० टी०—सोपसर्गां सविघ्नाम् । सकलुषां रागद्वेषादिकालुष्यवतीम् । अभूतेनापवादेन केवलमारोपितेन कलङ्केन ॥ ३४ ॥

रा० टी०—सोपसर्गां विघ्नैः संयुक्तां सिद्धिमिव सकलुषां संशयादिना विशिष्टां बुद्धिमिव अभूतेन अजातेन अपवादेन मिथ्याभूतकलङ्केनेत्यर्थः, निपतितां कीर्तिमिव ॥ ३४ ॥

३५ ] ति० टी०—रामोपरोधो रामसेवाप्रतिबन्धः ॥ ३५ ॥

३६ ] ति० टी०—कृष्णानि वक्राणि चाक्षिपक्ष्माणि यत्र तेन ३६

रा० टी०—रामोपरोधेन रामसेवानिरोधेन व्यथितां रक्षोगणनिपीडितां रक्षःसमूहवंदेशवासेन प्राप्तपीडाम् अत एव कृष्णवक्राक्षिपक्ष्मणा नेत्रेण ततस्ततो वीक्षमाणां पुनः पुनर्निःश्वसन्तीम् ॥ ३५ ॥ ३६ ॥

३७ ] ति० टी०—संस्कारस्नानराहित्यान्मलपङ्कधरत्वम् । त्वगादिमलरूपः पङ्कः । नक्षत्रराजश्चन्द्रः ॥ ३७ ॥

३८ ] ति० टी०—संदिदिहे प्रत्यभिज्ञाबाधकात्कार्श्यमालिन्यादितिरोहितरूपत्वात्संदेहः । आम्नायोऽभ्यासः ॥ ३८ ॥

रा० टी०—मलपङ्कधरां स्नानाभावादिनिष्पन्नमलरूपपङ्कयुतां मण्डनार्हां शोभायोग्याम् अमण्डितां वियोगेन शोभारहिताम् अत एव कालमेघैरावृतां नक्षत्रराजस्य चन्द्रमसः प्रभामिव आम्नायानाम् अभ्यासानाम् अयोगेन प्रशिथिलां विद्यामिव तां सीतां निरीक्ष्य तस्य हनुमतो बुद्धिः संदिदिहे । सार्धश्लोकदशकमेकान्वयि ॥ ३७ ॥ ३८ ॥

३९ ] ति० टी०—बाधकस्याकिंचित्करत्वमाह—दुःखेनेति । दुःखबोध्यत्वे हेतुः—अनलंकृतामिति । संस्कारेणेति स्नानानुलेपनादिरङ्गसंस्कारः । वाचो व्याकरणज्ञानादिजः संस्कारः । देव्या अर्थान्तरगतत्वं देशान्तरगतत्वम् । वाचस्तु विवक्षितार्थादन्यार्थबोधकत्वम् । वाचोऽर्थो यथा व्याकरणाद्यभ्यासदुःखेन व्युत्पत्तिं संपाद्य बुध्यते, तद्वत्सीतां कष्टेन बुबुधे ३९

रा० टी०—दुःखेनेति । संस्कारेण यथोचितस्नानादिरूपसंस्कृत्या हीनाम् अत एव अर्थान्तरं गतां वाचमिव अनलंकृतां सीतां दुःखेन बुबुधे ॥ ३९ ॥

गो० टी०—दुःखेनेति । संस्कारः शब्दव्युत्पत्तिः तेन हीनाम् अत एव विवक्षितादर्थान्तरं गतां विपरीतार्थामित्यर्थः। संस्कारहीनतया प्रतिपिपादयिषितार्थं वक्तुमशक्नुवतीमविवक्षितमर्थं बोधयन्तीं वाचमिव । सम्यग्व्युत्पत्त्यभावादर्थान्तरं गतां व्युत्पत्त्यनन्तरं स्वार्थं प्रतिपादयन्तीमिव स्थितामित्यर्थः ॥ ३९ ॥ ४० ॥

४० ] ति० टी०—कारणैरुपपादयन्सीतानिश्चयहेतुभिरुपपत्तिमन्तं संपादयन् ॥ ४० ॥

रा० टी०—तामिति । तां सीतां समीक्ष्य कारणैर्हेतुभिरुपपादयन् सन् इयं सीतेति तर्कयामास अनुमानेन निश्चयं चकार ॥ ४० ॥

४१ ] ति० टी०—इदानीं सीतात्वोपपादकमाह—वैदे-

---

१ हरणकर्शितामिति गो. पाठः । २ [illegible] गो. पाठः । ३ उपपादिभिरिति गो. पाठः । ४ शाखेति गो. पाठः ।

सुकृतौ कर्णवेष्टौ च श्वदंष्ट्रौ च सुसंस्थितौ । मणिविद्रुमचित्राणि हस्तेष्वाभरणानि च ॥ ४२ ॥
श्यामानि चिरयुक्तत्वात्तथा संस्थानवन्ति च । तान्येवैतानि मन्येऽहं यानि रामोऽन्वकीर्तयत् ॥ ४३ ॥
तत्र यान्यवहीनानि तान्यहं नोपलक्षये । यान्यस्या नावहीनानि तानीमानि न संशयः ॥ ४४ ॥
पीतं कनकपट्टाभं स्रस्तं तद्वसनं शुभम् । उत्तरीयं नगासक्तं तदा दृष्टं प्लवङ्गमैः ॥ ४५ ॥
भूषणानि च मुख्यानि दृष्टानि धरणीतले । अनयैवापविद्धानि स्वनवन्ति महान्ति च ॥ ४६ ॥
इदं चिरगृहीतत्वाद्वसनं क्लिष्टवत्तरम् । तथाप्यनूनं तद्वर्णं तथा श्रीमद्यथेतरत् ॥ ४७ ॥

---

ह्या इति । तदा स्वप्रस्थानसमये । 'गात्रशोभीनि' इति पाठः कतकसंमतः । येष्वङ्गेषु यान्याभरणजालान्यकीर्तयत्तान्याभरणजालानि तत्तद्गात्रशोभीन्यलक्षयदिति प्रत्यभिज्ञाप्रामाण्यं सिद्धम् । तीर्थस्तु—'शाखाशोभीनि' इति पाठं प्रकल्प्य रामविश्लेषसमये भूषणधारणस्यानुचितत्वाद्वैदेह्या भूषणानि स्वाङ्गेभ्य उन्मुच्य शाखायां न्यस्तानीति गम्यत इति व्याचख्यौ, तत्तूत्तरश्लोकयोर्हस्तेष्विति तथा श्यामानि चिरयुक्तत्वादिति पदस्वरसविरुद्धम् । किंचैवं तदङ्गे रामोक्ताभरणाभावादसीतात्वमेव स्यात् ॥ ४१ ॥

रा० टी०—तत्प्रकारमाह—वैदेह्या इति । तदा प्रस्थानसमये वैदेह्या अङ्गेषु यान्याभरणजालानि रामोऽन्वकीर्तयत् तानि गात्रशोभीनि अलक्षयत् अपश्यत् ॥ ४१ ॥

गो० टी०—वैदेह्या इति । शाखायां शोभन्त इति शाखाशोभीनि भर्तृविरहकाले भूषणधारणस्यानुचितत्वात् स्वाङ्गेभ्य उन्मुच्य शाखायां न्यस्तानीत्यर्थः । कर्णवेष्टौ कुण्डले । 'कर्णिका तालपत्रं स्यात्कुण्डलं कर्णवेष्टनम्' इति सज्जनः । श्वदंष्ट्रः त्रिकर्णकाख्यः पुष्पाकारः कर्णपार्श्वभूषणविशेषः त्रिकर्णकः श्वदंष्ट्रश्चेत्यभिधानरत्नमाला । हस्तेषु हस्तावयवेषु श्यामानि विरहतापौष्ण्यवशाच्छ्यामीभूतानि । तथा चिरयुक्तत्वात् चिरधृतत्वात् संस्थानवन्ति हस्तेषु तत्तदाभरणसंस्थानानि दृश्यन्त इत्यर्थः ॥ ४१ ॥ ४२ ॥

४२ ] ति० टी०—अथ कस्मिन्गात्रे किमाभरणं दृश्यते तत्राह—सुकृताविति । सुकृतौ निर्मितौ कर्णवेष्टौ कुण्डले । श्वदंष्ट्रौ कर्णाभरणविशेषौ त्रिकर्णकापरनामानौ । सुसंस्थितौ कर्णरूपाङ्गे सुप्रतिष्ठितौ । उपलक्षये इति शेषः । हस्तेषु हस्तावयवेषु च यानि मणिविद्रुमचित्राण्याभरणानि रामेणोक्तानि तथैव सुस्थितान्युपलक्षये ॥ ४२ ॥

रा० टी०—आभरणान्येवाह—सुकृताविति । सुकृतौ निपुणतया निर्मितौ कर्णवेष्टौ कुण्डले श्वदंष्ट्रौ शुनां दंष्ट्राकृती कर्णाभरणविशेषौ च मणिविद्रुमैश्चित्राणि चिरयुक्तत्वात् श्यामानि तथासंस्थानवन्ति रामोक्तावयवविन्यासयुक्तानि हस्तेष्वाभरणानि एतानि सर्वाणि यानि रामोऽन्वकीर्तयत् तान्येव अहं मन्ये एतेन तद्युक्तत्वात्सीतैवेयमिति सूचितम् । श्लोकद्वयमेकान्वयि ॥ ४२ ॥ ४३ ॥

४३ ] ति० टी०—चिरयुक्तत्वाच्चिरकालमसंस्कृतदेहस्थितत्वेनासंस्कृतत्वात् श्यामान्यपि श्यामवर्णान्यपि तथासंस्थानवन्ति रामोक्तसंनिवेशवन्ति । यानि रामोऽन्वकीर्तयत्तान्येवेमानीति मन्ये ॥ ४३ ॥

गो० टी०—तान्येवेत्यर्धमेकं वाक्यम् ॥ ४३ ॥

४४ ] ति० टी०—इतोऽप्येवमित्याह—तत्रेति । रामोपदिष्टेषु यान्याभरणान्यवहीनानि पतितानि । ऋष्यमूकादावित्यर्थः ॥ ४४ ॥

रा० टी०—हेत्वन्तरमाह—तत्रेति । तत्र रामाज्ञापिताभरणेषु यानि अवहीनानि ऋष्यमूकादौ पतितान्यहं नोपलक्षये यानि न अवहीनानि तानि एव इमानि संशयः अत्र संदेहो न ॥ ४४ ॥

गो० टी०—तत्रेति । तत्र ऋश्यमूके यान्यवहीनानि पतितानि तान्यहं नोपलक्षये अत्रेति शेषः । अस्याः सीतायाः सकाशाद्यानि नावहीनानि न पतितानि तानीमानि तत्तुल्यत्वात् ॥ ४४ ॥

४५ ] ति० टी०—कानि त्यक्तानीति त्वयावगतानि तत्राह—पीतमिति । कनकपट्टाभत्वेन स्वर्णतन्तुमात्रनिष्पन्नत्वं तस्य सूच्यते । नगासक्तं वृक्षासक्तम् ॥ ४५ ॥

रा० टी०—अन्तरीयवस्त्रमात्रधारणमपि हेतुरिति बोधयन्नाह—पीतमिति । कनकपट्टस्याभा दीप्तिर्यस्मिन् तत्पीतमुत्तरीयं नगासक्तं वृक्षे संसक्तं प्लवङ्गमैर्वानरैस्तदा आसज्जनसमये दृष्टम् ॥ ४५ ॥

गो० टी०—पीतमित्यादि । प्लवङ्गमैः सुग्रीवादिप्लवङ्गमैः यदुत्तरीयं दृष्टं यानि भूषणानि दृष्टानि तानि सर्वाण्यनयैव अपविद्धानि पातितानि । नगासक्तमित्यनेन पतनदशायामुत्तरीयाग्रं वृक्षे किञ्चित्सक्तमिति द्योत्यते ॥ ४५ ॥ ४६ ॥

४६ ] ति० टी०—ऋष्यमूके वस्त्रभूषणत्यागोऽप्यनयैव कृत इत्याह—अनयैवेति ॥ ४६ ॥

रा० टी०—भूषणानीति । अनयैव अपविद्धानि परिक्षिप्तानि भूषणानि दृष्टानि ॥ ४६ ॥

४७ ] ति० टी०—इदं वसनम् अन्तरीयवस्त्रमित्यर्थः । चिरधृतत्वात्क्लिष्टवत्तरं शयनादिना मृदितं तथापि तद्वर्णम् । स पीतो रागः । अन्यूनमप्रच्युतम् क्लीबत्वमार्षम् अर्धर्चादिर्वा वर्णशब्दः । तथा श्रीमच्छोभावत् । यथेतरत् अस्मद्गृहीतमुत्तरीयमित्यर्थः ॥ ४७ ॥

रा० टी०—इदमिति । यद्यपि चिरगृहीतत्वाद्धेतोरिदं

---

१ ऽपि नूनमिति गो. रा. पाठः ।

इयं कनकवर्णाङ्गी रामस्य महिषी प्रिया । प्रनष्टापि सती यस्य मनसो न प्रणश्यति ॥ ४८ ॥
इयं सा यत्कृते रामश्चतुर्भिरिह तप्यते । कारुण्येनानृशंस्येन शोकेन मदनेन च ॥ ४९ ॥
स्त्री प्रनष्टेति कारुण्यादाश्रितेत्यानृशंस्यतः । पत्नी नष्टेति शोकेन प्रियेति मदनेन च ॥ ५० ॥
तस्या देव्या यथारूपमङ्गप्रत्यङ्गसौष्ठवम् । रामस्य च यथारूपं तस्येयमसितेक्षणा ॥ ५१ ॥
अस्या देव्या मनस्तस्मिंस्तस्य चास्यां प्रतिष्ठितम् । तेनेयं स च धर्मात्मा मुहूर्तमपि जीवति ॥ ५२ ॥
दुष्करं कृतवान्रामो हीनो यदनया प्रभुः । धारयत्यात्मनो देहं न शोकेनावसीदति ॥ ५३ ॥
[ दुष्करं[3] कुरुते रामो य इमां मत्तकाशिनीम् । सीतां विना महाबाहुर्मुहूर्तमपि जीवति ॥ ]

वसनं क्लिष्टवत्तरम् अतिबाधिताभं तथापि तद्वर्णं पीतवर्णविशिष्टं तथा श्रीमत् वह्वैश्वर्यलभ्यं यथा इदम् अन्तरीयं तथा इतरत् तद्वृक्षासक्तोत्तरीयमपि ॥ ४७ ॥

गो० टी०–इदमिति । इतरत् उत्सृष्टम् । तदुत्तरीयं यथा यादृशवर्णयुक्तं यथा श्रीमत् इदम् इदानीं धार्यमाणं तद्वर्णं तथा श्रीमत् नूनमिति योजना ॥ ४७ ॥

४८ ] ति० टी०–एवं जातनिश्चय आह––इयमिति । प्रनष्टा दर्शनमप्राप्तापि यस्य रामस्य मनसस्तु न प्रणश्यति नादृष्टा भवति नित्यं संनिहिता भवतीत्यर्थः ॥ ४८ ॥

रा० टी०–इयमिति । प्रनष्टापि यस्य रामस्य मनसः सती महिषी न प्रणश्यति तस्य रामस्य सा प्रिया श्रिया इयमेव ॥ ४८ ॥

गो० टी०–इयमिति । या रामस्य प्रिया सती महिषीति कृत्वा प्रनष्टापि अस्य रामस्य मनसः सकाशात् न प्रणश्यति सदा मनसा दृष्टा भवतीत्यर्थः । सा कनकवर्णाङ्गी इयम् मया परिदृश्यमानेत्यर्थः ॥ ४८ ॥

४९ ] ति० टी०–सेयमेव । के चत्वारस्तत्राह–कारुण्येनेति ॥ ४९ ॥

रा० टी०–इयमिति । चतुर्भिः कारुण्यादिभिर्यत्कृते यदर्थं रामस्तप्यते सा इयमेव ॥ ४९ ॥

गो० टी०–इयं सेति । रामः कारुण्यादिभिश्चतुर्भिः यत्कृते परितप्यते[1] सेयम् । कारुण्यादीनां परितापहेतुत्वं विभज्य दर्शयति–स्त्रीति । आपत्काले स्त्रियो रक्षणीयाः तन्न कृतमिति कारुण्यात्परितप्यते । आनृशंस्यमक्रूरत्वम् आश्रितसंरक्षणैकस्वभावत्वमिति यावत् । तस्मात् आश्रिता न रक्षितेति परितप्यते । अर्धो वा एष आत्मनो यत्पत्नीत्युक्तरीत्या आत्मार्धभूता पत्नी नष्टेति शोकेन परितप्यते । प्रिया नष्टेति मदनेन परितप्यत[2] इति योजना ॥ ४९ ॥ ५० ॥

५० ] ति० टी०–परितापहेतुकारुण्यादि स्वयमेव दर्शयति—स्त्रीति । प्रणष्टा परेण पीडिता मया च सती सा न रक्षिता । आपदि स्त्रियो रक्ष्या इत्युक्तेस्तदकरणकृतकारुण्यात्परितापः । वनं प्रस्थितमपि मामाश्रिता सा च न रक्षितेति आनृशंस्यत आश्रितसंरक्षणस्वभावत्वेन तदकरणात्परितापः । पत्नी सर्वधर्मसाधनभूता नष्टेति धर्मनाशचिन्ताशोकेन परितापः । प्रियेति परमरूपलावण्यादिमती परमसुखसाधनभूता नष्टेति पूर्वसंभोगादिस्मरणजमदनेन सर्वसिद्धसर्वेन्द्रियपरितापः ॥ ५० ॥

रा० टी०–कारुण्यादीनि यथाविभागं हेतुत्वेन प्रकल्पयाह–स्त्रीति । स्त्री आपत्काले संरक्षणीयकान्ता प्रनष्टा इतिहेतोः कारुण्यात्, आश्रिता प्रनष्टा इत्यानृशंस्यतः क्रूरत्वापत्रादात्, पत्नी नित्यसंयोगवतीत्वेन सकलधर्महेतुभूता प्रनष्टेति शोकेन च प्रिया प्रनष्टेति मदनेन च संतप्तोऽभवदिति शेषः ॥ ५० ॥

५१ ] ति० टी०–अस्या यथा रूपादि तथा रामस्य, यथा रामस्य रूपादि तथास्या अपि, अतः सोऽस्या योग्यः, इयं च तस्य योग्येत्यर्थः अनेनोभयोरन्योन्यमानुरूप्यं दर्शितम् ॥ ५१ ॥

रा० टी०–अस्या इति । अस्याः यथा रूपादि तथा तस्य रामस्यास्तीति शेषः । यथा रामस्य रूपादि तथा अस्या अस्ति अनयोरेव परस्परं सादृश्यमस्तीत्यर्थः अत इयं रामस्यैव ॥ ५१ ॥

गो० टी०–अथानयोरन्योन्याभिरूप्यानुगुण्यमाह–अस्या इति । अस्याः सीतायाः रूपं शरीरम् अङ्गप्रत्यङ्गसौष्ठवं च यथा यथाविधम् तथाविधमेव रामस्यापि रूपम् अङ्गप्रत्यङ्गसौष्ठवं च । तथा रामस्य रूपमङ्गप्रत्यङ्गसौष्ठवं च यथा यथाविधम् तथाविधमेवास्या रूपमङ्गप्रत्यङ्गसौष्ठवं च अतः इयमसितेक्षणा तस्य योग्येति शेषः ॥ ५१ ॥

५२ ] ति० टी०–अथान्योन्यानुरागमाह–अस्या देव्या इति । येनास्याश्चित्तं रामे सक्तं तस्य चास्यां तेनेयं स च जीवति । चित्तसंनिधानेन वियोगाभावादिति भावः । मुहूर्तमपीत्यस्यान्यथेत्यादिः––न जीवेदिति च शेषः ॥ ५२ ॥

रा० टी०–अस्या इति । अस्याः मनः तस्मिन् रामे तस्य रामस्य च मनः अस्यां तेन हेतुना इयं स च जीवति मुहुर्तमपि अन्यथा न जीवेदित्यर्थः ॥ ५२ ॥

गो० टी०–तथाऽनयोरन्योन्यस्यानुरागमाह–अस्या इति । अस्या देव्या मनस्तस्मिन्रामे प्रतिष्ठितम् तेन हेतुना इयं मुहूर्तमपि जीवति । तस्य च मनोऽस्यां प्रतिष्ठितं तेन कारणेन स मुहूर्तमपि जीवति । तयोरन्योन्यमनोनिवेशनाभावे मुहूर्तजीवनमपि न घटत इति भावः ॥ ५२ ॥

५३ ] ति० टी०–दुष्करमिति । अत्र तेनेति वर्तते ।

१ याऽस्येति गो. पाठः । २ परितप्यत इति गो. पाठः । ३ श्लोकोऽयमधिकः गो. पाठे ।

एवं सीतां तथा दृष्ट्वा हृष्टः पवनसंभवः । जगाम मनसा रामं प्रशशंस च तं प्रभुम् ॥ ९४ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये सुन्दरकाण्डे पञ्चदशः सर्गः ॥ १५ ॥

## षोडशः सर्गः ।

सीतायाः शुभशीललक्षणादि प्रशंसन्हनुमान्यस्याः कृते खरविराधादयो हताः सेयमप्येतादृशीं दुरवस्थामनुभवतीति परिशोचति ।

प्रशस्य तु प्रशस्तव्यां सीतां तां हरिपुङ्गवः । गुणाभिरामं रामं च पुनश्चिन्तापरोऽभवत् ॥ १ ॥
स मुहूर्तमिव ध्यात्वा बाष्पपर्याकुलेक्षणः । सीतामाश्रित्य तेजस्वी हनूमान्विललाप ह ॥ २ ॥
मान्या गुरुविनीतस्य लक्ष्मणस्य गुरुप्रिया । यदि सीता[2] हि दुःखार्ता कालो हि दुरतिक्रमः ॥ ३ ॥

तेन चित्तसंनिधानेन । दुष्करं किं कृतवांस्तत्राह—धारयतीति । वर्तमानसामीप्ये लट् दधारेत्यर्थः ॥ ९३ ॥

रा० टी०—दुष्करमिति । अनया हीनः रामः आत्मनो देहं धारयति शोकेन च न अवसीदति सर्वविस्मारकखेदं प्राप्नोति तत् दुष्करं कृतवान् ॥ ९३ ॥

गो० टी०—माल्यवति शैले रामस्य सीताविरहक्लेशातिशयं निशाम्य हन्त वसिष्ठशिष्यः कस्याश्चित् स्त्रियाः कृते कथमेवमभूदिति विनिन्द्य परिहसितवान् स्वयं विरक्ततया संप्रत्यस्या वैलक्षण्यातिशयदर्शनेन विशेषज्ञतया एतद्विरहे रामस्य देहधारणं सर्वात्मना अशक्यमित्याह—दुष्करमिति । दुष्करं कृतवान् रामः इमां वियुज्य समाधानपरो रामः प्रकाममशक्यं कृत्यमकरोत् । हीनो यदनया प्रभुः अनया विना देहं धृत्वाऽवस्थित इति यत्तदत्यन्तमशक्यम् । प्रभुः गजाश्वादिकं शिक्षयितुं राज्यं पालयितुं च जानाति । न प्रणयधारायां प्रथमांशमपि शुक्रवान् । धारयत्यात्मनो देहम् । किमिदं याचितकं शरीरं धारयति स्वस्यैव हि देहोऽयं देहं भोगायतनं हीदं न दुःखायतनम् "दिह, उपचये" इत्यस्माद्धातोः "इगुपध—" इत्यादिना कः तेनायमर्थो लभ्यते । सीताशरीरस्य परतन्त्रतया तत्यक्तुमयुक्तं ननु स्वाधीनशरीरस्य धारणं युक्तमिति भावः । विशेषज्ञेनापि कथमिदं त्यक्तुं शक्यं तत्राह—न शोकेनावसीदति ॥ ९३ ॥

९४] ति० टी०—सीतामेवमेवंगुणां तथा मलिनवासःसंवीतत्वोपवासकृशत्वशोकध्यानपरायणत्वादिपातिव्रत्यधर्मवर्ती दृष्ट्वा हृष्टः सन्रामं सस्मार, स्मृतं च तं प्रशशंस । एवं पातिव्रत्यगुणवत्पत्नीलाभेन भाग्योत्तरो रामः । ईदृश्या वियोगेनेदृशी पीडा, ईदृशीप्राप्तय उद्यमश्चोचित एवेति । चात्सीतां च प्रशशंस । बलवता भव्येन प्रभुणा हृताऽपि यैवं पातिव्रत्यात्तदेवैव सर्वोत्तमेत्येवं प्रशशंस ॥ ९४ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये सुन्दरकाण्डे पञ्चदशः सर्गः ॥ १५ ॥

रा० टी०—एवमिति । तदा तस्मिन् काले एवं सीतां दृष्ट्वा हृष्टः पवनसंभवः रामं मनसा जगाम प्रशशंस च ॥ ९४ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ सुन्दरकाण्डे पञ्चदशः सर्गः ॥ १५ ॥

गो० टी०—उक्तमर्थं किञ्चिद्विशेषान्तरेण दर्शयति—दुष्करं कुरुत इति ॥ ९४ ॥

गो० टी०—एवमिति । एवं दृष्ट्वा मलिनसंवीतत्वोपवासकृशत्वशोकध्यानपरायणत्वादिपतिव्रताधर्मयुक्तां सीतां दृष्ट्वा हृष्टः सन् मनसा रामं जगाम सस्मार तं प्रभुं बुद्धिस्थं रामं प्रशशंस च । पुनः प्राप्त्युपयुक्तपतिव्रताधर्मनिष्ठत्वदर्शनात् भाग्योत्तरो राम इत्यस्तौषीत् । यद्वा एतादृशसौन्दर्यवतीं सीतां दृष्ट्वा एतद्विरहितस्य महान् शोकः प्राप्तः अतः युक्तमेव कृतवान् राम इत्यस्तौषीत् ॥ ९६ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने पञ्चदशः सर्गः ॥ १५ ॥

१ ] ति० टी०—सीतां प्रशस्य प्रशंसा च प्रागुक्तरूपा । चिन्तापरः सीताविषयदुःखेनेति भावः ॥ १ ॥

रा० टी०—हनुमत्कर्तृकरामप्रशंसाप्रुपक्रमते—प्रशस्येति । हरिपुङ्गवो हनूमान् सीतां प्रशस्य गुणैरभिरामं रामं संस्मृत्य चिन्तापरोऽभवत् ॥ १ ॥

गो० टी०—प्रशस्य त्वित्यादि । प्रशस्तव्यां प्रशंसितव्याम् रामं सीतां च । प्रशस्येति अस्या देव्या इत्यादिनोभयोरपि प्रशंसितत्वात् ॥ १ ॥

२ ] ति० टी०—सीतामाश्रित्य सीतामुद्दिश्य ॥ २ ॥

रा० टी०—स इति । स हनूमान् मुहूर्तं ध्यात्वा सीतां सीतादुःखमाश्रित्यावलोक्य विललाप विविधमुवाच ॥ २ ॥

गो०टी०—स इति । सीतामाश्रित्य सीतां विषयीकृत्य॥२॥

३ ] ति० टी०—गुरुभिर्विनीतस्य शिक्षितस्य लक्ष्मणस्य गुरुप्रिया गुरो रामस्य पत्नीत्वात् । तद्वदेव परमोपास्यत्वेनाभीष्टा सीताऽयोनिजा निःसीमपातिव्रत्या रामपत्न्यपि यदि दुःखार्ता दुःखपीडिता, तर्हि कालो दुरतिक्रम इति हि निश्चि-

१ तदेति गो. पाठः । २ ऽपीति गो. पाठः ।

रामस्य व्यवसायज्ञा लक्ष्मणस्य च धीमतः। नात्यर्थं क्षुभ्यते देवी गङ्गेव जलदागमे॥ ४॥
तुल्यशीलवयोवृत्तां तुल्याभिजनलक्षणाम्। राघवोऽर्हति वैदेहीं तं चेयमसितेक्षणा॥ ५॥
तां दृष्ट्वा नवहेमाभां लोककान्तामिव श्रियम्। जगाम मनसा रामं वचनं चेदमब्रवीत्॥ ६॥
अस्या हेतोर्विशालाक्ष्या हतो वाली महाबलः। रावणप्रतिमो वीर्ये कबन्धश्च निपातितः॥ ७॥

---

तमित्यर्थः। दुःखोपायघटकत्वस्य काल एव प्रसिद्धत्वादिति भावः। ननु न दुःखं सुखं वा कालमात्रजन्यम्, कर्मानुष्ठानवैफल्यापत्तेः। तत्सापेक्षकालजन्यत्वेऽपीश्वरावतारसीतारामयोः कर्माभावात्कथं दुःखमिति चेन्न। वस्तुतस्तु तयोर्दुःखाभावेऽपि लोकानुग्रहाय गृहीतमनुष्यदेहयोस्तेषां मनुष्यत्वाभावबुद्धिप्रतिबन्धाय नटवद्व्यवहारमभिनयतोः सुखदुःखादिकालिकसुखविकासाद्यभिनयेन तन्मायामोहितस्यैव देवांशस्य हनूमतोऽभिनीतकार्यदर्शनेन तत्कारणानुमानाद्दुःखार्तत्वोक्तेः सामञ्जस्यात्। यथा च परेणोद्बोधनं विना हनूमतः स्वबलपराक्रमांशे मोहः, तथानयोर्भगवत्स्वरूपत्वे इदानीं तस्य मोह इति वक्तुं शक्यत्वात् पश्चात्तु भगवदिच्छयैव तस्य तयोः स्वरूपज्ञानेऽपि न किंचिद्वचम्॥ ३॥

रा० टी०—तदाकारमाह—मान्येति। गुरुभिर्विनीतस्य शिक्षितस्य लक्ष्मणस्य गुरुप्रिया गुरोः रामस्य प्रिया सीता यदि दुःखार्ता तर्हि कालः परमात्मसंकेतः दुरतिक्रमः अतिक्रमितुमशक्यः॥ ३॥

गो० टी०—मान्येति। गुरुविनीतस्य गुरुभिः शिक्षितस्य। गुरुप्रिया रामप्रिया। कालो हि दुरतिक्रमः कालो दुरतिक्रम एवेत्ययमर्थः सिद्धो भवतीत्यर्थः। हिशब्दोऽवधारणे अव्ययानामनेकार्थत्वात्। जगद्रक्षकरामलक्ष्मणगुप्तायाः सीताया अपि यदीदृशं दुःखं प्राप्तं तदा कालो दुरतिक्रम एवेति भावः॥ ३॥

४] ति० टी०—नन्वेवंविधदुःखातिशये जीवनहानिरेव स्यादत आह—रामस्येति। सलक्ष्मणो राम एवंविधे दुर्गे स्थितामपि मां दिव्यास्त्रैः समुद्रमपि येनकेनाप्युपायेनोल्लङ्घ्यागत्यात्रायास्यतीति तस्य व्यवसायज्ञा पराक्रमज्ञा सती नात्यन्तं क्षुभ्यते नैराश्यमूलकं प्राणत्यागसंपादकं क्षोभं न प्राप्नोतीत्यर्थः। जलदागमे वर्षाकालेऽपि गङ्गा यथेतरक्षुद्रनदीवदुर्धरवेगं न प्राप्नोति तद्वत्॥ ४॥

रा० टी०—रामस्येति। देवी सीता यतो रामस्य लक्ष्मणस्य च व्यवसायज्ञा अनिवार्यपराक्रमविज्ञात्री अतोऽत्यर्थमत्यन्तं न क्षुभ्यते। तत्र दृष्टान्तः जलदागमे वर्षतौ गङ्गा प्रयागस्थजाह्नवीव॥ ४॥

गो० टी०—रामस्येति। व्यवसायज्ञा स्वयत्नं विहाय तद्व्यवसायमेव प्रेक्षमाणा एतद्व्रतं मम अप्यहं जीवितं जह्यामित्येवं रामव्यवसायं जानन्तीत्यर्थः। लक्ष्मणस्य च धीमतः। रामे मायामृगानुसारिण्यपि मारीचोऽयमिति तदानीमपि निश्चितवतो लक्ष्मणस्य। यद्वा। सर्वेश्वरादप्याश्रितसंरक्षणे समुद्युक्तस्य। नात्यर्थं क्षुभ्यते। अत्यर्थमिति क्षोभाभावविशेषण क्षोभविशेषणत्वे यत्किंचित्क्षोभः प्राप्तः स्यात्। सत्तानाशकाले प्राप्तेऽपि क्षोभलेशरहितेत्यर्थः। देवी रामेण शिरसा वोढव्यवाञ्छभ्यवती। गङ्गेव जलदागमे क्षोभहेतौ सत्यपि यथा गङ्गा न क्षुभ्यते तथेत्यर्थः॥ ४॥

५] ति० टी०—तुल्यशीलवयोवृत्तां रामतुल्यस्वभाववयश्चारित्राम् अभिजनः कुलम्। लक्षणं सामुद्रिकोक्तम्, अत एव सीताया रामस्य पुरुषान्तरे रूयन्तरे चाप्रवृत्तिः स्वभावमूलेति सूचितम्॥ ५॥

रा० टी०—तुल्येति। तुल्यानि रामशीलादिसदृशानि शीलं वयश्च वृत्तमाचरणं च यस्याः तुल्ये अभिजनः कुलं लक्षणं सामुद्रिकोक्तशुलक्ष्म यस्याः तां वैदेहीं राघव एवार्हति अत एव इयं वैदेही एव तं राघवमर्हति॥ ५॥

गो० टी०—तुल्येति। तुल्यशीलवयोवृत्तां शीलं स्वभावः। अस्या देव्या मनस्तस्मिंस्तस्य चास्यां प्रतिष्ठितमिति प्रक्रियया तुल्यस्वभावां तुल्यवयस्कां षोडशवार्षिकस्य द्वादशवार्षिकी तुल्या अन्यथा वैरस्यापत्तेः शास्त्रविरोधाच। अत एव विष्णुः—'वर्षैरेकगुणां भार्यामुद्वहेत्त्रिगुणो वरः। द्व्यष्टवर्षोऽष्टवर्षां वा वयोमात्रावरा च या॥' इति तुल्यवृत्ताम्। दोषो यद्यपि तस्य स्यात् सतामेतदगर्हितामिति रामवृत्तम्। 'पापानां वा शुभानां वा वधार्हाणां प्लवङ्गम। कार्यं करुणमार्येण न कश्चिन्नापराध्यति॥' इत्युक्तवत्याः सीताया वृत्तेन तुल्यम् तुल्यशब्दोऽनुरूपपरः। रामानुरूपशीलवयश्चारित्रामित्यर्थः। तुल्याभिजनलक्षणाम् अभिजनः कुलं लक्षणं सामुद्रिकं सार्वभौमलक्षणवतो भार्यया यैः सामुद्रिकलक्षणैर्भाव्यं तैर्युक्तामित्यर्थः। एवंविधत्वाद्राघवो वैदेहीमर्हति वैदेही राघवमर्हति। लोके सौन्दर्यादिमतः सौन्दर्यादिसर्वसहिता न लभ्यते। सौन्दर्यादिमत्या न सौन्दर्यादिसर्ववान् अनयोस्तु सर्वं संपन्नमिति विस्मयते। असितेक्षणेत्यधिकविशेषणदानाद्रामापेक्षया सीताया नयनसौन्दर्यमधिकमित्युच्यते। अत एव रामो वक्ष्यति। न जीवेयं क्षणमपि विना तामसितेक्षणामिति॥ ५॥ ६॥

६] ति० टी०—मनसा रामं जगाम अस्याः स एवानुरूप इति सस्मारेत्यर्थः। नवहेमाभाम् नवां तरुणीं हेमाभां चेत्यर्थः॥ ६॥

रा० टी०—तामिति। लोकः कान्तः शोभावान् यया यत्कान्त्यैव सर्वः प्रकाशते इत्यर्थः, तां श्रियमिव नवहेमाभां तां सीतां दृष्ट्वा मनसा रामं जगाम इदमब्रवीच॥ ६॥

७] ति० टी०—अस्या हेतोः सर्वात्मना स्वसदृश्याः प्राप्त्यर्थमित्यर्थः॥ ७॥

विराधश्च हतः संख्ये राक्षसो भीमविक्रमः । वने रामेण विक्रम्य महेन्द्रेणेव शम्बरः ॥ ८ ॥
चतुर्दश सहस्राणि॰ रक्षसां भीमकर्मणाम् । निहतानि जनस्थाने शरैरग्निशिखोपमैः ॥ ९ ॥
खरश्च निहतः संख्ये त्रिशिराश्च निपातितः । दूषणश्च महातेजा रामेण विदितात्मना ॥ १० ॥
ऐश्वर्यं वानराणां च दुर्लभं वालिपालितम् । अस्या निमित्ते सुग्रीवः प्राप्तवाँल्लोकविश्रुतः ॥ ११ ॥
सागरश्च मयाक्रान्तः श्रीमान्नदनदीपतिः । अस्या हेतोर्विशालाक्ष्याः पुरी चेयं निरीक्षिता ॥ १२ ॥
यदि रामः समुद्रान्तां मेदिनीं परिवर्तयेत् । अस्याः कृते जगच्चापि युक्तमित्येव मे मतिः ॥ १३ ॥
राज्यं वा त्रिषु लोकेषु सीता वा जनकात्मजा । त्रैलोक्यराज्यं सकलं सीताया नाप्नुयात्कलाम् ॥ १४ ॥
इयं सा धर्मशीलस्य जनकस्य महात्मनः । सुता मैथिलराजस्य सीता भर्तृदृढव्रता ॥ १५ ॥
उत्थिता मेदिनीं भित्त्वा क्षेत्रे हलमुखक्षते । पद्मरेणुनिभैः कीर्णा शुभैः केदारपांसुभिः ॥ १६ ॥
विक्रान्तस्यार्यशीलस्य संयुगेष्वनिवर्तिनः । स्नुषा दशरथस्यैषा ज्येष्ठा राज्ञो यशस्विनी ॥ १७ ॥
धर्मज्ञस्य कृतज्ञस्य रामस्य विदितात्मनः । इयं सा दयिता भार्या राक्षसीवशमागता ॥ १८ ॥

---

रा० टी०—तद्वचनाकारमाह—अस्या इत्यादिभिः । अस्याः हेतोर्वाली हतः वीर्ये रावणप्रतिमो रावणसदृशः कबन्धश्च निपातितः ॥ ७ ॥

गो० टी०—अस्या हेतोरिति । "सर्वनाम्नस्तृतीया च" इति षष्ठी अनया हेतुनेत्यर्थः ॥ ७–१० ॥

८–१० [ ति० टी०—दूषणान्तरक्षोनिपातश्चैतदासक्त्या शूर्पणखानिरासमूलत्वादन्वेषणप्रतिबन्धसंभावनामूलकत्वाच्चैतन्मूल एव । शम्बरोऽयं प्रद्युम्नहतादन्य एव महेन्द्रपदेन तत्तुल्यप्रद्युम्ने लक्षणा वा ॥ ८–१० ॥

रा० टी०—विराध इति । महेन्द्रेण शम्बर इव विराधश्च हतः अस्या हेतोरित्यनुकृष्यते एवमुत्तरेष्वपि ॥ ८ ॥

रा० टी०—चतुरिति । रक्षसां चतुर्दश सहस्राणि निहतानि ॥ ९ ॥

रा० टी०—खर इति । खरादिर्निहतः ॥ १० ॥

११–१२ ] ति० टी०—अस्या निमित्ते सप्तम्यर्थे षष्ठी । अस्यां निमित्तभूतायां सत्यामित्यर्थ इति तीर्थः ॥ ११ ॥ १२ ॥

रा० टी०—ऐश्वर्यमिति । वालिपालितम् अत एव दुर्लभम् अन्यैरलभ्यं वानराणामैश्वर्यं वानरनिरूपितेश्वरत्वम् अस्या निमित्ते सुग्रीवः प्राप्तवान् ॥ ११ ॥

रा० टी०—सागर इति । निरीक्षिताऽवलोकिता ॥ १२ ॥

गो० टी०—ऐश्वर्यमिति । अस्या निमित्ते "निमित्तकारणहेतुषु सर्वासां प्रायदर्शनम्" इति षष्ठी सप्तम्यर्थे । अस्यां निमित्ते सत्यामित्यर्थः ॥ ११ ॥ १२ ॥

१३ ] ति० टी०—परिवर्तयेदधरोत्तरं कुर्यात् । संहरेदिति यावत् ॥ १३ ॥

रा० टी०—यदीति । अस्याः कृते प्राप्तये समुद्रान्तां मेदिनीं जगत् त्रिलोकीं वा परिवर्तयेत् भ्रामयेत् तर्हि युक्तमेव इति मे मतिर्निश्चयः ॥ १३ ॥

गो० टी०—यदीति । परिवर्तयेत् अधरोत्तरां कुर्यात् । अस्याः कृते एतदर्थम् । जगच्चापि न केवलं मेदिनीं सर्वलोकानपि परिवर्तयेदित्यर्थः ॥ १३ ॥

१४ ] ति० टी०—एवं मतेर्युक्तत्वमुपपादयति—राज्यं वेति । त्रैलोक्यराज्यसीताप्राप्त्योः कतरदुत्कृष्टमिति विचारे आद्यं द्वितीयकोटिशतांशेन सादृश्यमपि नार्हतीत्यर्थः ॥ १४ ॥

रा० टी०—तत्र हेतुमाह—राज्यमिति । त्रिषु लोकेषु राज्यमधिकमिति शेषः, सीता वाऽधिकेति विचार्यमाणे सतीति शेषः, सकलं त्रैलोक्यराज्यं सीतायाः कलां षोडशांशमपि नाप्नुयात् ॥ १४ ॥

गो० टी०—राज्यं वेति । राज्यमुत्कृष्टं वा सीता उत्कृष्टा वा इति विचार्यमाण इति शेषः । कलां लेशम् ॥ १४ ॥

१५–१६] ति०टी०—आधिक्यमेवोपपादयति—इयमिति । अनेन कुलम्, भर्तृदृढव्रतेत्यनेन चारित्र्यातिशयः । मेदिनीं भित्त्वेत्यनेनायोनिजतयाऽमानुषदिव्यरूपत्वं दर्शितम् ॥ १५ ॥ १६ ॥

रा० टी०—इयमिति । भर्तृदृढव्रतेयं सीता हलमुखेन क्षते आकृष्टे क्षेत्रे मेदिनीं भित्त्वा पद्मरेणुनिभैः केदारपांसुभिः कीर्णा व्याप्ता सती उत्थिता । श्लोकद्वयमेकान्वयि ॥ १५ ॥ १६ ॥

गो० टी०—इयमिति । भर्तृदृढव्रता भर्तरि दृढव्रता । केदारपांसुभिः यज्ञक्षेत्रपांसुभिः ॥ १५ ॥ १६ ॥

१७ ] ति० टी०—आर्यशीलस्य पूज्यशीलस्य । अनेन महाकुलीनपाणिग्रहणं दर्शितम् ॥ १७ ॥

१८ ] ति० टी०—यच्छेषतयैवं प्राशस्त्यं दर्शितं तस्य कालस्य दुरतिक्रमत्वमाह—इयं सेति । राक्षसीवशमागता कालप्राबल्यादिति भावः । 'फलमत उपपत्तेः' इति व्याससूत्रेणापि कालात्मनो भगवत एव कर्मफलप्रापणसामर्थ्यं दर्शितम् ॥ १८ ॥

रा० टी०—विक्रान्तस्येति । विक्रान्तस्य अतिपराक्रम-

---

१ सत्कृतामिति गो. पाठः ।

सर्वान्भोगान्परित्यज्य भर्तृस्नेहबलात्कृता । अचिन्तयित्वा कष्टानि प्रविष्टा निर्जनं वनम् ॥ १९ ॥
संतुष्टा फलमूलेन भर्तृशुश्रूषणापरा । या परां भजते प्रीतिं वनेऽपि भवने यथा ॥ २० ॥
सेयं कनकवर्णाङ्गी नित्यं सुस्मितभाषिणी । सहते यातनामेतामनर्थानामभागिनी ॥ २१ ॥
इमां तु शीलसंपन्नां द्रष्टुमिच्छति राघवः । रावणेन प्रमथितां प्रपामिव पिपासितः ॥ २२ ॥
अस्या नूनं पुनर्लाभाद्राघवः प्रीतिमेष्यति । राजा राज्यपरिभ्रष्टः पुनः प्राप्येव मेदिनीम् ॥ २३ ॥
कामभोगैः परित्यक्ता हीना बन्धुजनेन च । धारयत्यात्मनो देहं तत्समागमकाङ्क्षिणी ॥ २४ ॥
नैषा पश्यति राक्षस्यो नेमान्पुष्पफलद्रुमान् । एकस्थहृदया नूनं राममेवानुपश्यति ॥ २५ ॥
भर्ता नाम परं नार्याः शोभनं भूषणादपि । एषा हि रहिता तेन शोभनार्हा न शोभते ॥ २६ ॥

---

विशिष्टस्य आर्यशीलस्य क्षत्रियपरमधर्मप्रवृत्तिस्वभावस्य अत एव संयुगेषु संग्रामेषु अनिवर्तिनो दशरथस्य एषा ज्येष्ठा स्नुषा धर्मज्ञस्य रामस्य दयिता अतिप्रिया भार्या इयं सीता राक्षसीवशम् आगता प्राप्ता । श्लोकद्वयमेकान्वयि ॥१७॥१८॥

गो० टी०—विक्रान्तस्येति । आर्यशीलस्य श्रेष्ठस्वभावस्य ॥ १७ ॥ १८ ॥

१९ ] ति० टी०—भर्तृस्नेहबलात्कृता बलात्प्रवर्तिता॥१९॥

रा० टी०—सर्वानिति । भर्तृस्नेहबलात् सर्वान् भोगान् परित्यज्य कष्टानि अचिन्तयित्वा च कृता सहगमनविषयकप्रयत्नवती सीता वनं प्रविष्टा ॥ १९ ॥

गो० टी०—सर्वानिति । सर्वान् भोगान् भुज्यन्ते इति भोगाः शुकसारिकाकन्दुकप्रभृतिभोगसाधनानि मातृप्रभृतींश्च परित्यज्य परि विशेषेण पुनस्तत्राशालेशं विनैव त्यक्त्वा । अयं च परित्यागो न स्ववशेनेत्याह—भर्तृस्नेहबलात्कृता । अभिमतविषयस्नेहातिरेकस्तदितरमखिलमपि त्याजयति हि । त्यक्तेषु स्मरणाभावेऽपि गन्तव्यदेशीयदुःखं वा किं स्मरति नेत्याह—अचिन्तयित्वा दुःखानि[1] । रामातिरिक्तवस्त्वनुभवे हि दुःखानुभवसंभावनेति भावः । प्रविष्टा निर्जनं वनम् भोगस्यैकान्तस्थलमिति ह्यस्या हृदि लग्नमिति भावः । यातनां तीव्रवेदनाम् । अनर्थानामभागिनी आपदामनर्हेत्यर्थः ॥ १९–२१ ॥

२० ] ति० टी०—भर्तृशुश्रूषणापरा । सन्नन्तात्स्वार्थे णिचि "ण्यासश्रन्थ–" इति युच् ॥ २० ॥

२१ ] ति० टी०—पूर्ववदेवाह—सेयमिति । यातनां राक्षसीभिः संपाद्यमानतीव्रदुःखम् । अनर्थानामापदाम् ॥२१॥

रा० टी०—संतुष्टेति । भर्तृशुश्रूषणापरा पतिशुश्रूषणे[2] निरता या सीता भवने इव वनेऽपि परां प्रीतिं भजते अनर्थानां दुःखानाम् अभागिनी प्राप्त्ययोग्येत्यर्थः सेयं सीता एतां यातनां सहते । शुश्रूषणेति युजन्तम् । श्लोकद्वयमेकान्वयि ॥ २० ॥ २१ ॥

२२–२३ ] ति० टी०—शीलसंपन्नामीदृशदुःखेऽपि चारित्र्यप्रच्यवरहिताम् । प्रमथितां प्रमथितामपि । प्रपा पानीयशाला ॥ २२ ॥ २३ ॥

रा० टी०—इमामिति । रावणेन प्रमथितां हिंसितप्रायाम् इमां सीतां पिपासितः प्रपामिव राघवो द्रष्टुमिच्छति ॥ २२ ॥

रा० टी०—अस्या इति । मेदिनीं पृथ्वीं पुनः प्राप्य राज्यपरिभ्रष्टः राजा इव अस्याः सीतायाः लाभात् राघवः प्रीतिमेष्यति प्राप्स्यति ॥ २३ ॥

गो० टी०—इमामिति । प्रपां पानीयशालिकाम् 'प्रपा पानीयशालिका' इत्यमरः ॥ २२ ॥ २३ ॥

२४] ति० टी०—काम्यन्त इति कामाः, भुज्यन्त इति भोगाः स्रक्चन्दनादयः, तैस्त्यक्ता तत्समागमकाङ्क्षिणी । 'एति जीवन्तमानन्दो नरं वर्षशतादपि' इति न्यायेनेति भावः ॥२४॥

रा० टी०—कामेति । कामभोगैः परित्यक्ता सीता तत्समागमकाङ्क्षिणी रामसमागमविषयकोत्कटेच्छावती सती आत्मनो देहं धारयति ॥ २४ ॥

गो० टी०—कामेति । काम्यन्त इति कामाः ते च ते भोगाश्च स्रक्चन्दनादयः तैः ॥ २४ ॥

२५ ] ति० टी०—राक्षस्यः राक्षसीरित्यर्थः । एकस्मिंल्लक्ष्ये तिष्ठति तादृशं हृदयं यस्याः सा । किं तदेकं लक्ष्यं तत्राह—नूनं राममेवेति ॥ २५ ॥

रा० टी०—नेति । एकस्थहृदया एषा सीता राममेवानुपश्यति अतः राक्षस्यो राक्षसीः पुष्पफलद्रुमांश्च न पश्यति २५

गो० टी०—नैषेति । नैषा पश्यति राक्षस्यः राक्षसीर्न पश्यति नेमान् पुष्पफलद्रुमान् रामविरहक्लेशातियेन राक्षसीदर्शनवत्सपुष्पफलवतां द्रुमाणामपि दर्शनमस्या असह्यमित्यर्थः । एकस्थहृदया एकाग्रचित्ता राममेवानुपश्यति ध्यायतीत्यर्थः रामागमनसंभावनावती दिशोऽवलोकयतीति वार्थः । यद्वा निरन्तरेण रामानुभवेन परिसरवर्ती कोऽपि पदार्थो न दृष्टिपथं गच्छतीत्यर्थः ॥ २५–२७ ॥

२६ ] ति० टी०—राममेवेत्यत्र बीजमाह—भर्ता नामेति । शोभनं शोभा ॥ २६ ॥

रा० टी०—भर्तेति । भर्ता भूषणादप्यधिकं[3] आर्याशोभनं[4] स्त्रीशोभाहेतुः अतः शोभनार्हापि एषा सीता तेन रामेण रहिता सती न शोभते ॥ २६ ॥



१ दुःखानीति गो. पाठः । २ शुश्रूषणे रतेति गो. पाठः । ३ भूषणमिति गो. पाठः । ४ भूषणार्हेति गो. पाठः ।

दुष्करं कुरुते रामो हीनो यदनया प्रभुः । धारयत्यात्मनो देहं न दुःखेनावसीदति ॥ २७ ॥
इमामसितकेशान्तां शतपत्रनिभेक्षणाम् । सुखार्हां दुःखितां ज्ञात्वा ममापि व्यथितं मनः ॥ २८ ॥
क्षितिक्षमा पुष्करसंनिभेक्षणा या रक्षिता राघवलक्ष्मणाभ्याम् ।
सा राक्षसीभिर्विकृतेक्षणाभिः संरक्ष्यते संप्रति वृक्षमूले ॥ २९ ॥
हिमहतनलिनीव नष्टशोभा व्यसनपरम्परया निपीड्यमाना ।
सहचररहितेव चक्रवाकी जनकसुता कृपणां दशां प्रपन्ना ॥ ३० ॥
अस्या हि पुष्पावनताग्रशाखाः शोकं दृढं वै जनयन्त्यशोकाः ।
हिमव्यपायेन च शीतरश्मिरभ्युत्थितो नैकसहस्ररश्मिः ॥ ३१ ॥
इत्येवमर्थं कपिरन्ववेक्ष्य सीतेयमित्येव तु जातबुद्धिः ।
संश्रित्य तस्मिन्निषसाद वृक्षे बली हरीणामृषभस्तरस्वी ॥ ३२ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये सुन्दरकाण्डे षोडशः सर्गः ॥ १६ ॥

---

२७ ] ति० टी०–एतदेकहृदयत्वज्ञानादेव रामः प्रभुर्यज्जीवनरूपं दुःखेनावसादनाभावरूपं च दुष्करं कुरुते ॥ २७ ॥

रा० टी०–दुष्करमिति । अनया हीनो रामः यदात्मनो देहं धारयति दुःखेन अवसीदति च न तत् दुष्करं कुरुते ॥ २७ ॥

२८ ] ति० टी०–ममापि तिर्यग्योनेरपि विषयानभिज्ञस्यापि ॥ २८ ॥

रा० टी०–इमामिति । असिताः कृष्णाः केशाः यस्याः तां, तां प्रसिद्धां इमां दुःखितां ज्ञात्वा ममापि मनो व्यथितम् ॥ २८ ॥

गो० टी०–इमामिति । असितः केशान्तः यस्यास्तां केशानामग्रे नैल्यं स्त्रीणां दुर्लभम् । अतस्तदेवाह—असितकेशान्तां गुडालकावृतस्यापि व्यामोहकरीम् । शतपत्रनिभेक्षणां यद्यप्यसितेक्षणा तथापि संस्थानविशेषे उपमेयं कमलपत्राक्षस्यापि व्यामोहदायिनीम् । सुखार्हां रामोत्सङ्गे स्थातुमर्हाम् । दुःखितां राक्षसीमध्ये स्थितां दृष्ट्वा ममापि व्यथितं मनः शाखामृगस्य ममापि मनो व्यथितं किमुत परमदयालो रामस्येति भावः । शोकहर्षयोरपदस्य ममापि मनो व्यथितं किं पुनः कामिन इति वा ॥ २८ ॥ २९ ॥

२९ ] ति० टी०–क्षितितुल्या क्षमा यस्याः सा । दृष्टिमात्रेण रावणस्याभस्मीकरणात् । संरक्ष्यते परैरनपहाराय गोप्यत इत्यर्थः ॥ २९ ॥

रा० टी०–क्षितीति । क्षितेरिव क्षमा यस्याः सा या सीता राघवलक्ष्मणाभ्यां रक्षिता सा सीता विकृतेक्षणाभिः राक्षसीभिः वृक्षमूले संरक्ष्यते ॥ २९ ॥

३० ] ति० टी०–कृपणां शोच्याम् ॥ ३० ॥

रा० टी०–हिमेति । व्यसनस्य दुःखस्य परम्परया निपीड्यमाना अत एव हिमेन हता नलिनी कमलिनी इव जनकसुता सहचरेण चक्रेण रहिता चक्रवाकीव कृपणां शोचनीयां दशां प्राप्ता ॥ ३० ॥

गो० टी०–हिमहतेति । हिमहतेति विशेषणेन नलिन्याः पूर्वं बहुकालशोभितत्वं सिद्धं तद्वन्नष्टशोभा द्वादशवर्षं निष्प्रतिबन्धं भोगान् भुञ्जानाया आगन्तुको हि विश्लेषः तेन हि नष्टशोभेत्युक्तम् । व्यसनपरंपरया विरह इव संश्लेषोऽपि मध्ये मध्ये नागत्य निवृत्तः व्यसनमेव नैरन्तर्येण वृत्तम् । अतिपीड्यमाना अतिक्रम्य पीड्यमाना आश्रयानुरूपं व्यसनमनुभवतीत्यर्थः । सहचररहितेव चक्रवाकी लाभकालमवगम्य दुःखं सोढुमसमर्था चक्रवाकीसाम्येनायमर्थो लभ्यते सा हि रात्रिविरामकालं प्रबुध्य दुःखं सोढुमदक्षेति प्रसिद्धम् जनकसुता एवं व्यसनं भविष्यतीति ज्ञात्वा न संवर्धिता केवलं सुखसंवर्धितेत्यर्थः । कृपणां दशां प्रपन्ना । पूर्वोक्तनलिन्यादिकं नोपमानं भवितुमर्हति । किंचिदुक्तिमात्रम् । वाङ्मनसाऽपरिच्छेद्यां दुर्दशां प्राप्तेत्यर्थः ॥ ३० ॥

३१ ] ति० टी०–न केवलमशोक एव शोकजनकश्चन्द्रोऽपीत्याह—हिमेति । हिमव्यपायेन वसन्तसमीपप्राक्कालेनोपलक्षितः । यद्वा लङ्कायां हिमव्यपायेन शीताभावेनाभ्युत्थितोऽतिप्रकाशतया स्थितः, अत एव नैकसहस्ररश्मिरभ्युत्थितः उदयं प्राप्तः । शीतरश्मिश्च शोकं जनयतीत्यनुकर्षः ॥ ३१ ॥

रा० टी०–अस्या इति । पुष्पैरवनताः अग्रशाखाः येषां ते अस्याः वनिकायाः अशोकाः हिमव्यपायेन अतिहिमस्याभावात् अभ्युत्थितः प्रकाशितः अनेकसहस्ररश्मिः चन्द्रश्च अस्याः सीतायाः दृढं शोकं जनयन्ति ॥ ३१ ॥

गो० टी०–अस्या इति । हिमव्यपायेन वसन्तेन । नैकसहस्ररश्मिरभ्युत्थितः । मन्दरश्मिः सूर्यापेक्षया मन्दकरः चन्द्र इति यावत् । शोकं जनयतीति वचनविपरिणामेन संबन्धः ॥ ३१ ॥ ३२ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने षोडशः सर्गः ॥ १६ ॥

३२ ] ति० टी०–सीतेयमित्येवेयं सीतैवेति जातबुद्धिस्ता-



१ दृष्ट्वेति गो.पाठः। २ संनिभाक्षीति गो.पाठः। ३ ऽतिपीड्यमानेति गो.पाठः। ४ मन्देति गो.पाठः। ५ निविष्टबुद्धिरिति गो. सुजातेति रा. पाठः ।

# सप्तदशः सर्गः ।

भगवति चन्द्रमस्याकाशमध्यमधिरोहति घोरविकृताननाभी राक्षसीभिः समन्ततो वेष्टितां जानकीं दृष्ट्वा हर्षनिर्भरलोचनो हनूमान्मनसा रामलक्ष्मणावभिवाद्य शिंशुपाग्रे निगूढस्तस्थौ ।

ततः कुमुदखण्डाभो [2]निर्मलं निर्मलोदयः । प्रजगाम नभश्चन्द्रो हंसो नीलमिवोदकम् ॥ १ ॥
साचिव्यमिव कुर्वन्स प्रभया निर्मलप्रभः । चन्द्रमा रश्मिभिः शीतैः सिषेवे पवनात्मजम् ॥ २ ॥
स ददर्श ततः सीतां पूर्णचन्द्रनिभाननाम् । शोकभारैरिव न्यस्तां भारैर्नावमिवाम्भसि ॥ ३ ॥
दिदृक्षमाणो वैदेहीं हनूमान्मारुतात्मजः । स ददर्श विदूरस्था राक्षसीर्घोरदर्शनाः ॥ ४ ॥
एकाक्षीमेककर्णां च कर्णप्रावरणां तथा । अकर्णां शङ्कुकर्णां च मस्तकोच्छ्वासनासिकाम् ॥ ५ ॥

मेव बुद्धिं संश्रित्य ततः पराद्धेयचिकीर्षया तस्मिन्शिंशपाप्रक्ष एव निपसाद तद्रात्रिशेषं परदिनं च स्थित इत्यर्थः । एवं च सरावणान्तःपुरा सर्वापि लङ्का यामत्रयेण सप्तदलङ्घनदिनरात्रावेव विचिता, तुर्ये यामेऽशोकवनिकाप्रवेश इति बोध्यम् ॥३२॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये सुन्दरकाण्डे षोडशः सर्गः ॥ १६ ॥

रा० टी०—इतीति । इति अनेन प्रकारेण इयं सीतैव इति जातबुद्धिः कपिः अर्थं प्रयोजनसिद्धिम् अन्ववेक्ष्य तस्मिन् शिंशुपाभिधे वृक्षे संश्रित्य निषसाद ॥ ३२ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ सुन्दरकाण्डे षोडशः सर्गः ॥ १६ ॥

१ ] ति० टी०—ततस्तद्दिनापगमोत्तरम् कुमुदखण्डं कुमुदसमूहस्तदाभः श्वैत्येन निर्मलं नभो जगाम नभसो निर्मलत्वं स्वच्छनीलवर्णत्वम् । अत एवाह—हंसो नीलमुदकमिवेति । नभसो नीलत्वं प्रतीत्या कविसंप्रदायेन च बोध्यम् नभो जगाम किंचिन्नभउपरिभागं जगामेत्यर्थः ॥ १ ॥

रा० टी०—हनुमत्कर्तृकस्पष्टदर्शनं वर्णयितुमाह—तत इति । कुमुदखण्डाभः कुमुदसमूहसदृशः निर्मलोदयः चन्द्रः निर्मलं नभः प्रजगाम । तत्र दृष्टान्तः, हंसो नीलमुदकमिव ॥ १ ॥

गो० टी०—तत इत्यादि । प्रजगाम प्रकर्षेण जगाम आकाशपरभागं प्राप्त इत्यर्थः ॥ १ ॥ २ ॥

२ ] ति० टी०—साचिव्यमिव सीतादर्शनादौ प्रभया स्वकान्त्या साचिव्यमिव साहाय्यकमिव दिवा क्वचिदेकान्तप्रदेशे स्थितत्वान्निद्राव्याकुलत्वाच्च न सम्यग्राक्षसीनां सीतायाश्च दर्शनम् रात्रौ चन्द्रोदये सति तु पुनः समीपदेश आगत्य स्थितस्य सम्यक्सर्वदर्शनम् ॥ २ ॥

रा० टी०—साचिव्यमिति । शीतैः रश्मिभिरुपलक्षितः निर्मलप्रभश्चन्द्रमाः प्रभया स्वकान्त्या साचिव्यं साहाय्यमिव कुर्वन् पवनात्मजं सिषेवे ॥ २ ॥

३ ] ति० टी०—शोकभारैर्न्यस्तामधोनीतामिव निमज्जमानामिव ॥ ३ ॥

रा० टी०—स इति । स हनुमान् शोकभारैः न्यस्तां नतामिव अत एव भारैर्न्यस्तामम्भसि नावमिव प्रतीयमानां सीतां ददर्श ॥ ३ ॥

गो० टी०—स इति । शोकभारैर्न्यस्तामिव आक्रान्तामिव स्थिताम् अत एव भारैर्न्यस्तां नावमिव स्थिताम् ॥ ३ ॥

४ ] ति० टी०—दिदृक्षमाणः प्रकटतया तां द्रष्टुमिच्छुः ॥४॥

रा० टी०—दिदृक्षमाण इति । वैदेहीं दिदृक्षमाणोऽत्यन्तमवलोकनेच्छुः हनुमान् अविदूरस्थाः राक्षसीः ददर्श ॥ ४ ॥

गो० टी०—दिदृक्षमाण इत्यादि । कर्णौ प्रावरणे शिरस आच्छादकौ यस्याः सा कर्णप्रावरणा ताम् शङ्कुवत्कर्णौ यस्यास्तां शङ्कुकर्णाम् मस्तकोच्छ्वासनासिकाम् ऊर्ध्वमुखनासिकामित्यर्थः अतिकायोत्तमाङ्गीम् अत्रातिकायशब्देन महत्त्वमुच्यते महाशिरस्कामित्यर्थः ध्वस्तकेशीं स्वल्पकेशीम् अकेशीम् अनुत्पन्नकेशीम् केशकम्बलधारिणीं कम्बलरूपकेशधारिणीम् लम्बे कर्णललाटे यस्याः सा लम्बकर्णललाटाताम् चुबुके ओष्ठः यस्याः सा चुबुकोष्ठी ताम् ह्रस्वदीर्घाम् अधःकाये ऊर्ध्वकाये च क्वचित् ह्रस्वां क्वचिद्दीर्घामित्यर्थः । कुब्जां स्थगुमतीम् विकटां स्थूलजङ्घाम् करालां दन्तुराम् 'करालो दन्तुरे तुङ्गे' इत्यमरः । भुग्नवक्त्रां निम्नवक्त्राम् विकृताननां नासिकोष्ठविरहिताननामित्यर्थः एतदन्तस्य पूर्वेण ददर्शेत्यनेनान्वयः ॥ ४–८ ॥

५ ] ति० टी०—कर्णप्रावरणामिति विशालकर्णीम् । मस्तकोच्छ्वासनासिकामूर्ध्वमुखनासाम् ॥ ५ ॥

रा० टी०—दर्शनप्रकारमाह—एकेत्यादिभिः । एकाक्षीप्रभृतीः रोमहर्षणदर्शनाः ताः राक्षसीः ददर्श । तस्य शिंशुपाभिधतरोः अधस्तात् देवीं सीतां च ददर्श तत्र कर्णावेव प्रावरणौ शरीराच्छादकौ यस्याः अतिविशालकर्णविशिष्टामित्यर्थः, मस्तके उच्छ्वासहेतुभूतनासिका यस्यास्तां तन्वी सूक्ष्मा



१ षण्डेति गो. पाठः । २ निर्मलो निर्मलं स्वयमिति गो. पाठः ।

अतिकायोत्तमाङ्गीं च तनुदीर्घशिरोधराम् । ध्वस्तकेशीं तथाऽकेशीं केशकम्बलधारिणीम् ॥ ६ ॥
लम्बकर्णललाटां च लम्बोदरपयोधराम् । लम्बोष्ठीं चिबुकोष्ठीं च लम्बास्यां लम्बजानुकाम् ॥ ७ ॥
ह्रस्वां दीर्घां च कुब्जां च विकटां वामनां तथा । करालां भुग्नवक्त्रां च पिङ्गाक्षीं विकृताननाम् ॥ ८ ॥
विकृताः पिङ्गलाः कालीः क्रोधनाः कलहप्रियाः । कालायसमहाशूलकूटमुद्गरधारिणीः ॥ ९ ॥
[1]वराहमृगशार्दूलमहिषाजशिवा[2]मुखाः । गजोष्ट्रहयपा[3]दाश्च निखातशिरसोऽपराः ॥ १० ॥
एकहस्तैकपादाश्च खरकर्ण्यश्वकर्णिकाः । गोकर्णीर्हस्तिकर्णीश्च हरिकर्णीस्तथापराः ॥ ११ ॥
[4]अतिनासाश्च काश्चिच्च तिर्यक्श्वासा अनासिकाः । गजसंनिभनासाश्च ललाटोच्छ्वासनासिकाः ॥ १२ ॥
हस्तिपादा महापादा गोपादाः पादचूलिकाः । अतिमात्रशिरोग्रीवा अतिमात्रकुचो[5]दरीः ॥ १३ ॥
अतिमात्रास्यनेत्राश्च दीर्घजिह्वाननास्तथा । अजामुखीर्हस्तिमुखीर्गोमुखीः [6]सूकरीमुखीः ॥ १४ ॥
हयोष्ट्रखरवक्त्राश्च राक्षसीर्घोरदर्शनाः । शूलमुद्गरहस्ताश्च क्रोधनाः कलहप्रियाः ॥ १५ ॥
[7]करालधूम्रकेशिन्यो राक्षसीर्विकृताननाः । [8]पिबन्ति सततं पानं [9]सुरामांससदाप्रियाः ॥ १६ ॥
मांसशोणितदिग्धाङ्गीर्मांसशोणितभोजनाः । ता ददर्श कपिश्रेष्ठो रोमहर्षणदर्शनाः ॥ १७ ॥
स्कन्धवन्तमुपासीनाः परिवार्य वनस्पतिम् । तस्याधस्ताच्च तां देवीं राजपुत्रीमनिन्दिताम् ॥ १८ ॥
लक्षयामास लक्ष्मीवान्हनूमाञ्जनकात्मजाम् । निष्प्रभां शोकसंतप्तां मलसंकुलमूर्धजाम् ॥ १९ ॥
क्षीणपुण्यां च्युतां भूमौ तारां निपतितामिव । चारित्र्यव्यपदेशाढ्यां भर्तृदर्शनदुर्गताम् ॥ २० ॥

---

दीर्घा स्थूला शिरोधरा ग्रीवा यस्यास्तां चिबुकौ चिबुकसंबद्धौ ओष्ठौ यस्यास्ताम् ॥ ९ ॥

६ ] ति० टी०—अतिकायोत्तमाङ्गीमतिप्रवृद्धोपरिभागदेहवतीम् तनुदीर्घशिरोधराम् अस्थूलदीर्घग्रीवामित्यर्थः शारीरकेशैः कम्बलधारिणीमिव ॥ ६ ॥

७ ] ति० टी०—चिबुके संबद्ध ओष्ठो यस्यास्ताम् ॥ ७ ॥

८ ] ति० टी०—विकटां वक्रशरीराम् । करालां भयंकरकृष्णवर्णाम् ॥ ८ ॥

रा० टी०—निखातशिरसः कबन्धवत् उरःप्रदेशप्राप्तशिरसः किंच निखातेन खातविशेषेण युक्तानि शिरांसि यासां ताः हरेः सिंहस्येव कर्णौ यासां पादचूलिकाः पादयोः संलग्नाः चूलाः शिरःकेशाः यासां ताः सुरामांसानि सदा प्रियाणि यासाम् अत एव पानं मद्यादि सततं पिबन्तीः स्कन्धवन्तं वनस्पतिं परिवार्य उपासीना इत्यर्थः । चतुर्दशश्लोका एकान्वयिनः ॥ ६–१८ ॥

९ ] ति० टी०—विकृतत्वादिगुणाश्च या राक्षस्यस्तत्र स्थितास्ता ददर्शेति वक्ष्यमाणेनान्वयः । कूटोऽयस्कारकूटाभ आयुधविशेषः ॥ ९ ॥

गो० टी०—विकृता इत्यादेरुत्तरेण ददर्शेत्यनेनान्वयः । एता एकाक्ष्यादिराक्षसीभ्योऽन्याः विकृताः विकृतवेषाः ॥ ९ ॥

१० ] ति० टी०—निखातशिरसः कबन्धवदुरःप्रदेशगतशिरसः ॥ १० ॥

गो० टी०—निखातशिरसः गात्रान्तर्वर्तिशिरसः ॥ १० ॥

११ ] ति० टी०—हरिकर्णीः सिंहकर्णीः ॥ ११ ॥

१२] ति० टी०—गजसंनिभनासाः शुण्डादण्डोपेतनासाः १२

गो० टी०—हरिकर्णीः कपिकर्णीः ॥ ११ ॥ १२ ॥

१३–१५ ] ति० टी०—पादचूलिकाः पादे संलग्ना चूडा शिरःकेशा यासां ताः पादे वा चूडाकाराः केशा यासां ताः अतिमात्रमतिप्रमाणम् ॥ १३ ॥ १५ ॥

गो० टी०—पादे चूडिका यासां ताः पादचूडिकाः 'शिखा चूडा केशपाशी' इत्यमरः ॥ १३–१५ ॥

१६–१७ ] ति० टी०—सुरामांससदाप्रियाः सुरामांसे सदा प्रिये यासां ताः ॥ १६ ॥ १७ ॥

गो० टी०—राक्षसीर्विकृतानना इत्यत्र पुनः राक्षसीपदमविस्मरणार्थम् ॥ १६ ॥ १७ ॥

१८–१९ ] ति० टी०—स्कन्धवन्तं प्रशस्तशाखोपशाखावन्तं वृक्षं शिंशपावृक्षं परिवार्य तन्मूलादीपद्दूर आसीनाः स्थिताः । तस्याधस्तात्तन्मूलसमीपे ॥ १८ ॥ १९ ॥

रा० टी०—लक्षयामासेति । हनुमान् शोकसंतप्तां निष्प्रभां जनकात्मजां लक्षयामास ॥ १९ ॥

गो० टी०—तस्याधस्तादित्यादि । लक्ष्मीवान् सीतादर्शनजनितशोभायुक्तः । च्युतां स्थानाच्चलिताम् चारित्र्यव्यपदेशाढ्यां पतिव्रताधर्माचरणख्यातिसंपन्नाम् । भर्तृदर्शनेन दुर्गतां दरिद्राम् भर्तृदर्शनरहितामित्यर्थः । भर्तृवात्सल्यभूषणां वात्सल्यपदमत्र स्नेहमात्रवाचि । पयोदान्ते वर्षान्ते चन्द्ररेखायाः स्पष्टास्पष्टत्वद्योतनायेदं विशेषणम् । असंस्पर्शात् उद्वर्तनादिसंस्काररहित्यात् अयुक्ताम् अनारोपिततन्त्रीम् वल्लकीं वीणाम् ॥ १८–२२ ॥

२० ] ति० टी०—दिवश्च्युतां भूमौ पतितां तारामिव ।

---

१ वाराहेति रा. पाठः । २ मुखीरिति गो. पाठः । ३ पादीरिति गो. पाठः । ४ अनासा अतिनासाश्च तिर्यङ्नासा विनासिकाः इति गो. तिर्यङ्नासा अनासिका इति रा. पाठः । ५ उदरा इति रा. पाठः । ६ सुकरीति गो. पाठः । ७ कराला धूम्रकेशीश्चेति गो. पाठः । ८ पिबन्तीरिति गो. पाठः । ९ सदा मांससुराप्रिया इति गो. पाठः ।

भूषणैरुत्तमैर्हीनां भर्तृवात्सल्यभूषिताम् । राक्षसाधिपसंरुद्धां बन्धुभिश्च विनाकृताम् ॥ २१ ॥
वियूथां सिंहसंरुद्धां बद्धां गजवधूमिव । चन्द्ररेखां पयोदान्ते शारदाभ्रैरिवावृताम् ॥ २२ ॥
क्लिष्टरूपामसंस्पर्शादयुक्तामिव वल्लकीम् । स तां भर्तृहिते युक्तामयुक्तां रक्षसां वशे ॥ २३ ॥
अशोकवनिकामध्ये शोकसागरमाप्लुताम् । ताभिः परिवृतां तत्र सग्रहामिव रोहिणीम् ॥ २४ ॥
ददर्श हनुमांस्तत्र लतामकुसुमामिव । सा मलेन च दिग्धाङ्गी वपुषा चाप्यलंकृता ॥
मृणाली पङ्कदिग्धेव विभाति च न भाति च ॥ २५ ॥
मलिनेन तु वस्त्रेण परिक्लिष्टेन भामिनीम् । संवृतां मृगशावाक्षीं ददर्श हनुमान्कपिः ॥ २६ ॥
तां देवीं दीनवदनामदीनां भर्तृतेजसा । रक्षितां स्वेन शीलेन सीतामसितलोचनाम् ॥ २७ ॥
तां दृष्ट्वा हनुमान्सीतां मृगशावनिभेक्षणाम् । मृगकन्यामिव त्रस्तां वीक्षमाणां समन्ततः ॥ २८ ॥
दहन्तीमिव निःश्वासैर्वृक्षान्पल्लवधारिणः । संघातमिव शोकानां दुःखस्योर्मिमिवोत्थिताम् ॥ २९ ॥
तां क्षामां सुविभक्ताङ्गीं विनाभरणशोभिनीम् । प्रहर्षमतुलं लेभे मारुतिः प्रेक्ष्य मैथिलीम् ॥ ३० ॥

चारित्र्यव्यपदेशः पातिव्रत्यजकीर्तिः । भर्तृदर्शनं दुर्गतं दुर्लभं यस्यास्ताम् ॥ २० ॥

२१ ] ति० टी०—उत्तमभूषणजशोभाहीनामपि भर्तृवात्सल्येन तत्प्रियत्वेन शोभावतीम् । विनाकृतां रहिताम् ॥२१॥

२२ ] ति० टी०—पयोदान्ते वर्षान्ते । अनेन दुःखस्यात्यल्पावशिष्टत्वं सूच्यते ॥ २२ ॥

रा० टी०—तामेव वर्णयन्नाह—क्षीणेति । क्षीणपुण्याम् अत एव निपतितां तारामिव चारित्र्यव्यपदेशेन मुख्याचरणेन आढ्यां भर्तृदर्शनं दुर्गतं दुष्प्रापं यस्याः तां भर्तृवात्सल्येन पत्युरतिप्रीत्या भूषितां राक्षसाधिपेन संरुद्धाम् अत एव बन्धुभिर्विनाकृताम् अत एव सिंहसंरुद्धां वियूथां यूथहीनां बद्धां स्वयूथविषयकातिस्नेहयुक्तां गजवधूमिव पयोदान्ते वर्षापाये शारदाभ्रैरावृतां चन्द्ररेखामिव असंस्पर्शात् पतिस्पर्शराहित्यात् क्लिष्टरूपां पराभूतस्वरूपाम् अत एव अयुक्तां वादकहीनां वल्लकीं वीणामिव भर्तृहिते युक्तां रक्षसां वशे अयुक्ताम् अयोग्यां शोकसागरमाप्लुतां सग्रहां क्रूरग्रहविशिष्टां रोहिणीमिव ताभिः पूर्वोक्तराक्षसीभिः परिवृताम् अकुसुमितां कुसुमरहितां लतामिव तां सीतां स हनूमान् ददर्श । सार्धश्लोकपञ्चकमेकान्वयि ॥ २०–२४ ॥

२३ ] ति० टी०—असंस्पर्शाद्भर्तृस्पर्शाभावात्, अत एवायुक्तां वीणावादकवादनक्रियारहितां वल्लकीं वीणामिव स्थिताम् । अयुक्तां रक्षसां वशे रक्षोधीनत्वेऽयोग्याम् ॥ २३ ॥

२४ ] ति० टी०—शोकसागरमाप्लुतां तत्र मग्नाम् । ताभी राक्षसीभिः सग्रहां क्रूरग्रहाविष्टाम् ॥ २४ ॥

गो० टी०—सीतामित्यादिपरशेषः । राक्षसीवशे अयुक्ताम् अनवस्थिताम् तद्वचनान्यशृण्वन्तीमित्यर्थः । लतां कुसुमितामिव तथा दर्शनीयामित्यर्थः ॥ २३–२५ ॥

२५–२६ ] ति० टी०—अकुसुमलतासादृश्यमाभरणत्यागात् वपुषा स्वरूपीयसहजसौन्दर्येण । कारकदीपकमत्रालंकारः, समुच्चयश्च ॥ २५ ॥ २६ ॥

२७–२८] ति० टी०—भर्तृतेजसा भर्तृपराक्रमानुसंधानेनादीनहृदयाम् ॥ २७ ॥ २८ ॥

२९ ] ति० टी०—दुःखस्य दुःखसागरस्य । अत्राधेयेनाधारनिगरणम् ॥ २९ ॥

३० ] ति० टी०—क्षामां कृशाम् । विनाभरणशोभिनीमाभरणानुग्रहमनपेक्ष्यैव सौन्दर्येण शोभमानाम् ॥ ३० ॥

रा० टी०—सेति । मलेन दिग्धं प्रवृद्धमङ्गं यस्याः सा वपुषा शरीरकान्त्या अलंकृता पङ्कदिग्धा कर्दमसंलग्ना मृणाली इव विभाति न भाति च । अर्धद्वयमेकान्वयि ॥ २५ ॥

रा० टी०—मलिनेति । मलिनेन अत एव परिक्लिष्टेन बाधितशोभेन वस्त्रेण संवृतां मृगशावाक्षीं मृगबालनयनसदृशनयनविशिष्टां दीनवदनां क्षीणमुखां भर्तृतेजसा रामतेजःस्मरणेन अदीनां दैन्यरहितचित्तां स्वेन स्वकीयेन शीलेन भर्तृविषयकसमाधिना रक्षिताम् असितलोचनां तां सीतां ददर्श । अर्धचतुष्टयमेकान्वयि ॥ २६ ॥ २७ ॥

गो० टी०—मलिनेनेत्यादिश्लोकद्वयमेकं वाक्यम् ॥२६॥२७॥

रा० टी०—तामिति । त्रस्तां मृगकन्यामिव समन्ततो वीक्षमाणां निःश्वासैर्वृक्षान् दहन्तीमिव शोकानां संघातमिव दुःखस्य दुःखोदधेः उत्थितां तामूर्मिमिव सुविभक्तानि अङ्गानि यस्यास्तां विनाऽऽभरणेन शोभिनीं प्रेक्ष्यमैथिलीं प्रेक्ष्या चासौ मैथिली चेति कर्मधारयस्तां सीतां दृष्ट्वा मारुतिः अतुलं प्रहर्षं लेभे । श्लोकत्रयमेकान्वयि ॥ २८–३० ॥

गो० टी०—तामित्यादिश्लोकत्रयमेकं वाक्यम् । क्षमां क्षमामिव स्थिताम् निगीर्याध्यवसानादभेदोक्तिः । तां दृष्ट्वा

१ भूषणामिति गो. पाठः । २ सीतामिति गो. पाठः । ३ वशे इति गो. पाठः । ४ राक्षसीवशे इति गो. पाठः । ५ सग्रहामिति गो. पाठः । ६ देवीं लतां कुसुमितामिवेति गो. पाठः । ७ क्षमामिति गो. पाठः ।

हर्षजानि च सोऽश्रूणि तां दृष्ट्वा मदिरेक्षणाम् । मुमोच हनुमांस्तत्र नमश्चक्रे च राघवम् ॥ ३१ ॥
नमस्कृत्वाऽथ रामाय लक्ष्मणाय च वीर्यवान् । सीतादर्शनसंहृष्टो हनुमान्संवृतोऽभवत् ॥ ३२ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये सुन्दरकाण्डे सप्तदशः सर्गः ॥ १७ ॥

## अष्टादशः सर्गः ।

शिंशुपाविटपाग्रस्थो हनुमानपररात्रे मदनपरवशं शतशःप्रमदावृतं सीतासविधं प्राप्नुवन्तं रावणं दृष्ट्वा तस्याङ्गप्रत्यङ्गस्फुटावलोकनाय शाखाग्रात्तूष्णीमवरुह्य शाखाधःप्रदेशे गूढं निलीय तस्थौ ।

तथा विप्रेक्षमाणस्य वनं पुष्पितपादपम् । विचिन्वतश्च वैदेहीं किंचिच्छेषा निशाऽभवत् ॥ १ ॥
षडङ्गवेदविदुषां क्रतुप्रवरयाजिनाम् । शुश्राव ब्रह्मघोषान्स विरात्रे ब्रह्मरक्षसाम् ॥ २ ॥
अथ मङ्गलवादित्रैः शब्दैः श्रोत्रमनोहरैः । प्राबोध्यत महाबाहुर्दशग्रीवो महाबलः ॥ ३ ॥
विबुध्य तु महाभागो राक्षसेन्द्रः प्रतापवान् । स्रस्तमाल्याम्बरधरो वैदेहीमन्वचिन्तयत् ॥ ४ ॥
भृशं नियुक्तस्तस्यां च मदनेन मदोत्कटः । न तु तं राक्षसः कामं शशाकात्मनि गूहितुम् ॥ ५ ॥
स सर्वाभरणैर्युक्तो बिभ्रच्छ्रियमनुत्तमाम् । तां नगैर्विविधैर्जुष्टां सर्वपुष्पफलोपगैः ॥ ६ ॥
वृतां पुष्करिणीभिश्च नानापुष्पोपशोभिताम् । सदा मत्तैश्च विहगैर्विचित्रां परमाद्भुतैः ॥ ७ ॥

---

तां प्रेक्ष्येत्यनयोर्विशेषणविशेष्यभेदान्न पौनरुक्त्यम् । दूरप्रयुक्तस्यानुस्मरणार्थं वा पुनरुक्तिः ॥ २८-३० ॥

३१ ] ति० टी०-राघवं नमश्चक्रे इति । भगवतो राघवस्यानुग्रहादेवेयं मया दृष्टेति पुनः पुनः स्मृत्वा नमस्कारः ॥ ३१ ॥

रा० टी०-हर्षेति । तां सीतां दृष्ट्वा हर्षजानि अश्रूणि मुमोच राघवं नमश्चक्रे च ॥ ३१ ॥

गो० टी०-हर्षजानीति । राघवं नमश्चक्रे उपपदविभक्त्यपेक्षया कारकविभक्तेर्बलीयस्त्वान्नमस्करोति देवानित्यादाविव द्वितीया ॥ ३१ ॥

३२ ] ति० टी०-संवृतोऽभवद्राक्षसीनां दर्शनपरिहाराय सूक्ष्मरूपमवलम्ब्य वृक्षमूलसमीपशाखासु निलीनोऽभवत् ॥ ३२ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये सुन्दरकाण्डे सप्तदशः सर्गः ॥ १७ ॥

रा० टी०-नमस्कृत्वेति । सीतादर्शनसंहृष्टो हनुमान् रामाय लक्ष्मणाय च नमस्कृत्वा संवृतः शाखाविशेषे निलीनोऽभवत् ॥ ३२ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ सुन्दरकाण्डे सप्तदशः सर्गः ॥ १७ ॥

गो० टी०-नमस्कृत्वेति । संवृतः राक्षस्यदर्शनाय शिंशुपापर्णैर्गूढोऽभूत् ॥ ३२ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने सप्तदशः सर्गः ॥ १७ ॥

१ ] ति० टी०-तथेति । किंचिच्छेषापरयाममात्रशेषा । विचिन्वतस्तस्याः स्पष्टदर्शनाय राक्षसीनिद्रारूपमवसरमन्वेषयतः ॥ १ ॥

रा० टी०-हनुमद्वृत्तान्तमेवाह-तथेत्यादिभिः । वैदेहीं विचिन्वतः अत एव तथा उक्तप्रकारेण वनं विप्रेक्षमाणस्य हनुमतो निशा किंचिच्छेषा अभवत् ॥ १ ॥

गो० टी०-तथेत्यादि । विप्रेक्षमाणस्य विचिन्वतश्च । विप्रेक्षमाणे विचिन्वति च तस्मिन्नित्यर्थः । "यस्य च भावेन-" इत्यर्थे षष्ठी ॥ १ ॥

२-३ ] ति० टी०-विरात्रे रात्रिविपर्यासे । अपररात्र इत्यर्थः । ब्रह्मरक्षसां ब्रह्म वेदस्तज्ज्ञरक्षसाम् तदेव स्पष्टीकृतम्-षडङ्गेत्यादिना ॥ २ ॥ ३ ॥

रा० टी०-षडङ्गेति । षडङ्गवेदविदुषां वेदवेदितॄणाम् अत एव क्रतुप्रवरयाजिनां ब्रह्मरक्षसां ब्राह्मणराक्षसानां ब्रह्मघोषान् वेदनिनदान् विरात्रे रात्र्यवसाने शुश्राव हनुमानिति शेषः ॥ २ ॥

रा० टी०-अथेति । मङ्गलवादित्रैः माङ्गलिकवाद्यवद्भिः राक्षसैः कर्तृभिः श्रोत्रमनोहरैः शब्दैः दशग्रीवः प्राबोध्यत ॥ ३ ॥

गो० टी०-षडङ्गेति । विरात्रे अपररात्रे "अहः सर्वैकदेशसंख्यातपुण्याच्च रात्रेः" इत्यत्र चकारादव्ययादुत्तरस्य रात्रिशब्दस्य समासान्तोऽच्प्रत्ययः । ब्रह्मरक्षसां ब्राह्मणत्वविशिष्टरक्षसाम् ब्रह्मघोषान् वेदघोषान् ॥ २-४ ॥

४ ] ति० टी०-निद्रावशादेव स्रस्तमाल्याम्बरधरः ॥ ४ ॥

रा० टी०-विबुध्येति । स्रस्तमाल्याम्बरधरो राक्षसेन्द्रः विबुध्य वैदेहीमन्वचिन्तयत् ॥ ४ ॥

५-७ ] ति० टी०-भृशं नियुक्तो गाढाभिनिवेशितचित्तः । कामे कामवेगम् । इष्टेषु तीर्थस्यान्यथायोजनं भ्रान्त्यैव । रक्षसस्तमोगुणाविष्टस्य भगवन्मायामोहितस्याकृत्येष्वेव प्रवृत्तेः तथा क्रियमाणं भगवद्ध्यानमपि पापभोगोत्तरं जन्मान्तरे

---

१ घोषांश्चेति गो.पाठः। २ प्राबुध्यतेति गो.पाठः। ३ यथाकालमिति गो.पाठः। ४ स इति गो.पाठः। ५ बहुभिरिति गो.पाठः। ६ अद्भुतामिति गो.पाठः।

ईहामृगैश्च विविधैर्वृतां दृष्टिमनोहरैः । वीथीः संप्रेक्षमाणश्च मणिकाञ्चनतोरणाम् ॥ ८ ॥
नानामृगगणाकीर्णां फलैः प्रपतितैर्वृताम् । अशोकवनिकामेव प्राविशत्संततद्रुमाम् ॥ ९ ॥
अङ्गनाः शतमात्रं तु तं व्रजन्तमनुव्रजन् । महेन्द्रमिव पौलस्त्यं देवगन्धर्वयोषितः ॥ १० ॥
दीपिकाः काञ्चनीः काश्चिज्जगृहुस्तत्र योषितः । वालव्यजनहस्ताश्च तालवृन्तानि चापराः ॥ ११ ॥
काञ्चनैश्चैव भृङ्गारैर्जह्रुः सलिलमग्रतः । मण्डलाग्रा बृसीश्चैव गृह्यान्याः पृष्ठतो ययुः ॥ १२ ॥
काचिद्रत्नमयीं पात्रीं पूर्णां पानस्य भ्राजतीम् । दक्षिणा दक्षिणेनैव तदा जग्राह पाणिना ॥ १३ ॥
राजहंसप्रतीकाशं छत्रं पूर्णशशिप्रभम् । सौवर्णदण्डमपरा गृहीत्वा पृष्ठतो ययौ ॥ १४ ॥
निद्रामदपरीताक्ष्यो रावणस्योत्तमस्त्रियः । अनुजग्मुः पतिं वीरं घनं विद्युल्लता इव ॥ १५ ॥

---

उत्तमफलायेति बोध्यम्, अत एव ऋक्षाश्वमेधनाम्नो राज्ञो दानस्तावको ऋङ्मन्त्रः—'न युष्मे वाजबन्धवो निनित्सुश्च न मर्त्यः । अवद्यमधि दीधरत ॥' इति । तस्यार्थः—वाजमित्यन्ननाम । अन्नदानेन ये सर्वेषां बन्धवस्तेषां संबोधनं हे वाजबन्धवः ! युष्मे युष्मास्वधि । सप्तम्यर्थानुवाद्यधिः । निनित्सुश्च न निन्दनेच्छाशीलोऽपि मर्त्योऽवद्यं न दीधरन्न धारयति । भगवदनुसंधानेनैव निष्पापत्वादिति । एवं च भगवतो निन्दावरुद्धभावेन ध्यानमपि नरकभोगोत्तरं जन्मान्तरे उत्तमफलाय अत एवास्य मरणोत्तरं चतुर्थचतुर्युग्यां चेदिराजकुले जन्म, चतुर्विंशतिचतुर्युग्यां रामावतार इति हरिवंशोक्तेस्तावत्पर्यन्तं चैतत्पापफलभोग इत्यर्थायातमिति बोध्यम् ॥ ६–७ ॥

८–९ ] ति० टी०–वीथीरशोकवनिकामार्गगमनवीथीः८॥९

रा० टी०–भृशमिति । मदनेन मादकसुरापानादिना मदोत्कटः उत्कटदैन्यविशिष्टोऽपि राक्षसः यतस्तस्यां सीतायां भृशमत्यन्तं नियुक्तः संस्थापितचित्तः अतः तं सीतागोपनविषयकं काममिच्छामात्मनि मनसि गूहितुं नियमितुं न शशाक ६

गो० टी०–भृशमिति । नियुक्तः प्रेरितः ॥ ५ ॥

रा० टी०–स इति । अनुत्तमाम् अत्युत्तमां श्रियं बिभ्रत्स रावणः सर्वपुष्पफलान्युपगच्छन्ति तैर्नगैस्तरुभिर्जुष्टां संततद्रुमां नित्यं द्रुमविशिष्टामशोकवनिकां विथीः मार्गान् संप्रेक्षमाणः सन् प्राविशत् । श्लोकचतुष्टयमेकान्वयि ॥ ६–९॥

गो० टी०–स इत्यादि । वीथीः उद्यानवीथीः ॥ ६–९ ॥

१० ] ति० टी०–अङ्गनाः शतमात्रमित्यवधारणे इति कतकः । देवादियोषितो महेन्द्रमिव पौलस्त्यं रावणमनुव्रजन् । अडभाव आर्षः ॥ १० ॥

रा० टी०–अङ्गना इति । देवगन्धर्वयोषितो महेन्द्रमिव व्रजन्तं पौलस्त्यं तं रावणं शतमात्रमङ्गनाः अनुव्रजन् अन्वव्रजन् ॥ १० ॥

गो० टी०–अङ्गनेति । महेन्द्रं देवगन्धर्वयोषित इव व्रजन्तम् तम् अङ्गनाशतमात्रम् अनुव्रजत् अन्वव्रजत् ॥ १० ॥

११ ] ति० टी०–काञ्चनीः काञ्चनदण्डाः । वालव्यजनहस्ता इत्यस्यान्वव्रजन्निति शेषः तालवृन्तानीत्यस्य जगृहुरिति । अनेन लङ्कायां हेमन्तशिशिरयोरपि शीताभावो ध्वनितः ॥ ११ ॥

रा० टी०–अङ्गनागमनप्रकारमाह—दीपिका इत्यादिभिः । काश्चिद्दीपिका जगृहुः काश्चित्तालवृन्तानि जगृहुः काश्चित् वालव्यजनहस्ताः चामरकरा अगच्छन्निति शेषः ॥ ११ ॥

गो० टी०–दीपिका इति । तालवृन्तानि व्यजनानि ११

१२ ] ति० टी०–भृङ्गारैः कलशैः । धत्तूरकुसुमसदृशजलपात्रैरित्यर्थ इति तीर्थः । मण्डलाग्रा वृत्तपर्यन्ताः बृसीरासनविशेषान् तपस्विनामिमे तृणादिना, अस्य तु स्वर्णेनेति विशेषः ॥ १२ ॥

रा० टी०–काञ्चनैरिति । काश्चित् काञ्चनैः भृङ्गारैः कलशैः अग्रतः अग्रे सलिलं जह्रुः प्रापयामासुः, अन्याः मण्डलाग्राः मण्डलाकाराणि अग्राणि यासां ताः बृसीः आसनविशेषान् गृह्य गृहीत्वा पृष्ठतो ययुः ॥ १२ ॥

गो० टी०–काञ्चनैरिति । भृङ्गारैः कनकालुकाभिः । 'भृङ्गारः कनकालुका' इत्यमरः । मण्डलाग्रान् असिविशेषान् 'मण्डलाग्रो नतार्थकः' इति वैजयन्ती । बृसीम् आस्तरणम् । गृह्य गृहीत्वा ॥ १२ ॥

१३–१५ ] ति० टी०–पानस्य पूर्णां पानेन पूर्णाम् शेषे षष्ठी । भ्राजतीं देदीप्यमानाम् । दक्षिणाऽनुकूला॥१३-१५॥

रा० टी०–काचिदिति । पूर्णां पेयपूरितां रत्नमयीं पानस्य पात्रीं दक्षिणेनैव पाणिना काचिद्दक्षिणा निपुणा जग्राह ॥ १३ ॥

रा० टी०–राजेति । अपरा छत्रं गृहीत्वा पृष्ठतो ययौ॥१४॥

रा० टी०–निद्रेति । निद्रामदेन परीतानि युक्तानि अक्षीणि यासां ताः रावणस्य उत्तमाः स्त्रियः विद्युल्लताः घनमिवानुजग्मुः ॥ १५ ॥

गो० टी०–काचिदिति । पानस्य पूर्णां पीयत इति पानं मधु तस्य पूर्णां तेन पूर्णाम् । "पूरणगुण–" इत्यादिना सुहितार्थयोगे षष्ठीसमासनिषेधज्ञापकादत्र षष्ठी । स्थालीं पात्रीम् ॥ १३–१५ ॥

---

१ तोरणा इति गो. पाठः । २ अङ्गनाशतमात्रं तु तं व्रजन्तमनुव्रजदिति गो. पाठः । ३ का[illegible]इति गो. पाठः । ४ मण्डलाग्रान्बृसीं चैवेति गो. पाठः । ५ स्थालीमिति. गो. पाठः । ६ [illegible]मानीति गो. पाठः । ७ उत्तमाः स्त्रिय इति गो. रा. पाठः ।

व्याविद्धहारकेयूराः समामृदितवर्णकाः । समागलितकेशान्ताः सस्वेदवदनास्तथा ॥ १६ ॥
घूर्णन्त्यो मदशेषेण निद्रया च शुभाननाः । स्वेदक्लिष्टाङ्गकुसुमाः समाल्याकुलमूर्धजाः ॥ १७ ॥
प्रयान्तं नैर्ऋतपतिं नार्यो मदिरलोचनाः । बहुमानाच्च कामाच्च प्रियभार्यास्तमन्वयुः ॥ १८ ॥
स च कामपराधीनः पतिस्तासां महाबलः । सीतासक्तमना मन्दो मन्दाञ्चितगतिर्बभौ ॥ १९ ॥
ततः काञ्चीनिनादं च नूपुराणां च निःस्वनम् । शुश्राव परमस्त्रीणां कपिर्मारुतनन्दनः ॥ २० ॥
तं चाप्रतिमकर्माणमचिन्त्यबलपौरुषम् । द्वारदेशमनुप्राप्तं ददर्श हनुमान्कपिः ॥ २१ ॥
दीपिकाभिरनेकाभिः समन्तादवभासितम् । गन्धतैलावसिक्ताभिर्ध्रियमाणाभिरग्रतः ॥ २२ ॥
कामदर्पमदैर्युक्तं जिह्मताम्रायतेक्षणम् । समक्षमिव कन्दर्पमपविद्धशरासनम् ॥ २३ ॥
मथितामृतफेनाभमरजोवस्त्रमुत्तमम् । सपुष्पमवकर्षन्तं विमुक्तं सक्तमङ्गदे ॥ २४ ॥
तं पत्रविटपे लीनः पत्रपुष्पशतावृतः । समीपमुपसंक्रान्तं विज्ञातुमुपचक्रमे ॥ २५ ॥
अवेक्षमाणस्तु तदा ददर्श कपिकुञ्जरः । रूपयौवनसंपन्ना रावणस्य वरस्त्रियः ॥ २६ ॥

---

१६ ] ति० टी०—व्याविद्धाः स्थानादीषच्चलिताः । सम्यगामृदितो मृष्टो वर्णकोऽङ्गलेपनं यासां ताः ॥ १६ ॥

१७ ] ति० टी०—समाल्याः सपुष्पा आकुला मूर्धजा यासां ताः ॥ १७ ॥

१८ ] ति० टी०—मदिरलोचना मदकरवीक्षणाः । बहुमानाद्भर्तृकृतसंमानात् । कामात्स्वीयात् ॥ १८ ॥

रा० टी०—व्याविद्धेति । व्याविद्धाः स्वस्वस्थानात् किंचिच्चलिता इत्यर्थः, हारकेयूरा यासां समामृदितवर्णकाः अपगताङ्गरागाः समागलितकेशान्ताः प्रस्खलितकेशान्तभागाः सस्वेदानि स्वेदविशिष्टानि वदनानि यासां ताः मदशेषेण निद्रया च घूर्णन्त्यः स्वेदेन क्लिष्टानि बाधितानि अङ्गकुसमानि यासां ताः समाल्या मालासहिता आकुलाः किंचित्कम्पिताः मूर्धजाः केशा यासां ताः प्रियाऽऽभा दीप्तिर्यासां ता एवार्याः नार्यो रावणपत्न्यः बहुमानात् रावणकृतातिसत्कारात् कामात् सीतादर्शनेच्छातश्च हेतोः तं रावणमन्वयुः । श्लोकत्रयमेकान्वयि ॥ १६-१८ ॥

गो० टी०—व्याविद्धेति । व्याविद्धाःव्यत्यस्ततया न्यस्ताः । समामृदितवर्णकाः संमृष्टानुलेपनाः 'अङ्गरागः समालम्भो वर्णकश्च विलेपनम्' इति निघण्टुः ॥ १६-१८ ॥

१९-२० ] ति० टी०—मन्दो दुर्मतिः । मन्दं यथा तथाञ्चिता गतिर्यस्य ॥ १९ ॥ २० ॥

रा० टी०—स इति । कामपराः तद्भार्याः तासामधीनः ता अधीना यस्येति वा स तासां पतिः महाबलः स रावणः सीतायां सीतादर्शने आसक्तं मनो यस्य मन्दाञ्चिता मन्दत्वं प्राप्ता गतिर्यस्य सः मन्दः सीताहरणकर्तृत्वज्ञापितमन्दमतिविशिष्टः स रावणो बभौ ॥ १९ ॥

रा० टी०—तत इति । ततस्तस्मिन्समये परमस्त्रीणां काञ्चीनिनादं नूपुराणां निस्स्वनं च मारुतनन्दनः शुश्राव ॥२०॥

गो० टी०—स चेति । मदेनाञ्चिता गतिर्यस्य स मदाञ्चितगतिः ॥ १९ ॥ २० ॥

२१ ] ति० टी०—द्वारदेशमशोकवनिकाप्राकारदेशम् ॥ २१ ॥

रा० टी०—तमिति । अप्रतिमकर्माणं सीताहरणकर्तृत्वेन स्वसदृशगर्हितकर्मरहितं द्वारदेशमनुप्राप्तं तं रावणं हनूमान् ददर्श ॥ २१ ॥

गो० टी०—तं चेत्यादि । द्वारदेशम् अशोकवनद्वारदेशम् । गन्धतैलं गन्धवासिततैलम् । समक्षं प्रत्यक्षम् । अपविद्धशरासनम् अधृतशरासनम् मथितामृतफेनाभं मथितम् तक्रम् अमृतं धारोष्णं तयोर्यद्वा फेनं तदाभम् 'निरम्बु घोलं मथितं धारोष्णं त्वमृतं पयः' इत्युभयत्र वैजयन्ती । विमुक्तं स्वस्थानात्प्रचलितम् अङ्गदे सक्तं वस्त्रं सलीलं यथा भवति तथा अनुकर्षन्तमित्यन्वयः ॥ २१-२४ ॥

२२ ] ति० टी०—दीपिकाभिर्भासितम् । रात्रिशेषसत्त्वात् द्वादश्यां यामावशिष्टरात्रौ चन्द्रस्यास्तगमनाच्च ॥ २२ ॥

२३ ] ति० टी०—जिह्मा द्विगुणके ईक्षणे यस्य तम् समक्षं प्रत्यक्षं कन्दर्पमिव स्थितम् अपविद्धशरासनं त्यक्तेक्षुचापम् ॥ २३ ॥

२४ ] ति० टी०—अमृतं पयः मथितपयःफेनवच्छुक्ला आभा यस्य तत् अरजो धौतम् सपुष्पं पुष्पमालासहितं विमुक्तं विशिष्टमुक्तावन्तम् । यद्वा स्थानाच्युतमङ्गदे सक्तं वस्त्रमवकर्षन्तमङ्गदादाकृष्य यथास्थाने स्थापयन्तम् । 'सपुष्पमवकर्षन्तम्' इत्येव पाठः । तीर्थस्तु—एतद्योजनाशक्त्या 'सलीलमवकर्षन्तम्' इति पाठं कल्पयति ॥ २४ ॥

२५-२६ ] ति० टी०—पत्रविटपे निबिडपत्रशाखायाम् विज्ञातुमयमसुक इति विशेषेण ज्ञातुम् । 'निध्यातुम्' इति पाठेऽप्ययमेवार्थः ॥ २५ ॥ २६ ॥



१ स्विति गो. पाठः । २ प्रिया भार्या इति गो. पाठः । ३ स कपिर्मारुतात्मज इति गो. पाठः । ४ कर्माणमिति गो. पाठः । ५ सलीलमन्विति गो. पाठः । ६ तत इति गो. पाठः ।

ताभिः परिवृतो राजा सुरूपाभिर्महायशाः । तन्मृगद्विजसंघुष्टं प्रविष्टः प्रमदावनम् ॥ २७ ॥
क्षीबो विचित्राभरणः शङ्कुकर्णो महाबलः । तेन विश्रवसः पुत्रः स दृष्टो राक्षसाधिपः ॥ २८ ॥
वृतः परमनारीभिस्ताराभिरिव चन्द्रमाः । तं ददर्श महातेजास्तेजोवन्तं महाकपिः ॥ २९ ॥
रावणोऽयं महाबाहुरिति संचिन्त्य वानरः । सोऽयमेव पुरा शेते पुरमध्ये गृहोत्तमे ॥
अवप्लुतो महातेजा हनूमान्मारुतात्मजः ॥ ३० ॥
स तथाप्युग्रतेजाः स निर्धूतस्तस्य तेजसा । पत्रे गुह्यान्तरे सक्तो मतिमान्संवृतोऽभवत् ॥ ३१ ॥
स तामसितकेशान्तां सुश्रोणीं संहतस्तनीम् । दिदृक्षुरसितापाङ्गीमुपावर्तत रावणः ॥ ३२ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये सुन्दरकाण्डेऽष्टादशः सर्गः ॥ १८ ॥

---

रा० टी०—दीपिकाभिरिति । गन्धतैलैः अवसिक्ताभिः अग्रतो ध्रियमाणाभिः दीपिकाभिः समन्तादवभासितं कामदर्पमदैः कामः परद्रव्याद्यपहरणेच्छा, दर्पः स्वात्यैश्वर्यजनितगर्वः, मदः तज्जनितानन्दः तैर्युक्तं जिह्मे कापट्यबोधके ताम्रे अरुणे ईक्षणे नेत्रे यस्य तम् अपविद्धशरासनं त्यक्तकुसुमबाणं समक्षं प्रत्यक्षं कन्दर्पमिव मथितामृतफेनस्य आभा इव आभा यस्य तत् अतिश्वेतमित्यर्थः, अरजः रजोहीनं सपुष्पम् अनेकविधपुष्पविशिष्टं विमुक्तं विशेषमुक्ताविशिष्टम् अङ्गदे सक्तम् उत्तमं वस्त्रम् अवकर्षन्तं समीपमुपसंक्रान्तं प्राप्तं तं रावणं पत्रविटपे विपुलपत्रविशिष्टशाखायां लीनः अत एव पत्रपुष्पाणां शतैरावृतो हनूमान् विज्ञातुमुपचक्रमे 'निध्यातुं' इतिपाठेऽप्ययमेवार्थ इति भट्टाः । श्लोकचतुष्टयमेकान्वयि ॥ २२–२५ ॥

रा० टी०—अवेक्षमाण इति । अवेक्षमाणो विशेषज्ञानाय रावणं निरीक्षमाणः कपिकुञ्जरः रावणस्य वरस्त्रियो ददर्श ॥२६॥

गो० टी०—तामिति । पत्रविटपे पत्रवति विटपे लीनः छन्नः पत्रपुष्पघनावृतः पत्रपुष्पसमूहावृतः इवशब्दो वाक्यालंकारे । यद्वा दूरे समागतमपि तेजसा समीपे संक्रान्तमिव स्थितम् तं निध्यातुं द्रष्टुमुपचक्रमे 'निर्वर्णनं तु निध्यानं दर्शनालोकनेक्षणम्' इत्यमरः ॥ २५ ॥ २६ ॥

२७] ति० टी०—प्रमदानां क्रीडार्हं वनं प्रमदावनम् ॥२७॥

रा० टी०—ताभिरिति । सुरूपाभिस्ताभिः स्त्रीभिः परिवृतः मृगद्विजसंघुष्टं प्रमदावनं नारीविहारारण्यं प्रविष्टः क्षीबो मत्तः शङ्कुकर्णः स्तब्धीभूतश्रोत्रविशिष्टः विश्रवसः पुत्रस्तेन हनूमता दृष्टः । श्लोकद्वयमेकान्वयि ॥ २७ ॥ २८ ॥

गो० टी०—ताभिरिति । प्रमदावनम् अन्तःपुरोद्यानम् २७

२८–२९ ] ति० टी०—शङ्कुकर्णनामा तद्वनरक्षी राक्षसस्तेन विश्रवसः पुत्रो राक्षसो रावणो दृष्टः नान्येन केनापि पुरुषेणेत्यर्थः ॥ २८ ॥ २९ ॥

रा० टी०—तदेव भङ्ग्यन्तरेणाह—वृत इति । ताराभिः चन्द्रमा इव नारीभिर्यो वृतः तं रावणं महाकपिर्ददर्श ॥ २९ ॥

गो० टी०—क्षीब इति । क्षीबः मत्तः । शङ्कुकर्णः गर्वेण स्तब्धकर्ण इत्यर्थः ॥ २८ ॥ २९ ॥

३० ] ति० टी०—यः पुरमध्ये पुरा शेते शयितः सोऽयमेवेत्यन्वयः तस्माद्रावणोऽयमिति संचिन्त्यावप्लुतः । स्वाश्रितशाखाया अत्यूर्ध्वशाखान्तर इति शेषः ॥ ३० ॥

रा० टी०—रावण इति । पुरमध्ये गृहोत्तमे यः पुरा शेते स रावणोऽयमेव इति संचिन्त्य अयं मद्बुद्धिस्थो हनूमान् अवप्लुतः स्वाधिष्ठितशाखायाः ऊर्ध्वशाखां प्राप्तः । सार्धश्लोक एकान्वयी ॥ ३० ॥

गो० टी०—रावणोऽयमिति । अवप्लुतः अवरूढः रावणचेष्टाः सर्वा द्रष्टुं पूर्वस्थानादधःशाखां समाश्रित इत्यर्थः॥३०॥

३१ ] ति० टी०—यद्यपि स समुद्रलङ्घनकर्ता, स मारुतात्मजो हनूमानुग्रतेजा तथापि तस्य रावणस्य तेजसा निर्धूतस्तस्य पुरोऽवस्थातुमशक्नुवन्पत्रे पत्रबहुले अत एव गुह्यान्तरे शाखान्तरे सक्तः स्थितः । तत्राप्यत्यल्पशरीरतया संवृतो गुप्तोऽभवत् सर्वमायातिरस्कारकमायावतस्तस्य दृष्ट्यग्रे माययाल्पशरीरादिमत्त्वेन स्थातुमशक्यत्वादेवं करणम् ॥ ३१ ॥

रा० टी०—स इति । यद्यपि स हनूमान् उग्रतेजास्तथापि तस्य रावणस्य तेजसा सनिर्धूतः कार्यविशेषसाधनाय निर्धूतत्वसहितः सन् गुह्यान्तरे छन्नशाखान्तरे सक्तः सन् संवृतोऽभवत् ॥ ३१ ॥

गो० टी०—स इति । सः हनुमान् तथा पूर्वोक्तरीत्या उग्रतेजाः सन्नपि तस्य रावणस्य तेजसा निर्धूतः सन् पत्रगुह्यान्तरे पत्रगूढप्रदेशे संवृतोऽभवत् गूढोऽभवत् ॥ ३१ ॥ ३२ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्यानेऽष्टादशः सर्गः ॥ १८ ॥

३२ ] ति० टी०—उपावर्तत समीपं प्राप्तः ॥ ३२ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये सुन्दरकाण्डेऽष्टादशः सर्गः ॥ १८ ॥

रा० टी०—स इति । सतां सज्जनानां दर्शनयोग्याम् ।

---

१ अर्धमेतत् गो. नास्ति । २ पत्रगुह्यान्तर इति गो. पाठः । ३ अपाङ्गामिति गो. पाठः ।

# एकोनविंशः सर्गः ।

रावणभयेन वेपमानायाः परिम्लानायाश्च जानक्यास्तात्कालिकमवस्थाविशेषं वर्णयितुमपारयन्निव कविरनेकोपमानैस्तां विशिनष्टि । प्राप्तो रावणस्तामावर्जयितुमुपक्रमते ।

तस्मिन्नेव ततः काले राजपुत्री त्वनिन्दिता । रूपयौवनसंपन्नं भूषणोत्तमभूषितम् ॥ १ ॥
ततो दृष्ट्वैव वैदेही रावणं राक्षसाधिपम् । प्रावेपत वरारोहा प्रवाते कदली यथा ॥ २ ॥
ऊरुभ्यामुदरं[1] छाद्यं बाहुभ्यां च पयोधरौ । उपविष्टा विशालाक्षी रुदती[2] वरवर्णिनी ॥ ३ ॥
दशग्रीवस्तु वैदेहीं[4] रक्षितां राक्षसीगणैः[3] । ददर्श दीनां दुःखार्तां नावं सन्नामिवार्णवे ॥ ४ ॥
असंवृतायामासीनां धरण्यां संशितव्रताम् । छिन्नां प्रपतितां भूमौ शाखामिव वनस्पतेः ॥ ५ ॥
मलमण्डनदिग्धाङ्गीं[5] मण्डनार्हाममण्डनाम् । मृणाली पङ्कदिग्धेव विभाति न विभाति च ॥ ६ ॥
समीपं राजसिंहस्य रामस्य विदितात्मनः । संकल्पहयसंयुक्तैर्यान्तीमिव मनोरथैः ॥ ७ ॥
शुष्यन्तीं रुदतीमेकां ध्यानशोकपरायणाम् । दुःखस्यान्तमपश्यन्तीं रामां राममनुव्रताम् ॥ ८ ॥

---

असितकेशान्तां सीतां दिदृक्षुः रावणः उपावर्तत तत्समीपं प्राप ॥ ३२ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ सुन्दरकाण्डेऽष्टादशः सर्गः ॥ १८ ॥

१-२ ] ति॰ टी॰—ततो हनूमतः प्लवनानन्तरम् । तस्मिन्नेव कालेऽपररात्ररूपे आगमनकाल एव रावणं दृष्ट्वा ततोऽनन्तरं प्रावेपत ॥ १ ॥ २ ॥

रा॰ टी॰—रावणदर्शनानन्तरकालिकं सीतावृत्तान्तमाह—तस्मिन्नित्यादिभिः । तस्मिन् हनुमत्प्लवनसंबन्धिनि काले एव राजपुत्री ततः सा सीता भूषणोत्तमभूषितं ततस्तं रावणं दृष्ट्वैव प्रवाते कदली इव प्रावेपत । श्लोकद्वयमेकान्वयि ॥१॥२॥

गो॰ टी॰—तस्मिन्नित्यादिश्लोकद्वयमेकान्वयम् । ततः रावणागमनानन्तरम् । तस्मिन्नेव काले तदागमनानन्तरकाल एव । भूषणोत्तमभूषितं रूपयौवनसंपन्नं रावणं ततो दृष्ट्वैव तत्र दूरदेश एव दृष्ट्वा प्रावेपतेति संबन्धः ॥ १-३ ॥

३ ] ति॰ टी॰—रुदत्युपविष्टाऽभूत् । भीतस्वभावोक्त्या स्वभावोक्तिरत्रालंकारः ॥ ३ ॥

रा॰ टी॰—ऊरुभ्यामिति । वरवर्णिनी सीता ऊरुभ्यामुदरं बाहुभ्यां पयोधरौ च छाद्य आच्छाद्य रुदती सती उपविष्टा ॥ ३ ॥

४ ] ति॰ टी॰—सन्नां शीर्णाम् । शीर्णनौस्थं जनमिवेत्यर्थः ॥ ४ ॥

५ ] ति॰ टी॰—असंवृतायामास्तरणरहितायाम् । संशितव्रतां रावणवधाय तीक्ष्णं व्रतमिव कुर्वाणाम् ॥ ५ ॥

रा॰ टी॰—ददर्शेति । अर्णवे सन्नां निमग्नां नावमिव दुःखार्तां दुःखसागरे निमग्नाम् अत एव दीनां संशितव्रतां देवादिरक्षणाय उग्रसंकल्पाम् अत एव छिन्नां भूमौ प्रपतितां वनस्पतेः शाखामिव असंवृतायां धरण्यामासीनां मलमण्डनेन मलरूपभूषणेन दिग्धं व्याप्तमङ्गं यस्याः अमण्डनां भूषणरहितां वैदेहीं दशग्रीवो ददर्श । सार्धश्लोकद्वयमेकान्वयि ॥ ४ ॥ ५ ॥

गो॰ टी॰—दशग्रीवस्त्वित्यादि । मलमण्डनचित्राङ्गीं मलरूपमण्डनेन चित्राङ्गीम् मलावृतामप्याश्चर्यावहदेहामित्यर्थः । मृणाली पङ्कदिग्धेवेत्यत्र येत्यध्याहार्यम् ॥ ४-६ ॥

६ ] ति॰ टी॰—मलेन मण्डनस्थानेषु दिग्धाङ्गीं रूपिताङ्गीम् । 'चित्राङ्गीम्' इति पठित्वा मलरूपेण मण्डनेन चित्राङ्गीं कर्बुरामित्यर्थं तीर्थ आह । संन्यासित्वादुचितैव तस्य मलेऽपि मण्डनत्वबुद्धिः । ईदृशीं यां ददर्श सा पङ्कदिग्धा मृणालीव विभाति न विभाति च । स्वरूपशोभयातिमलावरणाच्च न विभातीत्यर्थः ॥ ६ ॥

रा॰ टी॰—मृणालीति । पङ्कदिग्धा मृणाली इव विभाति न विभाति च सीतेति शेषः । अर्धं पृथक् ॥ ६ ॥

७ ] ति॰ टी॰—संकल्पस्तच्चिन्तनं तद्रूपाश्वसंयुक्तैर्मनोरथै रामसमीपं यान्तीमिव ॥ ७ ॥

रा॰ टी॰—समीपमिति । संकल्पहयैः संकल्परूपाश्वैः संयुक्तैर्मनोरथैर्विदितात्मनः सामान्यतः प्रसिद्धस्वरूपस्य रामस्य समीपं यान्तीमिव शुष्यन्तीमिव ॥ ७ ॥

गो॰ टी॰—समीपमित्यादि । आविद्धां मणिमन्त्राद्यभिभूताम् धूप्यमानां सन्तप्यमानाम् धूमः केतुरिव धूमकेतुः (?) । केतुना ग्रहेणेत्यर्थः । यद्वा ग्रहेण ग्राहकेण आच्छादकेनेति धूमकेतुर्विशिष्यते ॥ ७-९ ॥

८ ] ति॰ टी॰—अपश्यन्तीं तामिव ॥ ८ ॥

रा॰ टी॰—दुःखस्यान्तमपश्यन्तीम् ॥ ८ ॥

---

१ आच्छाद्योदरमूरुभ्यामिति गो. पाठः । २ रुदन्तीति गो. पाठः । ३ गणे इति रा. पाठः । ४ सीतामिति गो. पाठः । ५ चित्राङ्गीमिति गो. पाठः ।

चेष्टमानामथाविष्टां पन्नगेन्द्रवधूमिव । धूप्यमानां ग्रहेणेव रोहिणीं धूमकेतुना ॥ ९ ॥
वृत्तशीले कुले जातामाचारवति धार्मिके । पुनः संस्कारमापन्नां जातामिव च दुष्कुले ॥ १० ॥
[ अभूतेनापवादेन कीर्तिं निपतितामिव । आम्नायानामयोगेन विद्यां प्रशिथिलामिव ॥ ]
सन्नामिव महाकीर्तिं श्रद्धामिव विमानिताम् । प्रज्ञामिव परिक्षीणामाशां प्रतिहतामिव ॥ ११ ॥
आयतीमिव विध्वस्तामाज्ञां प्रतिहतामिव । दीप्तामिव दिशं काले पूजामपहृतामिव ॥ १२ ॥
पौर्णमासीमिव निशां तमोग्रस्तेन्दुमण्डलाम् । पद्मिनीमिव विध्वस्तां हतशूरां चमूमिव ॥ १३ ॥
प्रभामिव तमोध्वस्तामुपक्षीणामिवापगाम् । वेदीमिव परामृष्टां शान्तामग्निशिखामिव ॥ १४ ॥
उत्कृष्टपर्णकमलां वित्रासितविहङ्गमाम् । हस्तिहस्तपरामृष्टामाकुलामिव पद्मिनीम् ॥ १५ ॥

---

९ ] ति० टी०—आविष्टां मन्त्राद्यवरुद्धाम् धूप्यमानां संतप्यमानाम् धूमवर्णेन केतुना ॥ ९ ॥

रा० टी०—आविष्टाम् औषधादिना निरुद्धां चेष्टमानां विविधं चेष्टां कुर्वतीं पन्नगेन्द्रवधूमिव धूमकेतुना ग्रहेण धूप्यमानां संताप्यमानां रोहिणीमिव ॥ ९ ॥

१० ] ति० टी०—वृत्तमाचारः, शीलं सत्स्वभावः, तद्युते विहितकर्मानुष्ठानवति च कुले जाताम् तादृश एव कुले पुनः संस्कारं पाणिग्रहणसंस्कारमापन्नामपि दुष्कुले जातामुत्पन्नां तत्रैव प्राप्तसंस्कारामिव च मलिनां स्थिताम् । स्त्रीणां विवाहस्यैवोपनयनद्वितीयजन्मस्थानत्वादिति भावः ॥ १० ॥

रा० टी०—वृत्तम् अतिशयेन प्रवृत्तं शीलं यस्मिन् तदेव कुलं तस्मिन् जातां दुष्कुले राक्षसकुले जातामिव राक्षसपुरस्थितात्वेन तत्र जातात्वेन प्रतीयमानामित्यर्थः, पुनः संस्कारम् आपन्नां प्राप्तामिव तत्संसर्गाभाववत्स्थितया कृतसंस्कारात्वेन प्रतीयमानामित्यर्थः ॥ १० ॥

गो० टी०—वृत्तेति वृत्तं दृढं शीलं स्वभावो यस्य तत् तच्च तत् कुलं च तस्मिन् आचारवति समयाचारवति धार्मिके यज्ञादिधर्मप्रधाने एवंभूते कुले जाताम् संस्कारमापन्नां विवाहरूपसंस्कारमापन्नाम् अतः संस्कारद्वारा दुष्कुले पुनर्जातामिव स्थिताम् कुमाराणामुपनयनमिव कुमारीणां विवाहो द्वितीयं जन्म 'वैवाहिको विधिः स्त्रीणामौपनायनिकः स्मृतः' इति स्मृतेः ॥ १० ॥ ११ ॥

११] ति०टी०—सन्नां क्षीणाम् विमानितामनादृताम् ॥ ११ ॥

रा०टी०—सन्नां दुर्जनेन अन्यथा कथ्यमानां विमानिताम् अनादृतां श्रद्धामिव परिक्षीणां वितण्डादिना अन्यथा कीर्त्यमानां प्रज्ञामिव ॥ ११ ॥

गो० टी०—सन्नां क्षीणाम् श्रद्धामिव विमानिताम् अवमानितामित्यर्थः । अवमाने हि कृते अवमन्तरि श्रद्धा मन्दीभवति पूजामिव परिक्षीणां स्वल्पपूजाद्रव्यामित्यर्थः। प्रतिहतां निष्फलाम् ॥ १२ ॥

१२ ] ति० टी०—आयती धनादिप्राप्तिः । आज्ञा राज्ञ इति शेषः । काल उत्पातकाले । पूजां देवपूजाम् ॥ १२ ॥

रा०टी०—प्रतिहतां विषयालाभान्निवृत्तनाशामिव विध्वस्तां कथञ्चिन्निवारिताम् । उत्तरकालकवृद्धिमिव प्रतिहतां केनचिदकृताम् । आज्ञां राजानुशासनमिव काले उत्पातसमये दीप्तां दिशमिव अपहृतां कथञ्चित् अन्यथा कृतां पूजामिव ॥ १२ ॥

गो० टी०—आयतीं धनलाभम् । विध्वस्तां मन्दीभूताम् प्रतिहताम् अननुष्ठिताम् दीप्तां दाहयुक्ताम् काले उत्पातकाले । पूजामपहृतामिव । अत्र पूजाशब्देन पूजाद्रव्यमुच्यते ॥ १३ ॥

१३ ] ति० टी०—पौर्णमासीं तत्संबन्धिनीम् । तमो राहुः ॥ १३ ॥

रा० टी०—तमसा राहुणा ग्रस्तमिन्दुमण्डलं यस्यां तां पौर्णमासीं निशामिव विध्वस्तां हिमादिना परिणतां पद्मिनीमिव हतशूरां चमूमिव ॥ १३ ॥

गो० टी०—विध्वस्तां हिमादिहताम् तमोध्वस्तां तमःसंवृताम् उपक्षीणां स्वल्पजलामित्यर्थः ॥ १४ ॥

१४ ] ति० टी०—प्रभां रविप्रकाशम् । तमोऽन्धकारः । परामृष्टां वेदवेदिरहितपतितैराक्रान्ताम् ॥ १४ ॥

रा० टी०—तमोध्वस्ताम् अन्धकारावृतां प्रभां सूर्यप्रकाशमिव उपक्षीणां वृष्टिनिवृत्त्या अल्पीभूताम् आपगां गङ्गामिव परामृष्टां चाण्डालेन स्पृष्टां देवीं तत्प्रतिमामिव ॥ १४ ॥

गो० टी०—परामृष्टां शूद्रादिभिरिति शेषः ॥ १५ ॥

१५ ] ति० टी०—उत्कृष्टानि त्रुटितानि पर्णानि कमलानि यस्याः सा ॥ १५ ॥

रा० टी०—हस्तिहस्तपरामृष्टाम् अत एव उत्कृष्टानि परिध्वस्तानि पर्णानि कमलानि च यस्यास्ताम् अत एव वित्रासिता विहङ्गमा यस्यां ताम् अत एव आकुलां कलुषीकृतां पद्मिनीं सरसीमिव ॥ १५ ॥

गो० टी०—उत्कृष्टपर्णकमलाम् उद्धृतपत्रकमलाम् ॥ १६ ॥



---

१ वेष्टमानामिति गो. पा.। २ श्लोकोऽयमधिकः गो. पा.। ३ पूजामिति गो. पा.। ४ अर्धमेतत् वेदीमिवेत्यस्मादर्धादग्रे गो. पा.। ५ राहितेति गो. पा.।

पतिशोकातुरां शुष्कां नदीं विस्रावितामिव । परया मृजया हीनां कृष्णपक्षे निशामिव ॥ १६ ॥
सुकुमारीं सुजाताङ्गीं रत्नगर्भगृहोचिताम् । तप्यमानामिवोष्णेन मृणालीमचिरोद्धृताम् ॥ १७ ॥
गृहीतां लाडितां स्तम्भे यूथपेन विनाकृताम् । निःश्वसन्तीं सुदुःखार्तां गजराजवधूमिव ॥ १८ ॥
एकया दीर्घया वेण्या शोभमानामयत्नतः । नीलया नीरदापाये वनराज्या महीमिव ॥ १९ ॥
उपवासेन शोकेन ध्यानेन च भयेन च । परिक्षीणां कृशां दीनामल्पाहारां तपोधनाम् ॥ २० ॥
आयाचमानां दुःखार्तां प्राञ्जलिं देवतामिव । भावेन रघुमुख्यस्य दशग्रीवपराभवम् ॥ २१ ॥
समीक्षमाणां रुदतीमनिन्दितां सुपक्ष्मताम्रायतशुक्ललोचनाम् ।
अनुव्रतां राममतीव मैथिलीं प्रलोभयामास वधाय रावणः ॥ २२ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये सुन्दरकाण्डे एकोनविंशः सर्गः ॥ १९ ॥

---

१६-१७] ति०टी०—विस्रावितां रोधोभङ्गादिनाऽन्यतः प्रापितजलाम्, अत एव शुष्काम्, मृजयाङ्गशुद्धया हीनाम्॥१६॥१७॥

रा० टी०—पतिशोकातुराम् । अत एव विस्रावितां अन्यत्र वाहिताम् अत एव शुष्कां नदीमिव परया शरीरशोभानिष्पादिकया मृजया उद्वर्तनादिना हीनाम् अत एव कृष्णपक्षे निशामिव ॥ १६ ॥

गो० टी०—विस्रावितां रोधोभङ्गादिना अन्यनिर्गमितजलामित्यर्थः। मृजया उद्वर्तनाद्यङ्गशोधनेन ॥ १७ ॥

रा० टी०—उष्णेन घर्मादिना तप्यमानाम् अचिरोद्धृतां मृणालीमिव ॥ १७ ॥

गो० टी०—सुजाताङ्गीं सुन्दराङ्गीम् ॥ १८ ॥

१८ ] ति० टी०—गृहीतां धृताम् । पश्चात्स्तम्भे लाडितां बद्धाम् । कश्चित्तु—'गृहीतामालिताम्' इति पठित्वा आलितामालानितामित्यर्थमाह ॥ १८ ॥

रा० टी०—यूथपेन विना कृताम् अत एव निःश्वसन्तीं गजराजवधूमिव॥ १८ ॥

गो० टी०—आलितां बद्धाम् ॥ १९ ॥ २० ॥

१९ ] ति० टी०—अयत्नत इति । केशसंस्काराभावादयत्नतः सिद्धयेति शेषः ॥ १९ ॥

रा० टी०—नीलया वनराज्या महीमिव एकया वेण्या शोभमाना ॥ १९ ॥

२० ] ति० टी०—अल्पाहारां जलमात्राहाराम् अन्नातयान्नस्य ग्रहीतुमशक्यत्वात् देवराजतः पायसलाभेन तदनपेक्षणाच्च ॥ २० ॥

रा० टी०—उपवासादिना कृशां कृशावयवाम् अत एव परिक्षीणां परिक्षीणमनस्काम् अल्पाहाराम् अल्पः अतिसूक्ष्मः वायुरित्यर्थः, आहारो यस्यास्ताम् ॥ २० ॥

गो० टी०—अल्पाहारां तोयमात्राहारामित्यर्थः । यद्वा अल्पाहारां मितभोजिनीमित्युत्तमस्त्रीलक्षणमुच्यते ॥ २१ ॥

२१ ] ति० टी०—तपोधनत्वादेव रघुमुख्यस्य सकाशाद्दशग्रीवपराभवमायाचमानां प्रार्थयन्तीम्, अत एव भावेनान्तरध्यानेन देवतामिव एवार्थे इव । स्वकुलदेवतामेवोद्दिश्य प्राञ्जलिं कृतनमस्काराम् ॥ २१ ॥

रा० टी०—दशग्रीवपराभवम् आयाचमानां मनोगतराघवायाचयन्तीम् अत एव प्राञ्जलिं देवतां चेष्टाराहित्येन देवप्रतिमामिव रघुमुख्यस्य भावेनातिचिन्तनयोपलक्षिताम् ॥२१॥

गो० टी०—आयाचमानामिति । रघुमुख्यस्य कर्तुः दशग्रीवपराभवं भावेन मनसा आयाचमानां प्रार्थयन्तीमिव स्थिताम् ॥ २२ ॥

२२ ] ति० टी०—क्रोधेन रोदनेन वा ताम्रप्रान्ते आयते शुक्ले च लोचने यस्यास्ताम् । वधाय तावन्मात्रफलकमेव, न तु स्वेष्टफलकमिति तात्पर्यम् ॥ २२ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये सुन्दरकाण्डे एकोनविंशः सर्गः ॥ १९ ॥

रा० टी०—समीक्षमाणाम् इतस्ततो राममवलोकयन्तीं सुपक्ष्माणि ताम्रायतानि शुक्लानि रोदनेन शुक्लत्वमापन्नानि लोचनानि यस्यास्तां राममुद्दिश्य अतीव अनुव्रतां मैथिलीं रावणः प्रलोभयामास वञ्चनावचनमुच्चारयामास । षोडशानां श्लोकानामेकत्रान्वयः ॥ २२ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ सुन्दरकाण्डे एकोनविंशः सर्गः ॥ १९ ॥

गो०टी०—समीक्षमाणां रक्षकं समीक्षमाणाम् । सुपक्ष्मेति । अन्ते ताम्रं मध्ये शुक्लमस्या लोचनमित्युच्यते ॥ २३ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने एकोनविंशः सर्गः ॥ १९ ॥

---

१ पक्षनिशामिति गो. पाठः । २ आलितामिति गो. पाठः ।

## विंशः सर्गः ।

चाटुवचनोपन्यासैः सीतां प्रति प्रलोभयन्रावणः प्ररोचनपूर्वं स्वाङ्गीकारं प्रार्थयते ।

स तां [1]परिवृतां दीनां निरानन्दां तपस्विनीम् । साकारैर्मधुरैर्वाक्यैर्न्यदर्शयत रावणः ॥ १ ॥
मां दृष्ट्वा नागनासोरु गूहमाना स्तनोदरम् । अदर्शनमिवात्मानं भयान्नेतुं त्वमिच्छसि ॥ २ ॥
कामये त्वां विशालाक्षि बहु मन्यस्व मां प्रिये । सर्वाङ्गगुणसंपन्ने सर्वलोकमनोहरे ॥ ३ ॥
नेह [2]किंचिन्मनुष्या वा राक्षसाः कामरूपिणः । व्यपसर्पतु ते सीते भयं मत्तः समुत्थितम् ॥ ४ ॥
स्वधर्मो रक्षसां भीरु सर्वदैव न संशयः । गमनं वा परस्त्रीणां हरणं संप्रमथ्य वा ॥ ५ ॥
एवं [3]चैवमकामां त्वां न च स्प्रक्ष्यामि मैथिलि । कामं कामः शरीरे मे यथाकामं प्रवर्तताम् ॥ ६ ॥
देवि नेह भयं कार्यं मयि विश्वसिहि प्रिये । प्रणयस्व च तत्त्वेन मैवं भूः शोकलालसा ॥ ७ ॥

१ ] ति० टी०—परिवृताम् राक्षसीभिरिति शेषः । साकारैः साभिप्रायैः 'आकारस्त्विङ्गिताकृती' । न्यदर्शयत् स्वाभिप्रायमिति शेषः ॥ १ ॥

रा० टी०—सीतां प्रति रावणोक्तिं वर्णयितुमाह—स इति । स रावणः परिवृतां राक्षसीभिरिति शेषः, अत एव निरानन्दामत एव दीनां सीतां साकारैरभिप्रायसहितैः अभिप्रायबोधकैरित्यर्थः, वाक्यैः न्यदर्शयत अब्रवीत् । 'आकारस्त्विङ्गिताकृती' इति कोशः ॥ १ ॥

गो० टी०—स तामित्यादि । साकारैः सेङ्गितैः 'आकाराविङ्गिताकृती' इत्यमरः । न्यदर्शयत स्वाभिप्रायमिति शेषः सीतायै स्वाभिप्रायं प्रकाशितवानित्यर्थः ॥ १ ॥

२ ] ति० टी०—नागो गजः । स्तनोदरं गूहमाना भयादिव । भयादेवात्मानं स्वशरीरमदर्शनं नेतुमिच्छसि । तत्किमिति शेषः ॥ २ ॥

रा० टी०—तद्वचनाकारमाह—मामिति । हे नागनासोरु! मां दृष्ट्वा भयादिव स्तनोदरं गूहमाना त्वम् आत्मानम् अदर्शनं दर्शनाभावं नेतुं प्रापयितुमिच्छसि तत्किमर्थमिति शेषः ॥ २ ॥

गो० टी०—मां दृष्ट्वेति । अदर्शनं अदृश्यत्वम् ॥ २ ॥

३ ] ति० टी०—नैवं भीतिर्मत्तस्ते युक्तेत्याह—कामय इत्यादि ॥ ३ ॥

रा० टी०—कामये इति । हे विशालाक्षि ! त्वां त्वद्दर्शनम् अहं बहु कामये अतो मां मन्यस्व स्वदर्शनाभिलाषिणं जानीहीत्यर्थः ॥ ३ ॥

गो० टी०—मां दृष्ट्वा भीतिर्न कर्तव्येत्याह—कामय इति॥३॥

४ ] ति० टी०—किमिदानीं मदतिरिक्तपुरुषान्तरजं तव भयम्, उत मम स्पर्शे धर्महानिजम् । नाद्य इत्याह—नेहेति । मत्तो मदागमनात्समुत्थितं पुरुषान्तरागमनसंभावनया जातं भयं व्यपसर्पतु अन्येषामभावात् ॥ ४ ॥

रा० टी०—नन्वहं राक्षसेभ्यो बिभेम्येवेत्यत आह—नेति । मत्तः मद्भयात् इह केचित् मद्भृत्यादयो न अतः समुत्थितं ते भयं व्यपसर्पतु अपगच्छतु ॥ ४ ॥

गो० टी०—अन्ये च भयहेतवोऽत्र न सन्तीत्याह—नेहेति ४

५] ति० टी०—नान्त्य इत्याह—स्वधर्म इति । तं स्वधर्ममाह—गमनं वेति । आनुकूल्यं संपाद्येति शेषः । संप्रमथ्य बलात्कृत्य एवं स्वधर्मत्वान्मम नाधर्मः बलात्कारे चास्वतन्त्रत्वात्स्त्रिया अपि न दोष इति भावः ॥ ५ ॥

रा० टी०—ननु परदारापहर्तृत्वे नातिपापित्वात् त्वत्कर्मकदर्शनाद्बिभेमीत्यत आह—स्वधर्म इति । परस्त्रीणां हरणं संप्रमथ्य हत्वा गमनं प्रक्षेपणं वा रक्षसां सर्वदैव स्वधर्मः । एतेन स्वधर्माचरणवत्कर्मकं दर्शनं न निषिद्धमिति सूचितम् ॥ ५ ॥

गो० टी०—परदारेच्छा दोष इत्याशङ्क्याह—स्वधर्म इति । संप्रमथ्य बलात्कृत्य । कामम् अत्यन्तम् यथाकामं यथेच्छम् ॥ ५ ॥ ६ ॥

६ ] ति० टी०—एवं च एवमपि बलात्कारपक्षे तव मम च दोषाभावेऽपि तस्य पक्षस्य रसाभाससंपादकत्वात्, अत एवमकामामनेन प्रकारेण मयि कामरहितां त्वां मद्भिन्नेच्छावर्तीं च न च, न तु स्प्रक्ष्यामि । 'एवं चैतदकामां त्वाम्' इति पाठे एतद्रक्षोधर्मत्वम् । एवं चैवमेव मदुक्तरीतिकमेव, तथाप्युक्तप्रकारेण त्वामकामां न स्प्रक्ष्यामीत्यर्थः । नन्वेवं सति दुःसहा कामपीडा तव स्यात्तत्राह—काममिति । कामो मन्मथो यथाकामं यथेच्छं कामं तद्विषयेच्छां प्रवर्तताम् प्रवर्तयत्वित्यर्थः ॥ ६ ॥

रा० टी०—ननु मत्कर्तृकावलोकनाभावेऽपि त्वत्कर्तृकदर्शनस्य निरोधाभावान्न काचिद्धानिरित्यत आह—एवमिति । काममत्यन्तम् अकामां मत्कर्तृकावलोकनविषयकेच्छारहितां त्वां नैव स्प्रक्ष्यामि चक्षुर्विषयतां नेष्यामि शरीरे कामः त्वत्कर्मकदर्शनविषयकेच्छा तु यथाकामं प्रवर्तताम् । एवं त्वर्थं ॥ ६ ॥

७ ] ति० टी०—अतः सर्वथा भयं न कार्यमित्याह—



१ पतिव्रतामिति गो. पाठः । २ केचिदिति गो. पाठः । ३ चैतदकामां तु न स्वामिति गो. पाठः ।

एकवेणी अधःशय्या ध्यानं मलिनमम्बरम् । अस्थानेऽप्युपवासश्च नैतान्यौपयिकानि ते ॥ ८ ॥
विचित्राणि च माल्यानि चन्दनान्यगुरूणि च । विविधानि च वासांसि दिव्यान्याभरणानि च ॥ ९ ॥
महार्हाणि च पानानि शयनान्यासनानि च । गीतं नृत्यं च वाद्यं च लभ मां प्राप्य मैथिलि ॥ १० ॥
स्त्रीरत्नमसि मैवं भूः कुरु गात्रेषु भूषणम् । मां प्राप्य हि कथं वा स्यास्त्वमनर्हा सुविग्रहे ॥ ११ ॥
इदं ते चारुसंजातं यौवनं ह्यतिवर्तते । यदतीतं पुनर्नैति स्रोतः स्रोतस्विनामिव ॥ १२ ॥
त्वां कृत्वोपरतो मन्ये रूपकर्ता स विश्वकृत् । नहि रूपोपमा ह्यन्या तवास्ति शुभदर्शने ॥ १३ ॥
त्वां समासाद्य वैदेहि रूपयौवनशालिनीम् । कः पुनर्नातिवर्तेत साक्षादपि पितामहः ॥ १४ ॥
यद्यत्पश्यामि ते गात्रं शीतांशुसदृशानने । तस्मिंस्तस्मिन्पृथुश्रोणि चक्षुर्मम निबध्यते ॥ १५ ॥

---

देवीति । देवि सर्वान्तःपुरपूज्ये ! इह मयि मद्विषये प्रणयस्व संमाननं कुरु संमानने नयतेरात्मनेपदम् ॥ ७ ॥

रा० टी०—देवीति । हे देवि ! मयि विश्वसिहि विश्वासं कुरु अतः इह अस्मिन् स्थाने भयं न कार्यं तत्त्वेन स्वानुचरबुद्ध्या प्रणयस्व संमाननं कुरु अत एव एवम् अनेन प्रकारेण शोकलालसा शोकव्याप्ता मा भूः ॥ ७ ॥

गो० टी०—देवीति । प्रणयस्व स्नेहं कुरु ॥ ७ ॥

८ ] ति० टी०—अधःशय्या भूशयनम् । नौपयिकानि न पुरुषार्थोपयुक्तानि ॥ ८ ॥

रा० टी०—एकेति । अस्थाने स्वस्थानभिन्नेऽपि एतान्येकवेण्यादीनि तेन औपयिकानि युक्तानि ॥ ८ ॥

गो० टी०—एकवेणीति । एकवेणी असीमन्तितवेणी धराशय्या भूशयनम् औपयिकानि युक्तानि ' युक्तमौपयिकम् ' इत्यमरः ॥ ८–१० ॥

९–१० ] ति० टी०—मां प्राप्य विचित्रमाल्यादीनि लभस्वेत्यर्थः ॥ ९ ॥ १० ॥

रा० टी०—विचित्राणीति । हे मैथिलि ! मां प्राप्य स्वानुचरत्वेन ज्ञात्वा माल्यादीनि लभ लभस्व । श्लोकद्वयमेकान्वयि ॥ ९ ॥ १० ॥

११ ] ति० टी०—अनर्हा भूषणानामिति शेषः । सुविग्रहे ! इति संबुद्धिः ॥ ११ ॥

रा० टी०—स्त्रीति । हे सुविग्रहे ! यतस्त्वं स्त्रीरत्नं सर्वस्त्रीश्रेष्ठमसि अत एवमुदासीनत्वादिविशिष्टा मा भूः अतः गात्रेषु भूषणं कुरु हि यतः मां प्राप्य अनर्हा अपूजिता त्वं कथं स्याः ॥ ११ ॥

गो० टी०—स्त्रीरत्नमिति । मां प्राप्य हीति । हिः पादपूरणे अप्यर्थो वा । हे सुविग्रहे ! मां प्राप्यापि कथमनर्हा स्याः ॥ ११ ॥ १२ ॥

१२ ] ति० टी०—अतिवर्ततेऽतिक्रम्य गच्छति । स्रोतस्विनो जलप्रवाहाः । स्रोतस्तेन प्रवहज्जलम् । अतो भुङ्क्ष्व भोगानिति शेषः ॥ १२ ॥

रा० टी०—भूषणधारणसमयोऽयमेवेति बोधयन्नाह–इदमिति । अतीतं गतं स्रोतस्विनां महाप्रवाहाणां स्रोतः अल्पप्रवाह इव संजातं निष्पन्नं चारु शोभनं यौवनं युवावस्था अतिवर्तते । एतेन भूषणादीनि धारयेति सूचितम् ॥ १२ ॥

१३ ] ति० टी०—रूपकर्ता दिव्यरूपस्रष्टा त्वां कृत्वा निर्मायोपरतो दिव्यरूपनिर्माणाद्विरत इति मन्ये । उत्प्रेक्षायां हेतुः—हि यतस्तव रूपोपमा नास्ति । यदि पुनः स उत्तमरूपनिर्माणे यतेत, न तथापि तवोपमेत्याशयः ॥ १३ ॥

रा० टी०—त्वामिति । रूपकर्ता विश्वकृत् ब्रह्मा त्वां कृत्वा तद्रूपं सर्वोत्कृष्टत्वेन निर्माय उपरतो निवृत्तः इत्यहं मन्ये अतस्तव रूपोपमा तव रूपसदृशी अन्या नास्ति ॥ १३ ॥

गो० टी०—त्वामिति । उपरतः निवृत्तः अत्रेतिकरणं द्रष्टव्यम् । उत्तरोत्तरं सातिशयं रूपं सिसृक्षुर्विधाता त्वां सृष्ट्वा इतः परं सातिशयं रूपं स्रष्टुं न शक्यत इति धिया सृष्टेरुपरत इति मन्य इत्यर्थः ॥ १३ ॥

१४ ] ति० टी०—को नातिवर्तेत क्षुभ्येतेत्यर्थः । 'कः पुमानतिवर्तेत' इति पाठे कामवशतामतिक्रम्य को वर्ततेत्यर्थः ॥ १४ ॥

रा० टी०—ननु त्वत्सेवामनाकाङ्क्षन्तीं मां किमर्थं बहूच्यते इत्यत आह–त्वामिति । हे वैदेहि ! त्वां समासाद्य प्राप्य पितामहोऽपि नातिवर्तेत स्वौद्धत्यं न प्रकाशयेत् तर्हि अन्यः कोऽतिवर्तेत ॥ १४ ॥

गो० टी०—त्वामिति । कः अतिवर्तेत न कोऽपीत्यर्थः ॥ १४—१९ ॥

१५ ] ति० टी०—निबध्यते बद्धं जायते ॥ १५ ॥

रा० टी०—यद्यदिति । हे शीतांशुसदृशानने ! यद्यत्ते गात्रं पश्यामि तस्मिन् तस्मिन् मम चक्षुर्निबध्यते एतेन तच्चरणादीनां मनोहरत्वं व्यञ्जितम् ॥ १५ ॥

---

१ धरेति गो. रा. पाठः । २ नृत्तमिति गो. पाठः । ३ अपीति गो. पाठः । ४ न्विति गो. पाठः । ५ व्यतीति गो. पाठः । ६ शीघ्रमपामिति गो. पाठः । ७ त्वन्येति गो. पाठः ।

भव मैथिलि भार्या मे मोहमे[1]तं विसर्जय । बह्वीनामुत्तमस्त्रीणां [ [2]आहृतानामितस्ततः ।
सर्वासामेव भद्रं ते ] ममाग्रमहिषी भव ॥ १६ ॥
लोकेभ्यो यानि रत्नानि संप्रमथ्याहृतानि [3]मे । तानि [4]ते भीरु सर्वाणि राज्यं [5]चैव ददामि ते ॥ १७ ॥
विजित्य पृथिवीं सर्वां नानानगरमालिनीम् । जनकाय प्रदास्यामि तव हेतोर्विलासिनि ॥ १८ ॥
नेह पश्यामि लोकेऽन्यं यो मे प्रतिबलो भवेत् । पश्य मे सुमहद्वीर्यमप्रतिद्वन्द्वमाहवे ॥ १९ ॥
असकृत्संयुगे भग्ना मया विमृदितध्वजाः । अशक्ताः प्रत्यनीकेषु स्थातुं मम सुरासुराः ॥ २० ॥
इच्छ मां क्रियतामद्य प्रतिकर्म तवोत्तमम् । [6]सुप्रभाण्यव[7]सज्जन्तां तवाङ्गे भूषणानि हि ॥ २१ ॥
साधु पश्यामि ते रूपं सुयुक्तं प्रतिकर्मणा । प्रतिकर्माभिसंयुक्ता दाक्षिण्येन वरानने ॥ २२ ॥
भुङ्क्ष्व भोगान्यथाकामं पिब भीरु रमस्व च । यथेष्टं च प्रयच्छ त्वं पृथिवीं वा धनानि च ॥ २३ ॥
ललस्व मयि विस्रब्धा धृष्टमाज्ञापयस्व च । मत्प्रसादाल्ललन्त्याश्च [8]ललतां बान्धवस्तव ॥ २४ ॥
ऋद्धिं ममानुपश्य त्वं श्रियं भद्रे यशस्विनि । किं करिष्यसि रामेण सुभगे चीर[9]वासिना ॥ २५ ॥

---

१६-१७ ] ति० टी०—मोहं नैतद्वशा भविष्यामीति बुद्धिम् ॥ १६ ॥ १७ ॥

रा० टी०—भवेति । हे भवमैथिलि ! भवति भावयति नितरां स्वपतिं चिन्तयति सा एव मैथिली तत्संबोधनम् अग्रस्य सर्वोत्कृष्टस्य रामस्य महिषी त्वं मम बह्वीनामुत्तमस्त्रीणां भार्या सेव्या भव अत एव तं विद्यमानं मे मोहं वैचित्यं विसर्जय त्याजय ॥ १६ ॥

रा० टी०—लोकेभ्य इति । यानि रत्नानि प्रमथ्य रिपून् जित्वा लोकेभ्यो मे मया हृतानि तानि सर्वाणि एतद् राज्यं च अहं ते ददामि अतः ते तवैव त्वत्स्वामिनीका एव अस्मदादय इत्यर्थः ॥ १७ ॥

१८ ] ति० टी०—तव हेतोस्त्वत्प्रीत्यर्थम् ॥ १८ ॥

रा० टी०—ननु बन्धुवर्गं विहायाहं न स्थास्यामीत्यत आह—विजित्येति । सर्वां पृथिवीं विजित्य तव हेतोः तव जनकाय प्रदास्यामि एतेन तमपि आनेष्यामीति ध्वनितम् ॥ १८ ॥

१९ ] ति० टी०—प्रतिबलो युद्धे जेता ॥ १९ ॥

रा० टी०—नेति । यो मे प्रतिबलः प्रतिद्वन्द्वो भवेत् तम् अन्यं लोके नैव पश्यामि अतः आहवे अप्रतिद्वन्द्वं मे वीर्यं त्वं पश्य जानीहि ॥ १९ ॥

२० ] ति० टी०—प्रत्यनीकेषु प्रतिसैनिकभावेषु ॥ २० ॥

रा० टी०—वीर्यमेवाह—असकृदिति । असकृद्बहुवारं मया विमृदितानि ध्वजानि येषां ते भग्नाः अङ्गभङ्गं प्राप्ताः अत एव प्रत्यनीकेषु प्रतिसैनिकभावेषु स्थातुम् अशक्ताः सुरासुरा अभवन्निति शेषः ॥ २० ॥

गो० टी०—असकृदिति । विमृदितध्वजाः भग्नध्वजाः । प्रत्यनीकेषु शत्रुषु मध्ये ॥ २० ॥

२१ ] ति० टी०—प्रतिकर्मप्रसाधनम् अलंकरणमिति यावत् ॥ २१ ॥

रा० टी०—इच्छेति । माम् इच्छ सेवकत्वेनाकाङ्क्ष एतेन ते भयं नास्तीति सूचितम् अत एव उत्तमं प्रतिकर्म भोजनादिकृत्यं क्रियतां सुप्रभाणि भूषणानि तवाङ्गेषु अवसज्जन्ताम् ॥ २१ ॥

गो० टी०—इच्छयेति । प्रतिकर्म अलंकारः 'प्रतिकर्म प्रसाधनम्' इत्यमरः । अवसज्यन्ताम् अर्प्यन्ताम् । प्रतिकर्मणा संयुक्तं पश्यामि पश्येयम् ॥ २१ ॥ २२ ॥

२२-२३ ] ति० टी०—प्रतिकर्मणा युक्तं ते रूपं पश्यामि भाविकमत्रालंकारः । दाक्षिण्येन मद्विषयककृपया । प्रतिकर्माभिसंयुक्ता भवेति शेषः ॥ २२ ॥ २३ ॥

रा० टी०—साध्विति । प्रतिकर्मणा कर्तव्यभोजनादिनिखिलक्रियया सुयुक्तं ते रूपं पश्यामि पश्येयम् । अर्धं पृथक् । प्रतीति । प्रतिकर्माभिसंयुक्ता अत एव दाक्षिण्येनोपलक्षिता त्वं भोगान् राज्यैश्वर्याणि यथाकामं भुङ्क्ष्व पिब दिव्यरसास्वादं कुरु रमस्व दासीभूतमन्दोदर्यादिभिः विहरस्व । अर्धद्वयमेकान्वयि ॥ २२ ॥

गो० टी०—प्रतिकर्मेति । दाक्षिण्येन सरलत्वेन । भुङ्क्ष्व अनुभव 'दक्षिणे सरलोदारौ' इत्यमरः ॥ २३ ॥

रा० टी०—यथेष्टमिति । प्रयच्छ देहि मयि विस्रब्धा सती ललस्व योग्यवस्तुषु वाञ्छां कुरु अत एव धृष्टं यथा स्यात्तथा आज्ञापयस्व ॥ २३ ॥

गो० टी०—यथेष्टमिति । ललस्व प्रीतिं कुरु । "लल, ईप्सायाम्" इति धातुः ॥ २४ ॥ २५ ॥

२४ ] ति० टी०—ललस्वेप्सां कुरु । मत्प्रसादान्मयि प्रसादात् । ललन्त्या मदीप्साजनितप्रभावेण वर्धमानायाः ॥ २४ ॥

रा० टी०—मदिति । मत्प्रसादात् मद्विषयककृपातः ललन्त्यास्तव बान्धवाः अपि ललन्ताम् । अर्धं पृथक् ॥ २४ ॥

२५ ] ति० टी०—ऋद्धिं पराक्रमादिसंपदम्, श्रियं धनादिसंपदम् ॥ २५ ॥

---

१ एनमिति गो. पाठः । २ पादद्वयमेतदधिकं गो. पाठः । ३ वै इति गो. पाठः । ४ मे इति गो. पाठः । ५ चैतदहं च ते इति गो. पाठः । ६ सप्रभेति गो. पाठः । ७ सज्यन्तामिति गो. पाठः । ८ ललन्तां बान्धवा इति गो. रा. पाठः । ९ वाससेति गो. पाठः ।

निक्षिप्तविजयो रामो गतश्रीर्वनगोचरः । व्रती स्थण्डिलशायी च शङ्के जीवति वा न वा ॥ २६ ॥
नहि वैदेहि रामस्त्वां द्रष्टुं वाप्युपलभ्यते । पुरोबलाकैरसितैर्मेघैर्ज्योत्स्नामिवावृताम् ॥ २७ ॥
न चापि मम हस्तात्त्वां प्राप्तुमर्हति राघवः । हिरण्यकशिपुः कीर्तिमिन्द्रहस्तगतामिव ॥ २८ ॥
चारुस्मिते चारुदति चारुनेत्रे विलासिनि । मनो हरसि मे भीरु सुपर्णः पन्नगं यथा ॥ २९ ॥
क्लिष्टकौशेयवसनां तन्वीमप्यनलंकृताम् । त्वां दृष्ट्वा स्वेषु दारेषु रतिं नोपलभाम्यहम् ॥ ३० ॥
अन्तःपुरनिवासिन्यः स्त्रियः सर्वगुणान्विताः । यावत्यो मम सर्वासामैश्वर्यं कुरु जानकि ॥ ३१ ॥
मम ह्यसितकेशान्ते त्रैलोक्यप्रवरस्त्रियः । तास्त्वां परिचरिष्यन्ति श्रियमप्सरसो यथा ॥ ३२ ॥
यानि वैश्रवणे सुभ्रु रत्नानि च धनानि च । तानि लोकांश्च सुश्रोणि मया भुङ्क्ष्व यथासुखम् ३३ ॥
न रामस्तपसा देवि न बलेन च विक्रमैः । न धनेन मया तुल्यस्तेजसा यशसाऽपि वा ॥ ३४ ॥

---

रा० टी०—ननु तर्हि राममपीहानय इत्यत आह—ऋद्धिमिति । त्वं मम ऋद्धिं श्रियं च पश्य चीरवासिना चीराच्छादितेन रामेण किम् ॥ २५ ॥

गो० टी०—एवमात्मानं प्रशस्य रामं निन्दति—किं करिष्यसीत्यादिना । निक्षिप्तविजयः त्यक्तविजय इत्यर्थः । स्थण्डिलशायी भूतलशायी ॥ २६ ॥

२६ ] ति० टी०—निक्षिप्तविजयो निरस्तविजयसाधनः, अत एव गतश्रीत्वादिगुणः । जीवनस्यैव संदेहे पराक्रमादिसंभावना दूरत इत्यर्थः ॥ २६ ॥

रा० टी०—शूर्पणखाविरूपादिकरणजनिततापशान्तये रामविषयकसीतातिप्रीतिं निवारयितुमाह—निक्षिप्तेति । निक्षिप्तस्तव हरणादिना विनष्टः विजयः विजयसामग्र्युत्साहादिर्यस्य अत एव गतश्रीः रामः जीवति न वा इत्यहं शङ्के विचारयामि ॥ २६ ॥

२७ ] ति० टी०—द्रष्टुं वापि प्राप्तिस्तु दूरतरेत्यर्थः । उपलभ्यते । व्यत्ययेन श्यन्प्रत्ययः समर्थो भवतीत्यर्थः । 'उपलप्स्यते' इति पाठे समर्थो भविष्यतीत्यर्थः । पुरोबलाकैः अग्रेसरबलाकैः ॥ २७ ॥

रा० टी०—ननु जीवति चेदानयेत्यत आह—न हीति । हे वैदेहि ! रामः त्वां द्रष्टुमपि नोपलभ्यते संभाव्यते । तत्र दृष्टान्तः पुरोऽग्रे बलाका बकपङ्क्तयो येषां तैर्मेघैरावृतां ज्योत्स्नामिव ॥ २७ ॥

गो० टी०—नहीति । वाशब्दोऽवधारणे द्रष्टुमपि नोपलप्स्यत एवेत्यर्थः । दर्शनमात्रफलमपि दर्शनं न प्राप्स्यसीत्यर्थः (?) । पुरोऽग्रे बलाका येषां ते पुरोबलाकाः तैः । अनेन मेघानामतिविपुलतोच्यते महामेघेष्वेव बलाकासंचारवर्णनात् ॥२७॥

२८–२९ ] ति० टी०—इन्द्रहस्तगतां कीर्तिं कीर्तितुल्यां भार्यामिन्द्रहृतां नारदमुखेन प्रार्थनया यथा हिरण्यकशिपुः प्राप्तवान्, नैवं त्वां रामः प्राप्स्यतीति भावः । इयं च कथा भागवते प्रसिद्धेति तीर्थः ॥ २८ ॥ २९ ॥

रा० टी०—नेति । मम हस्तात् त्वां प्राप्तुं राघवो नार्हति । तत्र दृष्टान्तः इन्द्रहस्तगतां कीर्तिं हिरण्यकशिपुरिव ॥ २८ ॥

रा० टी०—औदासीन्यं निवारयितुमाह—चार्विति । सुपर्णः पन्नगमिव मे मनस्त्वं हरसि ॥ २९ ॥

गो० टी०—न चापीति । हिरण्यकशिपुः कीर्तिमिन्द्रहस्तगतामिवेति वैधर्म्यदृष्टान्तः । अत्र कीर्तिशब्देन भार्या लक्ष्यते । हिरण्यकशिपुरिन्द्रहस्तगतां भार्यां पुनः प्राप्तवानित्येतच्छ्रीभागवते प्रसिद्धम् 'व्यलुम्पन् राजशिबिरममरा राज्यकाङ्क्षिणः । इन्द्रस्तु राजमहिषीं मातरं मम चाग्रहीत् ।' इत्यादिप्रह्लादवचनात् ॥ २८–३० ॥

३० ] ति० टी०—स्वेषु दारेषु मन्दोदर्यामपि ॥ ३० ॥

रा० टी०—अनलंकृतामिति । अनलंकृतां त्वां त्वद्दुःखमित्यर्थः, दृष्ट्वा स्वेषु दारेषु रतिं प्रीतिम् अहं नोपलभामि अतिदुःखितं मनः क्वापि न प्रवर्तते इत्यर्थः । एतेन रावणस्य दयालुत्वं सूचितम् ॥ ३० ॥

३१–३४ ] ति० टी०—ऐश्वर्यमाधिपत्यम् ॥ ३१–३४ ॥

रा० टी०—अन्तरिति । अन्तःपुरनिवासिन्यः सर्वगुणान्विताः मम भार्याः यावत्यः सन्ति सर्वासां तासामैश्वर्यं तन्निरूपितेश्वरत्वं कुरु स्वस्मिन्संपादय ॥ ३१ ॥

रा० टी०—ममेति । हे असितकेशान्ते हे अबद्धकेशभागे! अप्सरसः श्रियमिव त्रैलोक्य प्रवरस्त्रियः त्वां परिचरिष्यन्ति ३२

गो० टी०—अन्तःपुरेति । ऐश्वर्यम् अन्तःपुरैश्वर्यम् । स्वामिनीत्वं कुरु प्राप्नुहीत्यर्थः ॥ ३१ ॥ ३२ ॥

रा० टी०—यानीति । मयोपार्जितानि वैश्रवणे कुबेरे यानि रत्नानि धनानि च तानि मां विष्णुलोकलक्ष्मीं च लोकांश्च भुङ्क्ष्व स्वाधीनत्वं प्रापयेत्यर्थः ॥ ३३ ॥

रा० टी०—रामविषयकाशां निवर्तयितुमाह—नेति । रामः तपआदिना मया तुल्यो न एतेन स इह नागमिष्यतीति सूचितम् ॥ ३४ ॥

गो० टी०—यानीति । भुङ्क्ष्व स्वाधीनं कुरु ॥३३॥३४॥

---

१ लप्स्यत इति गो. पाठः । २ सुभ्रु इति गो. पाठः ।

पिब विहर रमस्व भुङ्क्ष्व भोगान्धननिचयं प्रदिशामि मेदिनीं च ।
मयि लल ललने यथासुखं त्वं त्वयि च समेत्य ललन्तु बान्धवास्ते ॥ ३५ ॥
कुसुमिततरुजालसंततानि भ्रमरयुतानि समुद्रतीरजानि ।
कनकविमलहारभूषिताङ्गी विहर मया सह भीरु काननानि ॥ ३६ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये सुन्दरकाण्डे विंशः सर्गः ॥ २० ॥

## एकविंशः सर्गः ।

मध्ये तृणप्रक्षेपेण दुःसंसर्गं निवार्य साम्ना हितोपदेशपूर्वकं रावणं प्रबोधयन्ती सीता रामगुणान्प्रस्तुत्य तेन सख्यविरोधाभ्यां जायमानशुभाशुभफलं प्रदर्श्य तस्मै आत्मसमर्पणेन सख्यं संपादयेत्युपदिशति ।

तस्य तद्वचनं श्रुत्वा सीता रौद्रस्य रक्षसः । आर्ता दीनस्वरा दीनं प्रत्युवाच ततः शनैः[1] ॥ १ ॥
दुःखार्ता रुदती सीता वेपमाना तपस्विनी । चिन्तयन्ती वरारोहा पतिमेव पतिव्रता ॥ २ ॥
तृणमन्तरतः कृत्वा प्रत्युवाच शुचिस्मिता । निवर्तय मनो मत्तः स्वजने प्रीयतां[2] मनः ॥ ३ ॥

---

३५-३६ ] ति० टी०-प्रदिश देशमितो मेदिनीमपीष्टेभ्यो देहि । लल ईप्सावती भव । ललन्तु प्राप्तसमस्तेप्सिता भवन्तु । प्रक्षिप्तोऽयम् ॥ ३५ ॥ ३६ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये सुन्दरकाण्डे विंशः सर्गः ॥ २० ॥

रा० टी०-उपसंहरन्नाह— पिबेति द्वाभ्याम् । मयि मत्समीपे विद्यमानान् भोगादीन् पानादिकर्मीभूतान् कुरु प्रदिश यथेच्छं देहि च त्वयि समेत्य त्वत्समीपं प्राप्य ते बान्धवाः यथासुखं ललन्तु वाञ्छया भोगादीन् प्राप्नुवन्तु ॥ ३५ ॥

रा० टी०-कुसुमितेति । कुसुमितैस्तरुजालैः सन्ततानि व्याप्तानि समुद्रतीरजानि मया सर्वसंपत्त्या सह सहितानि काननानि कनकविमलहारभूषिताङ्गी त्वं विहर ॥ ३६ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ सुन्दरकाण्डे विंशः सर्गः ॥ २० ॥

गो० टी०-पिबेति । पिब मद्यमिति शेषः विहर संचर विहारशब्दस्य संचारेऽपि प्रयोगात् ॥ ३५ ॥ ३६ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने विंशः सर्गः ॥ २० ॥

---

१] ति० टी०-तस्येति । दीनमिति क्रियाविशेषणम् ॥ १ ॥

रा० टी०-रावणं प्रति सीतोक्तिमाह-तस्येत्यादिभिः । रक्षसस्तस्य रावणस्य तदुक्तं वचनं श्रुत्वा आर्ता दुःखिता अत एव दीनस्वरा सीता दीनं यथा भवति तथा शनैः प्रत्युवाच ॥ १ ॥

गो० टी०-तस्येत्यादि ॥ १ ॥

२ ] ति० टी०-पतिमेव चिन्तयन्ती प्रत्युवाचेति संबन्धः ॥ २ ॥

रा० टी०-तदेव भङ्ग्यन्तरेणाह-दुःखार्तेति । पतिमेव चिन्तयन्ती शुचिस्मिता सीता अन्तरतः मध्ये तृणं कृत्वा प्रत्युवाच । सार्धश्लोक एकान्वयी ॥ २ ॥

गो० टी०-दुःखार्तेत्यादि । तृणमिति रावणस्य साक्षात्संभाषणानर्हत्वात्तृणव्यवधानकरणम् । प्रत्युवाचेति पुनरभिधानं वचनप्रकारविशेषकथनार्थम् । दुःखार्ताया अपि शुचिस्मितत्वाभिधानं वस्तुस्वभावेन सस्मितवत् प्रतीयमानत्वात् ॥ २ ॥ ३ ॥

३ ] ति० टी०-तृणमन्तरतः कृत्वा परपुरुषस्य साक्षात्संभाषणानर्हत्वात् भूम्यां किंचिदन्तर्धाय मूत्रादिविसर्जनवत्तृणान्तरेण तस्य मुखे प्रत्युत्तरदानम् । कथमस्य दुरात्मनो रजस्तमोभिभूतस्य मयि दुराशेति शुचिस्मिता । प्रत्युवाचेति पुनरभिधानं प्रकारविशेषकथनार्थम् । एतेन तृणीकृतप्राणतया तृणतुल्यतया रावणस्य ग्रहणाच्च निर्भयप्रत्युत्तरदानमिति बोध्यम् । तदेवाह—निवर्तयेति । मत्तो मनो निवर्तय । स्वजने प्रीयतां प्रीतिं कुरु । स्वजनः स्वभार्यादिः । क्रुद्धोक्त्या मनःपदादेः पौनरुक्त्यं न दोषभाक् । वर्णनीयमर्यादाभावाच्च कवेरपि तादृशं न दोषाय ॥ ३ ॥

रा० टी०-तद्वचनाकारमाह-निवर्तयेत्यादिभिः । मत्तः मत्प्रार्थनातः मनो निवर्तय स्वजने मनः क्रियताम् । तत्र हेतुः-पापकृत्त्वं सिद्धिमिव मां प्रार्थयितुं न युक्तः । अर्धद्वयमेकान्वयि ॥ ३ ॥

---



१ शनैर्वच इति गो. पाठः । २ क्रियतामिति गो. पाठः ।

न मां प्रार्थयितुं युक्तस्त्वं सिद्धिमिव पापकृत्[1] । अकार्यं न मया कार्यमेकपत्न्या विगर्हितम् ॥ ४ ॥
कुलं संप्राप्तया पुण्यं कुले महति जातया । एवमुक्त्वा तु वैदेही रावणं तं यशस्विनी ॥ ५ ॥
रावणं[2] पृष्ठतः कृत्वा भूयो वचनमब्रवीत् । नाहमौपयिकी भार्या परभार्या सती तव ॥ ६ ॥
साधु धर्ममवेक्षस्व साधु साधुव्रतं चर । यथा तव तथाऽन्येषां रक्ष्या दारा निशाचर ॥ ७ ॥
आत्मानमुपमां कृत्वा स्वेषु दारेषु रम्यताम् । अतुष्टं स्वेषु दारेषु चपलं चपलेन्द्रियम् ॥
नयन्ति निकृतिप्रज्ञं परदाराः पराभवम् ॥ ८ ॥
इह सन्तो न वा सन्ति सतो वा नानुवर्तसे । यथा[3] हि विपरीता ते बुद्धिराचारवर्जिता ॥ ९ ॥

---

४ ] ति० टी०—सिद्धिं ब्रह्मलोकप्राप्तिम् । एकपत्न्या पतिव्रतया । अकार्यं परपुरुषस्पर्शरूपम् ॥ ४ ॥

रा० टी०—अकार्यमिति । महति कुले जातया अत एव पुण्यं कुलं संप्राप्तया विवाहविधिना संगतया एकपत्न्या पतिव्रतयेत्यर्थः, मया विगर्हितं पतिविरोधिकर्तृकत्वेन निन्दितं कार्यं कुत्सितस्त्रीभिः कर्तव्यं पूजनं मया अकार्यं न कारयितव्यम् ॥ ४ ॥

गो० टी०—अकार्यमिति । एकः पतिर्यस्याः सा एकपत्नी तया । "नित्यं सपत्न्यादिषु" इति ङीप् ॥ ४ ॥

५ ] ति० टी०—तं प्राप्तया विवाहसंबन्धेनेति शेषः ॥ ५ ॥

रा० टी०—एवमिति । रावणमेवमुक्त्वा वैदेही रावणं पृष्ठतः कृत्वा भूयोऽब्रवीत् ॥ ५ ॥

गो० टी०—एवमिति । पृष्ठतः कृत्वा अनादृत्येत्यर्थः ॥५॥

६ ] ति० टी०—पृष्ठतः कृत्वा परावृत्य स्थित्वा । औपयिकी भोगयोग्या । तत्र हेतुः—सती परभार्येति ॥ ६ ॥

रा० टी०—तद्वचनाकारमाह—नेति । तव भार्याभिः परभार्या अत्यन्तं सेविता सती औपयिकी तद्रक्षणोपायसाधिका अहं न भविष्यामीति शेषः, अत एव साधुधर्मं साधु अवेक्षस्व चिन्तय अत एव साधुव्रतं संकल्पं चर कुरु ॥ ६ ॥

गो० टी०—नाहमिति । सती अहं तव औपयिकी युक्ता भार्या न किंतु परिहार्या । साधूनां सतां धर्मं साधुधर्मम् साधूनां व्रतं साधुव्रतम् साधु सम्यक् चर ॥ ६ ॥

७ ] ति० टी०—धर्मं साध्विति पदच्छेदः । साधूनां व्रतं चर । यथा तव मन्दोदर्याः परपरिग्रहेण दुःखम्, एवमन्येषामपि स्वदाराणां परपरिग्रहे दुःखमिति ज्ञात्वाऽन्येषां दारा रक्ष्याः परिहार्याः ॥ ७ ॥

रा० टी०—धर्ममेवाह—यथेति । हे निशाचर! दाराः यथा तव रक्ष्याः तथा अन्येषामपि रक्ष्याः अतः आत्मानम् उपमां उपमानं कृत्वा स्वेष दारेष्वेव रम्यताम् अन्यदारनिरोधे मनो न कुर्वित्यर्थः ॥ ७ ॥

गो० टी०—यथेति । आत्मानमुपमां कृत्वा यथा तव दारा रक्ष्यास्तथान्येषां दारा रक्ष्याः । तस्मात् स्वेषु दारेषु रम्यताम् ॥ ७ ॥

८ ] ति० टी०—यथा स्वदाराणां स्वस्मिन्नेव रत्येहाऽत्र सुखमिति स्वस्य निश्चयः तथा परेषामपीत्यर्थः, आत्मानमेव दृष्टान्तीकृत्य स्वेष्वेव दारेषु रम्यताम् अन्यथोभयोरपि धर्मलोप इति भावः । विपक्षे बाधकान्तरमप्याह—अतुष्टमिति । निकृतिप्रज्ञं निकृतिर्न्यक्कारः साधुकृतधिक्कारस्तदास्पदप्रज्ञम् पराभवमजयरूपम् ॥ ८ ॥

रा० टी०—अतुष्टमिति । स्वेषु दारेषु स्वदारपरिहासादिषु अतुष्टम् अत एव चपलेन्द्रियं चाल्तिचक्षुरादिकरणम् अत एव चपलम् अत एव निकृता सद्भिर्धिकृता प्रज्ञा बुद्धिर्यस्य तं जनं परदाराः परदारवञ्चनदोषाः पराभवं नयन्ति एतेन परदारवञ्चनं त्वया न कर्तव्यमिति सूचितम् ॥ ८ ॥

गो० टी०—अतुष्टमिति । अतुष्टम् अतृप्तम् । निकृतिप्रज्ञम् निकृतौ शाठ्ये प्रज्ञा यस्य तम् । पराभवम् आयुरैश्वर्यादिक्षयरूपम् ॥ ८ ॥

९ ] ति० टी०—इह लङ्कानगरे सन्त इहलोकपरलोकहितवक्तारो न वा नैव सन्ति । सत्सु वा तेषु तान्नानुवर्तसे तत्समीपं न गच्छसि गतोऽपि वा न पृच्छसि यथा ते विपरीता बुद्धिः। आचारवर्जिता विहितकर्मविमुख्यविहितसंमुखी च॥९॥

रा० टी०—इहेति । इह लङ्कायां सन्तो महात्मानो न सन्ति वा सतो विद्यमानान् वा महात्मनो नानुवर्तसे अत एव ते बुद्धिः यथा यथावद्विपरीता विरुद्धकर्मविषयिणी अत एव आचारवर्जिता अस्तीति शेषः एतेन त्वया महात्मानोऽनुसर्तव्या इति सूचितम् ॥ ९ ॥

गो० टी०—इह सन्त इति । इह अतिविशालेऽपि दुर्जनसंकुले देशे सन्तः त्वामनर्थान्निवारयन्तः न सन्ति वा न सन्ति किम् सन्त्येव । श्रीविभीषणप्रभृतीनां संभवात्र सन्तीति कथं वक्तुं शक्यम् । सतो वा नानुवर्तसे 'तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया । उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः' इत्युक्तरीत्या प्रणिपातमन्तरेण न ते उपदिशन्ति । त्वं च तत्पादेषु कदाचिदपि न प्रणतवानसि । कथमिदं भवती जानातीत्याशङ्क्याह—तथाहीति । तथाहि विपरीता ते बुद्धिः तव बुद्धिवैपरीत्यमेव तव शिष्टाननुवर्तनं सूचयतीत्यर्थः । परबुद्धेरप्रत्यक्षत्वात् कथं मदीया बुद्धिस्त्वया ज्ञायत इत्यत्राह—आ-

---

१ युक्तं सुसिद्धिमिति गो. पाठः । २ राक्षसमिति गो. पाठः । ३ तथेति गो. पाठः ।

वचो मिथ्याप्रणीतात्मा पथ्यमुक्तं विचक्षणैः । राक्षसानामभावाय त्वं वा न प्रतिपद्यसे ॥ १० ॥
अकृतात्मानमासाद्य राजानमनये रतम् । समृद्धानि विनश्यन्ति राष्ट्राणि नगराणि च ॥ ११ ॥
तथैवं त्वां समासाद्य लङ्का रत्नौघसंकुला । अपराधात्तवैकस्य न चिराद्विनशिष्यति ॥ १२ ॥
स्वकृतैर्हन्यमानस्य रावणादीर्घदर्शिनः । अभिनन्दन्ति भूतानि विनाशे पापकर्मणः ॥ १३ ॥
एवं त्वां पापकर्माणं वक्ष्यन्ति निकृता जनाः । दिष्ट्यैतद्व्यसनं प्राप्तो रौद्र इत्येव हर्षिताः ॥ १४ ॥
शक्या लोभयितुं नाहमैश्वर्येण धनेन वा । अनन्या राघवेणाहं भास्करेण यथा प्रभा ॥ १५ ॥
उपधाय भुजं तस्य लोकनाथस्य सत्कृतम् । कथं नामोपधास्यामि भुजमन्यस्य कस्यचित् ॥ १६ ॥

चारवर्जितेति । आचारवर्जिता तव दुरनुष्ठानमेव तव बुद्धिं द्योतयतीति भावः ॥ ९ ॥

१० ] ति० टी०—सत्पुरुषत उपदेशसत्त्वेऽपि समूलोन्मूलनं चिकीर्षुर्दैववशात्त्वं न शृणोषीत्याह—वच इति । विचक्षणैर्भाविकार्यपर्यालोचनचतुरैः पथ्यं हितोदर्कं वच उक्तमपि मिथ्याप्रणीतात्मा तद्वचो मिथ्यावस्तुभूतमसारभूतमित्यश्रद्धया प्रणीतः प्राप्त आत्मा बुद्धिर्येन तादृशो राक्षसानामभावाय नाशाय न प्रतिपद्यसे न परिगृह्णासि ॥ १० ॥

रा० टी०—वच इति । वा अथवा मिथ्या असद्वस्तुषु प्रणीतः प्राप्तः आत्मा मनो यस्य स त्वं विचक्षणैर्विवेकिभिः उक्तं पथ्यं हितं वचः राक्षसानामभवाय विध्वंसाय न प्रतिपद्यसे गृह्णासि ॥ १० ॥

गो० टी०—वच इति । पूर्वश्लोके रावणस्याभाव उपन्यस्तः । अनेन राक्षसाभावपक्ष उपन्यस्यते—मिथ्याप्रणीतात्मा मिथ्यास्निग्धात्मा स्नेहीति भावयन्निवेति यावत् । त्वं विचक्षणैः साधुभिरुक्तं पथ्यं हितं वचः राक्षसानामभावाय न प्रतिपद्यसे नाङ्गीकरोषि वा । राक्षसेषु स्नेहं भावयन् तद्विनाशमेव हृदि कृत्वा साधुवचनं न शृणोषीत्यर्थः ॥ १०–१२ ॥

११ ] ति० टी०—ननु मया सज्जनोपदेशाग्रहे कुतो राक्षसनाशप्रसङ्ग इत्यत्रोत्तरं वक्तुं लोकस्थितिमाह—अकृतेति । अकृतात्मानं सदुपदेशाग्राहिबुद्धिम् ॥ ११ ॥

१२ ] ति० टी०—तथैवेति । राजापराधतोऽशेषप्रजानाशस्य लोकप्रसिद्धत्वादिति भावः ॥ १२ ॥

रा० टी०—अकृतेति । न कृतः स्वास्थ्यं प्रापितः आत्मा मनो येन तम् अत एव अनये रतं राजानमासाद्य समृद्धानि राष्ट्राणि नगराणि च यथा विनश्यन्ति तथा इयं लङ्का त्वां समासाद्य एकस्य तवैवापराधात् शीघ्रं विनशिष्यति विनङ्क्ष्यति । अर्धचतुष्टयमेकान्वयि ॥ ११ ॥ १२ ॥

१३ ] ति० टी०—किं च सज्जनोपदेशमशृण्वतो नाशं सज्जनोऽनुमोदत इत्याह—स्वकृतैरिति । स्वकृतैर्दुष्कृतैर्हन्यमानस्यावश्यप्राप्तनाशस्यादीर्घदर्शिनो भाव्यनर्थदर्शनासमर्थस्य विनाशे उपस्थिते भूतानि सर्वप्राणिनो नन्दन्ति ॥ १३ ॥

रा० टी०—स्वकृतैरिति । हे रावण ! अदीर्घदर्शिनः भविष्यदनर्थज्ञानाभाववतः अत एव स्वकृतैः स्वोपार्जितैः कर्मभिर्हन्यमानस्य तव विनाशे भूतानि सर्वे प्राणिनः अभिनन्दन्ति अभिनन्दिष्यन्ति ॥ १३ ॥

गो० टी०—स्वकृतैरिति । रावणादीर्घदर्शिन इत्यत्र रावणेति संबुद्धिः । निकृताः त्वया वञ्चिताः ॥ १३ ॥ १४ ॥

१४ ] ति० टी०—एवं निराकृतास्त्वया क्लेशिताः सर्वे जनाः । एतद्व्यसनं स्वबुद्धिप्राप्तनाशम् ॥ १४ ॥

रा० टी०—तदेव भङ्ग्यन्तरेणाह—एवमिति । एवं विनाशं प्राप्तं पापकर्माणं त्वां निकृताः त्वत्तः प्राप्तक्लेशाः जनाः रौद्रोऽयं रावणः एतत् व्यसनं प्राप्तः दिष्ट्या भाग्यमेतत् इति हर्षिताः वक्ष्यन्ति ॥ १४ ॥

१५ ] ति० टी०—ऐश्वर्यं कुर्वित्यादि यदुक्तं रावणेन प्रलोभनाय तत्प्रत्याख्याति—शक्येति । अनन्या भिन्नत्वाभाववती ॥ १५ ॥

रा० टी०—शक्येति । भास्करेण प्रभा इव राघवेणाहमनन्या अन्यत्र स्थातुमशक्येत्यर्थः, अतः ऐश्वर्येण धनेन च लोभयितुं नाहं शक्या ॥ १५ ॥

गो० टी०—शक्येति । अनेन रावणोक्तप्रलोभनानामुत्तरमुच्यते । ऐश्वर्येण अन्तःपुरस्त्रीणामीश्वरत्वेन धनेन आभरणादिना वा लोभयितुं वञ्चयितुम् अहं न शक्या । अत्र हेतुमाह—अनन्येति । अहं नित्यानपायिनी राघवेण रघुकुलावतीर्णेन विष्णुना अनन्या अविभक्ता यत्र यत्र कुले विष्णुरवतरति तत्र तत्रावतीर्णा लक्ष्मीरित्यर्थः । तृतीयया तत्परतन्त्रा चास्मीति द्योत्यते । न केवलं तस्य परतन्त्राहं प्रत्युत तस्याप्यतिशयावहेति दृष्टान्तेन द्योतयति—भास्करेणेति । प्रभा हि भास्करस्याप्यतिशयमावहति तथैव हि मारीचो भवन्तं प्रति निवेदितवान् । अप्रमेयं हि तत्तेजो यस्य सा जनकात्मजेति । किं तद्धितवचनमपि मोहेन विस्मृतोऽसीति तत्त्वमाह ॥ १५ ॥

१६ ] ति० टी०—प्रलोभनाशक्यत्वमेव स्पष्टयति—उपधायेति । उपधानं कृत्वेति सह शयित्वेति यावत् । कस्यचिदतत्स्वभूतस्य ॥ १६ ॥

रा० टी०—उपधायेति । लोकनाथस्य सकलभुवनाधि-

१ इयमिति गो. पाठः ।

अहमौपयिकी भार्या तस्यैव च[1] धरापतेः । व्रतस्नातस्य [2]विद्येव विप्रस्य विदितात्मनः ॥ १७ ॥
साधु रावण रामेण मां समानय दुःखिताम् । वने [3]वासितया सार्धं करेण्वेव गजाधिपम् ॥ १८ ॥
मित्रमौपयिकं कर्तुं रामः स्थानं परीप्सता । [4]वधं चानिच्छता घोरं त्वयाऽसौ पुरुषर्षभः ॥ १९ ॥

पतेः रामस्य भुजं बाहुं सत्कृतं यथा भवति तथोपधाय अन्यस्य रामभिन्नस्य भुजं कौटिल्यं कथमुपधास्यामि धारयिष्यामि सहिष्यामीत्यर्थः ॥ १६ ॥

गो० टी०–उपधायेति । लोकनाथस्य सर्वैर्ब्रह्मादिदेवगणैः स्वस्वपदप्राप्तये नाथ्यमानस्य याच्यमानस्य । "नाथृ, याच्ञायाम्" इति धातुः । तस्य रामस्य सत्कृतं भुजं दक्षिणं भुजमित्यर्थः उपधाय उपधानीकृत्य तेन तत्परिष्वक्तत्वं गम्यते । एवं श्लाघिताहम् अन्यस्य ततो भोगं याचमानस्य कस्यचिदनामधेयस्य क्षुद्रस्य त्वादृशः भुजम् असत्कृतं कथं नामोपधास्यामि न कथंचिदपीत्यर्थः ॥ १६ ॥

१७ ] ति० टी०–औपयिकी योग्या । व्रतस्नातस्य ब्रह्मचर्यव्रतपूर्वकं कृतसमावर्तनस्य यथाशास्त्रं मत्पाणिग्रहणं कृतवतो विदितात्मनो ज्ञातस्वतत्त्वस्य ज्ञातपुरुषार्थसाधनस्य च तस्यैवाहं योग्या विप्रस्य विद्येव ब्रह्मविद्येव ब्रह्मविद्या यथा ब्राह्मणस्यैवासाधारणं स्वं न्यायप्राप्तं तद्वत् संन्यासे तस्यैवाधिकाराद्ब्रह्मविद्यायां ब्राह्मणस्यैवाधिकार इति भावः । अन्ये तु—विप्रपदं त्रैवर्णिकपरम्, त्रैवर्णिकस्यैव ब्रह्मविद्यायामधिकारः, अत एव 'धीरस्य' इति क्वचित्पाठ इत्याहुः॥१७॥

रा० टी०–अहमिति । धरापतेः निखिलब्रह्माण्डाधिपतेः विदितात्मनः सामान्यतः प्रसिद्धस्वरूपस्य रामस्य व्रतस्नातस्य विप्रस्य विद्येव औपयिकी योग्या भार्याहमस्मि ॥ १७ ॥

गो० टी०–अहमिति । अहं तु शीलवयोवृत्ता तस्यैव तुल्यशीलवयोवृत्तस्य वसुधापतेः औपयिकी उचिता भार्या । 'ह्रीश्च ते लक्ष्मीश्च पत्न्यौ' इति भूमिनाथस्याहं लक्ष्मीदेव्युचितेति हृदयम् । कथमिव व्रतस्नातस्य वेदव्रतैः स्नातस्य धीरस्य धीमतः ब्राह्मणस्य विदितात्मनः आत्मज्ञानवतः विद्येव योगाभ्यासरूपविद्येव ॥ १७ ॥

१८ ] ति० टी०–हे रावण ! मां रामेण समानय तदेव ते साधु । वने वासितया काङ्क्षया करेण्वा सार्धं गजाधिपमिव । उपमानोपमेयवाक्ययोर्वैषम्यं तु क्रुद्धविरहिण्युक्तित्वान्न दोषावहम् । करेणुं गजाधिपेनेति तु वक्तुमुचितम् ॥ १८ ॥

रा० टी०–ननु इदानीं मम कल्याणं कथं स्यादित्यत आह–साध्विति । हे रावण ! दुःखितां मां साधु यथा भवति तथा रामेण समानय संयोजय । तत्र दृष्टान्तः वासितया वासितां युवतिं करेण्वा करेणुं गजाधिपं गजाधिपेनेव 'वासिता युवतिः प्रोक्ता' इति कोशः ॥ १८ ॥

गो० टी०–पथिचोरं पानीययाचकवद्रावणमर्थयते—साध्विति । साधु रावण ! मद्वियोगेन त्वत्कौर्यमधिकं जातमिति भावः । एवमुत्कटकौर्यं प्रति याचनात् स्वस्यातिशयो व्यज्यते । रामेण सर्वाङ्गसुन्दरेण मां तस्यानन्यार्हां तद्वियोगे जीवितं धारयितुमशक्ताम् । नच सीतेत्यादि । समानय संगमय । तत्र हेतुः–दुःखितामिति । करेण्वा गजवध्वा वाशितया यौवनगतया 'वाशिता युवतिः प्रोक्ता कलभः करिपोतकः' इति वचनात् । यद्वा वासितयेति पाठः । वने वासितया बद्धया । अत्र विभक्तिव्यत्यासः कार्यः । वने वासितां करेणुं गजाधिपेनेवेति । वस्तुतस्तु यथान्यास एवान्वेति । रामेण संगमनं नाम रामाह्वानम् । नहि पुनरपि रामस्थानं तेन नेतुमीष्टे । किंत्वत्र राममाहूय समर्पणमेव अत एव करेण्वा गजाधिपमित्युक्तम् ॥ १८ ॥

१९ ] ति० टी०–बुद्ध्यन्तरं चोपदिशति—मित्रमिति । स्थानं परीप्सता लङ्कां रिरक्षयिषता आत्मनो बन्धं च घोरं सकलकुटुम्बपीडाकरमनिच्छता त्वया पुरुषर्षभोऽसौ रामो मित्रं कर्तुमौपयिकं युक्तम् ॥ १९ ॥

रा० टी०–मित्रमिति । स्थानं स्वपुरं परीप्सता रक्षेच्छुना वधं च अनिच्छता त्वया पुरुषर्षभो रामः मित्रं कर्तुमौपयिकं योग्यः ॥ १९ ॥

गो० टी०–एवं रावणे जननीत्वप्रतिपत्तिं विहाय कानिचिदसंगतानि जल्पति देवी खिन्ना सती कोऽयमस्य स्वभावः कथमस्य कोऽप्युपदेष्टा सेत्स्यतीति इह सन्तो न वा सन्तीत्यादिना विचिन्त्य दयावती स्वयमेवोपदिशति मातृत्वप्रयुक्तवात्सल्येन—मित्रमिति । रामं शरणं गच्छेत्युक्ते तत्र रावणः सहेत दुर्मानितया आत्मस्तद्बुद्ध्यनुसारेण मित्रमित्याह । किंच शरणागतं स्वस्याधीनं मन्यते देवी देवश्च । अत एव रामो वक्ष्यति । मित्रभावेन संप्राप्तं न त्यजेयं कथंचनेति । इमं च तथाह । मित्रमिति । रामः मित्रं कर्तुं युक्तमित्यर्थः । मित्रशब्दापेक्षया औपयिकमिति नपुंसकनिर्देशः । स्थानं परीप्सता मार्गचोरस्यापि भूमौ पदानि स्थापयित्वा चौर्यं कर्तव्यम् । तत्रापि यदि स्थानमभीप्सितं तर्हि तमेव भजेत्यर्थः । शरणागतिदैन्यादपि मरणमेव वरमिति यदि मन्यसे तदानीं तद्भजनं कर्तव्यमित्याह—वधं चानिच्छता घोरं तव सम्यङ् मरणं न दास्यति । त्वां संस्थाप्य त्वत्समक्षं त्वत्संतानजान् हिंसित्वा ततस्ते चित्रवधं करिष्यति तं यदि नेच्छसि तदा प्रत्तव्या इत्यर्थः । त्वया तत्प्रतीकारावलोकनेन त्वयाऽवश्यं तच्छरणागतिः कर्तव्या । एवं स रक्षक इत्यत्र किं प्रमाणं तत्राह–असौ निरन्तरप्रत्ययेनास्या रामः प्रत्यक्ष इव भासते । रावणस्यापि मायामृगानुसरणसमये तदाकारदर्शनजभयेन वृक्षे वृक्षे च पश्या-

१ वसुधापतेरिति गो. पाठः । २ धीरस्य विद्येवेति गो. पाठः । ३ वाशितयेति गो. पाठः । ४ वधमिति गो. रा. पाठः ।

विदितः सर्वधर्मज्ञः शरणागतवत्सलः । तेन मैत्री भवतु ते यदि जीवितुमिच्छसि ॥ २० ॥
प्रसादयस्व त्वं चैनं शरणागतवत्सलम् । मां चास्मै प्रयतो भूत्वा निर्यातयितुमर्हसि ॥ २१ ॥
एवं हि ते भवेत्स्वस्ति संप्रदाय रघूत्तमे । अन्यथा त्वं हि कुर्वाणः परां प्राप्स्यसि चापदम् ॥ २२ ॥
वर्जयेद्वज्रमुत्सृष्टं वर्जयेदन्तकश्चिरम् । त्वद्विधं न तु संक्रुद्धो लोकनाथः स राघवः ॥ २३ ॥
रामस्य धनुषः शब्दं श्रोष्यसि त्वं महास्वनम् । शतक्रतुविसृष्टस्य निर्घोषमशनेरिव ॥ २४ ॥
इह शीघ्रं सुपर्वाणो ज्वलितास्या इवोरगाः । इषवो निपतिष्यन्ति रामलक्ष्मणलक्षिताः ॥ २५ ॥
रक्षांसि [4]निहनिष्यन्तः पुर्यामस्यां न संशयः । असंपातं करिष्यन्ति पतन्तः कङ्कवाससः ॥ २६ ॥
राक्षसेन्द्र महासर्पान्स रामगरुडो महान् । उद्धरिष्यति वेगेन वैनतेय इवोरगान् ॥ २७ ॥
अपनेष्यति मां भर्ता त्वत्तः शीघ्रमरिन्दमः । असुरेभ्यः श्रियं दीप्तां विष्णुस्त्रिभिरिव क्रमैः ॥ २८ ॥

---

मीत्युक्तरीत्या पुरस्थित इव भासते । पुरुषर्षभः मत्कृतापराधेन कथं मामङ्गीकरिष्यतीत्येवं त्वया न चिन्तनीयम् आनुकूल्यलेशे सति सर्वमपराधं विस्मरिष्यति पुरुषर्षभत्वात् । मित्रकरणप्रकारमाह—प्रसादयस्वेति । त्वं चेत्यनेनाहमपि प्रसादयिष्यामीति सिद्धम् । प्रयतो भूत्वा मनःकालुष्यं त्यक्त्वेत्यर्थः । निर्यातयितुं प्रत्यर्पयितुम् ॥ १९–२१ ॥

२० ] ति० टी०—कथमेवमपराद्धस्य मे तेन मैत्री तत्राह—विदित इति । यतः—सर्वधर्मज्ञ इति । शत्रुरपि शरणागतो रक्षणीय इति धर्मज्ञत्वेन शरणागतवत्सलत्वेन च विदितः प्रसिद्धः, अतस्तेन मैत्री भवतु तेन मैत्री प्राप्तकालेत्यर्थः ॥ २० ॥

रा० टी०—विदित इति । शरणागतवत्सलो यो रामः तेन सह तव मैत्री भवतु ॥ २० ॥

२१ ] ति० टी०—अत एनं शरणागतवत्सलं त्वं प्रसादयस्व, मां चास्मै निर्यातयितुं दातुमर्हसि ॥ २१ ॥

रा० टी०—प्रसादयस्वेति । एनं रामं प्रसादयस्व अस्मै रामाय मां निर्यातयितुं दातुं त्वमर्हसि ॥ २१ ॥

२२ ] ति० टी०—संप्रदायेति । मामिति शेषः ॥ २२ ॥

रा० टी०—एवमिति । एवम् अनेन प्रकारेण रघूत्तमे संप्रदाय प्रापय्य ते स्वस्ति भवेत् अन्यथा कुर्वाणस्त्वं पराम् आपदं प्राप्स्यसि ॥ २२ ॥

गो० टी०—एवमिति । संप्रदाय स्थितायेति शेषः ॥ २२ ॥

२३ ] ति० टी०—मत्प्रत्यर्पणं विना सर्वथा तव जीवनं नास्तीत्याह—वर्जयेदिति । त्वद्विधप्राणान्न नाशयेदित्यर्थः । राघवो न तु वर्जयेन्नाशयेदेव ॥ २३ ॥

रा० टी०—वर्जयेदिति । उत्सृष्टं त्यक्तं वज्रम् अन्तकश्च त्वद्विधं वर्जयेत् न हन्यात् संक्रुद्धो राघवस्तु न वर्जयेत् हन्यादेवेत्यर्थः ॥ २३ ॥

गो० टी०—वर्जयेदिति । उत्सृष्टम् इन्द्रमुक्तं वज्रम् अन्तकश्च त्वद्विधं वर्जयेत् । राघवस्त्वद्विधं न वर्जयेदिति संबन्धः ॥ २३ ॥

२४ ] ति० टी०—महास्वनं महान्तं नादम् नादो हि कश्चिच्छब्दधर्मः प्रतिशब्दरूपः । श्रोष्यसि यदि मां न ददासीति भावः ॥ २४ ॥

रा० टी०—रामस्येति । शतक्रतुविसृष्टस्य इन्द्रेण त्यक्तस्य अशनेर्महास्वनं निर्घोषमिव रामस्य धनुषः शब्दं त्वं श्रोष्यसि ॥ २४ ॥

गो० टी०—रामस्येति । महास्वनं महानादं नादो नाम स्वरावयवविशेषः ॥ २४ ॥

२५ ] ति० टी०—रामलक्ष्मणलक्षिताः तन्नामाङ्का इत्यर्थः २५

रा० टी०—इहेति । ज्वलितास्या उरगा इव रामलक्ष्मणलक्षिताः ताभ्यां विसृष्टाः इषवः इह लङ्कायां निपतिष्यन्ति २५

गो० टी०—इहेति । रामलक्ष्मणलक्षणाः रामलक्ष्मणनामाङ्काः । असंपातम् अनवकाशम् ॥ २५ ॥ २६ ॥

२६ ] ति० टी०—कङ्कवाससो व्रणाः । असंपातमनवकाशम् । 'असंबाधम्' इति पाठे राक्षससंमर्दरहितम् ॥ २६ ॥

रा० टी०—रक्षांसीति । अस्यां पुर्यां पतन्तः अत एव रक्षांसि निहनिष्यन्तः कङ्कवाससः कङ्कपत्रविशिष्टपुङ्खाः बाणा असंपातमवकाशराहित्यं करिष्यन्ति ॥ २६ ॥

२७ ] ति० टी०—राक्षसेन्द्ररूपान्महासर्पान् । उद्धरणशैघ्र्ये उपमा—वैनतेय इवेति ॥ २७ ॥

रा० टी०—राक्षसेन्द्रेति । राक्षसेन्द्ररूपमहासर्पान् सः प्रसिद्धः महान् रामरूपगरुडः उद्धरिष्यति हनिष्यति अत एव त्रिभिः क्रमैः पादैः असुरेभ्यः श्रियं विष्णुरिव उरगान् वैनतेय इव भर्ता रामो मामपनेष्यति दूरीकरिष्यति त्वत्तः । अर्धचतुष्टयमेकान्वयि ॥ २७ ॥ २८ ॥

गो० टी०—राक्षसेन्द्रमहासर्पानिति । रूपकोक्तमेवोपमयाप्याह—वैनतेय इति ॥ २७ ॥

२८ ] ति० टी०—'न चापि मम हस्तात्त्वां प्राप्तुमर्हति राघवः' इत्यस्योत्तरमाह—अपनेष्यतीति ॥ २८ ॥

गो० टी०—न चापि मम हस्तात्त्वां प्राप्तुमर्हतीत्युक्तस्यो-

१ वधमिति गो. पाठः । २ रावणेति गो. पाठः । ३ लक्षणा इति गो. पाठः । ४ परिनिघ्नन्त इति गो. पाठः । ५ समन्तत इति गो. पाठः ।

जनस्थाने हतस्थाने निहते रक्षसां बले । अशक्तेन त्वया रक्षः कृतमेतदसाधु वै ॥ २९ ॥
आश्रमं तत्तयोः शून्यं प्रविश्य नरसिंहयोः । गोचरं गतयोर्भ्रात्रोरपनीता त्वयाऽधम ॥ ३० ॥
नहि गन्धमुपाघ्राय रामलक्ष्मणयोस्त्वया । शक्यं संदर्शने स्थातुं शुना शार्दूलयोरिव ॥ ३१ ॥
तस्य ते विग्रहे ताभ्यां युगग्रहणमस्थिरम् । वृत्रस्येवेन्द्रबाहुभ्यां बाहोरेकस्य [२]विग्रहे ॥ ३२ ॥
क्षिप्रं तव सनाथो मे रामः सौमित्रिणा सह । तोयमल्पमिवादित्यः प्राणानादास्यते शरैः ॥ ३३ ॥
गिरिं कुबेरस्य गतोऽ[३]थवालयं सभां गतो वा वरुणस्य राज्ञः ।
असंशयं दाशरथे[४]र्विमोक्षसे महाद्रुमः कालहतोऽशनेरिव ॥ ३४ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये सुन्दरकाण्डे एकविंशः सर्गः ॥ २१ ॥

---

तस्माह—अपनेष्यतीति । जनस्थान इति । एतत् युद्धं विना चौर्येणापहरणम् ॥ २८ ॥ २९ ॥

२९ ] ति० टी०—हतस्थाने हतास्पदे ॥ २९ ॥

रा० टी०—जनेति । रक्षसां बले निहते सति अत एव जनस्थाने हतस्थाने निवृत्तराक्षसनिवासे सति अशक्तेन त्वया एतत् अपहरणरूपमसाधु कर्म कृतम् ॥ २९ ॥

३० ] ति० टी०—नरसिंहयोः शून्यमाश्रमं प्रविश्य यत्कृतं तदसाधुवृत्ति किलेत्यर्थः । गोचरं गतयोर्मायामृगवृत्तान्तं ज्ञातुं गतयोः । गोचरं वनप्रदेशं गतयोरिति वार्थः॥३०॥

रा० टी०—तदेव भङ्ग्यन्तरेणाह—आश्रममिति । गोचरं मायामृगं हन्तुं वनप्रदेशं गतयोः भ्रात्रोः शून्यमाश्रमं प्रविश्य त्वयाऽहमपनीता ॥ ३० ॥

गो० टी०—आश्रममिति । गोचरं गतयोः बाह्यदेशं गतयोः ॥ ३० ॥ ३१ ॥

३१ ] ति० टी०—यस्माद्रामलक्ष्मणयोर्गन्धमुपाघ्राय शार्दूलयोः संदर्शने शुनेव समक्षं स्थातुं त्वया न शक्यम् ॥ ३१ ॥

रा० टी०—न हीति । शार्दूलयोर्गन्धमुपाघ्राय शुनेव रामलक्ष्मणयोर्गन्धमुपाघ्राय संदर्शने दृष्टिपथे स्थातुं त्वया न शक्यम् ॥ ३१ ॥

३२ ] ति० टी०—तस्याधमबलस्याधमकृत्यस्य च तेऽग्रेऽपि ताभ्यां विग्रहे कलहे प्रसक्ते सति युगग्रहणं सहायसंपत्तिरस्थिरा जनस्थानबलसहायसंपत्तिवत् तस्मात्तेन युद्धे तव निग्रह एव वृत्रसंबन्धिन एकस्य बाहोर्द्वाभ्यामिन्द्रबाहुभ्यां युद्धे वृत्रबाहुपराजयवत् । वज्रच्छिन्नैकबाहुर्वृत्रो बहुकालमिन्द्रेण सहैकबाहुना युद्धं कृतवान्पराजितश्चेति भागवते प्रसिद्धम् ॥३२॥

रा० टी०—तस्येति । ताभ्यां रामलक्ष्मणाभ्यां सह विग्रहे सति ते तव युगग्रहणं संयुगेन लभ्यं विजय इत्यर्थः अस्थिरं न भविष्यतीत्यर्थः । तत्र दृष्टान्तः—विग्रहे सति इन्द्रबाहुभ्यां वृत्रस्यैकस्य छेदादवशिष्टबाहोः स्थितिरिव । स्थितिरित्यध्याहृतम् एकस्य इन्द्रच्छेदितत्वाद्बहुकालमेकेन बाहुना युद्धं प्रवृत्तमित्यन्यत्र प्रसिद्धम् । एतेनोपमालङ्कारेण तवापि बाहुच्छेदो भवितेति ध्वनितम् ॥ ३२ ॥

गो० टी०—तस्य त इति । तस्य ते असमर्थतया चोरवृत्तेस्तव ताभ्यां रामलक्ष्मणाभ्यां विग्रहे सति युद्धे सति युगग्रहण संयुगे जयग्रहणम् अस्थिरम् असंभावितम् । यद्वा युगग्रहणं युद्धारम्भः अस्थिरम् अध्रुवम् किंतु ताभ्यां प्रसह्य वधस्ते सिद्ध इति दृष्टान्तेनाह—वृत्रस्येवेति । वृत्रस्य एकस्य बाहोर्द्वाभ्यामिन्द्रस्य बाहुभ्यां सह विग्रहे सति निग्रह इवाजय इव । वृत्रस्यैकेन बाहुना इन्द्रस्य द्वयोर्बाह्वोरिव एकेन त्वया तयोर्द्वयोर्जयो न शक्य इत्यर्थः ॥ ३२ ॥

३३ ] ति० टी०—मे नाथः स राम इत्यन्वयः ॥ ३३ ॥

रा० टी०—क्षिप्रमिति । स प्रसिद्धो मे नाथो रामः अल्पं तोयमादित्य इव शरैः तव प्राणान् आदास्यते ॥ ३३ ॥

गो० टी०—क्षिप्रमिति । सः नाथ इति पदच्छेदः ॥ ३३ ॥

३४ ] ति० टी०—कुबेरस्यालयं कैलासम् । कैलासवरुणसभे ऊर्ध्वाधस्थसकललोकोपलक्षणम् । कालहतस्त्वमशनेः संबन्धान्महाद्रुम इव दाशरथेः संबन्धाद्विमोक्षसे प्राणानिति शेषः । ‘ विमोक्ष्यसे ’ इति पाङ्क्तः पाठ इति कतकः ॥ ३४ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये सुन्दरकाण्डे एकविंशः सर्गः ॥ २१ ॥

रा० टी०—गिरिमिति । कुबेरस्य आलयं गिरिं गतः अथवा वरुणस्य सभां गतोऽपि त्वं कालहतः कालस्यापि निवारकस्य दाशरथेः रामस्य बाणादिति शेषः विमोक्ष्यसे प्राणांस्त्यक्ष्यसि, तत्र दृष्टान्तः अशनेः प्रक्षेपात् द्रुम इव ॥३४॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ सुन्दरकाण्डे एकविंशः सर्गः ॥ २१ ॥

गो० टी०—गिरिं कुबेरस्य गतोपधाय वेति । अपधाय अपक्रम्य । कुबेरस्य गिरिं कैलासम् ‘ कैलासस्थानमलका’ इत्यमरः ॥ ३४ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने एकविंशः सर्गः ॥ २१ ॥

---

१ त्विति गो. पाठः । २ निग्रहः इति गो. पाठः । ३ ऽपधाय वेति गो. पाठः । ४ नेति गो. पाठः ।

# द्वाविंशः सर्गः ।

सीताकृतगर्हणेन क्रुद्धो रावणो मासद्वयं प्रतीक्ष्य त्वां मारयामीति जानकीं भीषयते । ततो रावणस्त्रीभिर्नेत्रसंकेतादिभिः कृताश्वासा पुना रावणं गर्हति । घोरविकृतनानाकृती राक्षसीस्तर्जनसान्त्वनादिना जानक्या आवर्जने विनियुज्य तर्जनोद्यतं रावणं धान्यमालिनी नाम तत्पत्नी ततो निवर्तयति । स च विमोहितः सान्तःपुरिकाभिरन्तर्गृहं प्रविशति ।

सीताया वचनं श्रुत्वा परुषं राक्षसेश्वरः । प्रत्युवाच ततः सीतां विप्रियं प्रियदर्शनाम् ॥ १ ॥
यथा यथा सान्त्वयिता वश्यः स्त्रीणां तथा तथा । यथा यथा प्रियं वक्ता परिभूतस्तथा तथा ॥ २ ॥
संनियच्छति मे क्रोधं त्वयि कामः समुत्थितः । द्रवतो मार्गमासाद्य हयानिव सुसारथिः ॥ ३ ॥
वामः कामो मनुष्याणां यस्मिन्किल निबध्यते । जने तस्मिंस्त्वनुक्रोशः स्नेहश्च किल जायते ॥ ४ ॥
एतस्मात्कारणान्न त्वां घातयामि वरानने । वधार्हामवमानार्हां मिथ्या प्रव्रजने रताम् ॥ ५ ॥
परुषाणि हि वाक्यानि यानि यानि ब्रवीषि माम् । तेषु तेषु वधो युक्तस्तव मैथिलि दारुणः ॥ ६ ॥
एवमुक्त्वा तु वैदेहीं रावणो राक्षसाधिपः । क्रोधसंरम्भसंयुक्तः सीतामुत्तरमब्रवीत् ॥ ७ ॥
द्वौ मासौ रक्षितव्यौ मे योऽवधिस्ते मया कृतः । ततः शयनमारोह मम त्वं वरवर्णिनि ॥ ८ ॥

---

१ ] ति० टी०–प्रियदर्शनां सीतां प्रत्युत्तरयोक्तिं कृत्वा ततो विप्रियमाहेति संबन्धः ॥ १ ॥

रा० टी०–सीतावचनश्रवणानन्तरकालिकं सीतां प्रति रावणोक्तिमाह–सीताया इति । सीतायाः परुषं वचनं श्रुत्वा सीतां प्रत्युवाच ॥ १ ॥

गो० टी०–सीताया इत्यादि ॥ १ ॥

२ ] ति० टी०–लोके स्त्रीणां सान्त्वयिता पुमान्यथा यथा सान्त्वयति तथा तथा तत्तत्सान्त्वानुसारेण स स्त्रीणां वश्य इष्टो भवति, त्वयि तु यथा यथाऽहं प्रियं वक्ताऽभूवं तथा तथा त्वया परिभूत एवास्मीति शेषः ॥ २ ॥

रा० टी०–तद्वचनाकारमाह–यथा यथेति । यथा यथा सान्त्वयिता सान्त्ववचनवक्ता तथा तथा तत्तद्वचनानुसारेण वश्यः प्रियो भवति जन इति शेषः, अहं तु स्त्रीणां युष्माकं यथा यथा प्रियं वक्ता तथा त्वया परिभूतोऽस्मीति शेषः ॥ २ ॥

गो० टी०–सान्त्वयिता अनुनेता ॥ २ ॥

३ ] ति० टी०–एवं च त्वद्विषये न्यायप्राप्तमुत्पन्नं क्रोधं क्रोधकार्यं वधं त्वद्विषये समुत्थितः कामो नियच्छति निरुणद्धि । तत्र दृष्टान्तः—द्रवत इति । अमार्गमासाद्य द्रवतो धावतो हयान्सुसारथिरिव ॥ ३ ॥

रा० टी०–समिति । समुत्थितः कामः त्वत्सेवाविषयकोत्कटेच्छा त्वयि विषये मे क्रोधं सन्नियच्छति निवारयति । तत्र दृष्टान्तः–मार्गमासाद्य प्राप्य द्रवतो हयान् सुसारथिरिव॥३॥

गो० टी०–सन्नियच्छतीति । सन्नियच्छति निरुणद्धि । द्रवतः धावतः । अमार्गमिति च्छेदः ॥ ३ ॥

४ ] ति० टी०–ननु विपरीतं क्रोध एव किं न कामं रुणद्धीत्यत्र कामस्यौत्कट्यादित्याह—वाम इति । क्रूर इत्यर्थः । 'सव्ये कौर्ये सुन्दरे च वामः' इति कोशः । कामकौर्यमेवाह—यस्मिन्निति । परमक्रोधविषयेऽपि यत्र जने कामो निबद्ध्यते तत्र जनेऽनुक्रोशो दया स्नेहश्च जायते । तस्मात्क्रोधात्काम उत्कटकूरस्त्वत्रानित्यर्थः ॥ ४ ॥

रा० टी०–तन्निवारकत्वे हेतुमाह–वाम इति । यस्मिन् जने वामः सुन्दरः उत्कट इत्यर्थः, काम इच्छा निबध्यते चिरं तिष्ठति तस्मिन् जने अनुक्रोशः दया स्नेहश्च जायते एतेनाक्रोशस्नेहयोः क्रोधविध्वंसकत्वं सूचितम् ॥ ४ ॥

गो० टी०–वाम इति । वामः प्रतिकूलः मनुष्याणां प्राणिनाम् अनुक्रोशः कृपा । परिभवादिप्रदानेन मनुष्याणां प्रतिकूलः कामः यस्मिन् जने निबध्यते तस्मिँस्त्वनुक्रोशः स्नेहश्च जायते किल । मिथ्याप्रव्रजिते कपटेन वन्यवृत्तिभाजि रामे रतां सक्ताम् ॥ ४—६ ॥

५–७] ति० टी०–एतस्मादिति । उत्कटकामविषयत्वादित्यर्थः । मिथ्या प्रव्रजने निष्प्रयोजनमेव भोगत्यागरूपप्रव्रजनमार्गे रताम् । 'मिथ्याप्रव्रजिते' इति पाठे रामे रतामित्यर्थः ॥ ५–७ ॥

रा० टी०–एतस्मादिति । एतस्मादुक्तात् कारणात् मिथ्याप्रव्रजने कापट्यविशिष्टवनगमनवति रामे रताम् अत एव वधार्हाम् अत एव अवमानार्हां त्वां न घातयामि ॥ ५ ॥

रा० टी०–वधार्हत्वमुपपादयन्नाह–परुषाणीति । यानि यानि परुषाणि वाक्यानि मां ब्रवीषि तेषु तेषु वाक्येषु श्रुतेष्विति शेषः तव वधो युक्तः ॥ ६ ॥

रा० टी०–एवमिति । रावणः एवमुक्त्वा सीताम् उत्तरमब्रवीत् ॥ ७ ॥

गो० टी०–एवमिति । क्रोधसंरम्भसंयुक्तः क्रोधप्रणयाभ्यां संयुक्तः ॥ ७ ॥

८ ] ति० टी०–अवधिः 'मासान्द्वादश भामिनि' इत्या-



१ प्रव्रजिते इति गो. पाठः ।

द्वाभ्यामूर्ध्वं तु मासाभ्यां भर्तारं मामनिच्छतीम् । मम त्वां प्रातराशार्थे सूदाश्छेत्स्यन्ति खण्डशः॥ ९ ॥
तां भर्त्स्यमानां संप्रेक्ष्य राक्षसेन्द्रेण जानकीम् । देवगन्धर्वकन्यास्ता विषेदुर्विकृतेक्षणाः ॥ १० ॥
ओष्ठप्रकारैरपरा नेत्रैर्वक्रैस्तथापराः । सीतामाश्वासयामासुस्तर्जितां तेन रक्षसा ॥ ११ ॥
ताभिराश्वासिता सीता रावणं राक्षसाधिपम् । उवाचात्महितं वाक्यं वृत्तशौटीर्यगर्वितम् ॥ १२ ॥
नूनं न ते जनः कश्चिदस्मिन्निःश्रेयसि स्थितः । निवारयति यो न त्वां कर्मणोऽस्माद्विगर्हितात्॥ १३ ॥
मां हि धर्मात्मनः पत्नीं शचीमिव शचीपतेः । त्वदन्यस्त्रिषु लोकेषु प्रार्थयेन्मनसाऽपि कः ॥ १४ ॥
राक्षसाधम रामस्य भार्याममिततेजसः । उक्तवानसि यत्पापं क्व गतस्तस्य मोक्ष्यसे ॥ १५ ॥

---

रण्यकाण्डोक्तस्तन्मध्ये द्वौ मासाववशिष्टौ तौ मया रक्षणीयौ । यद्यपि 'वर्तते दशमो मासो द्वौ तु शेषौ प्लवंगम' इति सीता वक्ष्यति, तथाप्यल्पान्तरत्वान्मासद्वयरक्षणोक्तिरविरुद्धा ॥ ८ ॥

रा० टी०—तदुत्तराकारमाह—द्वावित्यादिभिः । योऽवधिः मया कृतः 'मासान् द्वादश भामिनी' इत्यनेन अरण्यकाण्डे निश्चितः तन्मध्ये अवशिष्टाविति शेषः द्वौ मासौ रक्षितव्यौ ततोऽनन्तरं मम शयनं महास्वापं मरणमित्यर्थः आरोह जानीहीत्यर्थः । एतेन रामस्मृतिं त्यक्त्वा स्वौदासीन्यं न त्यक्ष्यसि तर्हि त्वत्सन्निधावहं स्वप्राणांस्त्यक्ष्यामीति सूचितम् ॥ ८ ॥

गो० टी०—द्वौ मासाविति । ते मया योऽवधिः कृतः मासान् द्वादश भामिनीत्यारण्यकाण्डोक्तद्वादशमासात्मकोऽवधिः कल्पितः अत्र द्वौ मासाववशिष्टौ तौ द्वौ मासौ मे मया रक्षितव्यौ प्रतीक्षणीयौ ततः तस्मात्कारणात् मम शयनमारोहेत्यन्वयः प्रातराशार्थं मासद्वयान्तर्गतरात्रिसमाप्त्यनन्तरं हिंसायां कालविलम्बं विना प्रातःकालिकाशनार्थमित्यर्थः । आरभन्ते आलभन्ते रलयोरभेदः 'आलम्भः स्पर्शहिंसयोः' इत्यमरः । महानसे पाकशालायाम् ॥ ८—१० ॥

९ ] ति० टी०—प्रातराशः प्रातःकालिकं भोजनम् ॥ ९ ॥

रा० टी०—स्वस्य मरणकातरत्वे पक्षान्तरमाह—द्वाभ्यामिति । द्वाभ्यां मासाभ्यामूर्ध्वं भर्तारं रामं मां लङ्काश्रियमनिच्छन्तीं त्वां च मम प्रातराशार्थे मत्कर्तृकप्रातर्भोजनार्थं सूदाः पाककर्तारः खण्डशः छेत्स्यन्ति ॥ ९ ॥

१० ] ति० टी०—देवगन्धर्वकन्याः । सीतावदेव बलादाहृता इत्यर्थः ॥ १० ॥

रा० टी०—तामिति । भर्त्स्यमानां तां जानकीं प्रेक्ष्य विकृतमीक्षणं यासां ता देवगन्धर्वकन्या विषेदुः खेदं प्रापुः॥१०॥

११ ] ति० टी०—ओष्ठप्रकारैर्वराकोऽयं किं करिष्यति न भेतव्यमित्येवौष्ठाग्रोत्क्षेपणैः नेत्रैर्भ्रूभङ्गनिमीलनोन्मीलनवद्भिः वक्त्रैर्मुखचलनैः सीतामाश्वासयामासुः ॥ ११ ॥

रा० टी०—ओष्ठेति । अपराः काश्चित् ओष्ठप्रकारैः क्षुद्रो रावणः किं करिष्यतीत्यादिबोधकाधरप्रचालनैः अपरा नेत्रैः वक्त्रैश्च सीतामाश्वासयामासुः ॥ ११ ॥

गो० टी०—ओष्ठप्रकारैरिति । ओष्ठप्रकारैः स्फुरदिषताधोष्ठेषु भङ्गस्फुरणादयो ये विकारास्ते ओष्ठप्रकाराः ओष्ठभङ्गादिरूपसंज्ञादिभिरित्यर्थः एवं वक्त्रनेत्रैः वक्त्रनेत्रसंज्ञादिभिरित्यर्थः॥११

१२ ] ति० टी०—आत्महितं रावणात्मनो हितम् । वृत्तेन सदाचारेण, शौटीर्येण पतिशौर्येण च संजातगर्वम् ॥ १२ ॥

रा० टी०—ताभिरिति । ताभिः कन्याभिः आश्वासिता सीता वृत्तशौण्डीर्याभ्यां शोभनाचारपतिशौर्याभ्यां गर्वितम् आत्महितं वाक्यमुवाच ॥ १२ ॥

गो० टी०—ताभिरिति । वृत्तशौण्डीर्यगर्वितं वृत्तं पातिव्रत्यं तस्य शौण्डीर्यं बलं तेन गर्वितमिति क्रियाविशेषणम् १२

१३ ] ति० टी०—अस्मिन्नगरे ते तव निःश्रेयसस्याभ्युदयसंपादने स्थितो जनो नूनं न कश्चिदस्ति यस्मात्त्वामस्माद्विगर्हितात्कर्मणो न कोऽपि निवारयति ॥ १३ ॥

रा०टी०—तद्वचनाकारमाह—नूनमिति । निःश्रेयसि त्वत्कल्याणे स्थितः आस्थावान् यः कश्चिज्जनः स अस्मिन् लङ्कानगरे नास्ति अत एव विगर्हितात् निन्दितादस्मात् दुरुक्तिरूपात् कर्मणः त्वां न निवारयति ॥ १३ ॥

गो० टी०—नूनमिति । ते निःश्रेयसे स्थितः कश्चिज्जनः नास्ति यः अस्माद्विगर्हितात् कर्मणस्त्वां निवारयति स चापि नास्ति नूनमिति योजना । तवेष्टप्रापकः अनिष्टनिवारकश्च नास्तीत्यर्थः ॥ १३ ॥ १४ ॥

१४ ] ति० टी०—मनसाऽपि कः प्रार्थयेत् । किं पुनर्वचसेति भावः ॥ १४ ॥

रा० टी०—मामिति । शचीपतेः शचीमिव धर्मात्मनः पत्नीं मां त्वदन्यः मनसाऽपि कः प्रार्थयेत् पतिराहित्येन स्थापयितुमिच्छेत् न कोऽपीत्यर्थः ॥ १४ ॥

१५ ] ति० टी०—यत्पापं मम शयनमारोहेत्यादिरूपम् । क्व गतो मोक्ष्यसे । तत्साध्यसमूलनाशस्य त्वया परिहारोऽशक्य इत्यर्थः ॥ १६ ॥

रा० टी०—राक्षसेति । हे राक्षसाधम ! रामस्य भार्यां मां यत् पापं पापहेतुभूतं रामविषयकपरुषवचनम् उक्तवानसि तस्य तस्मात् पापात् क्व गतः सन् मोक्ष्यसे ॥ १६॥

गो० टी०—राक्षसाधमेति । तस्य मोक्ष्यसे तस्मान्मोक्ष्यसे ॥ १६ ॥

---

१ प्रातराशार्थमारभन्ते महानसे इति गो. पाठः । २ तर्ज्यमानामिति गो. पाठः । ३ वक्त्रनेत्रैरिति गो. पाठः । ४ शौण्डीर्येति गो. रा. पाठः । ५ अस्ति निःश्रेयसे इति गो. पाठः । ६ शापमिति गो. पाठः ।

यथा दृप्तश्च मातङ्गः शशश्च सहितौ वने । तथा द्विरदवद्रामस्त्वं नीच शशवत्स्मृतः ॥ १६ ॥
स त्वमिक्ष्वाकुनाथं वै क्षिपन्निह न लज्जसे । चक्षुषो विषये तस्य न यावदुपगच्छसि ॥ १७ ॥
इमे ते नयने क्रूरे विकृते कृष्णपिङ्गले । क्षितौ न पतिते कस्मान्मामनार्य निरीक्षतः ॥ १८ ॥
तस्य धर्मात्मनः पत्नीं स्नुषां दशरथस्य च । कथं व्याहरतो मां ते न जिह्वा पाप शीर्यति ॥ १९ ॥
असंदेशात्तु रामस्य तपसश्चानुपालनात् । न त्वां कुर्मि दशग्रीव भस्म भस्मार्हतेजसा ॥ २० ॥
नापहर्तुमहं शक्या तस्य रामस्य धीमतः । विधिस्तव वधार्थाय विहितो नात्र संशयः ॥ २१ ॥
शूरेण धनदभ्रात्रा बलैः समुदितेन च । अपोह्य रामं कस्माच्चिद्दारचौर्यं त्वया कृतम् ॥ २२ ॥
सीताया वचनं श्रुत्वा रावणो राक्षसाधिपः । विवृत्य नयने क्रूरे जानकीमन्ववैक्षत ॥ २३ ॥
नीलजीमूतसंकाशो महाभुजशिरोधरः । सिंहसत्त्वगतिः श्रीमान्दीप्तजिह्वोग्रलोचनः ॥ २४ ॥

---

१६ ] ति० टी०—दृप्तो मातङ्गः शशश्च यदा वने दैवात्सहितौ युयुत्सू भवतस्तयोश्च शशो यथातिक्षुद्रस्तथा रामेण संयुगे त्वं शशवत्क्षुद्रः । रामो गजवदित्यर्थः ॥ १६ ॥

रा० टी०—यथेति । यथा यदा दृप्तो मातङ्गो हस्ती शशश्च वने सहितौ स्थितौ भवतः तथा तदा द्विरदवत् हस्तिवत् महान् रामः शशवत् क्षुद्रस्त्वं स्मृतः उपमितः भवेरिति शेषः ॥ १६ ॥

गो० टी०—यथेति । यथा मातङ्गः शशश्च सहितः युयुत्सादिना संगतः तथान्योन्यसंगतो रामस्त्वं च । अत्र रावणः स्वस्य मातङ्गसाम्यमुक्तमिति भ्राम्येदिति परिहरति—तथेति । तत्र गज इव रामः, शश इव त्वम् ॥ १६ ॥

१७–१९ ] ति० टी०—स त्वं रामादतिक्षुद्रः । क्षिपन्निन्दन् । इह तदसंनिधौ यावन्नोपगच्छसि तावदिह निन्दन्न लज्जसे इत्यन्वयः ॥ १७–१९ ॥

रा० टी०—स इति । तस्य रामस्य चक्षुषोर्विषये यावत्त्वं न गतः तावदेव इक्ष्वाकुनाथं क्षिपन् निन्दन् त्वं न लज्जसे एतेन त्वमतीव निर्बुद्धिरिति सूचितम् ॥ १७ ॥

रा० टी०—इमे इति । हे अनार्य ! मां निरीक्षतः क्रूरदृष्ट्याऽवलोकयतः ते नयने क्षितौ कस्मान्न पतिते ॥ १८ ॥

रा० टी०—तस्येति । हे पाप ! धर्मात्मनो रामस्य पत्नीं मां व्याहरतः दुरुक्तमुच्चारयतस्ते जिह्वा कथं न शीर्यति पतति ॥ १९ ॥

गो० टी०—स त्वमिति । इक्ष्वाकुनाथं क्षिपन् मायामृगव्याजेन दूरं निस्सारयन् इह स्वजनेषु न तावदुपगच्छसि यद्युपगच्छसि तदा तत्प्रभावं वेत्स्यसीत्यर्थः ॥ १७—१९ ॥

२० ] ति० टी०—ननु न पतिते न शीर्यतीत्युक्तिर्यदि पातिव्रत्यमूला, तर्हि तथानिग्रहं कस्मान्न करोषीत्यत्राह—असंदेशादिति । शापविषये रामाज्ञाभावात् । शापसामर्थ्येऽपि तपोऽनुपालनाद्धेतोरपि भस्मार्हेण भस्मजनकत्वशक्तिमता तेजसा स्वीयपातिव्रत्यतेजसा न भस्म कुर्मि करोमि ॥ २० ॥

रा० टी०—असंदेशादिति । रामस्य असंदेशात् दाहविषये आज्ञाभावात् तपसः तपश्चर्यायाः अनुपालनाच्च भस्मार्हतेजसा त्वां भस्म न कुर्मि करोमि ॥ २० ॥

गो० टी०—असंदेशादिति । रामस्य भर्तुः असंदेशात् अपकारिषु शपेथा इति संदेशाभावात् तपसः पातिव्रत्यरूपस्य कुर्मि करोमि । उत्वविकरणप्रत्ययलोपावार्षौ । भस्मार्हं भस्मीकरणार्हं । तेजसा पातिव्रत्यप्रभावेन ॥ २० ॥

२१ ] ति० टी०—अहं तस्य रामस्य भार्या त्वयाऽपहर्तुं न शक्या, अथाप्ययं विधिरपहरणरूपविधिस्तव वधार्थाय दैवेन विहितोऽत्र न संशयः ॥ २१ ॥

रा० टी०—नेति । तस्य रामस्य भार्याऽहं त्वयाऽपहर्तुं न शक्या तथापि तव वधार्थाय विधिः अपहरणकारणीभूतहेममयकुरङ्गादिविधानं विहितः दैवादिभाग्येनेति शेषः ॥ २१ ॥

गो० टी०—नेति । तस्य रामस्य तस्मात् रामात् । विधिः चौर्येणापहरणं विहितः दैवेनेति शेषः ॥ २१ ॥

२२–२३ ] ति० टी०—शूरेणेत्याद्युपहासोक्तिः । अपोह्य मारीचमाययाऽपसार्य कस्माद्दारचौर्यं त्वया कृतम्, तस्मादत्यन्तमशूरस्त्वमित्युपहासः । चिदिति पादपूरणे ॥ २२ ॥ २३ ॥

रा० टी०—ननु अपहरणशक्तिर्मयि नास्तीति कथं त्वया ज्ञातमित्यत आह—शूरेणेति । चिताः राशीकृताः दाराः येन तत्सबोधनं शूरत्वादिविशिष्टेन त्वया रामम् अपोह्य मायया दूरं प्रापय्य चौर्यं त्वया कस्मात्कृतम् ॥ २२ ॥

गो० टी०—शूरेणेति । बलैः समुदितेन बलेन सर्वश्रेष्ठेनेत्यर्थः । अपोह्य रामं मृगच्छद्मनाऽपवाह्य ॥ २२ ॥

रा० टी०—सीताया इति । रावणः सीतायाः वचनं श्रुत्वा क्रूरे नयने विवृत्य जानकीम् अन्ववैक्षत ॥ २३ ॥

गो० टी०—सीताया इति । विवृत्य विवर्त्य ॥ २३ ॥

२४ ] ति० टी०—सिंहसत्त्वगतिः सिंहवत्सत्त्वं पराक्रमो गतिश्च यस्य सः । 'सिंहसंहननः' इति पाठान्तरम् ॥ २४ ॥

रा० टी०—रावणं वर्णयन्नाह—नीलेत्यादिभिः । नीलजीमूतसंकाशः नीलमेघसदृशः सिंहवत् सत्त्वं पराक्रमो गतिर्गमनं च यस्य दीप्तानि जिह्वोग्रलोचनानि यस्य सः ॥ २४ ॥

गो० टी०—नीलजीमूतेति । सिंहस्येव बलगमने यस्यासौ सिंहसत्त्वगतिः । जिह्वाग्रं लोचने च दीप्तानि यस्य सोऽयं दीप्तजिह्वाग्रलोचनः । कोपेन चलम् अग्रं यस्य तत् चलाग्रं च तत्

---

१ विरूपे इति गो. पाठः । २ व्यवशीर्यते इति गो. पाठः । ३ कस्माद्धीति गो. पाठः । ४ जिह्वाग्रेति गो. पाठः ।

चलाग्रमुकुटप्रांशुश्चित्रमाल्यानुलेपनः । रक्तमाल्याम्बरधरस्तप्ताङ्गदविभूषणः ॥ २५ ॥
श्रोणीसूत्रेण महता मेचकेन सुसंवृतः । अमृतोत्पादने नद्धो भुजङ्गेनेव मन्दरः ॥ २६ ॥
ताभ्यां स परिपूर्णाभ्यां भुजाभ्यां राक्षसेश्वरः । शुशुभेऽचलसंकाशः शृङ्गाभ्यामिव मन्दरः ॥ २७ ॥
तरुणादित्यवर्णाभ्यां कुण्डलाभ्यां विभूषितः । रक्तपल्लवपुष्पाभ्यामशोकाभ्यामिवाचलः ॥ २८ ॥
स कल्पवृक्षप्रतिमो वसन्त इव मूर्तिमान् । श्मशानचैत्यप्रतिमो भूषितोऽपि भयंकरः ॥ २९ ॥
अवेक्षमाणो वैदेहीं कोपसंरक्तलोचनः । उवाच रावणः सीतां भुजङ्ग इव निःश्वसन् ॥ ३० ॥
अनयेनाभिसंपन्नमर्थहीनमनुव्रते । नाशयाम्यहमद्य त्वां सूर्यः संध्यामिवौजसा ॥ ३१ ॥
इत्युक्त्वा मैथिलीं राजा रावणः शत्रुरावणः । संददर्श ततः सर्वा राक्षसीर्घोरदर्शनाः ॥ ३२ ॥
एकाक्षीमेककर्णां च कर्णप्रावरणां तथा । गोकर्णीं हस्तिकर्णीं च लम्बकर्णीमकर्णिकाम् ॥ ३३ ॥
हस्तिपद्यश्वपद्यौ च गोपदीं पादचूलिकाम् । एकाक्षीमेकपादीं च पृथुपादीमपादिकाम् ॥ ३४ ॥
अतिमात्रशिरोग्रीवामतिमात्रकुचोदरीम् । अतिमात्रास्यनेत्रां च दीर्घजिह्वानखामपि ॥ ३५ ॥
अनासिकां सिंहमुखीं गोमुखीं सूकरीमुखीम् । यथा मद्वशगा सीता क्षिप्रं भवति जानकी ॥ ३६ ॥

---

मुकुटं च तेन प्रांशुः दीर्घः । चित्रमाल्यवत्त्वेऽपि रक्तमाल्यवत्त्वं तत्प्राचुर्यादुक्तम् । तप्ताङ्गदविभूषणः तप्तशब्देन तेजिष्ठत्वमुक्तम् । मेचकेन नीलेन । अमृतोत्पादनद्धेन अमृतोत्पादनार्थं नद्धेन । ताभ्यां प्रसिद्धाभ्याम् ॥ २४–२७ ॥

२५ ] ति० टी०–चलमग्रं यस्य तादृशमुकुटवान् ॥ २९ ॥

रा० टी०–चलम् अग्रम् अग्रभागो यस्य स मुकुटो यस्य सः प्रांशुः अत्युन्नतशरीरः ॥ २९ ॥

२६ ] ति० टी०–श्रोणीसूत्रेण कटिसूत्रेण रशनयेत्यर्थः । इन्द्रनीलनद्धमुखारक्तमणियुक्तत्वाच्च तस्य मेचकत्वम् । भुजङ्गो वासुकिः स हि नीलवर्ण इत्याहुः ॥ २६ ॥

रा० टी०–मेचकेन नीलमण्यादिना जटिलत्वेन मयूरचन्द्रकवर्णेन श्रोणिसूत्रेण सुसंवृतः 'मेचकस्तु मयूरस्य चन्द्रके श्यामले पुमान्' इति मेदिनी । तत्र दृष्टान्तः अमृतोत्पादने समुद्रमन्थनसमये भुजङ्गेन नद्धः संबद्धो मन्दर इव ॥ २६ ॥

२७–२८ ] ति० टी०–ताभ्यां प्रसिद्धपराक्रमाभ्याम् । भुजद्वयमेव सर्वदा, युद्धादौ स्वेच्छया दशभुजत्वमिति द्विवचनम् वामदक्षेषु भुजत्वजात्यैकवचनमित्यन्ये ॥ २७ ॥ २८ ॥

२९–३० ] ति० टी०–वसन्त इव भूषितोऽपि श्मशानचैत्यप्रतिमस्तदुभयवत्परिहार्यदर्शनः । चैत्यं बुद्धायतनम्, अत एव भयंकरः ॥ २९ ॥ ३० ॥

रा० टी०–अचलसंकाशो राक्षसेश्वरः परिपूर्णाभ्याम् अतिपुष्टाभ्यां ताभ्यां प्रसिद्धाभ्यां भुजाभ्यां शृङ्गाभ्यां मन्दर इव शुशुभे रावणस्य कामरूपत्वात् भुजद्वयमात्रवत्त्वमपि न विरुध्यते । श्लोकचतुष्टमेकान्वयि ॥ २७ ॥

रा० टी०–तरुणेति । कुण्डलाभ्यां विभूषितः कल्पवृक्षप्रतिमः कल्पतरुसदृशः अत एव मूर्तिमान् वसन्त इव भूषितोऽपि भयङ्करः अत एव स्मशानचैत्यप्रतिमः दर्शनायोग्यत्वेन स्मशानचैत्यसदृशः वैदेहीमवेक्षमाणो रावणः उवाच । श्लोकत्रयमेकान्वयि ॥ २८–३० ॥

गो० टी०–तरुणेत्यादि । अलंकृतत्वे कल्पकसाम्यम् । भयंकरत्वे पुनश्चैत्यसाम्यम् । चैत्यं श्मशानवृक्षः श्मशानमण्डपो वा । सीताया अत्यन्तभयंकरत्वज्ञापनाय रावणवर्णनं कृतम् ॥ २८–३१ ॥

३१–३२ ] ति० टी०–अनयेनानीत्या युक्तम् । अर्थहीनं प्रयोजनहीनं व्रतं रामं वा । अनुव्रते इति संबोधनम् । ईदृशीं त्वां नाशयामि । सूर्य उदितः संध्यां तत्कालिकमन्धकारमिव ॥ ३१ ॥ ३२ ॥

३३–३६ ] ति० टी०–एकाक्षीति द्विरुपादानं व्यक्तिभेदात् ॥ ३३–३६ ॥

रा० टी०–तद्वचनाकारमाह–अनयेनेति । अनयेन नीतिराहित्येन अभिसंपन्नम् अत एव अर्थहीनं रामम् अनुव्रते तत्परिशीलनशीले संध्यां तिमिरं सूर्य इव त्वां नाशयामि ॥ ३१ ॥

रा० टी०–इतीति । रावणः मैथिलीमित्युक्त्वा एकाक्षीप्रभृतीः राक्षसीः संदिदेश । सार्धश्लोकचतुष्टयमेकान्वयि । तत्रैकैकाक्षीशब्दस्य अल्पनेत्रकार्थकत्वान्न पौनरुक्त्यम् ॥ ३२–३९ ॥

रा० टी०–तदाज्ञापनाकारमाह–यथेति । जानकी यथा मद्वशगा अहं वशगो यस्याः सा यथा भवति तथा सर्वाः प्रत्येकं वा समेत्य संघीभूय वा क्षिप्रं कुरुत । अर्धद्वयमेकान्वयि ॥ ३६ ॥

गो० टी०–इत्युक्त्वेत्यादि । प्रधानाप्रधानभूते द्वे एकाक्ष्यौ अतो न पुनरुक्तिः । अथवा अक्षम् इन्द्रियम् । एकाक्षीम् एकैकेन्द्रियां श्रोत्रनासादावेकमात्रवतीत्यर्थः ॥ ३२–३६ ॥

---

१ उत्पादनद्धेन भुजगेनेति गो. पाठः । २ संदिदेशेति गो. रा. पाठः । ३ पाद्यश्वपाद्यौ च गोपादीमिति गो. पद्याश्वेति रा. पाठः । ४ जिह्वामजिह्विकामिति गो. पाठः ।

तथा कुरुत राक्षस्यः सर्वाः क्षिप्रं समेत्य वा । प्रतिलोमानुलोमैश्च सामदानादिभेदनैः ॥ ३७ ॥
आवर्जयत वैदेहीं दण्डस्योद्यमनेन च । इति प्रतिसमादिश्य राक्षसेन्द्रः पुनः पुनः ॥ ३८ ॥
काममन्युपरीतात्मा जानकीं प्रति गर्जत । उपगम्य ततः क्षिप्रं राक्षसी धान्यमालिनी ॥ ३९ ॥
परिष्वज्य दशग्रीवमिदं वचनमब्रवीत् । मया क्रीड महाराज सीतया किं तवानया ॥ ४० ॥
विवर्णया कृपणया मानुष्या राक्षसेश्वर । नूनमस्यां महाराज न [3]देवा भोगसत्तमान् ॥ ४१ ॥
[4]विदधत्यमरश्रेष्ठास्तव बाहुबलार्जितान् । अकामां कामयानस्य शरीरमुपतप्यते ॥ ४२ ॥
इच्छतीं कामयानस्य प्रीतिर्भवति शोभना । एवमुक्तस्तु राक्षस्या समुत्क्षिप्तस्ततो बली ॥
प्रहसन्मेघसंकाशो राक्षसः स न्यवर्तत ॥ ४३ ॥
प्रस्थितः स दशग्रीवः कम्पयन्निव मेदिनीम् । ज्वलद्भास्करसंकाशं प्रविवेश निवेशनम् ॥ ४४ ॥
देवगन्धर्वकन्याश्च नागकन्याश्च तास्ततः । परिवार्य दशग्रीवं प्रविशुस्ता गृहोत्तमम् ॥ ४५ ॥
स मैथिलीं धर्मपरामवस्थितां प्रवेपमानां परिभर्त्स्य रावणः ।
विहाय सीतां मदनेन मोहितः स्वमेव वेश्म प्रविवेश रावणः ॥ ४६ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये सुन्दरकाण्डे द्वाविंशः सर्गः ॥ २२ ॥

---

३७ ] ति० टी०—भो राक्षस्यः! यूयं प्रत्येकं तथा कुरुत, सर्वा मिलित्वा वा तथा कुरुत । प्रतिलोमानुलोमैः प्रतिकूलानुकूलव्यवहारैः ॥ ३७ ॥

रा० टी०—प्रतीति । प्रतिलोमानुलोमैः अननुकूलानुकूलक्रियाभिः सामादिभिश्च दण्डस्य उद्यमनेन उद्योगेन च वैदेहीम् आवर्जयत रामासक्तिं न्यवारयत ॥ ३७ ॥

गो० टी०—प्रतिलोमेति । प्रतिलोमानुलोमैः प्रतिकूलानुकूलाचरणैः । सामदानादिभेदनैः सामदानप्रमुखैर्भेदैः प्रथमप्रयुक्तसामदानैरित्यर्थः । आवर्जयत वशीकुरुत ॥ ३७ ॥ ३८ ॥

३८ ] ति० टी०—आवर्जयतानुकूल्यं संपादयत ॥ ३८ ॥

रा० टी०—इतीति । काममन्युना इच्छासंपादकक्रोधेन परीतः आत्मा मनो यस्य स रावणः इति प्रतिसमादिश्य जानकीं प्रति गर्जत अगर्जत ॥ ३८ ॥

३९ ] ति० टी०—प्रतिगर्जत प्रत्यगर्जत् । उपगम्य समीपमागम्य । ततोऽतिसंतर्जनं दृष्ट्वा । सीतायां दययेति शेषः॥३९॥

रा० टी०—उपेति । ततोऽनन्तरं राक्षसी राक्षसीस्वामिनी मन्दोदरी धान्यमालिनी तदभिधरावणकनिष्ठपत्नी च राक्षसीशब्देन मन्दोदर्या ग्रहणं तु वानरान्प्रति वक्ष्यमाणहनुमद्वचनानुरोधेन उपगम्य रावणसमीपं प्राप्य इदमब्रवीत् ॥ ३९ ॥

गो० टी०—उपगम्येति । धान्यमालिनी रावणस्य कनिष्ठपत्नी । इदं मन्दोदर्या अप्युपलक्षणम् उत्तरत्र वानरान् प्रति हनुमद्वचने तथा वक्ष्यमाणत्वात् ॥ ३९ ॥ ४० ॥

४० ] ति० टी०—परिष्वज्य परिष्वङ्गेन प्रहारादिप्रवृत्तिं निरुध्य ॥ ४० ॥

रा० टी०—तद्वचनाकारमाह—मयेति । हे महाराज! मया क्रीड विहर सीतया सीतासंवादेन तव किं न किमपीत्यर्थः ४०

४१-४२ ] ति० टी०—अमरश्रेष्ठा इन्द्रादयो भोगसत्तमान विदधति नानुमन्यन्ते । दैवहतेयमदृष्टहीनेति भावः ॥४१॥४२॥

रा० टी०—नूनमिति । हे महाराज ! तव बाहुबलार्जितान्भोगसत्तमान् दिव्यभोगान् अस्यां सीतायां सीतार्थम् अमरश्रेष्ठाः देवा ब्रह्माणः न विदधति अस्या राज्यभोगो ब्रह्मणा न लिखित इत्यर्थः । आदराद्बहुवचनम् ॥ ४१ ॥

रा० टी०—अकामामिति । अकामां राज्यादीच्छारहितां व्यक्तिं कामयानस्य इच्छामुत्पादयतः शरीरमुपतप्यते इच्छतीं कामयानस्य शोभना प्रीतिर्भवति ॥ ४२ ॥

गो० टी०—नूनमिति । अस्याः सीतायाः अमरश्रेष्ठो ब्रह्मा दिव्यान् भोगान्न विदधाति । अस्या दिव्यभोगे भाग्यं नास्तीत्यर्थः ॥ ४१—४६ ॥

४३-४४ ] ति० टी०—समुत्क्षिप्तोऽन्यतोऽपसारितः प्रहसन् धान्यमालिन्योचितव्यवहारदर्शनेनावशप्राप्तस्त्रीप्रहारापकीर्तिपरिहारेण च प्रसन्न इत्यर्थः ॥ ४३ ॥ ४४ ॥

रा०टी०—एवमिति । राक्षस्या एवमुक्तः अत एव समुत्क्षिप्तः अन्यत्र प्रचलितः राक्षसः सन्न्यवर्तत सीतासंवादात् उपारमत् ॥ ४३ ॥

रा० टी०—प्रस्थित इति । प्रस्थितो दशग्रीवः निवेशनं स्वगृहं प्रविवेश ॥ ४४ ॥

४५-४६ ] ति० टी०—प्रविशुः प्रविविशुः ॥ ४५ ॥ ४६ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये सुन्दरकाण्डे द्वाविंशः सर्गः ॥ २२ ॥

---

१ चेति गो. पाठः । २ पर्यतर्जयदिति गो. पाठः । ३ दिव्यानिति गो. पाठः । ४ विदधात्यमरश्रेष्ठ इति गो. पाठः । ५ इच्छन्तीमिति गो. पाठः । ६ वर्णाभमिति गो. पाठः । ७ सर्वत इति गो. पाठः । ८ विविशुस्तदिति गो. रा. पाठः । ९ भास्वरमिति गो. पाठः

# त्रयोविंशः सर्गः ।

रावणयोजिता एकजटाद्या राक्षस्यो रावणं प्रशंसन्त्यः सीतां प्रति तत्स्वीकारं रोचयन्ते ।

इत्युक्त्वा मैथिलीं राजा रावणः शत्रुरावणः । संदिश्य च ततः सर्वा राक्षसीर्निर्जगाम ह ॥ १ ॥
निष्क्रान्ते राक्षसेन्द्रे तु पुनरन्तःपुरं गते । राक्षस्यो भीमरूपास्ताः सीतां समभिदुद्रुवुः ॥ २ ॥
ततः सीतामुपागम्य राक्षस्यः क्रोधमूर्च्छिताः । परं परुषया वाचा वैदेहीमिदमब्रुवन् ॥ ३ ॥
पौलस्त्यस्य वरिष्ठस्य रावणस्य महात्मनः । दशग्रीवस्य भार्यात्वं सीते न बहु मन्यसे ॥ ४ ॥
ततस्त्वेकजटा नाम राक्षसी वाक्यमब्रवीत् । आमन्त्र्य क्रोधताम्राक्षी सीतां करतलोदरीम् ॥ ५ ॥
प्रजापतीनां षण्णां तु चतुर्थोऽयं[1] प्रजापतिः । मानसो ब्रह्मणः पुत्रः पुलस्त्य इति विश्रुतः ॥ ६ ॥
पुलस्त्यस्य तु तेजस्वी महर्षिर्मानसः सुतः । नाम्ना स विश्रवा नाम प्रजापतिसमप्रभः ॥ ७ ॥
तस्य पुत्रो विशालाक्षि रावणः शत्रुरावणः । तस्य त्वं राक्षसेन्द्रस्य भार्या भवितुमर्हसि ॥ ८ ॥
मयोक्तं चारुसर्वाङ्गि वाक्यं किं नानुमन्यसे । ततो हरिजटा नाम राक्षसी वाक्यमब्रवीत् ॥ ९ ॥

---

रा० टी०—देवेति । देवकन्यादयः गृहीत्तमं विविशुः ॥४५॥

रा० टी०—उपसंहरन्नाह—स इति । मदनेन शरादिना मोहितः रावणः लोकरावयिता स रावणः मैथिलीं सीतां परिभर्त्स्य विहाय च स्वं वेश्म प्रविवेश ॥ ४६ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ सुन्दरकाण्डे द्वाविंशः सर्गः ॥ २२ ॥

गो० टी०—सर्गार्थं संग्रहेण दर्शयति—स इति ॥ ४६ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने द्वाविंशः सर्गः ॥ २२ ॥

---

१-२ ] ति० टी०—शत्रून्रावयति हाहाशब्दं कारयति स शत्रुरावणः ॥ १ ॥ २ ॥

रा० टी०—रावणगमनानन्तरकालिकं वृत्तं वर्णयितुमाह—इतीति । शत्रुरावणो रावणः मैथिलीमित्युक्त्वा राक्षसीः संदिश्य च निर्जगाम ॥ १ ॥

रा० टी०—निष्क्रान्त इति । निष्क्रान्ते अन्तःपुरान्निर्गते रावणे पुनरन्तःपुरं च गते सति भीमरूपा राक्षस्यः सीतां समभिदुद्रुवुः जग्मुः ॥ २ ॥

गो० टी०—इत्युक्त्वेत्यादि ॥ १-९ ॥

३ ] ति० टी०—ततः परं रावणगमनादनन्तरम् । लोकोक्तौ वा परमिति ॥ ३ ॥

रा० टी०—तत इति । ततो रावणगमनात्परमनन्तरं क्रोधमूर्च्छिता राक्षस्यः सीतामुपागम्य परुषया वाचा इदमब्रुवन् ॥ ३ ॥

४ ] ति० टी०—भार्यात्वं भार्याभावं न बहु मन्यसे मोहादिति शेषः ॥ ४ ॥

रा० टी०—तद्वचनाकारमाह—पौलस्त्यस्येत्यादिभिः । हे सीते ! पौलस्त्यस्य दशग्रीवस्य भार्या मन्दोदर्यादिः त्वं बहु न मन्यसे तत्कर्तृकपूजां न स्वीकरोषीत्यर्थः, तत्कृतः, तत्कृत इति शेषः । सुबन्तस्य कर्मतया अन्वयान्न द्वितीया यत्तदोरध्याहारो वा ॥ ४ ॥

५ ] ति० टी०—ततः सर्वसाधारणैतद्वाक्यप्रयोगोत्तरमेकजटा विशिष्याब्रवीत् । करतलोदरीम् अतुन्दिलामित्यर्थः ॥५॥

रा० टी०—नतु राक्षसीकर्तृकपूजामहं न ग्रहीष्यामीत्युत्थापितसीताशङ्कां निवर्तयितुं वचनान्तरमुपक्रमते—तत इति । ततः तदुक्त्यनन्तरं करतलोदरीं सूक्ष्मोदरविशिष्टामित्यर्थः, सीतामामन्त्र्य संबोध्य क्रोधताम्राक्षी एकजटानाम राक्षसी अब्रवीत् ॥ ५ ॥

६-७] ति० टी०—'मरीचिरत्र्यङ्गिरसौ पुलस्त्यः पुलहः क्रतुः' इत्युक्तान्तषट्प्रजापतीनां चतुर्थः पुलस्त्यः॥ ६ ॥ ७ ॥

रा० टी०—तद्वचनाकारमाह—प्रजापतीनामित्यादिभिः। पुलस्त्य इति नाम्ना विश्रुतो विख्यातः अयमेतद्वंशप्रवर्तकः ब्रह्मणो मानसः पुत्रः षण्णां 'मरीचिरत्र्यङ्गिरसः पुलस्त्यः पुलहः क्रतुः' इत्यत्रोक्तानां प्रजापतीनां मध्ये चतुर्थः प्रजापतिः॥ ६ ॥

रा० टी०—पुलस्त्यस्येति । पुलस्त्यस्य मानसः सुतो विश्रवा नाम ॥ ७ ॥

गो० टी०—प्रजापतीनामिति । 'मरीचिरत्र्यङ्गिरसौ पुलस्त्यः पुलहः क्रतुः' इति षट् प्रजापतयः । तेषां चतुर्थः पुलस्त्यः ॥ ६-१२ ॥

८ ] ति० टी०—तस्य पुत्र इत्यनेन कुलीनत्वं सूचितम्॥८॥

रा० टी०—तस्येति । तस्य विश्रवसः पुत्रो रावणः तस्य रावणस्य भार्याः पत्नीः भवितुं पूज्यात्वेन प्राप्तुं त्वमर्हसि ॥८॥

९ ] ति० टी०—किं किमर्थम् । ततः कुलनिरूपणानन्तरम् ॥ ९ ॥

---

[1] य इति गो.

[1]विवृत्य नयने कोपान्मार्जारसदृशेक्षणा । येन देवास्त्रयस्त्रिंशद्देवराजश्च [2]निर्जितः ॥ १० ॥
तस्य त्वं राक्षसेन्द्रस्य भार्या भवितुमर्हसि । वीर्योत्सिक्तस्य शूरस्य सङ्ग्रामेष्वनिवर्तिनः ॥
बलिनो वीर्ययुक्तस्य भार्यात्वं किं न लिप्ससे ॥ ११ ॥
प्रियां बहुमतां भार्यां त्यक्त्वा राजा महाबलः । सर्वासां च महाभागां त्वामुपैष्यति रावणः ॥ १२ ॥
समृद्धं स्त्रीसहस्रेण नानारत्नोपशोभितम् । अन्तःपुरं तदुत्सृज्य त्वामुपैष्यति रावणः ॥ १३ ॥
अन्या तु विकटा नाम राक्षसी वाक्यमब्रवीत् । असकृद्भीमवीर्येण नागा गन्धर्वदानवाः ॥
निर्जिताः समरे येन स ते पार्श्वमुपागतः ॥ १४ ॥
तस्य सर्वसमृद्धस्य रावणस्य महात्मनः । किमर्थं राक्षसेन्द्रस्य भार्यात्वं नेच्छसेऽधमे ॥ १५ ॥
ततस्तां दुर्मुखी नाम राक्षसी वाक्यमब्रवीत् । यस्य सूर्यो न तपति भीतो यस्य स मारुतः ॥
न वाति स्मायतापाङ्गि किं त्वं तस्य न तिष्ठसे ॥ १६ ॥
पुष्पवृष्टिं च तरवो मुमुचुर्यस्य वै भयात् । शैलाः सुस्रुवुः पानीयं जलदाश्च यदेच्छति ॥ १७ ॥
तस्य नैर्ऋतराजस्य राजराजस्य भामिनि । किं त्वं न कुरुषे बुद्धिं भार्यार्थे रावणस्य हि ॥ १८ ॥
साधु ते तत्त्वतो देवि कथितं साधु भामिनि । गृहाण सुस्मिते वाक्यमन्यथा न भविष्यसि ॥ १९ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये सुन्दरकाण्डे त्रयोविंशः सर्गः ॥ २३ ॥

---

रा० टी०—मयेति । मयोक्तं किं किमर्थं न अनुमन्यसे । यं पृथक् । ततोऽनन्तरं मार्जारसदृशेक्षणा हरिजटानाम क्षसी अब्रवीत् । अर्धद्वयमेकान्वयि ॥ ९ ॥

१० ] ति० टी०—येनेत्यनेन पराक्रमातिशयसूचनम् ॥ १० ॥

रा० टी०—तद्वचनाकारमाह—येनेत्यादिभिः । येन देवा देवराजश्च निर्जिताः तस्य भार्याः पत्नीः भवितुं पूज्यात्वेन प्राप्तुं त्वमर्हसि ॥ १० ॥

११ ] ति० टी०—न लिप्ससे नेच्छसीत्यर्थः ॥ ११ ॥

रा० टी०—वीर्येति । वीर्योत्सिक्तस्य उद्धतवीर्यस्य रावणस्य भार्या मन्दोदरीप्रभृतिः किं किमर्थं न लिप्स्यसे वाञ्छसि । द्वितीयाद्युत्पत्तिः पूर्ववत् ॥ ११ ॥

१२–१५ ] ति० टी०—सर्वासां मध्ये बहुमतां महाभागामतिभाग्यवतीं मन्दोदरीमपि त्यक्त्वा त्वामुपैष्यति॥१२–१५॥

रा० टी०—तत्र हेतुमाह—प्रियामिति । प्रियामतिप्रीतिविषयीभूतां बहुमतां बहुभिराकाङ्क्षितां भार्यामतिदीप्तिहेतुभूतां राजलक्ष्मीमित्यर्थः, त्यक्त्वा सर्वासां लक्ष्म्यादीनां मध्ये महाभागां त्वां रावण उपैष्यति प्रापयिष्यति ॥ १२ ॥

रा० टी०—समृद्धमिति । स्त्रीसहस्रेण समृद्धमन्तःपुरमुत्सृज्य स्वाधीनत्वं निवर्त्य त्वामुपैष्यति प्रापयिष्यति ॥ १३ ॥

रा० टी०—असकृदिति । येन गन्धर्वदानवा असकृन्निर्जिताः स रावणः ते पार्श्वं चरणसमीपमुपागतः अतिभाग्यं तवेत्यर्थः ॥ १४ ॥

रा० टी०—तस्येति । तस्य भार्यात्वं किमर्थं नेच्छसे सेविकात्वेन वाञ्छसि ॥ १५ ॥

गो० टी०—प्रियामिति । सर्वासां मध्ये प्रियां बहुमताम् महाभागां च भार्यां मन्दोदरीं त्यक्त्वा त्वामुपैष्यति ॥१३–१७॥

१६ ] ति० टी०—यस्य भीतः सूर्यो न तपतीत्यर्थः । न तिष्ठसे वशे इति शेषः ॥ १६ ॥

रा० टी०—यस्येति । यस्य यस्माद्भीतः सूर्यो न तपति मारुतो न वाति च तस्य पूजायामिति शेषः, त्वं किं किमर्थं न तिष्ठसे आस्थां करोषि ॥ १६ ॥

गो० टी०—यस्येति । यस्य यमात् । तस्य न तिष्ठसि तस्मै न तिष्ठसे । प्रकाशनार्थेऽप्यार्षत्वात्परस्मैपदं षष्ठी च ॥ १८ ॥

१७ ] ति० टी०—यदेच्छति तदा सुस्रुवुरित्यर्थः ॥ १७ ॥

१८ ] ति० टी०—भार्यार्थे भार्यात्वनिमित्तम् ॥ १८ ॥

रा० टी०—पुष्पेति । यस्य भयात् यदा इच्छति तदैव तरवो पुष्पवृष्टिं मुमुचुः शैलाः गिरयः जलदाश्च पानीयं सुस्रुवुः तस्य भार्यार्थे तद्भार्याणां कल्याणार्थं बुद्धिं निश्चयं त्वं किं कथं न कुरुषे । अर्धचतुष्टयमेकान्वयि ॥ १७ ॥ १८ ॥

गो० टी०—पुष्पवृष्टिमित्यादि । शैलाश्च जलदाश्च पानीयं रावणः यदेच्छति तदा सुस्रुवन्तीति विपरिणम्यते ॥ १९॥२० ॥

१९ ] ति० टी०—साधु कथितं साधु गृहाण । न भविष्यसि मारयाम इत्यर्थः ॥ १९ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये सुन्दरकाण्डे त्रयोविंशः सर्गः ॥ २३ ॥

रा० टी०—साध्विति । हे भामिनि ! तत्त्वतः यथार्थं साधु

---

१ विवर्त्येति गो. पाठः । २ निर्जिता इति गो. पाठः । ३ अधेति गो. पाठः । ४ अर्धमेतत् रा. नास्ति ५ स्रवीति गो. पाठः । ६ तिष्ठसीति गो. पाठः । ७ च सुस्रुरिति । गो. पाठः ।

## चतुर्विंशः सर्गः ।

राक्षसीभिस्तर्जिताऽपि दृढहृदया सीता शच्यरुन्धतीप्रमुखाः पतिव्रता दृष्टान्तीकृत्य मरणाप्तेरपि न मे परपुरुषपरिग्रहः स्यादित्यकातरं प्रतिभाषते । परुषभाषणैर्नानायुधोद्यमनैश्च राक्षसीभिर्भीष्यमाणां रुदतीं च सीतां शिंशपास्थो हनुमाञ्छृणोति ।

ततः सीतां समस्तास्ता राक्षस्यो विकृताननाः । परुषं परुषानर्हामूचुस्तद्वाक्यमप्रियम् ॥ १ ॥
किं त्वमन्तःपुरे सीते सर्वभूतमनोरमे । महार्हशयनोपेते न वासमनुमन्यसे ॥ २ ॥
मानुषे मानुषस्यैव भार्यात्वं बहु मन्यसे । प्रत्याहर मनो रामान्नैवं जातु भविष्यति ॥ ३ ॥
त्रैलोक्यवसुभोक्तारं रावणं राक्षसेश्वरम् । भर्तारमुपसंगम्य विहरस्व यथासुखम् ॥ ४ ॥
मानुषी मानुषं तं तु राममिच्छसि शोभने । राज्याद्भ्रष्टमसिद्धार्थं विक्लवन्तमनिन्दिते ॥ ५ ॥
राक्षसीनां वचः श्रुत्वा सीता पद्मनिभेक्षणा । नेत्राभ्यामश्रुपूर्णाभ्यामिदं वचनमब्रवीत् ॥ ६ ॥
यदिदं लोकविद्विष्टमुदाहरत संगताः । नैतन्मनसि वाक्यं मे किल्बिषं प्रतितिष्ठति ॥ ७ ॥
न मानुषी राक्षसस्य भार्या भवितुमर्हति । कामं खादत मां सर्वा न करिष्यामि वो वचः ॥ ८ ॥
दीनो वा राज्यहीनो वा यो मे भर्ता स मे गुरुः । तं नित्यमनुरक्ताऽस्मि यथा सूर्यं सुवर्चला ॥ ९ ॥

---

कथितं वाक्यं मद्वचनं साधु गृहाण स्वीकुरु अन्यथा न भविष्यसि राक्षस्यो हनिष्यन्तीत्यर्थः ॥ १९ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ सुन्दरकाण्डे त्रयोविंशः सर्गः ॥ २३ ॥

गो० टी०—साध्विति । साधु ते कथितम् साधु गृहाणेति साधुशब्दद्वयस्य निर्वाहः ॥ २१ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने त्रयोविंशः सर्गः ॥ २३ ॥

१–२ ] ति० टी०—तत इति ॥ १ ॥ २ ॥

रा० टी०—सीतां प्रति संवीभूतराक्षसीनां परुषोक्तिमाह—तत इत्यादिभिः । ततः तदुक्त्यनन्तरं समस्ताः राक्षस्यः परुषानर्हां सीतां परुषमप्रियं वाक्यमूचुः ॥ १ ॥

रा० टी०—तदाकारमाह—किमिति । हे सीते ! महार्हशयनैरुपेते सर्वभूतमनोहरे अन्तःपुरे वासं स्वामिनीत्वेन स्थितिं किं किमर्थं नानुमन्यसे । अत्रत्यवचनानां परुषत्वं रामवियोगपोषकत्वेनेति बोध्यम् ॥ २ ॥

गो० टी०—तत इत्यादि ॥ १ ॥ २ ॥

३–५ ] ति० टी०—प्रत्याहर निवर्तय । एवं त्वदभीष्टं रामसंगमरूपं वस्तु जातु कदाचिदप्यतःपरं न भविष्यति । अत्र रामागमनस्य तव वा तत्र गमनस्य प्रसक्त्यभावादिति भावः । यद्वातः परं जातु कदाचिदप्येवं भावश्चेद्भवती न भविष्यति मारयाम इत्यर्थः ॥ ३–५ ॥

रा० टी०—मानुषीति । मानुषी मनुवंशजाता मानुषस्य मनुवंशजातस्य भार्या त्वं यं बहुमन्यसे तस्मात् रामात् मनः प्रत्याहर । तत्र हेतुः—एवं त्वदीप्सितरामसङ्गम इत्यर्थः, जातु कदाचिदपि न भविष्यति ॥ ३ ॥

रा० टी०—त्रैलोक्येति । त्रैलोक्यवसुभोक्तारं भर्तारं मत्पतिम् उपसंगम्य तत्कर्तृपूजात्वेन संप्राप्य यथासुखं विहरस्व ॥ ४ ॥

रा० टी०—मानुषीति । राज्यात् भ्रष्टं मानुषं रामं मानुषी त्वमिच्छसि एतेन नैतद्युक्तमिति सूचितम् ॥ ५ ॥

गो० टी०—मानुषीति । न त्वं जातु भविष्यसि तस्येति शेषः । मानुषीति हेतुगर्भम् । मानुषी त्वं मानुषं तमिच्छसि ॥ ३–६ ॥

६ ] ति० टी०—नेत्राभ्याम् उपलक्षितेति शेषः । इदं वचनं युष्मद्वचोऽनङ्गीकारे । मारणं चेच्छीघ्रं तदेव क्रियतामित्यर्थः । किं वक्ष्यमाणम् ॥ ६ ॥

रा० टी०—राक्षसीनामिति । राक्षसीनां वचः श्रुत्वा सीता इदमब्रवीत् ॥ ६ ॥

७–८ ] ति० टी०—लोकविद्विष्टं लोकविद्विष्टपरपुरुषसङ्गार्थकम् । संगता समेताः । किल्बिषं किल्बिषजनकार्थकम् ॥ ७ ॥ ८ ॥

रा० टी०—तदाकारमाह—यदिति । लोकविद्विष्टं शास्त्रादिविरुद्धम् अत एव किल्बिषं पापमयम् इदं रामवियोगपोषकं यद्वाक्यं संगताः यूयमुदाहरथ तदेतत् वाक्यं मे मनसि न प्रतितिष्ठति ॥ ७ ॥

रा० टी०—नेति । हे भार्याः हे रावणपत्न्यः ! मानुषी मनुष्यस्त्री राक्षसस्य पुरे भवितुं स्थातुं नार्हति अतः वो वचः न करिष्यामि अतः सर्वाः यूयं मां खादत ॥ ८ ॥

गो० टी०—यदिदमिति । किल्बिषं पापावहम् ॥ ७ ॥ ८ ॥

९ ] ति० टी०—गुरुरुपास्यदेवता । सुवर्चला सूर्यपत्नी । सूर्याभिमुखपुष्पवती काचिदोषधिरित्यन्यः ॥ ९ ॥

---

१ उपागम्येति गो. पाठः । २ परुषा नार्य ऊचुरिति गो. पाठः । ३ हरे इति गो. रा. पाठः । ४ न त्वमिति गो. पाठः । ५ भविष्यसीति गो. पाठः । ६ विक्लवं त्वमिति गो. पाठः । ७ [illegible] गो. पाठः । ८ [illegible] गो. पाठः ।

यथा शची महाभागा शक्रं समुपतिष्ठति । अरुन्धती वसिष्ठं च रोहिणी शशिनं यथा ॥ १० ॥
लोपामुद्रा यथाऽगस्त्यं सुकन्या च्यवनं यथा । सावित्री सत्यवन्तं च कपिलं श्रीमती यथा ॥ ११ ॥
सौदासं मदयन्तीव केशिनी सगरं यथा । नैषधं दमयन्तीव भैमी पतिमनुव्रता ॥ १२ ॥
तथाहमिक्ष्वाकुवरं रामं पतिमनुव्रता । सीताया वचनं श्रुत्वा राक्षस्यः क्रोधमूर्छिताः ॥
भर्त्सयन्ति स्म परुषैर्वाक्यै रावणचोदिताः ॥ १३ ॥
अवलीनः स निर्वाक्यो हनुमाञ्शिंशपाद्रुमे । सीतां संतर्जयन्तीस्ता राक्षसीरशृणोत्कपिः ॥ १४ ॥
तामभिक्रम्य संरब्धा वेपमानां समन्ततः । भृशं संलिलिहुर्दीप्तान्प्रलम्बान्दशनच्छदान् ॥ १५ ॥
ऊचुश्च परमक्रुद्धाः प्रगृह्याशु परश्वधान् । नेयमर्हति भर्तारं रावणं राक्षसाधिपम् ॥ १६ ॥
सा भर्त्स्यमाना भीमाभी राक्षसीभिर्वराङ्गना । सा बाष्पमपमार्जन्ती शिंशपां तामुपागमत् ॥ १७ ॥
ततस्तां शिंशपां सीता राक्षसीभिः समावृता । अभिगम्य विशालाक्षी तस्थौ शोकपरिप्लुता ॥ १८ ॥
तां कृशां दीनवदनां मलिनाम्बरवासिनीम् । भर्त्सयाञ्चक्रिरे भीमा राक्षस्यस्ताः समन्ततः ॥ १९ ॥
ततस्तु विनता नाम राक्षसी भीमदर्शना । अब्रवीत्कुपिताकारा कराला निर्णतोदरी ॥ २० ॥

---

रा० टी०—दीन इति । दीनो राज्यहीनो वा उत्प्रेक्षितदीनत्वादिविशिष्टः यो मे भर्ता स एव गुरुः अत एव तं पतिं स्वयं सुवर्चला तत्पत्नीव नित्यमनुरक्ताऽस्मि ॥ ९ ॥

गो० टी०—दीनो वेति । सुवर्चलेत्यादिबहुदृष्टान्तप्रदर्शनं स्वस्याः पातिव्रत्यदार्ढ्यद्योतनाय ॥ ९–१३ ॥

१०–११ ] ति० टी०—अतिदुःखसमयेऽपि दृढव्रतत्वद्योतनायानेकसाध्वीनामुपन्यासो दृष्टान्तविधयेत्याहुः ॥१०॥११॥

१२–१३ ] ति० टी०—भैमी दमयन्ती नैषधं पतिं यथाऽनुव्रता ॥ १२ ॥ १३ ॥

रा० टी०—तदेव बहुभिर्दृष्टान्तैः द्रढयति—यथेत्यादिभिः । शचीप्रभृतिः शक्रप्रभृतिं यथा समुपतिष्ठति तथा इक्ष्वाकुवरं राममहमनुव्रता समुपतिष्ठामि । सार्धश्लोकत्रयमेकान्वयि॥१०–१२॥

रा० टी०—सीताया इति । रावणचोदिताः गमनसमये रावणेन प्रेरिताः राक्षस्यः भर्त्सयन्ति स्म ॥ १३ ॥

१४ ] ति० टी०—अवलीनश्छन्नः । निर्वाक्यो मौनी । शिंशपाद्रुमे स्थित इति शेषः । सीतां तर्जयन्ती राक्षसीस्तद्वाक्यान्यशृणोत् ॥ १४ ॥

रा० टी०—अवेति । शिंशुपाद्रुमे अवलीनः निर्वाक्यः मौनीभूतः स हनुमान् सीतां तर्जयन्तीः राक्षसीः तद्वाक्यानि अशृणोत् ॥ १४ ॥

गो० टी०—अवलीन इति । अवलीनः छन्नः । राक्षसीरशृणोत् राक्षसीवाक्यान्यशृणोदित्यर्थः ॥ १४ ॥

१५ ] ति० टी०—वेपमानां तामभिक्रम्य तत्समीपमागत्य संरब्धाः क्रुद्धास्ता राक्षस्यो दशनच्छदाँल्लिलिहुर्लेहनं कुर्वन्ति स्म ॥ १५ ॥

रा० टी०—तामिति । वेपमानां तां सीतां समन्ततोऽभिक्रम्य प्राप्य दीप्तान् प्रकाशितान् प्रलम्बान् दशनच्छदान् स्वस्वाधरान् भृशं संलिलिहुः संलेहनं चक्रुः ॥ १५ ॥

गो० टी०—तामभिक्रम्येत्यादि । नेयमर्हतीत्यत्रेतिकरणं बोध्यम् । अस्य ऊचुरित्यनेन संबन्धः ॥ १५ ॥ १६ ॥

१६ ] ति० टी०—परश्वधान्गृहीत्वोचुश्च । नेयं रावणं भर्तारमर्हति अपि त्वस्माकं भक्षणमेवार्हतीति भावः ॥ १६ ॥

रा० टी०—ऊचुरिति । परमक्रुद्धाः राक्षस्यः आशु शीघ्रं परश्वधान् प्रगृह्य इयं सीता भर्तारमस्मत्पतिं रावणं नार्हति तत्पूजायोग्या न भवति इत्यूचुः ॥ १६ ॥

१७ ] ति० टी०—भर्त्स्यमानैवंप्रकारेण पीड्यमाना । अभूदिति शेषः । तां शिंशपां हनूमदधिष्ठितशिंशपाम् । अत्यन्तं तन्मूलसमीपमित्यर्थः ॥ १७ ॥

रा० टी०—सेति । राक्षसीभिर्भर्त्स्यमाना सा सीता अभवदिति शेषः, अत एव बाष्पमश्रु अपमार्जन्ती सीता तां हनुमदधिष्ठितदेशसमीपवर्तिनीं शिंशुपां शिंशुपामूलमुपागमत् ॥ १७ ॥

गो० टी०—संभर्त्स्यमानेति । 'सा भर्त्स्यमाना इतिपाठे भर्त्सनोपगमनरूपक्रियाभेदात्तच्छब्दद्वयम् । तां हनुमदधिष्ठितां शिंशुपाम् ॥ १७–१९ ॥

१८–१९ ] ति० टी०—ततस्तन्मूलगमनानन्तरम् ॥१८॥१९॥

रा० टी०—तत इति । राक्षसीभिः समावृता सीता शिंशुपामधिगम्य तस्थौ ॥ १८ ॥

रा० टी०—तामिति । तां सीतां राक्षस्यो भर्त्सयाञ्चक्रिरे ॥ १९ ॥

२० ] ति० टी०—निर्णतोदर्यतिनिम्नोदरी ॥ २० ॥

रा० टी०—तत इति । ततस्तस्मिन् समये निर्णतोदरी अतिनिम्नोदरविशिष्टा कुपितः कोपबोधकः आकारो यस्याः सा विनता नाम राक्षसी अब्रवीत् ॥ २० ॥

---

१ संक्रुद्धेति गो. पाठः । २ सामिति गो. पाठः । ३ वराननेति गो. पाठः । ४ धारिणीमिति गो. पाठः ।

सीते पर्याप्तमेतावद्भर्तुः स्नेहः प्रदर्शितः[1] । सर्वत्रातिकृतं भद्रे व्यसनायोपकल्पते ॥ २१ ॥
परितुष्टाऽस्मि भद्रं ते, मानुषस्ते कृतो विधिः । ममापि तु वचः पथ्यं ब्रुवन्त्याः कुरु मैथिलि ॥ २२ ॥
रावणं भज भर्तारं भर्तारं सर्वरक्षसाम् । विक्रान्तमापतन्तं[2] च सुरेशमिव वासवम् ॥ २३ ॥
दक्षिणं त्यागशीलं च सर्वस्य प्रियवादिनम्[3] । मानुषं कृपणं रामं त्यक्त्वा रावणमाश्रय ॥ २४ ॥
दिव्याङ्गरागा वैदेहि दिव्याभरणभूषिता । अद्यप्रभृति लोकानां सर्वेषामीश्वरी भव ॥ २५ ॥
अग्नेः स्वाहा यथा देवी शची वेन्द्रस्य शोभने । किं ते रामेण वैदेहि कृपणेन गतायुषा ॥ २६ ॥
एतदुक्तं च मे वाक्यं यदि त्वं न करिष्यसि । अस्मिन्मुहूर्ते सर्वास्त्वां भक्षयिष्यामहे वयम् ॥ २७ ॥
अन्या तु विकटा नाम लम्बमानपयोधरा । अब्रवीत्कुपिता सीतां मुष्टिमुद्यम्य तर्जती[4] ॥ २८ ॥
बहून्यप्रतिरूपाणि[5] वचनानि सुदुर्मते । अनुक्रोशान्मृदुत्वाच्च सोढानि तव मैथिलि ॥ २९ ॥
न च नः कुरुषे वाक्यं हितं कालपुरस्कृतम्[6] । आनीताऽसि समुद्रस्य पारमन्यैर्दुरासदम् ॥ ३० ॥
रावणान्तःपुरे[7] घोरे प्रविष्टा चासि मैथिलि । रावणस्य गृहे रुद्धा[8] अस्माभिस्त्वभिरक्षिता ॥ ३१ ॥
न त्वां शक्तः परित्रातुमपि साक्षात्पुरन्दरः । कुरुष्व हितवादिन्या वचनं मम मैथिलि ॥ ३२ ॥

---

गो॰ टी॰—ततस्तां विनता नामेति । निर्णतोदरी उन्नतोदरी ॥ २० ॥

२१ ] ति॰ टी॰—अतिकृतमतिमात्राचरणम् । अतिरपि समैव ज्यायसीति लोकोक्तेरिति भावः । व्यसनं दुःखम् ॥२१॥

रा॰ टी॰—तद्वचनाकारमाह—सीते इति । हे सीते ! भर्तुः स्नेहः पर्याप्तं यथा भवति तथा प्रदर्शितः इतः परं स्नेहं न कुर्वित्यर्थः । तत्र हेतुः—सर्वत्र सर्वस्मिन् काले अतिकृतम् अत्यन्तं संपादितं स्नेहनं व्यसनाय दुःखाय उपकल्पते ॥२१॥

गो॰टी॰—सीत इति । अतिकृतम् अतिमात्रकृतम्॥२१॥

२२ ] ति॰ टी॰—मानुषो मनुष्यज्ञात्युचितो विधिरनुष्ठानं ते त्वया कृतम् । एतावदेवालमित्यर्थः ॥ २२ ॥

रा॰ टी॰—परीति । यतस्त्वया मानुषः मनुष्योचितः विधिः धर्मप्रबोधनं कृतः अतः परितुष्टाऽस्मि अतस्ते भद्रं कल्याणं ममापि पथ्यं वचः शृणु ॥ २२ ॥

गो॰टी॰—परितुष्टाऽस्मीति । मानुषो विधिः कृतः मनुष्यजात्युचितपातिव्रत्यप्रकटनं कृतम् एतावत्कालमित्यर्थः २२-२८

२३ ] ति॰ टी॰—सुरेशं वासवमिव ॥ २३ ॥

रा॰टी॰—तद्वचनाकारमाह—रावणमित्यादिभिः । वासवमिव विक्रान्तं विक्रमवन्तं रूपवन्तं सर्वरक्षसां भर्तारं भर्तारमस्मत्पतिं रावणं भज तत्प्रार्थनास्वीकारेण प्रसादय ॥ २३ ॥

२४-२७ ] ति॰ टी॰—कृपणं दीनम् ॥ २४-२७ ॥

रा॰ टी॰—दक्षिणमिति । मानुषं रामं त्यक्त्वा दक्षिणं निपुणं रावणमाश्रयस्व चरणसन्निधिं प्रापय ॥ २४ ॥

रा॰ टी॰—दिव्येति । वैदेही त्वं दिव्याङ्गरागा सती अद्यप्रभृति लोकानाम् ईश्वरी भव ॥ २५ ॥

रा॰ टी॰—अग्नेरिति । अग्नेः स्वाहेव इन्द्रस्य शचीव रामस्य पत्नी या त्वं तस्यास्ते गतायुषा रामेण किम् ॥ २६ ॥

रा॰ टी॰—एतदिति । एतदुक्तं वाक्यं यदि त्वं न करिष्यसि तर्हि सर्वाः वयं त्वां भक्षयिष्यामहे ॥ २७ ॥

२८ ] ति॰ टी॰—तर्जती तर्जयन्ती ॥ २८ ॥

रा॰ टी॰—अन्येति । लम्बमानौ पयोधरौ यस्याः सा विकटा नाम अन्या सीतां मुष्टिम् उद्यम्य तर्जती तर्जन्ती सती अब्रवीत् ॥ २८ ॥

२९ ] ति॰ टी॰—अनुक्रोशो दया । मृदुत्वमल्पप्रमाणत्वम् ॥ २९ ॥

रा॰ टी॰—तद्वचनाकारमाह—बहूनीति । हे सुदुर्मते ! अप्रतिरूपाणि राक्षसायोग्यानि तव वचनानि अनुक्रोशात् दयातः मृदुत्वात् सरलस्वभावत्वाच्च सोढानि ॥ २९ ॥

गो॰ टी॰—बहूनीति । सोढानि रावणेनेति शेषः ॥२९॥

३० ] ति॰ टी॰—कालपुरस्कृतं कालोचितं नो वाक्यं न च कुरुषे । नैतत्ते हितमिति शेषः । तदेवोपपादयति—आनीताऽसीति ॥ ३० ॥

३१-३२ ] ति॰ टी॰—गृहे रुद्धा चासि । अस्माभिरभिरक्षिता रक्षितनिरोधा ॥ ३१ ॥ ३२ ॥

रा॰ टी॰—नेति । अन्यैर्दुरासदं समुद्रस्य पारं या त्वमानीताऽसि अत एव रावणान्तःपुरे प्रविष्टाऽसि अत एव रावणस्य गृहे अवरुद्धाऽसि अत एव अस्माभी रक्षिताऽसि सा त्वं कालपुरस्कृतं कालोचितं हितं नो वाक्यं न कुरुषे अनुचितमेतदित्यर्थः । अर्धचतुष्टयमेकान्वयि ॥ ३० ॥ ३१ ॥

रा॰ टी॰—वचनाकरणे दोषमाह—नेति । त्वाम् अस्मदनुमतिहीनामित्यर्थः त्रातुं पुरन्दरोऽपि न शक्तः अतो मम वचनं कुरुष्व ॥ ३२ ॥

गो॰टी॰—न चेति । कालपुरस्सरं कालानुरूपम् ३०-३२

---

१ निदर्शित इति गो. पाठः । २ रूपवन्तमिति गो. पाठः । ३ दर्शनमिति गो. पाठः । ४ गर्जतीति गो. पाठः । ५ अप्रियेति गो. पाठः । ६ पुरःसरमिति गो. पाठः । ७ पुरं घोरमिति गो. पाठः । ८ रुद्धास्मस्माभिश्च सुरक्षितामिति गो. पाठः ।

अलमश्रु[1]निपातेन त्यज [2]शोकमनर्थकम् । भज प्रीतिं प्रहर्षं च त्यजन्ती नित्यदैन्यताम् ॥ ३३ ॥
सीते राक्षसराजेन परिक्रीड यथा[3]सुखम् । जानीमहे यथा भीरु स्त्रीणां यौवनमध्रुवम् ॥ ३४ ॥
यावन्न ते व्यतिक्रामेत्तावत्सुखमवाप्नुहि । उद्यानानि च रम्याणि पर्वतोपवनानि च ॥ ३५ ॥
सह राक्षसराजेन चर त्वं मदिरेक्षणे । स्त्रीसहस्राणि ते [4]देवि वशे स्थास्यन्ति सुन्दरि ॥ ३६ ॥
रावणं भज भर्तारं भर्तारं सर्वरक्षसाम् । उत्पाट्य वा ते हृदयं भक्षयिष्यामि मैथिलि ॥ ३७ ॥
यदि मे व्याहृतं वाक्यं न यथावत्करिष्यसि । ततश्चण्डोदरी नाम राक्षसी [5]क्रूरदर्शना ॥ ३८ ॥
भ्रामयन्ती महच्छूलमिदं वचनमब्रवीत् । इमां हरिण[6]शावाक्षीं त्रासोत्कम्पपयोधराम् ॥ ३९ ॥
रावणेन हृतां दृष्ट्वा दौर्हृदो मे महान[7]यम् । यकृत्प्लीहं [8]महत्क्रोडं हृदयं च सबन्धनम् ॥ ४० ॥
[9]गात्राण्यपि तथा शीर्षं खादेयमिति मे मतिः । ततस्तु प्रघसा नाम राक्षसी वाक्यमब्रवीत् ॥ ४१ ॥

---

३३-३४ ] ति० टी०—प्रीतिं स्नेहम् रावणे प्रहर्षमानन्दम् नित्यदैन्यतां निरन्तरदीनत्वम् स्वार्थे ष्यञ् ॥ ३३ ॥ ३४ ॥

रा० टी०—अलमिति । अश्रुनिपातेन अलम् अतः अनर्थकं शोकं त्यज प्रीतिं प्रहर्षं च भज तां प्रत्यक्षीभूतां नित्यदैन्यतां ·निरन्तरदैन्यं त्यज । दैन्यताशब्दःस्वार्थिकष्यञन्तः ॥ ३३ ॥

रा० टी०—सीते इति । हे सीते ! राक्षसराजेन राक्षसराजत्वेनोपलक्षिता त्वं स्त्रीणां मध्ये यथासुखं परिक्रीड । तत्र हेतुः—यौवनं युवावस्था अध्रुवं चलमित्यर्थः, राज्यभोगादियोग्या युवावस्थैवेति भावः ॥ ३४ ॥

गो० टी०—भजेति । प्रीतिं रावणविषयप्रीतिम् । प्रहर्षं कालकृतमनोविकासम् ॥ ३४-३७ ॥

३५-३६ ] ति० टी०—व्यतिक्रामेत् यौवनमिति शेषः । उद्यानानि चरेत्युत्तरस्थेनान्वयः । तेषु क्रीडेत्यर्थः ॥ ३५ ॥ ३६ ॥

रा० टी०—यावदिति । यावत् ते यौवनमिति शेषः, न व्यतिक्रामेत् विनश्येत् तावत्सुखं राक्षसराज्यमवाप्नुहि । अर्धं पृथक्—उद्यानानीति । राक्षसराजेन राक्षसराजत्वेन सह सहिता त्वमुद्यानादीनि चर ॥ ३५ ॥

रा० टी०—स्त्रीति । स्त्रीसहस्राणि ते वशे स्थास्यन्ति अतः सर्वरक्षसां भर्तारं भर्तारमसमत्पतिं रावणं भज तत्प्रार्थनास्वीकारेण प्रसादय ॥ ३६ ॥

३७ ] ति० टी०—उत्पाटनं स्थानादपकर्षणम् ॥ ३७ ॥

रा० टी०—उत्पाट्येति । यदि मे व्याहृतमुक्तं यथावत् न करिष्यसि तर्हि ते हृदयमुत्पाट्य भक्षयिष्याम्येव ॥ ३७ ॥

गो० टी०—उत्पाट्येति । उत्पाट्य वा उत्पाट्यैव ३८ ॥ ३९

३८-३९ ] ति० टी०—यदीत्यर्धं पूर्वान्वयि ॥ ३८ ॥ ३९ ॥

रा० टी०—तत इति । महच्छूलं भ्रामयन्ती चण्डोदरी नाम राक्षसी अब्रवीत् ॥ ३८ ॥

रा० टी०—तद्वचनाकारमाह—इमामिति । रावणेन हृतामत एव त्रासोत्कम्पपयोधरामिमां दृष्ट्वा मे दौर्हृदः क्रूरकर्मकारकेच्छाविशेषोऽभूत् ॥ ३९ ॥

गो० टी०—इमामिति । दौर्हृदः इच्छा ॥ ४० ॥

४०-४१ ] ति० टी०—गर्भिण्या गर्भकृत इच्छाविशेषो दौर्हृदम् । यकृद्दक्षिणभागस्थः कालखण्डाख्यो मांसविशेषः । 'स्नायुः स्त्रियां कालखण्डयकृती च समे उभे' इति कोशः । प्लीहं हृदयवामभागस्थो गुल्माख्यो मांसविशेषः । यद्यपि तद्वाचकः प्लीहा इत्याकारान्तः, तथाप्यदन्तत्वमार्षम् । महत्क्रोडं भुजान्तरम् । 'अथोत्पीडम्' इति पाठे उत्पीडं हृदयोपरिस्थितमांसबन्धनम् । हृदयं नाडीबन्धनसहितं मुकुलाकारं हृत्पुण्डरीकाख्यम् ॥ ४० ॥ ४१ ॥

रा० टी०—दौर्हृदमेव प्रकटयति—यकृदिति । यकृत्प्लीहं यकृत् दक्षिणभागस्थः कालखण्डाभिधः मांसविशेषः प्लीहा हृदयवामभागस्थो गुल्माभिधो मांसविशेषः तयोः समाहारद्वन्द्वः अच्प्रत्ययेत्यत्र अजिति योगविभागादच् तत् महत् क्रोडं भुजान्तरं सबन्धनं हृदयनाडीबन्धनसहितं हृदयं च गात्राणि च शीर्षं च खादेयमिति मे मतिर्निश्चयः ॥ ४० ॥

रा० टी०—तत इति । ततः प्रघसा नाम राक्षसी अब्रवीत् । तदाकारमाह—नृशंसायाः क्रूराया अस्याः कण्ठं पीडयामः किं किमर्थमास्यते संस्थाप्यते ॥ ४१ ॥

गो० टी०—यकृदिति । कुक्षिदक्षिणभागस्थः कालखण्डाख्यो मांसपिण्डो यकृत् 'स्नायुः स्त्रियां कालखण्डयकृती तु समे इमे' इत्यमरः । प्लीहा तु गुल्माख्यो वामभागस्थो मांसपिण्डविशेषः नकारान्तस्य प्लीहन्शब्दस्य अकारान्तत्वमार्षम् 'अन्त्रं पुरीतद्गुल्मस्तु प्लीहा पुंसि' इत्यमरः । उत्पीडं तस्योपरि स्थितम् मांसम् । हृदयम् पद्मकोशप्रतीकाशं मांसम् । बन्धनं तस्य धारणमधोमांसम् 'उत्क्रोडम्' इति पाठे उत्क्रोडो हृदयस्य स्थानम् । अन्त्रं पुरीतत् ॥ ४१-४३ ॥

---

१ प्रपातेनेति गो. पाठः । २ त्यजैतामिति गो. त्यज तामिति रा. पाठः । ३ सुखमिति गो. रा. पाठः । ४ समेति गो. पाठः । ५ क्रोधमूर्छितेति गो. पाठः । ६ लोलाक्षीमिति गो. पाठः । ७ अभूदिति गो. पाठः । ८ अथोत्पीडमिति गो. पाठः । ९ अन्त्राणीति गो. पाठः ।

[ कण्ठमस्या नृशंसायाः पीडयाम किमास्यते । निवेद्यतां ततो राज्ञे मानुषी सा मृतेति ह ॥
नात्र कश्चन संदेहः खादतेति स वक्ष्यति । ततस्त्वजामुखी नाम राक्षसी वाक्यमब्रवीत् ॥ ]
विशस्येमां ततः सर्वान्समान्कुरुत पिण्डकान् । विभजाम ततः सर्वा विवादो मे न रोचते ॥ ४२ ॥
पेयमानीयतां क्षिप्रं माल्यं च विविधं बहु । ततः शूर्पणखा नाम राक्षसी वाक्यमब्रवीत् ॥ ४३ ॥
अजामुख्या यदुक्तं वै तदेव मम रोचते । सुरा चानीयतां क्षिप्रं सर्वशोकविनाशिनी ॥ ४४ ॥
मानुषं मांसमासाद्य नृत्यामोऽथ निकुम्भिलाम् । एवं निर्भर्त्स्यमाना सा सीता सुरसुतोपमा ॥
राक्षसीभिर्विरूपाभिर्धैर्यमुत्सृज्य रोदिति ॥ ४५ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये सुन्दरकाण्डे चतुर्विंशः सर्गः ॥ २४ ॥

---

## पञ्चविंशः सर्गः ।

---

राक्षसीगणसंतर्जनं सोढुमसमर्था जानक्यशोकशाखामालम्ब्य रामादीनाक्रोशन्त्यश्रुधाराभिराप्लुतनेत्रा प्ररोदिति ।

अथ तासां वदन्तीनां परुषं दारुणं बहु । राक्षसीनामसौम्यानां रुरोद जनकात्मजा ॥ १ ॥
एवमुक्ता तु वैदेही राक्षसीभिर्मनस्विनी । उवाच परमत्रस्ता बाष्पगद्गदया गिरा ॥ २ ॥

---

४२ ] ति० टी०–प्रघसावाक्यम्—विशस्येमामिति । मध्ये 'कण्ठमस्या नृशंसायाः पीडयामः किमास्यते । निवेद्यतां ततो राज्ञे मानुषी सा मृतेति च ॥ नात्र कश्चिच्च संदेहः खादतेति स वक्ष्यति । ततस्त्वजामुखी नाम राक्षसी वाक्यमब्रवीत्' ॥ इति श्लोकद्वयं प्रक्षिप्तमिति कतकः । पिण्डकान्मांसखण्डान् । विवादः अनया सहेति शेषः ॥ ४२ ॥

रा० टी०–ननु कण्ठपीडनेन किमित्यत आह–निवेद्यतामिति । ततः कण्ठपीडनानन्तरं मानुषी सा सीता मृतेति राज्ञे रावणाय निवेद्यतां सः श्रुतवृत्तान्तो राजा यूयं खादतेति वक्ष्यति अत्र कश्चन संदेहो न ॥ ४२ ॥

रा० टी०–तत इति । अजामुखी नाम राक्षसी अब्रवीत् । तदाकारमाह–इमां सीतां विशस्य हत्वा पिण्डकान् मांसखण्डान् समान् यथाराक्षसीसमविभागान् कुरु ॥ ४३ ॥

रा० टी०–समविभागकरणे प्रयोजनमाह–विभजाम इति । सर्वाः वयं विभजामः स्वस्वभागं ग्रहीष्यामः । तत्र हेतुः–मे मह्यं विवादो न रोचते अतः पेयादिकमानीयताम् ४४

गो० टी०–ततस्त्वजामुखी नामेत्यादि । पीलुकान् मांसखण्डान् । पेयं लेह्यं चास्या उपदंशत्वेनोच्यते ॥४४॥४५॥

४३ ] ति० टी०–शूर्पणखेयमन्या ॥ ४३ ॥

रा० टी०–तत इति । शूर्पनखी नाम राक्षसी अब्रवीत् इयं न रावणभगिनी संज्ञाया अभावान्न ङीष्निषेधादि । तदाकारमाह–अजामुख्या यदुक्तं मम तदेव रोचते ॥ ४५ ॥

गो० टी०–ततः शूर्पणखा नामेत्यादि । निकुम्भिला नाम लङ्कायाः पश्चिमद्वारप्रदेशवासिनी भद्रकाली ॥ ४६॥४७॥

४४] ति०टी०–अजामुखसदृशमुखवत्या प्रघसयेत्यर्थः ४४

रा० टी०–सुरेति । सर्वशोकविनाशिनी सुरा आनीयतां मानुषं मांसमासाद्य प्राप्य निकुम्भिलां लङ्कापश्चिमभागवर्तिभद्रकालीं गत्वेति शेषः नृत्यामः ॥ ४६ ॥

४५ ] ति० टी०–निकुम्भिला नाम लङ्कायाः पश्चिमभागवर्तिनी भद्रकाली तां नृत्यामस्तत्समीपं गत्वा नृत्यामः सुरसुतोपमा देवकन्योपमा रोदित्यरुदत् ॥ ४५ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये सुन्दरकाण्डे चतुर्विंशः सर्गः ॥ २४ ॥

रा० टी०–एवमिति । निर्भर्त्स्यमाना सुरसुतोपमा सुरसुतासदृशी सीता धैर्यमुत्सृज्येव रोदिति । एवमिवार्थे॥४७॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ सुन्दरकाण्डे चतुर्विंशः सर्गः ॥ २४ ॥

गो० टी०–एवमिति । रोदिति अरुदत् ॥ ४८ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने चतुर्विंशः सर्गः ॥ २४ ॥

---

१ ] ति० टी०–परुषं वदन्तीनां वचः श्रुत्वेति शेषः ॥१॥

रा० टी०–भर्त्सितसीतावृत्तान्तमेवाह–अथेत्यादिभिः । परुषं वदन्तीनां राक्षसीनां मध्ये जनकात्मजा रुरोद ॥ १ ॥

गो० टी०–तथा तासां वदन्तीनामित्यादि । तासां वदन्तीनां तासु वदन्तीषु ॥ १ ॥

२ ] ति० टी०–पूर्वसर्गोक्तरीत्योक्ता मनस्विनी पातिव्रत्ये दृढमनाः ॥ २ ॥

रा० टी०–एवमिति । राक्षसीभिः एवमुक्ता वैदेही बाष्पगद्गदया गिरा उवाच ॥ २ ॥

गो० टी०–एवमुक्तेति । मनस्विनी पातिव्रत्ये दृढमनाः२

---

१ श्लोकद्वयमेतदधिकं गो. रा. पाठे । २ सर्वा इति गो. पाठः । ३ पीलुकानिति गो.पाठः । ४ लेह्यमुच्चावचमिति गो. पाठः । ५ तथेति गो. पाठ ।

न मानुषी राक्षसस्य भार्या भवितुमर्हति । कामं खादत मां सर्वा न करिष्यामि वो वचः ॥ ३ ॥
सा राक्षसीमध्यगता सीता सुरसुतोपमा । न शर्म लेभे शोकार्ता रावणेनेवं भर्त्सिता[1] ॥ ४ ॥
वेपते स्माधिकं सीता विशन्तीवाङ्गमात्मनः । वने यूथपरिभ्रष्टा मृगी कोकैरिवार्दिता ॥ ५ ॥
सा त्वशोकस्य विपुलां शाखामालम्ब्य पुष्पिताम् । चिन्तयामास शोकेन भर्तारं भग्नमानसा ॥ ६ ॥
सा स्नापयन्ती विपुलौ स्तनौ नेत्रजलस्रवैः । चिन्तयन्ती न शोकस्य तदान्तमधिगच्छति ॥ ७ ॥
सा वेपमाना पतिता प्रवाते कदली यथा । राक्षसीनां भयत्रस्ता विवर्णवदनाऽभवत् ॥ ८ ॥
तस्याः सा दीर्घबहुला वेपन्त्याः सीतया तदा । ददृशे कम्पिता[2] वेणी व्यालीव परिसर्पती ॥ ९ ॥
सा निःश्वसन्ती शोकार्ता[3] कोपोपहतचेतना । आर्ता व्यसृजदश्रूणि मैथिली विललाप च[4] ॥ १० ॥
हा रामेति च दुःखार्ता हा पुनर्लक्ष्मणेति च । हा [5]श्वश्रूर्मम कौसल्ये हा सुमित्रेति भामिनी ॥ ११ ॥
लोकप्रवादः सत्योऽयं पण्डितैः समुदाहृतः । अकाले दुर्लभो मृत्युः स्त्रिया वा पुरुषस्य वा ॥ १२ ॥
यत्राहं[6]माभिः क्रूराभी राक्षसीभिरिहार्दिता । जीवामि हीना रामेण मुहूर्तमपि दुःखिता ॥ १३ ॥
एषाऽल्पपुण्या कृपणा विनशिष्याम्यनाथवत् । समुद्रमध्ये नौः पूर्णा वायुवेगैरिवाहता ॥ १४ ॥

---

३] ति० टी०–कामं खादतेति । अयं सर्वः सीताप्रलापो गृहीतमनुष्यशरीरतया नटवदनुकरणरूप इति बोध्यम् ॥ ३ ॥

रा० टी०–तदाकारमाह–नेति । मानुषी मनुष्यसंबन्धिनी भार्या राक्षसस्य भवने भवितुं स्थातुं नार्हति अतः वो वचो न करिष्यामि अतो मां खादत ॥ ३ ॥

गो० टी०–न मानुषीति । खादत भक्षयत ॥ ३ ॥

४ ] ति० टी०–शर्म न लेभे इव शोकार्तेव ॥ ४ ॥

रा० टी०–सेति । राक्षसीमध्यगता सीता शर्म सुखं न लेभे ४

गो० टी०–सा राक्षसीति । शर्म सुखम् ॥ ४ ॥

५ ] ति० टी०–आत्मनोऽङ्गं विशन्तीव भीत्यातिसंकुचितशरीरा कमठवदभूदित्यर्थः । कोकैर्वृकैः ॥ ५ ॥

रा० टी०–तदेव भङ्ग्यन्तरेणाह–वेपते इति । आत्मनोऽङ्गम् आविशन्तीव कमठवत् सङ्कुचितशरीरेत्यर्थः, सीता कोकैः वृकैः अर्दिता वृकी इव वेपते स्म ॥ ५ ॥

गो० टी०–वेपत इति । कोकैः ईहामृगैः । 'कोकस्त्वीहामृगो वृकः' इत्यमरः ॥ ५ ॥

६–७ ] ति० टी०–अशोकस्याशोकवनिकासंबन्धिनः शिंशपावृक्षस्य तत्समीपवर्तिनोऽशोकस्यैव वा ॥ ६ ॥ ७ ॥

रा० टी०–सेति । अशोकस्य अशोकसदृशस्य शिंशुपायाः विपुलां शाखामालम्ब्य शोकेन उपलक्षिता अतः भग्नमानसा सा सीता भर्तारं चिन्तयामास । अशोकशब्दः आचारक्विबन्तप्रकृतिककर्तृक्विबन्तः इवार्थकः तुशब्दो वा ॥ ६ ॥

गो० टी०–सा त्विति । अशोकस्य हनुमदधिष्ठितशिंशुपासन्निहितस्य ॥ ६ ॥

रा० टी०–सेति । चिन्तयन्ती राक्षसीदुरुक्तिं स्मरन्ती अत एव नेत्रजलस्रवैः स्तनौ स्नापयन्ती सा सीता शोकस्यान्तं निवृत्तिं नाधिगच्छति ॥ ७ ॥

गो० टी०–सा स्नापयन्तीति । अन्तम् अवधिम् । अधिगच्छति अध्यगच्छत् ॥ ७ ॥

८ ] ति० टी०–राक्षसीनां राक्षसीभ्यः ॥ ८ ॥

रा० टी०–सेति । राक्षसीनां भयत्रस्ता अत एव प्रवातकदलीव वेपमाना अत एव पतिता सा सीता विवर्णवदना अभवत् ॥ ८ ॥

गो० टी०–सा वेपमानेति । राक्षसीनां राक्षसीभ्यः ॥ ८ ॥

९–१० ] ति० टी०–सीतयेति षष्ठ्यर्थे तृतीया । परिसर्पती परितः प्रसर्पन्ती ॥ ९ ॥ १० ॥

रा० टी०–तस्या इति । तस्याः भीतायाः वेपन्त्याः सीतया सीतायाः दीर्घबहुला अतिदीर्घा कम्पिता सा प्रसिद्धा वेणी परिसर्पती परिसर्पन्ती व्याली सर्पिणी इव ददृशे ॥ ९ ॥

गो० टी०–तस्या इति । सीतयेति व्यत्ययेन षष्ठ्यर्थे तृतीया । परिसर्पती परिसर्पन्ती नुमभाव आर्षः ॥ ९ ॥

रा० टी०–सेति । शोकोपहतचेतना सा सीता अश्रूणि व्यसृजत् विललाप च ॥ १० ॥

गो० टी०–सा निःश्वसन्तीति । दुःखार्ता राक्षसीवचनश्रवणजदुःखार्ता । आर्ता रामविरहार्ता ॥ १० ॥

११ ] ति० टी०–हा सुमित्रेतीत्यत्रेकारलोप आर्षः ॥ ११ ॥

रा० टी०–विलापाकारमाह–हेत्यादिभिः । हा रामेत्यानुवाचेति शेषः, हा सुमित्रेतीत्यत्र संधिरार्षत्वात् नमुनेत्यत्र नकारप्रश्लेषेण त्रिपाद्याः क्वचिदसिद्धत्वाभावज्ञापनाद्वा ॥ ११ ॥

गो० टी०–हा रामेति । सुमित्रेत्यत्र संबुद्धावाप एकारादेशाभाव आर्षः ॥ ११ ॥

१२ ] ति० टी०–अकाले दैवाविहितस्वेच्छाकाले ॥ १२ ॥

१३-१४ ] ति० टी०–यत्राहमिति । यस्मादहमित्यर्थः ॥ १३ ॥ १४ ॥

---

१ च तर्जितेति गो. स. पाठः। २ कम्पिनीति गो. पाठः। ३ दुःखार्ता शोकेति गो. पाठः। ४ हेति गो. पाठः। ५ श्वश्रु ममेति गो. पाठः। ६ अहमेवमिति गो. पाठः।

भर्तारं तमपश्यन्ती राक्षसीवशमागता । सीदामि खलु शोकेन कूलं तोयहतं यथा ॥ १५ ॥
तं पद्मदलपत्राक्षं सिंहविक्रान्तगामिनम् । धन्याः पश्यन्ति मे नाथं कृतज्ञं प्रियवादिनम् ॥ १६ ॥
सर्वथा तेन हीनाया रामेण विदितात्मना । तीक्ष्णं विषमिवास्वाद्य दुर्लभं मम जीवनम् ॥ १७ ॥
कीदृशं तु महापापं मया देहान्तरे कृतम् । येनेदं प्राप्यते घोरं महादुःखं सुदारुणम् ॥ १८ ॥
जीवितं त्यक्तुमिच्छामि शोकेन महता वृता । राक्षसीभिश्च रक्षन्त्या रामो नासाद्यते मया ॥ १९ ॥
धिगस्तु खलु मानुष्यं धिगस्तु परवश्यताम् । न शक्यं यत्परित्यक्तुमात्मच्छन्देन जीवितम् ॥ २० ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये सुन्दरकाण्डे पञ्चविंशः सर्गः ॥ २५ ॥

रा० टी०—लोकेति । यत्र यतः आभिः राक्षसीभिः अर्दिता रामेण च हीना अत एव दुःखिता अहं मुहूर्तमपि जीवामि अतः पण्डितैः समुदाहृतः अकाले मृत्युर्दुर्लभः अयं लोकप्रवादः सत्यः । श्लोकद्वयमेकान्वयि ॥ १२ ॥ १३ ॥

गो० टी०—लोकप्रवाद इत्यादिश्लोकद्वयमेकं वाक्यम् । अकाले अप्राप्तकाले । दुर्लभ इत्यत्र इतिकरणं बोध्यम् । यत्र यतः लोकप्रवाद इत्यादिश्लोकद्वयमेकं वाक्यम् । दुर्लभ इत्यत्रेतिकरणं द्रष्टव्यम् । यत्र यतः । एवं पाठक्रमः । केषुचित्कोशेषु व्युत्क्रमस्तु लेखकप्रमादकृतः ॥ १२ ॥ १३ ॥

रा० टी०—एषेति । अल्पपुण्येव एषाऽहं विनशिष्यामि विनङ्क्ष्यामि । तत्र दृष्टान्तः-वायुवेगैराहता पूर्णा समुद्रमध्ये नौरिव ॥ १४ ॥

गो० टी०—एषेति । पूर्णा पदार्थैरिति शेषः ॥१४॥१५॥

१५ ] ति० टी०—तोयहतं नदीपूररुग्णम् ॥ १५ ॥

रा० टी०—भर्तारमिति । भर्तारमपश्यन्ती अत एव राक्षसीवशमागता अहं तोयहतं कूलमिव शोकेन सीदामि॥१५॥

१६ ] ति० टी०—पद्मदलं विकसितं पद्मं तस्य पत्रमिवाक्षिणी यस्य तम् ॥ १६ ॥

रा० टी०—तमिति । सिंहविक्रान्तवत् गच्छति तच्छीलः तं मे नाथं ये पश्यन्ति ते धन्याः ॥ १६ ॥

गो० टी०—मम धनं सर्वेषां स्वं भविष्यतीत्याह-तमिति । तं 'बहवो नृप कल्याणगुणाः पुत्रस्य सन्ति ते' इति प्रसिद्धम् । आत्मगुणानुक्त्वा विग्रहगुणानाह-पद्मदलपत्राक्षं दलतीति दलं विकसितपद्माक्षमित्यर्थः । यद्वा दलतीति दलं गर्भपत्रम् । विस्पष्टार्थमेकार्थं शब्दद्वयं वा । सिंहविक्रान्तगामिनं विक्रान्तं विक्रमः गमनं तद्वत् गच्छतीति तथा ॥ १६ ॥ १७ ॥

१७–१८ ] ति० टी०—तीक्ष्णं विषं वत्सनाभादिकमास्वाद्य स्थितस्येव मे मम जीवनं दुर्लभम् ॥ १७ ॥ १८ ॥

रा० टी०—सर्वथेति । रामेण हीनायाः अत एव तीक्ष्णं विषम् आस्वाद्य भक्षयित्वा विद्यमानाया इव मम जीवनं सर्वथा दुर्लभम् ॥ १७ ॥

रा० टी०—कीदृशमिति । येन कर्मणा इदं महद्दुःखं प्राप्यते तत् देहान्तरे देहमध्ये पापमिव कीदृशं कर्म मया कृतं संचितम् ॥ १८ ॥

गो० टी०—कीदृशं त्विति । पुरा जन्मान्तरे पूर्वजन्मनि । घोरं सुदारुणम् अत्यन्तघोरमित्यर्थः ॥ १८ ॥

१९ ] ति० टी०—जीवितं त्यक्तुमिच्छामि । तदपि न शक्यमिति शेषः । रामोऽपि नासाद्यते च ॥ १९ ॥

रा० टी०—जीवितमिति । राक्षसीभिः रक्षन्त्या रक्ष्यमाणया मया रामो नासाद्यते प्राप्यते अतः महता शोकेन वृताऽहं जीवितं जीवनं त्यक्तुमिच्छामि ॥ १९ ॥

गो० टी०—जीवितमिति । रक्षन्त्या रक्ष्यमाणया॥१९॥

२० ] ति० टी०—एवं परवशतया दुःखानुभवे हेतुमाह—धिगिति । मनुष्यस्य विषोद्बन्धनादिना देहत्यागेऽपरमार्थप्राप्तेः परमदुःखस्यापि सोढव्यत्वादप्रयोजको मनुष्यदेह इत्यर्थः । राक्षस्यादिपरतन्त्रतां च मनुष्यत्वप्रयुक्तां धिक् । यद्यत्र मनुष्यदेहे । आत्मच्छन्देनात्मेच्छया जीवितं परित्यक्तुं न शक्यम्॥२०॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये सुन्दरकाण्डे पञ्चविंशः सर्गः ॥ २५ ॥

रा० टी०—नित्यात्वेन स्वमरणाभावं संस्मृत्याह-धिगिति । यत् यस्मात् आत्मच्छन्देन स्वाधीनतया जीवितं परित्यक्तुं न शक्यं तस्मात् मानुष्यं नित्यमनुष्यत्वं धिगस्तु अत एव परवश्यतां धिग् अन्यतरस्याभावे एवं दुःखं न स्यादिति तात्पर्यम् ॥ २० ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ सुन्दरकाण्डे पञ्चविंशः सर्गः ॥ २५ ॥

गो० टी०—धिगिति । परवश्यतां भर्तृपरतन्त्रताम् । परस्वभूतं शरीरं न स्वेच्छया त्यक्तुं शक्यमित्यर्थः । आत्मच्छन्देन मदिच्छया ॥ २० ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने पञ्चविंशः सर्गः ॥ २५ ॥

१ जीवितमिति गो. पाठः । पुरा जन्मान्तरे इति गो. पाठः । २ दुःखं मया घोरमिति गो. पाठः ।

## षड्विंशः सर्गः ।

राक्षसीभिस्तर्ज्यमाना जानकी मारणेऽपि नैवाहं तदङ्गीकारमनुमंस्ये इति प्रतिजानाना स्वनयनार्थं रामानागमने कारणानि विकल्पयन्ती बहुशो विलपति ।

प्रसक्ताश्रुमुखी त्वेवं ब्रुवती जनकात्मजा । अधोगतमुखी बाला विलप्तुमुपचक्रमे ॥ १ ॥
उन्मत्तेव प्रमत्तेव भ्रान्तचित्तेव शोचती । उपावृत्ता किशोरीव विचेष्टन्ती महीतले ॥ २ ॥
राघवस्य प्रमत्तस्य रक्षसा कामरूपिणा । रावणेन प्रमथ्याहमानीता क्रोशती बलात् ॥ ३ ॥
राक्षसीवशमापन्ना भर्त्स्यमाना चै दारुणम् । चिन्तयन्ती सुदुःखार्ता नाहं जीवितुमुत्सहे ॥ ४ ॥
नहि मे जीवितेनार्थो नैवार्थैर्न च भूषणैः । वसन्त्या राक्षसीमध्ये विना रामं महारथम् ॥ ५ ॥
अश्मसारमिदं नूनमथवाप्यजरामरम् । हृदयं मम येनेदं न दुःखेन विशीर्यते ॥ ६ ॥
धिङ्मामनार्यामसतीं याऽहं तेन विना कृता । मुहूर्तमपि जीवामि जीवितं पापजीविका ॥ ७ ॥
चरणेनापि सव्येन न स्पृशेयं निशाचरम् । रावणं किं पुनरहं कामयेयं निशाचरम् ॥ ८ ॥

---

१ ] ति० टी०–प्रसक्तानि प्रवृत्तान्यश्रूणि मुखे यस्याः सा एवं ब्रुवती वक्ष्यमाणरीत्या ब्रुवती । विलप्तुं विलपितुम् ॥ १ ॥

२ ] ति० टी०–उन्मत्ता भूताविष्टा प्रमत्ता पित्तोद्रेकादिना भ्रान्तचित्तेव दिङ्मोहादिना मूर्च्छितचित्तेव शोचती शोचन्ती । उपावृत्ता श्रमापनयनाय परिवर्तनशीला। किशोरीव वडवेव ॥ २ ॥

रा० टी०–सीतावृत्तान्तमेवाह–प्रसक्तेत्यादिभिः । प्रसक्तानि प्रवृत्तानि अश्रूणि मुखे यस्याः सा अत एव अधोगतमुखी जनकात्मजा एवं ब्रुवती उन्मत्ता भूतैराविष्टेव प्रमत्ता पित्तादिदोषदूषितात्वेन प्रमादविशिष्टेव भ्रान्तचित्ता दिग्भ्रमादिजनितभ्रान्तिविशिष्टचित्तविशिष्टेव शोचती शोचन्ती उपावृत्ता श्रमापनोदाय लुण्ठितुं प्रवृत्ता किशोरी अश्वकन्येव महीतले विचेष्टन्ती जनकात्मजा विलप्तुं विलपितुमुपचक्रमे। श्लोकद्वयमेकान्वयि ॥ १ ॥ २ ॥

गो० टी०–प्रसक्तेत्यादि । उन्मत्तेति । उन्मत्ता चित्तविभ्रमवती 'उन्मादश्चित्तविभ्रमः' इत्युक्तेः । प्रमत्ता अनवधाना 'प्रमादोनवधानता इत्यमरः' । भ्रान्तचित्ता अनवस्थितचित्ता । उपावृत्ता श्रमापनोदनार्थं वेष्टिता किशोरीव वडवेव ॥ १॥ २ ॥

३ ] ति० टी०–कामरूपिणा रक्षसा मारीचेन प्रमत्तस्यासंनिधानं प्राप्तस्य राघवस्य संबन्धिन्यहं रावणेन प्रमथ्य प्रपीड्य क्रोशन्ती बलादानीताऽस्मि ॥ ३ ॥

रा० टी०–विलापाकारमाह–राघवस्येत्यादिभिः । तस्य प्रसिद्धस्य राघवस्य प्रमत् तत्सामर्थ्यादिविज्ञात्री अहं रावणेन प्रमथ्य संन्यासिवेषेण संक्लेद्य क्रोशती क्रोशन्ती सती बलादानीताऽऽहृता ॥ ३ ॥

गो० टी०–राघवस्येत्यादि । प्रमत्तस्य अनवहितस्य ॥ ३ ॥ ४ ॥

४ ] ति० टी०–किं च राक्षसीवशमापन्ना, भर्त्स्यमाना राक्षसीभिः, चिन्तयन्ती रामम् ॥ ४ ॥

रा० टी०–राक्षसीति । राक्षसीवशमापन्ना अत एव सुदुःखार्ता चिन्तयन्ती राममिति शेषः, अहं जीवितुं नोत्सहे॥४॥

५–६ ] ति० टी०–अर्थैर्धनैः ॥ ५ ॥ ६ ॥

रा० टी०–नहीति । रामं विना वसन्त्या मे जीवितादिना अर्थो न ॥ ५ ॥

रा० टी०–अश्मसारेति । येन ममेदं हृदयं दुःखेन न विदीर्यते तेन हेतुना इदमश्मसारमजरामरं वा मन्ये इति शेषः ॥ ६ ॥

गो० टी०–न हीति । मे जीवितैर्जीवनैः कोऽप्यर्थो नास्ति । केवलजीवितस्यानपेक्षितत्वेप्यर्थसहितत्वेन तदपेक्षा स्यात् नेत्याह–नैवार्थैर्न च भूषणैः भूषणैरर्थैश्च सहितैर्जीवनैर्मेनार्थः । कुत इत्यत्राह–वसन्त्या इति । राक्षसीमध्यवासाद्रामविरहाच सर्वोपकरणसहितमपि जीवितं नापेक्षितमित्यर्थः ॥ ५–१० ॥

७ ] ति० टी०–असतीमसतीवत्परगृहस्थाम् । जीवामि जीवितं रक्षामीत्यर्थः । 'पाकं पचति' इतिवत्प्रयोगः ॥ ७ ॥

रा० टी०–धिगिति । तेन रामेण विना रहिता कृता अत एव पापः दुःखप्रदः जीवो जीवनं यस्याः साऽहं मुहूर्तमपि जीवितं जीवनं जीवामि धारयामि अतो नार्यामार्यहीनामत एवासतीमविद्यमानप्रायां मां धिक् ॥ ७ ॥

८ ] ति० टी०–एतदुत्तरम्—चरणेनेति । मध्ये द्वौ श्लोकौ प्रक्षिप्तौ । सव्येन वामेन ॥ ८ ॥

रा० टी०–ननु रावणसमर्पितैश्वर्येण शोकः किमर्थं न कथञ्चिन्निवार्यते इत्यत आह–चरणेनेति । निशाचरं निशाचराधिपत्यं सव्येन चरणेनापि न स्पृशेयम् अतः विगर्हितं निन्दित रावणं रावणैश्वर्यं किं कथं कामयेयम् ॥ ८ ॥

---

१ मुखेति गो. पाठः । २ सुदारुणमिति गो. पाठः । ३ अवशीर्यत इति गो. पाठः । ४ रक्षामीति गो. पाठः । ५ विगर्हितमिति गो. पाठः ।

प्रत्याख्यानं न जानाति नात्मानं नात्मनः कुलम्। यो नृशंसस्वभावेन मां प्रार्थयितुमिच्छति ॥ ९ ॥
छिन्ना भिन्ना प्रभिन्ना वा दीप्ता वाग्नौ प्रदीपिता। रावणं नोपतिष्ठेयं किं प्रलापेन वश्चिरम् ॥ १० ॥
ख्यातः प्राज्ञः कृतज्ञश्च सानुक्रोशश्च राघवः। सद्वृत्तो निरनुक्रोशः शङ्के मद्भाग्यसंक्षयात् ॥ ११ ॥
राक्षसानां जनस्थाने सहस्राणि चतुर्दश। एकेनैव निरस्तानि स मां किं नाभिपद्यते ॥ १२ ॥
[ निरुद्धा रावणेनाहमल्पवीर्येण रक्षसा। समर्थः खलु मे भर्ता रावणं हन्तुमाहवे ॥
विराधो दण्डकारण्ये येन राक्षसपुंगवः। रणे रामेण निहतः स मां किं नाभिपद्यते ॥ ]
कामं मध्ये समुद्रस्य लङ्केयं दुष्प्रधर्षणा। न तु राघवबाणानां गतिरोधो भविष्यति ॥ १३ ॥
किं नु तत्कारणं येन रामो दृढपराक्रमः। रक्षसाऽपहृतां भार्यामिष्टां यो नाभिपद्यते ॥ १४ ॥

---

९ ] ति० टी०—प्रत्याख्यानं मया क्रियमाणं निराकरणं न जानाति। काममोहादिति शेषः। नृशंसस्वभावेन क्रूरस्वभावेन। मां प्रार्थयितुं राक्षसीद्वारा स्वानुकूलां कर्तुम् ॥ ९ ॥

रा० टी०—प्रत्याख्यानमिति। नृशंसस्वभावेनोपलक्षितो यो रावणः मां प्रार्थयितुं मन्निस्यस्थितिं याचितुमिच्छति सः प्रत्याख्यानं राक्षसदेशो मया स्थातुमशक्य इति मदुक्तिं न जानाति गृह्णातीत्यर्थः, अत एव आत्मानं रामं आत्मनः कुलं च न जानाति विचारयति ॥ ९ ॥

गो० टी०—प्रत्याख्यातमिति। प्रत्याख्यातं प्रत्याख्यानम् भावे निष्ठा। आत्मानं स्वस्वरूपम् ॥ ११ ॥

१० ] ति० टी०—छिन्ना रज्जुवत्, भिन्ना भित्तिवत्, प्रभिन्ना घटवत्, दीप्ता अग्नौ दीप्तशल्यमांसवत्, प्रदीपिता प्रदीप्ता गृहादिवत्, वश्चिरं प्रलापेन किम्। रावणं नोपतिष्ठेयमित्येव निश्चयसत्त्वात् ॥ १० ॥

रा० टी०—छिन्नेति। छिन्ना खड्गादिना कृतच्छिद्रा वा भिन्ना खड्गादिना द्विधाभावं प्रापिता वा प्रभिन्ना कुठारादिना अवयवशः खण्डिता वा अग्नौ दीप्ता भक्षणाय भर्जिता वा प्रदीप्ता अत्यन्तं दाहिता वाऽहं रावणं रावणैश्वर्यं नोपतिष्ठेयं राक्षसपुरे न वसेयमित्यर्थः ॥ १० ॥

गो० टी०—छिन्नेति। छिन्ना विखण्डतया कृता। भिन्ना दलिता। विभक्ता अवयवशः कृता दीप्तेव अग्नौ प्रदीपिता वा१२

११ ] ति० टी०—अथ स्वापत्त्यैर्थे कारणानि संभावयति—ख्यात इति। प्रसिद्धः प्रशस्तगुणः ईदृशोऽपि राघवो मद्भाग्यसंक्षयादेव मयि निरनुक्रोशो दयाहीनः संपन्न इति शेषः। इति शङ्के ॥ ११ ॥

रा० टी०—ख्यात इति। ख्यातत्वादिविशिष्टो राघवः मद्भाग्यसंक्षयात् निरनुक्रोशः दयारहितः इति शङ्के नेत्यर्थः काकुः ॥ ११ ॥

गो० टी०—एवं पातिव्रत्यदार्ढ्यमुक्त्वा रामस्यानागमने कारणानि बहुधा शङ्कते—ख्यात इत्यादिना। प्राज्ञः दोषवत्यपि गुणदर्शी। न तेऽम्बा मध्यमा माता गर्हितव्या कथंचनेत्युक्तम्। कृतज्ञः कथंचिदुपकारेण कृतेनैकेन तुष्यतीत्युक्तरीत्या स्वाश्रितैः कृतं किंचित्कारं सर्वदा मनसि कुर्वन्नित्यर्थः। सानुक्रोशः किंचित्कारकरणे भृशं भवति दुःखित इत्युक्तरीत्या तेषां व्यसने सति अतिदुःखितः राघवः। जनित्वार्जितानां गुणान्तराणामुपसंग्रहणमिदम्। सद्वृत्तः परससृद्ध्यैकप्रयोजनः ख्यातः एवं शत्रुगोष्ठ्यामपि प्रसिद्धः निरनुक्रोशः शङ्के अस्यामप्यवस्थायां सुखप्रदानाभावान्नृशंसमाशङ्के। मद्भाग्यसंक्षयात् मद्भाग्यविपर्ययेणैव वैपरीत्यं जातम् १३

१२ ] ति० टी०—न च तस्य मद्विमोक्षणाशक्तिरित्याह—राक्षसानामिति। नाभिपद्यते न प्राप्नोति ॥ १२ ॥

रा० टी०—राक्षसानामिति। येन निरस्तानि स रामः मां किं किमर्थं नाभिपद्यते ॥ १२ ॥

गो० टी०—एकमात्रसहायः स किं करिष्यतीत्यत्राह—राक्षसानामिति। जनस्थाने रक्षसां चतुर्दश सहस्राणि एकेन येन रामेण निरस्तानि घातितानि सः नाभिपद्यते न रक्षति १४

१३-१४ ] ति० टी०—एतदुत्तरम्—कामं मध्ये इति। 'मध्ये निरुद्धा रावणेनाहमल्पवीर्येण रक्षसा। समर्थः खलु मे भर्ता रावणं हन्तुमाहवे॥ विराधो दण्डकारण्ये येन राक्षसपुंगवः। रणे रामेण निहतः स मां नाभ्यवपद्यते॥' इति श्लोकौ प्रक्षिप्ताविति कतकः। काममन्येषां दुष्प्रधर्षणा भवतु, न तु रामबाणानां गतिरोधो भविष्यति। आब्रह्मलोकं रामबाणगत्यप्रतिरोधस्य भार्गवादिविषये प्रसिद्धतरत्वादिति भावः। एतेनातिदुर्गस्थानस्थितत्वान्न मोक्षणमित्यपास्तम् ॥ १३॥१४॥

रा० टी०—निरुद्धेति। यद्यपि मे भर्ता रावणं हन्तुं समर्थः तथापि अहं निरुद्धा एतेनात्र कारणं दुरूहमिति ध्वनितम् ॥ १३ ॥

रा० टी०—विराध इति। येन विराधो निहतः स रामः मां नाभ्यवपद्यते किमर्थमिति शेषः ॥ १४ ॥

रा० टी०—काममिति। समुद्रस्य मध्ये इयं लङ्का यद्यपि कामं दुष्प्रधर्षणा तथापि रामबाणानां गतिरोधो न भविष्यति१६

गो० टी०—प्रबलो रावणः कथं निरस्य इत्यत्राह—निरुद्धेति ॥ १६ ॥

---

१ विभक्तेति गो. पाठः। २ येनैकेनेति गो. पाठः। ३ श्लोकद्वयमेतदधिकं गो. रा. पाठे। ४ गतिरोधी ह विद्यते इति गो. पाठः। ५ श्चिति गो. रा. पाठः। ६ नाभ्यवपद्यते इति गो. रा. पाठः।

इहस्थां मां न जानीते शङ्के लक्ष्मणपूर्वजः । जानन्नपि स तेजस्वी धर्षणां मर्षयिष्यति ॥ १५ ॥
हृतेति मां योऽधिगत्य राघवाय निवेदयेत् । गृध्रराजोऽपि स रणे रावणेन निपातितः ॥ १६ ॥
कृतं कर्म महत्तेन मां तदाऽभ्यवपद्यता । तिष्ठता रावणवधे वृद्धेनापि जटायुषा ॥ १७ ॥
यदि मामिह जानीयाद्वर्तमानां हि राघवः । अद्य बाणैरभिक्रुद्धः कुर्याल्लोकमराक्षसम् ॥ १८ ॥
निर्दहेच्च पुरीं लङ्कां निर्दहेच्च महोदधिम् । रावणस्य च नीचस्य कीर्तिं नाम च नाशयेत् ॥ १९ ॥
ततो निहतनाथानां राक्षसीनां गृहे गृहे । यथाहमेवं रुदती तथा भूयो न संशयः ॥ २० ॥
अन्विष्य रक्षसां लङ्कां कुर्याद्रामः सलक्ष्मणः । नहि ताभ्यां रिपुर्दृष्टो मुहूर्तमपि जीवति ॥ २१ ॥
चिताधूमाकुलपथा गृध्रमण्डलमण्डिता । अचिरेणैव कालेन श्मशानसदृशी भवेत् ॥ २२ ॥

---

गो० टी०—सामर्थ्यं निदर्शयति—विराध इति ॥ १६ ॥

गो० टी०—अस्तु रामः समर्थः तथापि समुद्रमध्यस्था लङ्का दुष्प्रधर्षेत्याशङ्क्याह—क्राममिति । गतिरोधि गतिप्रतिबन्धकम् किंचिदिति शेषः ॥ १७ ॥

रा० टी०—किमिति । येन कारणेन अपहृतां भार्यां रामो नाभ्युपपद्यते तत्कारणं किम् ॥ १६ ॥

गो० टी०—एतत्फलितमाह—किन्त्विति ॥ १८ ॥

१५ ] ति० टी०—तस्मादत्र मत्स्थित्यज्ञानमेव मद्विमोक्षणप्रवृत्त्यभावे कारणमित्याह—इहस्थामिति । मर्षयिष्यतीत्यत्र काकुः । जानंश्चेद्भवेत्तदा मर्षयिष्यति । अपि तु न सहिष्यत्येवेत्यर्थः ॥ १६ ॥

रा० टी०—इहेति । तेजस्वी रामः इहस्थां मां न जानीते । तत्र हेतुः—जानन्नपि धर्षणां रावणप्रागल्भ्यं सहिष्यति काकानेत्यर्थः इति शङ्के ॥ १७ ॥

गो० टी०—इहेति । लक्ष्मणपूर्वज इत्यनेन निरनुक्रोशत्वादिप्रसक्त्यभावः सूच्यते । मर्षयिष्यतीत्यत्र काकुरनुसंधेया॥१९॥

१६ ] ति० टी०—संभावितं ज्ञानकारणं च विहतमित्याह—हृतेति । हृतेत्यधिगत्य ज्ञात्वा यो मां राघवाय निवेदयेत्सोऽपीत्यन्वयः ॥ १६ ॥

रा० टी०—इहस्थितिविषयकज्ञानाभावे हेतुमाह—हृतेति । योऽधिगत्य ज्ञात्वा हृतेति मां राघवाय निवेदयेत् स गृध्रराजोऽपि निपातितः अतः को मद्वृत्तं श्रावयेदिति तात्पर्यम् ॥ १८ ॥

गो० टी०—इहास्तीत्यज्ञाने हेतुमाह—हृतेति ॥ २० ॥

१७ ] ति० टी०—अभ्यवपद्यतानुगृह्णानेन । रावणवधे तिष्ठता रावणवधार्थं यतता (?) । 'रावणद्वन्द्वे' इति पाठे रावणेन सह द्वन्द्वयुद्ध इत्यर्थः ॥ १७ ॥

रा० टी०—प्रसङ्गसङ्गत्या आह—कृतमिति । मामभ्यवपद्यता अत एव रावणवधे तद्वधार्थं तिष्ठता वृद्धेनापि जटायुषा महत् कर्म कृतम् । 'रावणद्वन्द्व' इति पाठान्तरम् ॥ १९ ॥

गो० टी०—प्रसङ्गादाह—कृतमिति । अभ्यवपद्यता रक्षता । रावणद्वन्द्वे रावणद्वन्द्वयुद्धे ॥ २१–२३ ॥

१८–१९ ] ति० टी०—मामिति । इहस्थां माम् ॥१८॥१९॥

रा० टी०—यदीति । इह वर्तमानां मां राघवो यदि जानीयात् तदा अभिक्रुद्धः सन् लोकं राक्षसपुरमराक्षसं राक्षसरहितं कुर्यात् लङ्कां निर्दहेच्च अत एव रावणस्य कीर्तिं नाम च नाशयेच्च । श्लोकद्वयमेकान्वयि ॥ २० ॥ २१ ॥

२० ] ति० टी०—यथाहमिदानीमेवं रुदती वर्ते, भूयो मत्तोऽधिकं मृतभर्तृकत्वाद्राक्षस्यो रुदत्यो भविष्यन्तीत्यत्र न संशय इत्यर्थः ॥ २० ॥

रा० टी०—तत इति । ततो राक्षसविध्वंसानन्तरं रुदती याऽहं तस्या रोदनं यथा तथा गृहे गृहे निहतनाथानां राक्षसीनां रोदनं भविष्यतीति शेषः ॥ २२ ॥

गो० टी०—तत इति । अहं यथा एवं रुदती रुदन्त्यस्मि तथा निहतनाथानां राक्षसीनाम् गृहे गृहे भूयः भूरि रुदन्त्यः भविष्यन्तीत्यर्थः ॥ २४ ॥

२१ ] ति० टी०—ननु ज्ञाने खल्विदं संभाव्येत, ज्ञानमेव तु दुर्लभं तत्राह—अन्विष्येति । अचिन्त्यसामर्थ्यत्वाद्दैवानुग्रहाच्च लङ्कामप्यन्विष्य मां ज्ञात्वा रक्षसां कुर्यात् विनाशमिति शेषः । विनाशस्यैषत्करत्वमाह—नहीति ॥ २१ ॥

रा० टी०—अन्विष्येति । हि यतः ताभ्यां रामलक्ष्मणाभ्यां दृष्टो रिपुः मुहूर्तमपि न जीवति अतः लङ्कामन्विष्य रक्षसां विध्वंसमिति शेषः, कुर्यात् ॥ २३ ॥

गो० टी०—अन्विष्येति । रक्षसां लङ्कामन्विष्य कुर्यात् रिपुनाशनमिति शेषः ॥ २५ ॥ २६ ॥

२२ ] ति० टी०—निश्चित एवायमर्थ इत्याह—चितेति । भवेत लङ्केति शेषः ॥ २२ ॥

रा० टी०—चितेति । चिताधूमैराकुला व्याप्ताः पन्थानो यस्यां सा अचिरेणैव कालेन श्मशानसदृशी भवेत् लङ्केति शेषः ॥ २४ ॥

---

१ हीति गो. पाठः । २ तथेति गो. पाठः । ३ द्वन्द्वे इति गो. पाठः । ४ स इति गो. पाठः । ५ विधमेदिति गो. पाठः । ६ शोषयेदिति गो. पाठः । ७ संकुलेति गो. पाठः । ८ तु लक्ष्येयमिति गो. पाठः ।

अचिरेणैव कालेन प्राप्स्याम्येनं मनोरथम् । दुष्प्रस्थानोऽयमाभाति सर्वेषां वो विपर्ययः ॥ २३ ॥
यादृशानि तु दृश्यन्ते लङ्कायामशुभानि तु । अचिरेणैव कालेन भविष्यति हतप्रभा ॥ २४ ॥
नूनं लङ्का हते पापे रावणे राक्षसाधिपे । शोषमेष्यति दुर्धर्षा प्रमदा विधवा यथा ॥ २५ ॥
पुण्योत्सवसमृद्धा च नष्टभर्त्री सराक्षसा । भविष्यति पुरी लङ्का नष्टभर्त्री यथाङ्गना ॥ २६ ॥
नूनं राक्षसकन्यानां रुदतीनां गृहे गृहे । श्रोष्यामि नचिरादेव दुःखार्तानामिह ध्वनिम् ॥ २७ ॥
सान्धकारा हतद्योता हतराक्षसपुङ्गवा । भविष्यति पुरी लङ्का निर्दग्धा रामसायकैः ॥ २८ ॥
यदि नाम स शूरो मां रामो रक्तान्तलोचनः । जानीयाद्वर्तमानां यां राक्षसस्य निवेशने ॥ २९ ॥
अनेन तु नृशंसेन रावणेनाधमेन मे । समयो यस्तु निर्दिष्टस्तस्य कालोऽयमागतः ॥ ३० ॥
स च मे विहितो मृत्युरस्मिन्दुष्टे न वर्तते । अकार्यं ये न जानन्ति नैर्ऋताः पापकारिणः ॥ ३१ ॥

२३ ] ति० टी०—रक्षोऽनर्थवन्ममार्थोऽपि निश्चित एवेत्याह—अचिरेणेति । युष्माकमनर्थोऽपि निश्चित इति च राक्षसीः प्रत्याह—दुष्प्रस्थान इति । दुर्निमित्तप्रवृत्तिरयं विपर्ययः, एतद्विपरीतज्ञानमिति भाति ॥ २३ ॥

रा० टी०—राक्षसीरुद्दिश्याह—अचिरेणेति । वो युष्माकं विपर्ययः शास्त्रविरुद्धः दुष्प्रस्थानः दुर्मार्गो भाति अतः एनमुक्तं मनोरथमचिरेणैव कालेन प्राप्स्यामि ॥ २५ ॥

गो० टी०—अचिरेणेति । दुष्प्रस्थानः दुर्मार्गः दुराचार इति यावत् ॥ २७ ॥

२४ ] ति० टी०—तामेवाह—यादृशानीति । यादृशानि दृश्यन्ते तैरेव हतप्रभा भविष्यतीति ज्ञायत इत्यर्थः ॥ २४ ॥

रा० टी०—यादृशानीति । लङ्कायां यादृशानि अशुभानि कर्माणि दृश्यन्ते तैः अचिरेणैव कालेन लङ्का हतप्रभा भविष्यति ॥ २६ ॥

गो० टी०—यादृशानीति । अशुभानि अशुभसूचकानि । हतप्रभेत्यत्र लङ्केत्यनुकर्षः । लङ्का अचिरेण कालेन हतप्रभा भविष्यतीत्यत्र यादृशानि सूचकानि स्युः इह लङ्कायाम् तादृशान्यशुभानि दृश्यन्त इत्यन्वयः ॥ २८ ॥

२५ ] ति० टी०—शोषम् ऐश्वर्यादेरिति शेषः ॥ २५ ॥

रा० टी०—नूनमिति । पापे रावणे हते सति विधवा पतिरहिता प्रमदा इव दुर्धर्षाऽपि लङ्का शोषं विनाशमेष्यति॥२७॥

गो० टी०—नूनमिति । दुर्धर्षेति लङ्काविशेषणम् ॥ २९ ॥

२६] ति० टी०—पुण्योत्सवसमृद्धा च । अद्येति शेषः॥२६॥

रा० टी०—तदेव भङ्ग्यन्तरेणाह—पुण्येति । नष्टभर्त्री अङ्गना इव लङ्का नष्टभर्त्री भविष्यति ॥ २८ ॥

गो० टी०—पुण्येति । पुण्योत्सवेभ्यः समुत्था निकृत्तपुण्योत्सवेत्यर्थः सराक्षसी राक्षसीजनमात्रयुक्तेत्यर्थः इयं लङ्कापुरी नष्टभर्त्री सराक्षसी अर्थात् हतराक्षसा नष्टभर्त्री अङ्गना यथा अङ्गनेव पुण्योत्सवसमुत्था भविष्यतीत्यन्वयः ॥ ३० ॥ ३१ ॥

२७ ] ति० टी०—ध्वनिं रोदनशब्दम् । 'दुःखार्तानामिव' इति पाठः ॥ २७ ॥

रा० टी०—नूनमिति । रुदतीनां राक्षसकन्यानां ध्वनिं गृहे गृहे श्रोष्याम्येव । इव एवार्थे ॥ २९ ॥

२८ ] ति० टी०—सान्धकाराऽलक्ष्मीसहिता ॥ २८ ॥

२९ ] ति० टी०—यदि राक्षसस्य निवेशने वर्तमानां यां मां रामो जानीयात्तदा लङ्कापुरी रामसायकैर्निर्दग्धा भविष्यतीत्यन्वयः ॥ २९ ॥

रा० टी०—सेति । रक्तान्तलोचनो रामः राक्षसस्य निवेशने वर्तमानां मां यदि जानीयात् तदा लङ्का रामसायकैर्दग्धा अत एव दग्धा राक्षसपुङ्गवा यस्याम् अत एव हतद्योता अत एव सान्धकारा भविष्यति । श्लोकद्वयमेकान्वयि ॥ ३० ॥ ३१ ॥

गो० टी०—सान्धकारेत्यादि । यदीति । स रामः रावणस्य निवेशने मां वर्तमानाम् जानीयाद्यदि तदा लङ्का निर्दग्धा भविष्यतीति पूर्वेण संबन्धः ॥ ३२ ॥ ३३ ॥

३० ] ति० टी०—ननु लङ्कानाशेऽपि मम जीवनं कथं स्यादिति चिन्तयति—अनेनेति । समयो द्वादशमासरूपः तस्य कालः किंचिदधिकमासद्वयावशिष्टत्वादत्यासन्नकाल इत्यर्थः ३० ॥

रा० टी०—अनेनेति । अधमेन रावणेन यः समयः मद्विघाताय द्वादशमासरूपकालः निर्दिष्टः तस्य कालः समाप्तिः अयं समीपस्थः सन्नागतः ॥ ३२ ॥

गो० टी०—अनेनेति । समयः द्वादशमासात्मकः संकेतः तस्य कालः आगतः सन्निहितः मासद्वयमात्रपरिशेषादिति भावः ॥ ३४ ॥

३१ ] ति० टी०—अस्मिन्काले दुष्टेन रावणेन स कालो मे मृत्युर्विहितः वर्तत इत्यर्थः । ननु ततः परमपि जीवास्त्वां न हिंस्युस्तत्राह—अकार्यमिति । ये राक्षसा अकार्यमिदं कर्तव्यमिदमकर्तव्यमिति न जानन्ति ते नैर्ऋताः पापकारिणः स्युः ॥ ३१ ॥

रा० टी०—स इति । दुष्टेन रावणेन यो मे मृत्युर्विहितः

१ आख्यातीति गो. पाठः । २ विपर्ययमिति गो. पाठः । ३ इहेति गो. पाठः । ४ अधमे इति गो. पाठः । ५ यास्यतीति गो. पाठः । ६ समुत्थेति गो. पाठः । ७ सराक्षसीति गो. पाठः । ८ रुदन्तीनामिति गो. पाठः । ९ हि रावणस्येति गो. पाठः । १० अधमेतद् गो. नास्ति ।

अधर्मात्तु महोत्पातो भविष्यति हि सांप्रतम् । नैते धर्मं विजानन्ति राक्षसाः पिशिताशनाः ॥ ३२ ॥
ध्रुवं मां प्रातराशार्थं राक्षसः कल्पयिष्यति । साऽहं कथं करिष्यामि तं विना प्रियदर्शनम् ॥ ३३ ॥
रामं रक्तान्तनयनमपश्यन्ती सुदुःखिता । [ यदि कश्चित्प्रदाता मे विषस्याद्य भवेदिह । ]
क्षिप्रं वैवस्वतं देवं पश्येयं पतिना विना ॥ ३४ ॥
नाजानाज्जीवतीं रामः स मां भरतपूर्वजः । जानन्तौ तु न कुर्यातां नोर्व्यां हि परिमार्गणम् ॥ ३५ ॥
नूनं ममैव शोकेन स वीरो लक्ष्मणाग्रजः । देवलोकमितो यातस्त्यक्त्वा देहं महीतले ॥ ३६ ॥
धन्या देवाः सगन्धर्वा सिद्धाश्च परमर्षयः । मम पश्यन्ति ये वीरं रामं राजीवलोचनम् ॥ ३७ ॥
अथवा नहि तस्यार्थो धर्मकामस्य धीमतः । मया रामस्य राजर्षेर्भार्यया परमात्मनः ॥ ३८ ॥

---

स मृत्युः ये नैर्ऋताः अकार्यं न जानन्ति तेषां समीपे इति शेषः अस्मिन् काले वर्तते ॥ ३३ ॥

गो० टी०–अकार्यमिति । पापकारिणः ये नैर्ऋताः अधर्मादेतोः अकार्यं न जानन्ति तैर्महोत्पातः संभविष्यति॥ ३९॥

३२ ] ति० टी०–अपि च सांप्रतं संपादितात्परदारहरणलक्षणादधर्मात्त्वधर्मादेव योऽयं महोत्पातो वर्तते तेनैते सर्वथा न भविष्यन्ति । नन्वोऽत्राह्यकर्षं इति कतकः यदेवमतः— नैत इति । यतो न विजानन्ति न गणयन्ति ॥ ३२ ॥

रा० टी०–अधर्मादिति । ये एते राक्षसाः धर्मं न विजानन्ति तेषाम् अधर्मात् मद्वधोपायजनितपापात् महोत्पातः सकलराक्षसविनाशकारकः शकुनविशेषः सांप्रतं शीघ्रमेव भविष्यति ॥ ३४ ॥

गो० टी०–एतदेव विवृणोति–नैत इति ॥ ३६ ॥ ३७ ॥

३३ ] ति० टी०–राक्षसस्तस्मादयं रावणोऽपि मां ध्रुवं प्रातराशार्थं कल्पयिष्यति, साहं कथं करिष्यामि । प्राप्तविशसनकाला तत्काल इति शेषः ॥ ३३ ॥

रा० टी०–ध्रुवमिति । राक्षसः प्रातराशार्थं प्रातःकालिकभोजनार्थं मां ध्रुवं कल्पयिष्यति । अर्धं पृथक्–सेति । सा प्राप्तराक्षसकर्तृकविघातसमये राममपश्यन्ती अहं रामं विना कथं करिष्यामि । अर्धद्वयमेकान्वयि ॥ ३६ ॥

३४ ] ति० टी०–उक्तमेवाह—राममिति । कथं करिष्यामीति शेषः ॥ ३४ ॥

रा० टी०–यदीति । अथ राक्षसकर्तृकविघातात्पूर्वमेव यदि कश्चित् पतिना पत्या पतिनाविना विद्यमानायाः मे मह्यं विषं प्रदाता भवेत् विषदानादिना विघातसमर्थो भवेदित्यर्थः, तदा वैवस्वतं विवस्वतो ध्येयं देवं नित्यप्रमोदं राममहं पश्येयम् ॥ ३६ ॥

गो० टी०–यदीति । पतिनेति नाभाव आर्षः ॥ ३८ ॥

३५ ] ति० टी०–तदेवं वीरतरस्य रामस्य स्वान्वेषणे कारणान्युत्प्रेक्षते—नाजानादिति । स रामो लक्ष्मणश्च प्रायेण मां जीवतीं जीवन्तीं नाजानात् । यदि जानीयातां तदा जानन्तौ तावुर्व्यां भूमौ परिमार्गणं न कुर्यातामिति न, किं तु कुर्यातामेव । अतो मृतेति मत्वा तूष्णीं तिष्ठत इति भावः ॥ ३६ ॥

रा० टी०–नेति । जीवतीं जीवन्तीं मां जानन्तौ तौ रामलक्ष्मणौ परिमार्गणमन्वेषणं न कुर्यातां नो कुर्यातामेवेत्यर्थः, अतः मां जीवतीं लक्ष्मणपूर्वजः स रामः नाजानात् ॥ ३७ ॥

गो० टी०–नाजानादिति । जीवतीं जीवन्तीम् । न न कुर्यातां कुर्यातामेव । तदाह वामनः–'संभाव्यनिषेधनिवर्तने द्वौ प्रतिषेधौ इति ॥ ३९–४१ ॥

३६ ] ति० टी०–अथवा मद्वियोगेन रामो देहं न्यस्तवानित्याह—नूनमिति ॥ ३६ ॥

रा० टी०–नूनमिति । मम शोकेन देहम् ऐश्वर्यवृद्धिं महीतले त्यक्त्वा इतो महीतलात् देवलोकं लक्ष्मणाग्रजो यातः नूनमित्याशङ्कायाम् ॥ ३८ ॥

३७ ] ति० टी०–एवं च देवलोकस्था धन्या इत्याह— धन्या इति । मम वीरमित्यन्वयः ॥ ३७ ॥

रा० टी०–धन्या इति । मम रामं ये पश्यन्ति ते देवादयो धन्याः ॥ ३९ ॥

३८ ] ति० टी०–ननु त्वज्जीवनाभावनिश्चयप्रमाणोपलम्भं विना कथं रामेण देहस्त्यक्त इत्यतः पक्षान्तरमाह— अथ वेति । धर्मकामस्य हि भार्ययार्थः अयं तु न तथा । तदेवाह—धीमत आत्मानात्मविवेकवतः, अत एव परमात्मनः परमात्मब्रह्मात्मना स्थितस्य जीवन्मुक्तस्य तस्य मया नार्थः । अनेन वैराग्यादप्रवृत्तिरिति सूचितम् ॥ ३८ ॥

रा० टी०–ननु नित्यपरिपूर्णकामस्य रामस्य त्वया किं साध्यं यतस्तत्रदर्थं यतेत इत्यत आह–अथेति । परमात्मनः धर्मकामस्य नित्यं धर्ममनस्कस्य रामस्य अथ भार्यया माङ्गलिकक्रिया अर्थः प्रयोजनं नहि नास्त्येवेत्यर्थः, एतेन भार्यां विना धर्मसिद्धिर्न भवतीति ध्वनितम् । तथाच श्रुतिः–"यत् कर्तव्यं तदनया सह " इति ॥ ४० ॥

गो० टी०–अथवेति । धर्मकामस्य तस्य कामानपेक्षिण इत्यर्थः । मया भार्यया कोऽर्थः । परमात्मनः उत्कृष्टस्वभावस्य ॥ ४२ ॥

---

१ अधर्मेतत् गो. रा. अधिकम् । २ लक्ष्मणेति गो. पाठः । ३ ममेति गो. पाठः । ४ नाथमिति गो. पाठः ।

दृश्यमाने भवेत्प्रीतिः सौहृदं नास्त्य[1]दृश्यतः । नाशयन्ति कृतघ्नास्तु न रामो नाशयिष्यति ॥ ३९ ॥
किं [2]वा मय्यगुणाः केचित्किं वा भाग्यक्षयो [3]हि मे। या [4]हि सीता वरार्हेण हीना रामेण भामिनी ॥ ४० ॥
श्रेयो मे जीवितान्मर्तुं विहीनाया महात्मना । रामादक्लिष्टचारित्राच्छूराच्छत्रुनिबर्हणात् ॥ ४१ ॥
अथवा न्यस्तशस्त्रौ तौ वने मूलफला[5]शनौ । भ्रातरौ हि नरश्रेष्ठौ [6]चरन्तौ वनगोचरौ ॥ ४२ ॥
अथवा राक्षसेन्द्रेण रावणेन दुरात्मना । छद्मना [7]घातितौ शूरौ भ्रातरौ रामलक्ष्मणौ ॥ ४३ ॥
साहमेवंविधे[8] काले मर्तुमिच्छामि [9]सर्वतः । न च मे विहितो मृत्युरस्मिन्[10]दुःखेऽतिवर्तति ॥ ४४ ॥
धन्याः खलु महात्मानो मुनयः [11]सत्यसंमताः । जितात्मानो महाभागा येषां न स्तः प्रियाप्रिये ॥ ४५ ॥

---

३९ ] ति० टी०–सर्वदा जीवन्मुक्तेनाङ्गीकार एव न कृतः स्यात्, तादृशे कृतेऽङ्गीकारे त्वेवंविधस्त्यागोऽनुचित इत्यतो दूरवासात्स्नेहनाशेनाप्रवृत्तिरित्याह—दृश्यमान इति। सौहृदं प्रीतिः । नास्त्यदृश्यतो ममादृश्यत्वान्मयि तन्नास्ति नष्टमित्यर्थः । अयमपि पक्षोऽसंगतः । ईदृशगुणवता कृतप्रीतेर्नाशनायोगादित्याह—नाशयन्तीति । कृतघ्ना एव प्रपन्नजनस्नेहमसंनिकर्षान्नाशयन्ति, नैवं रामोऽकृतघ्नत्वात्स्वस्य प्रकृतित्वेन प्राकृतप्रपञ्चभोक्तृत्वेन च तस्याकृतघ्नतौचित्यं वनवासादौ सङ्गदानाच्च ॥ ३९ ॥

रा० टी०–ननु बहुकालतस्त्वददर्शनात् रामस्य त्वयि प्रीतिर्नास्तीत्यत आह—दृश्यमान इति । कृतघ्नाः अदृश्यतः अदृश्यमानस्य सौहृदं नाशयन्ति अतः दृश्यमाने एव प्रीतिः कृतघ्नमैत्री भवेत् रामस्तु सौहृदं न नाशयिष्यति ॥ ४१ ॥

गो० टी०–दृश्यमान इति । सौहृदं नास्त्यपश्यतः अदृश्यमाने प्रीतिर्न भवति । तस्माददृश्यायां मयि रामस्य किं प्रीतिर्नासीदित्यर्थः । एवमाशङ्कितं प्रतिषेधति–नाशयन्तीति । कृतघ्नाः प्रथममुत्पन्नां प्रीतिं नाशयन्ति । न तु रामो नाशयिष्यति मयि प्रीतिमिति शेषः ॥ ४२ ॥

४०--४१ ] ति० टी०–अतः पक्षान्तरम्—किं वेति । मयि तदुपेक्षाहेतवः केचनागुणा दोषाः स्युः अयमपि पक्षो न युक्तः स्वापरिज्ञातस्वापचाराभावात् तस्मात्प्राग्भवीयदुष्कर्मजो भाग्यक्षय एव हेतुरित्याह—किं वेति । अतोऽक्लिष्टचारित्रादिगुणाद्रामाद्याऽहं त्राणार्हा सीताख्या भामिनी, एतावत्पर्यन्तं सा हि यत इदानीं वरार्हेणोत्तमवस्तुयोग्येन रामेण हीनास्मि, अतस्तस्या मम तेन महात्मना हीनाया मर्तुं श्रेयो मरणं ज्यायः ॥ ४० ॥ ४१ ॥

रा० टी०–आशङ्कान्तरमाह–किमिति । या सीता अहं रामेण हीना तस्यां मयि केचित् अगुणाः दोषाः किं वा भाग्यक्षयः ॥ ४२ ॥

गो० टी०–किंन्विति । न गुणाः दुष्कृतानि ॥ ४४ ॥

रा० टी०–श्रेय इति । महात्मनः रामात् विहीनायाः मे जीवितात् मर्तुं प्रयतनमेव श्रेयः ॥ ४३ ॥

गो० टी०–श्रेय इति । मर्तुमिति भावार्थे तुमुन् मरणमित्यर्थः । महात्मनः रामाद्विहीनायाः महात्मना रामेण हीनायाः । तृतीयार्थे पञ्चमी ॥ ४५ ॥

४२ ] ति० टी०–भाग्यक्षयनिश्चयस्य कर्तुमशक्यत्वात्पक्षान्तरम्—अथ वेति । शस्त्रग्रहणमूलत्वात्सर्वथाऽनर्थस्य हिंसारहिते तपस्येव यावज्जीवं वर्तितव्यमिति धिया न्यस्तशस्त्रौ जातौ ॥ ४२ ॥

रा० टी०–अथवेति । अथवा न्यस्तशस्त्रौ त्यक्तशस्त्रास्त्रौ सन्तौ भ्रातरौ रामलक्ष्मणौ वनगोचरौ अभवतामिति शेषः ४४

गो० टी०–अथवेति । न्यस्तशस्त्रौ संवृत्तौ किमिति संबन्धः ॥ ४६ ॥

४३ ] ति० टी०–इदमप्यसंभावितं रक्षोभिः कृतवैरेण क्षत्रियेण तत्त्यागायोगादतः पक्षान्तरम्—अथवेति । छद्म वञ्चना सा रक्षसां प्रसिद्धैव ॥ ४३ ॥

रा० टी०–शङ्कान्तरमाह—अथवेति । अथवा रावणेन छद्मना कापट्येन शूरौ घातितौ ॥ ४५ ॥

गो० टी०–अथवेति । सादितौ हतौ ॥ ४७ ॥

४४ ] ति० टी०–अतिवर्तत्यतिशयेन वर्तमाने ॥ ४४ ॥

रा० टी०–सेति । सा रामवियुक्ताऽहम् अकाले प्रक्षेपाभाववति अस्मिन् दुःखे अतिवर्तति अत्यन्तं वर्तमाने सति सर्वतः सर्वथा मर्तुमिच्छामि परं तु मे मृत्युर्न विहितः ॥४६॥

गो० टी०–साहमिति । वर्तति वर्तमाने ॥ ४८ ॥

४५ ] ति० टी०–अथ तस्या दुःखनाशकारणं विवेकज्ञानमेवेत्याह—धन्या इति । सत्यं ब्रह्मसंमतमात्मत्वेन येषां ते अनेन संसारतरणसामर्थ्यं दर्शितम्, अत एव जितात्मनो जितान्तःकरणाः, अत एव महात्मानः प्राप्तमहात्मैक्याः, अत एव महाभागाः पूर्वजन्माद्यर्जितनिष्कामधर्मरूपमहाभाग्यवन्तः मुनयो ध्यानशीलास्ते धन्याः । तत्र हेतुः—येषां कर्मजन्ये प्रियाप्रिये न स्तः ॥ ४५ ॥

रा० टी०–धन्या इति । येषां प्रियाप्रिये न स्तः ते सत्यसंमताः ब्रह्ममात्रनिष्ठाः मुनयो धन्याः ॥ ४७ ॥

---

१ अपश्यत इति गो. पाठः । २ नु मे नेति गो. पाठः । ३ ममेति गो. पाठः । ४ अहं सीदामि रामेण हीना मुख्येनेति गो. पाठः । ५ अशिनाविति रा. पाठः । ६ संहृताविति गो. पाठः । ७ सादिताविति गो. पाठः । ८ गते इति गो. पाठः । ९ सर्वथेति गो. पाठः । १० दुःखेऽपीति गो. पाठः । ११ त्यक्तकिल्बिषा इति गो. पाठः ।

प्रियान्न संभवेद्दुःखमप्रियादधिकं भवेत् । ताभ्यां हि ते वियुज्यन्ते नमस्तेषां महात्मनाम् ॥ ४६ ॥
साऽहं त्यक्ता [1]प्रियेणैव रामेण विदितात्मना । प्राणांस्त्यक्ष्यामि पापस्य रावणस्य गता वशम् ॥ ४७ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये सुन्दरकाण्डे षड्विंशः सर्गः ॥ २६ ॥

## सप्तविंशः सर्गः ।

स्वापोद्बुद्धा त्रिजटा सीतां तर्जयन्तीः राक्षसीः प्रति भयाय रामाभ्युदयारावणापकर्षसूचकः स्वप्नो दृष्टोऽतो निवर्तध्वं सीतातर्जनादिति ता अपसारयति । अथ ताभिः प्रार्थिता सा स्वप्नवृत्तं निवेद्य सीताविजयाशंसकं शुभशकुनं दर्शयति ।

इत्युक्ताः सीतया घोरं राक्षस्यः क्रोधमूर्च्छिताः । काश्चिज्जग्मुस्तदाख्यातुं रावणस्य दुरात्मनः ॥ १ ॥
ततः सीतामुपागम्य राक्षस्यो [2]भीमदर्शनाः । पुनः परुषमेकार्थमनर्थार्थमथाब्रुवन् ॥ २ ॥
अद्येदानीं तवानार्ये सीते पापविनिश्चये । राक्षस्यो भक्षयिष्यन्ति मांसमेतद्यथासुखम् ॥ ३ ॥

गो० टी०—धन्या इति । महात्मानः महाधैर्याः त्यक्तकिल्बिषाः त्यक्तपापाः जितात्मानः जितान्तःकरणाः महाभागाः महाभाग्याः ॥ ४९ ॥

४६ ] ति० टी०—प्रियाप्रियाभावं विवृणोति—प्रियादिति । येषां मुक्तानां प्रियाद्वियुज्यमानाद्दुःखं न संभवेत् । अप्रियात्संयुज्यमानादधिकं प्रियवियोगादप्यधिकं दुःखं न भवेत् । 'अप्रियादधिकं भयम्' इति पाठे संयुज्यमानादप्रियादधिकं महद्भयमपि न भवेदित्यर्थः । ताभ्यां प्रियवियोगजदुःखाप्रियसंयोगजदुःखभयान्यतराभ्यां ये वियुज्यन्ते तेषां महात्मनां मामिका नमस्क्रियाऽस्तु । तेषां नमस्कारेण तत्तुल्यता ममापि स्यादित्याशयः ॥ ४६ ॥

रा० टी०—ननु प्रियाप्रियाभावेन किमित्यत आह—प्रियादिति । प्रियात् अधिकं दुःखम् अवश्यं भाविवियोगे सति क्लेशः न संभवेत् अप्रियात् अवश्यंभाविसंयोगे सत्यपि नभवेत् प्रियाप्रिययोरभावादिति शेषः, अतः ताभ्यां प्रियाप्रियाभ्यां ये वियुज्यन्ते तेषां महात्मनां तेभ्यो महात्मभ्यो नमः ॥ ४८ ॥

गो० टी०—प्रियादिति । प्रियान्न संभवेद्दुःखं किंतु सुखमेव भवेदित्यर्थः । प्रियात् अनुकूलवस्तुनः अप्रियात् प्रतिकूलवस्तुनः । अधिकं भयं अधिकं दुःखम् । ताभ्यां प्रियाप्रियाभ्याम् । नमस्तेषां त एव सर्वोत्तमा इत्यर्थः ॥ ५० ॥

४७ ] ति० टी०—रामेण त्यक्तान्विष्य न मोचिता प्रियेणैव संतोषेणैव प्राणांस्त्यक्ष्यामि । रावणे त्यक्तायाः प्राणत्यागस्यैव परमप्रियत्वात् ॥ ४७ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये सुन्दरकाण्डे षड्विंशः सर्गः ॥ २६ ॥

रा० टी०—सेति । प्रियेण रामेण त्यक्ता अत एव रावणस्य वशं गता प्राप्ताऽहं प्राणान् त्यक्ष्यामि त्यक्तुमिच्छामि ॥ ४९ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ सुन्दरकाण्डे षड्विंशः सर्गः ॥ २६ ॥

गो० टी०—साऽहमिति । साऽहं तद्विलक्षणाहम् केवलप्रियपरेत्यर्थः । प्रियेण त्यक्ता अप्रियं प्राप्ता । प्राणांस्त्यक्ष्यामीत्यर्थः ॥ ५१ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने षड्विंशः सर्गः ॥ २६ ॥

१ ] ति० टी०—इत्युक्ता मरिष्य इत्युक्ताः । तदाख्यातुं मरणनिश्चयं कथयितुम् ॥ १ ॥

रा० टी०—सीताविलापानन्तरकालिकं राक्षसीनां वृत्तान्तमाह—इतीत्यादिभिः । इति अनेन प्रकारेण सीतया घोरमुक्ताः अत एव क्रोधमूर्छिताः काश्चिद्राक्षस्यः तत्सीतोक्तमाख्यातुं कथयितुं रावणस्य समीपं जग्मुः ॥ १ ॥

गो० टी०—इत्युक्ता इत्यादि । तत् मरणाध्यवसायम् ॥ १ ॥

२ ] ति० टी०—एकार्थम् वाक्यमिति शेषः । अनर्थार्थं स्वेषामनर्थमात्रप्रयोजनकम् ॥ २ ॥

रा० टी०—तत इति । ततः बह्वीनां राक्षसीनां रावणसमीपगमनानन्तरं भीमदर्शनाः राक्षस्यः एकार्थं समानतात्पर्यकं परुषं वाक्यम् अनर्थार्थं स्वानर्थनिमित्ताय अब्रुवन् ॥ २ ॥

गो० टी०—तत इत्यादि । एकार्थं पूर्वोक्तवचनैरेकाभिधेयम् । अनर्थार्थम् अनर्थफलकम् । एकाक्ष्यादयः पूर्वोक्तार्थमेव परुषवचनं पुनरब्रुवन्नित्यर्थः । अद्य अस्मिन् दिने । इदानीम् अस्मिन् क्षणे । भक्षयिष्यन्तीत्यब्रुवन्निति पूर्वेण संबन्धः ॥ २ ॥ ३ ॥

३ ] ति० टी०—तदेव वाक्यमाह—अद्येदानीमिति । अद्य दिने इदानीमस्मिन्क्षणे पापनिश्चये कृतमरणनिश्चयेऽस्माकं रक्षिकास्विदानीं तदसंभवान्मासं मासमात्रम् । इदमवधिकालोपलक्षणम् । भयातिशयार्थमेवमुक्तिः । यथासुखं स्थितायास्तदनन्तरं रावणाज्ञयैतत्तव शरीरं राक्षस्यो भक्षयिष्यन्ति ॥ ३ ॥

रा० टी०—तद्वचनाकारमाह—अद्येति । अद्य अस्मिन् दिने इदानीं अस्मिन् क्षणे पापः पापकारणीभूतहिंसासंपादकः यस्तत्र विनिश्चयस्तस्मिन्सति एतत्तव मांसं राक्षस्यो भक्षयिष्यन्ति ॥ ३ ॥

१ प्रियाहीणेति गो. पाठः । २ घोरा इति गो. पाठः । ३ घोरेति गो. पाठः । ४ एवार्थमिति रा. पाठः ।

सीतां ताभिरनार्याभिर्दृष्ट्वा संतर्जितां तदा । राक्षसी त्रिजटा वृद्धा [1]प्रबुद्धा वाक्यमब्रवीत् ॥ ४ ॥
आत्मानं खादतानार्या न सीतां भक्षयिष्यथ । जनकस्य सुतामिष्टां स्नुषां दशरथस्य च ॥ ५ ॥
स्वप्नो ह्यद्य मया दृष्टो दारुणो रोमहर्षणः । राक्षसानामभावाय भर्तुरस्या भवाय च ॥ ६ ॥
एवमुक्तास्त्रिजटया राक्षस्यः क्रोधमूर्च्छिताः । सर्वा एवाब्रुवन्भीतास्त्रिजटां तामिदं वचः ॥ ७ ॥
कथयस्व त्वया दृष्टः स्वप्नोऽयं कीदृशो निशि । तासां श्रुत्वा तु वचनं राक्षसीनां [2]मुखोद्गतम् ॥ ८ ॥
उवाच वचनं काले त्रिजटा स्वप्नसंश्रितम् । गजदन्तमयीं दिव्यां शिबिकामन्तरिक्षगाम् ॥ ९ ॥
युक्तां [3]वाजिसहस्रेण स्वयमास्थाय राघवः । शुक्लमाल्याम्बरधरो लक्ष्मणेन [4]समागतः ॥ १० ॥
स्वप्ने चाद्य मया दृष्टा सीता शुक्लाम्बरावृता । सागरेण परिक्षिप्तं [5]श्वेतपर्वतमास्थिता ॥ ११ ॥
रामेण संगता सीता भास्करेण प्रभा यथा । राघवश्च पुनर्दृष्टश्चतुर्दन्तं महागजम् ॥ १२ ॥

---

४ ] ति० टी०—अनार्याभिः क्रूराभिः । वृद्धा धर्मज्ञानयोगवयोभिर्वृद्धा । प्रबुद्धेत्यनेन तावत्पर्यन्तं सुप्तवतीति गम्यते ॥ ४ ॥

रा० टी०—सीतामिति । अनार्याभिः क्षुद्राभिः ताभिः राक्षसीभिः संतर्जितां सीतां दृष्ट्वा प्रबुद्धा त्यक्तस्वापा त्रिजटा राक्षसी अब्रवीत् ॥ ४ ॥

गो० टी०—सीतामित्यादि । त्रिजटा विभीषणपुत्री । शयानेत्यनेन स्वप्नवृत्तान्तकथनत्वरोच्यते ॥ ४–६ ॥

५ ] ति० टी०—आत्मानं स्वशरीरं भक्षयिष्यथेति । अवधिकालात्परमपीति शेषः ॥ ५ ॥

रा० टी०—तद्वचनाकारमाह—आत्मानमिति । हे आनार्याः ! आत्मानं स्वशरीरं खादत जनकस्य सुतां सीतां न भक्षयिष्यथ ॥ ५ ॥

६ ] ति० टी०—कुतोऽवगतमेतत्तत्राह—स्वप्न इति । दारुणः क्रूरः राक्षसानामभावाय दृष्टः तथा रोमहर्षणोऽत्यद्भुतो रोमाञ्चकरः । अन्योऽस्या भर्तुर्भवाय दृष्ट इत्यर्थः ॥ ६ ॥

रा० टी०—तत्र हेतुमाह—स्वप्न इति । अद्य अस्मिन् रात्रिशेषे राक्षसानामभावाय विनाशाय अस्याः सीतायाः भर्तुः भवाय अभ्युदयाय च दारुणः स्वप्नो मया दृष्टः ॥ ६ ॥

७–८ ] ति० टी०—पूर्वं क्रोधमूर्च्छिताः पश्चात्त्रिजटावचनाद्भीता इत्यर्थः ॥ ७ ॥ ८ ॥

रा० टी०—एवमिति । त्रिजटया एवमुक्ता अत एव भीता राक्षस्यः त्रिजटामिदमब्रुवन् ॥ ७ ॥

रा० टी०—तद्वचनाकारमाह—कथयस्वेति । त्वया दृष्टः स्वप्नः कीदृशः त्वं कथय स्वस्वप्नमित्यर्थतो लब्धम् । अर्धं पृथक् । राक्षसीनां मुखोद्गतं वचनं श्रुत्वा स्वप्नसंश्रितं स्वापबोधकं वचनं काले प्रातःकाले त्रिजटोवाच । अर्धद्वयमेकान्वयि ॥ ८ ॥

गो० टी०—एवमुक्ता इत्यादि । निशीत्यनन्तरमितिकरणं द्रष्टव्यम् ॥ ७ ॥

गो० टी०—तासामिति । काले उषःकाले यः स्वप्नः तत्संश्रितम् ॥ ८ ॥

९–१० ] ति० टी०—काले प्रातःकाले । स्वप्नसंश्रितं प्रातःकालदृष्टस्वप्नदृष्टार्थविषयकम् अनेन स्वप्नस्य शीघ्रफलदत्वं सूचितम् । तत्र सीतायाः पीडानिवृत्तये तदभ्युदयसूचकं स्वप्नं प्रथममाह—गजदन्तेति । शिबिकां वाजिसहस्रयुक्तत्वविशेषणाद्विमानमित्यर्थः । तामास्थाय गच्छन्मया दृष्टः । समागतः सहितः ॥ ९ ॥ १० ॥

रा० टी०—तद्वचनाकारमाह—गजेत्यादिभिः । गजदन्तमयीं वाजिसहस्रेण युक्ताम् अन्तरिक्षगतां शिबिकाम् आस्थाय लक्ष्मणेन सह शुक्लमाल्याम्बरधरो राघवः स्वयं समागतः इति स्वप्ने दृष्टमिति शेषः । सार्धश्लोक एकान्वयी ॥ ९ ॥ १० ॥

गो० टी०—गजदन्तमयीमिति । आगतः लङ्कामिति शेषः ॥ ९–११ ॥

११ ] ति० टी०—सागरेण क्षीरसागरेण । परिक्षिप्तमावृतम् ॥ ११ ॥

रा० टी०—स्वप्न इति । शुक्लाम्बरावृता सागरेण क्षीराब्धिना परिक्षिप्तं परिवेष्टितं श्वेतपर्वतम् आस्थिता भास्करेण प्रभा इव रामेण सङ्गता सीता स्वर्गगङ्गासदृशी सीता वैदेही स्वप्ने मया दृष्टा । सार्धश्लोक एकान्वयी । एकः सीताशब्दः आचारक्विबन्तप्रकृतिककर्तृक्विबन्तः । 'सीता लाङ्गलपद्धतिः । वैदेहीस्वर्गगङ्गासु' इति मेदिनी ॥ ११ ॥

१२ ] ति० टी०—संगता तत्रैव पर्वत इति शेषः । एतेन लङ्कायामेव रामस्य सीतादर्शनं सूचितम् । स्वप्नान्तरमाह—राघवश्चेति । पुनः स्वप्नान्तर इत्यर्थः ॥ १२ ॥

रा० टी०—स्वप्नान्तरमाह—राघव इति । शैलसंकाशं श्वेतपर्वतसदृशं चतुर्दन्तं दन्तचतुष्टयविशिष्टं महागजमारूढः सहलक्ष्मणो राघवो यश्चकास स पुनर्दृष्टः । अर्धद्वयमेकान्वयि ॥ १२ ॥

गो० टी०—राघवश्चेति । महागजमारूढ इति शिबिकात इति शेषः । तथोक्तं स्वप्नाध्याये—'आरोहणं गोवृषकुञ्जराणां प्रासादशैलाग्रवनस्पतीनाम् । विष्ठानुलेपो रुदितं मृतं च

---

१ शयानेति गो. पाठः । २ मुखान्मुतामिति गो. पाठः । ३ हस्तेति गो. पाठः । ४ सहेति गो. पाठः । ५ श्वेतमिति गो. पाठः ।

आरूढः शैलसंकाशं चकास सहलक्ष्मणः । ततस्तुं सूर्यसंकाशौ दीप्यमानौ स्वतेजसा ॥ १३ ॥
शुक्लमाल्याम्बरधरौ जानकीं पर्युपस्थितौ । ततस्तस्य नगस्याग्रे ह्याकाशस्थस्य दन्तिनः ॥ १४ ॥
भर्त्रा परिगृहीतस्य जानकी स्कन्धमाश्रिता । भर्तुरङ्कात्समुत्पत्य ततः कमललोचना ॥
चन्द्रसूर्यौ मया दृष्टौ पाणिभ्यां परिमार्जती ॥ १५ ॥
ततस्ताभ्यां कुमाराभ्यामास्थितः स गजोत्तमः । सीतया च विशालाक्ष्या लङ्कायाः उपरिस्थितः ॥
पाण्डुरर्षभयुक्तेन रथेनाष्टयुजा स्वयम् । [ इहोपयातः काकुत्स्थः सीतया सह भार्यया ]॥ १६ ॥
शुक्लमाल्याम्बरधरो लक्ष्मणेन सहागतः । ततोऽन्यत्र मया दृष्टो रामः सत्यपराक्रमः ॥ १७ ॥
लक्ष्मणेन सह भ्रात्रा सीतया सह वीर्यवान् । आरुह्य पुष्पकं दिव्यं विमानं सूर्यसंनिभम् ॥ १८ ॥
उत्तरां दिशमालोच्य प्रस्थितः पुरुषोत्तमः । [ एवं स्वप्ने मया दृष्टो रामो विष्णुपराक्रमः ॥
लक्ष्मणेन सह भ्रात्रा सीतया सह भार्यया । नहि रामो महातेजाः शक्यो जेतुं सुरासुरैः ॥
राक्षसैर्वाऽपि चान्यैर्वा स्वर्गः पापजनैरिव । ] रावणश्च मया दृष्टो मुण्डस्तैलसमुक्षितः ॥ १९ ॥

---

स्वप्नेष्वगम्यागमनं च धन्यम्' इति । चचार सीतां प्रतीति शेषः ॥ १२ ॥ १३ ॥

१३ ] ति० टी०—चकास शुशुभे ॥ १३ ॥

रा० टी०—तत इति । ततोऽनन्तरं स्वतेजसा दीप्यमानौ अत एव सूर्यसंकाशौ सूर्यसदृशौ जानकीं पर्युपस्थितौ तौ रामलक्ष्मणौ शुक्लमाल्याम्बरधरौ दृष्टाविति शेषः ॥ १३ ॥

१४ ] ति० टी०—जानकीं पर्युपस्थितौ जानकीसमीपं प्राप्तौ । नगस्य श्वेतपर्वतस्य । दन्तिनः स्कन्धमाश्रितौ । तदुक्तम्—'आरोहणं गोवृषकुञ्जराणां प्रासादशैलाग्रवनस्पतीनाम् । ध्रुवमर्थलाभदम्' इति ॥ १४ ॥

रा० टी०—तत इति । ततोऽनन्तरं तस्य श्वेतस्य नगस्य गिरेरग्रे भर्तुरङ्कात्समुत्पत्य आकाशस्थस्य भर्त्रा परिगृहीतस्य दन्तिनो गजस्य स्कन्धमाश्रिता जानकी दृष्टेति शेषः । सार्धश्लोक एकान्वयी ॥ १४ ॥ १५ ॥

गो० टी०—ततस्तस्य नगस्याग्र इति । अत्र द्वादशसहस्रं श्लोका गताः । त्रयोदशसहस्रादिमोऽयं श्लोकः गायत्र्यास्त्रयोदशमक्षरमत्र बोध्यम् ॥ १४ ॥

१५ ] ति० टी०—प्रथमं भर्तुरङ्के गत्वा ततः समुत्पत्य संकूर्य भर्त्रा परिगृहीतस्य धृतालानस्य गजस्य स्कन्धमाश्रिता। सूर्याचन्द्रमसौ पाणिभ्यां परिमार्जती । तदुक्तम्—'आदित्यमण्डलं वापि चन्द्रमण्डलमेव वा । स्वप्ने गृह्णाति हस्ताभ्यां महद्राज्यं समाप्नुयात् ।' इति ॥ १५ ॥

रा० टी०—स्वप्नान्तरमाह—चन्द्रेति । चन्द्रसूर्यौ पाणिभ्यां परिमार्जती सीता कुमाराभ्यां विशालाक्ष्या सीतया चास्थितो लङ्कायाः उपरि स्थितो गजोत्तमश्च मया दृष्टौ पुमान् स्त्रियेत्येकशेषः 'आदित्यमण्डलं वापि चन्द्रमण्डलमेव वा । स्वप्ने गृह्णाति हस्ताभ्यां महद्राज्यं समाप्नुयात्' इति स्वप्ननिर्णयः । सार्धश्लोक एकान्वयी ॥ १६ ॥

गो० टी०—भर्तुरिति । चन्द्रसूर्यौ पाणिना परिमार्जतीति । अत्र स्वप्नाध्यायवचनम्—'आदित्यमण्डलं वातु चन्द्रमण्डलमेव वा । स्वप्ने गृह्णाति हस्ताभ्यां राज्यं संप्राप्नुयान्महत् इति ॥ १५–१७ ॥

१६ ] ति० टी०—पाण्डुरर्षभेति । पाण्डुरवृषभाष्टकयुक्तेन रथेन ॥ १६ ॥

रा० टी०—स्वप्नान्तरमाह—पाण्डुरेति । पाण्डुरा ये ऋषभा वृषभाः तैर्युक्तेन अत एव अष्टयुजा अष्टानां वृषभानां युक् योगो यस्मिन् तेन रथेन लक्ष्मणेन सहागतः सत्यपराक्रमो रामः ततोऽन्यत्र समुद्रतीरे इत्यर्थः, मया दृष्टः । सार्धश्लोक एकान्वयी ॥ १७ ॥ १८ ॥

१७ ] ति० टी०—शुक्लमाल्याम्बरधरो रामो लक्ष्मणेन सहेहागत इत्यन्वयः । अन्यत्र स्वप्नान्तरे ॥ १७ ॥

गो० टी०—अयमिह स्वप्नक्रमः । शिबिकास्थितो रामो दृष्टः श्वेतपर्वतस्था सीता च ततः शिबिकाया गजमारुह्य लक्ष्मणेन सह पर्वतमभ्येत्य ततः सीतां गजस्कन्धेऽधिरोप्य लङ्कायाः उपरि स्थित्वा ताभ्यां सहाष्टर्षभयुक्तेन रथेनेहागत्य स्वं देशं प्रति ताभ्यां पुष्पकमधिरुह्यागत इति । अन्ये श्लोकाः प्रक्षिप्ताः । तेन ते न व्याख्याता इत्याहुः । लक्ष्मणेन सह भ्रात्रेति । एतत्पादस्यानन्तरं, सीतया सह वीर्यवान् ॥ आरुह्य पुष्पकं दिव्यं विमानं सूर्यसन्निभम् । उत्तरां दिशमालोक्य जगाम पुरुषोत्तमः ॥ एवं स्वप्ने मया दृष्टो रामो विष्णुपराक्रमः । लक्ष्मणेन सह भ्रात्रा सीतया सह भार्यया ॥ इति पाठक्रमः । विमाने पुष्पके स्थितः । साण्डं त्रिभुवनमित्यारभ्य रामः सत्यपराक्रम इत्यन्तो ग्रन्थः प्रक्षिप्तः प्रकृतासंगतश्च । विष्णुरेव स्वयंभूस्त्वेति प्रक्षिप्तवचनस्य विष्णुपराक्रम इत्यनेन विरोधात् ॥ १८–२१ ॥

१८ ] ति० टी०—आरुह्य पुष्पकमित्येतद्भावि स्पष्टमेव दृष्टम् ॥ १८ ॥

१९ ] ति० टी०—अत्र मध्ये 'साण्डं भुवनम्' इत्यादयो

---

१ चचारेति गो. पाठः । २ तौ नरशार्दूलाविति गो. ताविति रा. पाठः । ३ दृष्टेति गो. पाठः । ४ अर्धमेतदधिकं गो. पाठे । ५ श्लोकोऽयं गो. नास्ति । ६ आलोक्य जगामेति गो. पाठः । ७ श्लोकद्वयमेतदधिकं गो. पाठे । ८ क्षिताविति गो. पाठः ।

रक्तवासाः पिबन्मत्तः करवीरकृतस्रजः । विमानात्पुष्पकादद्य रावणः पतितः [1]क्षितौ ॥ २० ॥
कृष्यमाणः स्त्रिया मुण्डो दृष्टः कृष्णाम्बरः पुनः । रथेन खरयुक्तेन रक्तमाल्यानुलेपनः ॥ २१ ॥
पिबंस्तैलं हसन्नृत्यन्भ्रान्तचित्ताकुलेन्द्रियः । गर्दभेन ययौ शीघ्रं दक्षिणां दिशमा[2]श्रितः ॥ २२ ॥
पुनरेव मया दृष्टो रावणो राक्षसेश्वरः । पतितो [3]ऽविशिरा भूमौ गर्दभाद्भयमोहितः ॥ २३ ॥
सहसोत्थाय संभ्रान्तो भयार्तो मदविह्वलः । उन्मत्तरू[4]पो दिग्वासा दुर्वाक्यं प्रलपन्बहु ॥ २४ ॥
दुर्गन्धं दुःसहं घोरं तिमिरं नरकोपमम् । मलपङ्कं प्रविश्याशु मग्नस्तत्र स रावणः ॥ २५ ॥
[5]प्रस्थितो दक्षिणामाशां प्रविष्टोऽकर्दमं ह्रदम् । कण्ठे बद्ध्वा दशग्रीवं प्रमदा रक्तवासिनी ॥ २६ ॥
काली कर्दमलिप्ताङ्गी दिशं याम्यां प्रकर्षति । एवं तत्र मया दृष्टः कुम्भकर्णो महाबलः ॥ २७ ॥
रावणस्य सुताः सर्वे [6]मुण्डास्तैलसमुक्षिताः । वराहेण दशग्रीवः शिशुमारेण चेन्द्रजित् ॥ २८ ॥
उष्ट्रेण कुम्भकर्णश्च प्रयातो दक्षिणां दिशम् । एकस्तत्र मया दृष्टः श्वेतच्छत्रो विभीषणः ॥
[ [7]शुक्लमाल्याम्बरधरः शुक्लगन्धानुलेपनः । शङ्खदुन्दुभिनिर्घोषैर्नृत्तगीतैरलंकृतः ॥
आरुह्य शैलसंकाशं मेघस्तनितनिःस्वनम् । चतुर्दन्तं गजं दिव्यमास्ते तत्र विभीषणः ॥ ]
चतुर्भिः सचिवैः सार्धं वैहायसमुपास्थितः ॥ २९ ॥

बहवः श्लोका रामानुजसंप्रदायपुस्तकेषु दृश्यन्ते ते प्रक्षिप्ता इति कतकादयोऽन्ये च । अथ रावणानर्थसूचकः स्वप्नः—रावणश्चेति । मुण्डो मुण्डितमुण्डः ॥ १९ ॥

रा० टी०–स्वप्नान्तरमाह—लक्ष्मणेनेति । लक्ष्मणेन सीतया च सह पुरुषोत्तमो रामः दिव्यं विमानं पुष्पकमालोच्यारुह्य च उत्तरां दिशं प्रस्थितः । सार्धश्लोक एकान्वयी ॥ १९ ॥

रा० टी०–रामैश्वर्यसूचकं स्वप्नमुक्त्वा रावणविध्वंससूचकं स्वप्नमाह—रावण इत्यादिभिः । मुण्डितो मुण्डितकेशस्तैलसमुक्षितः तैलेन लिप्ताङ्गो रावणो दृष्टः । अर्धं पृथक् ॥ २० ॥

गो० टी०–रावणश्चेति । पिबन्निति । तैलसमुक्षित इत्यनेन तैलमित्युपस्थाप्यते । करवीरकृतस्रज इत्यकारान्तत्वमार्षम् । हलन्ताद्वा इत्यापो विधानात् स्रक्छब्दस्यावन्तत्वेन वा निर्वाहः ॥ २२–३० ॥

२० ] ति० टी०–पिबन्निति । तैलमिति शेषः । करवीरकृतस्रज इति विमानादित्यस्य विशेषणम् । करवीरेत्यारभ्य स्वप्नान्तरम् ॥ २० ॥

रा० टी०–स्वप्नान्तरमाह—रक्तेति । रक्तवासाः पिबन्मद्यमिति शेषः, रावणः पुष्पकाद्विमानात् क्षितौ पतितः इति दृष्टमिति शेषः ॥ २१ ॥

२१–२४] ति० टी०–रथेनेत्यादि स्वप्नान्तरम्॥२१–२४॥

रा० टी०–स्वप्नान्तरमाह—कृष्यमाण इति । खरयुक्तेन रथेनोपलक्षितः स्त्रिया कृष्यमाणः कृष्णाम्बरो दृष्टः रावण इति शेषः ॥ २२ ॥

रा० टी०–स्वप्नान्तरमाह–पिबन्निति । तैलपानादि कुर्वन् शीघ्रमाश्रितो रावणः गर्दभेन दक्षिणां दिशं ययौ ॥२३॥

रा० टी०–स्वप्नान्तरमाह–पुनरिति । भयमोहितो रावण अवाक्शिराः सन् भूमौ पतितः ॥ २४ ॥

रा० टी०–सहसेति । संभ्रान्तः उद्विग्नचित्तः उन्मत्तरूपः उन्मत्तवदाचरणः दिग्वासाः नग्न इत्यर्थः रावणः, सहसोत्थाय बहुवाक्यं प्रलपन् सन् आस्तेति शेषः ॥ २९ ॥

२५]ति०टी०–मलानि पङ्कानि च यस्मिंस्तत्तिमिरम्॥२५॥

रा० टी०–स्वप्नान्तरमाह–दुर्गन्धमिति । दुष्टो गन्धो यस्मिन् अत एव दुःसहं घोरं तीक्ष्णं तिमिरम् अन्धकाररूपं नरकोपमं यमपुरस्थनरकविशेषसदृशं नरकं प्रविश्य तत्र तस्मिन् नरके आशुमग्नः रावणो दृष्ट इति शेषः ॥ २६ ॥

२६–२८ ] ति० टी०–अकर्दमं जलकर्दमेनापि रहितम् ॥ २६–२८ ॥

रा० टी०–स्वप्नान्तरमाह–प्रस्थित इति । अकर्दमम् उपलक्षणतया कर्दमजलरहितं ह्रदं प्रविष्टः । अर्धं पृथक् । स्वप्नान्तरमाह–कण्ठे इति । रक्तवासिनी अरुणवस्त्रा काली नीलवर्णविशिष्टा कर्दमलिप्ताङ्गी प्रमदा दशग्रीवं कण्ठे बद्ध्वा याम्यां दिशं प्रकर्षति ॥ २७ ॥

रा० टी०–एवमिति । एवमनेन प्रकारेण दक्षिणामाशां दिशं प्रयातः कर्दमं कर्दममयं ह्रदं प्रविष्टः कुम्भकर्णः तत्र स्वप्ने मया दृष्टः ॥ २८ ॥

रा० टी०–रावणस्येति । मुण्डाः मुण्डितकेशाः तैलसमुक्षिताः तैलाभ्यक्ताः रावणस्य सर्वे सुताः दृष्टा इति शेषः । अर्धं पृथक् । स्वप्नान्तरमाह–वराहेणेति । वराहादिना दशग्रीवादयः दक्षिणां दिशं प्रयाताः । अर्धद्वयमेकान्वयि ॥ २९ ॥

२९ ] ति० टी०–वैहायसं खेचरत्वम् ॥ २९ ॥

१ भुवीति गो. पाठः । २ आस्थित इति गो. पाठः । ३ ऽवाक्शिरा इति गो. रा. पाठः । ४ इवेति गो. पाठः । ५ अर्धमेतत् गो. नास्ति । ६ धृष्टा इति गो. पाठः । ७ श्लोकद्वयमेतदधिकं गो. पाठे ।

समाजश्च महान्वृत्तो गीतवादित्रनिःस्वनः । पिबतां रक्तमाल्यानां रक्षसां रक्तवाससाम् ॥ ३० ॥
लङ्का चेयं पुरी रम्या सवाजिरथकुञ्जरा । सागरे पतिता दृष्टा भग्नगोपुरतोरणा ॥ ३१ ॥
[ लङ्का दृष्टा मया स्वप्ने रावणेनाभिरक्षिता । दग्धा रामस्य दूतेन वानरेण तरस्विना ॥ ]
पीत्वा तैलं प्रमत्ताश्च प्रहसन्त्यो महास्वनाः । लङ्कायां भस्मरूक्षायां सर्वा राक्षसयोषितः ॥ ३२ ॥
कुम्भकर्णादयश्चेमे सर्वे राक्षसपुंगवाः । रक्तं निवसनं गृह्य प्रविष्टा गोमयह्रदम् ॥ ३३ ॥
अपगच्छत पश्यध्वं सीतामाप्नोति राघवः । घातयेत्परमामर्षी युष्मान्सार्धं हि राक्षसैः ॥ ३४ ॥
प्रियां बहुमतां भार्यां वनवासमनुव्रताम् । भर्त्सितां तर्जितां वापि नानुमंस्यति राघवः ॥ ३५ ॥
तदलं क्रूरवाक्यैश्च सान्त्वमेवाभिधीयताम् । अभियाचाम वैदेहीमेतद्धि मम रोचते ॥ ३६ ॥
यस्या ह्येवंविधः स्वप्नो दुःखितायाः प्रदृश्यते । सा दुःखैर्बहुभिर्मुक्ता प्रियं प्राप्नोत्यनुत्तमम् ॥ ३७ ॥
भर्त्सितामपि याचध्वं राक्षस्यः किंविवक्षया । राघवाद्धि भयं घोरं राक्षसानामुपस्थितम् ॥ ३८ ॥

रा० टी०–विभीषणस्य शुभसूचकं स्वप्नमाह–एक इति । चतुर्भिः सचिवैः सार्धं वैहायसमाकाशमुपस्थितः श्वेतच्छत्रः एको विभीषणो मया दृष्टः ॥ ३० ॥

गो० टी०–एवं रावणविनाशसूचकमुक्त्वा विभीषणस्य राज्यप्राप्तिसूचकमाह—एकस्तत्र मया दृष्टः श्वेतच्छत्र इत्यादिना । वैहायसं विमानम् ॥ ३१–३८ ॥

३०–३१ ] ति० टी०–एतदग्रे श्लोकद्वयं प्रक्षिप्तमिति कतकः । गीतवादित्रनिःस्वन इति बहुव्रीहिः । अयमपि विभीषणविषयो भाव्यर्थः स्पष्टमनुभूतः । पिबतां तैलादि पिबतां रक्षसां वासभूता लङ्का सागरे पतितेत्यन्वयः ॥ ३० ॥ ३१ ॥

रा० टी०–विभीषणातिरिक्तसर्वराक्षसानामनिष्टसूचकं स्वप्नमाह–समाज इति । गीतवादित्रयोर्निःस्वनो यस्मिन् सः रक्तमाल्यानां रक्षसां महान् समाजः वृत्तः प्रवृत्तः ॥ ३१ ॥

३२ ] ति० टी०–भस्मरूक्षायां भस्मना रूक्षायाम् ॥३२॥

रा० टी०–लङ्केति । इयं लङ्का भग्नगोपुरतोरणा सती सागरे पतिता ॥ ३२ ॥

रा० टी०–पीत्वेति । सर्वा राक्षसयोषितः भस्मरूक्षायां भस्मना रूक्षत्वविशिष्टायां लङ्कायां तैलं पीत्वा प्रमत्ताः आसन्निति शेषः ॥ ३३ ॥

३३ ] ति० टी०–निवसनं न्यग्भूतम् कुत्सितं वस्त्रमित्यर्थः ॥ ३३ ॥

रा० टी०–स्वप्नान्तरमाह–कुम्भेति । सर्वे कुम्भकर्णादयः रक्तं निवसनं कुत्सितवस्त्रमित्यर्थः, गृह्य गृहीत्वा गोमये ह्रदे प्रविष्टाः ॥ ३४ ॥

३४ ] ति० टी०–यदेवम्, अतोऽपगच्छत तत्क्लेशदानं त्यक्त्वान्यतोऽपसरत । राघवश्च सीतामाप्नोत्येव पश्यध्वम् । अनपगमे बाधकमाह—घातयेदिति । युष्मान्सीताक्लेशदात्रीः ॥ ३४ ॥

रा० टी०–स्वप्नमुक्त्वा राक्षसीनां कर्तव्यमाह–अपेति । अपगच्छत सीताभर्त्सनात् निवर्तध्वम् । तत्र हेतुमाह–राघवः सीतामाप्नोति इति पश्यध्वं पश्यत जानीत । ननु किं तेनेत्यत आह–परमामर्षी राघवः राक्षसैः सार्धं युष्मान् सीताभर्त्सनकर्त्रीः घातयेत् ॥ ३५ ॥

गो० टी०–अपगच्छतेति । अपगच्छत अपसरत । नश्यध्वम् अदर्शनं प्राप्नुत आत्मनेपदमार्षम् । सीतामाप सीतामचिरेणाप्स्यतीत्यर्थः । सर्वैः राक्षसैः सार्धम् घातयेत् व इति सिद्धम् । अपगच्छत नश्यध्वमित्युक्तेः रावणमित्यध्याहारो वा ॥ ३९ ॥

३५–३७ ] ति० टी०–भर्त्सितां युष्मत्कृतभर्त्सनादिमतीम् । नानुमंस्यति नानुमंस्यते न क्षमिष्यते, अतस्तत्कर्त्रीर्वो घातयेदिति भावः ॥ ३५–३७ ॥

रा० टी०–प्रियामिति । वनवासमनुव्रतां भर्त्सितां तर्जितां भार्यां राघवो नानुमंस्यति सहिष्यते ॥ ३६ ॥

रा० टी०–तदिति । तदुक्तहेतोः क्रूरवाक्यैरलं सान्त्वं सान्त्वनवचनमेव अभिधीयतां वैदेहीमभियाचाम प्रार्थयाम एतदेव मम रोचते ॥ ३७ ॥

रा० टी०–स्वस्वप्नफलमाह–यस्या इति । यस्याः दुःखितायाः एवंविधः स्वप्नो दृश्यते सा बहुभिर्दुःखैर्मुक्ता सती अनुत्तमं प्रियं प्राप्नोति ॥ ३८ ॥

गो० टी०–प्रियामिति । नानुमंस्यति न सहिष्यत इत्यर्थः ॥ ४० ॥

गो० टी०–तदलमिति । अभियाचाम । अभयमिति शेषः ॥ ४१ ॥ ४२ ॥

३८ ] ति० टी०–हे राक्षस्यः किं विवक्षया कुत्सितभर्त्सनादिवचनेच्छया अलमिति शेषः । तत्र हेतुः—राघवादिति ॥ ३८ ॥

१ मया दृष्ट इति गो. पाठः । २ श्लोकोऽयमधिकः गो. पाठे । ३ नृत्ता इति गो. पाठः । ४ प्रविष्टा राक्षसस्त्रिय इति गो. पाठः । ५ ह्रदे इति गो. पाठः । ६ नश्यध्वमिति गो. पाठः । ७ आप स इति गो. पाठः । ८ सर्वैरिति गो. पाठः । ९ व इति गो. पाठः ।

प्रणिपातप्रसन्ना हि मैथिली जनकात्मजा । अलमेषा परित्रातुं राक्षस्यो महतो भयात् ॥ ३९ ॥
अपि चास्या विशालाक्ष्या न किंचिदुपलक्षये । विरूपमपि चाङ्गेषु न सूक्ष्ममपि लक्षणम् ॥ ४० ॥
छायावैगुण्यमात्रं तु शङ्के दुःखमुपस्थितम् । अदुःखार्हामिमां देवीं वैहायसमुपस्थिताम् ॥ ४१ ॥
अर्थसिद्धिं तु वैदेह्याः पश्याम्यहमुपस्थिताम् । राक्षसेन्द्रविनाशं च विजयं राघवस्य च ॥ ४२ ॥
निमित्तभूतमेतत्तु श्रोतुमस्या महत्प्रियम् । दृश्यते च स्फुरच्चक्षुः पद्मपत्रमिवायतम् ॥ ४३ ॥
ईषच्च हृषितो वास्या दक्षिणाया ह्यदक्षिणः । अकस्मादेव वैदेह्या बाहुरेकः प्रकम्पते ॥ ४४ ॥
करेणुहस्तप्रतिमः [1]सव्यश्चोरुरनुत्तमः । [2]वेपन्कथयतीवास्या राघवं पुरतः स्थितम् ॥ ४५ ॥

---

रा० टी०–भर्त्सितामिति । भर्त्सितामपि सीतां याचध्वं भर्त्सनजनितापराधं क्षमापयध्वं राक्षसानां राघवात् घोरं भयमुपस्थितम् अतः विवक्षया बहुवक्तुमिच्छया किम् एतेन सीताप्रसादनं कर्तव्यमेवेति सूचितम् ॥ ३९ ॥

गो० टी०–भर्त्सितामिति । किं विवक्षया अस्माभिस्तदा भर्त्सिता कथं प्रसन्ना भविष्यतीति वक्तुमिच्छया किम् । शङ्का न कर्तव्येत्यर्थः ॥ ४३ ॥

३९ ] ति० टी०–नन्वेवं क्लेशिता कथमस्माकं प्रसन्ना स्यात्तत्राह—प्रणिपातेति ॥ ३९ ॥

रा० टी०–प्रसादनफलमाह–प्रणिपातेति । हे राक्षस्यः ! प्रणिपातप्रसन्ना मैथिली भयात्त्रातुमलं समर्था ॥ ४० ॥

गो० टी०–कुत इत्यत आह–प्रणिपातप्रसन्ना हीति ४४॥

४० ] ति० टी०–सीताया अभ्युदयसूचकं प्रत्यक्षनिमित्तमपि दर्शयति—अपि चेति । द्वितीयमपिचेति पादपूरणे । विरूपं लक्षणं सूक्ष्ममपि किंचिन्नोपलक्षय इत्यर्थः ॥ ४० ॥

रा० टी०–सीताभ्युदयसूचकं शरीरलक्षणमाह–अपीति । अस्याः सीतायाः अङ्गेषु विरूपं निषिद्धरूपं रूपवैपरीत्यमित्यर्थः, नोपलक्षये । किंच सुसूक्ष्ममपि किंचित् लक्षणं आपत्तिस्थिरीकारकचिह्नं नोपलक्षये पश्यामि ॥ ४१ ॥

गो० टी०–स्वप्नदर्शनकथनेन सीतायाः शोभनं भावीत्यभिधाय शरीरलक्षणप्रदर्शनेनापि शुभं भावीत्याह—अपि चेति। लक्षणं दुःखप्राप्तिहेतुभूतं रेखोपरेखादिकम् ॥ ४९ ॥

४१ ] ति० टी०–किं तु स्नानानुलेपनाद्यभावमूलकशोभावैगुण्यमात्रात्मकं दुःखमुपस्थितमित्युत्प्रेक्षते, न तु मुखवैवर्ण्यदक्षिणाक्षिस्पन्दादिदुर्निमित्तलेशोऽपीत्यर्थः । वैहायसमुपस्थितां स्वप्ने तथा दृष्टाम् ॥ ४१ ॥

रा० टी०–छायेति । वैहायसम् उपस्थितां स्वप्ने आकाशस्थात्वेन दृष्टाम् अदुःखार्हां दुःखायोग्याम् इमां देवीं सीताम् उपस्थितं दुःखं छायावैगुण्यमात्रं राहुच्छायाकृतवैगुण्यसदृशं यथा राहुकर्तृकचन्द्रग्रासः प्रातिभासिक एव तथेदं दुःखमपीत्यर्थः ॥ ४२ ॥

गो० टी०–तर्हि कुतस्तादृशदुःखानुभव इत्यत्राह—छायेति । छायावैगुण्यामात्रम् उपलक्षय इत्यनुपज्यते । वैहायसं विमानम् उपस्थितां प्राप्ताम् दिव्यभोगार्हामिति यावत् । अन्वयस्तु छायावैगुण्यमात्रं तूपलक्षये अतः अदुःखार्हां दिव्यभोगार्हामिमां दुःखम् उपस्थितमिति शङ्क इति । अत्र छायावैगुण्यं नाम कान्तिवैकल्यम् 'छाया त्वनातपे कान्तौ' इत्यमरः । यद्वा छायात्राऽनातपः तद्वैगुण्यं तस्य विषमत्वम् सर्वलक्षणलक्षिताया अपि छायावैगुण्यमेतावद्दुःखकरमासीदिति भावः ॥ ४६ ॥ ४७ ॥

४२ ] ति० टी०–अत एवास्या अर्थसिद्धिमिष्टसिद्धिमुपस्थितां पश्यामि रावणनाशं रामविजयं च पश्यामि ॥४२॥

रा० टी०–अर्थेति । राक्षसेन्द्रविनाशं राघवस्य विजयं च अत एव उपस्थितां वैदेह्याः अर्थसिद्धिं च अहं पश्यामि ४३

४३ ] ति० टी०–अपि चास्या महत्प्रियं श्रोतुं निमित्तभूतं मत्स्वप्नवत्सूचकमेतत्स्फुरच्चक्षुश्च दृश्यते । वाममिति शेषः ॥ ४३ ॥

रा० टी०–निमित्तेति । अस्याः सीतायाः महत्प्रियं श्रोतुं निमित्तभूतं पद्मपत्रमिवायतं स्फुरच्चक्षुश्च दृश्यते ॥ ४४ ॥

गो० टी०–इदानीं रामवार्ताश्रवणसूचकमाह—निमित्तभूतमिति । चक्षुरिति । अदक्षिणमित्येतदत्राप्यनुपज्यते । हृषितो वा हृष्ट इव पुलकित इव । पद्मपत्रमित्यनेन रोगादिदृष्टहेत्वन्तरराहित्यमुक्तम् । अकस्मात् दृष्टहेत्वन्तरं विना ॥४८॥५०॥

४४ ] ति० टी०–हृषितः पुलकितः । वेति वाक्यालंकारे । अदक्षिणो वामः ॥ ४४ ॥

रा० टी०–ईषदिति । दक्षिणायाः अतिनिपुणायाः अस्याः सीतायाः अदक्षिणः दक्षिणभिन्नः वाम इत्यर्थः, एको दक्षिणबाहुसदृशः बाहुः हृषितः हर्षं प्राप्तः भाविहर्षसूचक इत्यर्थः अत एव प्रकम्पते ॥ ४५ ॥

४५ ] ति० टी०–वेपन्वेपमानः स्फुरन्नित्यर्थः । राघवमस्याः पुरस्थितमिव सूचयति ॥ ४५ ॥

रा० टी०–करेण्विति । करेणुहस्तप्रतिमः शुण्डादण्डसदृशः अत एव अनुत्तमः अतिश्रेष्ठः अस्याः ऊरुः वेपन् प्रस्फुरन् सन् पुरतः स्थितं राघवं कथयतीव ॥ ४६ ॥

---

१ स्थिति गो. पाठः । २ वेपमानः सूचयतीति गो. पाठः ।

पक्षी च शाखानिलयं प्रविष्टः पुनः पुनश्चोत्तमसान्त्ववादी ।
सुस्वागतां वाचमुदीरयाणः पुनः पुनश्चोदयतीव हृष्टः ॥ ४६ ॥

४६ ] ति० टी०–पक्षी काकादिः शाखानिलयं शाखास्थनीडं प्रविष्टो वारंवारमुत्तमसान्त्ववायुत्तमशान्तस्वरवादी सुस्वागतां शोभनस्य स्वागतं प्राप्तिर्यस्यां तादृशीं वाचं कथयन्पुनःपुनश्चोदयतीव शोभनप्राप्तिं सूचयतीव । शोभनमागतं प्रत्युद्गच्छेति सीतां पुनः पुनः प्रेरयतीव वा ॥ ४६ ॥

रा० टी०–पक्षीति । शाखानिलयं शाखास्थितस्वस्वनीडं प्रविष्टः पुनः पुनरुत्तमसान्त्ववादी उत्तमसान्त्वनवचनशीलः हृष्टः पक्षी वायसादिः सुशोभनं स्वागतं वियुक्तजनागमनं यया तां वाचम् उदीरयाणः सन् पुनः पुनश्चोदयति आनन्दं प्राप्नुहीति सीतां प्रेरयतीव ॥ ४७ ॥

गो० टी०–एवं देहनिमित्तमुक्त्वा शाकुनमप्याह—पक्षीति । पक्षी पिङ्गलिका शाखानिलयः प्रहृष्टः । पुनः पुनश्चोत्तमसान्त्ववादी भूयो भूयो मधुरवादी उत्तरोत्तरमुत्तमसान्त्वस्वरवादी वा । सुस्वागतां शोभनबन्ध्वागमनमिति यावत् । 'बन्धुस्वस्वजनास्समाः' इत्यमरः । वाचं स्वरमुदीरयानः चोदयतीव रामागमनं कथयतीव । यद्वा पूर्वोक्तराघव एव कर्म । राघवमुपपादयतीवेत्यर्थः । आचार्यास्तु पक्षावस्य स्त इति पक्षी गरुत्मान् । भूम्नि प्रशंसायां च मत्वर्थीयः । तदुक्तम्—'भूमनिन्दाप्रशंसासु नित्ययोगेतिशायने । संसर्गेऽस्तिविवक्षायां भवन्ति मतुबादयः' इति । तथाच पक्षौ विस्तार्य प्रदक्षिणं संचरन् । शाखानिलयः कुसुमितपल्लवितशाखायां दृढतरं स्थितः । आर्द्रतरतरुभाग एव शाखात्वव्यपदेशः । प्रदक्षिणभ्रमणम् आर्द्रशाखावरोहणम् दृढतरावस्थानं च शुभशंसीत्यर्थः । प्रहृष्टः तत्र फलभोजनादिना संतुष्टः । पुनः पुनश्चोत्तमसान्त्ववादी उत्तरोत्तरं सान्त्ववचनं कुर्वन्निव स्थितः । मा शुचः सद्यः समागमिष्यति ते भर्ता नायमवसरः शोकस्य इत्येवं सान्त्वयन्निव स्थितः । तदुपरि सुस्वागतां वाचमुदीरयानः । एतावन्मात्रं न भवति तस्य संतापातिरेक इति कथयन्निव स्थितः । विरहक्लिष्टायाः सुस्वागतवचनं हि नाम प्रतियोगिनः संतापातिशयकथनमेव । उक्तं हि—'तपति तनुगात्रि मदनस्त्वामनिशं मां पुनर्दहत्येव । ग्लपयति यथा शशाङ्कं न तथा हि कुमुद्वतीं दिवसः' इति । पुनः पुनश्चोदयतीव प्रियागमने निश्चिते मज्जनाऽलंकरणादिकं किमर्थं न करोषीत्येवं सीतां चोदयतीवेत्युत्प्रेक्षा । हृष्टः नायकागमनकालिकहर्षः स्वस्यैवेत्येतद्वैलक्षण्यं हृषिततनूरुहैः सूचयन्निव स्थितः । इदं हि रामायणमुत्तमं काव्यं तथाहि काव्यम् तावत्त्रिविधम् उत्तमं मध्यममधमं चेति । यत्र वाच्यातिशायिव्यङ्ग्यं तदुत्तमम् स एव ध्वनिरित्युच्यते । यत्र वाच्यानतिशायि व्यङ्ग्यं तन्मध्यं काव्यम् तदेव गुणीभूतव्यङ्ग्यमित्युच्यते । यत्र व्यङ्ग्यमेव नास्ति तदधमम् तदेव चित्रमित्युच्यते । व्यङ्ग्यं च पदगतं वाक्यगतं प्रबन्धगतं चेति त्रिविधं भवति । एतत्काण्डरूपप्रबन्धेन अनादिभगवत्संबन्धवतश्चेतनस्योज्जीवने प्रवृत्तस्याचार्यस्य प्रवृत्तिरभिव्यज्यते । उक्तश्चायमर्थस्ततो रावणनीताया इति श्लोके । अत्र लङ्कापदेन शरीरं द्योतितम् । एकाक्षीप्रभृतय इन्द्रियाणि । रावणकुम्भकर्णावहंकारममकारौ । इन्द्रजित्प्रभृतयः कामक्रोधलोभमोहमदमात्सर्यदम्भादयः । तादृशलङ्कानिरुद्धसीतासदृशश्चेतनः । तस्य भगवज्ज्ञानोपदेष्ट्राचार्यतुल्यो मारुतिः । तादृशाचार्यलक्षणमनेन श्लोकेन सूच्यते । पक्षी पक्षिशब्देन गमनसाधनत्वात् ज्ञानकर्मणी उच्येते । तदुक्तम्—'उभाभ्यामेव पक्षाभ्यां यथा खे पक्षिणां गतिः । तथैव ज्ञानकर्मभ्यां नियता परमा गतिः' इति । ज्ञानकर्मणोरङ्गाङ्गिभावेनात्र समुच्चयो विवक्षितः "ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन" इति श्रुतेः । अनेनाचार्यशब्दनिर्वचनमुक्तम् 'आचिनोति हि शास्त्रार्थानाचारे स्थापयत्यपि । स्वयमाचरते यस्मात्तस्मादाचार्य उच्यते' इति ॥ शाखाशब्देन वेदशाखा उच्यन्ते । निलयशब्देन तदेकपरत्वं त्यागे प्रत्यवायश्रवणात् । तदुक्तं शिक्षायाम्–'अधीतमपि यो वेदं विसृजति नराधमः । भ्रूणहा स तु विज्ञेयो वियोनिमधिगच्छति' इति । किंच निलय इत्यनेन तदर्थविषयकश्रवणमननिदिध्यासनरूपतदनुष्ठानान्युच्यन्ते । अनेनाचार्यलक्षणमुक्तम् । तथाहुः–'आचार्यो वेदसंपन्नो विष्णुभक्तो विमत्सरः । मन्त्रज्ञो मन्त्रभक्तश्च सदा मन्त्राश्रयः शुचिः ॥ गुरुभक्तिसमायुक्तः पुराणज्ञो विशेषतः । एवंलक्षणसंपन्नो गुरुरित्यभिधीयते' इति । प्रहृष्टः सदा संतुष्टहृदयः । अनेन सर्वदा सेवनीयत्वमुक्तम् । तथोक्तम्–'आह्लादशीतनेत्राम्बुपुलकीकृतगात्रवान् । सदा परगुणाविष्टो द्रष्टव्यः सर्वदेहिभिः" इति पुनः पुनश्चोत्तमसान्त्ववादी । उत्तमः "उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः" इत्युक्तः परमात्मा तद्विषयं सान्त्वं शिष्येभ्यो वदतीत्युत्तमसान्त्ववादी । 'त्वं मेहं मे कुतस्तत्तदपि कुत इदं वेदमूलप्रमाणादेतच्चानादिसिद्धादनुभवविभवात्तर्हि साक्रोश एव । क्वाक्रोशः कस्य गीतादिषु मम विदितः कोऽत्र साक्षी सुधीः स्याद्धन्त त्वत्पक्षपाती स इति नकलहे मृग्यमध्यस्थवत्त्वम् ॥' इत्युक्तरीत्या भगवति मनुष्याणां कलहे । 'यमो वैवस्वतो राजा यस्तवैष हृदि स्थितः । तेन चेदपि वादस्ते मा गङ्गां मा कुरून् गमः ॥' इति सान्त्ववादशील इत्यर्थः । पुनः पुनरित्यनेन कर्षकः कदाचिन्न फलितमित्येतावता यथा कृषिं न परित्यजति पुनः पुनस्तत्रैव प्रवर्तते तथाचार्योपि कदाचित् स्ववचनाश्रवणेऽपि न निवर्तते इत्युक्तम् अनेनाचार्यस्य भगवतोप्यतिशय उक्तः । स हि पार्थाय गीतामुपदिश्य पुनराश्वमेधिके तेन पूर्वोक्तमर्थं विस्मृत्य पुनः पृष्टो नाहं वक्ष्यामीत्युक्तवान् " नूनमश्रद्दधानोऽसि दुर्मेधाश्चासि पा-

१ यान इति गो. रा. पाठः ।

ततः सा ह्रीमती बाला भर्तुर्विजयहर्षिता । अवोचद्यदि तत्तथ्यं भवेयं शरणं हि वः ॥ ४७ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये सुन्दरकाण्डे सप्तविंशः सर्गः ॥ २७ ॥

## अष्टाविंशः सर्गः ।

रावणराक्षसीगणविहितभर्त्सनतर्जन्याद्यसहिष्णुः सीता बहु विलप्य यावद्वेण्युद्बन्धनेनासुमोक्षणउद्युङ्क्ते तावदननुभूतपूर्वः शुभशकुन आविरासीत् ।

सा राक्षसेन्द्रस्य वचो निशम्य तद्रावणस्याप्रियमप्रियार्ता ।
सीता वितत्रास यथा वनान्ते सिंहाभिपन्ना गजराजकन्या ॥ १ ॥
सा राक्षसीमध्यगता च भीरुर्वाग्भिर्भृशं रावणतर्जिता च ।
कान्तारमध्ये विजने विसृष्टा बालेव कन्या विललाप सीता ॥ २ ॥
सत्यं बतेदं प्रवदन्ति लोके नाकालमृत्युर्भवतीति सन्तः ।
यत्राहमेवं परिभर्त्स्यमाना जीवामि [१]यस्मात्क्षणमप्यपुण्या ॥ ३ ॥
सुखाद्विहीनं बहुदुःखपूर्णमिदं तु नूनं हृदयं स्थिरं मे ।
[३]विदीर्यते यत्र सहस्रधाऽद्य वज्राहतं शृङ्गमिवाचलस्य ॥ ४ ॥

---

ण्डव " इत्यादिना । किंच सुस्वागतां वाचमुदीरयानः । सुष्ठु संप्रदायाविच्छेदो यथा तथाचार्यपरम्परया स्वस्मै आगतां वाचम् अष्टाक्षरादिमन्त्रराजरूपाम् निर्हेतुक्यैव दयया समुदीरयन् । आचार्याणामसावसावित्या भगवत्त इति गुरुपरम्परया अनुसंधेयत्वमनेन सूचितम् । पुनः पुनश्चोदयतीव उक्तार्थस्यानुष्ठानाय चोदनां दर्शयति । अन्यथा ह्युपदेशोऽप्यनर्थक एव स्यात् । अत एवाहुराचार्याः—स्खलितये शासितारमिति । हृष्टः । एतेन शिष्यशिक्षणं स्वप्रयोजनमाचार्यस्येत्युक्तम् ॥ ९१ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने सप्तविंशः सर्गः ॥ २७ ॥

४७ ] ति० टी०—तन्त्रिजटोक्तम् ॥ ४७ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये सुन्दरकाण्डे सप्तविंशः सर्गः ॥ २७ ॥

रा० टी०—तत इति । ततः त्रिजटावचनश्रवणानन्तरं भर्तुर्विजयहर्षिता विजयश्रवणेन प्राप्तहर्षा ह्रीमती कुलोचितलज्जाविशिष्टा सा सीता यदि तथ्यं भवदुक्तं तथ्यं सत्यं तर्हि वो युष्माकं शरणं रक्षिका अहं भवेयमित्यवोचत् ॥ ४८ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ सुन्दरकाण्डे सप्तविंशः सर्गः ॥ २७ ॥

१ ] ति० टी०—पुनर्दुःखपारमदृष्ट्वेव सीताप्रलापः—सेति ॥ १ ॥

रा० टी०—त्रिजटावचनश्रवणानन्तरकालेऽपि रावणोक्तिस्मृतिजनितसीताविलापं वर्णयन्नाह—सेत्यादिभिः । रावणस्य तत्परुषम् अत एव अप्रियं वचो निशम्य संस्मृत्य अप्रियार्ता अप्रियेण प्रियसंयोगाभावेन आर्ता दुःखिता सा सीता वितत्रास त्रासं प्राप । तत्र दृष्टान्तः—वनान्ते वनमध्ये सिंहाभिपन्ना सिंहवशं प्राप्ता गजराजकन्या यथा ॥ १ ॥

गो० टी०—सा राक्षसेन्द्रस्येत्यादि ॥ १ ॥ २ ॥

२ ] ति० टी०—विसृष्टा बाला कन्येव महादुर्भिक्षक्षोभवशाद्बालकन्यायाः परित्यागः ॥ २ ॥

रा० टी०—सेति । राक्षसीमध्यगता भृशमत्यन्तं वाग्भिः रावणतर्जिता सा सीता विजने जनरहिते कान्तारमध्ये निबिडवनमध्यभागे विसृष्टा त्यक्ता कन्या इव विललाप ॥ २ ॥

३-४ ] ति० टी०—यस्मादपुण्या पुण्यरहिता ॥ ३ ॥ ४ ॥

रा० टी०—तदाकारमाह—सत्यमित्यादिभिः । यत्र यस्मात् एवं परिभर्त्स्यमाना अत एव पुण्या स्नानाद्यभावेन शुद्धिरहिता अहं किञ्चित्क्षणमपि जीवामि तस्मात् लोके अकालमृत्युर्न भवतीतीदं सन्तः सत्यं प्रवदन्ति ॥ ३ ॥

रा० टी०—सुखादिति । यत् यतः सुखात्प्रियसंयोगात् विहीनमत एव बहुदुःखपूर्णमिदं हृदयं वज्राहतं शैलस्य शृङ्गमिव सहस्रधा न विदीर्यते तस्मात् स्थिरं शैलशृङ्गादप्यतिदृढम् एतेनात्मविघातकरणेच्छा सूचिता ॥ ४ ॥

गो० टी०—सत्यमिति । यत्र येन किंचिज्जीवामि कुत्सितं जीवामि ॥ ३ ॥ ४ ॥

---

१ श्लोकोऽयं गो. नास्ति । २ किंचिदिति गो. रा. पाठः । ३ विदीर्यते नखेति गो. यत्रेति रा. पाठः ।

नैवास्ति नूनं मम दोषमत्र वध्याहमस्याप्रियदर्शनस्य ।
भावं न चास्याहमनुप्रदातुमलं द्विजो मन्त्रमिवाद्विजाय ॥ ५ ॥
तस्मिन्ननागच्छति लोकनाथे गर्भस्थजन्तोरिव शल्यकृन्तः ।
नूनं ममाङ्गान्यचिरादनार्यः शरैः शितैश्छेत्स्यति राक्षसेन्द्रः ॥ ६ ॥
दुःखं बतेदं ननु दुःखिताया मासौ चिरायाभिगमिष्यतो द्वौ ।
बद्धस्य वध्यस्य यथा निशान्ते राजोपरोधादिव तस्करस्य ॥ ७ ॥
हा राम हा लक्ष्मण हा सुमित्रे हा राममातः सह मे जनन्यः ।
एषा विपद्याम्यहमल्पभाग्या महार्णवे नौरिव मूढवाता ॥ ८ ॥

---

५ ] ति० टी०—नन्वेवं प्राणत्यागे आत्महननदोषः स्यादत आह—नैवेति । अत्रेदृशे विषये प्राणत्यागेऽपि न दोषमस्ति । दोषमिति क्लीबत्वमार्षम् । यतोऽहमस्य वध्या । एवं च दुर्मरणजनितदोषस्य दुर्वारत्वेन दोषाभावोक्तिरिति भावः । आत्मघातित्राह्मणहतयोर्दाहादावनधिकारश्रवणस्य तुल्यत्वादिति बोध्यम् । नन्वेवं रावणाङ्गीकार एव क्रियतामत आह—भावमिति । अद्विजाय शूद्राय द्विजो मन्त्रमिवाहं स्वीयं भावमान्तरमस्यानुप्रदातुमनुकूलतया समर्पयितुं नालं न समर्था । एवं च पातिव्रत्यस्य प्राणत्यागेन रक्षणात्सर्वदोषनिस्तार इति भावः ॥ ५ ॥

रा० टी०—नन्वात्मघातदोषप्रसङ्ग इत्यत आह—नैवेति । यतः अप्रियदर्शनस्य रावणस्याहं वध्या अतः अत्रात्मविघाते मम दोषं न ककुदोषणी इतिभाष्यप्रयोगात् । लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्येति भाष्याच्च दोषशब्दस्य नपुंसकत्वमपि । नन्वस्य प्रार्थनास्वीकारेणात्मविघातं निवारयेत्यत आह—अस्य रावणस्य भावं ममेहैवावस्थानरूपमभिप्रायं प्रदातुं स्वीकर्तुं नाहमलं समर्था । तत्र दृष्टान्तः—द्विजः अद्विजाय शूद्राय मन्त्रं वेदमिव ॥ ५ ॥

गो० टी०—नन्वात्महनने महान्दोषः स्यादित्याशङ्क्याह—नैवेति । दोषं दोषः आर्षं नपुंसकत्वम् । अत्र आत्महनने कथमदोष इत्याशङ्क्य रावणकृतान्मरणादात्मनैव मरणं श्रेय इत्याह—वध्येति । अप्रियदर्शनस्य अस्य रावणस्य दुर्मरणत्वाविशेषेऽपि दुष्टराक्षसेन मरणमतिकष्टमिति भावः । तर्हि तदनुप्रवेशेनात्मा रक्ष्यताम् "सर्वत आत्मानं गोपायेत्" इति श्रुतेरित्याशङ्क्याह—भावमिति । अस्य अस्मिन्रावणे भावं हृदयम् अनुप्रदातुं नालं न शक्ता । रामस्वत्वादस्य न ह्यन्यस्य स्वमन्योन्यस्मै दातुमर्हतीति भावः अनर्हश्चायं भावोन्यप्रदानस्येत्यमुमर्थं दृष्टान्तमुखेनाह—द्विज इति । मन्त्रं वेदम् । अद्विजाय शूद्राय ॥ ५ ॥

६ ] ति० टी०—ननु तथाप्यात्मघातेऽतिदोषात्सोऽयुक्त इत्याशङ्क्य सत्यम्, विचित्रवधाद्बिभेमीत्याह—तस्मिन्ननागच्छतीति । तस्मिन्रामेऽनागच्छति सति । अवधिकालादर्वागिति शेषः । ममाङ्गानि जीवन्त्या एव छेत्स्यति । निरुद्धाया विशसने दृष्टान्तः—गर्भेति । शल्यं शस्त्रं तेन कृणत्तीति शल्यकृन्त आम्बष्ठवैद्यः । आर्षत्वात्साधु । स यथा गर्भस्थजन्तुं व्याधिरूपं जीवन्तं कृणत्ति तद्वत् । एतच्छ्लोकद्वयं कतकेनेत्थं व्याख्यातम्—अन्यायप्राप्तवधेऽपि मम दोषो नेत्याह—नैवेति । यद्यप्यस्याहं वध्या भवामि मम दोषो न, एवं भावाप्रदानेन पातिव्रत्यरक्षणात्सर्वदोषनिस्तार इत्यर्थः । किं च मरणप्राप्तिः पाक्षिकीत्याह—तस्मिन्निति । अनागच्छत्येव वधप्रसक्तिर्नान्यथेति भावः । अनागमनपक्षे प्राप्तविशसने दृष्टान्तः—गर्भस्थेति ॥ ६ ॥

रा० टी०—तस्मिन्निति । लोकनाथे तस्मिन् रामे अनागच्छति सति अनार्यः क्षुद्रो रावणः ममाङ्गानि गर्भस्थजन्तोः दितिगर्भस्थपवनस्य अङ्गानि शल्यकृन्त इन्द्र इव छेत्स्यति शल्यकृन्त इत्यत्र शोनुमत्वार्षः ॥ ६ ॥

गो० टी०—नूनमिति । अनागच्छति मासद्वयादर्वागिति शेषः । गर्भस्थजन्तोः निरुद्धनिर्गमस्य गर्भस्थजन्तोः । शल्यकृन्तः नापितः ॥ ६ ॥

७ ] ति० टी०—चिराय भर्तृवियोगदुःखिताया मे इदं विशसनदुःखमपि बतागमिष्यति, यतो द्वौ मासौ विशसनावधिभूतौ कतिपयदिनावधिकावप्यभिगमिष्यतः शीघ्रं गमिष्यतः किल । तत्र वधप्राप्तौ दृष्टान्तः—बद्धस्येति । तस्करस्य वध इवेति शेषः ॥ ७ ॥

रा० टी०—दुःखमिति । चिराय बहुकालं दुःखितायाः मम राजापराधात् बद्धस्य अत एव निशान्ते वध्यस्य तस्करस्येदं दुःखमिव द्वौ मासौ अभिगमिष्यतः मासद्वयान्ते रावणकर्तृकमद्वधस्य निश्चितत्वात् आगामि मासद्वयं प्रातर्बद्धस्य चोरस्य निशान्तभाग इवेत्यर्थः ॥ ७ ॥

गो० टी०—दुःखमिति । चिराय दुःखितायाः मम द्वौ मासौ वधस्यावधिभूतौ अभिगमिष्यतः । इदं दुःखं बत । कस्य दुःखमिव राजापराधात् बद्धस्य तथा निशान्ते वध्यस्य तस्करस्येव दुःखम् । यथेति पाठे इवशब्दो वाक्यालंकारे ॥ ७ ॥

८ ] ति० टी०—सह श्वश्रूभ्यां सह या मे जनन्यस्ताश्च हा युष्मानदृष्ट्वा स्मृत्वैवाहं विपद्यामि । मूढवाता मोहास्पदमहावात्यादिवातयुक्ता ॥ ८ ॥

---

१ शस्त्रैरिति गो. पाठः । २ राजापराधादिति गो. पाठः । ३ जनन्येति गो. पाठः ।

तरस्विनौ धारयता मृगस्य सत्त्वेन रूपं मनुजेन्द्रपुत्रौ ।
नूनं विशस्तौ मम कारणात्तौ सिंहर्षभौ द्वाविव वैद्युतेन ॥ ९ ॥
नूनं स कालो मृगरूपधारी मामल्पभाग्यां लुलुभे तदानीम् ।
यत्रार्यपुत्रौ[1] विससर्ज मूढा रामानुजं लक्ष्मणपूर्वजं च ॥ १० ॥
हा राम सत्यव्रत दीर्घबाहो हा पूर्णचन्द्रप्रतिमानवक्त्र ।
हा जीवलोकस्य हितः प्रियश्च वध्यां न मां वेत्सि हि राक्षसानाम् ॥ ११ ॥
अनन्यदेवत्वमियं क्षमा च भूमौ च शय्या नियमश्च धर्मे ।
पतिव्रतात्वं विफलं ममेदं कृतं कृतघ्नेष्विव मानुषाणाम् ॥ १२ ॥

---

रा० टी०—हेति । हा राम ! एषा त्वत्तो वियुक्ता अत एव अल्पभाग्याऽहं मूढः चित्तविभ्रामकः वातो यस्यां सा महार्णवे नौरिव सह भवद्भिरिति शेषः विपद्यामि विनश्यामि ॥ ८ ॥

गो० टी०—हा रामेति । मूढो वात्यारूपो वातो यस्याः सा मूढवाता वात्याहतेत्यर्थः 'मूढस्तन्द्रितवात्ययोः' इति विश्वः ॥ ८ ॥

९ ] ति० टी०—मृगस्य रूपं धारयता सत्त्वेन राक्षसरूपजीवेन मम कारणाद्विशस्तौ नूनम् । वैद्युतेन विद्युत्संबन्धितेजसा ॥ ९ ॥

रा० टी०—तरस्विनाविति । मृगस्य रूपं धारयता वैद्युतेन अशनिना इव सत्त्वेन जन्तुविशेषेण सिंहर्षभौ सिंहश्रेष्ठाविव तरस्विनौ मनुजेन्द्रपुत्रौ मम कारणाद्विशस्तौ हिंसितौ नूनं किम् ॥ ९ ॥

गो० टी०—तरस्विनाविति । मृगस्य रूपं धारयता सत्त्वेन जन्तुना मम कारणात् मन्निमित्तं विशस्तौ हिंसितौ । द्वौ सिंहर्षभाविव द्वौ सिंहाविव द्वौ वृषभाविवेत्यर्थः । वैद्युतेन अशनिना ॥ ९ ॥

१० ] ति० टी०—सर्वं चेदं दुःखं स्वकृतानर्थमूलमित्याह—नूनमिति । लुलुभे विमोहयति स्म । अहं विससर्ज विसृष्टवती । अपरोक्षेऽपि चित्तविक्षेपादिना पारोक्ष्यमारोप्य लिट् ॥ १० ॥

रा० टी०—नूनमिति । मृगरूपधारी यः अल्पभाग्यां मां लुलुभे तदानीं तस्मिन् समये एव यत्र यत्समीपे लक्ष्मणपूर्वजं रामं रामानुजं च मूढाऽहं विससर्ज प्रैषयं स कालः नूनं किम् ॥ १० ॥

गो० टी०—नूनमिति । लुलुभे प्रलोभयामास । यत्र यस्मिन् काले । विससर्जेति सृजेर्लिट्युत्तमपुरुषैकवचनम् । रामानुजं लक्ष्मणपूर्वजं च । परस्परस्य सदृशावित्युक्तपरस्परसादृश्यात् । बाल्यात् प्रभृति सुस्निग्धतया च परस्परनिरूपकभूतौ ॥ १० ॥ ११ ॥

११ ] ति० टी०—हा रामेत्यादौ हे राम! मां हा । अहं शोचे इत्यर्थः । हा जीव मम प्राणरूप ! हितो हितकरः प्रियश्चेत्यस्य त्वमिति शेषः ॥ ११ ॥

रा० टी०—हेति । हा राम ! जीवलोकस्य हितः प्रियश्च त्वं मां राक्षसानां वध्यां न वेत्सि किमिति शेषः ॥ ११ ॥

१२ ] ति० टी०—धर्मो रक्षतीति सर्वाविवादसिद्धमपि मां प्रति निष्फलमित्याह—अनन्यदेवत्वमिति । पत्येकदेवत्वमित्यर्थः । इयं क्षमा शापेन संहारशक्तावप्येवं पीडासहनरूपा । पत्यतिरिक्ते कामासक्तिराहित्यं पतिव्रतात्वम् । कृतमुपकृतम् ॥ १२ ॥

रा० टी०—अनन्येति । मम अनन्यदेवत्वं पत्येकपूजिकात्वं क्षमा रावणापराधसहनं च पतिव्रतात्वं पत्येकनिष्ठत्वं च कृतघ्नेषु मानुषाणां कृतमुपकार इव विफलं विनष्टप्रायम् ॥ १२ ॥

गो० टी०—अनन्यदेवत्वमिति । अनन्यदेवत्वम् आश्रयणीया देवतान्यास्ति सा रक्षिष्यतीति बुद्धिर्मे नास्ति । नारायणमुपागमदित्यत्राप्यप्राधान्येन सह पत्न्येति ह्युक्तम् । नारायणमाराधयतो रामस्य परिचारिकास्मीत्यर्थः । इयं क्षमा च । रावणपरुषाक्षराणि राक्षसीनां तर्जनभर्त्सनादीनि राममधुरालापश्रवणकुतूहलेन ह्यहं क्षान्तवती । भूमौ च शय्या । तवाङ्के सम्रुपाविशमित्येवंविधभोगः कदाचिदपि किल सेत्स्यतीत्याशया हि मया भूमौ शयनं क्रियते । नियमश्च धर्मे । रक्षकत्वधर्मोऽपि तस्मिन्नेवेति मनीषया हि मया स्थितम् । न त्वां कुर्मि दशग्रीव भस्म भस्मार्हं तेजसेत्युक्तिरपि तं दृष्ट्वैव । पतिव्रतात्वम् एतद्व्रतं ममेत्युक्तं व्रतं विना मम किंचिद्व्रतं नास्तीत्यर्थः । पत्युर्व्रतमेव व्रतं यस्याः सा पतिव्रता तस्या भावः पतिव्रतात्वम् । विफलं ममेदम् अमोघमपि मोघमासीत् । कस्येवेति चेत्तत्राह—कृतं कृतघ्नेष्विव मानुषाणाम् । आत्मानं मानुषं मन्य इत्युक्तरीत्या मानुषत्वं रामस्याप्यस्ति । अतस्तदितरमानुषाणां मध्ये कृतघ्नेषु कृतं कार्यमिव । अस्य किं मूलमिति चेत् ममेदं तस्मिन्न काचिन्न्यूनता ममैव दुष्कृतमत्र हेतुः ॥ १२ ॥ १३ ॥

---

१ पुत्रमिति गो० पाठः ।

मोघं हि धर्मश्चरितो ममायं तथैकपत्नीत्वमिदं निरर्थकम् ।
या त्वां न पश्यामि कृशा विवर्णा हीना त्वया संगमने निराशा ॥ १३ ॥
पितुर्निदेशं नियमेन कृत्वा वनान्निवृत्तश्चरितव्रतश्च ।
स्त्रीभिस्तु मन्ये विपुलेक्षणाभिः संरंस्यसे वीतभयः कृतार्थः ॥ १४ ॥
अहं तु राम त्वयि जातकामा चिरं विनाशाय निबद्धभावा ।
मोघं चरित्वाऽथ तपो व्रतं च त्यक्ष्यामि धिग्जीवितमल्पभाग्याम् ॥ १५ ॥
संजीवितं क्षिप्रमहं त्यजेयं विषेण शस्त्रेण शितेन वाऽपि ।
विषस्य दाता न तु मेऽस्ति कश्चिच्छस्त्रस्य वा वेश्मनि राक्षसस्य ॥ १६ ॥
[ इतीव देवी बहुधा विलप्य सर्वात्मना राममनुस्मरन्ती ।
प्रवेपमाना परिशुष्कवक्त्रा नगोत्तमं पुष्पितमाससाद ॥ ]
शोकाभितप्ता बहुधा विचिन्त्य सीताऽथ वेणीग्रथनं गृहीत्वा ।
उद्बध्य वेण्युद्ग्रथनेन शीघ्रमहं गमिष्यामि यमस्य मूलम् ॥ १७ ॥

---

१३ ] ति० टी०—उक्तमेवार्थं दुःखातिशयादावर्तयति—मोघं हीति । त्वया हीना तव संगमने च निराशा ॥ १३ ॥

रा० टी०—तदेव भङ्ग्यन्तरेणाह—मोघमिति । त्वया हीना सङ्गमने आगामिसङ्गमे निराशा याऽहं त्वां न पश्यामि तस्याः मम धर्मः मोघं चरितः एकपत्नीत्वम् एकैवाहं रामपत्नीत्यभिमानश्च निरर्थकम् ॥ १३ ॥

१४ ] ति० टी०—इदानीं तयोरवधमेव निश्चित्य मन्नाशात्तयोर्न कोऽपि नाशः, अपि तु ममैवेत्याह—पितुरिति । पितुर्वचनमकृत्वा वनान्निवृत्तिर्न, मध्ये व्रतत्यागो नेत्याह—चरितव्रतश्चेति ॥ १४ ॥

रा० टी०—निरर्थकत्वमेवोपपादयन्ती आह—पितुरिति । वीतभयः निवर्तितऋपित्रासः अत एव कृतार्थस्त्वं विपुलेक्षणाभिः स्त्रीभिः तत्काळिकविवाहविधिनार्जितभार्याभिस्त्वं रंस्यसे इत्यहं मन्ये । एतेन रामस्य भार्यान्तरं नास्तीति सूचितम् ॥ १४ ॥

गो० टी०—पितुरिति । पितुर्निदेशम् आज्ञाम् नियमेन अविच्छेदेन कृत्वा चरितव्रतः चरितवन्यवृत्तिव्रतः वनान्निवृत्तश्च सन् स्त्रीभिस्तु मत्तोऽपि विलक्षणाभिः स्त्रीभिः त्वं रंस्यसे वीतभयः गतवनवासभयः कृतार्थः निष्पन्नसर्वपुरुषार्थः मद्विनाशेन पुनर्वह्वीरूढ्वा रंस्यस इति भावः ॥ १४ ॥

१५ ] ति० टी०—विनाशाय मरणान्तदुःखाय । अल्पभाग्यां मां धिक् ॥ १५ ॥

रा० टी०—अहमिति । त्वय्येव जातः उत्पन्नः कामः इच्छा यस्याः सा अत एव विनाशेनापि अये त्वत्प्राप्तौ निबद्धः संलग्नः भावोऽभिप्रायो यस्याः साऽहं मोघं त्वत्प्राप्तिरूपफलाभावेन निरर्थकं तपो व्रतं च चरित्वा जीवितं जीवनं त्यक्ष्यामि अतः अल्पभाग्यां मां धिक् ॥ १५ ॥

गो० टी०—अहं त्विति । त्वयि जातकामा अत एव त्वयि निबद्धभावा निबद्धहृदया । विनाशाय त्वयि निबद्धभावेति दुःखातिरेकोक्तिः । तपः अनशनम् व्रतं नियमम् । अल्पभाग्या जन्मान्तरसुकृतरहिता । इदानीमनुष्ठितानां तपोव्रतादीनां जन्मान्तरफलदत्वेन मोघत्वोक्तिः । अत एवाल्पभाग्येत्युक्तम् ॥ १५ ॥

१६ ] ति० टी०—वेश्मनि राक्षसस्येत्येतदनन्तरम् । 'इतीव देवी बहुधा विलप्य सर्वात्मना राममनुस्मरन्ती । प्रवेपमाना परिशुष्कवक्त्रा नगोत्तमं पुष्पितमाससाद ॥' इत्येकः श्लोकः प्रक्षिप्तः ॥ १६ ॥

रा० टी०—नन्वं क्षिप्रं कुतो न त्यजसीत्यत आह—संजीवितमिति । विषेण शितेन शस्त्रेण वा क्षिप्रं संजीवितं त्यजेयं परन्तु दाता कश्चिन्नास्ति ॥ १६ ॥

गो० टी०—सा जीवितमिति । वेश्मनि राक्षसस्य । एवं सम्यङ्मरणकारी क्रूरस्यास्य गृहे कथं लभ्येत इति भावः ॥ १६ ॥

१७ ] ति० टी०—यमस्य मूलं समीपम् ॥ १७ ॥

रा० टी०—इतीवेति । इतीव अनेन प्रकारेण सर्वात्मना राममनुस्मरन्ती प्रवेपमाना अतिदुःखेन प्रकम्पं प्राप्नुवन्ती देवी सीता बहुधा अनेकप्रकारं विलप्य पुष्पितं नगोत्तमं शिंशपाम् आससाद तत्र तस्थौ ॥ १७ ॥

रा० टी०—शोकेति । शोकाभितप्ता सीता बहुधा विचिन्त्य वेणीग्रथनं गृहीत्वा वेण्युद्ग्रथनेन वेणीरूपोद्बन्ध-

---



१ मोघ इति गो. पाठः । २ निरर्थमिति गो. पाठः । ३ भाग्येति गो. पाठः । ४ हीति गो. पाठः । ५ श्लोकोऽयमधिकः गो. रा. पाठे ।

उपस्थिता सा मृदुसर्वगात्री शाखां गृहीत्वा च नगस्य तस्य ।
तस्यास्तु रामं परिचिन्तयन्त्या रामानुजं स्वं च कुलं शुभाङ्ग्याः ॥ १८ ॥
तस्या विशोकानि तदा बहूनि धैर्यार्जितानि प्रवराणि लोके ।
प्रादुर्निमित्तानि तदा बभूवुः पुराऽपि सिद्धान्युपलक्षितानि ॥ १९ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये सुन्दरकाण्डेऽष्टाविंशः सर्गः ॥ २८ ॥

## एकोनत्रिंशः सर्गः ।

कविः शुभशकुनान्निर्दिशति । पुरोपलब्धपुलकशकुनसाजात्यात्तेषां शुभत्वं निर्धारयन्ती सीता प्रहर्षमनुभवति ।

तथागतां तां व्यथितामनिन्दितां व्यतीतहर्षां परिदीनमानसाम् ।
शुभां निमित्तानि शुभानि भेजिरे नरं श्रिया जुष्टमिवोपसेविनः ॥ १ ॥

नेन उद्बध्य गलं बद्ध्वा यमस्य कालस्यापि नियन्तुः मूलं समीपं शीघ्रमहं गमिष्यामीति चिन्तयामासेति शेषः ॥ १८ ॥

गो० टी०—इतीवेत्यादि । शोकेति । वेण्युद्ग्रथनं वेणीबन्धनम् । यमस्य मूलं यमस्य समीपम् । अत्रेतिकरणं बोध्यम् । इति विचिन्त्य नगोत्तमां शिंशुपामाससाद । शिंशुपां तामुपागमदिति पूर्वमुक्तम् । तस्य सामीप्येन गमनमत्रोच्यते । पुष्पितं शुभसूचनम् । यद्वा पुष्पितमाससाद अग्निप्रवेशं कुर्वन्तीवेत्यर्थः ॥ १७ ॥ १८ ॥

१८]ति०टी०—तस्या नगस्य शाखां गृहीत्वोपस्थितायाः १८

रा० टी०—उपस्थितेति । मृदूनि सर्वगात्राणि यस्याः सा सीता नगस्य तस्य शिंशुपाभिधस्य शाखां गृहीत्वा उपस्थिता बभूवेति शेषः । अर्धं पृथक्—तस्या इति । रामादिकं परिचिन्तयन्त्याः तस्याः सीतायाः शङ्का रामागमनसंभावनानिमित्तं येषु तानि धैर्यार्जितानि धैर्यसंपादकानि सिद्धानि प्रसिद्धानि पुरा मिथिलायां रामागमनसमये उपलक्षितानि दृष्टानि प्रवराणि श्रेष्ठानि निमित्तानि शकुनाः तदाकाले शाखावलम्बनेनोपस्थितिसमये प्रादुर्बभुवुः । प्रादुसो व्यवहितेन प्रयोग आर्षः । सार्धश्लोक एकान्वयी ॥ १९ ॥ २० ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ सुन्दरकाण्डेऽष्टाविंशः सर्गः ॥ २८ ॥

गो० टी०—उपस्थितेत्यर्धमेकं वाक्यम् । नगस्य शाखां गृहीत्वा उपस्थिता ॥ १९ ॥

१९ ] ति०टी०—विशोकानि विशोककराणि, धैर्यार्जितानि धैर्यस्यार्जितमर्जनं संपादनं यैस्तानि, लोके प्रवराणि प्रसिद्धानि, पुरापि सिद्धानि संवादीनि निमित्तानि प्रादुर्बभूवुः ॥ १९ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये सुन्दरकाण्डेऽष्टाविंशः सर्गः ॥ २८ ॥

गो० टी०—तस्यास्त्विति । स्वं च कुलं विचिन्तयन्त्या इत्यनेन दुर्मरणाद्भीतत्वं व्यज्यते । शोकानिमित्तानि शुभसूचकानीत्यर्थः । धैर्यार्जितानि अर्जितधैर्याणि धैर्यकराणीत्यर्थः । लोके प्रवराणि लोके प्रसिद्धानीत्यर्थः । प्रवरं हि प्रसिद्धं भवति । प्रादुर्बभूवुरित्यन्वयः । पुरापि सिद्धान्युपलक्षितानि पूर्वमपि फलव्याप्तत्वेन दृष्टानि । तान्युत्तरसर्गे विवरिष्यति ॥ २० ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्यानेऽष्टाविंशः सर्गः ॥ २८ ॥

१ ] ति० टी०—तथेति । उपसेविनः सेवकास्त इव ॥ १ ॥

रा० टी०—निमित्ताकारं दर्शयितुमाह—तथेति । तथा तेन प्रकारेण गतां शाखां प्राप्तां व्यथिताम् अत एव व्यतीतहर्षां निवृत्तानन्दाम् अत एव परिदीनमानसाम् अनिन्दितां शुभां तां सीतां शुभानि निमित्तानि श्रिया जुष्टं नरमुपसेविन इव भेजिरे सिषेविरे ॥ १ ॥

गो० टी०—तथागतामित्यादि । तथागतां रहस्यं च प्रकाशं चेत्युक्तरीत्या सर्वं यथावत्साक्षात्कृतवतो मुनेरपि तथाशब्दप्रयोगादित्थमिति परिच्छिद्य वक्तुमशक्यदुःखाम् । तां धर्मिस्वरूपातिरिक्तयत्किंचिदतिशयरहिताम् । व्यथिताम् "आशंसायां भूतवच्च" इति निष्ठा । तथा च पूर्वोक्तं सर्वं धर्मिस्वरूपमात्रम् । इतः परमेव व्यसनानि भविष्यन्तीति मन्यमानाम् । समा द्वादश तत्राहं राघवस्य निवेशने । भुञ्जाना मानुषान् भोगान् सर्वकामसमृद्धिनी ॥ इत्युक्तं भोगजातं सर्वमकिंचित्करमासीत् । दुःखमेव निरूपकमासीत् । अनिन्दितां रामविरहे यथा स्थातव्यं तथा स्थिताम् । एवमनवस्थाने निन्दितैव भवति । व्यपेतहर्षां हर्षः पूर्वमस्यां वसित्वा गत इति न ज्ञातामित्यर्थः । व्यपाभ्यामुपसर्गाभ्यां तथा प्रती-

१ गात्रेति गो. पाठः । २ शोकानिमित्तानि तथेति गो. शुभनिमित्तानीति रा. पाठः । ३ व्यपेतेति गो. पाठः । ४ उपजीविन इति गो. पाठः ।

तस्याः शुभं वाममरालपक्ष्मराज्यावृतं कृष्णविशालशुक्लम् ।
प्रास्पन्दतैकं नयनं सुकेश्या मीनाहतं पद्ममिवाभिताम्रम् ॥ २ ॥
भुजश्च चार्वञ्चितवृत्तपीनः परार्ध्यकालागुरुचन्दनार्हः ।
अनुत्तमेनाध्युषितः प्रियेण चिरेण वामः समवेपताशु ॥ ३ ॥
गजेन्द्रहस्तप्रतिमश्च पीनस्तयोर्द्वयोः संहतयोस्तु जातः ।
प्रस्पन्दमानः पुनरूरुरस्या रामं पुरस्तात्स्थितमाचचक्षे ॥ ४ ॥
शुभं पुनर्हेमसमानवर्णमीषद्रजोध्वस्तमिवातुलाक्ष्याः ।
वासः स्थितायाः शिखराग्रदन्त्याः किंचित्परिस्रंसत चारुगात्र्याः ॥ ५ ॥
एतैर्निमित्तैरपरैश्च सुभ्रूः संचोदिता प्रागपि साधुसिद्धैः ।
वातातपक्लान्तमिव प्रणष्टं वर्षेण बीजं प्रतिसंजहर्ष ॥ ६ ॥

---

यते । परिदीनमानसां हर्षे समागतेऽप्याश्रयरहिताम् । परीत्यनेन तथावगम्यते । शुभां गुणाधिकविषयविरहकृतविकृतित्वेन तद्दशाया एव नीराजना कर्तव्येत्येवं स्थिताम् । निमित्तानि शुभानि भेजिरे निमित्तानि तद्विषये शुभानि सूचयित्वा स्वसत्तां लेभिरे । नरं श्रिया पुष्टमिवोपजीविनः । अर्थिनो हि लक्ष्मीकटाक्षवद्विषये किंचित्कृत्य स्वप्रयोजनं लभन्ते । इमानि तु साक्षाल्लक्ष्मीविषये किंचित्कृत्य निमित्तस्वामित्वं लेभिर इत्यर्थः ॥ १ ॥

२ ] ति० टी०—अरालया वक्रया पक्ष्मराज्या वृतम् । पक्ष्मणोऽरालया वक्ररोमराज्या वृतमित्यर्थः । तथा कृष्णं कनीनिकामात्रे अन्यत्र विशालशुक्लत्वयुक्तम्, अभितस्ताम्रं प्रान्तरक्तम्, एकं वामम् ॥ २ ॥

रा० टी०—तस्या इति । अरालया कुटिलया पक्ष्मराज्या पक्ष्मणः पङ्क्त्या वृतं युक्तं कृष्णविशालशुक्लं कृष्णत्वादिविशिष्टं तत्र कृष्णत्वं कनीनिकावच्छेदेन शुक्लत्वं तु सर्वदेशावच्छेदेन बोध्यम् । शुभं शुभलक्षणविशिष्टम् अभिताम्रं रक्तप्रान्तदेशं तस्याः वाममेकं नयनं मीनाहतं मत्स्यैः चालितं पद्ममिव प्रास्पन्दत ॥ २ ॥

गो० टी०—शुभनिमित्तान्येवाह—तस्या इत्यादिना । अरालं वक्रम् । कृष्णविशालशुक्लं मध्ये कनीनिकायां कृष्णं सर्वतो विशालं शुभ्रं च । अभिताम्रम् अभितस्ताम्रम् प्रान्तरक्तमित्यर्थः । 'प्रान्तरक्ते च नेत्रे' इति पद्मिनीलक्षणात् ॥२॥३॥

३ ] ति० टी०—अध्युषितः कृतसंपर्कः ॥ ३ ॥

रा० टी०—भुज इति । चार्वञ्चितवृत्तपीनः चारुत्वादिविशिष्टः परार्ध्ययोः अत्युत्तमयोः कालागरुचन्दनयोः अर्हः योग्यः अनुत्तमेन अतिश्रेष्ठेन प्रियेण चिरं बहुकालम् अध्युषितः संस्पृष्टः वामो भुजः आशु समवेपत प्रास्फुरत ॥ ३ ॥

४ ] ति० टी०—संहतयोः श्लिष्टयोस्तयोरूर्वोर्मध्ये वाम ऊरुरित्यर्थः ॥ ४ ॥

रा० टी०—गजेन्द्रेति । गजेन्द्रहस्तप्रतिमः शुण्डादण्डसदृशः अत एव पीनः सुजातः अतिसुन्दरः संहतयोः द्वयोः तयोरूर्वोर्मध्ये वाम इति शेषः, प्रस्पन्दमानः अस्याः सीतायाः ऊरुः पुरस्तात्स्थितं रामम् आचचक्षे ॥ ४ ॥

गो० टी०—गजेन्द्रेति । तयोः सुलक्षणवत्तया प्रसिद्धयोः । ऊरुः वाम इत्यनुपज्यते । सुजातः सुन्दरः ॥ ४ ॥

५ ] ति० टी०—हेमरूपितत्वाद्धेमसमानवर्णम् । ईषद्रजोध्वस्तमिवेपन्मलिनमिव चिरमपरिवर्तनात् । शिखरं दाडिमबीजं तदग्रतुल्यदन्त्याः । 'शिखरं शैलवृक्षाग्रे कक्षाग्रगृहकोटिषु । पक्वे दाडिमबीजे च' इति विश्वः । परिस्रंसत पर्यस्रंसतासनादधः पपात ॥ ५ ॥

रा० टी०— शुभमिति । अमलाक्ष्याः निर्मलनेत्रायाः शिखराग्रवत् दाडिमबीजाग्रभागवत् दन्ता यस्याः चारु गात्रं यस्यास्तस्याः स्थितायाः सीतायाः शुभं मङ्गलप्रदं हेमसमानवर्णम् ईषत् किंचित् रजसा ध्वस्तमिव वासो वस्त्रं शुभं शुभसूचकं यथा भवति तथा किंचित् परिस्रंसत् पर्यस्रंसत् ॥ ५ ॥

गो० टी०—शुभमिति । शिखराग्रदत्याः वृत्ताग्रदन्तयुक्तायाः । 'शिखरं निस्तुलं वृत्तम्' इत्युत्पलमाला । शिखरं दाडिमफलबीजमित्यन्ये नैघण्टुकाः । यद्वा शिखराकाराग्रदन्तायाः " अग्रान्तशुद्धशुभ्रवृषवराहेभ्यश्च " इति दन्तस्य दत्रादेशः । वासः वस्त्रम् । परिस्रंसत पर्यस्रंसत अडभाव आर्षः । ऊरुकम्पादिति भावः । स्थितायाः तिष्ठन्त्या इति वस्त्रस्रंसनाद्गुणावस्थोक्तिः । यद्वा वासःस्रंसनं कान्तागमनसूचकमिति भावः । शिखरदन्तत्वे सामुद्रिकम्—' स्निग्धाः समानरूपाः सुपङ्क्तयः शिखरिणः श्लक्ष्णाः । दन्ता भवन्ति यासां तासां पादे जगत्सर्वम् ' इति ' यासां शिखरिणो दन्ता दीर्घं जीवन्ति ताः स्त्रियः' इति च ॥ ५ ॥

६ ] ति० टी०—साधुसिद्धैः सम्यक्संबन्धिभिः । 'संवादिभिः' इति पाठान्तरम् ॥ ६ ॥

---



१ राजीवृतमिति गो. पाठः ।

तस्याः पुनर्बिम्बफलोपमोष्ठं स्वक्षिभ्रुकेशान्तमरालपक्ष्म ।
वक्त्रं बभासे सितशुक्लदंष्ट्रं राहोर्मुखाच्चन्द्र इव प्रमुक्तः ॥ ७ ॥
सा वीतशोका व्यपनीततन्द्रा शान्तज्वरा हर्षविबुद्धसत्त्वा ।
अशोभतार्या वदनेन शुक्ले शीतांशुना रात्रिरिवोदितेन ॥ ८ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये सुन्दरकाण्डे एकोनत्रिंशः सर्गः ॥ २९ ॥

---

## त्रिंशः सर्गः ।

---

प्रत्यक्षदर्शनेनावगतसकलसीतावृत्तः शिंशपास्थ एव हनुमान्सीतायाः समाश्वासनानाश्वासनयोर्गुणदोषौ विमृशन्समुचितसमये समाश्वासनमेवावश्यं कार्यमिति निश्चिनोति ।

हनुमानपि विक्रान्तः सर्वं शुश्राव तत्त्वतः । सीतायास्त्रिजटायाश्च राक्षसीनां च तर्जितम् ॥ १ ॥
अवेक्षमाणस्तां देवीं देवतामिव नन्दने । ततो बहुविधां चिन्तां चिन्तयामास वानरः ॥ २ ॥
यां कपीनां सहस्राणि सुबहून्ययुतानि च । दिक्षु सर्वासु मार्गन्ते सेयमासादिता मया ॥ ३ ॥

---

रा० टी०–एतैरिति । प्राक् मिथिलास्थितिसमयेऽपि साधुसिद्धैः सम्यगनुभूतैः एतैरुक्तैरपरैश्च निमित्तैः संचोदिता त्वत्कार्यसिद्धिर्जातेति बोधिता सुभ्रूः सीता वातातपक्लान्तमत एव प्रनष्टं वर्षेण चोदितं बीजमिव प्रतिसंजहर्ष ॥ ६ ॥

गो० टी०–एतैरिति । अपरैः पूर्वोक्तशकुनैः संबोधिता सद्यः कान्तागमनवार्ता भविष्यतीति बोधिता वातातपक्लान्तं सम्यग्वातातपसंशोषितम् प्रणष्टं भूमावदर्शनं गतम् । यद्वा प्रणष्टं प्रकर्षेण कृशीभूतम् बीजं वर्षेणेव प्रतिसंजहर्ष । बीजस्य प्रहर्षो नाम अङ्कुरादिभावेन स्थूलीभूय बहिर्निर्गमः ॥ ६ ॥

७ ] ति० टी०–शोभने अक्षिणी भ्रुवौ केशान्ता अलकाश्च यत्र तत् सितशुक्लदंष्ट्रं स्फटिकादिसितपदार्थवच्छुक्ला दंष्ट्रा यत्र तत्संबद्धशुक्लदंष्ट्रावदिति च ॥ ७ ॥

रा० टी०–तस्या इति । विम्बफलोपमौ ओष्ठौ यस्मिन् शोभने अक्षिणी भ्रुवौ च यस्मिन् केशानामन्तः अलको यस्मिन् अरालानि वक्राणि पक्ष्माणि यस्मिन् सिताः स्वच्छाः शुक्लदंष्ट्रा यस्मिंस्तत् तस्या वक्त्रं राहोर्मुखात् प्रमुक्तः चन्द्र इव बभासे॥७॥

गो० टी०–तस्या इति । स्वक्षिभ्रु शोभनाक्षिभ्रूयुक्तम् केशाः अन्ते यस्य तत् केशान्तम् उपरिभागप्रकीर्णालकमित्यर्थः । सितशुक्लदंष्ट्रम् अत्यन्तशुक्लदन्तम् एकार्थे शब्दद्वयप्रयोगोऽतिशयज्ञापनाय । यथा मुग्धमनोज्ञ इति । नीरन्ध्रत्वेन संसक्तशुक्लदंष्ट्रमिति वार्थः । "पिन्, बन्धने" इत्यस्माद्धातोर्निष्ठा ॥ ७ ॥

८ ] ति० टी०–हर्षेण विबुद्धं सत्त्वं चित्तं यस्याः । वदनेन करणेन । शुक्ले शुक्लपक्षे ॥ ८ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये सुन्दरकाण्डे एकोनत्रिंशः सर्गः ॥ २९ ॥

रा० टी०–सेति । वीतो व्यतीतः शोको यस्याः व्यपनीता गता तन्द्रा यस्याः शान्तो ज्वरो मनस्तापो यस्याः हर्षेण विबुद्धं प्रकाशितं सत्त्वं चित्तं यस्याः सा आर्या सीता शुक्ले सितपक्षे शीतांशुना चन्द्रेण रात्रिरिव वदनेनाशोभत ॥ ८ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ सुन्दरकाण्डे एकोनत्रिंशः सर्गः ॥ २९ ॥

गो० टी०–सेति । व्यपनीततन्द्री निरस्तजाड्या हर्षविबुद्धसत्त्वा हर्षविकसितचित्ता शुक्ले शुक्लपक्षे ॥ ८ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने एकोनत्रिंशः सर्गः ॥ २९ ॥

---

१ ] ति० टी०–विक्रान्तः शूरः । सीतायास्त्रिजटायाः [ च ] स्वप्नकथनमिति शेषः ॥ १ ॥

रा० टी०–हनुमद्वृत्तान्तमाह–हनूमानित्यादिभिः । विक्रान्तः अतिविक्रमवान् हनुमान् सीतायाः विलापं त्रिजटायाः स्वप्नं राक्षसीनां तर्जितं च सर्वं तत्त्वतः शुश्राव ॥ १ ॥

गो० टी०–हनुमानपीत्यादि । विक्रान्तः पराक्रमशाली सीतायास्त्रिजटायाश्च सर्वं सर्ववृत्तान्तम् तर्जनं तर्जनवचनम् ॥ १ ॥

२–३ ] ति० टी०–चिन्तां चिन्तयामास चिन्तां चकारेत्यर्थः ॥ २ ॥ ३ ॥

रा० टी०–अवेक्षमाण इति । नन्दने देवतामिव तां सीतामवेक्षमाणो हनुमान् बहुविधाम् अनेकप्रकारां चिन्तां चिन्तयामास चकार ॥ २ ॥

गो० टी०–आवेक्षमाण इति । चिन्तां चिन्तयामास चिन्तां चकार ॥ २ ॥

रा० टी०–तदाकारमाह–यामिति । यां सीतां कपीनां

---

१ फलाधरोष्ठमिति गो. पाठः । २ तन्द्रीति गो. पाठः । ३ राक्षसीनां च तर्जनमिति गो. पाठः ।

चारेण तु सुयुक्तेन शत्रोः शक्तिमवेक्षता । गूढेन चरता तावदवेक्षितमिदं मया ॥ ४ ॥
राक्षसानां विशेषश्च पुरी चेयं [1]निरीक्षिता । राक्षसाधिपतेरस्य प्रभावो रावणस्य च ॥ ५ ॥
[2]यथा तस्याप्रमेयस्य सर्वसत्त्वदयावतः । समाश्वासयितुं भार्यां पतिदर्शनकाङ्क्षिणीम् ॥ ६ ॥
अहमाश्वासयाम्येनां पूर्णचन्द्रनिभाननाम् । अदृष्टदुःखां [3]दुःखस्य न ह्यन्तमधिगच्छतीम् ॥ ७ ॥
यदि [4]ह्यहं सतीमेनां शोकोपहतचेतनाम् । अनाश्वास्य गमिष्यामि दोषवद्गमनं भवेत् ॥ ८ ॥
गते हि मयि तत्रेयं राजपुत्री यशस्विनी । परित्राणम[5]पश्यन्ती जानकी जीवितं त्यजेत् ॥ ९ ॥
यथा च स महाबाहुः पूर्णचन्द्रनिभाननः । समाश्वासयितुं न्याय्यः सीतादर्शनलालसः ॥ १० ॥
निशाचरीणां प्रत्यक्षम[6]क्षमं चाभिभाषितम् । कथं नु खलु कर्तव्यमिदं कृच्छ्रगतो ह्यहम् ॥ ११ ॥
अनेन रात्रिशेषेण यदि नाश्वास्यते मया । सर्वथा नास्ति संदेहः परित्यक्ष्यति जीवितम् ॥ १२ ॥

---

बहूनि सहस्राणि अयुतानि च सर्वासु दिक्षु मार्गन्ते सा इयं मया आसादिता प्राप्ता ॥ ३ ॥

गो० टी०–यामिति । सर्ववानराभिलषितोऽर्थो मयैकेन लब्ध इति विस्मितवान् ॥ ३ ॥

४ ] ति० टी०–चारेण चारात्मना प्रवर्तमानेन । इदं वक्ष्यमाणम् ॥ ४ ॥

रा० टी०–चारेणेति । सुप्रयुक्तेन स्वामिना नियुक्तेन अत एव शत्रोः शक्तिम् अवेक्षता अत एव गूढेन रूपेण चरता चारेण मया तावत्प्रथमम् इदं वृत्तमवेक्षितं ज्ञातम् ॥४॥

गो० टी०–चारेणेति । इदं वक्ष्यमाणम् । तावत्कात्स्न्येंन ॥ ४ ॥ ५ ॥

५ ] ति० टी०–राक्षसानां विशेषः, तारतम्यमैश्वर्यादिकृतम् । अस्य रावणस्य प्रभावश्चात्रेक्षितः ॥ ५ ॥

रा० टी०–राक्षसानामिति । राक्षसानां विशेषः न्यूनाधिकभावो रावणस्य प्रभावश्च निरीक्षित इति लिङ्गविपरिणामेनान्वयः ॥ ५ ॥

६ ] ति० टी०–अप्रमेयस्यापरिच्छेद्यस्वरूपस्यापरिच्छेद्यगुणस्य च सर्वसत्त्वदयावतः सर्वं सत्त्वं बलं दया च यस्य सर्वसत्त्वेषु दयावत इति वा । दयावत्त्वादेव सीतार्थे त्रैलोक्यानाशनं रामस्य । समाश्वासयितुं । युक्तमिति शेषः ॥ ६ ॥

रा० टी०–यथेति । अप्रमेयस्य इयत्तारहितप्रभावस्य सर्वसत्त्वदयावतः रामस्य आश्वासयितुं योग्यामिति शेषः, पतिदर्शनकाङ्क्षिणीं भार्यां न दृष्टं दुःखं यया दुःखस्यान्तमवसानम् अगच्छतीम् अगच्छन्तीमेनां सीताम् अहमाश्वासयामि आश्वासयिष्यामि । श्लोकद्वयमेकान्वयि ॥ ६ ॥ ७ ॥

गो० टी०–युक्तमिति । समाश्वासयितुं युक्तं न्याय्यम् ॥ ६ ॥

७ ] ति० टी०–आश्वासयामि वर्तमानसामीप्ये भविष्यति लट् । नहि नापि ॥ ७ ॥

गो० टी०–अहमिति । आश्वासयामि "वर्तमानसामीप्ये वर्तमानवद्वा" इति लट् ॥ ७ ॥ ८ ॥

८ ] ति० टी०–दोषवत्कार्यहानिदोषवत् ॥ ८ ॥

रा० टी०–तत्र हेतुमाह–यदीति । एनां सतीम् अनाश्वास्य यद्यहं गमिष्यामि तदा मे गमनं दोषवद्दोषविशिष्टं भवेत् ॥ ८ ॥

९ ] ति० टी०–तदेवाह–गते हीति । तत्र रामसमीपे ॥ ९ ॥

रा० टी०–दोषाकारमाह–गते इति । तत्र तस्मिन् मयि गते सति परित्राणं स्वरक्षाम् अपश्यन्ती जानकी जीवितं त्यजेत् ॥ ९ ॥

गो० टी०–दोषवत्त्वमुपपादयति–गते हीति ॥ ९ ॥

१० ] ति० टी०–आश्वासयितुं सीतासंदेशकथनेन तथेयमप्याश्वासयितुं न्याय्येति शेषः ॥ १० ॥

रा० टी०–यथेति । सीतादर्शनलालसः स रामः यथावत्समाश्वासयितुं सीतासंदेशकथनेन बोधयितुं युक्तः । एतेन सीतासंभाषणमवश्यं कर्तव्यमिति सूचितम् ॥ १० ॥

गो० टी०–मयेति । समाश्वासयितुं न्याय्यः सीतासंदेशकथनेनेति शेषः ॥ १०–१२ ॥

११ ] ति० टी०–सीतासमाश्वासनं च कष्टमित्याह–निशाचरीणामिति । तासां प्रत्यक्षं सीताया अभिभाषणमक्षममयोग्यम्, अत इदं कार्यं कथं कर्तव्यमित्येवं कृच्छ्रगतोऽहमस्मि ॥ ११ ॥

रा० टी०–सीतासमाश्वासनं दुष्करमित्याह–निशाचरीणामिति । निशाचरीणां प्रत्यक्षं अभिभाषितम् अभिभाषणम् अक्षमं न योग्यम् । अतः इदमनुशासनं मया कथं कर्तव्यमिति चिन्तया कृच्छ्रगतोऽहमस्मीति शेषः ॥ ११ ॥

१२ ] ति० टी०–कालविलम्बश्चाश्वासनस्यायुक्त इत्याह–अनेनेति ॥ १२ ॥

रा० टी०–अनेनेति । अनेन रात्रिशेषेण यदि सर्वथा नाश्वास्यते तर्हि जीवितं परित्यक्ष्यति संदेहः अत्र संशयो नास्ति ॥ १२ ॥

---

१ अवेक्षितेति गो. पाठः । २ युक्तमिति गो. पाठः । ३ दुःखार्ता दुःखस्यान्तमगच्छतीमिति गो. पाठः । ४ अप्यहमिमां देवीमिति गो. पाठः । ५ अविन्दन्तीति गो. पाठः । ६ अनर्हं चापि आपन्नमिति गो. पाठः ।

रामस्तु यदि पृच्छेन्मां किं मां सीताऽब्रवीद्वचः । किमहं तं प्रतिब्रूयामसंभाष्य सुमध्यमाम् ॥ १३ ॥
सीतासंदेशरहितं मामितस्त्वरया गतम् । निर्दहेदपि काकुत्स्थः क्रोधतीव्रेण चक्षुषा ॥ १४ ॥
यदि वोद्योजयिष्यामि भर्तारं रामकारणात् । व्यर्थमागमनं तस्य ससैन्यस्य भविष्यति ॥ १५ ॥
अन्तरं त्वहमासाद्य राक्षसीनामिवस्थितः । शनैराश्वासयाम्यद्य संतापबहुलामिमाम् ॥ ॥ १६ ॥
अहं ह्यतितनुश्चैव वानरश्च विशेषतः । वाचं चोदाहरिष्यामि मानुषीमिह संस्कृताम् ॥ १७ ॥
यदि वाचं प्रदास्यामि द्विजातिरिव संस्कृताम् । रावणं मन्यमाना मां सीता भीता भविष्यति ॥ १८ ॥
[ वानरस्य विशेषेण कथं स्यादभिभाषणम् । ]
अवश्यमेव वक्तव्यं मानुषं वाक्यमर्थवत् । मया सान्त्वयितुं शक्या नान्यथेयमनिन्दिता ॥ १९ ॥
सेयमालोक्य मे रूपं जानकी भाषितं तथा । रक्षोभिस्त्रासिता पूर्वं भूयस्त्रासमुपैष्यति ॥ २० ॥

---

१३-१४ ] ति० टी०–संभाषणं चावश्यकमित्याह–रामस्त्विति । मामुद्दिश्य सीता किमब्रवीदिति चेद्रामो मां पृच्छेदित्यन्वयः ॥ १३ ॥ १४ ॥

रा० टी०–राम इति । सीता मां किमब्रवीत् इति रामो यदि मां पृच्छेत्तदा सुमध्यमां सीताम् असंभाष्य किं प्रतिब्रूयाम् ॥ १३ ॥

रा० टी०–सीतेति । सीतासंदेशरहितं मां काकुत्स्थो रामः निर्दहेदपि ॥ १४ ॥

गो० टी०–रामश्चेति । सीताब्रवीद्वच इत्यत्रेतिकरणं द्रष्टव्यम् ॥ १३ ॥ १४ ॥

१५ ] ति० टी०–यद्येनामसंभाष्यैव भर्तारं स्वस्वामिनं सुग्रीवं रामकारणाद्यदि वोद्योजयिष्याम्युद्योगं कारयिष्यामि तर्हि तदागमनं व्यर्थं स्यात् । अनाश्वासितया सीतया ततः प्रागेव देहत्यागादिति भावः ॥ १५ ॥

रा० टी०–आश्वासनमन्तरा महाननर्थो भविष्यतीति निश्चित्याह–यदीति । रामकारणात् रामप्रयोजनाद्धेतोः यदि भर्तारं सुग्रीवम् उद्योजयिष्यामि तर्हि ससैन्यस्य तस्य सुग्रीवस्यागमनं व्यर्थं भविष्यति एतेन आश्वासनमन्तरा सीता जीवनं नैव भविष्यतीति सूचितम् तेन सीताऽवश्यमाश्वासनीयेति व्यञ्जितम् ॥ १५ ॥

गो० टी०–यदि चेति । भर्तारं सुग्रीवम् । व्यर्थम् अनाश्वास्य गमने तदागमनपर्यन्तं देव्याः प्राणानवस्थानादिति भावः ॥ १५ ॥

१६ ] ति० टी०–अन्तरमवकाशं तासामनवधानसमयम् ॥ १६ ॥

रा० टी०–अन्तरमिति । राक्षसीनां मध्ये अवस्थितोऽहम् अन्तरमवकाशं राक्षसीनामवधानतामित्यर्थः आसाद्य प्राप्य संतापबहुलां सीतां शनैराश्वासयामि ॥ १६ ॥

गो० टी०–अन्तरमिति । राक्षसीनाम् अन्तरम् अवकाशं विच्छेदं वा । राक्षस्यसंनिधानसमयमित्यर्थः ॥ १६ ॥

१७ ] ति० टी०–तत्राश्वासनोपायं निश्चिनोति–अहं हीति । अतितनुरतिसूक्ष्मवानरतनुरेव सन्मानुषीं मनुष्यशरीरसाध्यां संस्कृतां व्याकरणसंस्कारवतीम् ॥ १७ ॥

रा० टी०–अहमिति । वानरः वानररूपोऽहम् अतितनुः अतिसूक्ष्मशरीरः सन् संस्कृतां व्याकरणसंस्कारयुक्तां वाचमुदाहरिष्यामि ॥ १७ ॥

गो० टी०–अहं त्विति । अतितनुः अतिसूक्ष्मतनुः । संस्कृतां प्रयोगसौष्ठवलक्षणसंस्कारयुक्ताम् ॥ १७ ॥

१८ ] ति० टी०–संस्कृतकथने दोषमाशङ्क्य मनुष्यभाषयैव व्यवहर्तव्यमिति निश्चिनुते–यदीति ॥ १८ ॥

रा० टी०–वानररूपत्वे हेतुमाह–यदीति । यदि द्विजातिर्ब्राह्मण इव संस्कृतां वाचं प्रवक्ष्यामि तदा मां रावणं मन्यमाना सीता भीता भविष्यति एतेनापहरणसमयकृततद्रूपस्य स्मृतिर्भविष्यतीति सूचितम् ॥ १८ ॥

गो० टी०–गीर्वाणभाषया व्यवहारे दोषमाह–यदीति ॥ १८ ॥

१९ ] ति० टी०–तदेवाह–अवश्यमेवेति ॥ १९ ॥

रा० टी०–ननु वानरवाक्येनैवोच्यतामित्यत आह–अवश्यमिति । मानुषमेव वाक्यं मयावश्यं वक्तव्यम् अन्यथा इयं सान्त्वयितुं न शक्या ॥ १९ ॥

गो० टी०–अथ मानुषभाषया व्यवहर्तव्यत्वं निश्चिनोति–अवश्यमिति । अत्र वाक्यस्य मानुषत्वं कोसलदेशवर्तिमनुष्यसंबन्धित्वं विवक्षितम् । तादृग्वाक्यस्यैव देवीपरिचितत्वात् ॥ १९ ॥

२० ] ति० टी०–अथ वृक्षान्तरितेनैवेयं मया वक्तव्येति निश्चयं कुर्वन्पुरतो गत्वाऽभिभाषणे दोषपरम्परामुपन्यस्यति–सेयमिति । मे रूपं वानरीयं पुरतो दृष्ट्वा भाषितं च मानुषं श्रुत्वा विरुद्धव्यापारदर्शनाद्रावणोऽयमिति मत्वा त्रासं गमिष्यति ॥ २० ॥

रा० टी०–सेति । मे रूपं वानरस्वरूपं भाषितं मनुष्यवचनं च आलोक्य ज्ञात्वा पूर्वं रक्षोभिः त्रासिता सीता भूयः

---

१ क्रुद्धस्तीव्रेणेति गो. पाठः । २ इहेति गो. पाठः । ३ आश्वासयिष्यामीति गो. पाठः । ४ अर्धमेतदधिकं गो. पाठे ।

ततो जातपरित्रासा शब्दं कुर्यान्मनस्विनी । जानाना मां विशालाक्षी रावणं कामरूपिणम् ॥ २१ ॥
सीतया च कृते शब्दे सहसा राक्षसीगणः । नानाप्रहरणो घोरः समेयादन्तकोपमः ॥ २२ ॥
ततो मां संपरिक्षिप्य सर्वतो विकृताननाः । वधे च ग्रहणे चैव कुर्युर्यत्नं महाबलाः ॥ २३ ॥
[3]तं मां शाखाः प्रशाखाश्च स्कन्धांश्चोत्तमशाखिनाम् । दृष्ट्वा च परिधावन्तं भवेयुः परिशङ्किताः ॥ २४ ॥
मम रूपं च संप्रेक्ष्य वने विचरतो महत् । राक्षस्यो भयवित्रस्ता भवेयुर्विकृतस्वराः ॥ २५ ॥
ततः कुर्युः समाह्वानं राक्षस्यो रक्षसामपि । राक्षसेन्द्रनियुक्तानां राक्षसेन्द्रनिवेशने ॥ २६ ॥
ते शूलशरनिस्त्रिंशविविधायुधपाणयः । आपतेयुर्विमर्देऽस्मिन्वेगेनोद्वेगकारणात् ॥ २७ ॥
संरुद्धस्तैस्तु परितो विधमे[7] राक्षसं बलम् । शक्नुयां न तु संप्राप्तुं परं पारं महोदधेः ॥ २८ ॥
मां वा गृह्णीयुराप्लुत्य बहवः शीघ्रकारिणः । स्यादियं चागृहीतार्था मम च ग्रहणं भवेत् ॥ २९ ॥

---

पुनः त्रासं राक्षसस्यैवायं रूपविशेष इति विचारजनितखेदमुपेष्यति ॥ २० ॥

गो० टी०—एवं मानुषभाषया व्यवहर्तव्यत्वं निश्चित्य संप्रति तयापि भाषयाऽनेन वानररूपेण पुरः स्थित्वाभिभाषणे दोषोऽस्तीति विचारयति—सेयमिति ॥ २० ॥

२१ ] ति० टी०—किं ततस्तत्राह—ततो जातेति । शब्दमार्तशब्दम् ॥ २१ ॥

रा० टी०—तत इति । ततोऽनन्तरं जातपरित्रासा सीता मां रावणं जानाना सती शब्दं कुर्यात् ॥ २१ ॥

गो० टी०—तत इति । जानमाना जानाना मुमागम आर्षः ॥२१–२३॥

२२ ] ति० टी०—समेयान्मत्संमुखो गच्छेन्मिलितो भवेद्वा ॥ २२ ॥

रा० टी०—शब्दकरणे दोषमाह—सीतयेति । सीतया शब्दे कृते सति नानाप्रहरणः राक्षसीगणः समेयात् ॥ २२ ॥

२३] ति०टी०—संपरिक्षिप्य सर्वतश्चक्षुर्विक्षेपेण ज्ञात्वा॥२३

रा०टी०—तत इति । ततोऽनन्तरं मां सर्वतः संपरिक्षिप्य चक्षुःप्रक्षेपेणावलोक्य वधे ग्रहणे च यत्नं कुर्युः ॥ २३ ॥

२४ ] ति० टी०—शाखाः परिधावन्तं मां दृष्ट्वेत्यन्वयः॥२४॥

रा० टी०—तमिति । उत्तमशाखिनां शाखादीन् धावन्तं मां दृष्ट्वा परिशङ्किताः भवेयुः शाखादीनां स्थूलसूक्ष्मादिभेदेन भेदान्न पौनरुक्त्यम् ॥ २४ ॥

गो० टी०—गृह्येति । प्रशाखाः उपशाखाः । विपरिधावन्तं मामिति शेषः ॥२४–२६॥

२५ ] ति० टी०—ताभिरप्रधर्षणार्थं परिगृहीतं मम महद्रूपं संप्रेक्ष्य भयवित्रस्ता भयेन मद्दर्शनजशरीरकम्पादियुताः सत्यस्तत्रस्तचित्ता विकृतस्वरा भवेयुः । न केवलमयं शाखामृगः, अपि तु कश्चन कामरूपी शत्रुपक्ष्य इति शङ्किताः स्युरित्यर्थः ॥ २५ ॥

रा० टी०—ममेति । वने विचरतो मम रूपं संप्रेक्ष्य भयवित्रस्ता राक्षस्यो विकृतस्वरा भवेयुः ॥ २५ ॥

२६ ] ति० टी०—ततः किं तत्राह—ततः कुर्युरिति । राक्षसेन्द्रनिवेशने रक्षणाय राक्षसेन्द्रेण नियुक्तानामाह्वानं कुर्युः ॥ २६ ॥

रा० टी०—तत इति । ततः कृतविकृतस्वरानन्तरं राक्षस्यः राक्षसेन्द्रनिवेशने राक्षसेन्द्रनियुक्तानां रक्षसां समाह्वानं कुर्युः ॥ २६ ॥

२७ ] ति० टी०—उद्वेगकारणात् । आसामुद्वेगरूपान्निमित्तादस्मिन्देशे वेगेन विमर्दं विमर्दायापतेयुरित्यर्थः ॥२७॥

रा० टी०—ते इति । शूलादिपाणयस्ते अस्मिन् विमर्दे विमर्दहेतुभूते शब्दे सति उद्वेगकारणात् उद्वेगकरणार्थं वेगेन आपतेयुः ॥ २७ ॥

गो० टी०—त इति । उद्विग्नकारिणः उद्वेगकारिणः ॥२७॥

२८ ] ति० टी०—न शक्नुयाम् । युद्धश्रान्त्येति भावः॥२८॥

रा० टी०—संरुद्ध इति । तैः राक्षसबलैः संरुद्धोऽहं राक्षसं बलं विधमे विनाशयामि परन्तु महोदधेः पारं प्राप्तुं न शक्नुयां सीतया मम संभाषणादि ज्ञात्वा राक्षसैः सीताया अपि वधे समुद्रपारयोग्यता न भविष्यतीति तात्पर्यम् ॥ २८ ॥

गो० टी०—संरुद्ध इति । तैः परितः संरुद्धः अत एव रक्षसां बलम् विधमन् प्रहरन् अहं महोदधेः परं पारं प्राप्तुं न शक्नुयामित्यन्वयः ॥ २८ ॥

२९ ] ति० टी०—अगृहीतार्था मत्तोऽज्ञातमदागमनप्रयोजना ॥ २९ ॥

रा० टी०—मामिति । शीघ्रकारिणः बहवो राक्षसाः यदि मां गृह्णीयुः ग्रहणानुकूलव्यापारं कुर्युः मम च ग्रहणं भवेत् तदा इयं सीता अगृहीतार्था अज्ञातमदागमनप्रयोजना भवेत् ॥२९॥

गो० टी०—मामिति । अगृहीतार्था अविदितरामसंदेशार्था ॥ २९ ॥ ३० ॥

---

१ जानमानेति गो. पाठः । २ यथाबलमिति गो. पाठः । ३ गृह्येति गो. पाठः । ४ विकृतानना इति गो. पाठः । ५ शक्तीति गो. पाठः । ६ उद्विग्नकारिण इति गो. पाठः । ७ विधमन्निति गो. पाठः ।

हिंसाभिरुचयो हिंस्युरिमां वा जनकात्मजाम् । विपन्नं स्यात्ततः कार्यं रामसुग्रीवयोरिदम् ॥ ३० ॥
उद्देशे नष्टमार्गेऽस्मिन्राक्षसैः परिवारिते । सागरेण परिक्षिप्ते गुप्ते वसति जानकी ॥ ३१ ॥
विशस्ते वा गृहीते वा रक्षोभिर्मयि संयुगे । नाशं पश्यामि रामस्य सहायं कार्यसाधने ॥ ३२ ॥
विमृशंश्च न पश्यामि यो हते मयि वानरः । शतयोजनविस्तीर्णं लङ्घयेत महोदधिम् ॥ ३३ ॥
कामं हन्तुं समर्थोऽस्मि सहस्राण्यपि रक्षसाम् । न तु शक्ष्याम्यहं प्राप्तुं परं पारं महोदधेः ॥ ३४ ॥
असत्यानि च युद्धानि संशयो मे न रोचते । कश्च निःसंशयं कार्यं कुर्यात्प्राज्ञः ससंशयम् ॥ ३५ ॥
एष दोषो महान्हि स्यान्मम सीताभिभाषणे । प्राणत्यागश्च वैदेह्या भवेदनभिभाषणे ॥ ३६ ॥
भूताश्चार्था विरुद्ध्यन्ति देशकालविरोधिताः । विक्लवं दूतमासाद्य तमः सूर्योदये यथा ॥ ३७ ॥
अर्थानर्थान्तरे बुद्धिर्निश्चिताऽपि न शोभते । घातयन्ति हि कार्याणि दूताः पण्डितमानिनः ॥ ३८ ॥
न विनश्येत्कथं कार्यं वैक्लव्यं न कथं मम । लङ्घनं च समुद्रस्य कथं नु न वृथा भवेत् ॥ ३९ ॥

---

३० ] ति० टी०—इमां वेति । एतदर्थं किलायमागत इत्याशयेनेति शेषः ॥ ३० ॥

रा० टी०—हिंसेति । वा यदि हिंसाभिरुचयो राक्षसाः जनकात्मजां हिंस्युस्ततस्तदा इदं सीताप्रभरूपं रामसुग्रीवयोः कार्यं विपन्नं विनष्टं स्यात् ॥ ३० ॥

३१ ] ति० टी०—कार्यविपदमेवोपपादयति—उद्देशे समुद्रलङ्घनप्राप्यदेशे । नष्टमार्गे प्रकारान्तरेणैतत्प्राप्तिसंपादकमार्गरहिते ॥ ३१ ॥

रा० टी०—उद्देश इति । नष्टः अन्यैः अपरिज्ञातः मार्गो यस्मिन् तस्मिन् अत एव गुप्ते अपरिज्ञाते सागरेण परिक्षिप्ते चतुर्दिक्षु व्याप्ते राक्षसैः परिवारिते अस्मिन् उद्देशे उत्कृष्टस्थले जानकी वसति तेनान्यैर्द्रष्टुमप्यशक्यमिति सूचितम् ॥ ३१ ॥

गो० टी०—उद्देश इति । उद्देशे प्रदेशे नष्टमार्गे अदृष्टमार्गे उक्तविशेषणे उद्देशे वसतीत्यन्वयः ॥ ३१ ॥

३२-३३ ] ति० टी०—विशस्ते हते ॥ ३२ ॥ ३३ ॥

रा० टी०—विशस्त इति । रक्षोभिर्मयि विशस्ते हिंसिते गृहीते वा सति रामस्य कार्यसाधने अन्यं सहायं न पश्यामि एतेन सर्वेषां शोकग्रस्तत्वेन क्षीणबलादिमत्त्वं सूचितम् ॥ ३२ ॥

गो० टी०—विशस्ते वेति । सहाय एव साहाय्यः[1] तम् । कार्यसाधने सीतादर्शननिवेदनलक्षणकार्यसाधने ॥ ३२ ॥

रा० टी०—विमृशन्निति । यो वानरः महोदधिं लङ्घयेत तं विमृशन् विचारयन्नहं न पश्यामि ॥ ३३ ॥

गो० टी०—विमृशन्निति । यो लङ्घयेत तं न पश्यामीत्यन्वयः ॥ ३३ ॥ ३४ ॥

३४ ] ति० टी०—न तु शक्ष्यामि । युद्धश्रान्त्येति भावः ॥ ३४ ॥

रा० टी०—ननु त्वमेव कार्यं साधयेत्यत आह—काममिति । रक्षसां सहस्राणि अनन्तराक्षसान् हन्तुं कामं समर्थोऽस्मि तथापि महोदधेः परं पारं प्राप्तुं न शक्ष्यामि सीतामरणशङ्कया क्षीणशक्तिर्भविष्यामीति तात्पर्यम् ॥ ३४ ॥

३५ ] ति० टी०—किं च युद्धे जयोऽपि संदिग्ध इत्याह—असत्यानीति । अनिश्चितजयानि । संशयः संशयितजयफलकयुद्धव्यापारः । अरुचिहेतुप्राज्ञत्वमेव दर्शयति—कश्चेति । निःसंशयं निर्णीतफलकम् । प्राज्ञो मादृशः ससंशयं संशयितफलकम् । न कोऽपीत्यर्थः ॥ ३९ ॥

रा० टी०—ननु राक्षसविघातानन्तरं जानकीप्राप्तिर्भविष्यत्येवेति किं संशयेनेत्यत आह—असत्यानीति । युद्धानि इदानीं राक्षसैः संग्रामाः असत्यानि जानकीजीवनविषयकसंशयाविष्टत्वेन असत्स्वरूपाणि सन्तीति शेषः एतेन इदानीं युद्धं न कर्तव्यमिति सूचितम् । इदानीं युद्धान्निवृत्तिरेव वरेति बोधयन्नाह—निःसंशयं संशयरहितं कार्यं संशयसहितं कः प्राज्ञः कुर्यात् न कोऽपीत्यर्थः ॥ ३६ ॥

गो० टी०—असत्यानीति । असत्यानि अनिश्चितजयापजयानि । क्लेशस्तु भूयानिति भावः । ततो नैतन्मम मतमित्याह—संशय इति । संशयः संशयितार्थः । स च संग्रामः अथापि तथाकरणे स एव कार्यहन्ता बुद्धिहीनो निन्दाभाजनं चेत्याशयेनाह—कश्चेति । प्राज्ञः कः ससंशयं कार्यम् निःसंशयं निर्विचारं कुर्यात् ॥ ३९ ॥

३६ ] ति० टी०—सीताभिभाषणे । पुरतः स्थित्वेति शेषः ॥ ३६ ॥

रा० टी०—एष इति । सीताभिभाषणे वैदेह्याः प्राणत्यागः राक्षसकर्तृकप्राणत्याजनम् अनभिभाषणे च प्राणत्यागः शोककर्तृकप्राणत्याजनम् एष महान् दोषो मम स्यात् ॥ ३६ ॥

गो० टी०—प्राणत्यागश्चेति । अनभिभाषणे रामसंदेशानिवेदने । एष दोषः पूर्वोक्तसीतासंत्रासाक्रोशतन्निमित्तराक्षसागमनादिः[2] । सीताभिभाषणे वानररूपेण पुरः स्थित्वाऽभिभाषणे[3] ॥ ३६ ॥

३७-३९ ] ति० टी०—भूताः सिद्धप्रायाः । भूता इत्यादिश्लोकावत्रैव काण्डे द्वितीयसर्गे व्याख्यातौ ॥ ३७-३९ ॥

रा० टी०—भूता इति । भूताः सिद्धप्रायाः अर्थाः विक्लव-

---

१ साहाय्यमिति गो. पाठः । २ नश्यन्तीति गो. पाठः । ३ भवेदिति गो. पाठः ।

कथं नु खलु वाक्यं मे शृणुयान्नोद्विजेत च । इति संचिन्त्य हनुमांश्चकार मतिमान्मतिम् ॥ ४० ॥
राममक्लिष्टकर्माणं सुबन्धुमनुकीर्तयन् । नैनामुद्वेजयिष्यामि तद्बन्धुगतचेतनाम् ॥ ४१ ॥
इक्ष्वाकूणां वरिष्ठस्य रामस्य विदितात्मनः । शुभानि धर्मयुक्तानि वचनानि समर्पयन् ॥ ४२ ॥
श्रावयिष्यामि सर्वाणि मधुरां प्रब्रुवन्गिरम् । श्रद्धास्यति यथा सीता तथा सर्वं समादधे ॥ ४३ ॥
इति स बहुविधं महाप्रभावो जगतिपतेः प्रमदामवेक्षमाणः ।
मधुरमवितथं जगाद वाक्यं द्रुमविटपान्तरमास्थितो हनूमान् ॥ ४४ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये सुन्दरकाण्डे त्रिंशः सर्गः ॥ ३० ॥

---

मनवधानं दूतमासाद्य प्राप्य देशकालविरोधिताः सन्तः सूर्योदये तम इव विरुध्यन्ति अन्यथा भवन्ति । एतेन दूतैरतिसावधानतया भवितव्यमिति सूचितम् ॥ ३७ ॥

गो० टी०–भूताश्चेति । भूताश्चार्थाः निष्पन्नार्थाः । विक्लवम् अविवेकिनम् दूतमासाद्य देशकालविरोधिताः सन्तः सूर्योदये तमो यथा विनश्यति तथा विनश्यन्तीति संबन्धः॥३७॥

रा० टी०–अर्थेति । हि यदि पण्डितमानिनो दूताः कार्याणि घातयन्ति तर्हि अर्थानर्थान्तरे कर्तव्याकर्तव्यविषये निश्चितापि स्वामिसचिवैर्निश्चयं प्रापितापि बुद्धिर्न शोभते यतः पण्डितमानिनः पण्डितंमन्याः दूताः कार्याणि घातयन्ति ॥ ३८ ॥

गो० टी०–अर्थेति । अत्र विक्लवं दूतमासाद्येत्यनुपज्यते । अर्थानर्थान्तरे कार्याकार्यविषये । निश्चितापि स्वामिना सचिवैः सह निश्चितापि बुद्धिः विक्लवं दूतमासाद्य न शोभते अकिंचित्कराभिभवतीत्यर्थः । एतदेवोपपादयति—घातयन्तीति ३८

रा० टी०–न विनश्येत्यादिश्लोकद्वयमष्टाविंशतितमे सर्गे व्याख्यातम् ॥ ३९ ॥ ४० ॥

गो० टी०–प्रागुक्ता दूतदोषाः स्वस्मिन्यथा न स्युस्तथा कर्तव्यमित्याह—न विनश्येदिति । कार्यं स्वामिकार्यं कथं केन प्रकारेण न विनश्येत् । वैक्लव्यं बुद्धिहीनता मम कथं न भवेत् । समुद्रलङ्घनं कथं न वृथा भवेत् । तथा कर्तव्यमिति शेषः ॥ ३९ ॥

४० ] ति० टी०–शृणुयात् सीतेति शेषः ॥ ४० ॥

गो० टी०–कथमिति । अथ सीतेत्यध्याहार्यम् । हनुमान् मे वाक्यं सीता कथं केन प्रकारेण शृणुयात्कथं नोद्विजेतेति विचार्य मतिमान् प्रशस्तमतिः मतिं तत्कालोचितकर्तव्यविषयां चकार निष्पादयामास ॥ ४० ॥

४१ ] ति० टी०–सुबन्धुम् । सीताया इति शेषः । स चासौ बन्धुश्चेति तद्बन्धुः । तद्बन्धौ रामे गता चेतना चित्तं यस्याः सा ॥ ४१ ॥

रा० टी०–स्वनिश्चयमाह—राममिति । अक्लिष्टकर्माणं क्लेशकारकक्रियारहितं स्वबन्धुं स्वस्याः सीतायाः बन्धुं प्रियं राममनुकीर्तयन्नहं तद्बन्धुगतमानसाम् एनां नोद्वेजयिष्यामि ॥ ४१ ॥

गो० टी०–राममिति । स्वबन्धुं राममनुकीर्तयन् "लक्षणहेत्वोः" इति हेत्वर्थे शतृप्रत्ययः । नैनामुद्वेजयिष्यामि एनां मद्रूपप्रदर्शनमन्तरेण रामस्य कीर्तनेनैवाद्विग्नां करिष्यामीत्यर्थः । तद्बन्धुगतमानसां स चासौ बन्धुश्च तद्बन्धुरामः तद्गतमानसाम् ॥ ४१–४३ ॥

४२ ] ति० टी०–वचनानि समर्पयन्रामसंदेशवचनान्युच्चारयन् ॥ ४२ ॥

रा० टी०–इक्ष्वाकूणामिति । इक्ष्वाकूणां वरिष्ठस्य रामस्य धर्मयुक्तानि वचनानि संदेशवाक्यानि समर्थयन् उच्चारयन् सन् तिष्ठामीति शेषः ॥ ४२ ॥

४३ ] ति० टी०–यथेयं श्रद्धास्यति तथा सर्वं समादधे सम्यगभिधास्ये ॥ ४३ ॥

रा० टी०–श्रावयिष्यामिति । मधुरां गिरं प्रब्रुवन् सन् सर्वाणि रामसंदेशवचनानि श्रावयिष्यामि यथा येन प्रकारेण सीता श्रद्धास्यति रामवचनत्वेन श्रद्धां करिष्यति तथा सर्वं सीतायाः आशङ्कितजातं समादधे प्रत्युत्तरयामि ॥ ४३ ॥

४४ ] ति० टी०–जगतिपतेरिति ह्रस्व आर्षः ॥ ४४ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये सुन्दरकाण्डे त्रिंशः सर्गः ॥ ३० ॥

रा० टी०–इतीति । जगतिपतेर्जगतीपतेर्निखिलब्रह्माण्डस्वामिनो रामस्य प्रमदामवेक्षमाणः अत एव द्रुमविटपान्तरं तरुशाखामध्यम् आस्थितो हनुमान् मधुरं शोभनवर्णादिजनितमाधुर्यविशिष्टम् अवितथं मृषासंसर्गशून्यं वाक्यं जगाद॥४४॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ सुन्दरकाण्डे त्रिंशः सर्गः ॥ ३० ॥

गो० टी०–इतीति । जगतिपतेरिति दीर्घाभाव आर्षः । जगादेति वक्ष्यमाणसर्गार्थसंग्रहः ॥ ४४ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने त्रिंशः सर्गः ॥ ३० ॥

---

१ वेति गो. पाठः । २ ममसौमिति गो. पाठः । ३ महानुभाव इति गो. पाठः ।

## एकत्रिंशः सर्गः ।

शिंशपास्थेन हनुमता मानुषीं भारतीमाश्रित्य रामजननादारभ्य स्वीयसीतादर्शनान्तं प्रतिपादितवृत्तं श्रुत्वा हर्षनिर्भरा सीता सर्वतश्चक्षुश्चालनेन निर्वर्णयन्ती शिंशुपाशाखास्थं हनुमन्तं विलोकयति ।

एवं बहुविधां चिन्तां चिन्तयित्वा महामतिः । संश्रवे मधुरं वाक्यं वैदेह्या व्याजहार ह ॥ १ ॥
राजा दशरथो नाम रथकुञ्जरवाजिमान् । पुण्यशीलो महाकीर्तिरिक्ष्वाकूणां महायशाः ॥ २ ॥
[ राजर्षीणां गुणश्रेष्ठस्तपसा चर्षिभिः समः । चक्रवर्तिकुले जातः पुरन्दरसमो बले ॥ ]
अहिंसारतिरक्षुद्रो घृणी सत्यपराक्रमः । मुख्यस्येक्ष्वाकुवंशस्य लक्ष्मीवाँल्लक्ष्मिवर्धनः ॥ ३ ॥
पार्थिवव्यञ्जनैर्युक्तः पृथुश्रीः पार्थिवर्षभः । पृथिव्यां चतुरन्तायां विश्रुतः सुखदः सुखी ॥ ४ ॥
तस्य पुत्रः प्रियो ज्येष्ठस्ताराधिपनिभाननः । रामो नाम विशेषज्ञः श्रेष्ठः सर्वधनुष्मताम् ॥ ५ ॥
रक्षिता स्वस्य वृत्तस्य स्वजनस्यापि रक्षिता । रक्षिता जीवलोकस्य धर्मस्य च परंतपः ॥ ६ ॥
तस्य सत्याभिसंधस्य वृद्धस्य वचनात्पितुः । सभार्यः सह च भ्रात्रा वीरः प्रव्रजितो वनम् ॥ ७ ॥
तेन तत्र महारण्ये मृगयां परिधावता । राक्षसा निहताः शूरा बहवः कामरूपिणः ॥ ८ ॥
जनस्थानवधं श्रुत्वा निहतौ खरदूषणौ । ततस्त्वमर्षापहृता जानकी रावणेन तु ॥ ९ ॥

१-२ ] ति० टी०-चिन्तां चिन्तयित्वा चिन्तां कृत्वा कर्तव्यमर्थं निश्चित्येति यावत् । संश्रवे सम्यक्श्रवणयोग्ये समीपदेशे । यत्रोक्तं सीतैव शृणुयान्नान्य इत्यर्थः । व्याजहार वृत्तान्तमिति शेषः ॥ १ ॥ २ ॥

३ ] ति० टी०-मुख्यस्य राजवंशेषु श्रेष्ठस्य । लक्ष्मिवर्धन इति ह्रस्व आर्षः ॥ ३ ॥

रा० टी०-सीतां श्रावयितुं हनुमत्कर्तृकदशरथादिसंकीर्तनमाह-एवमित्यादिभिः । महामतिः हनुमान् वैदेह्याः संश्रवे संश्रवणार्थं मधुरं वाक्यं व्याजहार ॥ १ ॥

गो० टी०-एवमित्यादि । चिन्तां चिन्तयित्वा चिन्तां कृत्वा कर्तव्यमर्थं निश्चित्येत्यर्थः । संश्रवे सम्यक् श्रूयतेऽस्मिन्निति संश्रवः समीपं समीपे व्याजहार । यद्वा पाठ्ये गेये च मधुरमिति संश्रवे श्रवणे मधुरं ज्ञानप्रसरणद्वारा इन्द्रियेभ्यो निस्सृत्य विषयान् गृहीत्वा तदनन्तरं हि रसो जायते लोके अत्र न तथा यत्र शब्दसंसर्गो जायते तत्र रसो जायत इत्यतिशयोक्तिः । मधुरं ज्ञानमपि तद्द्वारा रसजनकं वाक्यं पूर्वापरनिरूपणं विना स्वयं रसजनकं वैदेह्याः वैदेहीनिमित्तम् । कुलानुरोधेन देहे निस्स्पृहायाः देहमपि दत्त्वा रसावहत्वमुच्यते ॥ १ ॥

रा० टी०-तद्वचनाकारमाह-राजेत्यादिभिः । घृणी दयावान् अत एव अहिंसारतिः अत एव अक्षुद्रःक्षुद्रसंसर्गरहितः मुख्यस्येक्ष्वाकुवंशस्य लक्ष्मिवर्धनः लक्ष्मीवर्धनः लक्ष्म्याः प्रवर्धनः अत एव लक्ष्मीवान् पार्थिवव्यञ्जनैः राजचिह्नैः युक्तः पृथुश्रीः अतिशोभावान् चतुरन्तायां च चतुःसमुद्रपर्यन्तायां पृथिव्यां विश्रुतः ख्यातः राजा बभूवेति शेषः । श्लोकत्रयमेकान्वयि ॥ २-४ ॥

गो० टी०-राजेत्यादि । वितरणविक्रमादिजनितत्वेन कीर्तियशसोर्भेदोऽवगन्तव्यः । पार्थिवव्यञ्जनैः राजलक्षणैः ॥ २-७ ॥

४-६ ] ति० टी०-पार्थिवव्यञ्जनैः छत्रचामरादिभिर्बाह्यैः सामुद्रिकोक्तैः शारीरैश्च राजचिह्नैर्युक्तः । सुखदो मित्राणाम् ४-६

रा० टी०-तस्येति । स्ववृत्तादेः रक्षिता तस्य दशरथस्य रामो नाम ज्येष्ठः पुत्रः सत्याभिसंधस्य सत्यप्रतिज्ञस्य तस्य दशरथस्य पितुर्वचनात् वनं प्रव्रजितः समागतः । श्लोकत्रयमेकान्वयि ॥ ५-७ ॥

७ ] ति० टी०-सत्याभिसंधस्य सत्यसंकल्पस्य ॥ ७ ॥

गो० टी०-तस्येति । तस्य पितुर्वचनाद्वनं प्रव्राजितः गतः स्वार्थे णिच् ॥ ८ ॥

८ ] ति० टी०-मृगयामुद्दिश्य धावता ॥ ८ ॥

रा० टी०-तेनेति । मृगयां परिधावता तेन रामेण बहवो राक्षसा निहताः ॥ ८ ॥

गो० टी०-तेनेति । मृगयां परिधावता मृगयामुद्दिश्य परिधावता । अनेन लीलया खरादिवधः सूच्यते ॥ ९ ॥

९ ] ति० टी०-जनस्थानवधं खरदूषणौ निहतौ च श्रुत्वा रावणेनामर्षापहृता वैरेणापहृता तु ॥ ९ ॥

रा० टी०-जनेति । खरदूषणौ निहतौ श्रुत्वा अत एव जनस्थानवधं विध्वंसं श्रुत्वा मायया मृगरूपेण रामं वञ्चयित्वा जानकी रावणेन अमर्षापहृता अमर्षेणापहृता । सार्धश्लोक एकान्वयी ॥ ९ ॥

१ कपिरिति गो. पाठः । २ ऋजुरासीदिति गो. पाठः । ३ श्लोकोऽयमधिकः गो. पाठे । ४ धर्मस्येति गो. पाठः । ५ चेति गो. पाठः । ६ व्राजित इति गो. पाठः । ७ इती चेति गो. पाठः ।

वञ्चयित्वा वने रामं मृगरूपेण मायया । स मार्गमाणस्तां देवीं रामः सीतामनिन्दिताम् ॥ १० ॥
आससाद वने मित्रं सुग्रीवं नाम वानरम् । ततः स वालिनं हत्वा रामः परपुरञ्जयः ॥ ११ ॥
आयच्छत्कपिराज्यं तु सुग्रीवाय महात्मने । सुग्रीवेणाभिसंदिष्टा हरयः कामरूपिणः ॥ १२ ॥
दिक्षु सर्वासु तां देवीं विचिन्वन्तः सहस्रशः । अहं संपातिवचनाच्छतयोजनमायतम् ॥ १३ ॥
तस्या हेतोर्विशालाक्ष्याः समुद्रं वेगवान्प्लुतः । यथारूपां यथावर्णां यथालक्ष्मवतीं च ताम् ॥ १४ ॥
अश्रौषं राघवस्याहं सेयमासादिता मया । विररामैवमुक्त्वा स वाचं वानरपुङ्गवः ॥ १५ ॥
जानकी चापि तच्छ्रुत्वा विस्मयं परमं गता । ततः सा वक्रकेशान्ता सुकेशी केशसंवृतम् ॥
उन्नम्य वदनं भीरुः [1]शिंशपामन्ववैक्षत ॥ १६ ॥

निशम्य सीता वचनं कपेश्च दिशश्च सर्वाः प्रदिशश्च वीक्ष्य ।
स्वयं प्रहर्षं परमं जगाम सर्वात्मना राममनुस्मरन्ती ॥ १७ ॥
सा तिर्यगूर्ध्वं च तथा ह्यधस्तान्निरीक्षमाणा तमचिन्त्यबुद्धिम् ।
ददर्श पिङ्गाधिपतेरमात्यं वातात्मजं सूर्यमिवोदयस्थम् ॥ १८ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये सुन्दरकाण्डे एकत्रिंशः सर्गः ॥ ३१ ॥

---

गो० टी०–जनस्थानेति । जनस्थानपदं जनस्थानरक्षोवधम् अमर्षेणापहृता अमर्षापहृता । मृगरूपेण मृगसौन्दर्येण प्रशस्तमृगेण वा । "प्रशंसायां रूपप्" ॥१०–१४॥

१०–१३ ] ति० टी०–मायया मृगरूपेण मारीचेन करणेन । रामं वञ्चयित्वेत्यर्थः ॥ १०–१३ ॥

रा० टी०–स इति । सीतां मार्गमाणः स रामः सुग्रीवं नाम वानरं मित्रमाससाद प्राप चकारेत्यर्थः । अर्धद्वयमेकान्वयि ॥ १० ॥

रा० टी०–तत इति । ततः सुग्रीवमैत्रीकरणानन्तरं रामो वालिनं हत्वा कपिराज्यं सुग्रीवाय प्रायच्छत् ॥ ११ ॥

रा० टी०–सुग्रीवेणेति । सुग्रीवेणाभिसंदिष्टाः सर्वे हरयः सर्वासु दिक्षु तां सीतां विचिन्वन्तो वर्तन्त इति शेषः ॥ १२ ॥

रा० टी०–अहमिति । वेगवानहं संपातिवचनात् सीताबोधकसंपातिवाक्यं संश्रुत्य तस्याः सीताया हेतोः समुद्रं प्लुतः ॥ १३ ॥

१४ ] ति० टी०–तस्या हेतोस्तदन्वेषणहेतोः । यथारूपां यादृग्रूपां यादृग्वर्णां यादृक्चिह्नवतीं च । तां सीताम् ॥ १४ ॥

रा० टी०–यथेति । यथारूपां यादृशरूपविशिष्टां यथालक्ष्मवतीं यादृशचिह्नविशिष्टां तां सीतां राघवस्य राघवादहमश्रौषं तादृशी सेयं कान्ता मया आसादिता प्राप्ता ॥ १४ ॥

गो० टी०–यथारूपामिति । यथारूपां यादृशशरीराम् । यथावर्णां यादृशरूपाम् । यथालक्ष्मीं यादृशकान्तिम् । राघवस्य राघवात् ॥ १५ ॥ १६ ॥

१५ ] ति० टी०–राघवस्य मुखादहमश्रौषं सेयमासादिता दृष्टा इहेति शेषः ॥ १५ ॥

रा० टी०–विररामेति । स हनूमान् एवमुक्त्वा विरराम जानकी तु तच्छ्रुत्वा परमं विस्मयं गता प्राप्ता । चस्त्वर्थे ॥१५॥

१६–१८ ] ति० टी०–केशसंवृतम् असंस्कारतः प्रकीर्णत्वात् ॥ १६–१८ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये सुन्दरकाण्डे एकत्रिंशः सर्गः ॥ ३१ ॥

रा० टी०–तत इति । ततः रामवार्ताश्रवणानन्तरं सा सीता केशसंवृतं वदनमुन्नम्य ऊर्ध्वं कृत्वा शिंशुपामन्ववैक्षत ॥ १६ ॥

गो० टी०–तत इति । सुकेशी नीलसूक्ष्मकेशी । वक्रिम्णः पूर्वमुक्तत्वात् ॥१७॥१८॥

रा० टी०–निशम्येति । सीता कपेर्वचनं निशम्य अत एव सर्वा दिशो वीक्ष्य सर्वात्मना सर्वप्रकारेण राममनुस्मरन्ती सती परमं प्रहर्षं जगाम ॥ १७ ॥

रा० टी०–सेति । तिर्यगादिनिरीक्षमाणा सा सीता अचिन्त्यबुद्धिं पिङ्गाधिपतेः सुग्रीवस्य अमात्यं वातात्मजम् उदयस्थमुदयगिरिस्थितं सूर्यमिव ददर्श ॥ १८ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ सुन्दरकाण्डे एकत्रिंशः सर्गः ॥ ३१ ॥

गो० टी०–सेति । पार्श्वम् आकाशं भूमिं चावेक्षमाणा । अधस्तादित्यनेन यथा भूमिं भित्त्वा कश्चिन्नरः रामनामानि कीर्तयेत्तथान्यत्रापीत्यपिना संभावनोच्यते । शिंशुपावृक्षस्याधस्तात्तिर्यगूर्ध्वमिति वा तमचिन्त्यबुद्धिं ददर्श । तद्वपुरवलोकनात् पूर्वं तस्य हृदयमेवं परिच्छिनत्ति स्म । इह लङ्कायां प्रवि-

---

१ तदिति गो. पाठः । २ शिंशुपावृक्षमिति गो. पाठः ।

## द्वात्रिंशः सर्गः ।

प्रत्यक्षदृष्टमपि हनुमन्तं स्वाप्नं विभाव्य स्वप्ने कपिदर्शनमनर्थावहमिति मन्वाना सीता रामादिकुशलं परिचिन्त्याथ कारणान्तरैस्तस्या-स्वाप्निकत्वं निश्चिन्वाना हनुमदुक्तस्य याथार्थ्यसिद्ध्यै ब्रह्मादीन्प्रार्थयते ।

ततः शाखान्तरे लीनं दृष्ट्वा चलितमानसा । वेष्टितार्जुनवस्त्रं तं विद्युत्संघातपिङ्गलम् ॥ १ ॥
सा ददर्श कपिं तत्र प्रश्रितं प्रियवादिनम् । फुल्लाशोकोत्कराभासं तप्तचामीकरेक्षणम् ॥ २ ॥
सोऽथ दृष्ट्वा हरिश्रेष्ठं विनीतवदवस्थितम् । मैथिली चिन्तयामास विस्मयं परमं गता ॥ ३ ॥
अहो भीममिदं सत्त्वं वानरस्य दुरासदम् । दुर्निरीक्ष्यमिदं मत्वा पुनरेव मुमोह सा ॥ ४ ॥
विललाप भृशं सीता करुणं भयमोहिता । राम रामेति दुःखार्ता लक्ष्मणेति च भामिनी ॥ ५ ॥
रुरोद सहसा सीता मन्दमन्दस्वरा सती । सार्थं दृष्ट्वा हरिवरं विनीतवदुपागतम् ॥
मैथिली चिन्तयामास स्वप्नोऽयमिति भामिनी ॥ ६ ॥

सा वीक्षमाणा पृथुभुग्नवक्त्रं शाखामृगेन्द्रस्य यथोक्तकारम् ।
ददर्श पिङ्गप्रवरं महार्हं वातात्मजं बुद्धिमतां वरिष्ठम् ॥ ७ ॥

---

श्यावरोधाराममध्यप्रवेशेनायं निपुणतरमतिरिति निश्चितवतीत्यर्थः । पिङ्गाधिपतेरमात्यं स्वरविशेषेणायं वानरः तत्रापि न स्वतन्त्रः किन्तु स्वसजातीयस्य राज्ञः कस्यचिदमात्योऽयम् तद्राज्यकार्यमेतद्धस्तगतमिति निश्चितवती । वातात्मजं रामप्राणहेतुभूतमत्प्राणनहेतुत्वेन सर्वप्राणिप्राणनहेतुत्वेन वायुपुत्रोऽयमित्यवगतवती । सूर्यमिवोदयस्थं रामदिवाकरस्योदयसूचकमुदयगिरिस्थमरुणमिव स्थितम् । सूरः सूर्यः ' सूरसूर्यार्यमादित्यद्वादशात्मदिवाकराः' इत्यमरः । सूरसूतोरुणोनूरुरित्युक्तेः सूरस्य संबन्धी सूर्यः दिगादित्वाद्यत् । भवतापि संबन्धः विशेष एव । यद्वा सूर्यशब्देन तत्संबन्ध्यरुणो लक्ष्यते । सूर्योऽरुणे च सूर्ये ' च ' इति निघण्टुरस्तीत्याहुः। औचित्यादत्र सूर्योऽरुणः ॥ १९ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने एकत्रिंशः सर्गः ॥ ३१ ॥

१-३ ] ति० टी०-लीनं दृष्ट्वाऽस्फुरन्तं दृष्ट्वा चलितमानसाऽदृष्टरूपोऽयमपि मायामृगो वेति चलितचित्ता । पुनः सम्यङ्निरीक्ष्योच्यमानविशेषणं कपिं ददर्श । वेष्टितं परिहितमर्जुनवर्णं वस्त्रं येन तम् ॥ १-३ ॥

रा० टी०-हनुमद्वचनश्रवणानन्तरकालिकं सीतावृत्तान्तमाह-तत इत्यादिभिः । ततः हनुमद्वचनश्रवणसमये वेष्टितं धृतमर्जुनवस्त्रम् अर्जुनवर्णसदृशवर्णविशिष्टपटो येन तं विद्युत्संघातवत् पिङ्गलं शाखान्तरे शाखामध्ये लीनं हनुमन्तं दृष्ट्वा चलितमानसाऽभवदिति सीतेति च शेषः ॥ १ ॥

गो० टी०-ततः शाखान्तरे लीनमित्यादि श्लोकद्वयमेकान्वयम् । दृष्ट्वा पूर्वं सामान्यतो दृष्ट्वा भयाच्चलितमानसा सतीति विशेषतो ददर्श । वेष्टितार्जुनवस्त्रं वेष्टितधवलवस्त्रम् तं पूर्वोक्तम् ॥ १-४ ॥

रा० टी०-सेति । फुल्लाशोकोत्करवदाभासो यस्य तं तप्तचामीकरेक्षणं तप्तसुवर्णवर्णवन्नेत्रविशिष्टं हनुमन्तं ददर्श निरन्तरमवलुलोके ॥ २ ॥

रा० टी०-सेति । विनीतवत् आविनीतोक्त्या अवस्थितं हरिश्रेष्ठं दृष्ट्वा परमं विस्मयं गता मैथिली चिन्तयामास ॥ ३ ॥

४ ] ति० टी०-वानरस्य निर्धारणे षष्ठी जातावेकवचनम् वानराणां मध्ये इदं सत्वं जीवः, भीमं प्राकृतप्राणिभयावहम्, अत एव तैर्दुरासदं दुर्निरीक्ष्यं चेति मत्वा पुनरपि मायैवेयमिति भयान्मुमोह ॥ ४ ॥

रा० टी०-चिन्ताकारमाह-अहो इति । वानरस्य इदं सत्वं शरीरं भीमं रक्षसां भयंकरम् अत एव दुरासदं ग्रहीतुमशक्यम् अत एव दुर्निरीक्ष्यमिदमिति मत्वापि पुनर्मुमोह रामातिस्मृत्या वैचित्यं प्राप । एवोऽप्यर्थे ॥ ४ ॥

५ ] ति० टी०-अथ भयमोहिता सती भृशं करुणं दीनं विललाप । विलापप्रकारः—रामेत्यादि ॥ ५ ॥

रा० टी०-विललापेति । भयमोहिता भयं मोहितं यया सापि सीता दुःखार्ता सती भृशं विललाप ॥ ५ ॥

६ ] ति० टी०-मन्दमन्दस्वरा । अस्य दैवगत्या वास्तवत्वे राक्षस्यो मा जानन्त्वित्यतिमन्दस्वररोदनम् । विनीतवद्विनीततयोपस्थितम् । स्वप्नः जाग्रत्कल्पः स्वप्न इत्यर्थः ॥६॥

रा० टी०-रुरोदेति । मन्दस्वरा सती मन्दं मन्दं रुरोद अर्धं पृथक्। मन्दस्वरेत्यनेनेमं वानरं राक्षस्यो न जानन्त्वित्यभिप्रायः सूचितः । सेति । विनीतवदुपागतं हरिवरं दृष्ट्वा स्वप्नोऽयमिति चिन्तयामास तर्कयामास । अर्धद्वयमेकान्वयि ॥६॥

गो० टी०-रुरोदेत्यर्धम् । मन्दं राक्षस्यः श्रुत्वा किमिदमिति विचारयिष्यन्तीति भयेनेति भावः ॥ ५ ॥ ६ ॥

७ ] ति० टी०-स्वप्नत्वाचिन्तापूर्वकमेव पुनर्दर्शनमुपन्य-

---

१ अर्धमेतत् गो. नास्ति । २ रूपमिति गो. पाठः । ३ बहुधेति गो. पाठः । ४ तमिति गो. पाठः । ५ श्रेष्ठमिति गो. पाठः । ६ उपस्थितमिति गो. पाठः । ७ मुमेति गो. रा. पाठः ।

सा तं समीक्ष्यैव भृशं [1]विपन्ना गतासुकल्पेव बभूव सीता ।
चिरेण संज्ञां प्रतिलभ्य चैवं विचिन्तयामास विशालनेत्रा ॥ ८ ॥
स्वप्नो मयायं विकृतोऽद्य दृष्टः शाखामृगः शास्त्रगणैर्निषिद्धः ।
स्वस्त्यस्तु रामाय सलक्ष्मणाय तथा पितुर्मे जनकस्य राज्ञः ॥ ९ ॥
स्वप्नो [2]हि नायं नहि मेऽस्ति निद्रा शोकेन दुःखेन च पीडितायाः ।
सुखं हि मे नास्ति यतो विहीना तेनेन्दुपूर्णप्रतिमाननेन ॥ १० ॥
रामेति रामेति सदैव बुद्ध्या विचिन्त्य वाचा ब्रुवती तमेव ।
तस्यानु[3]रूपं च कथां [4]तदर्थामेवं प्रपश्यामि तथा शृणोमि ॥ ११ ॥

---

स्यति—सेति । किमिदं वाक्यं राक्षस्यः श्रुतवत्य इति परितो वीक्षमाणा सा पृथुभग्नं वज्रप्रहाराद्वक्रं यस्य तम् । शाखामृगेन्द्रस्य यथोक्तकारमाज्ञाकरम् । यद्वा यथोक्तवेष्टितार्जुनवस्त्राद्याकारम् छान्दसो ह्रस्वः पिङ्गप्रवरं कपिश्रेष्ठमिति निश्चयेन ददर्श ॥ ७ ॥

रा० टी०—सेति । पृथु अधिकं भग्नं वज्रेण कृतव्रणं वक्रं यस्य तं मृगेन्द्रस्य सुग्रीवस्य यथोक्तकारम् अज्ञापितमात्रकारकं पिङ्गप्रवरं वानरश्रेष्ठं महार्हं वातात्मजं वीक्षमाणा सा सीता ददर्श केनोक्तमिति विचारयामास ॥ ७ ॥

गो० टी०—सेति । वीक्षमाणा विचारयन्ती । ददर्श पुनरनुकूलोऽयं स्यादिति ददर्शेत्यर्थः । भुग्नवक्रं वक्रमुखम् यथोक्तकारम् आज्ञाकरम् ॥ ७ ॥

८ ] ति० टी०—सा तं कपिरूपं रावणमित्येव समीक्ष्य भृशं विसंज्ञा चित्तक्षोभाद्गतासुकल्पेव ॥ ८ ॥

रा० टी०—सेति । सा सीता तं हनुमन्तं समीक्ष्य रावणत्वेन वितर्क्य गतासुकल्पा गतप्राणसदृशी भृशमत्यन्तं विपन्ना चेष्टारहिता बभूव चिरेण किंचिद्विलम्बतः संज्ञां प्रतिलभ्य विचिन्तयामास ॥ ८ ॥

गो० टी०—सा तमिति । विसंज्ञा मूर्च्छिता । गतासुकल्पा मृतप्राया । इवशब्दो वाक्यालङ्कारे । चिरेण संज्ञां प्रतिलभ्य कालेनैव प्रबोधकेन प्रबुद्धवतीत्यर्थः । विकृतवानरवेषदर्शनेन मूर्च्छिता पुनः कालेन प्रबुद्धेत्यर्थः ॥ ८ ॥

९ ] ति० टी०—एवं चिन्तयामासेत्यत्रैवंशब्दार्थः—स्वप्न इत्यादि । दृश्यमानोऽयं स्वप्नो मया विकृत एव दृष्टः । कुतस्तत्राह—शाखामृग इत्यादि । एवं दुःस्वप्नं मत्वा स्वस्ति प्रार्थयते । जनकस्य तद्वंश्यस्य ॥ ९ ॥

रा० टी०—विचिन्ताकारमाह—स्वप्न इत्यादिभिः । विकृतः चित्तविकारेणोत्पन्नः शास्त्रगणैर्वचनसमूहैर्निषिद्धः शाखामृगः शाखामृगदर्शनादिमयः अयं स्वप्नो मया दृष्टः एतेन स्वप्नश्चेदयमनिष्टकारको भविष्यतीति सूचितम् । दुःस्वप्नजनितारिष्टनिवारणायाह—रामादये स्वस्त्यस्तु ॥ ९ ॥

गो० टी०—स्वप्न इति । स्वप्ने स्वप्नस्थाने । स्वप्ने वानरदर्शनं बन्धुविनाशकरमिति भावः । ९ ॥

१० ] ति० टी०—अथ स्वप्नहेत्वभावान्नायं स्वप्न इत्याह—स्वप्नो हीति । स्वप्नस्य निद्रामूलत्वान्निद्रायाश्च सुखमूलत्वाद्रामवियोगेन च मे सुखाभावादिति भावः ॥ १० ॥

रा० टी०—स्वप्नकारणाभावादयं न स्वप्न इति निश्चित्याह—स्वप्न इति । इन्दुपूर्णप्रतिमाननेन तेन रामेण यतोऽहं विहीना अतो मे सुखं नास्ति अत एव शोकेन दुःखेन च पीडितायाः मे निद्रा नास्ति अत एव अयं वानरदर्शनादिः स्वप्नो न कारणाभावात्कार्यस्यासंभव इति तात्पर्यम् ॥ १० ॥

गो० टी०—एवं दर्शनस्य स्वप्नत्वं संभाव्य पुनर्याथार्थ्यमाह—स्वप्नोऽपीति । स्वप्नाभावे हेतुमाह—नहि मेऽस्ति निद्रेति । निद्राभावे हेतुः—शोकेनेत्यादि । एवं प्रतिबन्धकेन निद्राभावमुक्त्वा सुखरूपहेत्वभावाच्च न निद्रेत्याह—सुखं हीति । इन्दुपूर्णप्रतिमाननेन पूर्णेन्दुप्रतिमाननेन ॥ १० ॥

११ ] ति० टी०—सदा रामेति विचिन्त्य वाचा तमेव ब्रुवन्त्यहं तस्य चिन्तनादेरनुरूपं यथा तथा शृणोमि । श्रूयमाणां च कथां तथा तेन प्रकारेण तदर्थामेव चिन्तायनुरूपार्थामेव पश्यामि ॥ ११ ॥

रा० टी० ननु एवं दुःखप्राप्तौ कथं तव जीवनमित्यत आह—रामेतीति । तं राममेव बुद्ध्या विचिन्त्य संस्मृत्य सदैव रामेति रामेति ब्रुवती अहं तस्य रामस्य अनुरूपं योग्यं वस्तु प्रपश्यामि विचारयामि मनसा रामाय समर्पयामीत्यर्थः । तदर्थां रामबोधिकां कथां वचनं शृणोमि एतेनेदमेव मम जीवनमिति सूचितम् । कथां शृणोमीत्यस्य नाप्रसिद्धिः त्रिजटया कदाचिदागतविभीषणानुचरीभिश्च रामकथायाः कथ्यमानत्वात् ॥ ११ ॥

गो० टी०—रामेति । सदैव बुद्ध्या विचिन्त्य तमेव राममेव वाचा ब्रुवती । तस्यानुरूपां विचिन्तितस्याभिवदनस्यानुरूपां कथां तथा शृणोमि । तमर्थं कथार्थमेवं प्रपश्यामि । एवम् उक्तप्रकारेण जानामीत्यन्वयः । तदर्थामिति पाठे अयमर्थः ।

---



१ विसंज्ञेति गो. पाठः । २ ऽपीति गो. पाठः । ३ रूपामिति गो. पाठः । ४ तमर्थमिति गो. पाठः ।

अहं हि तस्याद्य मनोभवेन संपीडिता तद्गतसर्वभावा ।
विचिन्तयन्ती सततं तमेव तथैव पश्यामि तथा शृणोमि ॥ १२ ॥
मनोरथः स्यादिति चिन्तयामि तथापि बुद्ध्यापि[1] वितर्कयामि ।
किं कारणं तस्य हि नास्ति रूपं सुव्यक्तरूपश्च वदत्ययं माम् ॥ १३ ॥
नमोऽस्तु वाचस्पतये सवज्रिणे स्वयंभुवे चैव हुताशनाय ।
अनेन चोक्तं यदिदं ममाग्रतो वनौकसा तच्च तथास्तु नान्यथा ॥ १४ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये सुन्दरकाण्डे द्वात्रिंशः सर्गः ॥ ३२ ॥

---

तस्यानुरूपां रामकीर्तनस्यानुरूपाम् । तदर्थां स रामोऽर्थोऽभिधेयो यस्याः ताम् ॥ ११ ॥

१२ ] ति० टी०—उक्तमेवार्थं विवृणोति—अहं हीति॥१२॥

रा० टी०—ननु तर्हि किमर्थं शोचसीत्यत आह—अहमिति। तं राममेव विचिन्तयन्ती अहं मनोभवेन मनोनिष्ठभावनया-तस्य रामस्य यद्यपि पश्यामि शृणोमि च तथापि तद्गतसर्वभावा तस्मिन् रामे गतः सन्निविष्टः सर्वः प्रत्यक्षादिना संपादितो भावो भावना यस्याः साऽहमद्य पीडितास्मि एतेन प्रत्यक्षतो रामलाभमन्तरा दुःखनिवृत्तिर्न भविष्यतीति सूचितम् ॥ १२ ॥

गो० टी०—उक्तमर्थं विवृणोति—अहं हीति ॥ १२ ॥

१३ ] ति० टी०—अथ मनोरथमात्रमेतदिति संभाव्य तदपि नेति निश्चिनोति—मनोरथ इति । मनोराज्यमित्यर्थः । स नेत्याह—तथापीति । तथैवेत्यर्थः । यथा मनोरथोन्नीतोऽर्थस्तं तथैव बुद्ध्यापि निश्चयात्मकान्तःकरणवृत्त्यापि विषयीकृतं तर्कयामि । मनोराज्यं संकल्पविकल्पपरं चञ्चलवृत्तिरूपम्, बुद्धिस्तु निश्चयात्मिका स्थिरा चेति विरुद्धमित्यर्थः । ननु तर्हि मनोराज्यत्वमेवास्त्वितरदेवारोपितं तत्राह—किं कारणमिति। मनोराज्यत्वाभाव इति शेषः । उत्तरं तस्य हि मनोराज्यभूतार्थस्य नास्ति रूपमनुभवार्हं रूपं नास्तीति हि प्रसिद्धम् । प्रकृते तु दृश्यं रूपमस्तीत्याह—सुव्यक्तेति । यो मां वदति सुव्यक्तरूपो दृश्यते सुव्यक्तरूपं च वदति यत इत्यर्थः । मनोराज्यार्थो दृष्टनष्टो बाह्येन्द्रियजस्थिरानुभवानर्हः । अतो वास्तव एवायमिति भावः ॥ १३ ॥

रा० टी०—ननु स्वाप्निकत्वाभावेऽपि मनोरथोऽयं भवेदित्यतो निराकुर्वती आह—मनोरथ इति। अयं मनोरथः स्याद् इति चिन्तयामि तर्कयामि तथापि बुद्ध्या निश्चयात्मकान्तःकरणवृत्त्या वितर्कयामि विचारेण निश्चिनोमि । तदाकारमाह तस्य मनोरथस्य रूपं चकारेण वचनाद्यपि नास्ति अयं वानरस्तु सुव्यक्तरूपः सन् मां वदति अतः किं किमपि कारणं मनोरथत्वे हेतुर्नास्ति ॥ १३ ॥

गो० टी०—मनोरथ इति। प्रथमम् इदं रामनामकथयितृदर्शनं मनोरथः अभिलाषमात्रमिति चिन्तयामि । तथापि तथा चिन्तायां सत्यामपि बुद्ध्या वितर्कयामि मनोरथो न भवतीति विचारयामि किं कारणमिति चेत्तस्य मनोरथस्य रूपं नास्ति अयं वानरस्तु सुव्यक्तरूपश्च मां वदति च तस्मान्मनोरथो न भवेदेवेत्यर्थः ॥ १३ ॥

१४ ] ति० टी०—एवं हनुमद्वचसो वास्तवत्वं निर्णीयानाप्तप्रणीतत्वेन मिथ्यार्थकत्वस्यापि संभवात्तद्व्यावृत्तये देवान्प्रणमति—नमोऽस्त्विति । वाचस्पतित्वेन वाचः सत्यत्वसंपादनयोग्यता । वज्रिणोऽपि बृहस्पतितः सत्यवाग्रूपशब्दपारायणग्रन्थरूपमन्त्रलाभात्तदुपासकत्वेन वाचः सत्यत्वसंपादनयोग्यता । स्वयंभुवे सत्यादिरूपब्रह्मणे । वागधिष्ठातृदेवतात्वाच्चाग्नये नतिः ॥ १४ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये सुन्दरकाण्डे द्वात्रिंशः सर्गः ॥ ३२ ॥

रा० टी०—नम इति। अनेन वनौकसा ममाग्रतोऽग्रे यदुक्तं तत्तथास्तु अन्यथा न भवेत् एतदर्थमेव वाचस्पत्यादिभ्यो नमोऽस्तु ॥ १४ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ सुन्दरकाण्डे द्वात्रिंशः सर्गः ॥ ३२ ॥

गो० टी०—अनेनोक्तं सत्यमस्त्विति देवताः प्रार्थयते—नम इति। हुताशनाय च अग्नये च ॥ १४ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने द्वात्रिंशः सर्गः ॥ ३२ ॥

---

१ चेति गो. पाठः ।

## त्रयस्त्रिंशः सर्गः ।

तस्यां निश्चितसीतात्वोऽपि हनुमांस्तन्मुखाच्छुश्रूषुः सुरस्त्रीत्वादिनानाविकल्पैः प्रश्नपूर्वकं सीताऽसि तर्ह्याचक्ष्वेति पृच्छति । रावणकृतस्वापहरणान्तं निखिलवृत्तं निवेदयन्ती सीता रावणेन निश्चितमारणस्य मासद्वयावशेषस्तदवधिमोचनाभावे स्वयमेव जीवितं त्यक्ष्यामीति प्रतिजानीते ।

सोऽवतीर्य द्रुमात्तस्माद्विद्रुमप्रतिमाननः । विनीतवेषः कृपणः प्रणिपत्योपसृत्य च ॥ १ ॥
तामब्रवीन्महातेजा हनूमान्मारुतात्मजः । शिरस्यञ्जलिमाधाय सीतां मधुरया गिरा ॥ २ ॥
का नु पद्मपलाशाक्षि क्लिष्टकौशेयवासिनि । द्रुमस्य शाखामालम्ब्य तिष्ठसि त्वमनिन्दिता[1] ॥ ३ ॥
किमर्थं तव नेत्राभ्यां वारि स्रवति शोकजम् । पुण्डरीकपलाशाभ्यां विप्रकीर्णमिवोदकम् ॥ ४ ॥
सुराणामसुराणां च[2] नागगन्धर्वरक्षसाम् । यक्षाणां किंनराणां च का त्वं भवसि शोभने ॥ ५ ॥
का त्वं भवसि रुद्राणां मरुतां वा वरानने । वसूनां वा वरारोहे देवता प्रतिभासि मे ॥ ६ ॥
किं नु चन्द्रमसा हीना पतिता विबुधालयात् । रोहिणी ज्योतिषां श्रेष्ठा [3]श्रेष्ठा सर्वगुणाधिका ॥ ७ ॥
[ [4]का त्वं भवसि कल्याणि त्वमनिन्दितलोचने । ]
कोपाद्वा यदि वा मोहाद्भर्तारमसितेक्षणे । वसिष्ठं कोपयित्वा त्वं [5]वासि कल्याण्यरुन्धती ॥ ८ ॥

---

१ ] ति० टी०—स इति । अत्यूर्ध्वशाखातः सीतासंमुखशाखायामवतीर्य द्रुमशब्दस्तदवयवपरः अत एवाग्रे 'द्रुमाश्रितम्' इति वक्ष्यति । कृपणो मातुः सीताया दुःखदर्शनाद्दीनः । दूरात्प्रणिपत्य तत उपसृत्य समीपमागत्य ॥ १ ॥

रा० टी०—जानकीवचनश्रवणानन्तरकालिकं हनुमद्वृत्तान्तमाह—स इत्यादिभिः । विद्रुमप्रतिमं विद्रुमसदृशमाननं यस्य स हनुमान् शिरसि अञ्जलिमाधाय धृत्वा मधुरया गिरा अब्रवीत् । श्लोकद्वयमेकान्वयि ॥ १ ॥ २ ॥

गो० टी०—सोऽवतीर्येत्यादि । स राक्षसीषु सुप्तासु लब्धावसर इत्यर्थः । कृपणः सीतादौस्थ्यदर्शनेन दीनः । जानन्नपि वैदेह्यैव वाचयितुमब्रवीत् ॥ १–३ ॥

२ ] ति० टी०—राक्षसीनां निशाजागरतो निद्राजाड्यात्रिजटास्वप्नश्रवणजन्यभयेनात्मत्राणाय सीतैकशरणत्वेनोपेक्षणाच्च दैवानुग्रहाच्चाप्रत्यूहः सीताहनूमतोः संलाप इति बोध्यम्॥२॥

३ ] ति० टी०—अथ लिङ्गैः सीतेति निश्चयेऽपि तयैव साक्षाद्वाचयितुमजानान इव पृच्छति—का न्विति ॥ ३ ॥

रा० टी०—तद्वचनाकारमाह—केत्यादिभिः । द्रुमस्य शाखामवलम्ब्य या त्वं तिष्ठसि सा त्वं काऽसि ॥ ३ ॥

४ ] ति० टी०—विप्रकीर्णं भिन्नघटादिव प्रसृतम् ॥ ४ ॥

रा० टी०—किमिति । विप्रकीर्णं स्फुटितघटादिभ्यो निःसृतमुदकमिव नेत्राभ्यां वारि किमर्थं स्रवति ॥ ४ ॥

गो० टी०—किमर्थमिति । तव नेत्राभ्याम् आनन्दाश्रुयोगार्हाभ्याम् किमर्थं कस्य कुलच्छेदाय यद्वा किमर्थं किं चेतसि कृत्वा । पुण्डरीकेत्यादि । हन्तैतत्सौन्दर्यं प्रणयिना रामेण दृष्टमासीदिति भावः ॥ ४ ॥

५ ] ति० टी०—का न्वित्यादिश्लोकद्वयोक्तार्थस्यैव प्रपञ्चः—सुराणामिति । सुरादिजातिमध्ये त्वं का किंजातीया ॥ ५ ॥

रा० टी०—सुराणामिति । हे शोभने ! सुरादीनां मध्ये त्वं का भवसि रुद्राणां मरुतां वा मध्ये का त्वं भवसि । ननु त्वमेव विचारयेत्यत आह—मे मम तु वसूनामग्नीनां देवता त्वं प्रतिभासि । किंच सुराद्यन्यतमानां का काचित् देवता त्वं मे प्रतिभासि । श्लोकद्वयमेकान्वयि ॥ ५ ॥ ६ ॥

गो० टी०—सुराणामित्यादिषु निर्धारणे षष्ठी । का त्वं कस्य संबन्धिनीत्यर्थः ॥ ५–७ ॥

६ ] ति० टी०—देवता प्रतिभासि दिव्यरूपलक्षणवत्त्वादिति भावः ॥ ६ ॥

७ ] ति० टी०—कान्त्या रोहिणीत्वाशङ्का । श्रेष्ठैः सर्वैर्गुणैरधिका । एतदग्रे 'का त्वं भवसि कल्याणि त्वमनिन्दितलोचने' इत्यर्धं प्रक्षिप्तम् ॥ ७ ॥

रा० टी०—तत्रापि दृढतरगमकाभावादाह—किमित्यादिभिः । विबुधालयात् पतिता अत एव चन्द्रमसा हीना ज्योतिषां श्रेष्ठा रोहिणी किं त्वमसि ॥ ७ ॥

८ ] ति० टी०—कोपाद्वेति । अत्रापि किं न्विति संबध्यते । कोपादिना वसिष्ठं कोपयित्वेहागता कल्याण्यरुन्धती किं नु वासि । पातिव्रत्यादरुन्धतीत्वशङ्का ॥ ८ ॥

रा० टी०—केति । हे अनिन्दितलोचने । अस्माल्लोकात् अमुं परोक्षं देशं गतं प्राप्तं त्वं प्राकृतभिन्नं जनं या त्वमनुशोचसि सा त्वं काऽसि ॥ ८ ॥

रा० टी०—कोपादिति । कोपात् यदि वा मोहात् भर्तारं वशिष्ठं कोपयित्वा गता त्वमरुन्धती वासि ॥ ९ ॥

---



१ अनिन्दिते इति गो. पाठः । २ वेति गो. पाठः । ३ श्रेष्ठसर्वगुणान्वितेति गो. पाठः । ४ अर्धमेतदधिकं गो. रा. पाठे । ५ नेति गो. पाठः ।

को नु पुत्रः पिता भ्राता भर्ता वा ते सुमध्यमे । अस्माल्लोकादमुं लोकं गतं त्वमनुशोचसि ॥ ९ ॥
रोदनादतिनिःश्वासाद्भूमिसंस्पर्शनादपि । न त्वां देवीमहं मन्ये राज्ञः संज्ञावधारणात् ॥ १० ॥
व्यञ्जनानि [3]हि ते यानि लक्षणानि च लक्षये । महिषी भूमिपालस्य राजकन्या च मे मता ॥ ११ ॥
रावणेन जनस्थानाद्बलात्[4]प्रमथिता यदि । सीता त्वमसि भद्रं ते तन्ममाचक्ष्व पृच्छतः ॥ १२ ॥
यथा हि तव वै दैन्यं रूपं चाप्रतिमानुषम् । तपसा चान्वितो वेषस्त्वं राममहिषी ध्रुवम् ॥ १३ ॥
सा तस्य वचनं श्रुत्वा रामकीर्तनहर्षिता । उवाच वाक्यं वैदेही हनूमन्तं द्रुमाश्रितम् ॥ १४ ॥
पृथिव्यां राजसिंहानां मुख्यस्य विदितात्मनः । स्नुषा दशरथस्याहं शत्रुसैन्यप्रणाशिनः ॥ १५ ॥
दुहिता जनकस्याहं वैदेहस्य महात्मनः । सीतेति[6] नाम्ना चोक्ताऽहं भार्या रामस्य धीमतः ॥ १६ ॥
समा द्वादश तत्राहं राघवस्य निवेशने । भुञ्जाना मानुषान्भोगान्सर्वकामसमृद्धिनी ॥ १७ ॥
ततस्त्रयोदशे वर्षे राज्ये चेक्ष्वाकुनन्दनम् । अभिषेचयितुं राजा सोपाध्यायः प्रचक्रमे ॥ १८ ॥

---

गो० टी०—का त्वमिति । हे कल्याणि ! त्वं का । अनिन्दितलोचने ! त्वं का भवसीति योजना ॥ ८ ॥

गो० टी०—कोपाद्धेति । वसिष्ठं कोपयित्वेत्यत्रापि पतिता विबुधालयादित्यनुपज्यते । नासीत्यत्र काकुरनुसंधेया ॥ ९ ॥

९ ] ति० टी०—अथ शोककारणं पुत्रादिवियोगोऽन्यद्वेति पृच्छति—को नु पुत्र इति । अस्माल्लोकादमुं लोकं परलोकं गतं यं त्वमनुशोचसि स पुत्रादिः को न्विति योजना ॥ ९ ॥

रा० टी०—क इति । ते पुत्रादिः कः । अथं पृथक्—रोदनादिति । रोदनादिना त्वां देवीं देवस्त्रियं न मन्ये किंतु राज्ञो रामस्य संज्ञावधारणात् अत्यन्तं नामग्रहणात् यानि व्यञ्जनानि बोधकानि ते लक्षणानि असाधारणचिह्नानि लक्षये तेभ्यश्च भूमिपालस्य निखिलब्रह्माण्डाधिपतेः रामस्य महिषी राजकन्या जनकराजपुत्री च मे मम मता निश्चिता । श्लोकद्वयं संमिलितान्वयि ॥ १० ॥ ११ ॥

गो० टी०—को न्विति । अमुं लोकं गतम् । यमिति शेषः । परलोकं गतं यं पुत्रं पितरं भ्रातरं भर्तारं वाऽनुशोचसि स क इत्यर्थः । गता त्वमित्यपि पाठः । तस्मात् स्वर्गादमुं मनुष्यलोकं गता या त्वमनुशोचसि तस्यास्ते को न्वा पुत्रादिरिति योजना ॥ १० ॥

१० ] ति० टी०—इदानीं देवयोनित्वशङ्कां स्वयमेव निवर्तयति—रोदनादिति । अश्रुसंबन्धो भूस्पर्शश्च देवानां नास्तीति श्रुतम्, तद्वत्त्वात्त्वां देवीं न मन्ये । किं च राज्ञो रामस्य संज्ञावधारणान्नामग्रहणात् ॥ १० ॥

गो० टी०—रोदनादिति । देवीं देवस्त्रियम् । संज्ञावधारणात् संज्ञायते अनयेति संज्ञा लक्षणम् राजलक्षणनिश्चयादित्यर्थः ॥ ११ ॥

११–१२ ] ति० टी०—भूमिपालस्य रामस्य महिषीति मे मतिः, यतो व्यञ्जनानि राममहिषीत्वप्रकाशकानि ते सामुद्रिकलक्षणानि च लक्षये, अतो रावणेन जनस्थानाद्बलात्प्रमथिता प्रमथ्य हृता यदि सीता त्वं तदा पृच्छतो ममाचक्ष्व तत्त्वं ब्रूहि । ते भद्रमस्तु ॥ ११ ॥ १२ ॥

गो० टी०—व्यञ्जनानीति । व्यञ्जनानि स्तनजघनादीनि । व्यञ्जनं तेमने चिह्ने श्मश्रुण्यवयवेऽपि च इति विश्वः । लक्षणानि, शुभावर्तरेखादिसामुद्रिकलक्षणानि ॥ १२ ॥ १३ ॥

रा० टी०—रावणेनेति । जनस्थानात् रावणेन प्रमथिता सीता यदि त्वमसि तदा पृच्छतो मे आचक्ष्व ॥ १२ ॥

१३–१५ ] ति० टी०—अनुक्तेऽपि त्वत्स्वरूपनिश्चयो ममास्तीति प्रौढ्याह—यथा हीति । अपरोक्षानुभवविषयामित्यर्थः ॥ १३–१५ ॥

रा० टी०—यथेति । यथा यथावत् तव दैन्यं वियोगदुःखजनितदीनता अतिमानुषं मानुपानतिक्रान्तम् अत्यद्भुतमित्यर्थः तव रूपं च तपसा अन्वितस्तव वेषश्च अस्तीति शेषः अतस्त्वं राममहिष्येव ॥ १३ ॥

गो० टी०—यथेति । यथा यादृशम् ॥ १४ ॥

रा० टी०—सेति । सा सीता तस्य हनूमतो वचनं श्रुत्वा रामकीर्तनहर्षिता सती द्रुमाश्रितं हनूमन्तमुवाच ॥ १४ ॥

गो० टी०—सेति । द्रुमाश्रितं द्रुममूलाश्रितम् । सोवतीर्येति द्रुमावतरणस्य पूर्वमुक्तत्वात् । यद्वा पूर्वमग्रादवतरणमुक्तमिति ज्ञेयम् ॥ १५ ॥

रा० टी०—तद्वचनाकारमाह—पृथिव्यामित्यादिभिः । विदितात्मनः प्रख्यातस्वरूपस्य राजसिंहानां मुख्यस्य दशरथस्य स्नुषाऽहमस्मि ॥ १६ ॥

गो० टी०—पृथिव्यामिति । शत्रुसैन्यप्रतापिनः शत्रुषु जीवत्सु न मे श्वशुरो जीवितवान् । स चेदिदानीं वर्तेत कथमहमेतादृशीमवस्थां प्राप्नुयामिति भावः ॥ १६ ॥

१६–१८ ] ति० टी०—अहं नाम्ना सीता इति ॥ १६–१८ ॥

रा० टी०—दुहितेति । महात्मनो जनकस्याहं दुहिता

---

१ अर्धमेतद् कोपाद्धेत्यस्मात्प्राक् रा. पाठे । २ त्वामिति गो. रा. पाठः । ३ चेति गो. पाठः । ४ अपहृतेति गो. पाठः । ५ प्रतापिन इति गो. पाठः । ६ च नाम नाम्नाहमिति गो. पाठः ।

तस्मिन्संभ्रियमाणे तु राघवस्याभिषेचने । कैकेयी नाम भर्तारमिदं वचनमब्रवीत् ॥ १९ ॥
न पिबेयं न खादेयं प्रत्यहं मम भोजनम् । एष मे जीवितस्यान्तो रामो यद्यभिषिच्यते ॥ २० ॥
यत्तदुक्तं त्वया वाक्यं प्रीत्या नृपतिसत्तम । तच्चेन्न वितथं कार्यं वनं गच्छतु राघवः ॥ २१ ॥
स राजा सत्यवाग्देव्या वरदानमनुस्मरन् । मुमोह वचनं श्रुत्वा कैकेय्याः क्रूरमप्रियम् ॥ २२ ॥
ततस्तं[2] स्थविरो राजा सत्यधर्मे व्यवस्थितः । ज्येष्ठं यशस्विनं पुत्रं रुदन्राज्यमयाचत ॥ २३ ॥
स पितुर्वचनं श्रीमानभिषेकात्परं प्रियम् । मनसा पूर्वमासाद्य वाचा प्रतिगृहीतवान् ॥ २४ ॥
दद्यान्न प्रतिगृह्णीयात्सत्यं[3] ब्रूयान्न चानृतम् । अपि जीवितहेतोर्हि[4] रामः सत्यपराक्रमः ॥ २५ ॥
स विहायोत्तरीयाणि महार्हाणि महायशाः । विसृज्य मनसा राज्यं जनन्यै मां समादिशत् ॥ २६ ॥

---

सीतेति नाम्ना उक्ता जनैरभिहिता रामस्य भार्याऽहमस्मीति शेषः ॥ १६ ॥

गो० टी०–दुहितेति । सीता च नामेत्यत्र नामशब्दः प्रसिद्धौ ॥ १७ ॥

रा० टी०–समा इति । मानुपान् मनुष्यसंबन्धिनो भोगान् पदार्थान् भुञ्जानाऽहं राघवस्य निवेशने द्वादश समाः वर्षाणि अवसमिति शेषः ॥ १७ ॥

गो० टी०–समा इति । अहम् एतादृशावस्था अहम् तत्र मम श्वशुरगृहे द्वादश समाः द्वादश संवत्सरान् अत्यन्तसंयोगे द्वितीया । तेनाविच्छिन्नैकरूपभोगभोक्तृत्वमुच्यते । मानुषा नित्यनेन नात्मनो मानुषत्वं स्वाभाविकमिति सूच्यते । भोगान् भुञ्जाना अनुभवन्ती काम्यन्त इति कामाः भोगोपकरणानि स्रक्चन्दनादीनि तेषां समृद्धं समृद्धिः भावे निष्ठा तदस्यास्तीति सर्वकामसमृद्धिनी । "अत इनि ठनौ" इति इनिप्रत्ययः । अभवमिति शेषः ॥ १८ ॥ १९ ॥

रा० टी०–तत इति । ततः तत्र त्रयोदशे वर्षे इक्ष्वाकुनन्दनं राममभिषेचयितुं प्रचक्रमे ॥ १८ ॥

१९ ] ति० टी०–नाम प्रसिद्धमित्यर्थः ॥ १९ ॥

रा० टी०–तस्मिन्निति । राघवस्याभिषेचने संभ्रियमाणे सति कैकेयी भर्तारमब्रवीत् ॥ १९ ॥

गो० टी०–तस्मिन्निति । संभ्रियमाणे संभारान् संपादयति सति । राघवस्याभिषेचने रामाभिषेकनिमित्तम् । देवी महिषी ॥ २० ॥

२० ] ति० टी०–प्रत्यहं यन्मम भोजनं भोज्यं वस्तु तन्न पिबेयं न खादेयमित्यन्वयः ॥ २० ॥

रा० टी०–तद्वचनाकारमाह–नेति । एष रामाभिषेकः मम जीवितस्यान्तः अतः यदि रामोऽभिषिच्यते तर्हि प्रत्यहं प्रतिदिनं यन्मम भोजनम् उदरे प्रापणीयं तत् न पिबेयं न खादेयम् ॥ २० ॥

गो० टी०–न पिबेयमिति । भुज्यत इति भोजनं खाद्यं पेयं च । रामो यद्यभिषिच्यते तदा मम संबन्धि यत् भोजनं तन्न पिबेयं न खादेयम् एषः अयमभिषेकः जीवितस्यान्तश्च॥२१॥

२१–२२ ] ति० टी०–तद्देवासुरे युद्धे वरदानरूपम्॥२१-२२

रा० टी०–यदिति । यत् तत् औदार्यपोषकत्वेन अनुत्तमं वाक्यं त्वया उक्तं तत् वितथं व्यर्थं न कार्यमतो राघवो वनं गच्छतु ॥ २१ ॥

गो० टी०–यत्तदिति । तत्पूर्वोक्तं यद्वरदानरूपं वाक्यं तन्न वितथं कार्यं चेत्तदा रामो वनं गच्छतु ॥ २२ ॥

रा० टी०–स इति । सत्यवाक् स राजा देव्याः वरदानमनुस्मरन् सन् क्रूरं वियोगबोधकत्वेन घातुकम् अत एव अप्रियं कैकेय्या वचनं श्रुत्वा मुमोह ॥ २२ ॥

गो० टी०–स इति । देव्या संबन्धि स्वकृतं वरदानं स्मृत्वा ककेय्याः वचनं श्रुत्वा मुमोह ॥ २३ ॥ २४ ॥

२३ ] ति० टी०–राज्यमयाचत । भरताय दातुमिति शेषः ॥ २३ ॥

रा० टी०–तत इति । ततस्तस्मात् हेतो रुदन् राजा ज्येष्ठं पुत्रं राज्यं वनराज्यमयाचत ॥ २३ ॥

२४ ] ति० टी०–अभिषेकादपि परमधिकं प्रियं यथा भवति तथा मनसा पूर्वमङ्गीकृत्य वाचाप्यङ्गीकृतवान् ॥ २४ ॥

रा० टी०–स इति । स रामः अभिषेकात् परमधिकं प्रियं पितुर्वचनं पूर्वं मनसा आसाद्य अङ्गीकृत्य वाचापि प्रतिगृहीतवान् ॥ २४ ॥

गो० टी०–स इति । अभिषेकात्परं प्रियं पितुर्वचनं विना स याचनारूपं पूर्वं मनसा आसाद्य अङ्गीकृत्य अथ वाचा प्रतिगृहीतवान् । मनःपूर्वकमङ्गीकृतवानित्यर्थः ॥ २५ ॥ २६ ॥

२५ ] ति० टी०–सीता रामं स्तौति–दद्यादिति ॥२५॥

रा० टी०–दद्यादिति । यो रामः यत् दद्यात् तत् जीवितहेतोरपि न प्रतिगृह्णीयात् स रामः उत्तरीयाणि राज्यं च मनसा विसृज्य त्यक्त्वा समादिशत् वनगमनबोधकवचनमकथयत् । श्लोकद्वयमेकान्वयि ॥ २५ ॥ २६ ॥

२६ ] ति० टी०–समादिशद्बहुप्रकारं रक्षणाय निवेदितवान् ॥ २६ ॥

गो० टी०–स इति । उत्तरीयाणि वासांसि । जनन्यै

---

१ देवीति गो. पाठः । २ स्थितिं गो. पाठः । ३ न ब्रूयात्किंचिदप्रियमिति गो. पाठः । ४ वीति गो. पाठः ।

साऽहं तस्याग्रतस्तूर्णं प्रस्थिता वनचारिणी । नहि मे तेन हीनाया वासः स्वर्गेऽपि रोचते ॥ २७ ॥
प्रागेव तु महाभागः सौमित्रिर्मित्रनन्दनः । पूर्वजस्यानुयात्रार्थे कुशचीरैरलंकृतः ॥ २८ ॥
ते वयं भर्तुरादेशं बहुमान्य दृढव्रताः । प्रविष्टाः स्म पुराऽदृष्टं वनं गम्भीरदर्शनम् ॥ २९ ॥
वसतो दण्डकारण्ये तस्याहममितौजसः । रक्षसापहृता भार्या रावणेन दुरात्मना ॥ ३० ॥
द्वौ मासौ तेन मे कालो जीवितानुग्रहः कृतः । ऊर्ध्वं द्वाभ्यां तु मासाभ्यां ततस्त्यक्ष्यामि जीवितम् ३१॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये सुन्दरकाण्डे त्रयस्त्रिंशः सर्गः ॥ ३३ ॥

## चतुस्त्रिंशः सर्गः ।

स्वप्रश्नस्य समुचितोत्तरप्राप्त्या स्वस्मिञ्जानक्या आश्वासं संभावयन्हनुमान्स्वस्य रामदूतत्वं निवेदयन्रामलक्ष्मणकर्तृककुशलप्रश्नान्निवेदयति । पादाभिवादनार्थं समीपमुपसर्पन्तं हनुमन्तं वेषान्तरितं रावणं मन्वाना सीता विनिन्दति । स्वस्मिन्रावणत्वशङ्कां निराकरिष्णुर्हनुमान्स्वस्य सुग्रीवसचिवत्वं हनुमदिति नाम च निवेद्य स्ववचःश्रद्धेयत्वे प्रार्थयते ।

तस्यास्तद्वचनं श्रुत्वा हनूमान्हरिपुंगवः । दुःखाद्दुःखाभिभूतायाः सान्त्वमुत्तरमब्रवीत् ॥ १ ॥

कौसल्यायै । मां समादिशत् तन्निकटे त्वया स्थातव्यमित्युक्तवानित्यर्थः ॥ २७ ॥

२७-२८ ] ति० टी०-तस्याग्रतः प्रस्थिता वनचारिणी । अभूवमिति शेषः ॥ २७ ॥ २८ ॥

रा० टी०-सेति । तेन रामेण हीनाया यस्या मे स्वर्गेऽपि वासो न रोचते साऽहं वनचारिणी सती तस्य रामस्य अग्रतः प्रस्थिता ॥ २७ ॥

गो० टी०-साऽहमिति । अग्रतः प्रस्थाने हेतुमाह—न हीति ॥ २८ ॥

रा० टी०-प्रागिति । सौमित्रिः पूर्वजस्य रामस्यानुयात्रार्थे प्रागेव कुशचीरैरलंकृतोऽभवदिति शेषः ॥ २८ ॥

गो० टी०-प्रागेवेति । प्रागेव यद्यपि रामानन्तरमेव लक्ष्मणेन द्रुमचीरादिस्वीकारः तथापि तस्य त्वरातिशयव्यञ्जनाय तथोक्तिः । महाभागः अहं सर्वं करिष्यामीति प्रतिज्ञानुसारेण सर्वविधकैङ्कर्यकरणोचिताभिषेकविघ्नहेतुभाग्यसंपन्नसौमित्रिः । सृष्टस्त्वं वनवासायेत्युक्तवत्याः गर्भे संजातः मित्रनन्दनः स लक्ष्मणः सर्वविधकैङ्कर्यकर्तव्यानुकूलैरभिनन्दनीयः । पूर्वजस्येत्यादि । रामकैङ्कर्यानुरूपत्वेन द्रुमचीरादीनामलंकरणत्वमित्यर्थः ॥ २९ ॥

२९-३० ] ति० टी०-भर्तुर्दशरथस्य पुरा अदृष्टमिति छेदः ॥ २९ ॥ ३० ॥

रा० टी०-ते इति । भर्तुः पालयितुर्दशरथस्य आदेशमाज्ञां बहुमान्य अत्यन्तं सत्कृत्य पुरा पूर्वमदृष्टं वनं वयं प्रविष्टाः स्म ॥ २९ ॥

गो०टी०-ते वयमिति । पुरादृष्टं पूर्वमदृष्टम् । अत्र गम्भीरशब्देन दुष्प्रवेशत्वं दर्शनशब्देन स्वरूपमप्युच्यते ॥३०॥३१ ॥

रा० टी०-वसत इति । दण्डकारण्ये वसतः तस्य रामस्य भार्याऽहं रक्षसाऽपहृता ॥ ३० ॥

३१ ] ति० टी०-जीवितानुग्रहो जीवितानुग्रहकरः कालः कृतः परिच्छिन्नः ॥ ३१ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये सुन्दरकाण्डे त्रयस्त्रिंशः सर्गः ॥ ३३ ॥

रा० टी०-द्वाविति । [द्वाभ्यां मासाभ्यामूर्ध्वं ते जीवितं त्यक्ष्यामि त्याजयिष्यामीति वदतेति शेषः ?] तेन रक्षसा द्वौ मासौ मे जीवितानुग्रहः जीवनावधिरित्यर्थः कृतः । किंच द्वौ मासौ जीवितानुग्रहः कृतः अतः ततः ताभ्यां मासाभ्यामूर्ध्वं जीवितं त्यक्ष्यामि रामानागमने त्यक्तुमिच्छामि ॥ ३१ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ सुन्दरकाण्डे त्रयस्त्रिंशः सर्गः ॥ ३३ ॥

गो० टी०-द्वाविति । द्वौ मासौ द्विमासरूपः कालः मे जीवितानुग्रहः जीवितानुग्राहकः जीवितधारणानुकूलः कृतः । त्यक्ष्यामि स्वयमेवेति भावः ॥ ३२ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने त्रयस्त्रिंशः सर्गः ॥ ३३ ॥

१ ] ति० टी०-दुःखाद्दुःखाभिभूताया इत्यलुगार्षः । दुःखपरंपराखिन्नाया इत्यर्थः ॥ १ ॥

रा० टी०-सीतावचनश्रवणानन्तरकालिकां हनुमदुक्तिमाह-तस्या इत्यादिभिः । दुःखाभिभूतायाः तस्याः सीताया वचनं श्रुत्वा दुःखात् दुःखं प्राप्य हनुमान् सान्त्वं सान्त्वनमुत्तरमब्रवीत् ॥ १ ॥

गो० टी०-तस्या इत्यादि । दुःखात् दुःखाभिभूतायाः उत्तरोत्तरं दुःखं प्राप्तायाः ॥ १ ॥

१ यूथप इति गो. पाठः ।

अहं रामस्य संदेशाद्देवि दूतस्तवागतः । वैदेहि कुशली रामः स त्वां कौशलमब्रवीत् ॥ २ ॥
यो ब्राह्ममस्त्रं वेदांश्च वेद वेदविदां वरः । स त्वां दाशरथी रामो देवि कौशलमब्रवीत् ॥ ३ ॥
लक्ष्मणश्च महातेजा भर्तुस्तेऽनुचरः प्रियः । कृतवाञ्छोकसंतप्तः शिरसा तेऽभिवादनम् ॥ ४ ॥
सा तयोः कुशलं देवी निशम्य नरसिंहयोः । प्रीतिसंहृष्टसर्वाङ्गी हनूमन्तमथाब्रवीत् ॥ ५ ॥
कल्याणी बत गाथेयं लौकिकी प्रतिभाति मा । एति जीवन्तमानन्दो नरं वर्षशतादपि ॥ ६ ॥
तयोः समागमे तस्मिन्प्रीतिरुत्पादिताद्भुता । परस्परेण चालापं विश्वस्तौ तौ प्रचक्रतुः ॥ ७ ॥
तस्यास्तद्वचनं श्रुत्वा हनूमान्मारुतात्मजः । सीतायाः शोकतप्तायाः समीपमुपचक्रमे ॥ ८ ॥
यथा यथा समीपं स हनूमानुपसर्पति । तथा तथा रावणं सा तं सीता परिशङ्कते ॥ ९ ॥

---

२ ] ति० टी०—तव समीपमिति शेषः ॥ २ ॥

रा० टी०—वचनाकारमाह—अहमित्यादिभिः । रामस्य दूतोऽहं संदेशाद् हेतोः तव समीपमागतः । अर्धं पृथक् । ननु कः संदेश इत्यत आह—वैदेहीत्यादिभिः । हे वैदेहि ! कुशली रामः त्वां कौशलं स्वकुशलमब्रवीत् अकथयत् किंच त्वां त्वत्कौशलमब्रवीत् अपृच्छत् । अर्धद्वयमेकान्वयि ॥ २ ॥

गो० टी०—अहमिति । तव दूतः त्वां प्रति प्रेषितो दूतः ॥ २ ॥

३-४] ति० टी०—ब्राह्ममस्त्रं यो वेद । अनेन सर्वास्त्रपारगत्वमुक्तम् । तदस्त्रदेवताया ब्रह्मणः सर्वजगत्समष्टित्ववत्तदस्त्रस्यापि सर्वास्त्रसमष्टित्वात् । वेदांश्चेत्यनेन सर्वकर्ममार्गपारगत्वम् वेदविदां वर इत्यनेन ज्ञानमार्गपारगत्वमुक्तम् ॥ ३ ॥ ४ ॥

रा० टी०—हर्षातिशयेन पुनरपि तदेवाह—य इति । वेदविदां वरः अत एव ब्राह्ममस्त्रं वेदांश्च यो वेद स रामः कौशलमब्रवीत् ॥ ३ ॥

गो० टी०—य इति । वेद वेत्ति । वेदविदां वेदार्थज्ञानवताम् ॥ ३ ॥ ४ ॥

रा० टी०—लक्ष्मण इति । लक्ष्मणोऽभिवादनं ते कृतवान् ॥ ४ ॥

५ ] ति० टी०—संहृष्टसर्वाङ्गी पुलकितसर्वाङ्गी ॥ ५ ॥

रा० टी०—सेति । सा सीता तयोः रामलक्ष्मणयोः कुशलं निशम्य प्रतिसंहृष्टसर्वाङ्गी सती हनूमन्तमब्रवीत् ॥ ५ ॥

गो० टी०—सेति । प्रीतिसंहृष्टसर्वाङ्गी प्रीत्या पुलकितसर्वाङ्गी ॥ ५ ॥

६ ] ति० टी०—असंभावितमपि रामप्रसङ्गं जीवितधारणेन प्राप्तत्वात्तत्संवादिनीं लौकिकीं गाथां स्तौति—कल्याणीति । गाथायाः संवादित्वदर्शनजो हर्षो बतेत्यनेन सूच्यते । कल्याणी सत्यार्थेति मा मां प्रतिभाति । मज्ज्ञानविषया भवतीत्यर्थः । गाथां पठति—एतीति । जीवन्तमेवेत्येव, अतो बहुदुःखं सोढ्वाऽपि जीवितव्यमिति भावः ॥ ६ ॥

रा० टी०—तदाकारमाह—कल्याणीति । जीवन्तं नरं जनं वर्षशतादपि आनन्दः एति प्राप्नोति इयं लौकिकी गाथा कल्याणी सत्येत्यर्थः ॥ ६ ॥

गो० टी०—दुःखबाहुल्येऽपि रामदर्शनप्रत्याशया कृच्छ्रेण जीवन्त्याः देव्याः जीवनफलस्य लब्धत्वात्तत्संवादिनीं गाथां स्तौति—कल्याणीति । कल्याणी सत्यार्था । मा प्रतिभाति मां प्रतिभाति । वर्षशतादपीत्यन्ते इतिकरणं बोध्यम् ॥ ६ ॥

७ ] ति० टी०—तस्मिंस्तस्मिन्काले रामलक्ष्मणकुशलवचःश्रवणकाले तयो रामलक्ष्मणयोः समागमकाल इव सीतायास्तेन वचसाऽद्भुताचिन्त्यस्वरूपा प्रीतिरुत्पादिता । किं च तयोः सीताहनूमतोस्तस्मिन्समागमे परस्परस्याद्भुता प्रीतिरुत्पादिता देवी दृष्टेति हनूमतः प्रीतिः रामदूतो दृष्ट इति देव्याः प्रीतिः अतस्तौ विश्वस्तौ भूत्वा परस्परेणालापं चक्रतुः ॥ ७ ॥

रा० टी०—तयोरिति । तयोः सीताहनुमतोः समागते सति अद्भुता प्रीतिः उत्पादिता प्रादुर्भूता अत एव विश्वस्तौ तौ परस्परेणालापं चक्रतुः ॥ ७ ॥

गो० टी०—तयेति । तया सीतया । तस्मिन् हनुमति विषये अद्भुता प्रीतिरुत्पादिता । परस्परेणेत्यादिकं वक्ष्यमाणस्य सर्गस्य संग्रहः ॥ ७ ॥

८ ] ति० टी०—तद्वचनं कल्याणीत्यादिसीतावचनम् । समीपमुपचक्रमे तच्छाखातोऽप्यर्वाचीनां शाखामवरुह्य समीपं गन्तुं यत्नवानभूदित्यर्थः ॥ ८ ॥

रा० टी०—तस्या इति । तस्याः सीताया वचनं श्रुत्वा हनुमान् समीपमुपचक्रमे जगाम ॥ ८ ॥

गो० टी०—तस्या इति । उपचक्रमे गन्तुमिति शेषः । प्रापेति वाऽर्थः ॥ ८ ॥

९ ] ति० टी०—परिशङ्कते परिशङ्कते स्म । रामकुशलकथनेन विश्वस्तापि रावणमायाबाहुल्यस्मरणेनाविश्वासादिति भावः ॥ ९ ॥

रा० टी०—यथेति । हनुमान् यथा यथा समीपमुपसर्पति तथा तथा सीता रावणं परिशङ्कते ॥ ९ ॥

गो० टी०—यथा यथेति । रावणं परिशङ्कते—रामकुशलकथनेन संजातरावणमायास्मरणा पुनः शङ्कितवतीत्यर्थः ॥ ९ ॥

---



१ प्रीतीति गो. पाठः । २ हरियूथप इति गो. पाठः । ३ दीनाया इति गो. पाठः ।

अहो धिग्धिक्कृतमिदं कथितं हि यदस्य मे । रूपान्तरमुपागम्य स एवायं हि रावणः ॥ १० ॥
तामशोकस्य शाखां तु विमुक्त्वा शोककर्शिता । तस्यामेवानवद्याङ्गी धरण्यां समुपाविशत् ॥ ११ ॥
[ हनुमानतिदुःखार्तां तां दृष्ट्वा भयमोहिताम् । ]
अवन्दत महाबाहुस्ततस्तां जनकात्मजाम् । सा चैनं भयसंत्रस्ता भूयो नैनमुदैक्षत ॥ १२ ॥
तं दृष्ट्वा वन्दमानं च सीता शशिनिभानना । अब्रवीद्दीर्घमुच्छ्वस्य वानरं मधुरस्वरा ॥ १३ ॥
मायां प्रविष्टो मायावी यदि त्वं रावणः स्वयम् । उत्पादयसि मे भूयः संतापं तन्न शोभनम् ॥ १४ ॥
स्वं परित्यज्य रूपं यः परिव्राजकरूपवान् । जनस्थाने मया दृष्टस्त्वं स एव हि रावणः ॥ १५ ॥
उपवासकृशां दीनां कामरूप निशाचर । संतापयसि मां भूयः संतापं तन्न शोभनम् ॥ १६ ॥
अथवा नैतदेवं हि यन्मया परिशङ्कितम् । मनसो हि मम प्रीतिरुत्पन्ना तव दर्शनात् ॥ १७ ॥
यदि रामस्य दूतस्त्वमागतो भद्रमस्तु ते । पृच्छामि त्वां हरिश्रेष्ठ प्रिया रामकथा हि मे ॥ १८ ॥

---

१० ] ति० टी०—यदस्य यदनेन कथितं कथनं कृतं वार्ता कृता इदं धिधिक् कथितमिति भावे निष्ठा । तत्र हेतुमाह—रूपान्तरमिति । यः पूर्वं मायया मामपाहरत्स एव रावणो रूपान्तरं प्राप्य वर्तत इत्यर्थः ॥ १० ॥

रा० टी०—परिशङ्कास्वरूपमाह—अहो इति । रूपान्तरमुपागम्य प्राप्य स रावण एवायं हि यदि तदा अस्य अनेन यत् कथितं कथनम् इदं कृतं तत् अहो आश्चर्यं धिक् धिक् च ॥ १० ॥

गो० टी०—अहो इति । मे मया अस्य पुरतः यत्कथितं तत् दुष्कृतम् अनुचितं कृतम् इदम् अनालोच्य कथनं धिक् । अहो इति खेदे । खेदहेतुमाह—रूपान्तरमिति । वर्तत इति शेषः ॥ १० ॥

११ ] ति० टी०—अशोकस्य अशोकवनस्थशिंशपावृक्षस्येत्यर्थः ॥ ११ ॥

रा० टी०—तामिति । तां गृहीताम् अशोकस्य अशोकवनिकास्थशिंशुपायाः शाखां विमुक्त्वा विमुच्य शोककर्शिता सीता तस्यां पूर्वमध्यासितायां धरण्यां समुपाविशत् ॥ ११ ॥

गो० टी०—तामशोकस्येति । यद्यपि पूर्वं शिंशुपाशाखावलम्बनमुक्तं तथापि शिंशुपाशाखा अशोकसंवलितेति क्वचिच्छिंशुपेत्युच्यते क्वचिदशोक इति अतो न कश्चिद्दोषः ॥ ११ ॥

१२-१३ ] ति० टी०—तां धरण्युपविष्टामवन्दत नमस्कृतवान् । एनं दृष्ट्वा भयसंत्रस्ता भूयः पुनरेनं नापश्यत् ॥ १२ ॥ १३ ॥

रा० टी०—अवन्दतेति । ततोऽनन्तरं महाबाहुर्हनुमान् तां जनकात्मजाम् अवन्दत शङ्कापनयनाय वन्दनामकरोत् सा सीता तु भयसंत्रस्ता रावणशङ्काजनितभययुक्ता सती एनं हनुमन्तं भूयो न उदैक्षत ॥ १२ ॥

रा० टी०—तमिति । वन्दमानं तं हनुमन्तं दृष्ट्वा दीर्घमुच्छ्वस्य मधुरस्वरा सीता अब्रवीत् ॥ १३ ॥

गो० टी०—हनुमानिति । भयवित्रस्ता भयहेतुना वित्रस्ता ॥ १२ ॥ १३ ॥

१४ ] ति० टी०—भूयः संतापं यदुत्पादयसि तन्न शोभनम् १४

रा० टी०—वचनाकारमाह—मायामित्यादिभिः । मायां कपटं प्रविष्टः आश्रितः सन् मायावी स्वयं रावणस्त्वं यदि भूयः संतापमुत्पादयसि तर्हि तन्न शोभनम् ॥ १४ ॥

गो० टी०—मायामिति । मायावी स्वत एव मायावान् । " अस्मायामेधास्रजो विनिः " इति विनिप्रत्ययः । इदानीं मायां प्रविष्टः आश्रितः स्वयं रावणः सन् मम संतापमुत्पादयसीति यदि उत्पादयसीति यत् तत्संतापोत्पादनं ते न शोभनम् । तवाप्यभीष्टविरहसंतापो भविष्यतीत्यर्थः ॥ १४-१६ ॥

१५-१६ ] ति० टी०—तवैवंरूपकरणमपि सुकरमेवेत्याह—स्वं परित्यज्येति ॥ १५ ॥ १६ ॥

रा० टी०—स्वमिति । स्वं राक्षसीयं रूपं परित्यज्य परिव्राजकरूपवान् सन् यो रावणो जनस्थाने मया दृष्टः स त्वं किम् । एवः किमर्थे ॥ १५ ॥

रा० टी०—उपवासेति । उपवासकृशाम् अत एव दीनां क्षीणचित्तां मां सम्यक् तापो यस्मिन् तत् यथा भवति तथा भूयः संतापयसि प्रवर्तयसि तत् न शोभनम् ॥ १६ ॥

१७ ] ति० टी०—एवं रावणदौरात्म्यादनमन्तं रावणमाशङ्क्य तद्दर्शनजनितमात्मनो मनःप्रसादमालोच्य तां शङ्कां निराचष्टे—अथवेति । यन्मया परिशङ्कितं रावणत्वमेतदेवं नयतस्तव दर्शनान्मम मनसः प्रीतिरुत्पन्ना । रावणत्वे हि सा नोत्पद्येतेति भावः ॥ १७ ॥

रा० टी०—इदानीमनुमानतो नायं रावण इति निश्चित्य पक्षान्तरमाह—अथवेति । हि यतः तव दर्शनात् मम मनसः प्रीतिरुत्पन्ना अतः यत् मया परिशङ्कितं तन्नैवास्ति ॥ १७ ॥

गो० टी०—हनुमन्तं रावणमाशङ्क्य तज्जनितमनःप्रसादमालोच्य तां शङ्कां निराचष्टे—अथवेति । मया यत् परिशङ्कितम् एतन्नैवं हि नैवमेव । कुत इत्यत आह—मनस इति ॥ १७-१९ ॥

१८ ] ति० टी०—तव मयि रामदूतत्वनिश्चयः कथं स्या-

---

१ दुष्कृतमिति गो. पाठः । २ अर्धमेतदधिकं गो. पाठे । ३ वित्रस्तेति गो. पाठः । ४ नैवास्युदैक्षतेति गो. पाठः । ५ भूगिति गो. पाठः । ६ असीति गो. पाठः । ७ संततामिति गो. पाठः ।

गुणान्रामस्य कथय प्रियस्य मम वानर । चित्तं हरसि मे सौम्य नदीकूलं यथा रयः ॥ १९ ॥
अहो स्वप्नस्य सुखता याहमेव चिराहृता । प्रेषितं नाम पश्यामि राघवेण वनौकसम् ॥ २० ॥
स्वप्नेऽपि यद्यहं वीरं राघवं सहलक्ष्मणम् । पश्येयं नावसीदेयं स्वप्नोऽपि मम मत्सरी ॥ २१ ॥
नाहं स्वप्नमिमं मन्ये स्वप्ने दृष्ट्वा हि वानरम् । न शक्योऽभ्युदयः प्राप्तुं प्राप्तश्चाभ्युदयो मम ॥ २२ ॥
किं नु स्याच्चित्तमोहोऽयं भवेद्वातगतिस्त्वियम् । उन्मादजो विकारो वा स्यादयं मृगतृष्णिका ॥ २३ ॥
अथवा नायमुन्मादो मोहोऽप्युन्मादलक्षणः । संबुध्ये चाहमात्मानमिमं चापि वनौकसम् ॥ २४ ॥

---

दिति चेत्तत्राह—यदीति । पृच्छामीति । रामकथामिति शेषः । तदेवाह—प्रिया रामकथा हीति ॥ १८ ॥

रा० टी०—यदीति । आगतः त्वं यदि रामस्य दूतः तर्हि त्वां रामकथाः पृच्छामि ते भद्रमस्तु ॥ १८ ॥

१९ ] ति० टी०—चित्तं हरसि चित्तं शिथिलयसि । विश्वासहेतुत्वसंपादनादिति भावः । रयो नदीवेगः ॥ १९ ॥

रा० टी०—गुणानिति । हे वानर ! मम प्रियस्य रामस्य गुणान् त्वं कथय । ननु रामगुणान् न जानामीत्यत आह—नदीकूलं रयो वेग इव मे चित्तं त्वं हरसि एतेन मच्चित्तापकर्षकत्वं रामगुणज्ञानामेवेति सूचितम् ॥ १९ ॥

२० ] ति० टी०—रामदूतदर्शनं नेदं तदागमनस्यात्यन्तासंभावितत्वात्प्रायेणायं स्वप्नोऽथापि मेऽसौ सुखावह इत्याह—अहो इति । या चिराहृताहमेव राघवेण प्रेषितं वनौकसं पश्यामि नाम । अस्वप्नत्वे त्वन्यासामपि दर्शनं स्यादित्याशयः ॥ २० ॥

रा० टी०—रामदूतागमनस्यासंभवमाशङ्क्याह-अहो इति । स्वप्नस्य सुखता सुखम् अहो आश्चर्यं यतः चिरं बहुकालात् आहृता अन्यत्र प्रापिताऽहं राघवेण प्रेषितं वनौकसं पश्यामि ॥ २० ॥

गो० टी०—इह रामदूतागमनमत्यन्तासंभावितमिति मत्वा पुनर्बहुधा शङ्कते—अहो इत्यादिना ॥ २० ॥

२१ ] ति० टी०—अथ रामादिदर्शनत्वरूपस्वप्नोऽपि मे न जायत इति खिद्यति—स्वप्नेऽपीति । मत्सरी मत्सरेण मत्समीपं सोऽपि नायातीति भावः ॥ २१ ॥

रा० टी०—स्वप्न इति । मत्सरी सगर्वः सोऽपि प्रायो नायातीति तात्पर्यम् ॥ २१ ॥

गो० टी०—स्वप्नेऽपीति । स्वप्नेऽपि यद्यहं वीरम् राक्षसीमध्यवासकृतं दुःखं स्वप्नदृष्टोऽपि निवर्तयितुं क्षम इति वीर्यातिशयोक्तिः । राघवं सहलक्ष्मणम् । विश्लेषदशायामुभयोर्दर्शनात् स्वप्नदर्शनेऽप्युभयोर्दर्शनं भवेत् । यद्वा तदानीमुभयोर्विश्लेषात्तौ किं परस्परं संयुक्तौ न वेति शङ्कते—पश्येयं नावसीदेयम् एवमुभयोः स्वप्ने दर्शनेऽपि महत् दुःखं निवर्तेत । कथंचिज्जीवितं धारयेयम् । स्वप्नोऽपि मम मत्सरी । मद्दशां विज्ञाय राम इव स्वप्नोऽपि मयि मात्सर्यं करोति ॥ २१ ॥ २२ ॥

२२ ] ति० टी०—स्वप्नत्वमस्य नेत्याह—नाहं स्वप्नमिति । प्राप्तश्चाभ्युदय [illegible] इत्यर्थः । तस्मान्न स्वप्नः ॥ २२ ॥

रा० टी०—इदानीमनुमानेन नायं स्वप्न इति निश्चित्याह—नेति । इमं स्वप्नम् अहं न मन्ये हि यतः स्वप्ने वानरं दृष्ट्वा अभ्युदयः प्राप्तुं न शक्यः मम तु अभ्युदयः अभ्युदयहेतुभूतः मनःप्रसादः प्राप्तः ॥ २२ ॥

२३ ] ति० टी०—पुनरुत्प्रेक्षते—किं न्विति । चित्तमोहो निरन्तररामध्यानजनितस्तत्प्रेषितदूतदर्शनसंभाषणादिविषयो भ्रमः । वातगतिर्भूतावेशादिजनितो भ्रमः । उन्मादो विरहिणां पित्तोद्रेकरूपावस्थाविशेषजो भ्रमः । मृगतृष्णिका तद्वत्प्रत्यक्षो भ्रमः ॥ २३ ॥

रा० टी०—किमिति । अयं समागमः चित्तमोहः स्यात् इयं वातगतिः वायुविकारो वा उन्मादजः भूतावेशादिहेतुकोन्मादजनितो विकारो वा अयं मृगतृष्णिका वा स्यात् ॥ २३ ॥

गो० टी०—एवं यथार्थस्वप्नपक्षौ निरस्य पुनश्चतुरो विभ्रमपक्षानुत्प्रेक्षते—किं नु स्यादिति । चित्तमोहः रामक्षेमवार्ताश्रवणकुतूहलकन्दलितनिरन्तरचिन्तासंततिपरिणतिविशेषरूपः । कोऽपि मनसो विभ्रम इत्यर्थः । असत्यश्चित्तसंकल्पो वा । वातगतिः उपवासादिप्रयुक्तधातुक्षोभजो वातविकाररूपो भ्रमः । तदध्यारोपो वा यथा त्वरूपस्य वायोः पांसुपुञ्जरूपविशेषोऽध्यारोपः उन्मादजो विकारो वा । उन्मादो नाम विरहिणां कश्चिदवस्थाविशेषः तज्जो विकारो भ्रमः । मृगतृष्णिका अन्यस्यान्यरूपेणावभासः । चित्तमोहोन्मादावप्रकृतिस्थप्रतिभासविशेषौ । वातगतिमृगतृष्णिके तु प्रकृतिस्थस्य ॥ २३ ॥

२४ ] ति० टी०—बाधराहित्याद्भ्रमचतुष्टयमपि निरस्यति—अथवेति । मोहोऽप्युन्मादस्य लक्षणमिव लक्षणं यस्य सः । एवं चोन्मादनिराकरणात्सोऽपि निरस्तः । अर्थतो भूतावेशोऽपि निरस्तः । यतोऽहमात्मानमिमं समीपस्थं वनौकसं च संबुध्ये सम्यग्जानामि । निर्बाधं जानामीत्यर्थः । उक्तानां सर्वेषामविवेकलक्षणत्वान्मम विवेकसत्त्वात्तेऽसंभाविताः । मृगतृष्णाभ्रमोऽपि दूरत्वदोषाज्जायते, वानरश्च समीप एवेति स पक्षोऽप्ययुक्त इति भावः ॥ २४ ॥

रा० टी०—इदानीं तत्तद्धर्माभावबोधकहेतुमुपलभ्य तान्निरस्यति—अथवेति । अथवा उन्मादः उन्मादजो विकारः उन्मादलक्षणः मोहः उन्मादलक्षणसदृशलक्षणविशिष्टः अपिना वातगतिर्वा नायम् तत्र हेतुः—अहम् आत्मानं वनौकसं च संबुध्ये सम्यक् जानामि मोहादौ सम्यग्ज्ञानं न भवतीति तात्पर्यम् ॥ २४ ॥

इत्येवं बहुधा सीता संप्रधार्य बलाबलम् । रक्षसां कामरूपत्वान्मेने तं राक्षसाधिपम् ॥ २५ ॥
एतां बुद्धिं तदा कृत्वा सीता सा तनुमध्यमा । न प्रतिव्याजहाराथ वानरं जनकात्मजा ॥ २६ ॥
सीताया निश्चितं बुद्ध्वा हनूमान्मारुतात्मजः । श्रोत्रानुकूलैर्वचनैस्तदा तां संप्रहर्षयन् ॥ २७ ॥
आदित्य इव तेजस्वी लोककान्तः शशी यथा । राजा सर्वस्य लोकस्य देवो वैश्रवणो यथा ॥ २८ ॥
विक्रमेणोपपन्नश्च यथा विष्णुर्महायशाः । सत्यवादी मधुरवाग्देवो वाचस्पतिर्यथा ॥ २९ ॥
रूपवान्सुभगः श्रीमान्कन्दर्प इव मूर्तिमान् । स्थानक्रोधे प्रहर्ता च श्रेष्ठो लोके महारथः ॥ ३० ॥
बाहुच्छायामवष्टब्धो यस्य लोको महात्मनः । अपकृष्याश्रमपदान्मृगरूपेण राघवम् ॥ ३१ ॥
शून्ये येनापनीताऽसि तस्य द्रक्ष्यसि तत्फलम् । अचिराद्रावणं संख्ये यो वधिष्यति वीर्यवान् ॥ ३२ ॥
क्रोधप्रमुक्तैरिषुभिर्ज्वलद्भिरिव पावकैः । तेनाहं प्रेषितो दूतस्त्वत्सकाशमिहागतः ॥ ३३ ॥
त्वद्वियोगेन दुःखार्तः स त्वां कौशलमब्रवीत् । लक्ष्मणश्च महातेजाः सुमित्रानन्दवर्धनः ॥ ३४ ॥
अभिवाद्य महाबाहुः स त्वां कौशलमब्रवीत् । रामस्य च सखा देवि सुग्रीवो नाम वानरः ॥ ३५ ॥
राजा वानरमुख्यानां स त्वां कौशलमब्रवीत् । नित्यं स्मरति [४]ते रामः ससुग्रीवः सलक्ष्मणः ॥ ३६ ॥
दिष्ट्या जीवसि वैदेहि राक्षसीवशमागता । नचिराद्द्रक्ष्यसे रामं लक्ष्मणं च महारथम् ॥ ३७ ॥
मध्ये वानरकोटीनां सुग्रीवं चामितौजसम् । अहं सुग्रीवसचिवो हनूमान्नाम वानरः ॥ ३८ ॥
प्रविष्टो नगरीं लङ्कां लङ्घयित्वा महोदधिम् । कृत्वा मूर्ध्नि पदन्यासं रावणस्य दुरात्मनः ॥ ३९ ॥

---

गो० टी०—अनन्तरोक्तचतुष्टयं निराकरोति—अथवेत्यादिना । अथवा अयं वानरतद्भाषणादिप्रतिभासः उन्मादो न । मोहोऽप्युन्मादलक्षणः उन्मादस्य लक्षणमिव लक्षणं यस्य सः तथोक्तः । अतः उन्मादनिराकरणेनैव सोऽपि निराकृत इत्यर्थः । अनयोर्निराकरणमितरपक्षद्वयनिराकरणस्योपलक्षणं कुत इत्यत आह—संबुध्य इति । अहम् आत्मानमिमं वनौकसं चापि संबुध्ये सम्यक् जानामि ॥ २४ ॥

२५–२६ ] ति० टी०—बलाबलम् बलं रक्षसां कामरूपबलम्, अबलं रामदूतस्य वानरस्यात्रागमनसामर्थ्याभावः ॥ २५ ॥ २६ ॥

रा० टी०—इतीति । इति अनेन प्रकारेण बहुधा बहुप्रकारं बलाबलं संप्रधार्य विचार्य रक्षसां कामरूपत्वाद्धेतोस्तं हनुमन्तं राक्षसाधिपं मेने ॥ २५ ॥

रा० टी०—एतामिति । तदा तस्मिन् समये एतामुक्तां बुद्धिं निश्चयं कृत्वा वानरं प्रति न व्याजहार ॥ २६ ॥

गो० टी०—इत्येवमिति । बलाबलं मोहत्वादीनामबलत्वं रावणत्वस्य बलवत्त्वं च ॥ २५ ॥ २६ ॥

२७ ] ति० टी०—निश्चितं रावणत्वनिश्चयम् । श्रोत्रानुकूलैर्वचनैः रामगुणकथनरूपैः । विश्वासार्थं गुणान्रामस्य कथयति । सीतोक्तेरिति भावः । संप्रहर्षयन्वक्ष्यमाणं वचः । कथयामासेति शेषः ॥ २७ ॥

रा० टी०—सीताया इति । सीतायाः सीतया निश्चितं बुद्ध्वा श्रोत्रानुकूलैः श्रोत्रसुखजनकैर्वचनैः रामगुणबोधकवाक्यैः तां सीतां प्रहर्षयन्नुवाचेति शेषः ॥ २७ ॥

गो० टी०—सीताया इति । संप्रहर्षयत्संप्राहर्षयत् ॥ २७ ॥

२८–२९ ] ति० टी०—राजा धनधान्यादिप्रदानेन सर्वलोकस्य रक्षकः ॥ २८ ॥ २९ ॥

रा० टी०—तद्वचनाकारमाह—आदित्य इत्यादिभिः २८

रा० टी०—विक्रमेणेति वाचस्पतिर्बृहस्पतिः ॥ २९ ॥

गो० टी०—आदित्य इत्यादि । राजेति । कुबेरस्य सर्वलोकराजत्वमुक्तम् । "राजाधिराजाय प्रसह्यसाहिने नमो वयं वैश्रवणाय कुर्महे" इति । सत्यमधुरवाक्त्वं बृहस्पतेर्वाचस्पतित्वादेव रूपवान् सौन्दर्यवान् सुभगः रमणीयः श्रीमान् कान्तिमान् स्थाने क्रोधस्थाने क्रोधः यस्यासौ स्थानक्रोधः प्रहर्ता क्रोधविषये प्रहर्ता । आदित्य इवेत्यादिना उक्तैर्विशेषणैर्विशिष्टो राम इति योज्यम् ॥ २८–३० ॥

३० ] ति० टी०—स्थानक्रोध उचितक्रोधविषये । क्रोधौचित्ये प्रहर्तेति यावत् ॥ ३० ॥

रा० टी०—रूपवानिति । मूर्तिमान् कन्दर्प इव रूपादिमान् स्थानक्रोधे उचितकोपे प्रहर्ता दण्डदायकः ॥ ३० ॥

३१–३९ ] ति० टी०—तं राघवमाश्रमादपकृष्य शून्य आश्रमे येनापनीता तस्य रक्षसस्तत्फलं त्वदपहारपापफलं तेनानुभूयमानं द्रक्ष्यसि । तदेवाह—अचिरादिति । 'नचिरात्' इति पाठान्तरम् । यो वधिष्यति तेनेत्यर्थः ॥ ३१–३९ ॥

रा० टी०—बाह्विति । यस्य बाहुच्छायायां रक्षणे इत्यर्थः लोकः सर्वजनः अवष्टब्धः संस्थितः तं राघवं मृगरूपेण अश्र-

---

१ कृष्येति गो. रा. पाठः । २ नेति गो. पाठः । ३ रोऽसीति गो. पाठः । ४ रामस्त्वामिति गो. पाठः । ५ बलमिति गो. पाठः ।

त्वां द्रष्टुमुपयातोऽहं समाश्रित्य पराक्रमम् । नाहमस्मि तथा देवि यथा मामवगच्छसि ॥
विशङ्का त्यज्यतामेषा श्रद्धत्स्व वदतो मम ॥ ४० ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये सुन्दरकाण्डे चतुस्त्रिंशः सर्गः ॥ ३४ ॥

## पञ्चत्रिंशः सर्गः ।

दूतयाथार्थ्यं विज्ञातुकामया जानक्या पृष्टो हनुमांस्तयोरङ्गलक्षणादि निरूपयन्स्वीयोत्पत्तेरारभ्य सुग्रीवसाचिव्यादि सीतादर्शनान्तं स्वेतिवृत्तं कथयति ।

तां तु रामकथां श्रुत्वा वैदेही वानरर्षभात् । उवाच वचनं सान्त्वमिदं मधुरया गिरा ॥ १ ॥
क्व ते रामेण संसर्गः कथं जानासि लक्ष्मणम् । वानराणां नराणां च कथमासीत्समागमः ॥ २ ॥
यानि रामस्य चिह्नानि लक्ष्मणस्य च वानर । तानि भूयः समाचक्ष्व न मां शोकः समाविशेत् ॥ ३ ॥

मपदात् श्रमनिवर्तकस्थानात् अपकृष्य अन्यत्र प्रापय्य शून्ये येन त्वमपनीतासि तस्य रक्षसः तत् तादृशकर्मजनितं फलं द्रक्ष्यसि । सार्धश्लोक एकान्वयी ॥ ३१ ॥

रा० टी०–तत्फलाकारं बोधयन्नाह–अचिरादिति । अचिरात् शीघ्रं क्रोधप्रमुक्तैर्ज्वलद्भिः पावकैरिवेषुभिः यो रावणं वधिष्यति तेन प्रेषितो दूतोऽहम् इह अस्मिन् काले त्वत्सकाशमागतः । सार्धश्लोक एकान्वयी ॥ ३२ ॥ ३३ ॥

रा० टी०–त्वदिति । त्वद्वियोगेन दुःखार्तः स रामः त्वां कौशलमब्रवीत् । अयं पृथक् । लक्ष्मण इति । कौशलं कुशलमब्रवीत् ॥ ३४ ॥

रा० टी०–रामस्येति । रामस्य सखा सुग्रीवः कौशलमब्रवीत् ॥ ३५ ॥

रा० टी०–नित्यमिति । ते त्वां रामो नित्यं स्मरति "अधीगर्थ" इति षष्ठी । हे वैदेहि राक्षसीवशमागता त्वं दिष्ट्या भाग्यवशेन जीवसि ॥ ३६ ॥

रा० टी०–नेति । रामं लक्ष्मणं च वानरकोटीनाम् अनेककोटिसंख्याकवानराणां मध्ये सुग्रीवं च नचिरात् शीघ्रं द्रक्ष्यसे ॥ ३७ ॥

रा० टी०–नतु त्वं कोऽसीत्यत आह–अहमिति । सुग्रीवसचिवो हनुमानहं लङ्कां प्रविष्टोऽस्मीति शेषः ॥ ३८ ॥

रा० टी०–कृत्वेति । अहं रावणस्य मूर्ध्नि पदन्यासं कृत्वा अनादृत्येत्यर्थः, त्वां द्रष्टुमुपयातः ॥ ३९ ॥

गो० टी०–बाहुच्छायामित्यादि । लोकः महात्मनो यस्य बाहुच्छायाम् अवष्टब्धः आश्रितः । तं मृगरूपेण प्रशस्तमृगेण हेतुना आश्रमपदादपकृष्य शून्ये येनापनीतासि तस्य रावणस्य यत्फलं मरणरूपं तत् द्रक्ष्यसीति योजना । यद्वा बाहुच्छायामवष्टब्धो यस्य लोको महात्मनः असावादित्य इव तेजस्वीत्येवं योजना ॥ ३१-४० ॥

४० ] ति० टी०–यथा मामवगच्छसि मायावी रावण इति, न तथाऽहमस्मि ॥ ४० ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये सुन्दरकाण्डे चतुस्त्रिंशः सर्गः ॥ ३४ ॥

रा० टी०–नेति । यथा येन प्रकारेण मां त्वमवगच्छसि शङ्कसे तथाऽहं नास्मि अतः विशङ्का त्यज्यताम् अत एव एषा त्वं वदतो मम श्रद्धत्स्व मद्वचने श्रद्धां कुर्वित्यर्थः ॥४०॥४१॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ सुन्दरकाण्डे चतुस्त्रिंशः सर्गः ॥ ३४ ॥

गो० टी०–नाहमिति । वञ्चनार्थं परिगृहीतवेष इति मां यथाऽवगच्छसि तथा नास्मीत्यर्थः ॥ ४१ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने चतुस्त्रिंशः सर्गः ॥ ३४ ॥

१-२ ] ति० टी०–तां त्विति । आदित्य इवेत्यादिकाम् ॥ १ ॥ २ ॥

रा० टी०–हनुमद्वचनश्रवणानन्तरकालिकां सीतोक्तिमाह–तामिति । वैदेही वानरर्षभात् रामकथां श्रुत्वा सान्त्वं वचनमुवाच ॥ १ ॥

रा० टी०–तदाकारमाह–क्वेत्यादिभिः । ते तव रामेण संसर्गो भाषणादिसंबन्धः क्व कस्मिन्देशेऽभवदिति शेषः । समागमः सङ्गमः कथमासीत् नरवानराचरणयोः परस्परं विरुद्धत्वात्संसर्गो न संभवतीति तात्पर्यम् ॥ २ ॥

गो० टी०–तां त्वित्यादि ॥ १ ॥ २ ॥

३ ] ति० टी०–तानि रामलक्ष्मणचिह्नानि । भूयोऽधिकं विशिष्य समाचक्ष्व, येन मां शोको न समाविशेत् ॥ ३ ॥

रा० टी०–यानीति । चिह्नानि भूयः समाचक्ष्व कथयतो मां शोको न समाविशेत् ॥ ३ ॥

गो० टी०–यानीति । लिङ्गानि चिह्नानि ॥ ३ ॥

१ लिङ्गानीति गो. पाठः ।

कीदृशं तस्य संस्थानं रूपं तस्य च कीदृशम् । कथमूरू कथं बाहू लक्ष्मणस्य च शंस मे ॥ ४ ॥
एवमुक्तस्तु वैदेह्या हनूमान्मारुतात्मजः । ततो रामं यथातत्त्वमाख्यातुमुपचक्रमे ॥ ५ ॥
जानन्ती बत दिष्ट्या मां वैदेहि परिपृच्छसि । भर्तुः कमलपत्राक्षि संस्थानं लक्ष्मणस्य च ॥ ६ ॥
यानि रामस्य चिह्नानि लक्ष्मणस्य च यानि वै । लक्षितानि विशालाक्षि वदतः शृणु तानि मे ॥ ७ ॥
रामः कमलपत्राक्षः पूर्णचन्द्रनिभाननः । रूपदाक्षिण्यसंपन्नः प्रसूतो जनकात्मजे ॥ ८ ॥
तेजसाऽऽदित्यसंकाशः क्षमया पृथिवीसमः । बृहस्पतिसमो बुद्ध्या यशसा वासवोपमः ॥ ९ ॥
रक्षिता जीवलोकस्य स्वजनस्य[2] च रक्षिता । रक्षिता स्वस्य वृत्तस्य धर्मस्य च परंतपः ॥ १० ॥
रामो भामिनि लोकस्य चातुर्वर्ण्यस्य रक्षिता । मर्यादानां च लोकस्य कर्ता कारयिता च सः ॥ ११ ॥

---

४-५ ] ति० टी०—संस्थानमवयवसंनिवेशः । रूपमाकारो नीलपीतादिवर्णश्च ॥ ४ ॥ ५ ॥

रा० टी०—चिह्नाकारं विभज्य पृच्छति—कीदृशमिति । तस्य रामलक्ष्मणस्य च संस्थानमवयवसंनिवेशः रूपं च कीदृशम् ऊरुप्रभृति कथं कीदृशं मे मह्यं शंस कथय ॥ ४ ॥

रा० टी०—एवमिति । वैदेह्या एवमुक्तो हनुमान् रामं यथातत्त्वं याथार्थ्यमनतिक्रम्य आख्यातुं कथयितुमुपचक्रमे ॥ ५ ॥

गो० टी०—कीदृशमिति । संस्थानम् अवयवसंनिवेशः । रूपम् आकारः वर्णः कान्तिर्वा ॥ ४ ॥ ५ ॥

६-७] ति० टी०—जानन्ती दिष्ट्या दैवेन रामदूतं मां जानन्ती यदि पृच्छसि रावणशङ्कां त्यक्त्वा तदा त्वया यानि संस्थानादीनि पृष्टानि यथा च मया लक्षितानि दृष्टानि तानि सर्वाणि वदतो मत्तः शृणु ॥ ६ ॥ ७ ॥

रा० टी०—तद्वचनाकारमाह—जानन्तीति । संस्थानं जानन्ती त्वं मां दिष्ट्या भाग्यवशेन परिपृच्छसि ॥ ६ ॥

रा० टी०—यानीति । तानि चिह्नानि वदतो मे शृणु॥७॥

गो० टी०—जानन्तीत्यादि । बतेत्यामन्त्रणे । जानन्ती त्वं दिष्ट्या मां परिपृच्छसीति संबन्धः । लक्षितानि त्वया दृष्टानि मे मत्तः ॥ ६ ॥ ७ ॥

८-१० ] ति० टी०—रूपदाक्षिण्यसंपन्नः प्रसूत इति । जन्मना सहैवोक्ता वक्ष्यमाणाश्च गुणा जाता इत्यर्थः॥८-१०॥

रा० टी०—तत्कथनमेवाह—राम इत्यादिभिः । रामः रूपदाक्षिण्याभ्यां संपन्नः सन्नेव प्रसूतः प्रादुर्भूतः न तु प्रादुर्भूत्यनन्तरं रूपदाक्षिण्यं जातमित्यर्थः, तेन तयोर्नित्यत्वं व्यञ्जितम् ॥ ८ ॥

गो० टी०—राम इति । रामः सर्वाङ्गसुन्दरः । कमलपत्राक्षः कान्तिप्रवाहे आवर्त इव अत्यन्तमाकर्षकनयनशोभः । तादृशनयनसौन्दर्यसीमाभूमिमाह—सर्वसत्त्वमनोहरः । तिर्यग्जातितया विटपाद्विटपं प्लवतो ममापि चित्तापहारकः अविशेषज्ञस्यापि मनोहर इत्यर्थः । रूपदाक्षिण्यसंपन्नः रूपमित्येतद्विग्रहगुणानामुपलक्षणम् दाक्षिण्यमित्यात्मगुणानामुपलक्षणम् देहगुणैरात्मगुणैश्चान्यून इत्यर्थः । संपन्नः प्रसूतः इदं सर्वं नागन्तुकं किंतु औत्पत्तिकमित्यर्थः । अत्युत्कटं वदसि किमेवंविधोपरोऽप्यस्ति न वेत्यपेक्षायामाह—जनकात्मज इति । भवती च तादृशीत्यर्थः ॥ ८ ॥

रा० टी०—इषुवत्सविता गच्छतीति वदुपमेयत्वेन बहुव्रीहिणोपमानत्वेन वा । रामं बोधयन्नाह—तेजसेति ॥ ९ ॥

गो० टी०—संग्रहेणोक्तान् गुणान्विवृणोति—तेजसेत्यादिना ब्रह्मचर्यव्रते स्थितः गृहस्थस्यास्य ब्रह्मचर्यं नाम ऋतोरन्यत्र स्त्रीसङ्गमत्यागः । तदाह मनुः—' षोडशर्तुनिशाः स्त्रीणां तस्मिन् युग्मासु संविशेत् । ब्रह्मचार्येव पर्वाण्याद्याश्चतस्रश्च विवर्जयेत् ॥ ' प्रचारज्ञः प्रयोगज्ञः । ऐहिकामुष्मिकानां कर्मणां प्रचारं गतिं हेतुफलभावव्यवस्थां तत्त्वतो जानातीत्यर्थं इत्यप्याहुः । राजविद्याविनीतश्च चतस्रो राजविद्याः 'आन्वीक्षिकी त्रयी वार्ता दण्डनीतिश्च शाश्वती । एता विद्याश्चतस्रस्तु लोकसंस्थितिहेतवः ॥ ' इत्युक्ताः । तासु विनीतः शिक्षितः श्रुतवान् अवधृतवान् । शीलसंपन्नः सदाचारसंपन्नः । पूर्वं यज्ञादिकर्मानुष्ठातृत्वमुक्तमिति न पुनरुक्तिः । वेदेषु यजुर्व्यतिरिक्तवेदेषु । अनेन स्वस्य यजुर्वेदत्वं सूचितम् । एवमात्मगुणानभिधाय विग्रहगुणानाशास्ते—विपुलांस इत्यादिना । गूढजत्रुः अस्पष्टभुजसंध्यस्थिः । समः अन्यूनातिरिक्तदेहप्रमाणः ॥ ९-१६ ॥

रा० टी०—रक्षितेति । जीवन्ति जीवयन्तीति च व्युत्पत्त्या जीवशब्देन जीवेश्वरयोर्ग्रहणम् । लोका निखिलब्रह्माण्डानि समाहारद्वन्द्वः तस्य रक्षिता श्रुतिश्च "तमीश्वराणां परमं महेश्वरम्" इत्यादि ॥ १० ॥

११ ] ति० टी०—रामो भामिनि लोकस्येति । सर्वस्य कर्ता हर्ता भर्ता चेति शेषः । अनेन सृष्टिस्थितिसंहारकर्तृत्वरूपं ब्रह्मलक्षणं रामस्योक्तं गूढम् । एवं ज्ञानं तत्क्षणं भगवतैव स्वमायातिरस्करिणीनिरासादिति बोध्यम् । लोकस्य मर्यादानां वर्णाश्रममर्यादानां कर्ता, भगवदवतारत्वात् । कारयिता कालात्मना, अवतीर्णरूपेण चातुर्वर्ण्यरक्षिता च ॥ ११ ॥

रा० टी०—राम इति । चातुर्वर्ण्यस्य लोकस्य राम एव रक्षिता साक्षात् विष्ण्वादिद्वारा च पालयिता ॥ ११ ॥

---



१ सर्वसत्त्वमनोहर इति गो. पाठः । २ स्वामीति गो. पाठः ।

अर्चिष्मानर्चितोऽत्यर्थं ब्रह्मचर्यव्रते स्थितः । साधूनामुपकारज्ञः प्रचारज्ञश्च कर्मणाम् ॥ १२ ॥
राजनीत्यां विनीतश्च ब्राह्मणानामुपासकः । ज्ञानवाञ्शीलसंपन्नो विनीतश्च परंतपः ॥ १३ ॥
यजुर्वेदविनीतश्च वेदविद्भिः सुपूजितः । धनुर्वेदे च वेदे च वेदाङ्गेषु च निष्ठितः ॥ १४ ॥
विपुलांसो महाबाहुः कम्बुग्रीवः शुभाननः । गूढजत्रुः सुताम्राक्षो रामो नाम जनैः श्रुतः ॥ १५ ॥
दुन्दुभिस्वननिर्घोषः स्निग्धवर्णः प्रतापवान् । समश्च सुविभक्ताङ्गो वर्णं श्यामं समाश्रितः ॥ १६ ॥
त्रिस्थिरस्त्रिप्रलम्बश्च त्रिसमस्त्रिषु चोन्नतः । त्रिताम्रस्त्रिषु च स्निग्धो गम्भीरस्त्रिषु नित्यशः॥ १७ ॥
त्रिवलीवांस्त्र्यवनतश्चतुर्व्यङ्गस्त्रिशीर्षवान् । चतुष्कलश्चतुर्लेखश्चतुष्किष्कुश्चतुःसमः ॥ १८ ॥

---

१२ ] ति० टी०—अत एवार्चिष्मानादित्यरूपः सन्नर्चितः त्रैवर्णिकैरिति शेषः । ब्रह्मचर्यव्रते गृहस्थोचितपर्वादिवर्जनपूर्वकमृतुगमनलक्षणे स्थितः । वस्तुतस्तु गार्हस्थ्येऽप्यस्खलितरेताः । मनःसंकल्पेनैव देव्या रतिप्रीतिः संतानस्य च संपादनमिति भावः । साधूनामुपकारज्ञ उपकर्तव्यकालज्ञः कर्मणां स्वरूपस्यानुष्ठानस्य च तत्त्वज्ञाता ॥ १२ ॥

रा० टी०—अर्चिष्मानिति । अर्चिष्मान् अतिप्रकाशवान् श्रुतिश्च " तस्य भासा सर्वमिदं विभाति " अत एव अत्यर्थमत्यन्तमर्चितः ईश्वरैरपि पूजितः ब्रह्मचर्यव्रते स्वकृतमर्यादाहेतुभूतवेदोक्तनियमे स्थितः उपकारज्ञः उपकारमेव जानाति न त्वपकारमित्यर्थः, सः कर्मणां प्रचारज्ञः यथावत्प्रवृत्तिज्ञाता ॥ १२ ॥

१३ ] ति० टी०—ब्राह्मणानां वसिष्ठादीनाम् ॥ १३ ॥

रा० टी०—राजेति । ज्ञानवान् नित्यं निखिलानां विज्ञाता ॥ १३ ॥

१४ ] ति० टी०—यजुर्वेदविनीतश्च । चादन्येषामपि संग्रहः । विनीतो निरतः ॥ १४ ॥

रा० टी०—यजुरिति । यजुर्वेदविनीतः उपलक्षणया सर्ववेदेषु निष्णातः ॥ १४ ॥

१५ ] ति० टी०—एवमात्मगुणानुक्त्वा देहगुणानाह—विपुलांस इति ॥ १५ ॥

रा० टी०—विपुलांस इति । विपुलौ मांसलौ अंसौ यस्य ॥ १५ ॥

१६ ] ति० टी०—समो विस्तारायामसमः ॥ १६ ॥

रा० टी०—दुन्दुभीति । समः समहस्तादिविशिष्टः॥१६॥

१७ ]ति० टी०—त्रिस्थिरस्त्रिषु स्थानेषु स्थिरः । ' ऊरुश्च मणिबन्धश्च मुष्टिश्च नृपतेः स्थिराः ' इत्युक्तेः । त्रिषु प्रलम्बः ' प्रलम्बा यस्य स धनी त्रयो भूमुष्कबाहवः ' इति सामुद्रिकोक्तेः । मुष्को वृषणः । त्रिषु समः समत्र्यवयव इत्यर्थः । ' केशाग्रं वृषणं जानु समं यस्य स भूपतिः ' इत्युक्तेः । त्रिषु चोन्नतः । ' नाभ्यन्तःकुक्षिवक्षोभिरुन्नतैः क्षितिपो भवेत् ' । त्रिः ताम्रस्त्रिषु ताम्रः । 'नेत्रान्तनखपाण्यङ्घ्रितलैस्ताम्रैस्त्रिभिः सुखी'। त्रिषु स्निग्धः । ' स्निग्धा भवन्ति वै येषां पादरेखाः शिरोरुहाः । तथा लिङ्गमणिस्तेषां महाभाग्यं विनिर्दिशेत् ॥ ' त्रिषु गम्भीरः ' स्वरे गतौ च नाभौ च गम्भीरस्त्रिषु शस्यते ' ॥ १७ ॥

रा० टी०—त्रिस्थिर इति । त्रयः ऊर्वादयः स्थिराः यस्य सः तथाहि—' ऊरुश्च मणिबन्धश्च मुष्टिश्च नृपतेः स्थिराः ' इति लक्षणानुशासनम् । त्रयः भूवृषणबाहवः प्रलम्बा यस्य सः तथाहि ' प्रलम्बा यस्य स धनी त्रयो भूमुष्कबाहवः ' इति सामुद्रिकः । मुष्कं वृषण इति तद्व्याख्या । त्रीणि केशाग्रादीनि समानि यस्य सः तथाहि—'केशाग्रं वृषणं जानु समं यस्य स भूपतिः ' इति त्रिषु नाभ्यादिषु उन्नतः ' नाभ्यन्तःकुक्षिवक्षोभिरुन्नतैः क्षितिपो भवेत् ' त्रयः नेत्रान्तादयः ताम्रा अरुणा यस्य सः तथाहि—' नेत्रान्तनखपाण्यङ्घ्रितलैस्ताम्रैस्त्रिभिः सुखी ' इति त्रिषु पादरेखाः शिरोरुहाः ' तथालिङ्गमणिस्तेषां महाभाग्यं विनिर्दिशेत् ' त्रिषु स्वरादिषु नित्यशो गम्भीरः तथाहि ' स्वरे गतौ च नाभौ च गम्भीरस्त्रिषु शस्यते ' ॥ १७ ॥

गो० टी०—त्रिस्थिर इति । त्रिषु स्थानेषु स्थिरः । तथोक्तम् सामुद्रिके—' उरश्च मणिबन्धश्च मुष्टिश्च नृपतेः स्थिरा ' इति । त्रिप्रलम्बः त्रिषु प्रलम्बः ' दीर्घभ्रूबाहुमुष्कस्तु चिरजीवी धनी नरः ' इति वचनात् । अन्यत्र तु ' त्रयश्च यस्य विद्यन्ते प्रलम्बा मेढ्रबाहवः ' इति । त्रिसमः त्रिषु समः ' केशाग्रं वृषणं जानु समा यस्य स भूपतिः ' इति वचनात् । त्रिषु चोन्नतः। तदाह वराहमिहिरः—' उन्नतकुक्षिः क्षितिपः परिमण्डलोन्नतनाभयः क्षितिपाः । हृदयं न वेपनं पृथु समोन्नतं मांसलं च नृपतीनाम् ' इति । त्रिताम्रः त्रिषु ताम्रः । ' श्लिष्टाङ्गुली रुचिरताम्रनखौ सुपार्ष्णी पादौ करावपि सुरक्तनखात्मरेखौ ' इति वचनात् । 'नेत्रान्तनखपाण्यङ्घ्रितलैस्ताम्रैस्त्रिभिः सुखी' इति च । त्रिषु स्निग्धः ' स्निग्धा भवन्ति वै येषां पादरेखाः शिरोरुहाः । तथा लिङ्गमणिस्तेषां महाभाग्यं विनिर्दिशेत् ' इति सामुद्रिकवचनात् । त्रिषु गम्भीरः । अत्र वररुचिः—'स्वरः सत्त्वं च नाभिश्च गम्भीरः शस्यते बुधैः' इति । ब्राह्मे तु—' स्वरे गतौ च नाभौ च गम्भीरस्त्रिषु शस्यते ' इति । नित्यश इति सर्वत्र विशेषणीयम् तेन रोगाद्युपाधिकृतरागादिनिवृत्तिः ॥ १७ ॥

१८ ] ति० टी०—त्रिवलीमानुदरे कण्ठे उभयत्र वा वलीत्रयवान् । त्रिष्ववनतो निम्नः । निम्नत्वं निम्नगत्वम् । तच्च निम-



---

१ उपासितेति गो. पाठः । २ श्रुतवानिति गो. पाठः । ३ देवीति गो. पाठः । ४ वानिति गो. रा. पाठः ।

**चतुर्दशसमद्वन्द्वश्चतुर्दंष्ट्रश्चतुर्गतिः । महोष्ठहनुनासश्च पञ्चस्निग्धोऽष्टवंशवान् ॥ १९ ॥**

ग्रपादतलमध्यत्वम्, निमग्नपादरेखात्वम्, निमग्नस्तनचूचुकत्वं च । चतुर्व्यङ्गश्चतुर्ह्रस्वः । 'ग्रीवा प्रजननं पृष्ठं ह्रस्वे जङ्घे च पूजिते' । त्रिशीर्षवानावर्तत्रययुक्तशीर्षः । 'आवर्तत्रययुक्तं यस्य शिरः क्षितिभृतामयं नाथः' चतुष्कलः चतस्रः कलाश्चतुर्वेदप्राप्तिसूचकाङ्गुष्ठमूलरेखा यस्य सः । 'मूलेऽङ्गुष्ठस्य रेखानां चतस्रस्तिस्र एव वा । एका द्वे वा यथायोगं वेदरेखा द्विजन्मनाम् ॥' चतुर्लेखो ललाटे चतूरेखायुक्तः । 'ललाटे यस्य दृश्यन्ते चतुस्त्रिद्व्येकरेखिकाः । शतद्वयं शतं पष्टिस्तस्यायुर्विंशतिः क्रमात् ॥' चतुष्किष्कुः किष्कुश्चतुर्विंशत्यङ्गुलात्मको हस्तश्चतुर्हस्तप्रमाणः । षण्णवत्यङ्गुलोत्सेध इति यावत् । चतुःसमः । 'बाहुजानूरुगण्डानि चत्वार्यथ समानि च' इति । बाह्वरूजानुगण्डौ समावित्यर्थः ॥ १८ ॥

रा० टी०—त्रिवलीवानिति । त्रिवलीवान् उदरे कण्ठे च वलीत्रयविशिष्टः त्रिषु पादतलपादरेखास्तनचूचुकेषु अवनतः चत्वारि ग्रीवादीनि व्यङ्गानि ह्रस्वानि यस्य सः तथाहि 'ग्रीवा प्रजननं पृष्ठं ह्रस्वे जङ्घे च पूजिते' इति त्रिशीर्षवान् आवर्तत्रयविशिष्टशिरोविशिष्टः तथाहि 'आवर्तत्रययुक्तं यस्य शिरः क्षितिभृतामयं नाथः' चतस्रः चतुर्वेदप्राप्तिसूचिका कला अङ्गुष्ठरेखा यस्य सः तथाहि 'मूलेऽङ्गुष्ठस्य रेखानां चतस्रस्तिस्र एव वा । एका द्वे वा यथायोगं वेदरेखा द्विजन्मनाम्' ललाटे चतस्रो लेखा यस्य तथा हि 'ललाटे यस्य दृश्यन्ते चतुस्त्रिद्व्येकरेखकाः । शतद्वयं शतं पष्टिस्तस्यायुर्विंशतिः क्रमात्' इति चत्वारः किष्कव उत्सेधपरिच्छेदकत्वेन यस्मिन् किष्कुः चतुर्विंशत्यङ्गुलात्मको हस्तः हस्तचतुष्टयपरिमितः षण्णवत्यङ्गुलोत्सेध इति फलितम् । चत्वारो बाह्वादयः समा यस्य तथाहि—'बाहुजानूरुगण्डानि चत्वार्यथ समानि च' इति ॥ १८ ॥

गो० टी०—त्रिवलीवान् उदरे वलित्रयवान् कण्ठवलित्रयवान्वा । अत्र गर्गः—स्थिरा त्रिरेखा सुभगोपपन्ना स्निग्धा सुमांसोपचिता सुवृत्ता । न चातिदीर्घा चतुरङ्गुला च ग्रीवा सुदीर्घा भवतीह धन्या' इति । त्र्यवनतः त्रीण्यवनतानि निम्नानि यस्यासौ त्र्यवनतः तानि स्तनचूचुकपादरेखाः । अत्र मिहिरः—'पीनोपचितैर्निम्नैः क्षितिपतयश्चूचुकैः स्तनैः सुखिनः । स्निग्धा निम्ना रेखा धनिनां तद्व्यत्ययेन निःस्वानाम्' इति । चत्वारि व्यङ्गानि ह्रस्वानि यस्यासौ चतुर्व्यङ्गः । अत्र वररुचिः—ग्रीवाप्रजननं पृष्ठं ह्रस्वं जङ्घा च पूज्यते' इति । यद्वा चत्वारो व्यङ्गाः विकलाः यस्य सः चतुर्व्यङ्गः ते च शिराविकलः पादः रोमान्तरविकलो रोमकूपः दैर्घ्यविकलो मेढ्रः मांसविकलो बस्तिः । अत्र नारदः—'पादैः प्रस्वेदरहितैः शिराहीनश्च पार्थिवः । एकरोमा भवेद्राजा द्विरोमा पण्डितो भवेत् ॥ त्रिरोमा चतुरोमा च भवेद्भाग्यविवर्जितः । समपादोपविष्टस्य गुल्फं स्पृशति मेहनम् ॥ यस्येश्वरं तं जानीयात्सुखिनं चैव मानवम् । निर्मांसः संहतो बस्तिर्येषां ते सुखभागिनः ॥' इति । त्रिशीर्षवान् त्रिभिर्लक्षणैर्युक्तं शीर्षं तदस्यास्तीति त्रिशीर्षवान् । तानि लक्षणान्यावर्ताः । 'आवर्तत्रयरुचिरं यस्य शिरः स क्षितिभृतां नेता' इति कथनात् । यद्वा त्रिप्रकारं समवृत्तं छत्राकारं विशालं च शीर्षमस्यास्तीति त्रिशीर्षवान् । अत्र नारदः—'समवृत्तशिराश्चैव छत्राकारशिरास्तथा । एकच्छत्रां महीं भुङ्क्ते दीर्घमायुश्च विन्दति ॥' चतस्रः कलाः वेदाः यस्य चतुष्कलः । अत्र शरीरलक्षणप्रकरणे कलाशब्दस्तत्सूचकरेखापरः । अत्र नन्दी—'मूलेऽङ्गुष्ठस्य वेदानां चतस्रस्तिस्र एव वा । एका द्वे वा यथायोगं रेखा ज्ञेया द्विजन्मनाम्' इति ॥ चतुर्लेखः ललाटे पादयोः पाण्योश्चतस्रो लेखा रेखा यस्य च चतुर्लेखः । 'ललाटे यस्य दृश्यन्ते चतुस्त्रिद्व्येकरेखिकाः शतद्वयं शतं पष्टिस्तस्यायुर्विंशतिस्तथा' इति कात्यायनः । 'यस्य पादतले वज्रध्वजशङ्खाङ्कुशोपमाः । रेखाः सम्यक् प्रकाशन्ते मनुजेन्द्रं तमादिशेत्' इति नारदः । 'पाणौ चतस्रो रेखाश्च यस्य तिष्ठन्त्यभङ्गुराः' इति ब्रह्मा । चत्वारः किष्कवः यस्य स चतुष्किष्कुः । चतुर्विंशत्यङ्गुलात्मको हस्तः किष्कुः । षण्णवत्यङ्गुलोत्सेध इत्यर्थः । 'षण्णवत्यङ्गुलोत्सेधो यः पुमान् स दिवौकसः' इति ब्रह्मपुराणवचनम् । चतुःसमः चत्वारः समा यस्य स चतुःसमः ते च बाहुजानूरुगण्डाः । तदुक्तं ब्रह्माण्डे—'बाहुजानूरुगण्डाश्च चत्वार्यथ समानि च' इति ॥ १८ ॥

१९ ] ति० टी०—चतुर्दशसमद्वन्द्व इति समपरिमाणचतुर्दशाङ्गद्वन्द्वः । तदुक्तम्—'भ्रुवौ नासापुटे नेत्रे कर्णावोष्ठौ च चूचुकौ । कूर्परे मणिबन्धौ च जानुनी वृषणौ कटी ॥ करौ पादौ स्फिजौ यस्य समौ ज्ञेयः स भूपतिः । स्कन्धौ गण्डौ तथा दन्ता ऊरू ज्ञेयौ च जत्रुणी ॥' इत्यन्यत्र पाठः । चतुर्दंष्ट्र इति । चतस्रो दंष्ट्रा दन्तपङ्क्तिद्वये प्रतिपार्श्वं शास्त्रोक्तलक्षणा यस्य सः । तत्र—'स्निग्धा घनाश्च दशनाः सुतीक्ष्णदंष्ट्राः शुभाश्चतस्र' इति । दंष्ट्राणां तीक्ष्णत्वं कङ्कुकादिखण्डनसमर्थत्वम् । चतुर्गतिरिति । सिंहशार्दूलगजवृषभैश्चतुर्भिस्तुल्या गतिर्यस्य सः । महोष्ठहनुनासश्चेति । महत्प्रशस्तमोष्ठहनुनासं यस्य सः । तत्रौष्ठस्य प्राशस्त्यं बिम्बफलादिवदरुणत्वे सति मांसलत्वम् । हनोस्तु परिपूर्णमांसलोन्नतत्वम् । नासिकायास्तु दीर्घोन्नतरुचिरपुटत्वम् । पञ्चस्निग्ध इति । पञ्चवाग्वक्त्रनखलोमत्वचं स्निग्धं यस्य सः । अष्टवंशवान्प्रशस्ताष्टवंशाख्यावयववान् । वंशशब्देन दैर्घ्यं विवक्षितम् । 'बाहू च नलकावूरू जङ्घे चेत्यष्टवंशकाः' । नलकावङ्गुल्याविति तीर्थः ॥ १९ ॥

रा० टी०—चतुरिति । चतुर्दशसंख्याकाः समद्वन्द्वाः समत्वसमानाधिकरणीभूतद्वन्द्वत्वविशिष्टा यस्य सः तथाहि 'भ्रुवौ नासापुटे नेत्रे कर्णावोष्ठौ च चूचुकौ । कूर्परे मणिबन्धौ च जानुनी वृषणौ कटी ॥ करौ पादौ स्फिजौ यस्य समौ ज्ञेयौ स भूपतिः ।' चतस्रो दंष्ट्रादयः यथाशास्त्रं दन्तपङ्क्ति-

दशपद्मो दशबृहत्त्रिभिर्व्याप्तो द्विशुक्लवान्। षडुन्नतो नवतनुस्त्रिभिर्व्याप्नोति राघवः ॥ २० ॥

द्वयप्रतिपार्श्ववर्तिन्यो यस्य सः तथाहि ' स्निग्धा घनाश्च दशनाः सुतीक्ष्णदंष्ट्राः शुभाश्चतस्रः ' इति चतुर्णां सिंहशार्दूलगजवृषभाणां गतिरिव गतिर्यस्य सः महत् प्रशंसितम् औष्ठहनुनासं यस्य सः तत्रौष्ठस्य प्राशस्त्यं बिम्बफलादिसदृशारुणत्वसमानाधिकरणीभूतमांसलत्वेन, हनोस्तु परिपूर्णमांसलोन्नतत्वेन, नासिकायास्तु दीर्घोन्नतरुचिरपुटत्वेन । पञ्च वाग्वक्त्रनखलोमत्वचः स्निग्धा यस्य सः पूर्वं त्रयाणां स्निग्धत्वोक्तावपीदानीं पञ्चानां स्निग्धत्वोक्तिः मतभेदप्रदर्शनाय तेन सर्वमते रामावयवानां सुलक्षणत्वं बोधितम् वक्ष्यमाणषडुन्नतत्वेऽप्येवैव गतिः अष्टौ वंशा दैर्घ्यविशिष्टा बाह्वादयः सन्ति अस्य तथाहि ' बाहू च नलकावूरू जङ्घे चेत्यष्ट वंशकाः ' । नलकावङ्गुल्याविति तीर्थः ॥ १९ ॥

गो० टी०–चतुर्दशसमद्वन्द्वः चतुर्दशसंख्यानि समानि द्वन्द्वानि यस्य सः । तथात्र सामुद्रिकम् ' भ्रुवौ नासापुटे नेत्रे कर्णावोष्ठौ च चूचुके । कूर्परौ मणिबन्धौ च जानुनी वृषणौ कटी ॥ करौ पादौ स्फिजौ यस्य समौ ज्ञेयः स भूपतिः ' इति । चत्वारो दंष्ट्राकारा दन्ता यस्य स चतुर्दंष्ट्रः । तदाह मिहिरः— ' स्निग्धा घनाश्च दशनाः सुतीक्ष्णदंष्ट्राः समाश्च शुभाः ' इति । चतुर्गतिः चतुर्णां सिंहशार्दूलगजवृषभाणां गतिरिव गतिर्यस्य सः ' गजसिंहगती वीरौ शार्दूलवृषभोपमौ ' इति बालकाण्डोक्तेः । महोष्ठहनुनासश्च ओष्ठस्य महत्त्वं बन्धुजीवबिम्बफलारुणमांसलत्वं हनोस्तु परिपूर्णमांसलत्वम् नासिकाया दीर्घतुङ्गत्वम् । तथाच संहिता–' बन्धुजीवकुसुमोपमोऽधरो मांसलो रुचिरबिम्बरूपधृत् । पूर्णमांसलहनुस्तु भूमिपस्तुङ्गतुण्डरुचिराकृतिस्तथा ॥' इति । तुण्डशब्देन नासिकोच्यते। पञ्चस्निग्धः पञ्च स्निग्धाः अवयवाः यस्य सः ते च वाक्यवक्त्रनखलोमत्वचः, केशनेत्रदन्तत्वक्पादतलानि वा । अत्र वररुचिः— ' चक्षुःस्नेहेन सौभाग्यं दन्तस्नेहेन भोजनम् । त्वचःस्नेहेन शयनं पादस्नेहेन वाहनम् ' इति । ' स्निग्धनीलमृदुकुञ्चितास्तथा मूर्धजाः सुखकराः समं शिरः' इति मिहिरः । पूर्वं त्रिषु स्निग्ध इत्युक्तेः । अत्र पञ्चस्निग्ध इतीदं मतभेदमाश्रित्योक्तम् । अष्टवंशवान् अष्टौ वंशाः आयतावयवा यस्य सः आयताष्टावयव इत्यर्थः । अत्र सामुद्रिकम्—पृष्ठवंशः शरीरं च हस्तपादाङ्गुली करौ । नासिका चक्षुषी कर्णौ प्रजनो यस्य चायताः' इति । प्रजनस्यायतत्वमार्जवम् ॥ १९ ॥

२० ] ति० टी०–दशपद्मः । ' मुखनेत्रास्यजिह्वोष्ठतालुस्तननखं करौ । पादौ च दश पद्मानि पद्माकाराणि यस्य च ॥ ' इति । आस्यमोष्ठमध्यम् । दशबृहत् । तानि तु—'उरः शिरो ललाटं च ग्रीवा बाहुंसनाभयः । पादौ पृष्ठं श्रुती चैव विशालास्ते सुखप्रदाः ॥ ' इति । त्रिभिः श्रीयशस्तेजोभिर्व्याप्तो युक्तः । द्विशुक्लवान् । 'द्वे शुद्धौ तु शुभौ शुक्लौ वंशौ मातुः पितुस्तथा ' इत्युक्तेः । षडुन्नतः । तानि च—'कक्षः कुक्षिश्च वक्षश्च घ्राणस्कन्धललाटिकाः । सर्वभूतेषु निर्दिष्टा उन्नतास्तु सुखप्रदाः ॥' इति । पूर्वं त्र्युन्नतस्निग्धत्वमुक्तम्, अत्र पञ्चस्निग्धत्वं षडुन्नतत्वं चोभयमपि मतभेदादविरुद्धम् । एवं नानामतप्रदर्शनं रामस्य नानामतसंमतसर्वलक्षणयुक्तत्वसूचनाय । नवतनुर्नवसु सूक्ष्मः । तानि च—' सूक्ष्माण्यङ्गुलिपर्वाणि केशरोमनखत्वचः । शेफश्च येषां सूक्ष्माणि ते नरा दीर्घजीविनः ॥ ' इति प्रोक्तं षट्कम् । मृदुश्मश्रुत्वं सूक्ष्मदृष्टित्वं सूक्ष्मबुद्धित्वं चेति नवसूक्ष्मत्वम् । दृष्टेः सौक्ष्म्यं रत्नपरीक्षान्तसूक्ष्मदर्शनचातुर्यम् । बुद्धेः सूक्ष्मत्वं तत्त्वसाक्षात्कारसमर्थत्वम्। त्रिभिर्व्याप्नोति धर्मार्थकामैः कालं यथोचितं व्याप्नोति । त्रिवर्गसेवीत्यर्थः ॥ २० ॥

रा० टी०–दशेति । दश पद्मानि पद्माकाराणि यस्य सः तथाहि ' मुखनेत्रास्यजिह्वोष्ठतालुस्तननखं करौ । पादौ च दश पद्मानि पद्माकाराणि यस्य च ' इति आस्यमोष्ठमध्यमिति तद्व्याख्या दश उरःप्रभृतीनि बृहन्ति यस्य तथाहि ' उरः शिरो ललाटं च ग्रीवा बाहुंसनाभयः । पादौ पृष्ठं श्रुती चैव विशालास्ते सुखप्रदाः ' इति षट् कक्षप्रभृतयः उन्नता यस्य तथाहि ' कक्षः कुक्षिश्च वक्षश्च घ्राणं स्कन्धो ललाटिका । सर्वभूतेषु निर्दिष्टा उन्नतास्ते सुखप्रदाः ' इति नवाङ्गुलिपर्वादीनि तनूनि सूक्ष्माणि यस्य तथाहि–सूक्ष्माण्यङ्गुलिपर्वाणि केशलोमनखत्वचः। शेफश्च येषां सूक्ष्माणि ते नरा दीर्घजीविनः ' इति त्रिभिः श्रीयशःप्रतापैर्व्याप्तः भुवनेषु पूर्णः द्वौ पितृवंशमातृवंशौ शुक्लौ शुद्धौ तद्वान् संग्रहानुग्रहे अर्जनदानयो रतः राघवः त्रिभिर्ब्रह्मादित्रितयकृतिद्वारा व्याप्नोति अत्र व्युत्क्रमेण व्याख्यान संदर्भशुद्धये ॥ २० ॥ २१ ॥

गो० टी०–दशपद्मः दशपद्माकारावयवाः यस्य सः दशपद्मः ' मुखनेत्रास्यजिह्वोष्ठतालुस्तननखाः करौ । पादौ च दश पद्मानि पद्माकाराणि यस्य च ' इति । दश बृहत् दशबृहदवयवा यस्य सः । ते च—' उरः शिरो ललाटं च ग्रीवा बाहुंसनाभयः । पार्श्वपृष्ठस्वराश्चेति विशालास्ते शुभप्रदाः । ' इति सामुद्रिकम् । ब्राह्मे तु—'शिरोललाटे श्रवणे ग्रीवा वक्षश्च हृत्तथा । उदरं पाणिपादौ च पृष्ठं दश बृहन्ति च ॥' इति त्रिभिर्व्याप्तः । त्रिभिर्व्याप्तिश्च यस्य स्यात्तेजसा यशसा श्रियेति ब्राह्मोक्तरीत्या त्रिभिर्व्याप्तः । द्विशुक्लवान् द्वौ दन्तनेत्रे शुक्ले यस्य सः द्विशुक्लवान् । षडुन्नतः षट् उन्नता अवयवा यस्य सः । ते च—' कक्षः कुक्षिश्च वक्षश्च घ्राणं स्कन्धो ललाटिका । सर्वभूतेषु निर्दिष्टा उन्नताङ्गाः शुभप्रदाः ॥ ' इति वररुचिः । अत्र मतभेदेनोक्तेर्न पुनरुक्तिः । मतभेदश्रवणं च रामस्य सकलशास्त्रोक्तमहापुरुषलक्षणपरिपूर्णत्वद्योतनाय । नवतनुः नव तनवः सूक्ष्मा यस्य । तानि च— ' केशश्मश्रुनखलोमत्वगङ्गुलिपर्वशेफोबुद्धिदर्शनानि । सूक्ष्माण्यङ्गुलिपर्वाणि केशलोमनखत्वचः । शेफश्च येषां सूक्ष्माणि ते नरा दीर्घजीविनः ॥ ' इति वररुचिः । त्रिभिर्व्याप्नोति त्रिभिः

सत्यधर्मरतः श्रीमान्संग्रहानुग्रहे रतः । देशकालविभागज्ञः सर्वलोकप्रियंवदः ॥ २१ ॥
भ्राता चास्य च द्वैमात्रः सौमित्रिरमितप्रभः । अनुरागेण रूपेण गुणैश्चापि तथाविधः ॥ २२ ॥
सस्रुवर्णच्छविः श्रीमान्रामः श्यामो महायशाः । तावुभौ नरशार्दूलौ त्वद्दर्शनकृतोत्सवौ ॥ २३ ॥
विचिन्वन्तौ महीं कृत्स्नामस्माभिः सह संगतौ । त्वामेव मार्गमाणौ तौ विचरन्तौ वसुंधराम् ॥ २४ ॥
ददर्शतुर्मृगपतिं पूर्वजेनावरोपितम् । ऋष्यमूकस्य मूले तु बहुपादपसंकुले ॥ २५ ॥
भ्रातुर्भयार्तमासीनं सुग्रीवं प्रियदर्शनम् । वयं च हरिराजं तं सुग्रीवं सत्यसंगरम् ॥ २६ ॥
परिचर्यामहे राज्यात्पूर्वजेनावरोपितम् । ततस्तौ चीरवसनौ धनुःप्रवरपाणिनौ ॥
[ ऋष्यमूकस्य शैलस्य रम्यं देशमुपागतौ ] । स तौ दृष्ट्वा नरव्याघ्रौ धन्विनौ वानरर्षभः ॥ २७ ॥
अभिप्लुतो गिरेस्तस्य शिखरं भयमोहितः । ततः स शिखरे तस्मिन्वानरेन्द्रो व्यवस्थितः ॥ २८ ॥
तयोः समीपं मामेव प्रेषयामास सत्वरम् । तावहं पुरुषव्याघ्रौ सुग्रीववचनात्प्रभू ॥ २९ ॥
रूपलक्षणसंपन्नौ कृताञ्जलिरुपस्थितः । तौ परिज्ञाततत्त्वार्थौ मया प्रीतिसमन्वितौ ॥ ३० ॥
पृष्ठमारोप्य तं देशं प्रापितौ पुरुषर्षभौ । निवेदितौ च तत्त्वेन सुग्रीवाय महात्मने ॥ ३१ ॥
तयोरन्योन्यसंभाषाद्भृशं प्रीतिरजायत । तत्र तौ कीर्तिसंपन्नौ हरीश्वरनरेश्वरौ ॥ ३२ ॥

---

पूर्वाह्णमध्याह्नापराह्णैः कालैः धर्मार्थकामान् व्याप्नोति अनुतिष्ठतीति । तदुक्तं ब्राह्मे—'धर्मार्थकामाः कालेषु त्रिषु यस्य स्वनिष्ठिताः' इति ॥ २० ॥

२१ ] ति० टी०—संग्रहानुग्रहे संग्रहो धनबलादीनाम्, अनुग्रहस्ताभ्यां प्रजारक्षणम्, तदुभयनिष्ठः ॥ २१ ॥

गो० टी०—संग्रहानुग्रह इति । संग्रहः अर्जनम् । अनुग्रहः फलदानम् ॥ २१ ॥

२२–२३ ] ति० टी०—द्वैमात्रः राममात्रपेक्षया द्वितीया माता द्विमाता । तस्या अपत्यमित्यर्थः । भिन्नोदरभ्रातेत्यर्थः । 'वैमात्रः' इति पाठान्तरम् ॥ २२ ॥ २३ ॥

रा० टी०—भ्रातेति । अस्य रामस्य सौमित्रिर्भ्राता द्वैमात्रः राममात्रपेक्षया द्वितीयमातृजनित इत्यर्थः अनुरागादिभिस्तथाविधः रामसदृशः ॥ २२ ॥

रा० टी०—स इति । सुवर्णच्छविः गौरः स लक्ष्मणः श्यामो रामश्च त्वद्दर्शनसमुत्सुकौ अत एव विचिन्वन्तौ सन्तौ अस्माभिः सह संगतौ बभूवतुरिति शेषः । सार्धश्लोक एकान्वयी ॥ २३ ॥

गो० टी०—भ्राता च तस्येति । द्वैमात्रः सपत्नीपुत्रः ॥ २२ ॥ २३ ॥

२४ ] ति० टी०—अस्माभिः सुग्रीवमन्त्रिभिरित्यर्थः । उक्तमेव विस्तरेणाह—त्वामेवेति ॥ २४ ॥

रा० टी०—त्वामिति । तौ रामलक्ष्मणौ पूर्वजेन ज्येष्ठभ्रात्रा अवरोपितं विवासितम् अत एव भ्रातुर्भयात् ऋष्यमूकस्य मूले आसीनं तं प्रसिद्धं सुग्रीवं ददर्शतुः ददृशतुः । अर्धचतुष्टयमेकान्वयि ॥ २४ ॥ २५ ॥

गो० टी०—त्वामेवेति । मृगपतिं सुग्रीवम् । पूर्वजेन वालिना । अवरोपितं राज्यादिति शेषः ॥ २४–२६ ॥

२५–२६ ] ति० टी०—मृगपतिं शाखामृगपतिं सुग्रीवम्, पूर्वजेन वालिनाऽवरोपितं राज्याद्भ्रंशितम् ॥ २५ ॥ २६ ॥

रा० टी०—वयमिति । वयं तु सत्यः कापट्यरहितः संगरः संग्रामो यस्य तं सुग्रीवं परिचर्यामहे परिचरामः । सार्धश्लोक एकान्वयी ॥ २६ ॥ २७ ॥

२७ ] ति० टी०—परिचर्यामहे तच्छ्रयनावापौ । परिचराम इत्यर्थः । अवरोपितं राज्येन हीनं कृतम्, पाणिनौ । पाणी इति यावत् ॥ २७ ॥

रा० टी०—तत इति । ततो रामसंदर्शनानन्तरं तौ रामलक्ष्मणौ दृष्ट्वा भयमोहितः वालिभीत्या विवेकरहितः सुग्रीवः गिरेः शिखरमभिप्लुतः उत्प्लुत्य प्राप्तः । सार्धश्लोक एकान्वयी ॥ २८ ॥

गो० टी०—तत इति । पाणिनाविति नान्तत्वमार्षम् ॥ २७–३१ ॥

२८–२९ ] ति० टी०—अभिप्लुत उत्प्लुत्यारूढः ॥ २८ ॥ २९ ॥

रा० टी०—तत इति । शिखरे व्यवस्थितो वानरेन्द्रः तयो रामलक्ष्मणयोः समीपं मामेव प्रेषयामास । अर्धद्वयमेकान्वयि ॥ २९ ॥

रा० टी०—ताविति । सुग्रीववचनात् तौ रामलक्ष्मणौ अहमुपस्थितः ॥ ३० ॥

३०–३२ ] ति० टी०—मया परिज्ञाततत्त्वार्थौ मया विज्ञाताशेषवृत्तान्तौ विज्ञापिताशेषवृत्तान्तौ च ॥ ३०–३२ ॥

रा० टी०—ताविति । परिज्ञातः तत्त्वार्थः सत्यवृत्तान्तो

---

१ तस्येति गो. पाठः । २ अपराजित इति गो. पाठः । ३ अभीति गो. पाठः । ४ पृष्ठे इति गो. पाठः । ५ अर्धमेतदधिकं गो. पाठे । ६ अवेति गो. पाठः । ७ लापादिति गो. पाठः ।

परस्परकृताश्वासौ कथया पूर्ववृत्तया । तं ततः सान्त्वयामास सुग्रीवं लक्ष्मणाग्रजः ॥ ३३ ॥
स्त्रीहेतोर्वालिना भ्रात्रा [1]निरस्तं [2]पुरुतेजसा । ततस्त्वन्नाशजं शोकं रामस्याक्लिष्टकर्मणः ॥ ३४ ॥
लक्ष्मणो वानरेन्द्राय सुग्रीवाय न्यवेदयत् । स श्रुत्वा वानरेन्द्रस्तु लक्ष्मणेनेरितं वचः ॥ ३५ ॥
तदासीन्निष्प्रभोऽत्यर्थं ग्रहग्रस्त इवांशुमान् । ततस्त्वद्गात्रशोभीनि रक्षसा ह्रियमाणया ॥ ३६ ॥
यान्याभरणजालानि पातितानि महीतले । तानि सर्वाणि रामाय आनीय हरियूथपाः ॥ ३७ ॥
संहृष्टा दर्शयामासुर्गतिं तु न विदुस्तव । तानि रामाय दत्तानि मयैवोपहृतानि च ॥ ३८ ॥
स्वनवन्त्यवकीर्णानि तस्मिन्[3]विहृतचेतसि । तान्यङ्के दर्शनीयानि कृत्वा बहुविधं तदा ॥ ३९ ॥
तेन देवप्रकाशेन देवेन परिदेवितम् । [ [4]पश्यतस्तानि रुदतस्ताम्यतश्च पुनः पुनः । ]
प्रादीपयद्दाशरथेस्तदा शोकहुताशनम् ॥ ४० ॥
शायितं च चिरं तेन दुःखार्तेन महात्मना । मयाऽपि विविधैर्वाक्यैः कृच्छ्रादुत्थापितः पुनः॥ ४१ ॥
तानि दृष्ट्वा [5]महार्हाणि दर्शयित्वा [6]मुहुर्मुहुः । राघवः सहसौमित्रिः [7]सुग्रीवे संन्यवेशयत् ॥ ४२ ॥

---

याभ्यां तौ पुरुषर्षभौ रामलक्ष्मणौ पृष्ठमारोप्य तं सुग्रीवाधिष्ठितं देशं मया प्रापितौ तत्त्वेन यथार्थकथनेन सुग्रीवाय निवेदितौ च । सार्धश्लोक एकान्वयी ॥ ३१ ॥ ३२ ॥

रा० टी०–तयोरिति । तयो रामसुग्रीवयोः संभाषात् भृशं प्रीतिरजायत । अर्धं पृथक्–तत्रेति । तत्र तस्मिन् समये प्रीतिसंपन्नौ पूर्ववृत्तया कथयोपलक्षितौ हरीश्वरनरेश्वरौ परस्परकृताश्वासौ बभूवतुरिति शेषः । अर्धद्वयमेकान्वयि ॥ ३३ ॥

३३ ] ति० टी०–पूर्ववृत्तया स्वीयस्वीयवृत्तान्तगोचरया ॥ ३३ ॥

रा० टी०–तमिति । पुरुतेजसा महातेजोविशिष्टेन भ्रात्रा स्त्रीहेतोः अनुजस्त्रीपरिग्रहार्थं निरस्तं सुग्रीवं लक्ष्मणाग्रजः सान्त्वयामास ॥ ३४ ॥

३४–३५ ] ति० टी०–स्त्रीहेतोः सुग्रीवस्त्रीपरिग्रहार्थम् । पुरु महत्तेजो यस्य तेन । त्वन्नाशजं त्वदपहारजम् ॥३४॥३५॥

रा० टी०–तत इति । ततः सुग्रीववृत्तान्तश्रवणानन्तरं त्वन्नाशजं त्वददर्शनजनितं रामस्य शोकं लक्ष्मणः सुग्रीवाय न्यवेदयत् ॥ ३५ ॥

रा० टी०–स इति । लक्ष्मणेनेरितं वचो वानरेन्द्रः श्रुत्वा ग्रहग्रस्तोंशुमानिव निष्प्रभोऽभूत् शुशोचेत्यर्थः ॥ ३६ ॥

गो० टी०–स श्रुत्वेति । अत्यर्थं निष्प्रभ इति आत्मवद्रामस्यापि दुःखहेतुश्रवणादिति भावः । यद्वा रामापेक्षया अत्यन्तनिष्प्रभः । रामः सीताविरहेण निष्प्रभोऽभूत् सुग्रीवस्तु तयोः साहित्यादर्शनाद्रामक्लेशदर्शनाच्चात्यर्थं निष्प्रभोऽभूत् ॥ ३६ ॥ ३७॥

३६–३७ ] ति० टी०–निष्प्रभः खिन्नचित्तः । त्वद्गात्रं शोभयितुं शीलं येषां तानि ॥ ३६ ॥ ३७ ॥

रा० टी०–तत इति । रक्षसा ह्रियमाणया त्वया यान्याभरणजालानि पातितानि तानि सर्वाणि आनीय हरियूथपाः दर्शयामासुः परन्तु तव गतिं स्थानं न विदुः । अर्धचतुष्टयमेकान्वयि ॥ ३७ ॥ ३८ ॥

गो० टी०–तानीत्यादि । आनीय हरियूथपा इति पूर्वं सुग्रीवेणानयनमुक्तं तद्धरियूथपद्वारेत्यत्रोच्यते । गतिं रावणस्थानम् ॥ ३८ ॥

३८ ] ति० टी०–दर्शयामासुः सुग्रीवाज्ञयेति शेषः ॥३८॥

रा० टी०–तानीति । तस्मिन् रामे विहतचेतसि सति यान्याभरणजालानि रामाय दत्तानि वानरैरिति शेषः, तानि स्वनवन्ति पतनकाले स्वनविशिष्टानि मयैवोपहृतानि ॥ ३९ ॥

गो० टी०–तानीति । दत्तानि सुग्रीवेणेति शेषः । मयैवोपहृतानि पूर्वं पतनकाल इति शेषः । इदानीं हरियूथपैरानीतत्वोक्तेः । स्वनवन्ति आकाशात्पतनकाले ॥ ३९ ॥ ४० ॥

३९ ] ति० टी०–मयैवोपहृतानि च प्रथममिति शेषः । अवकीर्णानि भूमौ पातनात्किंचिद्विशीर्णानि । तानि दत्तानि गृहीत्वा शोकात्तस्मिन्विहतचेतसि प्रथमार्थे सप्तमी । विहतचेताः मूर्च्छितचेता अभूदित्यर्थः ॥ ३९ ॥

रा० टी०–तानीति । तानि आभरणानि अङ्के कृत्वा तेन रामेण बहुविधं परिदेवितं तदा तस्मिन् काले दाशरथेः परिदेवितं शोकहुताशनमस्मच्छोकवह्निं प्रादीपयत् अत एव दुःखार्तेन तेन महात्मना शयितं शयनं भूमौ पतितमित्यर्थः, वाक्यैर्बोधकवचनैर्मया अपिना सुग्रीवादिना च पुनः पुनः उत्थापितः । सार्धश्लोकद्वयमेकान्वयि ॥ ४०–४२ ॥

४० ] ति० टी०–देवप्रकाशेन देवावतारेण, अत एव देवेन परिदेवितं प्रादीपयत् । आभरणदर्शनमिति शेषः ॥४०॥

४१–४२ ] ति० टी०–शायितं शोकाद्भूमौ पतितम् ॥४१॥४२

रा० टी०–तानीति । तान्याभरणानि पुनः पुनर्दृष्ट्वा दर्शयित्वा च राघवः सुग्रीवे संन्यवेशयत् ॥ ४३ ॥

---

१ निरस्त इति रा. पाठः । २ उर्वीति गो. पाठः । ३ गतेति गो. पाठः । ४ अर्धमेतदधिकं गो. पाठे । ५ बाहुरिति गो. पाठः । ६ पुनः पुनरिति गो. पाठः । ७ सुग्रीवेणेति गो. पाठः ।

स तवादर्शनादार्ये, राघवः परितप्यते । महता ज्वलता नित्यमग्निनेवाग्निपर्वतः ॥ ४३ ॥
त्वत्कृते तमनिद्रा च शोकश्चिन्ता च राघवम् । तापयन्ति महात्मानमग्न्यगारमिवाग्नयः ॥ ४४ ॥
तवादर्शनशोकेन राघवः परिचाल्यते । महता भूमिकम्पेन महानिव शिलोच्चयः ॥ ४५ ॥
काननानि सुरम्याणि नदीप्रस्रवणानि च । चरन्न रतिमाप्नोति त्वामपश्यन्नृपात्मजे ॥ ४६ ॥
स त्वां मनुजशार्दूलः क्षिप्रं प्राप्स्यति राघवः । समित्रबान्धवं हत्वा रावणं जनकात्मजे ॥ ४७ ॥
सहितौ रामसुग्रीवावुभावकुरुतां तदा । समयं वालिनं हन्तुं तव चान्वेषणं प्रति ॥ ४८ ॥
ततस्ताभ्यां कुमाराभ्यां वीराभ्यां स हरीश्वरः । किष्किन्धां समुपागम्य वाली युद्धे निपातितः ॥ ४९ ॥
ततो निहत्य तरसा रामो वालिनमाहवे । सर्वर्क्षहरिसङ्घानां सुग्रीवमकरोत्पतिम् ॥ ५० ॥
रामसुग्रीवयोरैक्यं देव्येवं समजायत । हनूमन्तं च मां विद्धि तयोर्दूतमुपागतम् ॥ ५१ ॥
स्वं राज्यं प्राप्य सुग्रीवः स्वानानीय महाकपीन् । त्वदर्थं प्रेषयामास दिशो दश महाबलान् ॥ ५२ ॥
आदिष्टा वानरेन्द्रेण सुग्रीवेण महौजसः । अद्रिराजप्रतीकाशाः सर्वतः प्रस्थिता महीम् ॥ ५३ ॥
ततस्ते मार्गमाणा वै सुग्रीववचनातुराः । चरन्ति वसुधां कृत्स्नां वयमन्ये च वानराः ॥ ५४ ॥

---

गो० टी०—शयितमिति । शयितं मूर्छितम् ॥ ४२ ॥

गो० टी०—तानीति । सुग्रीवे संन्यवेदयत् सुग्रीवहस्ते न्यस्तवानित्यर्थः ॥ ४३ ॥

४३-४७ ] ति० टी०—अग्निपर्वतः संवर्ताख्यकालाग्निनिवासभूतः पर्वतोऽग्निपर्वतः । 'तत्र माल्यवतः शृङ्गे दृश्यते हव्यवाट् सदा । नाम्ना संवर्तको नाम कालाग्निर्भरतर्षभ ॥' इति भीष्मपर्वणि भारतोक्तेः ॥ ४३-४७ ॥

रा० टी०—स इति । हे आर्ये ! राघवः तवादर्शनात् ज्वलता अग्निना अग्निपर्वतः कालाग्निनिवासभूतगिरिरिव नित्यं परितप्यते ॥ ४५ ॥

रा० टी०—त्वदिति । त्वत्कृते त्वदर्थम् अनिद्रादयः अग्न्यगारमग्नय इव राघवं तापयन्ति ॥ ४५ ॥

रा० टी०—तवेति । तवादर्शनशोकेन महता भूमिकम्पेन महान् शिलोच्चय इव राघवः परिचाल्यते ॥ ४६ ॥

रा० टी०—काननानीति । त्वामपश्यन् राघवः काननादीनि चरन्नपि रतिं प्रीतिं नाप्नोति ॥ ४७ ॥

रा० टी०—स इति । स राघवः रावणं हत्वा त्वां क्षिप्रं प्राप्स्यति ॥ ४८ ॥

गो० टी०—स तवेति । अग्निपर्वतो नाम मेरुशिखरवर्ती कश्चिद्गिरिः । उक्तं च भारते—'अत्र माल्यवतः शृङ्गे दृश्यते हव्यवाट् सदा । नाम्ना संवर्तको नाम कालाग्निर्भरतर्षभ ॥' इति ॥ ४४ ॥ ५१ ॥

४८-५३ ] ति० टी०—सहितौ सख्यं प्राप्तौ । समयं प्रतिज्ञाम् ॥ ४८-५३ ॥

रा० टी०—सहिताविति । सहितौ एकीभूतौ उभौ रामसुग्रीवौ वालिनं हन्तुं तवान्वेषणं प्रति अन्वेषणं कर्तुं च समयं प्रतिज्ञाम् अकुरुताम् ॥ ४९ ॥

रा० टी०—तत इति । ततः प्रतिज्ञाकरणानन्तरं कुमाराभ्यां रामलक्ष्मणाभ्यां किष्किन्धां समुपागम्य युद्धे वाली निपातितः हतः ॥ ५० ॥

रा० टी०—तत इति । रामः वालिनं निहत्य सुग्रीवं निखिलऋक्षादीनां पतिमकरोत् ॥ ५१ ॥

रा० टी०—रामेति । एवमुक्तप्रकारेण रामसुग्रीवयोः ऐक्यं सख्यं समजायत मां तु तयोर्दूतं हनूमन्तं विद्धि जानीहि ॥ ५२ ॥

रा० टी०—स्वमिति । सुग्रीवः स्वं राज्यं प्राप्य अत एव स्वान् स्वकीयान् महाकपीन् आनीय त्वदर्थं प्रेषयामास ॥ ५३ ॥

रा० टी०—आदिष्टा इति । सुग्रीवेणादिष्टाः वानरेन्द्रा सर्वतः सर्वां महीं प्रस्थिताः ॥ ५४ ॥

गो० टी०—ननु वानराणां नराणां च कथमासीत्समागम इति वामदक्षिणहस्तवैषम्यमप्यविजानानां शाखायाः शाखामाप्लुत्य जीवतां तिरश्चां वसिष्ठशिष्यतया निरतिशयाचारसंपन्नयोश्चक्रवर्तिपुत्रयोश्च कथं समागमो जात इति पृष्टं तस्य किमुत्तरमुक्तमित्यत्राह—रामसुग्रीवयोरिति । रामसुग्रीवयोरैक्यमेवं समजायत । एवमिति प्रत्यक्षनिर्देशः । स्वानुजे विद्यमानेऽपि यथाहं सुग्रीवदूतोऽन्तःपुरकार्यसमाधानायागतः तथा तयोरैक्यं मैत्री जातेत्यर्थः । यद्वा एवं समजायत अहमप्येवं दृष्टवान् । न योग्यतामवगच्छामीत्यर्थः ॥ ५२-५४ ॥

५४ ] ति० टी०—सुग्रीववचनातुराः सुग्रीवाज्ञाभीताः ५४

---

१ प्रवीति गो. पाठः । २ नदीरिति गो. पाठः । ३ तथेति गो. पाठः । ४ देवीति रा. पाठः । ५ इहेति गो. पाठः । ६ स्वराज्यमिति गो. पाठः । ७ समानीय हरीश्वरानिति गो. पाठः । ८ महौजसेति गो. पाठः ।

अङ्गदो नाम लक्ष्मीवान्वालिसूनुर्महाबलः । प्रस्थितः कपिशार्दूलस्त्रिभागबलसंवृतः ॥ ५५ ॥
तेषां नो विप्रणष्टानां विन्ध्ये पर्वतसत्तमे । भृशं शोकपरीतानामहोरात्रगणा गताः ॥ ५६ ॥
ते वयं कार्यनैराश्यात्कालस्यातिक्रमेण च । भयाच्च कपिराजस्य प्राणांस्त्यक्तुमुपस्थिताः ॥ ५७ ॥
विचित्य गिरिदुर्गाणि नदीप्रस्रवणानि च । अनासाद्य पदं देव्याः प्राणांस्त्यक्तुं व्यवस्थिताः ॥ ५८ ॥
ततस्तस्य गिरेर्मूर्ध्नि वयं प्रायमुपास्महे । दृष्ट्वा प्रायोपविष्टांश्च सर्वान्वानरपुंगवान् ॥ ५९ ॥
भृशं शोकार्णवे मग्नः पर्यदेवयदङ्गदः । तव नाशं च वैदेहि वालिनश्च तथा वधम् ॥ ६० ॥
प्रायोपवेशमस्माकं मरणं च जटायुषः । तेषां नः स्वामिसंदेशान्निराशानां मुमूर्षताम् ॥ ६१ ॥
कार्यहेतोरिहायातः शकुनिर्वीर्यवान्महान् । गृध्रराजस्य सोदर्यः संपातिर्नाम गृध्रराट् ॥ ६२ ॥
श्रुत्वा भ्रातृवधं कोपादिदं वचनमब्रवीत् । यवीयान्केन मे भ्राता हतः क्व च निपातितः ॥ ६३ ॥
एतदाख्यातुमिच्छामि भवद्भिर्वानरोत्तमाः । अङ्गदोऽकथयत्तस्य जनस्थाने महद्वधम् ॥ ६४ ॥
रक्षसा भीमरूपेण त्वामुद्दिश्य यथार्थतः । जटायोस्तु वधं श्रुत्वा दुःखितः सोऽरुणात्मजः ॥ ६५ ॥
त्वामाह स वरारोहे वसन्तीं रावणालये । तस्य तद्वचनं श्रुत्वा संपातेः प्रीतिवर्धनम् ॥ ६६ ॥

---

रा० टी०—तत इति । सुग्रीववचनातुराः अत एव मार्गमाणाः त्वामन्वेषयन्तः वयं ततस्तां वसुधां चरामः अन्ये च वानराश्चरन्ति ॥ ५५ ॥

गो० टी०—तत इति । सुग्रीववचनातुराः सुग्रीवाज्ञाभीताः । 'सुग्रीववचनानुगाः' इति च पाठः ॥ ५५ ॥

५५ ] ति० टी०—त्रिभागबलसंवृतः सेनायास्त्रिष्वंशेष्वेकांशसेनापरिवृत इत्यर्थः ॥ ५५ ॥

रा० टी०—अङ्गद इति । त्रिभागबलसंवृतः प्रेपितावशिष्टसेनाभागत्रयविशिष्टः चतुर्थांश एव किष्किन्धायामवशिष्ट इत्यर्थः किंच त्रयो भागा गता यस्याः तदेव बलं तेन संवृतः अङ्गदः प्रस्थितः ॥ ५६ ॥

गो० टी०— अङ्गद इति । त्रिभागबलसंवृतः तृतीयांशेन बलेन सैन्येन संवृत इत्यर्थः । वृत्तिविषये पूरणार्थत्वं संख्याशब्दस्येष्यते ॥ ५६ ॥

५६–६० ] ति० टी०—विन्ध्ये विप्रणष्टानां बिलमध्येऽदर्शनं प्राप्तानाम् । गता इति । समयात्परेऽपीति शेषः ॥ ५६–६० ॥

रा० टी०—तेषामिति । पर्वतसत्तमे विन्ध्ये विप्रनष्टानामप्राप्तत्वद्वृत्तान्तानामित्यर्थः, अत एव शोकपरीतानां नोऽस्माकम् अहोरात्रगणाः बहूनि दिनानि गता व्यतीताः ॥ ५७ ॥

रा० टी०—ते इति । ते अप्राप्तत्वद्वृत्तान्ता वयं कार्यनैराश्यात्त्वद्वृत्तान्तविषयकाशाभावात् कालस्य अतिक्रमेण संकेतितसमयस्य व्यतीतत्वेन च कपिराजस्य भयात् प्राणान् त्यक्तुं वयमुपस्थिताः ॥ ५८ ॥

रा० टी०—तदेव भङ्ग्यन्तरेणाह—विचित्येति । गिरिदुर्गादीनि विचित्य देव्याः तव पदं स्थितिमनासाद्य प्राणान् त्यक्तुं वयं व्यवस्थिताः ॥ ५९ ॥

रा० टी०—तत इति । ततः तस्मिन् गिरेर्मूर्ध्नि वयं प्रायमनशनव्रतमुपास्महे । अर्धं पृथक्—दृष्ट्वेति । वानरपुङ्गवान् प्रायोपविष्टान् दृष्ट्वा तव नाशमदर्शनं च दृष्ट्वा ज्ञात्वा वालिवधं च दृष्ट्वा संस्मृत्य अस्माकं प्रायोपवेशं च जटायुषो मरणं च दृष्ट्वा संस्मृत्य शोकार्णवे मग्नोऽङ्गदः पर्यदेवयत् व्यलपत् । अर्धचतुष्टयमेकान्वयि ॥ ६० ॥

गो० टी०—तेषामिति । विप्रणष्टानां बिले अदर्शनं गतानाम् ॥ ५७ ॥

गो० टी०—ते वयमिति । कालस्य सुग्रीवकल्पितमासस्य । कपिराजस्य सुग्रीवात् ॥ ५८–५९ ॥

गो० टी०—दृष्ट्वेत्यादिश्लोकद्वयमेकं वाक्यम् । परिदेवनकर्माह—तवेति ॥ ६० ॥ ६१ ॥

६१ ] ति० टी०—निराशानां त्वत्प्राप्त्याशारहितानाम् । स्वामिसंदेशात्तत्संदिष्टकालात्ययाद्धेतोर्मुमूर्षताम् ॥ ६१ ॥

रा० टी०—तेषामिति । स्वामिसंदेशान्निराशानाम् अत एव मुमूर्षतां तेषां नोऽस्माकं कार्यहेतोः इह अस्मत्समीपे आयातः वीर्यवान् शकुनिः पक्षी गृध्रराजस्य जटायुषः सोदर्यः संपातिः भ्रातृवधं श्रुत्वा कोपात् कोपं प्राप्य इदमब्रवीत् । श्लोकद्वयमेकान्वयि ॥ ६१ ॥ ६२ ॥

गो० टी०—तेषामिति । स्वामिसंदेशात् मासादूर्ध्वमनागतानां भयमित्येवंरूपात् । तेषां कार्यहेतोः ॥ ६२—६७ ॥

६२ ] ति० टी०—कार्यहेतोः कार्यसिद्ध्यर्थमिवायातः । दैवादिति शेषः ॥ ६२ ॥

६३ ] ति० टी०—क्व देशे इति शेषः ॥ ६३ ॥

रा० टी०—तद्वचनाकारमाह—यवीयानिति । यवीयान्कनिष्ठो मे भ्राता केन हतः क्व निपातितः एतत् भवद्भिरुक्तं श्रुत्वेति शेषः आख्यातुं किंचित् कथयितुमिच्छामि ॥ ६३ ॥

६४–६६ ] ति० टी०—आख्यातुमित्यसमानकर्तृकेऽपि तुमुन्नार्षः ॥ ६४–६६ ॥

---

१ प्रनष्टानामिति रा. पाठ. । २ व्यवेति गो. पाठः । ३ गिरीति गो. पाठः । ४ यथातथमिति गो. पाठः । ५ जटायुष इति गो. पाठः । ६ संपातिरिति रा. पाठः । ७ त्वां शशंसेति गो. पाठः ।

अङ्गदप्रमुखाः सर्वे ततः प्रस्थापिता वयम् । विन्ध्यादुत्थाय संप्राप्ताः सागरस्यान्तमुत्तमम् ॥ ६७ ॥
त्व[1]द्दर्शने कृतोत्साहा हृष्टाः पुष्टाः प्लवङ्गमाः । अङ्गदप्रमुखाः सर्वे वेलोपान्त[2]मुपागताः ॥ ६८ ॥
चिन्तां जग्मुः पुन[3]र्भीमां त्वद्दर्शनसमुत्सुकाः । अ[4]थाहं हरिसैन्यस्य सागरं द[5]ृश्य सीदतः ॥ ६९ ॥
व्यवधूय भयं तीव्रं योजनानां शतं प्लुतः । लङ्का चापि मया रात्रौ प्रविष्टा राक्षसाकुला ॥ ७० ॥
रावणश्च मया दृष्टस्त्वं च शोकनिपीडिता । एतत्ते सर्वमाख्यातं यथावृत्तमनिन्दिते ॥ ७१ ॥
अभिभाषस्व मां देवि दूतो दाशरथेरहम् । तन्मां रामकृतोद्योगं त्वन्निमित्तमिहागतम् ॥ ७२ ॥
सुग्रीवसचिवं देवि बुद्ध्यस्व पवनात्मजम् । कुशली तव काकुत्स्थः सर्वशस्त्रभृतां वरः ॥ ७३ ॥
गुरोराराधने युक्तो लक्ष्मणः शुभलक्षणः । तस्य वीर्यवतो देवि भर्तुस्तव हिते रतः ॥ ७४ ॥
अहमेकस्तु संप्राप्तः सुग्रीववचनादिह । मयेयमसहायेन चरता कामरूपिणा ॥ ७५ ॥
दक्षिणा दिगनुक्रान्ता त्वन्मार्गविचयैषिणा । दिष्ट्याऽहं हरिसैन्यानां त्वन्नाशमनुशोचताम् ॥ ७६ ॥
अपनेष्यामि संतापं तवाधिगमशासनात् । दिष्ट्या हि न मम व्यर्थं [7]सागरस्येह लङ्घनम् ॥ ७७ ॥
प्राप्स्याम्यहमिदं [8]देवि त्वद्दर्शनकृतं यशः । राघवश्च महावीर्यः क्षिप्रं त्वामभिपत्स्यते ॥ ७८ ॥

---

रा० टी०—अङ्गद इति । तस्य जटायुषो जनस्थाने त्वामुद्दिश्य त्वदर्थं रक्षसा रावणेन कृतमिति शेषः, महद्वधमङ्गदोऽकथयत् ॥ ६४ ॥

रा० टी०—जटायोरिति । जटायोर्वधं श्रुत्वा दुःखितोऽरुणात्मजः संपातिः रावणालये वसन्तीं त्वामाह ॥ ६५ ॥

रा० टी०—तस्येति । तस्य संपातेः वचनं श्रुत्वा प्रस्थापिताः कृतप्रस्थाना वयं विन्ध्यादुत्थाय सागरस्यान्तं तटं संप्राप्ताः । सार्धश्लोक एकान्वयी ॥ ६६ ॥ ६७ ॥

६७–६९ ] ति० टी०—अन्तं तटम् ॥ ६७–६९ ॥

रा० टी०—तदेव भङ्ग्यन्तरेणाह—त्वदिति । त्वद्दर्शने कृत उत्साहो यैस्ते सर्वे प्लवङ्गमाः वेलोपान्तमुपागताः ॥ ६८ ॥

रा० टी०—चिन्तामिति । त्वद्दर्शनसमुत्सुकाः अङ्गदप्रमुखाः चिन्तां सागरोल्लङ्घनसंशयं जग्मुः । अथानन्तरं सीदतो हरिसैन्यस्य भयं व्यवधूय योजनशतं शतसंख्यांकं सागरं प्लुतः रात्रौ लङ्का च प्रविष्टा । श्लोकद्वयं संमिलितान्वयि ॥६९–७१॥

गो० टी०—विन्ध्यादिति । हृष्टाः उत्साहवन्तः तुष्टा आनन्दवन्तः ॥ ६८ ॥

गो० टी०—अङ्गदप्रमुखा इति । वेलोपान्तं वेला सिन्धुपूरः तस्योपान्तम् । 'वेलाम्बुधेस्तीरवृद्धयोः कालमर्यादयोरपि' इति दर्पः ॥ ६९ ॥ ७२ ॥

७०–७२ ] ति० टी०—प्लुतः प्लुतवान् ॥ ७०–७२ ॥

रा० टी०—अभीति । यस्मात् दाशरथेरहं दूतः तत्तस्मात् रामकृतोद्योगं रामार्थकोद्योगविशिष्टम् अत एव त्वन्निमित्तमिहागतं सुग्रीवसचिवं मां बुध्यस्व अत एव मामभिभाषस्व । सार्धश्लोक एकान्वयी ॥ ७२ ॥

गो०टी०—तं मामिति । रामकृतोद्योगं रामकृतोत्साहम् ७३

७३–७४ ] ति० टी०—पवनात्मजत्वेन लङ्घनसामर्थ्यम् ॥ ७३ ॥ ७४ ॥

रा० टी०—कुशलीति । काकुत्स्थो रामः लक्ष्मणश्च कुशली ॥ ७३ ॥

रा० टी०—तस्येति । तव भर्तुर्हितेऽरतोऽहं सुग्रीववचनादिह संप्राप्तः ॥ ७४ ॥

गो० टी०—कुशलीति । गुरोः ज्येष्ठस्य आराधने शुश्रूषणे रतः लक्ष्मणश्च कुशली ॥ ७४ ॥ ७५ ॥

७५ ] ति० टी०—एकः संप्राप्तः । अर्थाच्छेषाः समुद्रतीर एवासते । कामरूपिणा । अनेन रावणान्तःपुराद्यन्वेषणसामर्थ्यं सूचितम् ॥ ७५ ॥

रा० टी०—मयेति । त्वन्मार्गविचयैषिणा मया दक्षिणादिगनुक्रान्ता ॥ ७५ ॥

गो० टी०—मयेयमिति । विचयैषिणा अन्वेषणेच्छुना ॥ ७६ ॥

७६ ] ति० टी०—त्वन्नाशं त्वददर्शनम् ॥ ७६ ॥

रा० टी०—दिष्ट्येति । त्वन्नाशं त्वददर्शनम् उपलभ्येति शेषः, अनुशोचतां हरिसैन्यानां संतापं तवाधिगमशंसनात् त्वत्प्राप्तिकथनात् अपनेष्यामि दिष्ट्यैतत् ॥ ७६ ॥

गो० टी०—दिष्ट्येति । तवाभिगमशंसनात् त्वत्समीपप्राप्तिकथनात् ॥ ७७–७९ ॥

७७–७८ ] ति० टी०—अधिगमो दर्शनम् ॥ ७७ ॥ ७८ ॥

रा० टी०—दिष्ट्येति । त्वद्दर्शनकृतं यशः प्राप्स्यामि अत एव मम सागरस्य लङ्घनं न व्यर्थम् ॥ ७७ ॥

रा० टी०—राघव इति । राघवः रावणं हत्वा त्वामभिपत्स्यते ॥ ७८ ॥

---

१ दर्शनकृतोत्साहा इति गो. पाठः । २ उपस्थिता इति गो. पाठः । ३ भीता इति गो. पाठः । ४ तथेति गो. पाठः । ५ प्रेक्ष्येति गो. पाठः । ६ परिप्लुतेति गो. पाठः । ७ देवि सागरेति गो. पाठः । ८ दिष्ट्येति गो. पाठः ।

सपुत्रबान्धवं हत्वा रावणं राक्षसाधिपम् । माल्यवान्नाम वैदेहि गिरीणामुत्तमो गिरिः ॥ ७९ ॥
ततो गच्छति गोकर्णं पर्वतं केसरी हरिः । स च देवर्षिभिर्दिष्टः पिता मम महाकपिः ॥
तीर्थे नदीपतेः पुण्ये शम्बसादनमुद्धरन् ॥ ८० ॥
यस्याहं हरिणः क्षेत्रे जातो वातेन मैथिलि । हनूमानिति विख्यातो लोके स्वेनैव कर्मणा ॥ ८१ ॥
विश्वासार्थं तु वैदेहि भर्तुरुक्ता मया गुणाः । अचिरात्त्वामितो देवि राघवो नयिता ध्रुवम् ॥ ८२ ॥
एवं विश्वासिता सीता हेतुभिः शोककर्शिता । उपपन्नैरभिज्ञानैर्दूतं तमधिगच्छति ॥ ८३ ॥
अतुलं च गता हर्षं प्रहर्षेण तु जानकी । नेत्राभ्यां वक्रपक्ष्माभ्यां मुमोचानन्दजं जलम् ॥ ८४ ॥
चारु तद्वदनं तस्यास्ताम्रशुक्लायतेक्षणम् । अशोभत विशालाक्ष्या राहुमुक्त इवोडुराट् ॥ ८५ ॥
हनूमन्तं कपिं व्यक्तं मन्यते नान्यथेति सा । अथोवाच हनूमांस्तामुत्तरं प्रियदर्शनाम् ॥ ८६ ॥
एतत्ते सर्वमाख्यातं समाश्वसिहि मैथिलि । किं करोमि कथं वा ते रोचते प्रतियाम्यहम् ॥ ८७ ॥

---

७९ ] ति० टी०–तिर्यग्देहस्य तव कथं पवनात्मजत्वमिति शङ्कामपनयन्नाह—माल्यवान्नामेति ॥ ७९ ॥

रा० टी०–ननु वानरस्य तव वातात्मजत्वं कथमित्यत आह–माल्यवानिति । केसरी हरिर्वानरः माल्यवान्नाम यो गिरिः ततस्तस्माद्गिरेः गोकर्णं पर्वतं गच्छति अगच्छत् ॥ ७९ ॥

गो० टी०–बुद्ध्यस्व पवनात्मजमिति पवनात्मजत्वमुक्तं तत्कथं वानरस्येत्यपेक्षायामाह—माल्यवानिति । गच्छति अगच्छत् ॥ ८० ॥

८० ] ति० टी०–गोकर्णं तदाख्यम् । दिष्टः शम्बसादनाख्यासुरवधायाज्ञप्तः । उद्धरन्नुद्धृतवान् अवधीदित्यर्थः । भूतेऽपि लटः शतार्थः ॥ ८० ॥

रा० टी०–स इति । देवर्षिभिर्दिष्टः आज्ञप्तः यस्य हरिणो अनेकवानराधिपतेः क्षेत्रे वातेनाहं जातः स महाकपिर्मम पिता नदीपतेः समुद्रस्य तीर्थे जले शम्बसादनं तदभिधासुरमुद्धरन् अनाशयत् भूतेऽपि लटः शतार्थ इति भट्टाः । हरि इत्यत्र व्रीह्यादित्वा दिनिः । सार्धश्लोक एकान्वयी ॥ ८० ॥

गो० टी०–स चेति । सः गोकर्णं गतः । देवर्षिभिः तत्रत्यैः दिष्टः नियुक्तः । शम्बसादनं तीर्थोपद्रवकारिणमसुरं शम्बसादनाख्यम् उद्धरत् उदहरत् देवर्षिप्रार्थनया अवधीदित्यर्थः ॥ ८१ ॥

८१ ] ति० टी०–स्वेनैवोत्पत्तिकालप्रवृत्तेन कर्मणा पराक्रमेण ॥ ८१ ॥

रा० टी०–हनूमानिति । स्वेन कर्मणा हनुमानिति विख्यातः योऽहं तेन मया तव विश्वासार्थं भर्तुर्गुणाः उक्ताः ॥ ८१ ॥

गो० टी०–तस्येति । हरिणः हरेः केसरिणः क्षेत्रे पत्न्यामञ्जनायां जातः । पितुर्देशान्तरगमनकाले जातः । अनेनान्यक्षेत्रे कथमन्येनोत्पादनमिति शङ्का पराकृता ॥ ८२ ॥

८२ ] ति० टी०–भर्तुस्त्वद्भर्तुः रामस्य नयिता नेता ॥ ८२ ॥

रा० टी०–अचिरादिति । अचिरात् शीघ्रं राघवस्त्वामितो नयिता नेता ॥ ८२ ॥

गो० टी०–विश्वासार्थमिति । नयिता नेता ॥ ८३ ॥

८३–८५ ] ति० टी०–उपपन्नैर्वास्तवैः । अभिज्ञानै रामलक्ष्मणचिह्नैः । अधिगच्छत्यध्यगच्छत् ॥ ८३–८५ ॥

रा० टी०–एवमिति । उपपन्नैः युक्तैर्बाधकरहितैरित्यर्थः अभिज्ञानैर्बोधकैर्हेतुभिर्विश्वासिता सत्यं कथयतीति विश्वासं प्रापिता सीता तं हनूमन्तं दूतमधिगच्छति अध्यगच्छत् अजानात् ॥ ८३ ॥

रा० टी०–अतुलमिति । अतुलं हर्षं गता प्राप्ता जानकी हर्षेण आनन्दजं जलं मुमोच ॥ ८४ ॥

रा० टी०–चार्विति । राहुमुक्तः उडुराट् चन्द्र इव तस्याः वदनमशोभत ॥ ८५ ॥

गो० टी०–एवमिति । अवगच्छति अवागच्छत् ॥ ८४–८८ ॥

८६ ] ति० टी०–अन्यथा नेति मायाकपिर्नेत्यर्थः ॥ ८६ ॥

रा० टी०–हनूमन्तमिति । सा सीता हनूमन्तम् अन्यथा रावणत्वादिना न मन्यते अमन्यत अथानन्तरं प्रियदर्शनां तां सीताम् उत्तरं श्रेष्ठमिदं वचनमुवाच ॥ ८६ ॥

८७ ] ति० टी०–सर्वमुत्तरं सर्वं प्रत्युत्तरमाख्यातमित्यन्वयः । अथ सीतायै चिकीर्षितं पृच्छति—किं करोमीति । वर्तमानसामीप्ये लटौ । प्रतियामि प्रतियास्ये रामसमीपम्, किं करोमि किं करिष्ये, कथं वा रोचते चिकीर्षितमिति शेषः ॥ ८७ ॥

रा० टी०–तदाकारमाह–एतदिति । हे मैथिलि ! एतत् भवत्या पृष्टं सर्वमाख्यातम् अतः समाश्वसिहि अहं तु प्रतियामि रामसमीपं गमिष्यामि अतः किं करोमि कथं ते रोचते तद्वदेत्यर्थः ॥ ८७ ॥

---

१ मित्रेति गो. पाठः । २ उद्धरादिति गो. पाठः । ३ तस्येति गो. पाठः । ४ ऽनघ इति गो. पाठः ।

हतेऽसुरे संयति शम्बसादने कपिप्रवीरेण महर्षिचोदनात् ।
ततोऽस्मि वायुप्रभवो हि मैथिलि प्रभावतस्तत्प्रतिमश्च वानरः ॥ ८८ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये सुन्दरकाण्डे पञ्चत्रिंशः सर्गः ॥ ३५ ॥

## षट्त्रिंशः सर्गः ।

स्वस्मिन्नाश्वासं द्रढयितुं हनुमान्रामाङ्गुलीयकं जानक्यै प्रददाति । तल्लाभहृष्टा सा हनुमन्तं प्रशंस्य रामादिकुशलं पृच्छति । एतावत्पर्यन्तं रामानागमनात्स्वस्यामप्रीतिं विशङ्क्य जातक्रोधां तां परिसान्त्वयितुं हनुमानवस्थानापरिज्ञानमेवानागमने हेतुरित्यभिधत्ते । तस्यां रामस्य प्रीत्यतिशयं द्योतयन्हनुमान् रामस्य शोकावस्थां प्रतिपादयँस्त्वत्प्राप्तये सोऽतिप्रयत्नमातनोतीति कथयन्समाश्वासयति ।

भूय एव महातेजा हनुमान्पवनात्मजः । अब्रवीत्प्रश्रितं वाक्यं सीताप्रत्ययकारणात् ॥ १ ॥
वानरोऽहं महाभागे दूतो रामस्य धीमतः । रामनामाङ्कितं चेदं पश्य देव्यङ्गुलीयकम् ॥ २ ॥
प्रत्ययार्थं तवानीतं तेन दत्तं महात्मना । समाश्वसिहि भद्रं ते क्षीणदुःखफला ह्यसि ॥ ३ ॥
गृहीत्वा प्रेक्षमाणा सा भर्तुः करविभूषितम् । भर्तारमिव संप्राप्तं जानकी मुदिताभवत् ॥ ४ ॥

---

८८ ] ति० टी०—नहि रावण आत्मानं कथमपि कपिपुत्र इति ब्रूयादिति ज्ञापनपूर्वकं कपित्वनिश्चयाय पुनः स्वजन्मानुवादः—हतेऽसुर इति । ततः शम्बसादनासुरवधप्रीतमहर्षेः प्रसादत इत्यर्थः । तत्प्रतिमः वायुसदृश इत्यर्थः ॥८८॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये सुन्दरकाण्डे पञ्चत्रिंशः सर्गः ॥ ३५ ॥

रा० टी०—उपसंहरन्नाह—हते इति । कपिप्रवीरेण शम्बसादने असुरे हते सति ततः तस्य क्षेत्रे वायुप्रभवः प्रभावतः तत्प्रतिमः वायुसदृशः वानरोऽहमस्मि ॥ ८८ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ सुन्दरकाण्डे पञ्चत्रिंशः सर्गः ॥ ३५ ॥

गो० टी०—देवीनियुक्तार्थकरणे स्वस्य शक्तिरस्तीति द्योतयितुं स्वमाहात्म्यमाह—हत इति । ततः असुरवधोपकारात् ॥ ८९ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने पञ्चत्रिंशः सर्गः ॥ ३५ ॥

१ ] ति० टी०—अथ दृढतरविश्वासाय रामाङ्गुलीयकं दातुमाह—भूय इति । प्रत्ययो विश्वासः ॥ १ ॥

रा० टी०—सीतां प्रति हनुमत उक्त्यन्तरमाह—भूय इति। पवनात्मजो हनुमान् सीताप्रत्ययकारणात् सीतायाः विश्वासहेतोः भूयोऽब्रवीत् ॥ १ ॥

गो० टी०—भूय इत्यादि ॥ १ ॥

२ ] ति० टी०—वानरोऽहं नान्यः । रामस्य नाम नामाक्षराणि तैरङ्कितं चिह्नितम् ॥ २ ॥

रा० टी०—तद्वचनाकारमाह—वानर इत्यादिभिः । हे देवि ! अहं रामस्य दूतः इत्यवेहीति शेषः । तव प्रत्ययार्थमानीतं तेन रामेण दत्तमिदमङ्गुलीयकं पश्य च अत एव क्षीणः दुःखफलः दुःखफलकः समयो यस्याः सा त्वमसि अत एव समाश्वसिहि । श्लोकद्वयमेकान्वयि ॥ २ ॥ ३ ॥

गो० टी०—इत्थं संदेशकथनादिना देवीं विश्वास्याभिज्ञानाङ्गुलीयकदानेन दृढं विश्वासयति—वानरोऽहमित्यादिना ॥ २ ॥ ३ ॥

३ ] ति० टी०—क्षीणं दुःखरूपं पापफलं यस्याः सा । असि शीघ्रमेव भविष्यसि ॥ ३ ॥

४ ] ति० टी०—विभूषितं विभूषणम् । भर्तारं प्राप्तेवेत्यन्वयः ॥ ४ ॥

रा० टी०—गृहीत्वेति । भर्तुः करविभूषणं गृहीत्वा भर्तारं संप्राप्तेव जानकी मुदिताऽभवत् ॥ ४ ॥

गो० टी०—गृहीत्वेति । गृहीत्वा देशान्तरादागतं बन्धुं दृष्ट्वेव स्वयं गृहीतवती । प्रेक्षमाणा वर्तमानार्थेन शानचा दत्तदृष्टिं न विचालितवतीत्युच्यते । सा पूर्वं रावणत्वेन शङ्कितवती भर्तुः करविभूषणं पाणिग्रहणकाले हस्तस्पृष्टमाभरणं करविभूषणमित्यनेन भोगातिशयात् प्रणयकोपे प्रवृत्ते परस्परमालोकनभाषणादिविरहदशायां काङ्क्षिते भाषणे मानातिशयेन मौने कृते रामोऽङ्गुलीयकं भूमौ च्यावयति स्म । तदा व्याजेन च्युतमङ्गुलीयकमिति सीतयाऽभिहिते प्रणयकोपशैथिल्यात् परस्परसंश्लेषो भूयोऽप्यभूत् । एवं घटकभूतं करविभूषणं भर्तारमिव संप्राप्ता अङ्गुलीयकदर्शनात्तस्य कान्तस्य करं स्मृतवती तत्स्मृत्या बाहुं तत्स्मरणेन तद्विग्रहम् । एवं भावनाप्रकर्षेण तं पुरःस्थितमिव मत्वा तमालिङ्गितवती । जननीबुद्ध्या मुनिः संप्रोक्षेवत्याह जननीकृतभोगस्यावर्ण्यत्वात् । जानकी शोकहर्षाभ्यां क्लिष्टुमनर्हे कुले जाता । मुदिताऽभवत् इयमिदानीं मुदिता उदर्के किं भविष्यतीति न जान इत्याहर्षिः ॥ ४ ॥ ५ ॥

---



१ मारुतेति गो. पाठः । २ भूषणमिति गो. रा. पाठः ।

चारु तद्वदनं तस्यास्ताम्रशुक्लायतेक्षणम् । बभूव हर्षोदग्रं च राहुमुक्त इवोडुराट् ॥ ५ ॥
ततः सा ह्रीमती बाला भर्तुः संदेशहर्षिता । परितुष्टा प्रियं कृत्वा प्रशशंस महाकपिम् ॥ ६ ॥
विक्रान्तस्त्वं समर्थस्त्वं प्राज्ञस्त्वं वानरोत्तम । येनेदं राक्षसपदं त्वयैकेन प्रधर्षितम् ॥ ७ ॥
शतयोजनविस्तीर्णः सागरो मकरालयः । विक्रमश्लाघनीयेन क्रमता गोष्पदीकृतः ॥ ८ ॥
नहि त्वां प्राकृतं मन्ये वानरं वानरर्षभ । यस्य ते नास्ति संत्रासो रावणादपि संभ्रमः ॥ ९ ॥
अर्हसे च कपिश्रेष्ठ मया समभिभाषितुम् । यद्यसि प्रेषितस्तेन रामेण विदितात्मना ॥ १० ॥
प्रेषयिष्यति दुर्धर्षो रामो नह्यपरीक्षितम् । पराक्रममविज्ञाय मत्सकाशं विशेषतः ॥ ११ ॥
दिष्ट्या च कुशली रामो धर्मात्मा सत्यसंगरः । लक्ष्मणश्च महातेजाः सुमित्रानन्दवर्धनः ॥ १२ ॥
कुशली यदि काकुत्स्थः किं न सागरमेखलाम् । महीं दहति कोपेन युगान्ताग्निरिवोत्थितः ॥ १३ ॥
अथवा शक्तिमन्तौ तौ सुराणामपि निग्रहे । ममैव तु न दुःखानामस्ति मन्ये विपर्ययः ॥ १४ ॥

---

५ ] ति० टी०—'बभूव हर्षोदग्रं च' इति पाठः ॥ ५ ॥

रा० टी०—चार्विति । राहुमुक्त उडुराडिव तस्याः वदनं हर्षोदग्रम् अतिहर्षितं बभूव ॥ ५ ॥

६ ] ति० टी०—ह्रीमत्यङ्गुलीयसांनिध्ये भर्तृसांनिध्यादिव किंचिल्लज्जावती । प्रियं कृत्वाऽऽदरं कृत्वा ॥ ६ ॥

रा० टी०—तत इति । ततोऽनन्तरं भर्तुः संदेशहर्षिता सा सीता महाकपिं प्रियं प्रीतिविषयीभूतं कृत्वा प्रशशंस॥६॥

गो० टी०—तत इति । प्रियं कृत्वा संमानं कृत्वा ॥ ६ ॥

७ ] ति० टी०—विक्रान्तः शूरः । समर्थो देशकालोचितकृत्यचतुरः । प्राज्ञो धर्मार्थविषयकसर्वशास्त्रार्थतत्त्वज्ञः । पदं स्थानम् ॥ ७ ॥

रा० टी०—प्रशंसाकारमाह—विक्रान्त इति । येन हेतुना एकेन त्वया राक्षसपदं प्रधर्षितं तेन हेतुनाऽविक्रान्तत्वादिविशिष्टस्त्वं मयाऽबोधीति शेषः ॥ ७ ॥

गो० टी०—विक्रान्तस्त्वमिति । विक्रान्त इत्यादिपदत्रयेण तद्व्युत्क्रमेण ज्ञानशक्तिबलान्युच्यन्ते । इदं राक्षसपदमिति प्रज्ञोक्ता । त्वयैकेनेति सामर्थ्यम् । प्रधर्षितमिति विक्रमः ॥७॥८॥

८ ] ति० टी०—क्रमता क्रामता ॥ ८ ॥

रा० टी०—शतेति । विक्रमः श्लाघनीयो यस्य तेन क्रमता त्वया शतयोजनविस्तीर्णः सागरः गोष्पदीकृतः ॥ ८ ॥

९ ] ति० टी०—संत्रासः समुद्रादिति शेषः । रावणादपि संभ्रमश्चित्तक्षोभः ॥ ९ ॥

रा० टी०—नेति । यस्य ते रावणादपि संत्रासः संभ्रमश्च नास्ति तं त्वां प्राकृतं न मन्ये ॥ ९ ॥

गो० टी०—नहीति । प्राकृतं क्षुद्रम् । संभ्रमः व्यग्रता ॥९॥

१०–१२ ] ति० टी०—यदि यस्मात्तेन प्रेपितोऽसि तस्मान्मया समभिभाषितुं संभाषणं कर्तुमर्हसेऽर्हसि ॥ १०–१२ ॥

रा० टी०—अर्हसे इति । यदि रामेण प्रेपितस्त्वमसि तर्हि मया समभिभाषितुमर्हसे ॥ १० ॥

रा० टी०—प्रेषयिष्यतीति । दुर्धर्षो रामः विशेषतः विशेषं पराक्रममविज्ञाय अपरीक्षितं परीक्षारहितं दूतं मत्सकाशं न प्रेषयिष्यति ॥ ११ ॥

रा० टी०—दिष्ट्येति । कुशली कुशलविशिष्टः ॥ १२ ॥

गो० टी०—अर्हस इति । यद्यपीतिनिपातसमुदायो यस्मादित्यर्थे । अव्ययानामनेकार्थत्वात् ॥ १०–१२ ॥

१३ ] ति० टी०—ननु तद्दूतागमनेन तद्वचसा च कुशलावगतेः किं पुनर्दिष्ट्येत्यादि तत्प्रश्नेनेति शङ्कायां प्रश्नाशयं दर्शयति—कुशली यदीति । यदि कुशली त्वया कथ्यते तदा मत्कृते सागरमेखलां महीं किं न दहतीत्यर्थः ॥ १३ ॥

रा० टी०—कुशलीति । यदि काकुत्स्थः कुशली तर्हि कोपेन ज्ञातपृथिव्यपराधजनितकोपेन महीं किं तु न दहति दहत्येवेत्यर्थः । एतेन एवं शक्तिसत्त्वे रावणं कुतो न निहन्तीति सूचितम् । किं च कोपेन रावणापराधज्ञानजनितकोपेन महीं लङ्काभूमिं किं तु दहति ॥ १३ ॥

गो० टी०—अथ प्रणयरोषेण दूतसंनिधौ रामं गर्हते—कुशलीति । काकुत्स्थः परपरिभवासहकुले जातः । अनेन परपरिभव एव परिहरणीयः न स्वीय इति नियमोऽस्ति किम् । किंतु सागरमेखलां महीं दहति । अत्र काकुत्स्थः दहति किंतु न दहतीत्यर्थः । सागरमेखलामिति विशेषणेन द्रवद्रव्यस्यैकेन कठिनद्रव्यस्य चैकेन बाणेन भवितव्यम् । किम् सागरं सलिलमेव तैलं कृत्वा महीं दग्धुं समर्थो न किमित्यर्थः । यद्वा स्वपत्नीं वा सुरक्षितपरिधानां करोतीति भावः । अनादिकृतमर्यादा मही कथं दग्धुं शक्येत्यत्राह—युगान्तेति । मही मर्यादा तन्नयनरागपर्यन्तैवेति भावः । 'किं न सागरमेखलाम्' इत्यपि पाठः । काकुत्स्थः कुशली यदि तदा महीं किं न दहति शक्तश्चेद्दहत्येव न दहति अतो न शक्त इत्यर्थः ॥ १३ ॥

१४ ] ति० टी०—ननु केवलं महीमेवेति किमुच्यत इत्याशयेन पक्षान्तरम्—अथवेति । तथा शक्तिमन्तौ यदि



१ अशोभत विशालाक्ष्या इति गो. पाठः । २ नापीति गो. पाठः । ३ ऽपीति गो. पाठः ।

कच्चिन्न व्यथते रामः कच्चिन्न परितप्यते । उत्तराणि च कार्याणि कुरुते पुरुषोत्तमः ॥ १५ ॥
कच्चिन्न दीनः संभ्रान्तः कार्येषु च न मुह्यति । कच्चित्पुरुषकार्याणि कुरुते नृपतेः सुतः ॥ १६ ॥
द्विविधं त्रिविधोपायमुपायमपि सेवते । विजिगीषुसुहृत्कच्चिन्मित्रेषु च परंतपः ॥ १७ ॥
कच्चिन्मित्राणि लभते मित्रैश्चाप्यभिगम्यते । कच्चित्कल्याणमित्रश्च मित्रैश्चापि पुरस्कृतः ॥ १८ ॥
कच्चिदाशास्ति देवानां प्रसादं पार्थिवात्मजः । कच्चित्पुरुषकारं च दैवं च प्रतिपद्यते ॥ १९ ॥
कच्चिन्न विगतस्नेहो विवासान्मयि राघवः । कच्चिन्मां व्यसनादस्मान्मोक्षयिष्यति राघवः ॥ २० ॥
सुखानामुचितो नित्यमसुखानामनूचितः । दुःखमुत्तरमासाद्य कच्चिद्रामो न सीदति ॥ २१ ॥
कौसल्यायास्तथा कच्चित्सुमित्रायास्तथैव च । अभीक्ष्णं श्रूयते कच्चित्कुशलं भरतस्य च ॥ २२ ॥

---

तर्हि किमिति तूष्णीं तिष्ठतस्तत्राह—ममैवेति । दुःखानां दुःखहेतुपापानां विपर्ययो नाशो नाद्यापि संवृत्त इत्यर्थः ॥१४॥

रा० टी०—तत्र हेतुमुपलभ्य पक्षान्तरमाह—अथवेति । सुराणामपि निग्रहे शक्तिमन्तौ तौ रामलक्ष्मणौ स्त एव तथापि मम दुःखानां विपर्ययो विनाशकालो नैवास्तीत्यहं मन्ये॥१४॥

गो० टी०—पक्षान्तरमाह—अथवेति ॥ १४ ॥

१५ ] ति० टी०—मम दुःखस्य ईषत्करः, अपि तु तस्य सुखावस्थानमेव मृग्यमित्याशयेनाह—कच्चिदिति । उत्तराणि कार्याणि मद्विमोचनफलानि ॥ १५ ॥

रा० टी०—कच्चिदिति । रामः कच्चिन्न व्यथते कच्चिन्न परितप्यते वा अत एव कार्याणि कर्तव्याणि उत्तराणि दुःखोत्तारकाणि प्रयतनानि कुरुते ॥ १५ ॥

गो० टी०—कच्चिदिति । न व्यथितः न कृशः । उत्तराणि कार्याणि मत्प्राप्तिसाधकानि कच्चित्कुरुते ॥ १५ ॥

१६ ] ति० टी०—न दीनो न संभ्रान्त इत्यवपङ्कः । पुरुषकार्याणि पुरुषकारान् ॥ १६ ॥

रा० टी०—कच्चिदिति । कच्चिन्न दीनः संभ्रान्तो वा न अत एव कच्चिन्न मुह्यति अत एव पुरुषकार्याणि पुरुषेण कर्तव्यानि कुरुते ॥ १६ ॥

गो० टी०—कच्चिन्न दीन इति । न दीनः कच्चित्संभ्रान्तः सन् कार्येषु न मुह्यति कच्चिदित्यन्वयः । पुरुषकार्याणि पुरुषेण कर्तव्यानि ॥ १६ ॥

१७ ] ति० टी०—द्विविधं सौम्यासौम्यरूपप्रकारद्वयवत्। त्रिविधोपायं धर्मार्थकामलक्षणत्रिविधपुरुषार्थानां प्राप्त्युपायभूतमुपायं सामाद्युपायमपि सेवते कच्चित् तथा मित्रेषु च विजिगीषुसुहृत्कच्चित् विजिगीषुसुहृदिति बहुव्रीहिः तत्पुरुषश्चेति कतकः । सुहृत्परंतपो रामो विजिगीषुः संस्त्रिविधोपायं सामदानभेदरूपमुपायं दण्डोपायं च मित्रेषु च चादमित्रेषु च द्विविधं यथा भवति तथा सेवते कच्चित् । मित्रेषु सामदाने अमित्रेषु भेददण्डौ चेत्येवं विभज्य प्रयुङ्क्ते कच्चिदित्यर्थ इति तीर्थः ॥ १७ ॥

रा० टी०—द्विविधमिति । मित्रेषु चकारेण अमित्रेषु च सुहृदपि रामः विजिगीषुः सन् ।द्विविधं द्वौ ऐहिकामुष्मिकपालनधर्मौ विदधाति पालयति तं विविधोपायं त्रयाणां ब्रह्मविष्णुमहेश्वराणां विधाय तत्प्रार्थितनिष्पादकत्वेन पोषणाय उपायं यत्नम् उपायं झटिति मङ्गलप्रापकं यथा भवति तथा सेवते कुरुते कच्चित् ॥ १७ ॥

गो० टी०—तान्येवाह—द्विविधमिति । परन्तपो रामः मित्रेषु विषये सुहृत्सन् द्विविधं सामदानरूपमुपायमपि सेवते कच्चित् । चकारेणामित्राः समुच्चीयन्ते अमित्रेषु विषये विजिगीषुः सन् त्रिविधोपायं दानभेददण्डान् सेवते प्रयुङ्क्ते कच्चित् । सुहृत्सु कदाचिदपि भेददण्डौ न कार्यौ शत्रुषु न सामेति भावः। योजनान्तरे विजिगीषुसुहृत्पदयोः प्रयोजनं मृग्यम् ॥१७॥

१८ ] ति० टी०—मित्राणि लभते स्वयत्नेनामित्रैश्च स्वयत्नतोऽभिगम्यते । कल्याणमित्रः सौम्यमित्रः । मित्रैः पुरस्कृतो बहुमतः कच्चित् ॥ १८ ॥

रा० टी०—कच्चिदिति । कल्याणं मित्रं यस्य सः अत एव मित्रैः पुरस्कृतः स रामः मित्राणि लभते कच्चित् अमित्रैः रिपुभिः अभिगम्यते पराभूतिमूलकशरणप्रार्थनया प्राप्यते कच्चित्॥१८॥

गो० टी०—कच्चिन्मित्राणीति । अभिगम्यते लभ्यते । मित्रस्य कंचिदुपकारं कृत्वा स्वयमुपकारं मित्रादपेक्षते कच्चिदित्यर्थः । कल्याणमित्रः पुरस्कृतमित्र इत्यर्थः ॥ १८ ॥

१९ ] ति० टी०—आशास्त्याशास्ते प्रार्थयत इत्यर्थः ॥१९॥

रा० टी०—कच्चिदिति । देवानां प्रसादं तद्रिपुवधजनिततत्प्रसन्नतामाशास्ति आशास्ते इच्छति दैवं देवसंबन्धि पुरुषस्य पुरुषार्थस्य कारं विध्वंसं प्रतिपद्यते स्मृतिविषयत्वेन प्राप्नोति स्मरतीत्यर्थः ॥ १९ ॥

गो० टी०—कच्चिदाशास्तीति । आशास्ति आशास्ते । पुरुषकारं स्वबलम् । एकैकस्यानर्थहेतुत्वादिति भावः॥१९॥२०॥

२० ] ति० टी०—विवासाद्विदूरवासात् ॥ २० ॥

रा० टी०—कच्चिदिति । विवासात् हेतोः राघवः मयि विगतस्नेहो न कच्चित् अस्माद्व्यसनात् दुःखहेतुभूतनिरोधान्मोचयिष्यति ॥ २० ॥

२१-२२ ] ति० टी०—अनूचित इति छान्दसो दीर्घः । उत्तरं दुःखम् दुःखादुःखमित्यर्थः ॥ २१ ॥ २२ ॥

---

१ प्रसादादिति गो० पाठः । २ वानरैति गो० पाठः ।

मन्निमित्तेन मानार्हः कच्चिच्छोकेन राघवः । कच्चिन्नान्यमना रामः कच्चिन्मां तारयिष्यति ॥ २३ ॥
कच्चिदक्षौहिणीं भीमां भरतो भ्रातृवत्सलः । ध्वजिनीं मन्त्रिभिर्गुप्तां प्रेषयिष्यति मत्कृते ॥ २४ ॥
वानराधिपतिः श्रीमान्सुग्रीवः कच्चिदेष्यति । मत्कृते हरिभिर्वीरैर्वृतो दन्तनखायुधैः ॥ २५ ॥
कच्चिच लक्ष्मणः शूरः सुमित्रानन्दवर्धनः । अस्त्रविच्छरजालेन राक्षसान्विधमिष्यति ॥ २६ ॥
रौद्रेण कच्चिदस्त्रेण रामेण निहतं रणे । द्रक्ष्याम्यल्पेन कालेन रावणं ससुहृज्जनम् ॥ २७ ॥

कच्चिन्न तद्धेमसमानवर्णं तस्याननं पद्मसमानगन्धि ।
मया विना शुष्यति शोकदीनं जलक्षये पद्ममिवातपेन ॥ २८ ॥
धर्मापदेशात्त्यजतः स्वराज्यं मां चाप्यरण्यं नयतः पदातेः ।
नासीद्यथा यस्य न भीर्न शोकः कच्चित्स धैर्यं हृदये करोति ॥ २९ ॥
न चास्य माता न पिता न चान्यः स्नेहाद्विशिष्टोऽस्ति मया समो वा ।
तावद्ध्यहं दूत जिजीविषेयं यावत्प्रवृत्तिं शृणुयां प्रियस्य ॥ ३० ॥

रा० टी०–सुखानामिति । उचितो योग्यः अनुचितः अनुचितः अनर्हः रामः उत्तरं परं दुःखमासाद्य सीदति न कच्चित् ॥ २१ ॥

रा० टी०–कौशल्याया इति । कौशल्यादेः कुशलं श्रूयते कच्चित् रामेणेति शेषः ॥ २२ ॥

गो० टी०–सुखानामिति । अनुचित इति दीर्घ आर्षः । उत्तरम् उत्कृष्टम् ॥ २१ ॥ २२ ॥

२३–२६ ] ति० टी०–मन्निमित्तेन मद्वियोगनिमित्तेन शोकेन । कच्चित्परितप्यत इति शेषः ॥ २३–२६ ॥

रा० टी०–मदिति । मन्निमित्तेन शोकेनोपलक्षितः कच्चित् अत एव अन्यमना न कच्चित् ॥ २३ ॥

रा० टी०–कच्चिदिति । मत्कृते मन्मोचनार्थम् ॥ २४ ॥

रा० टी०–वानरेति । सुग्रीवः कच्चिदेष्यति ॥ २५ ॥

रा० टी०–कच्चिदिति । लक्ष्मणो राक्षसान् विधमिष्यति ॥ २६ ॥

गो० टी०–मन्निमित्तेनेति । मन्निमित्तेन मया हेतुना । अन्यमनाः कार्यान्तरासक्तः ॥ २३ ॥

गो० टी०–कच्चिदक्षौहिणीमिति । ध्वजिनीं सेनाम् ॥ २४–२७ ॥

२७ ] ति० टी०–रौद्रेणामोघक्रूरेण ॥ २७ ॥

रा० टी०–रौद्रेणेति । रामेण निहतं रावणमल्पेन कालेन द्रक्ष्यामि कच्चित् ॥ २७ ॥

२८ ] ति० टी०–हेमसमानवर्णं हेमवर्णवत्स्पृहणीयशोभम् ॥ २८ ॥

रा० टी०–कच्चिदिति । तस्य रामस्याननं मया विना वातेन पद्ममिव न शुष्यति कच्चित् ॥ २८ ॥

गो० टी०–कच्चिन्न तदिति । हेमशब्देन तद्वर्ण उच्यते । अभेदेन हेमवत्स्पृहणीयमित्यर्थः । मया विनेति जलक्षयस्थानम्, शोकदीनमित्यातपस्थानम् ॥ २८ ॥

२९ ] ति० टी०–धर्मापदेशाद्धर्मोद्देशात् । धर्मस्तुदिश्येति यावत् । न भीर्न शोकः । मम नयनान्नभीः, राज्यत्यागान्न शोकः । भयं च मद्रक्षानिमित्तम् । यस्य व्यथा वनवासखेदश्च नासीत्स इदानीं धैर्यं करोति कच्चित् ॥ २९ ॥

रा० टी०–धर्मेति । धर्मापदेशात् धर्मपालनार्थं स्वं राज्यं त्यजतः अत एव मामप्यरण्यं नयतः यस्य भीः शोकश्च नासीत् स धैर्यं करोति कच्चित् ॥ २९ ॥

गो० टी०–धर्मापदेशादिति । धर्मापदेशाद्धर्मोद्देशार्थम् धर्मस्तुदिश्येत्यर्थः । यद्वा धर्मव्याजाद्धेतोः राज्यत्यागाद्व्यथा नासीत् । अरण्यसंचाराद्भीर्नासीत् । मत्पादसंचाराच्छोको नासीत् । सः तादृशधैर्ययुक्तो रामो मद्विश्लेषेऽपि हृदये धैर्यं करोति कच्चित् ॥ २९ ॥

३० ] ति० टी०–धैर्यत्यागे मद्वियोग एव हेतुरित्याह—न चास्येति । मातापित्रादौ नास्य मत्समोऽपि स्नेहः, अधिकस्तु कुतः । मम तच्छक्तिरूपत्वात् वस्तुतस्तयोस्तस्याभावाच । हनूमन्नहमपि तावज्जिजीविषेयम् । प्रवृत्तिं वार्तां प्रवृत्तिमार्गे रतिं च । निवृत्तिमार्गरतौ ममापि कार्याक्षमत्वेनादर्शनरूपो नाश एवेति भावः ॥ ३० ॥

रा० टी०–नेति । अस्य रामस्य स्नेहाद्धेतोः मया समः सदृशः विशिष्टः अधिको वा मात्रादिर्नास्ति अतः प्रियस्य रामस्य प्रवृत्तिं वार्तां यावत् शृणुयां तावत् जिजीविषेयं जीवितुमिच्छेयम् ॥ ३० ॥

गो० टी०–धैर्याकरणे हेतुमाह—न चास्येति । प्रवृत्तिं मदानयनवार्ताम् । प्रणयरोषपक्षे किमेष पितृवचनपरिपालनाय वनं प्राप्तः न । किंतु ममैव हिंसायै इति भावः । रामस्यैव दोषः न ममेति सीतयोक्ते वयमेव किं सम्यक् स्थितवन्तः रामविश्लेषानन्तरक्षणे न तनुस्त्यक्ता हीत्येवं हृदमदाशयं ज्ञात्वाह—न चास्येति । रामस्य मात्रादयः अन्यो बन्धुश्च स्नेहाद्विशिष्टा न भवन्ति । लोके कस्यचिन्माता पिता भ्रातेत्येवं स्नेहो



१ चेति गो. पाठः । २ पदातिमिति गो. पाठः ।

इतीव देवी वचनं महार्थं तं वानरेन्द्रं मधुरार्थमुक्त्वा ।
श्रोतुं पुनस्तस्य वचोऽभिरामं रामार्थयुक्तं विरराम रामा ॥ ३१ ॥
सीताया वचनं श्रुत्वा मारुतिर्भीमविक्रमः । शिरस्यञ्जलिमाधाय वाक्यमुत्तरमब्रवीत् ॥ ३२ ॥
न त्वामिहस्थां जानीते रामः कमललोचनः । तेन त्वां नानयत्याशु शचीमिव पुरन्दरः ॥ ३३ ॥
श्रुत्वैव च वचो मह्यं क्षिप्रमेष्यति राघवः । चमूं प्रकर्षन्महतीं हर्यृक्षगणसंयुताम् ॥ ३४ ॥
विष्टम्भयित्वा बाणौघैरक्षोभ्यं वरुणालयम् । करिष्यति पुरीं लङ्कां काकुत्स्थः शान्तराक्षसाम् ॥ ३५ ॥
तत्र यद्यन्तरा मृत्युर्यदि देवा महासुराः । स्थास्यन्ति पथि रामस्य स तानपि वधिष्यति ॥ ३६ ॥
तवादर्शनजेनार्ये शोकेन परिपूरितः । न शर्म लभते रामः सिंहार्दित इव द्विपः ॥ ३७ ॥

विसृत्वरो भवति नचैवं रामस्य मात्रादिषु संभावितः । सर्वोऽपि मय्येकमार्गः कृतः । यावत्प्रियस्य प्रवृत्तिं शृणुयां शृणोमि तावज्जिजीविषेयं जीवेयम् । इच्छाया इष्यमाणप्रधानत्वादिष्यमाणं जीवनमिहाभिधीयते । रामः न मांसं राघवो भुङ्क्ते इत्युक्तरीत्या भोजनम्, अनिद्रः सततं राम इति निद्रां च हित्वा समुद्रं बद्धा समागच्छन् तापार्तं प्रपां गते तस्यां भिन्नपानीयपात्रायां सत्यामिव मयि नष्टायां न जीवेत् । अतस्तदागमनपर्यन्तं मयि जीवितव्यं परतन्त्रशरीरत्वात् । तदागमनानन्तरमपि यदि जीविष्यामि तदेत्थंवदेदिति भावः । एतावत्पर्यन्तं वानरेति संबोध्य संप्रति दूतेत्याह—रामविषयप्रणयरोषस्य दूतपर्यन्तं व्यापनात् । तेन प्रहितः खलु भवानपीति भावः । प्रणयरोषाभावपक्षेऽपि न चास्येति । अस्य माता चास्मिन्स्नेहात् मत्तः न विशिष्टा मया न समा च । यथाऽहमस्मिन् स्निग्धा तथा नान्य इत्यर्थः । एतदेवोत्तरार्धेन समर्थयति—तावदिति ॥ ३० ॥

३१–३२ ] ति० टी०—रामार्थयुक्तं रामप्रयोजनयुक्तम् । रामरूपाभिधेयेन युक्तं तद्बोधकमिति वा ॥ ३१ ॥ ३२ ॥

रा० टी०—इतीवेति । देवी सीता इतीव वचनमुक्त्वा रामार्थयुक्तं तस्य हनुमतो वचः श्रोतुं रामा सीता विरराम ॥ ३१ ॥

रा० टी०—सीताया इति । मारुतिः सीताया वचनं श्रुत्वा अञ्जलिं शिरसि आधाय उत्तरं श्रेष्ठं वाक्यमब्रवीत् ॥ ३२ ॥

गो० टी०—इतीवेति । इतीव पूर्वं कतिपयानर्थान् विविच्योक्तवान् । संप्रति प्रणयधारासक्षममृषीणामपदं हि तत इतीवेत्याह । देवी । वल्लभाया व्यवहारो बहिष्ठानां न प्रतिभाति हि वचनं महार्थं न केवलं बहिष्ठानां देशिकानामस्माकमपीत्यर्थः । महार्थमित्युक्तेः तं वानरेन्द्रम् । सुग्रीवस्य शेषत्वेऽभिषिक्तत्वेऽपि पारतन्त्र्ये हनुमानभिषिक्त इत्यर्थः । मधुरार्थं माधुर्येण मध्ये हनुमान्न वक्तुमारभतेति भावः । उक्त्वा स तदीयाश्च यथाऽभिवर्धन्ते तथोक्त्वा श्रोतुं पुनस्तस्य वचोभिरामं स्ववचनानुरूपोत्तरं श्रोतुं रामार्थयुक्तं रामप्रयोजनयुक्तम् । रामरूपाभिधेययुक्तं वा विरराम स्वयं चिरभाषणात्स्वामिन्यां भाषमाणायां मध्ये भृत्येनोक्त्ययोगाच्च तूष्णींभूतस्यावकाशप्रदानमकरोत् । रामा पारम्पर्यं विना साक्षाद्वचःसौन्दर्यदर्शनं रामेण न लब्धं हीति मुनिः खिद्यति ॥ ३१ ॥ ३२ ॥

३३ ] ति० टी०—न जानीते न जानीत इव । अनुह्लाददैत्यनीतां शचीं पुरन्दर इव ॥ ३३ ॥

रा० टी०—तदाकारमाह—नेत्यादिभिः । इहस्थां त्वां रामो न जानीते तेन हेतुना शचीं पुरन्दर इव त्वामाशु नानयति ॥ ३३ ॥

गो० टी०—न त्वामिति । रामः न जीवेयं क्षणमपि विना तामसितेक्षणामित्यध्यवसायी कथं नागच्छेत् । कमललोचने स्वनयनसौन्दर्यं दर्पणतलेऽपि किं न दृष्टवती भवती । एतत्सौन्दर्यवर्तीं कथं त्वां विना स तिष्ठेत् तेन अनेन हेतुना आशु त्वां नानयति । शचीं पुरन्दर इव अनुह्लादहस्तगतां शचीमिन्द्रः कंचित्कालमविज्ञाय ज्ञानानन्तरं यथा आनीतवान् तथेति भावः ॥ ३३ ॥

३४ ] ति० टी०—मह्यं मत्तः ॥ ३४ ॥

रा० टी०—श्रुत्वेति । मह्यं मम वचः श्रुत्वैव राघव एष्यति ॥ ३४ ॥

गो० टी०—श्रुत्वेति । मह्यं मम । व्यत्ययेन षष्ठ्यर्थे चतुर्थी ॥ ३४ ॥

३५ ] ति० टी०—विष्टम्भयित्वा संस्तभ्य । सेतुं बद्धेति यावत् ॥ ३५ ॥

रा० टी०—विष्टम्भयित्वेति । वरुणालयं समुद्रं विष्टम्भयित्वा विष्टभ्य संस्तभ्य सेतुं बद्धेत्यर्थः लङ्कां बाणौघैः शान्तराक्षसां करिष्यति ॥ ३५ ॥

गो० टी०—समुद्रं कथमतिक्रमिष्यतीत्यत्राह—विष्टम्भयित्वेति । विष्टम्भयित्वा स्तब्धं कृत्वेत्यर्थः ॥ ३५ ॥

३६–३७ ] ति० टी०—तत्र तत्कर्मप्रवृत्तावन्तरा विघ्नत्वेन यदि मृत्युप्रभृतयोऽपि स्थास्यन्ति तदा तानपि वधिष्यति ॥ ३७ ॥

रा० टी०—तत्रेति । तत्र लङ्काविध्वंसनसमये पथि-अन्तरा मार्गमध्ये मृत्युः सुरादयो वा यदि स्थास्यन्ति विघ्नकारित्वेनेति शेषः । तदा स रामस्तानपि वधिष्यति ॥ ३६ ॥

रा० टी०—तवेति । शोकेन परिपूरितो रामः शर्म न लभते ॥ ३७ ॥

गो० टी०—तत्रेति । स्थास्यन्ति प्रतिबन्धकतयेति शेषः ॥ ३६ ॥ ३७ ॥



१ लोचने इति गो. पाठः । २ त्विति गो. पाठः । ३ हर्यृक्षेति रा. पाठः । ४ कुलामिति गो. पाठः । ५ स परिप्लुत इति गो. पाठः ।

मन्दरेण च ते देवि शपे मूलफलेन च । मलयेन च विन्ध्येन मेरुणा दर्दुरेण च ॥ ३८ ॥
यथा सुनयनं वल्गु बिम्बोष्ठं चारुकुण्डलम् । मुखं द्रक्ष्यसि रामस्य पूर्णचन्द्रमिवोदितम् ॥ ३९ ॥
क्षिप्रं द्रक्ष्यसि वैदेहि रामं प्रस्रवणे गिरौ । शतक्रतुमिवासीनं नागपृष्ठस्य मूर्धनि ॥ ४० ॥
न मांसं राघवो भुङ्क्ते न चैवं मधु सेवते । वन्यं सुविहितं नित्यं भक्तमश्नाति पञ्चमम् ॥ ४१ ॥
नैव दंशान्न मशकान्न कीटान्न सरीसृपान् । राघवोऽपनयेद्गात्रात्त्वद्गतेनान्तरात्मना ॥ ४२ ॥
नित्यं ध्यानपरो रामो नित्यं शोकपरायणः । नान्यच्चिन्तयते किंचित्स तु कामवशं गतः ॥ ४३ ॥
अनिद्रः सततं रामः सुप्तोऽपि च नरोत्तमः । सीतेति मधुरां वाणीं व्याहरन्प्रतिबुध्यते ॥ ४४ ॥

---

३८ ] ति० टी०—स्वोक्तेऽर्थे देव्या विश्वासार्थं स्ववासस्थानमन्दरादिभिः स्वजीवनसाधनैर्मूलफलैश्च शपथं करोति—मन्दरेण चेति । दर्दुरः पर्वतविशेषः ॥ ३८ ॥

रा० टी०—अत्र दृढविश्वासार्थमाह—मन्दरेणेति ॥ ३८ ॥

गो० टी०—गिरीणां स्वजीवनस्थानत्वात्तैः शपति—मलयेनेति । दर्दुरो नाम मलयपरिसरवर्ती चन्दनप्रभवः कश्चित्पर्वतः ॥ ३८ ॥

३९ ] ति० टी०—यथा रामस्य मुखं द्रक्ष्यसि तथा मन्दरादिभिः शपे इत्यन्वयः ॥ ३९ ॥

रा० टी०—बिम्बावोष्ठौ यस्मिन् तत् रामस्य मुखं यथावत् द्रक्ष्यसि मन्दरादिना शपे अस्मिन् विषये शपथं करोमि। श्लोकद्वयमेकान्वयि ॥ ३९ ॥

गो० टी०—यथेति । तथा शप इति पूर्वेणान्वयः ॥३९॥

४० ] ति० टी०—प्रस्रवणे गिरौ विद्यमानमपीह द्रक्ष्यसीत्यर्थः । नागपृष्ठस्य मूर्धन्यैरावतोपरि स्थितमिन्द्रमिव मत्पृष्ठगं रामं द्रक्ष्यसीत्यर्थः । 'नाकपृष्ठस्य' इति पाठः । स्वर्गस्योपरीत्यर्थ इति तीर्थः ॥ ४० ॥

रा० टी०—क्षिप्रमिति । नागा गजा पृष्ठे पार्श्वे इत्यर्थः यस्य तस्य ऐरावतस्य मूर्धनि आसीनं शतक्रतुमिव प्रस्रवणे गिरौ आसीनं रामं क्षिप्रं द्रक्ष्यसि द्रुतमागमिष्यतीत्यर्थः॥४०॥

गो० टी०—क्षिप्रमिति । नाकपृष्ठो नाम इन्द्रस्यासाधारणस्वर्गस्थानविशेषः ॥ ४० ॥

४१–४३ ] ति० टी०—सुविहितमारण्यकशास्त्रबोधितम् । भक्तमोदनम् । पञ्चमम् कालं प्राप्येति शेषः । प्रातःसंगवमध्याह्नापराह्णात्पञ्चमं सायाह्नं प्राप्येत्यर्थः । यद्वा प्रातःसायं प्रातःसायमिति कालचतुष्टयं त्यक्त्वा पञ्चमे प्रातःकाल इत्यर्थः, दिनद्वयमतीत्य भुङ्क्ते इत्यर्थः ॥ ४१–४३ ॥

रा० टी०—नेति । राघवः मांसं सुग्रीवसंसर्गेण वनेऽपि प्राप्तराज्यभोगं न भुङ्क्ते करोति अत एव मधु क्षौद्रं न सेवते किंतु सुविहितं ब्रह्मचर्यविधावुक्तं वन्यं फलादिरूपमन्नं पञ्चमं पूर्वभोज्यापेक्षया पञ्चममश्नाति पञ्चमं कालं सायाह्नं प्राप्येति शेष इति भट्टाः ॥ ४१ ॥

गो० टी०—न मांसमिति । 'दृङ्मनःसङ्गसंकल्पजागराः कृशतारतिः । ह्रीत्यागोन्मादमूर्च्छान्ता इत्यनङ्गदशा दश ' इति दशावस्थास्वरतिरनेनोच्यते । मांसाद्यभोजनम् अरत्या ततः पूर्वं तद्भोजनोक्तेः । वन्यं वने भवं कन्दमूलादिकं सुविहितं वानप्रस्थयोग्यत्वेन विहितम् । भक्तम् अन्नम् । पञ्चमं प्रातः संगवमध्याह्नापराह्णसायंरूपेषु कालेषु पञ्चमकालिकं शरीरधारणमात्रोपयुक्तं भुङ्क्त इत्यर्थः ॥ ४१ ॥

रा० टी०—नेति । अन्तरात्मना मनसा त्वद्गतेन हेतुना दंशादीन् गात्रान्नापनयेत् अपनयति ॥ ४२ ॥

रा० टी०—नित्यमिति । कामवशं त्वद्विषयकोत्कटेच्छाधीनत्वं गतः प्राप्तः अत एव नित्यं शोकपरायण अत एव नित्यं ध्यानपरः त्वद्विषयकस्मृतौ निरतो रामः अन्यं किंचित् पदार्थं न चिन्तयते ॥ ४३ ॥

गो० टी०—अथ मनःसङ्गावस्थामाह—नैवेति । दंशास्तु वनमक्षिकाः तान् मशकांश्चेत्यनेन दंशमशकापरिज्ञानमुक्तम् । कीटसरीसृपोक्त्या उपरिशरीरं चरतामनिवृत्तिरुच्यते । तत्र हेतुः त्वद्गतेनान्तरात्मना । परकायप्रविष्टस्य कथं त्यक्तशरीरविकृतिज्ञानम् तत्र स्थितः खलु तत्रत्यपीडां ज्ञास्यतीति भावः ॥ ४२ ॥ ४३ ॥

४४ ] ति० टी०—प्रायोऽनिद्र एव । कथंचित्सुप्तोऽपि सीतेति वदन्नेव प्रतिबुध्यते ॥ ४४ ॥

रा० टी०—अनिद्र इति । अनिद्रः प्रायेण निद्रारहितो रामः सुप्तः कथंचित् किञ्चित् स्वापं प्राप्तोऽपि सीतेति मधुरां वाणीं व्याहरन्सन् प्रतिबुध्यते ॥ ४४ ॥

गो० टी०—तथास्य जागरावस्थामाह—अनिद्र इति । अनिद्रः सततं रामः निद्रया सर्वदा कालक्षेपार्होऽपि संततमनिद्रोऽभूत् । सुप्तोऽपि चेत्यनेन परगतार्थानुसंधानाभाव उच्यते । नरोत्तमः अभिमतविश्लेषे तथावस्थानमेव हि पुरुषोत्तमत्वस्य लक्षणमिति भावः । सीतेति । अप्राकृतसौन्दर्याद्यनुसंधानेन वासनावशाद्विलपति मधुरां वाणीम् । वासनावशाद्विलपत्यपि शब्दस्वभावाद्रसना जलस्यन्दिनी भवतीत्यर्थः । प्रतिबुध्यते क्लेशहीनदशाविगमात्पुनरपि बाधकोद्दीपनसंदर्शनेन बाधार्हः स्थित इत्यर्थः ॥ ४४–४६ ॥



---

१ पादशो व्यत्यस्तोऽयं श्लोकः गो. पाठे । २ नाकेति गो. पाठः । ३ अपीति गो. पाठः ।

दृष्ट्वा फलं वा पुष्पं वा यच्चान्यत्स्त्रीमनोहरम् । बहुशो हा प्रियेत्येवं श्वसंस्त्वामभिभाषते ॥ ४५ ॥
स देवि नित्यं परितप्यमानस्त्वामेव सीतेत्यभिभाषमाणः ।
धृतव्रतो राजसुतो महात्मा तवैव लाभाय कृतप्रयत्नः ॥ ४६ ॥
सा रामसंकीर्तनवीतशोका रामस्य शोकेन समानशोका ।
शरन्मुखेनाम्बुदशेषचन्द्रा निशेव वैदेहसुता बभूव ॥ ४७ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये सुन्दरकाण्डे षट्त्रिंशः सर्गः ॥ ३६ ॥

## सप्तत्रिंशः सर्गः ।

स्ववियोगजनितरामशोकातिरेकश्रवणखिन्ना जानकी रामं शीघ्रमत्र प्रापयेति हनुमन्तं प्रार्थयते । सीताशोकासहनो हनुमानेहि पृष्ठारोपणेनाहं त्वां रामसमीपं प्रापयामीति तथा विधातुमुद्युङ्क्ते । लघुरूपत्वादेतत्करणे शङ्कितां सीतां प्रत्याययितुं हनुमान्पृथुशरीरं विधत्ते । अनेकवचनोपन्यासैस्तेन सह गमनं निषेधयन्ती जानकी राममत्र शीघ्रमानयेति हनुमन्तं प्रेरयति ।

सा सीता वचनं श्रुत्वा पूर्णचन्द्रनिभानना । हनूमन्तमुवाचेदं धर्मार्थसहितं वचः ॥ १ ॥
अमृतं विषसंपृक्तं त्वया वानर भाषितम् । यच्च नान्यमना रामो यच्च शोकपरायणः ॥ २ ॥
ऐश्वर्ये वा सुविस्तीर्णे व्यसने वा सुदारुणे । रज्ज्वेव पुरुषं बद्ध्वा कृतान्तः परिकर्षति ॥ ३ ॥

---

४५-४६ ] ति० टी०—स्त्रीमनोहरं स्त्रीसंनिधाने मनोहरं स्त्रीणां मनोहरं वा । श्वसन्दीर्घोच्छ्वासं त्यजन् ॥ ४५ ॥ ४६ ॥

रा० टी०—दृष्ट्वेति । स्त्रीमनोहरं स्त्रीणां प्रियं फलं पुष्पं वा यदन्यत्पत्रादि तदपि वा दृष्ट्वा त्वां स्मरन् सन् हा प्रियेत्येवं बहुशोऽभिभाषते ॥ ४५ ॥

रा० टी०—स इति । नित्यं परितप्यमानः त्वद्वियोगजनितदुःखं प्राप्नुवन् अत एव सीतेति त्वामेव अभिभाषमाणो रामः तवैव लाभाय कृतप्रयत्नोऽस्तीति शेषः ॥ ४६ ॥

४७ ] ति० टी०—रामसंकीर्तनेनानिद्रः सततं राम इत्यादिना वीतशोका । न मांसं राघवो भुङ्क्ते इत्युक्तेन रामशोकेन समानशोका । अम्बुदशेषश्चन्द्रो यस्यां सा शरत् । लुप्तषष्ठीकम् । शरदो निशेव प्रकाशाप्रकाशयुक्तशरन्निशेव हर्षशोकवती बभूव ॥ ४७ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये सुन्दरकाण्डे षट्त्रिंशः सर्गः ॥ ३६ ॥

रा० टी०—सेति । रामसंकीर्तनेन वीतः संकीर्तनकालमानं निवृत्तः शोको यस्याः सा रामशोकेन समानः शोको यस्याः सा वैदेहसुता सा सीता शरन्मुखे शरत्प्राप्तौ अम्बुदशेषसहितचन्द्रो यस्यां सा निशा इव बभूव अभ्रच्छन्नत्वाऽच्छन्नत्वविशिष्टचन्द्रहेतुकप्रकाशाप्रकाशविशिष्टरात्रिरिव शोकनिवृत्तिप्राप्तिभ्यां प्रकाशाप्रकाशविशिष्टाऽभवदित्यर्थः ॥ ४७ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ सुन्दरकाण्डे षट्त्रिंशः सर्गः ॥ ३६ ॥

गो० टी०—सा रामेति । रामसद्भावातिशङ्कया कश्चिच्छोकः सीतायाः रामविरहेण कश्चिच्छोकः । तत्राद्यो हनुमदुक्त्या निवृत्तः द्वितीयस्तु वर्तत इत्याह—रामस्य शोकेन समानशोका तद्विरहकृतत्वेन तत्तुल्यशोका अधिकशोकस्तु निवृत्त इति भावः । यद्वा रामसंकीर्तनेन वीतशोकाऽपि नैव दंशान्न मशकानित्यादिश्रवणेन रामतुल्यशोका प्रकाशाप्रकाशशरन्मुखनिशेवाभूदित्यर्थः ॥ ४७ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने षट्त्रिंशः सर्गः ॥ ३६ ॥

१ ] ति० टी०—वचनं हनूमत इत्यादि ॥ १ ॥

रा० टी०—हनूमन्तं प्रति सीतोक्तिमाह—सेत्यादिभिः । सीता वचनं हनुमद्वाक्यं श्रुत्वा हनूमन्तमुवाच । तदाकारमाह—अमृतमित्यादिभिः । हे वानर ! अन्यमना रामो नेति यत् शोकपरायणोऽस्तीति यच्च त्वयाभिभाषितं तत् विषसंपृक्तं विषेण संमिश्रम् अमृतं प्रतीयते इति शेषः ॥ १ ॥ २ ॥

गो० टी०—सीतेत्यादि ॥ १ ॥

२ ] ति० टी०—यच्चानन्यमना इति वाक्यमाख्यायते तदमृतम् । यच्च शोकपरायण इति वाक्यमाख्यायते तद्विषम् ॥ २ ॥

गो० टी०—अमृतमिति । यच्च नान्यमना इत्यमृतत्वे हेतुः । यच्छोकपरायण इति विषसंसृष्टत्वे ॥ २ ॥

३ ] ति० टी०—ऐश्वर्ये व्यसने इति च विषयसप्तमी ॥ ३ ॥

रा० टी०—इदानीं रावणस्य अत्यैश्वर्यवत्त्वेऽपि विध्वंसो भविष्यतीति बोधयन्ती आह—ऐश्वर्य इति । ऐश्वर्ये व्यसने

---

१ स्मरन्निति रा. पाठः । २ दृढाति गो. पाठः । ३ साम्बुदेति गो. पाठः । ४ सीता तदिति गो. पाठः ।

विधिर्नूनमसंहार्यः प्राणिनां प्लवगोत्तम । सौमित्रिं मां च रामं च व्यसनैः पश्य मोहितान् ॥ ४ ॥
शोकस्यास्य [1]कथं पारं राघवोऽधिगमिष्यति । प्लवमानः परि[2]क्रान्तो हतनौः सागरे यथा ॥ ५ ॥
राक्षसानां वधं कृत्वा सूदयित्वा च रावणम् । लङ्का[3]मुन्मथितां कृत्वा कदा द्रक्ष्यति मां पतिः ॥ ६ ॥
स वाच्यः संत्वरस्वेति यावदेव न पूर्यते । अयं संवत्सरः कालस्तावद्धि मम जीवितम् ॥ ७ ॥
वर्तते दशमो मासो द्वौ तु शेषौ प्लवङ्गम । रावणेन नृशंसेन समयो यः कृतो मम ॥ ८ ॥
विभीषणेन च भ्रात्रा मम निर्यातनं प्रति । अनुनीतः प्रयत्नेन न च तत्कुरुते मतिम् ॥ ९ ॥
मम प्रतिप्रदानं हि रावणस्य न रोचते । रावणं मार्गते संख्ये मृत्युः कालवशंगतम् ॥ १० ॥
ज्येष्ठा कन्या [4]कला नाम विभीषणसुता कपे । तया ममैतदाख्यातं मात्रा प्रहितया स्वयम् ॥ ११ ॥
[5]अविन्ध्यो नाम मेधावी विद्वान्राक्षसपुङ्गवः । धृतिमाञ्छीलवान्वृद्धो रावणस्य सुसंमतः ॥ १२ ॥
[6]रामक्षयमनुप्राप्तं रक्षसां प्रत्यचोदयत् । न च तस्य स दुष्टात्मा शृणोति वचनं हितम् ॥ १३ ॥
[7]आशंसेयं हरिश्रेष्ठ क्षिप्रं मां प्राप्स्यते पतिः । अन्तरात्मा हि मे शुद्धस्तस्मिंश्च बहवो गुणाः ॥ १४ ॥

---

वा विद्यमानं पुरुषं रज्ज्वा बद्ध्वेव कृतान्तः कालः परिकर्षति ताभ्यामन्यत्र करोतीत्यर्थः एतेन रावणविध्वंसोऽवश्यं भवितेति सूचितम् ॥ ३ ॥

गो० टी०—रामवियोगो न स्वबुद्धिकृत इत्याह—ऐश्वर्य इति । कृतान्तः दैवम् ॥ ३ ॥

४ ] ति० टी०—विधिर्दैवम् । असंहार्योऽशक्यप्रतिक्रियः । अत्र स्वीयमेव दुःखं दृष्टान्तयति ॥ ४ ॥

रा० टी०—विधिरिति । विधिः परमात्मनियोगः प्राणिनाम् असंहार्यः अपरिहरणीयः अत एव सौमित्रिप्रभृतीन् व्यसनैः वियोगदुःखैः मोहितान् पश्य ॥ ४ ॥

गो० टी०—विधिरिति । विधिः दैवम् । असंहार्यः अनिवार्यः ॥ ४—७ ॥

५—६ ] ति० टी०—हतनौः पुरुषः परिक्रान्तः कृतपराक्रमो बाहुभ्यां प्लवमानो यथा सागरे पारमतिक्लेशेनाधिगच्छति तथा राघवोऽपि कथंचित्तमधिगमिष्यति ॥ ५ ॥ ६ ॥

रा० टी०—शोकस्येति । सागरे हता विनष्टा नौर्यस्य अत एव प्लवमानः बाहुभ्यां संतरन् परिक्रान्तः अतिपराक्रमवान् पुरुष इव शोकस्य सागरे प्लवमानो राघवः शोकस्य पारं कदा अधिगमिष्यति ॥ ५ ॥

रा० टी०—राक्षसानामिति । पतिः रामः मां कदा द्रक्ष्यति ॥ ६ ॥

७—८ ] ति० टी०—स रामः ॥ ७ ॥ ८ ॥

रा० टी०—स इति । संवत्सरः द्वादशमासात्मकोऽयं कालः यावन्न पूर्यते तावदेव मम जीवितम् अतः संत्वरस्वेति स रामः त्वया वाच्यः ॥ ७ ॥

रा० टी०—अवशिष्टमासं बोधयन्ती आह—वर्तत इति । रावणेन यः समयो मम समीपे कृतः तस्य दशमो मासो वर्तते द्वौ तु शेषौ वर्तेते ॥ ८ ॥

गो०टी०—वर्तत इति । दशमो मासः दशममासान्तः॥८॥

९—१० ] ति० टी०—निर्यातनं पुनः समर्पणम्, न च तत् तस्मिन्नित्यर्थः ॥ ९ ॥ १० ॥

रा० टी०—विभीषणेनेति । भ्रात्रा विभीषणेन मम निर्यातनं मत्कर्मकरामोद्देश्यकसमर्पणं प्रति अनुनीतः प्रार्थितोऽपि स रावणः तत् तत्र मतिं न कुरुते ॥ ९ ॥

रा० टी०—ममेति । कालवशं गतं रावणं संख्ये संग्रामे मृत्युर्मार्गते अत एव रावणस्य मम प्रतिप्रदानं न रोचते॥१०॥

गो०टी०—विभीषणेनेति । निर्यातनं प्रत्यर्पणम्॥९—१२॥

११—१२ ] ति० टी०—कन्याऽजातपुरुषसंबन्धा । एतद्विभीषणानुनयनम्, इदमेवाग्रे रामश्रुतं भिवीषणस्य निःशङ्कपरिग्रहाभिषेकयोर्बीजम् ॥ ११ ॥ १२ ॥

रा० टी०—नन्वेतत्त्वया कथं ज्ञातमित्यत आह—ज्येष्ठेति । विभीषणसुता विभीषणादुत्पन्ना अनला नाम ज्येष्ठा कन्याऽस्तीति शेषः मात्रा अभिहितया कथितया तया अनलया मम समीपे एतत् स्वयमाख्यातं कथितम् ॥ ११ ॥

रा० टी०—अविन्ध्य इति । रावणस्य सुसंमतः मेधावित्वादिविशिष्टः अविन्ध्यो नाम राक्षसः रामात् रक्षसां प्राप्तं क्षयं प्रत्यचोदयत् अकथयत् एतेन सीतां रामाय समर्पयेति तेन प्रार्थितमिति सूचितम् । सुदुष्टात्मा रावणस्तु हितं तस्य वचनं न शृणोति । श्लोकद्वयमेकान्वयि ॥ १२ ॥ १३ ॥

१३ ] ति० टी०—रामक्षयम् रक्षसां रामात्क्षयं प्राप्तमित्यर्थः ॥ १३ ॥

१४ ] ति० टी०—पतिः प्राप्स्यत इत्यत्र हेतुः—अन्तरात्मेति । तस्मिन्रामे ॥ १४ ॥

रा० टी०—आशंसेयमिति । हि यतः मे अन्तरात्मा शुद्धः तस्मिन् रामे च बहवो गुणाः अतः पतिः रामः क्षिप्रं संप्राप्स्यते ॥ १४ ॥

---

१ कदेति गो. पाठः । २ श्रान्त इति गो. पाठः । ३ उन्मूलितामिति गो. पाठः । ४ अनलेति गो. रा. पाठः । ५ एतदादि श्लोकद्वयं गो. नास्ति । ६ रामादिति रा. पाठः । ७ असंशयमिति गो. पाठः ।

उत्साहः पौरुषं सत्त्वमानृशंस्यं कृतज्ञता । विक्रमश्च प्रभावश्च सन्ति वानर राघवे ॥ १५ ॥
चतुर्दश सहस्राणि राक्षसानां जघान यः । जनस्थाने विना भ्रात्रा शत्रुः कस्तस्य नोद्विजेत् ॥ १६ ॥
न स शक्यस्तुलयितुं व्यसनैः पुरुषर्षभः । अहं तस्यानुभावज्ञा शक्रस्येव पुलोमजा ॥ १७ ॥
शरजालांशुमाञ्छूरः कपे रामदिवाकरः । शत्रुरक्षोमयं तोयमुपशोषं नयिष्यति ॥ १८ ॥
इति संजल्पमानां तां रामार्थे शोककर्शिताम् । अश्रुसंपूर्णवदनामुवाच हनुमान्कपिः ॥ १९ ॥
श्रुत्वैव च वचो मह्यं क्षिप्रमेष्यति राघवः । चमूं प्रकर्षन्महतीं हर्यृक्षगणसंकुलाम् ॥ २० ॥
अथवा मोचयिष्यामि त्वामद्यैव स राक्षसात् । अस्माद्दुःखादुपारोह मम पृष्ठमनिन्दिते ॥ २१ ॥
त्वां तु पृष्ठगतां कृत्वा संतरिष्यामि सागरम् । शक्तिरस्ति हि मे वोढुं लङ्कामपि सरावणाम् ॥ २२ ॥
अहं प्रस्रवणस्थाय राघवायाद्य मैथिलि । प्रापयिष्यामि शक्राय हव्यं हुतमिवानलः ॥ २३ ॥
द्रक्ष्यस्यद्यैव वैदेहि राघवं सहलक्ष्मणम् । व्यवसायसमायुक्तं विष्णुं दैत्यवधे यथा ॥ २४ ॥
त्वद्दर्शनकृतोत्साहमाश्रमस्थं महाबलम् । पुरंदरमिवासीनं नगराजस्य मूर्धनि ॥ २५ ॥

---

१५ ] ति० टी०—उत्साहः कार्येषु स्थिरप्रयत्नरूप उद्योगः पौरुषं तज्जन्यः पुरुषव्यापारः सत्त्वं बलम् आनृशंस्यमक्रूरता श्रितजनदाक्षिण्यमिति यावत् । विक्रमः शौर्यम् प्रभावो दिव्यास्त्रसंपज्जन्यो महिमा ॥ १५ ॥

रा० टी०–गुणानेवाह–उत्साह इति । उत्साहादयः राघवे सन्ति ॥ १५ ॥

गो० टी०–उत्साह इति । लोकोत्तरेषु कार्येषु स्थेयान् प्रयत्न उत्साहः पौरुषं तादृक्कार्यैकरणम् सत्त्वं बलम् आनृशंस्यम् अक्रूरत्वम् कृतज्ञता उपकारज्ञत्वम् विक्रमः शौर्यम् प्रभावः शक्तिः ॥ १३ ॥ १४ ॥

१६ ] ति० टी०–तत्सत्त्वानुमापककार्यमाह–चतुर्दशेति १६

रा० टी०–चतुर्दशेति । यः भ्रात्रा विना राक्षसानां चतुर्दश सहस्राणि जघान तस्य समरे को न उद्विजेत् संचलेत् ॥ १६ ॥

१७ ] ति० टी०–व्यसनैर्व्यसनदातृभी राक्षसैस्तुलयितुमुपमितुम् । तस्य तत्त्वं च मम प्रत्यक्षमेवेत्याह—अहं तस्येति । तद्रूपत्वादिति गूढम् ॥ १७ ॥

रा० टी०–नेति । स रामः व्यसनैः व्यसनप्रापकराक्षसैः तुलयितुं तोलयितुं न शक्यः शक्रस्य पुलोमजेव तस्य रामस्य अनुभावज्ञाहमस्मि ॥ १७ ॥

गो० टी०–न स इति । तुलयितुं चालयितुम् ॥ १५–२२॥

१८–१९ ] ति० टी०–शरजालेत्यादि परम्परितरूपकमिदम् ॥ १८ ॥ १९ ॥

रा० टी०–शरेति । हे कपे ! शरजालांशुमान् शरसमूहरूपकिरणविशिष्टः रामदिवाकरः रामसूर्यः शत्रुरक्षोमयं शत्रुरूपराक्षसप्रचुरं तोयम् उपशोषं नयिष्यति नेष्यति प्रापयिष्यति ॥ १८ ॥

रा० टी०–इतीति । इति संजल्पमानां तां सीतां हनुमान् उवाच ॥ १९ ॥

२० ] ति० टी०–मह्यं मम मत्तो वा ॥ २० ॥

रा० टी०–तदाकारमाह—श्रुत्वेति । मह्यं मम वचः श्रुत्वैव राघवः क्षिप्रमेष्यति ॥ २० ॥

२१–२३ ] ति० टी०–तव रामसंगमे रामस्येहानयनं व्यर्थमेव प्रकारान्तरेणैव तस्य संभवादित्याह—अथवेति । सोऽहं राक्षसाद्राक्षसकृतादस्माद्दुःखान्मोचयिष्यामीत्यन्वयः ॥ २१–२३ ॥

रा० टी०–पक्षान्तरमाह—अथवेति । हे अनिन्दिते ! मम पृष्ठम् उपारोह अतः सराक्षसात् राक्षससहितात् अस्मात् दुःखात् अद्यैव मोचयिष्यामि । किंच सोऽहं राक्षसात् राक्षसजन्यात् दुःखात् मोचयिष्यामि ॥ २१ ॥

रा० टी०–ननु पृष्ठारोहणमात्रेण कथं दुःखापगमो भविष्यतीत्यत आह—त्वामिति । सरावणां रावणसहितां लङ्कां वोढुं हि यतो मे शक्तिरस्ति अतः पृष्ठगतां त्वां कृत्वा सागरं संतरिष्यामि ॥ २२ ॥

रा० टी०–अहमिति । प्रस्रवणस्थाय राघवाय त्वामिति शेषः शक्राय हुतं हव्यमनल इव प्रापयिष्यामि ॥ २३ ॥

२४ ] ति० टी०–दैत्यवधे व्यवसाययुक्तं विष्णुमिव स्थितम् ॥ २४ ॥

रा० टी०–द्रक्ष्यसीति । दैत्यवधे व्यवसायसमायुक्तमुत्साहसहितं विष्णुमिव त्वद्दर्शने कृतः उत्साहो येन तं गिरिराजस्य मूर्धनि आसीनं पुरन्दरमिव आश्रमस्थं राघवमद्यैव द्रक्ष्यसि । श्लोकद्वयमेकान्वयि ॥ २४ ॥ २५ ॥

२५ ] ति० टी०–नगराजस्य श्रेष्ठस्य प्रस्रवणगिरेरित्यर्थः ॥ २५ ॥

---

१ तस्य प्रभावज्ञेति गो. पाठः । २ कर्शितामिति गो. पाठः । ३ त्विति गो. पाठः । ४ हर्यृक्षेति गो. पाठः । ५ वरानने इति गो. पाठः । ६ नाकेति गो. पाठः ।

पृष्ठमारोह मे देवि मा विकाङ्क्षस्व शोभने । योगमन्विच्छ रामेण शशाङ्केनेव रोहिणी ॥ २६ ॥
कथयन्तीव शशिना संगमिष्यसि रोहिणी । मत्पृष्ठमधिरोह त्वं तराकाशं महार्णवम् ॥ २७ ॥
नहि मे संप्रयातस्य त्वामितो नयतोऽङ्गने । अनुगन्तुं गतिं शक्ताः सर्वे लङ्कानिवासिनः ॥ २८ ॥
यथैवाहमिह प्राप्तस्तथैवाहमसंशयम् । यास्यामि पश्य वैदेहि त्वामुद्यम्य विहायसम् ॥ २९ ॥
मैथिली तु हरिश्रेष्ठाच्छ्रुत्वा वचनमद्भुतम् । हर्षविस्मितसर्वाङ्गी हनूमन्तमथाब्रवीत् ॥ ३० ॥
हनूमन्दूरमध्वानं कथं मां [6]नेतुमिच्छसि । तदेव खलु ते मन्ये कपित्वं हरियूथप ॥ ३१ ॥
कथं चाल्पशरीरस्त्वं मामितो नेतुमिच्छसि । सकाशं मानवेन्द्रस्य भर्तुर्मे प्लवगर्षभ ॥ ३२ ॥
सीतायास्तु वचः श्रुत्वा हनूमान्मारुतात्मजः । चिन्तयामास लक्ष्मीवान्नवं परिभवं कृतम् ॥ ३३ ॥
न मे जानाति सत्त्वं वा प्रभावं वासितेक्षणा । तस्मात्पश्यतु वैदेही यद्रूपं मम कामतः ॥ ३४ ॥
इति संचिन्त्य हनुमांस्तदा प्लवगसत्तमः । दर्शयामास सीतायाः स्वरूपमरिमर्दनः ॥ ३५ ॥
स तस्मात्पादपाद्धीमानाप्लुत्य प्लवगर्षभः । ततो वर्धितुमारेभे सीताप्रत्ययकारणात् ॥ ३६ ॥

---

गो० टी०–त्वद्दर्शनेति । नाकराजस्य मूर्धनि नाकपृष्ठसंज्ञस्य मूर्धनि । 'नगराजस्य' इति पाठे मेरोरित्यर्थः ॥ २३ ॥

२६ ] ति० टी०–मा विकाङ्क्षस्व मोपेक्षां कुर्वित्यर्थः॥२६॥

रा० टी०–पृष्ठमिति । हे देवि ! शशाङ्केन रोहिणी इव रामेण योगमन्विच्छ निश्चिनु अत एव पृष्ठमारोह मा विकाङ्क्षस्व औदासीन्यं नोत्पादय ॥ २६ ॥

गो० टी०–पृष्ठमिति । मा विकाङ्क्षस्व मोपेक्षिष्ठाः॥ २४॥

२७–२८ ] ति० टी०–कथयन्तीव संगन्तव्यो राम इति वचनं कथयन्तीव । शशिना रोहिणीव संगमिष्यसीत्यन्वयः । एतद्वचनसमकालमेव रामसमीपं प्रापयिष्यामीत्यर्थः । यथा तद्वचने न प्रयासः, एवमनायासेन त्वां नयामीत्यर्थो वा । आकाशं तन्मार्गमवलम्ब्य महार्णवं तरेत्यन्वयः ॥२७ ॥ २८॥

रा० टी०–पौलोमीति । मत्पृष्ठमधिरोह अत एव महार्णवमिवाकाशं तर ॥ २७ ॥

रा० टी०–नहीति । इतस्त्वां नयतो मे गतिमनुगन्तुं सर्वे लङ्कानिवासिनो न शक्ताः ॥ २८ ॥

२९ ] ति० टी०–त्वामुद्यम्य पृष्ठे कृत्वा विहायसं यास्यामि पश्य ॥ २९ ॥

रा० टी०–यथेति । यथाहम् इह प्राप्तस्तथैव त्वामुद्यम्य स्वपृष्ठे संस्थाप्य विहायसं यास्यामि ॥ २९ ॥

गो० टी०–कथयन्तीवेति । चन्द्रेण कथयन्तीव चन्द्रेण भाषमाणेव तरेत्यन्वयः ॥ २५–२७ ॥

३० ] ति० टी०–हर्षविस्मितसर्वाङ्गी हर्षपुलकितसर्वाङ्गी ॥ ३० ॥

रा० टी०–मैथिलीति । अद्भुतं वचनं श्रुत्वा हर्षविस्मितसर्वाङ्गी मैथिली हनूमन्तमब्रवीत् ॥ ३० ॥

गो० टी०–मैथिली त्विति । हर्षविस्मितसर्वाङ्गी हर्षेण पुलकितसर्वाङ्गी ॥ २८–३१ ॥

३१–३२ ] ति० टी०–तदेव दृश्यमानमेव ॥३१ ॥ ३२॥

रा० टी०–तदाकारमाह—हनूमन्निति । हे हनूमन् । दूरमध्वानं वोढुं मां कथमिच्छसि इच्छा न युक्तेत्यर्थः । तत्र हेतुः यतः तत्प्रसिद्धं कपित्वं कपिसामर्थ्यं लघु मन्ये ॥ ३१ ॥

रा० टी०–कथमिति । अल्पशरीरस्त्वं मां नेतुं कथमिच्छसि ॥ ३२ ॥

३३ ] ति० टी०–नवं परिभवमल्पशरीरोऽशक्त इत्येवंरूपम् ॥ ३३ ॥

रा० टी०–सीताया इति । सीतायाः वचनं श्रुत्वा कृतं सीतया संपादितं नवं प्रथमं परिभवं स्वानादरं ज्ञात्वेति शेषः चिन्तयामास ॥ ३३ ॥

३४–३५ ] ति० टी०–कामत इच्छाकृतम् ॥३४ ॥ ३५॥

रा० टी०–तदाकारमाह---नेति । मे सत्वं बलं प्रभावं च वैदेही न जानाति तस्माद्धेतोः मम यद्रूपं तत् कामतः स्वेच्छया पश्यतु ॥ ३४ ॥

रा० टी०–इतीति । प्लवगसत्तमो हनुमान् इति संचिन्त्य वैदेह्या वैदेह्यै स्वरूपं दर्शयामास ॥ ३५ ॥

गो० टी०–'न मे जानाति सत्त्वं वा प्रभावं वाऽसितेक्षणा । तस्मात्पश्यतु वैदेही यद्रूपं मम कामतः ॥' इति पाठः । अन्यथा पाठे वक्ष्यमाणेन विरोधः स्यात् ॥ ३२ ॥

गो० टी०–इति संचिन्त्येति । स्वरूपं स्वस्य शरीरम्॥३३॥

३६ ] ति० टी०–तस्मात्पादपाच्छिंशपातः । शरीरवृद्धौ तद्भारजातशाखाभङ्गध्वनिना राक्षस्यो ज्ञास्यन्तीति तत आप्लुतिः ॥ ३६ ॥

रा० टी०–स इति । स हनूमान् तस्याः प्रत्ययकारणात् प्रतीतिहेतोः पादपात् आप्लुत्य वर्धितुमारेभे ॥ ३६ ॥

गो० टी०–एतदेवाह–स तस्मादिति । अयं श्लोको वर्धनार्थं वृक्षादवरोहणं दर्शयति स्म । अनेन सोऽवतीर्य द्रुमा-



१ पौलोमीव सहेन्द्रेण सूर्येणेव सुवर्चलेति रा. पाठः । २ चन्द्रेण सूर्येण च महार्चिषेति गो. पाठः । ३ रुह्येति गो. पाठः । ४ आकाशमाहर्णवाविति गो. पाठः । ५ असंशय इति गो. पाठः । ६ वोढुमिति गो. पाठः । ७ वैदेह्या इति रा. पाठः ।

मेरुमन्दरसंकाशो बभौ दीप्तानलप्रभः । अग्रतो व्यवतस्थे च सीताया वानरर्षभः ॥ ३७ ॥
हरिः पर्वतसंकाशस्ताम्रवक्त्रो महाबलः । वज्रदंष्ट्रनखो भीमो वैदेहीमिदमब्रवीत् ॥ ३८ ॥
सपर्वतवनोद्देशां साट्टप्राकारतोरणाम् । लङ्कामिमां सनाथां वा नयितुं शक्तिरस्ति मे ॥ ३९ ॥
तदवस्थाप्यतां बुद्धिरलं देवि विकाङ्क्षया । विशोकं कुरु वैदेहि राघवं सहलक्ष्मणम् ॥ ४० ॥
तं दृष्ट्वाचलसंकाशमुवाच जनकात्मजा । पद्मपत्रविशालाक्षी मारुतस्यौरसं सुतम् ॥ ४१ ॥
तव सत्त्वं बलं चैव विजानामि महाकपे । वायोरिव गतिश्चापि तेजश्चाग्नेरिवाद्भुतम् ॥ ४२ ॥
प्राकृतोऽन्यः कथं चेमां भूमिमागन्तुमर्हति । उदधेरप्रमेयस्य पारं वानरयूथप ॥ ४३ ॥
जानामि गमने शक्तिं नयने चापि ते मम । अवश्यं संप्रधार्याशु कार्यसिद्धिरिवात्मनः ॥ ४४ ॥
अयुक्तं तु कपिश्रेष्ठ मया गन्तुं त्वया सह । वायुवेगसवेगस्य वेगो मां मोहयेत्तव ॥ ४५ ॥
अहमाकाशमासक्ता उपर्युपरि सागरम् । प्रपतेयं हि ते पृष्ठाद्भूयो वेगेन गच्छतः ॥ ४६ ॥
पतिता सागरे चाहं तिमिनक्रझषाकुले । भवेयमाशु विवशा यादसामन्नमुत्तमम् ॥ ४७ ॥

---

द्विति पूर्वं द्रुमाग्रात्सीतासमीपस्थशाखायामवतरणमुक्तम् । अत्र भूमाविति बोध्यम् ॥ ३४ ॥

३७-३८ ] ति० टी०—अग्रतो व्यवतस्थे योग्यपुरोदेशे स्थितः ॥ ३७ ॥ ३८ ॥

रा० टी०—मेर्विति । वानरर्षभो हनुमान् मेरुमन्दरसंकाशः सन् बभौ सीताया अग्रतोऽग्रे व्यवतस्थे च ॥ ३७ ॥

रा० टी०—हरिरिति । वज्रवत् दंष्ट्रा नखानि यस्य स हनुमान् वैदेहीमिदमब्रवीत् ॥ ३८ ॥

गो० टी०—मेरुमन्दरेति । अग्रतो व्यवतस्थे । संभाषणाय वृक्षमूलगतो बभूवेत्यर्थः ॥ ३९—३७ ॥

३९ ] ति० टी०—सनाथां सरावणाम् । नयितुं नेतुम् ३९

रा० टी०—तद्वचनाकारमाह—सेत्यादिभिः । सनाथां रावणसहितामिमां लङ्कां नयितुं मे शक्तिरस्ति ॥ ३९ ॥

४०-४१ ] ति० टी०—अवस्थाप्यतां समर्थोऽयमिति निश्चीयताम् । विकाङ्क्षया संदेहेनालम् । विशोकं कुरु मत्पृष्ठेन तत्र गत्वेति शेषः ॥ ४० ॥ ४१ ॥

रा० टी०—तदिति । तत् मम सामर्थ्यसत्त्वात् हेतोः बुद्धिर्निश्चयः अवस्थाप्यतां विकाङ्क्षया उपेक्षया अलं न कर्तव्यमित्यर्थः अत एव राघवं विशोकं कुरु ॥ ४० ॥

रा० टी०—तमिति । अचलसंकाशं तं हनुमन्तं दृष्ट्वा जनकात्मजोवाच ॥ ४१ ॥

गो० टी०—तदिति । अवस्थाप्यतां निश्चलीक्रियताम् । विकाङ्क्षया उपेक्षया ॥ ३८—४१ ॥

४२ ] ति० टी०—विजानामि एवंविधत्वद्रूपदर्शनात्प्रागप्यनुमानादिति भावः ॥ ४२ ॥

रा० टी०—तदाकारमाह—तवेति । तव सत्त्वाद्यहं विजानामि ॥ ४२ ॥

४३ ] ति० टी०—तदेवानुमानं दर्शयति—प्राकृत इति ॥ ४३ ॥

रा० टी०—प्राकृत इति । उदधेः पारम् इमां भूमिं लङ्कां च अन्यः त्वद्भिन्नः क आगन्तुमर्हति ॥ ४३ ॥

४४ ] ति० टी०—तवेव ममाप्यात्मनः कार्यसिद्धिरवश्यं संप्रधार्या विचार्या, त्वया तु स्वबलवैभवेन विचारिता कार्यसिद्धिः ॥ ४४ ॥

रा० टी०—जानामीति । गमने समुद्रलङ्घने मम नयने च ते शक्तिं जानामि तथापि आत्मनः कार्यसिद्धिः अवश्यं संप्रधार्या विचारणीया ॥ ४४ ॥

गो० टी०—जानामीति । संप्रधार्या विचारणीया ॥ ४२ ॥

४५ ] ति० टी०—भवत्यास्तर्हि को विचारस्तत्राह—अयुक्तं त्विति ॥ ४९ ॥

रा० टी०—अयुक्तमिति । हे कपिश्रेष्ठ ! त्वया सह मया गन्तुमयुक्तम् । तत्र हेतुः वायुवेगवत् सवेगस्य वेगत्वसहितस्य तव वेगः मां मोहयेत् वैचित्यं प्रापयेत् ॥ ४९ ॥

गो० टी०—स्वप्रापणे प्रधानं दोषं हृदि कृत्वा आपाततो दोषमाह—अयुक्तमिति ॥ ४३ ॥

४६-४७ ] ति० टी०—उपर्युपरि सागरं सागरस्योपरीत्यर्थः ॥ ४६ ॥ ४७ ॥

रा० टी०—अहमिति । सागरमुपर्युपरि आकाशमासक्ताऽहं भूयो वेगेन गच्छतस्तव पृष्ठात् प्रपतेयम् ॥ ४६ ॥

रा० टी०—पतितेति । सागरे पतिताऽहं विवशा सती यादसां जलजन्तूनामन्नमाशु भवेयम् ॥ ४७ ॥

गो० टी०—अहमिति । उपर्युपरि सागरमिति "उपर्यध्यधसः सामीप्ये" इति द्विर्वचनम् धिगुपर्यादिष्विति द्वितीया ॥ ४४ ॥

---

१ वानरोत्तम इति गो. पाठः । २ भीमेति गो. पाठः । ३ गतिमिति गो. पाठः । ४ अर्हसीति गो. पाठः । ५ पुङ्गवेति गो. पाठः । ६ हीति रा. पाठः । ७ आपन्ना हीति गो. पाठः । ८ मयादिति गो. पाठः ।

न च शक्ष्ये त्वया सार्धं गन्तुं शत्रुविनाशन । कलत्रवति संदेहस्त्वयि स्याद्प्यसंशयम् ॥ ४८ ॥
ह्रियमाणां तु मां दृष्ट्वा राक्षसा भीमविक्रमाः । अनुगच्छेयुरादिष्टा रावणेन दुरात्मना ॥ ४९ ॥
तैस्त्वं परिवृतः शूरैः शूलमुद्गरपाणिभिः । भवेस्त्वं संशयं प्राप्तो मया वीर कलत्रवान् ॥ ५० ॥
सायुधा बहवो व्योम्नि राक्षसास्त्वं निरायुधः । कथं शक्ष्यसि संयातुं मां चैव परिरक्षितुम् ॥ ५१ ॥
युध्यमानस्य रक्षोभिस्तैस्तैः क्रूरकर्मभिः । प्रपतेयं हि ते पृष्ठाद्भयार्ता कपिसत्तम ॥ ५२ ॥
अथ रक्षांसि भीमानि महान्ति बलवन्ति च । कथंचित्सांपराये त्वां जयेयुः कपिसत्तम ॥ ५३ ॥
अथवा युध्यमानस्य पतेयं विमुखस्य ते । पतितां च गृहीत्वा मां नयेयुः पापराक्षसाः ॥ ५४ ॥
मां वा हरेयुस्त्वद्धस्ताद्विशसेयुरथापि वा । अनवस्थौ हि दृश्येते युद्धे जयपराजयौ ॥ ५५ ॥
अहं वापि विपद्येयं रक्षोभिरभितर्जिता । त्वत्प्रयत्नो हरिश्रेष्ठ भवेन्निष्फल एव तु ॥ ५६ ॥
कामं त्वमपि पर्याप्तो निहन्तुं सर्वराक्षसान् । राघवस्य यशो हीयेत्त्वया शस्तैस्तु राक्षसैः ॥ ५७ ॥
अथवाऽऽदाय रक्षांसि न्यसेयुः संवृते हि माम् । यत्र ते नाभिजानीयुर्हरयो नापि राघवः ॥ ५८ ॥

गो० टी०-पतितेति । यादसां जलजन्तूनाम् ॥ ४९ ॥

४८-४९ ] ति० टी०-इतोऽपि गमनमयुक्तं त्वया सहेत्याह—न चेति । कलत्रवति स्त्रिया सह गन्तरि संदेहः राक्षसानामिति शेषः ॥ ४८ ॥ ४९ ॥

रा० टी०-नेति । कलत्रवति स्त्रीसहिते त्वयि संदेहः गमनसंशयः स्यात् अतः त्वया सार्धं गन्तुमहं न शक्ष्ये ॥४८॥

रा० टी०-संशये कारणमाह-ह्रियमाणामिति । ह्रियमाणां मां दृष्ट्वा रावणेन आदिष्टा राक्षसा अनुगच्छेयुः ॥४९॥

गो० टी०-न चेति । कलत्रवति रक्ष्यवति त्वयि संदेहः स्यात् । मयि रक्ष्यायां त्वयि विपत्संदेहः स्यादित्यर्थः ॥ ४६ ॥

गो० टी०-एतदेव प्रपञ्चयति-ह्रियमाणामित्यादिना ४७

५० ] ति० टी०-संशयं प्राणसंशयम्, तैस्त्वं परिवृतो भवेः । ततस्त्वं संशयं प्राप्तो भवेरिति त्वंशब्दद्वयनिर्वाहः ॥५०॥

रा० टी०-तैरिति । तैः राक्षसैः परिवृतः मया कलत्रवांस्त्वं संशयं प्राप्तो भवेः ॥ ५० ॥

गो० टी०-तैरिति । त्वं तैः परिवृतो भवेः । कलत्रवान् रक्ष्यवान् त्वं संशयं प्राप्तश्च भवेरिति योजना ॥ ४८ ॥

५१-५२ ] ति० टी०-तत्र हेतुमाह—सायुधा इति । व्योम्नि निरालम्बप्रदेश इत्यर्थः ॥ ५१ ॥ ५२ ॥

रा० टी०-सायुधा इति । राक्षसाः सायुधाः त्वं तु निरायुधः अतः संपातुं मां परिरक्षितुं च कथं शक्ष्यसि ॥५१॥

रा० टी०-युध्यमानस्येति । रक्षोभिः युध्यमानस्य ते पृष्ठात् प्रपतेयम् ॥ ५२ ॥

गो० टी०-सायुधा इति । संयातुं सम्यग्योद्धुम् ॥४९॥

गो० टी०-पूर्वश्लोकोक्तं समर्थयति—युध्यमानस्येत्यादिना ॥ ५० ॥

५३ ] ति० टी०-कथंचिन्महता यत्नेन । सांपराये युद्धे जयेयुः तस्याव्यवस्थितत्वादिति भावः ॥ ५३ ॥

रा० टी०-अथेति । संपराये युद्धे अथ यदि रक्षांसि कथंचित् त्वां जयेयुः तदा पापराक्षसा मां नयेयुः अथवा यदि युध्यमानस्य अत एव विमुखस्य मदुपरि दृष्टिरहितस्य ते समीपे पतेयं पतितां मां नयेयुश्च । श्लोकद्वयमेकान्वयि ॥५३॥५४॥

गो० टी०-अथेति । साम्पराये युद्धे ॥ ५१ ॥

५४ ] ति० टी०-अथ त्वं जेष्यसि एवमपि पतने महाननर्थ इत्याह—अथवेति । पतेयम् तव पृष्ठादिति शेषः । तत्र हेतुः—विमुखस्येति । युद्धपारवश्यान्मद्रक्षणविमुखस्येत्यर्थः ॥ ५४ ॥

गो० टी०-अथवेति । विमुखस्य युद्धपरवशस्येत्यर्थः ॥ ५२—५५ ॥

५५-५६ ति० टी०-विशसेयुः रामविषयकद्वेषवशात् । तत्संतोषनाशार्थमित्यर्थः ॥ ५५ ॥ ५६ ॥

रा० टी०-मामिति । जयपराजयौ अनवस्थौ अनिश्चितौ दृश्येते अस्य जयः पराजयो वा इत्यत्र निश्चयाभाव इत्यर्थः अतः वा तव जयाभावपक्षे संक्रुद्धाः राक्षसाः मां हरेयुर्विशसेयुर्हिंस्युर्वा ॥ ५५ ॥

रा० टी०-अहमिति । यद्यपि सर्वराक्षसान्निहन्तुं त्वं पर्याप्तोऽसि त्वया शस्तैर्हिंसितैः राक्षसैः राघवस्य यशोऽपि अहीयेत् न हीयेत् तथापि रक्षोभिरभितर्जिताऽहं वा यदि विपद्येयं तदा त्वत्प्रयत्नः निष्फल एव भवेत् । श्लोकद्वयमेकान्वयि ॥ ५६ ॥ ५७ ॥

५७ ति० टी०-यशो हीयेत्स्वयं प्रत्याहर्तुमशक्त इत्यपयशोवृद्धिः स्यादिति भावः । शस्तैर्हिंसितैः ॥ ५७ ॥

५८ ति० टी०-राक्षसैः स्वग्रहणपक्षे दोषान्तरमाह-अथवेति । संवृते गुप्ते ॥ ५८ ॥

रा० टी०-अथवेति । अथवा यदि यत्र हरयो राघवश्च मां न जानीयुः तत्र संवृते आच्छादिते स्थले मामादाय रक्षांसि



१ तवेति गो. पाठः । २ संपराय इति रा. पाठः । ३ असीति गो. पाठः । ४ राघवाविति गो. पाठः ।

आरम्भस्तु मदर्थोऽयं ततस्तव निरर्थकः । त्वया हि सह रामस्य महानागमने गुणः ॥ ५९ ॥
मयि जीवितमायत्तं राघवस्यामितौजसः । भ्रातॄणां च महाबाहो तव राजकुलस्य च ॥ ६० ॥
तौ निराशौ मदर्थं च शोकसंतापकर्शितौ । सह सर्वर्क्षहरिभिस्त्यक्ष्यतः प्राणसंग्रहम् ॥ ६१ ॥
भर्तुर्भक्तिं पुरस्कृत्य रामादन्यस्य वानर । नाहं स्प्रष्टुं स्वतो गात्रमिच्छेयं वानरोत्तम ॥ ६२ ॥
यदहं गात्रसंस्पर्शं रावणस्य गता बलात् । अनीशा किं करिष्यामि विनाथा विवशा सती ॥ ६३ ॥
यदि रामो दशग्रीवमिह हत्वा सराक्षसम् । मामितो गृह्य गच्छेत तत्तस्य सदृशं भवेत् ॥ ६४ ॥
श्रुताश्च दृष्टा हि मया पराक्रमा महात्मनस्तस्य रणावमर्दिनः ।
न देवगन्धर्वभुजङ्गराक्षसा भवन्ति रामेण समा हि संयुगे ॥ ६५ ॥
समीक्ष्य तं संयति चित्रकार्मुकं महाबलं वासवतुल्यविक्रमम् ।
सलक्ष्मणं को विषहेत राघवं हुताशनं दीप्तमिवानिलेरितम् ॥ ६६ ॥
सलक्ष्मणं राघवमाजिमर्दनं दिशागजं मत्तमिव व्यवस्थितम् ।
सहेत को वानरमुख्य संयुगे युगान्तसूर्यप्रतिमं शरार्चिषम् ॥ ६७ ॥

---

न्यसेयुः तदा मदर्थोऽयं तवारम्भः प्रयत्नः निरर्थकः स्यादिति शेषः । अतः त्वया सह रामस्यागमने एव महान् गुणः । श्लोकद्वयमेकान्वयि ॥ ५८ ॥ ५९ ॥

गो० टी०-अथवेति । संवृते गूढप्रदेशे ॥ ५६ ॥ ५७ ॥

५९ ति० टी०-आरम्भः समुद्रतरणादिरूपः एवं स्वगमनपक्षे दोषमुक्त्वा राघवानयनपक्ष एव गुणवानित्याह—त्वया हीति ॥ ५९ ॥

६० ] ति० टी०-रामेण मदप्राप्तौ सर्वनाशप्रसङ्ग इत्याह—मयि जीवितमिति । भ्रातॄणां लक्ष्मणादीनाम् । राजकुलस्य सुग्रीवकुलस्य ॥ ६० ॥

रा० टी०-स्वलाभाभावे दोषान्तरमाह—मयीति । राघवादेः जीवितं मयि आयत्तं मल्लाभाधीनमित्यर्थः, अतः मदर्थं शोकसंतापकर्षितौ तौ रामलक्ष्मणौ सर्वर्क्षहरिभिः सह प्राणसंग्रहं प्राणानां रक्षणं त्यक्ष्यतः । श्लोकद्वयमेकान्वयि ॥ ६० ॥ ६१ ॥

गो० टी०-मयीति । तव राजकुलस्य सुग्रीवराजकुलस्य ॥ ५८—६० ॥

६१ ] ति० टी०-प्राणसंग्रहं प्राणसंबन्धम् ॥ ६१ ॥

६२ ] ति० टी०-हनूमता सह गमनाभावे कारणान्तरमाह—भर्तुरिति । रावणगात्रस्पर्शस्तु न स्वत इत्याह—यदहमिति ॥ ६२ ॥

रा० टी०-हनुमता सह गमनाभावे मुख्यं हेतुमाह—भर्तुरिति । स्वतः स्वेच्छया रामाज्ञां विनेत्यर्थः, रामादन्यस्य गात्रं स्प्रष्टुं नेच्छेयम् ॥ ६२ ॥

६३ ] ति० टी०-अनीशा स्त्रीत्वात्स्वयमसमर्था, विवशा विचेष्टा, विनाथाऽसंनिहितरामलक्ष्मणा । हा सीते ! लक्ष्मणेति मारीचवाक्यं श्रुत्वा रामानर्थशङ्कया लक्ष्मणस्यापि प्रस्थापनादिति भावः ॥ ६३ ॥

रा० टी०-यदिति । रावणस्य गात्रसंस्पर्शं बलात् हठात् यदहं गता तत् अनाथा नाथरहिता अत एव अनीशा सामर्थ्यरहिताऽहं किं करिष्यामि ॥ ६३ ॥

गो० टी०-यदहमिति । अनीशा स्वयं किंचित्कर्तुमसमर्था विनाथा विगतस्वामिका विवशा विचेष्टा ॥ ६१ ॥ ६२ ॥

६४ ] ति० टी०-तत्तस्य सदृशं स्वमहिम्ना सगणं शत्रुं हत्वा मन्नयनम् सगणरावणवधार्थमेवावतारात् तस्य च मद्गमनेऽसंभवात्, एवं च स्वकार्यानिष्पत्त्या गतायामपि क्रुद्ध्येदिति गूढम् ॥ ६४ ॥

रा० टी०-यदीति । रामः यदि दशग्रीवं हत्वा मां गृह्य गृहीत्वा गच्छेत् तत् तस्य रामस्य सदृशं भवेत् ॥ ६४ ॥

६५-६७ ] ति० टी०-तादृशबलं च तस्य मया सुविदितमित्याह—श्रुताश्चेति । विश्वामित्रयज्ञादौ कृता वालिवधादयश्च श्रुताः अन्ये दृष्टाः ॥ ६५-६७ ॥

रा० टी०-रामस्य ध्रुवं विजयो भविष्यतीति बोधयन्ती आह—श्रुता इति । यैः पराक्रमैः देवादयः रामेण समा न ते पराक्रमाः मया श्रुता दृष्टा निश्चिताश्च ॥ ६५ ॥

रा० टी०-समीक्ष्येति । अनिलेरितं दीप्तं हुताशनमिव राघवं समीक्ष्य को विषहेत् ॥ ६६ ॥

रा० टी०-सेति । हे वानरमुख्य ! आजौ संग्रामे मर्दयति रिपून् विनाशयति तं दिशागजमिव व्यवस्थितं युगान्तसूर्यप्रतिमं शराः अर्चींषि यस्य तं रामं संयुगे संग्रामे कः सहेत ॥ ६७ ॥

गो० टी०- श्रुता इति । प्रथमहिशब्दो गुणप्रसिद्धौ । द्वितीयो निस्समत्वप्रसिद्धौ ॥ ६३—६५ ॥

---

१ महात्मन इति गो. पाठः । २ त्विति गो. पाठः । ३ भर्तृभक्तिमिति गो. पाठः । ४ न स्पृशामि शरीरं तु पुंसो वानरपुङ्गवेति गो. पाठः ५ सबान्धवमिति गो. पाठः । ६ श्रुता हि दृष्टा श्चेति गो. पाठः ।

स मे कपिश्रेष्ठ सलक्ष्मणं प्रियं सयूथपं क्षिप्रमिहोपपादय ।
चिराय रामं प्रति शोककर्शितां कुरुष्व मां वानरवीर हर्षिताम् ॥ ६८ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये सुन्दरकाण्डे सप्तत्रिंशः सर्गः ॥३७॥

## अष्टात्रिंशः सर्गः ।

रामप्रत्यायनार्थं हनुमताऽभिज्ञानं याचिता जानकी काकासुरवृत्तं निवेद्यैतत्त्वमभिज्ञानत्वेन निवेदयेत्यादिशति तथा रामलक्ष्मणयोरभिवादनकुशलप्रश्नान्निवेद्य संकेतितकालस्य मासद्वयावशेषेऽप्यहमेकमासमेव प्राणान्धारयामीति प्रतिज्ञायाभिज्ञानान्तरत्वेन स्वचूडामणिं प्रयच्छति च ।

ततः स कपिशार्दूलस्तेन वाक्येन तोषितः । सीतामुवाच तच्छ्रुत्वा वाक्यं वाक्यविशारदः ॥ १ ॥
युक्तरूपं त्वया देवि भाषितं शुभदर्शने । सदृशं स्त्रीस्वभावस्य साध्वीनां विनयस्य च ॥ २ ॥
स्त्रीत्वान्न त्वं समर्थासि सागरं व्यतिवर्तितुम् । मामधिष्ठाय विस्तीर्णं शतयोजनमायतम् ॥ ३ ॥
द्वितीयं कारणं यच्च ब्रवीषि विनयान्विते । रामादन्यस्य नार्हामि संसर्गमिति जानकी ॥ ४ ॥
एतत्ते देवि सदृशं पत्न्यास्तस्य महात्मनः । का ह्यन्या त्वामृते देवि ब्रूयाद्वचनमीदृशम् ॥ ५ ॥

---

६८ ] ति० टी०—अथ निश्चितं कर्तव्यमाह—स मे इति । सयूथपं ससुग्रीवमुपपादयानय । चिरकालं शोककर्शितां रामस्यात्रागमनेन हर्षितां कुरुष्व । समूलसकलनाशेनेति भावः ॥ ६८ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये सुन्दरकाण्डे सप्तत्रिंशः सर्गः ॥ ३७ ॥

रा० टी०—स इति । हे कपिश्रेष्ठ ! सयूथपं यूथपतिसुग्रीवसहितं मे प्रियं क्षिप्रमिह उपपादय प्रापय अत एव चिराय बहुकालं रामं प्रति शोककर्षितां मां हर्षितां कुरुष्व ॥ ६८ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ सुन्दरकाण्डे सप्तत्रिंशः सर्गः ॥ ३७ ॥

गो० टी०—स इति । हर्षितां हर्षमासादिताम् । उत्तरोत्तरहर्षवतीमित्यर्थः । अनया भक्तिकया उपायान्तरं स्वरूपविरुद्धं भगवत्प्राप्तौ स एवोपाय इति दर्शितः ॥ ६६ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने सप्तत्रिंशः सर्गः ॥ ३७ ॥

---

१ ] ति० टी०—तेन वाक्येन सीतयोक्तेन वाक्येन ॥ १ ॥

रा० टी०—सीतावचनश्रवणानन्तरकालिकां सीतां प्रति हनुमदुक्तिमाह—तत इत्यादिभिः । तेन सीतोक्तेन वाक्येन तोषितः कपिशार्दूलः तत् सीतोक्तं वाक्यं श्रुत्वा उवाच ॥ १ ॥

गो० टी०—ततः स इत्यादि । तच्छ्रुत्वा तेन वाक्येन हर्षितः वाक्यमुवाच ॥ १ ॥

२ ] ति० टी०—स्त्रीस्वभावस्य भीरुत्वादेः साध्वीनां पतिव्रतानां विनयस्य वृत्तस्य सदृशं युक्तरूपमतिशयेन युक्तम् ॥२॥

रा० टी०—युक्तेति । स्त्रीस्वभावस्य भीरुत्वादेः साध्वीनां पतिव्रतानां च विनयस्य विनीतेश्च सदृशं योग्यं यत्त्वया भाषितं तत् युक्तरूपं तवातीव योग्यम् ॥ २ ॥

गो० टी०—युक्तरूपमिति । युक्तरूपं युक्ततरमित्यर्थः प्रशंसायां रूपप् । प्राशस्त्यं चात्र प्रकृत्यर्थवैशिष्ट्यम् । स्त्रीस्वभावस्य भीरुत्वादेः साध्वीनां पतिव्रतानाम् विनयस्य वृत्तस्य ॥ २ ॥

३-४ ] ति० टी०—वचनस्य युक्तरूपतां प्राशस्त्यं दर्शयति—स्त्रीत्वादिति । शतयोजनं सागरं व्यतिवर्तितुं तर्तुं विस्तीर्णमतिबृहच्छरीरमपि मामधिष्ठायेत्यन्वयः । 'स्त्री त्वं न तु समर्थं हि' इति पाठे त्वं स्त्री न तु समर्थम् । न समर्थेत्यर्थः । लिङ्गव्यत्यय आर्ष इति तीर्थः । स्त्रीणां भीरुस्वभावत्वादिति भावः ॥ ३ ॥ ४ ॥

५ ] ति० टी—ईदृशं वचनं त्वया सह न यास्यामीत्येतद्वचनम् । त्वद्भिन्नैर्दृश्यामापदीदृशं वचः का ब्रूयात् ॥ ६ ॥

रा० टी०— युक्तत्वमेव स्फुटयन्नाह—स्त्रीत्वादिति । स्त्रीत्वाद्धेतोः मामधिष्ठाय ममोपरि स्थित्वापि सागरं व्यतिवर्तितुं न समर्थासि ॥ ३ ॥

रा० टी०—द्वितीयमिति । रामात् अन्यस्य संसर्गं नार्हामि एतत् द्वितीयं कारणं यद्ब्रवीषि तत् महात्मनः तस्य रामस्य पत्न्याः ते सदृशं हि यतः इदृशं वचनं त्वामृते का ब्रूयात् न कापीत्यर्थः । श्लोकद्वयमेकान्वयि ॥ ४–६ ॥

गो० टी०—स्त्रीत्वमिति । विस्तीर्णं मामधिष्ठाय शतयोजनमायतं सागरम् व्यतिवर्तितुं तर्तुं स्त्री त्वं न समर्थं हि । स्त्री न समर्थेत्यर्थः यद्वा सागरस्य शतयोजनम् आयतं विस्तीर्णं

---

१ मुख्येति गो. पाठः । २ हर्षित इति गो. पाठः । ३ स्त्री त्वं न तु समर्थं हीति गो. पाठः । ४ विस्तीर्णे इति रा. पाठः । ५ संस्पर्शमिति गो. पाठः ।

श्रोष्यते चैव काकुत्स्थः सर्वं निरवशेषतः । चेष्टितं यत्त्वया देवि भाषितं च ममाग्रतः ॥ ६ ॥
कारणैर्बहुभिर्देवि रामप्रियचिकीर्षया । स्नेहप्रस्कन्नमनसा मयैतत्समुदीरितम् ॥ ७ ॥
लङ्काया दुष्प्रवेशत्वाद्दुस्तरत्वान्महोदधेः । सामर्थ्यादात्मनश्चैव मयैतत्समुदीरितम् ॥ ८ ॥
इच्छामि त्वां समानेतुमद्यैव रघुनन्दिना । गुरुस्नेहेन भक्त्या च नान्यथा तदुदाहृतम् ॥ ९ ॥
यदि नोत्सहसे यातुं मया सार्धमनिन्दिते । अभिज्ञानं प्रयच्छ त्वं जानीयाद्राघवो हि यत् ॥ १० ॥
एवमुक्ता हनुमता सीता सुरसुतोपमा । उवाच वचनं मन्दं बाष्पप्रग्रथिताक्षरम् ॥ ११ ॥
इदं श्रेष्ठमभिज्ञानं ब्रूयास्त्वं तु मम प्रियम् । शैलस्य चित्रकूटस्य पादे पूर्वोत्तरे पदे ॥ १२ ॥
तापसाश्रमवासिन्याः प्राज्यमूलफलोदके । तस्मिन्सिद्धाश्रिते देशे मन्दाकिन्यविदूरतः ॥ १३ ॥

---

च मामधिष्ठायापि स्त्रीत्वम् व्यतिवर्तितुम् अपगन्तुं न समर्थं हि । सागरस्य शतयोजनं यावत्तावदायतम् तथा विस्तीर्णं च मामधितिष्ठन्त्या अपि तव स्त्रीत्वं भीरुत्वं नापगच्छतीत्यर्थः॥३–५॥

६ ] ति॰ टी॰–चेष्टितं व्यापारो विलापादिरूपः ॥ ६ ॥

रा॰ टी॰–श्रोष्यते इति । यत्त्वया चेष्टितं रोदनादि कृतं भाषितं च तत्सर्वं काकुत्स्थो रामः निरवशेषतः श्रोष्यते ॥ ६॥

गो॰ टी॰–श्रोष्यत इति । त्वया चेष्टितम् उद्बन्धनादिकम् । भाषितं रावणं तृणीकृत्य फणितम् । मम प्रत्युत्तरत्वेन कथितं च ॥ ६ ॥

७ ] ति॰ टी॰–कारणैर्बहुभिरुपपन्नं यत्त्वया मदग्रतो भाषितं तद्रामाग्र उच्यमानगुणकेन मयेरितं काकुत्स्थो निरवशेषतः श्रोष्यत इत्यन्वय इति कतकः ॥ ७ ॥

रा॰ टी॰–नन्वस्यैवोचितत्वे त्वया कथं सह गमनं प्रार्थितमित्यत आह—कारणैरिति । हे देवि! रामप्रियचिकीर्षया शीघ्रं रामप्रीतिवाञ्छया बहुभिः कारणैः कारणान्तरैश्च स्नेहेन प्रस्कन्नं द्रवीभूतं मनो यस्य तेन मया एतत्समुदीरितम् ॥ ७ ॥

गो॰ टी॰–कारणैरिति । बहुभिः कारणैः बहुभिरुपायैः । स्नेहप्रस्कन्नमनसा स्नेहशिथिलमनसा ॥ ७ ॥

८ ] ति॰ टी॰–रामसमीपनयनोक्तौ हेतुमाह–लङ्काया इति । रामेण पत्या लङ्काया दुष्प्रवेशत्वान्महोदधेर्दुस्तरत्वाच्चात्मनः सामर्थ्यसत्त्वाच्च ॥ ८ ॥

रा॰ टी॰–कारणान्येव स्फुटयन्नाह—लङ्काया इति । लङ्कायाः दुष्प्रवेशत्वाद्धेतोः मया एतत्समुदीरितम् एतेन रामस्यागमने श्रमो भविष्यतीति सूचितम् ॥ ८ ॥

गो॰ टी॰–लङ्काया इति । दुष्प्रवेशलङ्काप्रवेशे दुस्तरसागरतरणे च मम शक्तिरस्तीति ज्ञापयितुमेवमुक्तमित्यर्थः ॥८॥

९ ] ति॰ टी॰–इच्छामीत्यादिसमुदीरितं मयेति शेषः । रघुनन्दिना रघूंस्तद्वंश्यान्नन्दयति तेन रामेण समानेतुमित्यन्वयः । तदपि गुरो रामस्य स्नेहेन त्वयि भक्त्या चोक्तम्, न तु निजबलगर्वादित्यर्थः ॥ ९ ॥

रा॰ टी॰–इच्छामीति । रघुनन्दिना रामेण त्वां समानेतुं संयोजयितुम् अद्यैव इच्छामि अत एव एतत् उदाहृतं कथितम् ॥ ९ ॥

गो॰ टी॰–इच्छामीति । रघुबन्धुना रघुवंश्येन । सगोत्रबान्धवज्ञातिबन्धुस्वस्वजनाःसमा इत्यमरः । रघुवंश्यानां बन्धुना तत्कीर्तिसंपादकेनेत्यर्थः । समानेतुं संगमयितुम् इच्छामि ऐच्छम् ॥ ९ ॥

१० ] ति॰ टी॰–यदीति । उक्तरीत्यायुक्तत्वपर्यालोचनयेत्यर्थः ॥ १० ॥

रा॰ टी॰–यदीति । मया सार्धं यातुं यदि नोत्सहसे तर्हि यत् यतः राघवो जानीयात् मत्कर्तृकत्वदर्शनं बुध्येत तदभिज्ञानं चिह्नं त्वं प्रयच्छ ॥ १० ॥

गो॰ टी॰–यदीति ॥ १० ॥

११ ] ति॰ टी॰–एवमुक्ता प्रत्यभिज्ञां देहीत्युक्ता । मन्दमुपांशु । एकान्तवृत्तान्तस्मरणजो बाष्पः ॥ ११ ॥

रा॰ टी॰–एवमिति हनुमता एवमुक्ता सीता बाष्पैः प्रग्रथितानि अक्षराणि यस्मिन् तद्वचनं मन्दं शनैरुवाच ॥११॥

गो॰ टी॰–एवमिति । बाष्पप्रग्रथिताक्षरं बाष्पेण विघ्निताक्षरम् । एकान्तवृत्तान्तस्मरणात् बाष्पः ॥ ११ ॥

१२ ] ति॰ टी॰–इदं रहस्यवृत्तान्तकथनरूपम् । रहस्यवृत्तान्तत्वादेवान्याज्ञातत्वेन श्रेष्ठम् । तदेवाह–शैलस्येति । पूर्वोत्तरे ईशानदिक्स्थे पादे प्रत्यन्तपर्वतरूपे पदे स्थाने ॥१२॥

१३ ] ति॰ टी॰–मन्दाकिन्यविदूरतो मन्दाकिनीसमीपे । सिद्धाश्रिते बहुमूलादिमति देशे तापसाश्रमवासिन्या मम यद्वृत्तं तच्छ्रेष्ठमभिज्ञानं त्वं ब्रूया इति संबन्धः ॥ १३ ॥

रा॰ टी॰–तद्वचनाकारमाह–इदमित्यादिभिः । इदं वक्ष्यमाणम् अभिज्ञानं मम प्रियं यथा भवति तथा त्वं ब्रूयाः । अर्द्धं पृथक् अभिज्ञानमेवाह–शैलस्येत्यादिभिः । चित्रकूटस्य शैलस्य पूर्वोत्तरे ईशानकोणे विद्यमाने पादे विभूतिप्रापके प्राज्यानि अधिकानि मूलफलोदकानि यस्मिन् सिद्धाश्रिते मन्दाकिन्या अदूरतः समीपे तस्मिन् प्रसिद्धे अदेशे कृतदेशभिन्ने पदे स्थाने विद्यमानाया ममाङ्के नानापुष्पसुग-

---

१ बन्धुनेति गो. पाठः । २ एतदिति गो. पाठः । ३ तदिति गो. पाठः । ४ पुरेति गो. पाठः । ५ आश्रमे इति गो. पाठः । ६ मन्दाकिन्या ह्यदूरत इति गो. पाठः ।

तस्योपवनखण्डेषु नानापुष्पसुगन्धिषु । विहृत्य सलिले क्लिन्नो ममाङ्के समुपाविशः ॥ १४ ॥
ततो मां स समायुक्तो वायसः पर्यतुण्डयत् । तमहं लोष्टमुद्यम्य वारयामि स्म वायसम् ॥ १५ ॥
दारयन्स च मां काकस्तत्रैव परिलीयते । न चाप्युपारमन्मांसाद्भक्षार्थी बलिभोजनः ॥ १६ ॥
उत्कर्षन्त्यां च रशनां क्रुद्धायां मयि पक्षिणे । स्रंसमाने च वसने ततो दृष्टा त्वया ह्यहम् ॥ १७ ॥
त्वया विहसिता चाहं क्रुद्धा संलज्जिता तदा । भक्ष्यगृद्धेन काकेन दारिता त्वामुपागता ॥ १८ ॥
ततः श्रान्ताहमुत्सङ्गमासीनस्य तवाविशम् । क्रुध्यन्तीव प्रहृष्टेन त्वयाऽहं परिसान्त्विता ॥ १९ ॥
बाष्पपूर्णमुखी मन्दं चक्षुषी परिमार्जती । लक्षिताऽहं त्वया नाथ वायसेन प्रकोपिता ॥ २० ॥

न्धिषु तस्य चित्रकूटस्य उपवनखण्डेषु विहृत्य सलिले क्लिन्नस्त्वं समुपाविशः । सार्धश्लोकद्वयमेकान्वयि ॥ १२–१४ ॥

गो० टी०–इदमित्यादि श्लोकद्वयमेकान्वयम् । चित्रकूटस्य पादे चित्रकूटपर्यन्तपर्वते । मन्दाकिन्या अदूरे सिद्धैराश्रिते प्राज्यमूलफलोदके तस्मिन्देशे तापसाश्रमवासिन्याः तापसाश्रमे वसन्त्या मम इदं वक्ष्यमाणं श्रेष्ठमभिज्ञानं प्रियं प्रति त्वं ब्रूया इति योजना ॥ १२ ॥ १३ ॥

१४ ] ति० टी०–समुपाविष्टोऽभूः ॥ १४ ॥

गो० टी०–रामाय सीतया वक्तव्यं वचनं हनुमन्तं प्रत्युच्यते—तस्येत्यादि ॥ १४ ॥

१५ ] ति० टी०–ततोऽनन्तरं स त्वदनुभवसिद्धः समायुक्तो विकाराभियुक्तः सन्पर्यतुण्डयत् । स्तनान्तर इति शेषः । यद्वा मांससमायुक्तः मांसेच्छायुक्त इत्यर्थः ॥ १५ ॥

रा० टी०–तत इति । ततोऽनन्तरं मांससमायुक्तः मांसेन विशिष्टो वायसः मां पर्यतुण्डयत् गृहीतमांसेन मामताडयदित्यर्थः तं वायसं लोष्टमुद्यम्य वारयामि स्म ॥ १५ ॥

गो० टी०–तत इति । मांससमायुक्तः मांसप्रतिलुब्धः । आयुक्तकुशलाभ्यां चेत्यत्र आयुक्तशब्दस्य तात्पर्यपरतया व्याख्यानात् । लोष्टं मृत्पिण्डम् । पर्यतुण्डयत्पर्यखण्डयत् । स्तनान्तर इति शेषः । "तुडि' तोडने" इत्ययं धातुश्चौरादिकः ॥ १५ ॥

१६ ] ति० टी०–तत्रैव परिलीयते वार्यमाणोऽपि न देशान्तरं गच्छति स्म, न च मांसान्मांसविदारणाद्भक्षार्थ्युपारमत् । यद्ययं वस्तुतो न मांसार्थीत्युच्यते तदेत्थं योज्यम् । स वायसो मांसाद्भक्षार्थीव इवाध्याहारः ल्यब्लोपे पञ्चमी मांसमुपगृह्य भक्षार्थीव । यद्वा मांसभोजने भक्षार्थीव पुनःपुनर्विलेखनान्न विरराम ॥ १६ ॥

रा० टी०–दारयन्निति । बलिभोजनः स काकः भक्षार्थी मन्मांसभक्षणकाम इव चइवार्थे मां दारयन् दारयितुं तत्रैव परिलीयते पर्यलीयत् मांसान्मांसप्रक्षेपात्तु नोपारमत् उपारमत् १६

गो० टी०–दारयन्निति । परिलीयते अन्तर्हितो भवति स्म । बलिभोजनः काकः ॥ १६ ॥

१७–१८ ] ति० टी०–अथ पक्षिणे क्रुद्धायां मयि रशनां वासोदाढ्यायोत्कर्षन्त्यां तदानीं वसने स्रंसमाने सति त्वयाहं स्रस्तवसना दृष्टा, ततस्त्वया विहसिता, तदा तत्परिहासकाले क्रुद्धा सम्यग्लज्जिता च । भक्ष्यगृद्धेन भक्ष्यलुब्धेनेव काकेन दारिता सती त्वामुपागता ॥ १७ ॥ १८ ॥

रा० टी०–उत्कर्षन्त्यामिति । पक्षिणे वायसाय क्रुद्धायाम् अत एव रशनामुत्कर्षन्त्यां मयि वसने स्रंसमाने सति त्वयाऽहं दृष्टा ॥ १७ ॥

गो० टी०– उत्कर्षन्त्यामिति । उत्कर्षन्त्यां च रशनां काकोत्सारणार्थमिति शेषः ॥ १७ ॥

रा० टी०–त्वयेति । भक्ष्यगृध्रेण भक्षणीयमांसाभिकाङ्क्षिणा च काकेन दारिता विदारितेव त्वामुपागता प्राप्ताऽहं तदा वसनस्रंसनकाले त्वया विहसिता अत एव संलज्जिता अतः क्रुद्धा अभवमिति शेषः ॥ १८ ॥

गो० टी०–त्वयेति । भक्ष्यगृध्नेन भक्ष्यलोलुपेन दारिता विदारिता त्वामुपागता पुनरुत्सङ्गमाविशमित्येताभ्यां काकोत्सारणार्थमङ्कादुत्थानमनुधावनं च कृतम् देव्येत्यवगम्यते ॥ १८ ॥ १९ ॥

१९ ] ति० टी०–तदनन्तरं वायसापसारणेन श्रान्ताहमासीनस्य ते उत्सङ्गमाविशम् । ततः परिहासमात्रं कृत्वा तूष्णीं तिष्ठति भवति क्रुध्यन्त्यहं प्रहृष्टेन त्वया परिसान्त्विता॥१९

रा० टी०– तत इति । ततोऽनन्तरं त्वया परिसान्त्विता क्रुध्यन्तीवाहम् आसीनस्य तवोत्संगमविशम् ॥ १९ ॥

२० ] ति० टी०–अतएव बाष्पपरिपूर्णमुखी, चक्षुषी च मन्दं परिमार्जती हे नाथ, वायसेन प्रकोपितेति त्वया लक्षितास्मि ॥ २० ॥

रा० टी०–बाष्पेति । वायसेन प्रकोपिता अत एव बाष्पपूर्णमुखी अत एव चक्षुषी परिमार्जती अहं त्वया लक्षिता अभवमिति शेषः ॥ २० ॥

गो० टी०–बाष्पेति । रामाङ्के केवलं स्थितास्मि । तदा काको मां किंचिददारयत् । तं दृष्ट्वा तत्पलायनार्थं स्वयमायासं कुर्वन्तीं तदशक्त्या रुदन्तीं मां रामः परिहासपूर्वकं सान्त्वितवानित्यर्थः । अनेन स्वरक्षणे स्वयं प्रवृत्तश्चेदीश्वर उपेक्षते स्वयमप्रवृत्तौ स रक्षतीति द्योतितम् ॥ २०–२३ ॥

१ सलिलक्लिन्ना तवाङ्के समुपाविशमिति गो. पाठः । २ पक्षिणीति गो. पाठः । ३ स्रस्यमाने गो. पाठः । ४ आसीनस्य च ते श्रान्ता पुनरुत्सङ्गमिति गो. पाठः । ५ चेति गो. पाठः ।

परिश्रमाच्चे[1] सुप्तां[2] हे राघवाङ्केऽस्म्यहं[3] चिरम् । पर्यायेण प्रसुप्तश्च ममाङ्के भरताग्रजः ॥ २१ ॥
स तत्र पुनरेवाथ वायसः समुपागमत् । ततः सुप्तप्रबुद्धां मां राघवाङ्कात्[4]समुत्थिताम् ॥
वायसः सहसाऽऽगम्य विरराद[5] स्तनान्तरे ॥ २२ ॥
पुनः पुनरथोत्पत्य विरराद[6] स मां भृशम् । ततः समुत्थितो रामो मुक्तैः शोणितबिन्दुभिः ॥ २३ ॥
[वायसेन[7] ततस्तेन बलवत्क्लिश्यमानया । स मया बोधितः श्रीमान्सुखसुप्तः परन्तपः ॥ ]
स मां दृष्ट्वा महाबाहुर्वितुन्नां स्तनयोस्तदा । आशीविष इव क्रुद्धः श्वसन्वाक्यमभाषत ॥ २४ ॥
केन ते नागनासोरु विक्षतं वै स्तनान्तरम् । कः क्रीडति सरोषेण पञ्चवक्त्रेण भोगिना ॥ २५ ॥
वीक्षमाणस्ततस्तं वै वायसं समवैक्षत[8] । नखैः सरुधिरैस्तीक्ष्णैर्मामेवाभिमुखं स्थितम् ॥ २६ ॥
पुत्रः किल स शक्रस्य वायसः पततां वरः । धरान्तरं गतः शीघ्रं पवनस्य गतौ समः ॥ २७ ॥

---

२१ ] ति० टी०—अथ हे राघव, अहं तवाङ्के परिश्रमात्सुप्तास्मि भरताग्रज, त्वं च पर्यायेण ममाङ्के सुप्तः ॥ २१ ॥

रा० टी०—परीति । परिश्रमात् हेतोः पर्यायेण क्रमेण हे राघव तवाङ्केऽहं चिरं प्रसुप्तास्मि ममाङ्के भरताग्रजश्च प्रसुप्तः ॥ २१ ॥

२२ ] ति० टी०—स तत्रेति । त्वयि स्वपति मयि जाग्रत्यामित्यर्थः । सुप्तप्रबुद्धां राघवाङ्के सुप्त्वा ततः प्रबुद्धाम्, अतएव राघवाङ्कादुत्थितां वायसः पुनरागम्य स्तनान्तरे विरराद व्यलिखत् ॥ २२ ॥

रा० टी०—स इति । स वायसः काकः पुनः समुपागमत् अर्धं पृथक् । तत इति । सुप्तप्रबुद्धाम् अत एव राघवाङ्कात्समुत्थितां मां वायस आगम्य स्तनान्तरे विरराद भेदनानुकूलव्यापारं चकार सार्द्धश्लोक एकान्वयी ॥ २२ ॥

२३ ] ति० टी०—एतदन्तमभिज्ञानवचनानुवादः । अथ हनूमते शेषवृत्तान्तकथनम्——तत इति । ततः पुनः पुनर्विलेखनाद्धेतोर्मुक्तैः शोणितबिन्दुभी रामः समुत्थितोऽभूत् । सुखसुप्तोऽपीति शेषः ॥ २३ ॥

२४–२५ ] ति० टी०—तदा स्तनयोर्वितुन्नां मां दृष्ट्वा क्रुद्धः । अनेन पूर्वपर्याये केवलं रामः काकचेष्टाबुद्ध्या परिहासमेव कृतवानिति सूचितम् ॥ २४ ॥ २५ ॥

रा० टी०—पुनरिति । पुनरुत्पत्य मां पुनर्विददार अथ अनन्तरं ततः पुनः पुनर्विदारणात् हेतोः समुत्थितो रामः स्तनयोर्वितुन्नां रुधिरमयमांसयुक्ततुण्डेन ताडिताम् अत एव मुक्तैः मांसात् च्युतैः शोणितबिन्दुभिरुपलक्षितां मां दृष्ट्वा क्रुद्ध आशीविष इव श्वसन् सन् अभाषत । अर्धचतुष्टयमेकान्वयि ॥ २३ ॥ २४ ॥

गो० टी०—वायसेन ततस्तेन बलवत् क्लिश्यमानया । स मया बोधितः श्रीमान्सुखसुप्तः परन्तपः । स निखिललोकाविदितनिरतिशयसौन्दर्यप्रसिद्धः मया बोधितः । मयैवाहं हता स्वापकालिकश्रीविशेषानुभवात् । लोके कश्चित्संचारदशायां सुन्दर इव भाति शयने दुर्लक्षणादिभिर्दोषा दृश्यन्ते न तथायम् । श्रीमान् स्वापकालिकश्रीरुच्यते । सुखसुप्तः तत्स्वानुगुणैव हि सुप्तिरपि । परन्तपः शयनमेव सकलशत्रुनिवर्तनक्षममित्यर्थः । सुप्तः श्रीमान् । लोके स्थानगमनशयनादिदशायाम् रूपवानिव लक्ष्यते कश्चित् । संशयने प्रकाशितप्रच्छन्नदोषतया जुगुप्सितो भवति । अयं तु शयनावस्थायामेव नीराजना कर्तव्या दृष्टिदोषपरिहारायेत्येवं स्थितः ॥ २४ ॥

गो० टी०—स मामिति । वितुन्नां दारिताम् ॥ २५ ॥

रा० टी०—भाषणाकारमाह—केनेति । हे नागनासोरु शुण्डादण्डसदृशोरुविशिष्टे ते स्तनान्तरं केन विक्षतं ताडितम् अत एव पञ्चवक्त्रेण भोगिना सर्पेण कः क्रीडति ॥ २५ ॥

गो० टी०—केनेति । पञ्चवक्त्रेण व्यात्तमुखेन । " पचि, विस्तारे " इत्यस्मात्पचाद्यच् । कार्यातिशयद्योतनार्थं वा पञ्चसंख्याकवक्त्रत्वोक्तिः नागनासोरु नागहस्तोरु । कुपितपञ्चवक्त्रक्रीडासमं तव स्तनविदारणमिति भावः ॥ २६ ॥ २७ ॥

२६ ] ति० टी०—वीक्षमाणः । इतस्ततः प्रान्तदेशमित्यर्थः ॥ २६ ॥

रा० टी०—वीक्षमाण इति । वीक्षमाणः इतस्ततो लोकयन् रामः सरुधिरैर्दारितपक्ष्मादिरुधिरविशिष्टैर्नखैरुपलक्षितं मामभि मत्समीपे मुखं संमुखमेव स्थितं वायसं समवैक्षत ॥ २६ ॥

२७ ] ति० टी०—देवि । कोऽसावेवंविधो वायस इति हनूमतः शङ्कायामाह—पुत्र इति । शक्रपुत्रो जयन्तः स तु वायसः वायसरूपधारीत्यर्थः । धरान्तरं गतो भूमिबिलं प्राप्तः । शीघ्रगतौ पवनस्य समः । धरान्तरचारित्वं तु पवनादस्य विशेषः । नहि वायुस्तत्संचारीति कतकः ॥ २७ ॥

रा० टी०—ननु सावधानजनशरीरस्य काककर्तृकविदारणं लोके न दृष्टमिति कोऽयमीदृशः काक इति हनुमतः शङ्कां दूरीकुर्वती आह—पुत्र इति । गतौ पवनस्य समः अत एव शीघ्रं धरान्तरं गतो वायसः शक्रस्य पुत्रः एतेन रामपराक्रमपरीक्षार्थं शक्रप्रेरणयैवायमागत इति ध्वनितम् ॥ २७ ॥

---

१ प्रेति गो. रा. पाठः । २ चेति गो. पाठः । ३ ऽप्यहमिति गो. पाठः । ४ रामस्याङ्कादिति गो. पाठः । ५ विददारेति गो. पाठः । ६ विददारेति गो. रा. पाठः । ७ श्लोकोऽयमधिकः गो. पाठे । ८ उदैक्षततेति गो. पाठः ।

ततस्तस्मिन्महाबाहुः कोपसंवर्तितेक्षणः । वायसे कृतवान्क्रूरां मतिं मतिमतां वरः ॥ २८ ॥
स दर्भसंस्तराद्गृह्य ब्रह्मणोऽस्त्रेण योजयत् । स दीप्त इव कालाग्निर्जज्वालाभिमखो द्विजम् ॥ २९ ॥
स तं प्रदीप्तं चिक्षेप दर्भं तं वायसं प्रति । ततस्तु वायसं दर्भः सोऽम्बरेऽनुजगाम ह ॥ ३० ॥
अनुसृष्टस्तदा काको जगाम विविधां गतिम् । त्राणकाम इमं लोकं सर्वं वै विचचार ह ॥ ३१ ॥
स पित्रा च परित्यक्तः सर्वैश्च परमर्षिभिः । त्रींल्लोकान्संपरिक्रम्य तमेव शरणं गतः ॥ ३२ ॥

---

गो० टी०—ननु वायसमात्रे किमर्थमस्त्रं मुक्तमित्याशङ्क्याह—पुत्रः किलेति । इदं रक्षणानन्तरं तेनैवोक्तमिति ज्ञेयम् । किलेति प्रसिद्धौ । इन्द्रपुत्रत्वेन प्रसिद्धो जयन्त एव वायसरूपेणागत इत्याहुः । वायसरूपोऽन्यः पुत्र इत्यप्याहुः॥२८॥२९॥

२८ ] ति० टी०—कोपेन संवर्तिते विवर्तिते ईक्षणे येन सः ॥ २८ ॥

रा० टी०—तत इति । महाबाहुः रामस्तस्मिन् वायसे क्रूरां क्रूरात्वेन प्रतीयमानां मतिं कृतवान् ॥ २८ ॥

२९-३० ] ति० टी०—दर्भसंस्तरात् । संस्तरणार्थगृहीतदर्भसमुदायादेकमिति शेषः । योजयत् । ब्रह्मास्त्रदेवतामन्त्रेणायोजयदित्यर्थः ॥ २९ ॥ ३० ॥

रा० टी०—स इति । स रामः दर्भसंस्तरात् दर्भमयास्तरणतः कोपेन सीताङ्गस्पर्शहेतुकपरमकल्याणप्राकट्यकारकस्वीकृतक्रोधाभासेन संवर्तिते ईक्षणे यस्य स महाबाहुः रामः तस्मिन् वायसे वायसकल्याणार्थं क्रूरां भयकारिणीं कठिनामनिवार्यामित्यर्थो वा मतिं कृतवान् क्रूरौ कठिनभीषणावित्यनेकार्थः ॥ [स इति । स रामः दर्भसंस्तरात् दर्भमयास्तरणात् गृह्य गृहीत्वा एकं दर्भमिति शेषः ब्रह्मणोऽस्त्रेण अस्त्रत्वसंपादकेन दृष्टिविशेषादिना अयोजयत् स योजितो दर्भः द्विजं वायसमभिमुखः सन् कालाग्निरिव जज्वाल ] ॥ २९ ॥

रा० टी०—स इति । स रामः वायसं प्रति दर्भं चिक्षेप ततोऽनन्तरं स दर्भः वायसमुद्दिश्य अम्बरेऽनुजगाम ॥ ३० ॥

गो० टी०—स दर्भमिति । संस्तरात् आस्तरणात् गृह्य गृहीत्वा अस्त्रेण अस्त्रमन्त्रेण योजयत् अयोजयत् अभिमन्त्रितवानित्यर्थः । द्विजं काकम् ॥ ३०-३१ ॥

३१ ] ति० टी०—विविधां गतिं जगामेत्येतद्विवृणोति—त्राणेति । इमं लोकं भूर्लोकादिसत्यलोकान्तम् ॥ ३१ ॥

रा० टी०—अनुसृष्ट इति । अनुसृष्टः बाणेनानुगतः अत एव त्राणकामः काकः विविधां गतिम् आश्रयं जगाम चिन्तयामास अत एव सर्वं लोकं विचचार ॥ ३१ ॥

गो० टी०—अनुसृप्त इति । अनुसृप्तः अनुसृतः । विविधां गतिं विविधं स्थानम् । लोककामः लोकयितृकामः । रक्षकापेक्षीत्यर्थः ॥ ३२ ॥

३२ ] ति० टी०—पित्रा परित्यक्तः । स्वर्गेऽपीति शेषः । पित्रेत्युपलक्षणं ब्रह्मान्तानाम् ॥ ३२ ॥

रा० टी०—स इति । सः स्वपित्रादिसमीपं गतः पित्रा महर्षिभिश्च परित्यक्तः रामत्राणभिया अरक्षितः वायसः शरणं सर्वरक्षकं रामं गतः प्राप्तः ॥ ३२ ॥

गो० टी०—भगवद्व्यतिरिक्ता बान्धवाभासा न रक्षका इत्याह—स पित्रेति । सः पुरुषकारभूतायामपि कृतापराधः सः आर्द्रापराधः पित्रा च परित्यक्तः अस्त्रक्षतिभीततया प्रथमं पितरं रक्षकं गतः तेन त्रैलोक्याधिपतिना च त्यक्तः इन्द्रो महेन्द्रः सुरनायको वेति तस्यासमर्थत्वोक्तेः । परित्यक्तः त्यागोऽपि नापाततः बुद्धिपूर्वं त्यक्तः त्यजेदेकं कुलस्यार्थे ग्रामस्यार्थे कुलं त्यजेदिति न्यायात् । यद्वा परित्यक्तः भार्यापुत्रादिभिःसह त्यक्तः । चकारेण माता समुच्चीयते । न केवलं हितपरेण पित्रा प्रियपरया मात्रा च परित्यक्तः । सीता नारी जनस्यास्य योगक्षेमं विधास्यतीति तत्रक्षकभूतायामपि सापराधत्वादिति भावः । पित्रपेक्षया मातुर्वात्सल्यातिशयात्तामेव प्रथमं गच्छति स्म ततः पितरम् । पित्रा त्यागवचनान्मात्रा त्यागः सिद्ध एवेति चकारेण सूचितम् । पितृभ्यां त्यागेऽपि बान्धवा न त्यजन्ति किं पितरौ सर्वथा त्यक्ष्यत इति तैरपि त्यक्त इत्याह—'सुरैश्च कस्य बिभ्यति देवाश्च जातरोषस्य संयुगे' इति रामनयने रक्ते तेऽपि बिभ्यति हि । एवं पूर्वसजातीयैस्त्यक्तत्वेऽपि परिगृहीतपक्षिरूपसजातीयैः किं त्यक्तः इत्यपेक्षायां तथेत्याह—चकारेण । पक्षिणोऽपि प्रयाचन्ते सर्वभूतानुकम्पिनमिति पक्षिणामपि शरण्यत्वात् । स्वनायकगरुडस्वामित्वाच्च पक्षिभिरपि परित्यक्तः । स महर्षिभिः । पित्रादिबन्धूनामरक्षकत्वेऽपि आनृशंस्यप्रधाना महर्षयो रक्षिष्यन्तीति गतः । तैरपि प्रकामं दूरदर्शिभिः परित्यक्तः । आनृशंस्यविषयव्यवस्थास्तीति तैस्त्यक्त इत्यर्थः । एतदङ्गीकारे वयमपि संसर्गदोषेण नश्येम । अस्माभिस्त्यागेऽनन्यगतिकत्वाद्राम एनं स्वीकरिष्यतीति तैस्त्यक्तः महर्षिभिः यो विष्णुं सततं द्वेष्टि तं विद्यादन्त्यरेतसमिति विष्णुद्वेषेण चण्डालत्वात् । चण्डालः पक्षिणां काक इत्युक्तेश्च चण्डालो नास्मद्वाटमागच्छेदिति त्यक्तः । एवं रक्षकान्तरादर्शनात्कुट्टगजो घटमप्यन्वेपत इति न्यायेन स्वैरविहृतद्वारान्सर्वान् गृहान् गत इत्याह—त्रीन् लोकान् संपरिक्रम्य परिक्रम्य एतदेव नवकृत्वो गतः । संपरिक्रम्य गृहस्थैरविज्ञाततया कवाटमूलेषु लीनश्चेत्यर्थः । अपि कदाचित् कृपैषामुत्पद्येतेति मत्वा पुनः पुनर्गत इत्यर्थः ।

---

१ ब्राह्मणेति गो. पा०। २ स इति गो. पा०। ३ लोकेति गो. पा०। ४ स महर्षिभिरिति गो. पा०।

स तं निपतितं भूमौ शरण्यः शरणागतम् । वधार्हमपि काकुत्स्थः कृपया पर्यपालयत् ॥ ३३ ॥
[ [1]न शर्म लब्ध्वा लोकेषु तमेव शरणं गतः । ]
परिद्यूनं [2]विवर्णं च पतमानं तमब्रवीत् । मोघमस्त्रं न शक्यं तु ब्राह्मं [3]कर्तुं तदुच्यताम् ॥ ३४ ॥
[ [4]हिनस्तु दक्षिणाक्षि त्वच्छर इत्यथ सोऽब्रवीत् । ]
ततस्तस्याक्षि काकस्य हिनस्ति स्म स दक्षिणम् । दत्त्वा [5]तु दक्षिणं नेत्रं प्राणेभ्यः परिरक्षितः ॥ ३५ ॥
स रामाय नमस्कृत्वा राज्ञे दशरथाय च । विसृष्टस्तेन वीरेण प्रतिपेदे स्वमालयम् ॥ ३६ ॥
मत्कृते काकमात्रेऽपि ब्रह्मास्त्रं समुदीरितम् । कस्माद्यो [6]माँ हरत्त्वत्तः क्षमसे तं महीपते ॥ ३७ ॥

---

अस्त्रं निष्कास्य कवाटबन्धनं सर्वैः कृतमित्यर्थः । ततः किं कृतमित्यत्राह—तमेव शरणं गतः । रक्षकत्वेन प्राप्तापेक्षया हिंसकत्वेन स्थितस्य सुखमेव शीतलमित्यवस्थितः अतस्तमेव शरणं गतः । यदि वा रावणः स्वयमित्येवं स्थितो हि रामः तमेव सर्वलोकशरण्यमेव तमेव दोषो यद्यपि न त्यजेयमिति स्थितम् । शरणं गतः निवासं गतः न तूपायतया गतः निवासवृक्षः साधूनामित्युक्तेः ॥ ३३ ॥

३३ ] ति० टी०—पर्यपालयत् । प्राणरक्षणेनेति शेषः ३३॥

रा० टी०—स इति । शरण्यः शरणहितः स रामः शरणागतम् अत एव भूमौ पतितं वधार्हमपि तं वायसं कृपया पर्यपालयत् सीताङ्गस्पर्शमात्रेण तत्कल्याणप्रकटनमपहाय कोपप्रकटनद्वारा किमर्थं कृतमिति तु न भ्रमितव्यं प्रार्थनयैव परमकल्याणं क्रियत इति स्वाभाविकपरमात्मरीतेः । करुणावानपि व्यक्तं शक्तः स्वार्स्यपि देहिनाम् । अप्रार्थितो न गोपायेत् इति तत्प्रार्थनामतिरिति पुराणम् ॥ ३३ ॥

गो० टी०—स तमिति । स रक्षणैकस्वभावः । तं प्रातिकूल्यैकनिरतं भूमौ निपतितं देवजातितया भूमिमस्पृशन्नपि भूमौ पतितं भूमौ दुष्पुत्रं पितरि शिक्षमाणे स यथा मातुः पादयोः पतति तथापतत् । शरण्यः सर्वावस्थास्वपि शरणवरणार्हः शरणागतम् अनन्यगतिकतया स्वमुपागतम् वधार्हमपि रामसिद्धान्तेनापि वधार्हम् काकुत्स्थः कृपया पर्यपालयत्कुलोचितस्वभावेन रक्षितवान् । कृपया अस्मदायारब्धं कार्यं प्रबलकर्मणा न समाप्यते तथा तेनारब्धमपि कृपया न पूर्यत इति भावः ॥ ३४ ॥

३४ ] ति० टी०—परिद्यूनं क्षीणशक्तिम् । ब्राह्ममस्त्रं मोघं कर्तुं न शक्यमतस्तदुच्यताम् तत्संहार्थं वस्तु भार्गववदुच्यतामित्यर्थः ॥ ३४ ॥

रा० टी०—परिद्यूनमिति । परिद्यूनं क्षीणसामर्थ्यम् अत एव विवर्णं विकृतवर्णविशिष्टं पतमानं तं वायसं ब्राह्ममस्त्रं मोघं सर्वथा मिथ्या कर्तुं न शक्यं तत्तस्माद्धेतोः उच्यतां तन्मिथ्यात्वाभावोपायः कथ्यतामिति रामोऽब्रवीत् ॥ ३४ ॥

गो० टी०—न शर्मेत्यादि । परिद्यूनं परितप्तम् । तदुच्यतामित्यनन्तरम् हिनस्तु दक्षिणाक्षि त्वच्छर इत्यथ सोऽब्रवीदित्यर्थमनुसंधेयम् ॥ ३५–३७ ॥

३५ ] ति० टी०—स दक्षिणाक्ष्यस्य संहार्यं भवत्वित्युक्तः परिरक्षितः परिरक्षितवान् । आत्मानमिति शेषः ॥ ३५ ॥

रा० टी०—तत इति । ततोऽनन्तरं तस्य अपराधिनः काकस्य मम दक्षिणमक्षि स शरः अस्त्रं हिनस्तिस्म इति दक्षिणं नेत्रं दत्वा अस्त्रायेति शेषः प्राणेभ्यः परिरक्षितः एतेन ममाक्षि गृह्यतामिति तत्प्रार्थना सूचिता ॥ ३५ ॥

३६ ] ति० टी०—स जयन्तः ॥ ३६ ॥

रा० टी०—स इति । तेन रामेण विसृष्टः त्यक्तः स वायसः रामाय नमस्कृत्वा स्वः स्वर्गे दशरथाय दशरथमनुकूलयितुं नमस्कृत्वा स्वमालयं प्रतिपेदे दशरथाय नमस्कृत्वेत्यनेन पलायनसमये दशरथोपदेशादेव रामशरणमागत इति ध्वनितं तेन तस्मिन्काले आखेटायान्यतमार्थं तस्यापि साकेतात्त्रिलोकीमध्ये आगमनं जातमिति ध्वनितम् तेन शक्रादिभिरयमुपदेशो न कृतइति ध्वनितं तेन दशरथस्य सार्वकालिकयाथार्थ्यज्ञानवत्वेन व्यतिरेकालंकारो ध्वनितः तेन शरणागतरक्षकत्वस्य परंपरयास्मिन्नपि सिद्धत्वमिति सूचितं परंपरया रक्षकत्वं त्वस्मिन्मर्यादापालनायेति बोध्यम् ॥ ३६ ॥

गो० टी०—स रामायेति । दशरथाय स्वलोकस्थतया पूर्वमेव मित्रभूताय ॥ ३८ ॥

३७ ] ति० टी०—एवं हनूमते रामैकसंवेद्यमभिज्ञानमुक्त्वा संदेशान्तरमाह—मत्कृते इति । कस्मात्क्षमसे इत्यवान्तरवाक्यान्ते इत्युक्तवतीति ब्रूहीति वाक्यशेषो द्रष्टव्य इति कतकः । बुद्धिस्थं राममेव सोपालम्भं संबोध्य प्रार्थयते इति तीर्थः । त्वत्तस्त्वत्सकाशाद्यो मा मामहरद्धृतवान् ॥ ३७ ॥

रा० टी०—मदिति । मत्कृते मत्परितोषार्थं काकमात्रे निखिलकाके ब्रह्मास्त्रं ब्रह्मास्त्रनिष्पाद्यत्वं दक्षिणाक्षिहीनत्वमित्यर्थः येन त्वया समुदीरितं प्रापितं स त्वं त्वत्तो यो मां हरत् अहरत् तं कस्मात् क्षमसे ॥ ३७ ॥

गो० टी०—मत्कृत इति । समुदीरितं प्रयुक्तम् । हरत् अहरत् ॥ ३९ ॥

---

१ अर्धमेतदधिकं गो. पाठे । २ विषण्णं च स तमायान्तमिति गो. पाठः । ३ कर्तुमिति गो. पाठः । ४ अस्त्रमिति गो. पाठः । ५ स इति गो. पाठः । ६ मां हरदिति गो. रा. पाठः ।

स कुरुष्व महोत्साहां[1] कृपां मयि नरर्षभ । त्वया नाथवती नाथ अनाथा[2] इव दृश्यते ॥ ३८ ॥
आनृशंस्यं परो धर्मस्त्वत्त एव मया श्रुतम्[3] । जानामि त्वां महावीर्यं महोत्साहं महाबलम् ॥ ३९ ॥
अपारवारम्[4] अक्षोभ्यं गाम्भीर्यात्सागरोपमम् । भर्तारं ससमुद्राया धरण्या वासवोपमम् ॥ ४० ॥
एवमस्त्रविदां श्रेष्ठो बलवान्[5]सत्त्ववानपि । किमर्थमस्त्रं रक्षःसु न योजयसि राघव ॥ ४१ ॥
न नागा नापि गन्धर्वा न[6] सुरा न मरुद्गणाः । रामस्य समरे वेगं शक्ताः प्रतिसमीहितुम्[7] ॥ ४२ ॥
तस्य वीर्यवतः कच्चिद्यद्यस्ति मयि संभ्रमः । किमर्थं न शरैस्तीक्ष्णैः क्षयं नयति राक्षसान् ॥ ४३ ॥
भ्रातुरादेशमादाय लक्ष्मणो वा परंतपः । कस्य हेतोर्न मां वीरः परित्राति महाबलः ॥ ४४ ॥
यदि तौ पुरुषव्याघ्रौ वाय्विन्द्रसमतेजसौ । सुराणामपि दुर्धर्षौ किमर्थं मामुपेक्षतः ॥ ४५ ॥
ममैव दुष्कृतं किंचिन्महदस्ति न संशयः । समर्थावपि तौ यन्मां नावेक्षेते परंतपौ ॥ ४६ ॥
वैदेह्या वचनं श्रुत्वा करुणं साश्रु भाषितम् । अथाब्रवीन्महातेजा हनूमान्[8]हरियूथपः ॥ ४७ ॥

---

३८ ] ति० टी०—मम महोत्साहरूपां मयि कृपां कुरु । त्वया नाथवत्यपि मल्लक्षणा नार्यनाथेव दृश्यत इत्यर्थः ॥ ३८॥

रा० टी०—स इति । सः सदा मत्परितोषकस्त्वं महोत्साही अत्युत्साहविशिष्टां मयि कृपां कुरुष्व तत्र हेतुः त्वयैव नाथवती अनाथा इव दृश्यते मम तनुरिति शेषः ॥ ३८ ॥

गो० टी०—स इति । सः परदुःखं दृष्ट्वा न सहामहे इत्युक्तवान् । त्वं महोत्साहः एतदनुष्ठानर्यन्तं कुर्वन् मयि अत्यन्तदुःखितायां कृपां परदुःखासहिष्णुत्वं प्रकाशयितमर्हसि । नरोत्तम एवं न करोषिचेत्तव नरोत्तमत्वस्य हानिरेव स्यात् । तस्मादेतद्वचनमनुष्ठानपर्यन्तं कृत्वा मां जीवयित्वा तव नरोत्तमत्वं परिपालयेति भावः । अनाथा इव अनाथेव आर्षो गुणाभावः । आनृशंस्यं परो धर्मः । नावारोपणानन्तरं वेतनाभ्यर्थनवत्संश्लेषदशायां तवात्यन्ताभिमतो धर्मः क इति मया पृष्टे परदुःखं चेत्तदसहिष्णुत्वमेव परमो धर्म इति ममाभिमतं तथैव मत्स्वभाव इति त्वया रहस्योद्भेदनं कृतम् । त्वत्त एव न तु दूतमुखेन मया श्रुतः । इदं श्रवणमात्रपर्यवसायि जातं न त्वनुष्ठानपर्यवसायीति रामं पृच्छेति भावः एवं पृच्छन्त्याः सीतायाः प्रत्युत्तरं दिशतो रामस्य च कोऽभिप्राय इति चेदुच्यते । एतस्य संश्लेषस्य विच्छेदो भवति चेत् किं करिष्यामीति कातरतया पृष्टवती । सोऽपि मद्विरहक्लेशेन ताम्यन्तीं त्वां न कदाचिदपि पश्येयमित्युक्तवान् । अयमर्थोऽप्यरण्यकाण्डे अप्यहं जीवितं जह्यामिति श्लोकप्रघट्टिकादौ दर्शितः ॥४०॥४१॥

३९ ] ति० टी०—आनृशंस्यं दया । न च शक्योऽयमर्थ इति चेत्तत्राह—जानामीति ॥ ३९ ॥

रा० टी०—ननु तव रक्षणे मम न किंचित्प्रयोजनमित्यतः आह—आनृशंस्यमिति । आनृशंस्यं निर्हेतुककृपापरो धर्मः इति त्वत्त एव मया श्रुतम् एतेन प्रयोजनाभावेऽपि स्वकृपया पालयेति सूचितम् । ननु बलवन्तो राक्षसाः मया कथं निरसनीयाः इत्यत आह—महावीर्यत्वादिविशिष्टम् अपारवारं पारवाररहितं स्वतेजसा सर्वत्र परिपूर्णमित्यर्थः गाम्भीर्याद्धेतोः सागरोपमं ससमुद्रायाः धरण्याः निखिलब्रह्माण्डभूमेः भर्तारम् अत एव वासवः इन्द्र उपमा यस्य तं त्वामहं जानामि अर्धचतुष्टयमेकान्वयि ॥ ३९ ॥ ४० ॥

गो० टी०—जानामीति । अपारपारं दुरधिगमपारम् असीममित्यर्थः दुरधिगमगुणसीममित्यर्थो वा । पाराः कर्मसमाप्तयो यस्य स तथोक्तः निरवधिकापदान इत्यर्थः॥४२॥४३॥

४०–४१ ] ति० टी०—अपारवारं मर्यादारहितम् । देशकालादिपरिच्छेदहीनमित्यर्थः । जानामीत्यनुकर्षः ॥ ४० ॥४१॥

रा० टी०—एवमिति । हे राघव रक्षस्सु अस्त्रं किमर्थं न मोचयसि ॥ ४१ ॥

४२ ] ति० टी०—अथ हनूमन्तं सामान्यतो रामवैभवमाह—न नागा इति । प्रतिसमीहितुम् । प्रतिभटतया स्थित्वा निरोद्धुमित्यर्थः । 'प्रतिसमाधितुम्' इति पाठान्तरम् । तत्रापेत्वं शरणम् । उक्त एवार्थः ॥ ४२ ॥

रा० टी०—नेति । नागादयः समरे रामस्य वेगं प्रतिसमीहितुं निरोद्धुं न शक्ताः ॥ ४२ ॥

गो० टी०—न नागा इति । प्रतिसमाधितुं प्रतिबद्धुम्॥४४॥

४३–४७ ] ति० टी०—'मम संभ्रमः' इति पाठे मम प्राप्तये संभ्रम इत्यर्थः ॥ ४३–४७ ॥

रा० टी०—तस्येति । वीर्यवतः तस्य रामस्य यदि मयि संभ्रमः आदरः तर्हि राक्षसान् क्षयं कुतो न नयति प्रापयति संभ्रमं त्रयमिच्छन्ति भयमुद्वेगमादरम्, इति कोशः ॥ ४३ ॥

रा० टी०—भ्रातुरिति । भ्रातुरादेशमाज्ञामादाय लक्ष्मण एव कस्य हेतोर्न परित्राति ॥ ४४ ॥

रा० टी०—यदीति । पुरुषव्याघ्रौ तौ रामलक्ष्मणौ यदि सुराणामपि दुर्धर्षौ तर्हि मां किमर्थमुपेक्षतः ॥ ४५ ॥

रा० टी०—ममेति । समर्थौ अपि यद्यस्मात् मां नावेक्षेते अतः ममैव किञ्चिद्दुष्कृतमस्ति अत्र संशयो न ॥ ४६ ॥

---

१ महोत्साह इति गो. पाठः । २ ह्यनाथेति गो. पाठः । ३ श्रुत इति गो. पाठः । ४ पारमिति गो. पाठः । ५ सत्यवान्बलवानिति गो. पाठः । ६ नासुरा इति गो. पाठः । ७ समाधितुमिति गो. पाठः । ८ मारुतात्मज इति गो. पाठः ।

त्वच्छोकविमुखो रामो देवि सत्येन [1]ते शपे । रामे दुःखाभिपन्ने तु लक्ष्मणः परितप्यते ॥ ४८ ॥
कथंचिद्भवती दृष्टा न कालः परिशोचितुम् । इमं मुहूर्तं दुःखानामन्तं द्रक्ष्यसि शोभने ॥ ४९ ॥
तावुभौ पुरुषव्याघ्रौ राजपुत्रौ महाबलौ । त्वद्दर्शनकृतोत्साहौ लोकान्भस्मीकरिष्यतः ॥ ५० ॥
हत्वा च समरक्रूरं रावणं सहबान्धवम् । राघवस्त्वां विशालाक्षि त्वां पुरीं प्रति नेष्यति ॥ ५१ ॥
ब्रूहि यद्राघवो वाच्यो लक्ष्मणश्च महाबलः । सुग्रीवो वापि तेजस्वी हरयो वा समागताः ॥ ५२ ॥
इत्युक्तवति तस्मिंश्च सीता पुनरथाब्रवीत् । [ उवाच शोकसंतप्ता हनुमन्तं प्लवङ्गमम् । ]
कौसल्या लोकभर्तारं सुषुवे यं मनस्विनी ॥ ५३ ॥

रा० टी०—वैदेह्या इति । वैदेह्या वचनं श्रुत्वा हनूमान् अब्रवीत् ॥ ४७ ॥

गो० टी०—तस्येति । संभ्रमः भावव्यक्तिः ॥ ४६ ॥४६॥

गो० टी०—यदि ताविति । उपेक्षतः उपेक्षेते । यदि तौ संगताविति शेषः ॥ ४७ ॥

गो० टी०—ममैवेति । समर्थौ विरोधिवर्गमुन्मूल्य मद्रक्षणानुगुणशक्तिमन्तौ परन्तपौ इतः पूर्वं प्रतिपक्षनिर्दहनं कुर्वन्तौ एवंभूतावपि तौ मां प्राणपर्यन्तं रक्षणप्रयत्नयदृशां प्राप्तां मां नावेक्षेते इति यत् न कटाक्षयत इति यत् अस्य निमित्तं तयोर्वा मयि वा किंचिद्भवितुमर्हति । तत्र तद्विषये तादृशनिमित्तप्रसक्तिर्नास्ति सामर्थ्यपरन्तपत्वादिदर्शनात् । परिशेषान्ममैव पापमद्य अस्य निमित्तं भवितुमर्हति । यद्वा ममैव द्विषतः पापकृत्यमित्युक्तरीत्या अन्यतो नागतमित्यर्थः । किंचित् न हि वयं सर्वज्ञा अस्माभिरज्ञातं किंचिद्भवितुमर्हति । महत्प्रारब्धफलतयाऽनुभवं विना दुष्परिहारम् अस्ति न संशयः कार्ये सति कारणे किमस्ति संदेहः । यद्वा किंचिदनिर्वचनीयम् महद्दुष्कृतमस्तीत्यनेन किं त्वामन्यत वैदेह इत्यादिनोक्तो भगवदपचारः । उक्तं हि कीदृशं तु मया पापं पुरा देहान्तरे कृतमिति देहान्तरे बालशरीरे ॥ ४८ ॥

गो०टी०—वैदेह्या इति । साश्रु यथा तथा भाषितमुक्तम् ४९

४८ ] ति० टी०—कस्माद्रक्षसक्षयं न करोतीत्यस्योत्तरम्—त्वच्छोकेति । त्वद्वियोगजशोकेन सर्वकार्यविमुख इत्यर्थः ४८

रा० टी०—तद्वचनाकारमाह—त्वदिति । हे देवि हे सत्ये ! सत्यवादिनि रामः त्वच्छोकविमुखस्त्वच्छोकेन रामे दुःखाभिपन्ने सति लक्ष्मणः परितप्यत ते तुभ्यं शपे अत्र विश्वासार्थं शपथं करोमि ॥ ४८ ॥

गो० टी०—त्वच्छोकेति । त्वच्छोकविमुखः त्वच्छोकेन विमुखः विषयान्तरपराङ्मुखः । प्रत्युत त्वय्येव दत्तचित्त इत्यर्थः ॥ ५० ॥ ५१ ॥

४९–५१ ] ति० टी०—यतः कथंचिद्भवती दृष्टा, अत इमं मुहूर्तमारभ्य ते परिदेवितुं कालो न । कुतस्तत्राह—यतो दुःखानामन्तं द्रक्ष्यसि ॥ ४९–५१ ॥

रा० टी०—कथञ्चिदिति । यस्मात् कथञ्चित् भवती दृष्टा मयेति शेषः अतः इमं मुहूर्तम् आरभ्येति शेषः दुःखानामन्तं द्रक्ष्यसि किंच दुःखानामन्तं विध्वंसकमिममागामिनं मुहूर्तं द्रक्ष्यसि अतः परिशोचितुं कालः समयो न ॥ ४९ ॥

रा० टी०—ताविति । तौ रामलक्ष्मणौ लोकान् राक्षसजनान् भस्मीकरिष्यतः ॥ ५० ॥

रा० टी०—हत्वेति । राघवः रावणं हत्वा त्वां स्वां पुरीं प्रति नेष्यति ॥ ५१ ॥

गो० टी०—इममित्यादि । इमं मुहूर्तम् अस्मिन्मुहूर्ते । सप्तम्यर्थे द्वितीया ॥ ५२–५६ ॥

५२–५३ ] ति० टी०—नियोगसारं ब्रूहीत्याह—ब्रूहीति ॥ ५२ ॥ ५३ ॥

रा० टी०—ब्रूहीति । राघवप्रभृतिः यद्वाच्यः तत् समागताः रामसमीपं प्राप्ताः हरयश्च यद्वाच्याः तत्र त्वं ब्रूहि ॥ ५२ ॥

रा० टी०—इतीति । तस्मिन् हनुमति इति उक्तवति सति सीताऽब्रवीत् अहं पृथक् । तद्वचनाकारमाह—कौशल्येत्यादिभिः । कौशल्या यं सुषुवे तं ममार्थे उयुक्तमिति शेषः रामं सुखं पृच्छ अभिवादय च ॥ ५३ ॥

गो० टी०—कौसल्येति । मनस्विनी लोकभर्तारं सुषुवे । लोके स्त्रियः इहलोकपरलोकयोः स्वरक्षणार्थं पुत्रान् सुवते नैवं मे श्वश्रूः मनस्विनी विपुलमनस्का सर्वलोकरक्षकः पुत्रो मे भवेदिति व्रतमनुष्ठाय लोकोपकाराय पुत्रं सुतवती । एवंभूतः कौसल्यासंकल्पः कथं मोघः स्यात् अहमत्र लोके न किमन्तर्भूता । तं ममार्थे सुखं पृच्छ । अस्मद्रक्षणं न मया प्रार्थ्यं तच्चिन्ता तस्यैव । अस्मत्त्वरा तु विलम्बासहिष्णुतया । तस्मात्तत्सत्ता चेन्मद्रक्षणस्य न कापि हानिः । अतस्तत्सत्तैवास्माभिराशास्यते । तेन तस्य सुखमस्ति किमिति मया पृष्टमिति वद । एवं च लोकवदस्माभिश्च तस्मात्किंचिदपेक्षितं चेत् लोकैर्यत्कार्यं तत् कार्यं मयापि कार्यमित्याह—शिरसा चाभिवादय । अहं तं शिरसा प्रणतवत्यस्मीति तमभिवादय । प्रणिपातं कुर्वित्यर्थः । कथं नायिका नायकं शिरसा प्रणमेदिति चेत् आचारप्रधानजनककुलनन्दिन्यैवमनुष्ठितमिति कि-

१ मे इति गो. पाठः । २ द्रक्ष्यस्यन्तमनिन्दिते इति गो. पाठः । ३ लङ्कामिति गो. पाठः । ४ ऽपीति गो. पाठः । ५ सुरसुतोपमेति गो. पाठः । ६ अर्धमेतदधिकं गो. पाठे ।

तं ममार्थे सुखं पृच्छ शिरसा चाभिवादय । स्रजश्च सर्वरत्नानि प्रिया याश्च वराङ्गनाः ॥ ५४ ॥
ऐश्वर्यं च विशालायां पृथिव्यामपि दुर्लभम् । पितरं मातरं चैव संमान्याभिप्रसाद्य च ॥ ५५ ॥
अनुप्रव्रजितो रामं सुमित्रा येन सुप्रजाः । आनुकूल्येन धर्मात्मा त्यक्त्वा सुखमनुत्तमम् ॥ ५६ ॥
अनुगच्छति काकुत्स्थं भ्रातरं पालयन्वने । सिंहस्कन्धो महाबाहुर्मनस्वी प्रियदर्शनः ॥ ५७ ॥
पितृवद्वर्तते रामे मातृवन्मां समाचरत् । ह्रियमाणां तदा वीरो न तु मां वेद लक्ष्मणः ॥ ५८ ॥
वृद्धोपसेवी लक्ष्मीवाञ्शक्तो न बहुभाषिता । राजपुत्रप्रियश्रेष्ठः सदृशः श्वशुरस्य मे ॥ ५९ ॥
मत्तः प्रियतरो नित्यं भ्राता रामस्य लक्ष्मणः । नियुक्तो धुरि यस्यां तु तामुद्वहति वीर्यवान् ॥ ६० ॥
यं दृष्ट्वा राघवो नैव वृत्तमार्यमनुस्मरत् । स ममार्थाय कुशलं वक्तव्यो वचनान्मम ॥ ६१ ॥
मृदुर्नित्यं शुचिर्दक्षः प्रियो रामस्य लक्ष्मणः । यथा हि वानरश्रेष्ठ दुःखक्षयकरो भवेत् ॥ ६२ ॥

मत्र प्रमाणं प्रष्टव्यं प्रणयरोपेणैवमाहेति चेन्न । हनुमद्वचनेन तस्य शान्तत्वात् । ननु ममार्थे मत्कार्यसिद्ध्यर्थं तं प्रणमेत्यर्थः किं न स्यादिति चेत्, ममार्थे इत्यस्योभयत्रान्वयात् । पूर्वमत्र मया पृष्टमिति पृच्छेत्यर्थस्यावश्यकत्वादत्रापि मया प्रणतमिति प्रणमेत्यस्य स्वरसत्वात् । संकुचिता किम् । तं ममार्थे सुखं पृच्छ । मम रक्षणं न प्रार्थनीयम् तस्य मनसि तिष्ठत्वेव किंतु त्वया तस्य सुखजननेन भाव्यम् । तस्यावस्थाने अस्मद्रक्षणं भविष्यतीति तदेवाशास्यते । शिरसा चाभिवादय । अग्निसाक्षिकं गृहीतपाणिना च रक्षणं कार्यं तच्च क्रियते । इतरसाधारण्येन वा रक्षणं क्रियताम् । तैर्यत् क्रियते तन्मयाप्यभिवादनं क्रियते इत्यस्मदर्थमभिवादनं कुरु ॥ ६६ ॥

५४-५७ ]ति० टी०–ममार्थे मत्प्रतिनिधित्वेनेत्यर्थः । लक्ष्मणः पूर्वं मारीचवधाय गते रामे तत्पृष्ठगमनाय सम्यक्कृतपारुष्य इति ज्ञात्वा तस्य विमोचनप्रवृत्त्युपेक्षा मा भूदिति विशिष्य कुशलप्रश्नं गृहीत्याह—स्रजश्चेति । दुर्लभमित्यत्र त्यक्त्वेत्यनुकर्षः ॥ ५४--५७ ॥

रा० टी०–स्रज इति । स्रजः विचित्रमालाः प्रियाः अतिप्रीतिविषयभूताः याः वराङ्गनास्ताश्च विशालायां विस्तीर्णायां पृथिव्याम् अपिशब्देन स्वर्गेऽपि दुर्लभमैश्वर्यं च अनुत्तमं सुखं च त्यक्त्वा पितरं मातरं च संमान्य सत्कृत्य अभिप्रसाद्य च यो राममनुप्रव्रजितः मात्रा प्रस्थापितः येन सुमित्रा सुप्रजा शोभनपुत्रवती काकुत्स्थं भ्रातरं पालयन् सन् आनुकूल्येन योऽनुगच्छति ॥ ५४ ॥ ५७ ॥

गो० टी०–स्रजश्चेति । सन्तीति शेषः । स्रगादयः सन्ति पृथिव्यां दुर्लभमैश्वर्यमप्यस्ति । तथा पितरं मातरं चैव संमान्य सुमित्रा येन सुप्रजाः सः राममनुप्रव्राजितः ६७-६८

गो० टी०–आनुकूल्येनेति । आनुकूल्येन भक्त्येत्यर्थः ६९

गो० टी०–सिंहस्कन्ध इति । समाचरन् परिचरन् ॥ ६०—६१ ॥

५८ ] ति० टी०–समाचरत्पर्यचरत् । दुर्वाक्यैरतिपीडां प्रापितो वीरो मां ह्रियमाणां केनचिद्धरिष्यमाणाम् । वर्तमानसामीप्ये लट् । न वेद, यदि वेद मयि तथा प्रलपन्त्यामपि निकट एव तिष्ठेत्, अतो मद्दुरदृष्टवशान्नावेदीदित्यर्थः ॥ ५८ ॥

रा० टी०–यः मां मातृवत् समाचरन् सन् रामे पितृवद्वर्तते ॥ ५८ ॥

रा० टी०–यः ह्रियमाणां मां तदा हरणकाले न वेद शक्तः समर्थोऽपि यो बहुभाषिता नित्यं न ॥ ५९ ॥

५९ ] ति० टी०–शक्तः समर्थः न बहुभाषिता मितभाषीत्यर्थः । राजपुत्रस्य रामस्य प्रियेषु श्रेष्ठः अतिप्रिय इत्यर्थः ॥ ५९ ॥

रा० टी०–मे श्वशुरस्य सदृशः यः रामस्य प्रियतरो भ्राता अत एव मत्तः ममापि प्रियः अतिप्रीतिविषयीभूतः ॥ ६० ॥

गो० टी०–वृद्धोपसेवीत्यादि । यस्यां धुरि यस्मिन्कार्यनिर्वाहे इत्यर्थः ॥ ६२ ॥ ६३ ॥

६० ] ति० टी०–तदेवाह–मत्त इति । मत्तोऽपीत्यर्थः । यस्यां धुरि यत्र कार्ये ॥ ६० ॥

रा० टी०–यस्यां धुरि सेवारूपकार्ये नियुक्तः तां नित्यमुद्वहति यं दृष्ट्वा वृत्तं पितृनिर्याणादि नैव अनुस्मरत् अन्वस्मरत् ॥ ६१ ॥

६१ ] ति० टी०–वृत्तं प्रमीतम् । पितृवद्रक्षकत्वात्तत्स्मरणाभावः । अनुस्मरदन्वस्मरत् । ममार्थाय मत्प्रयोजनोन्मुखाय । मम वचनाद्वक्तव्यः सीता त्वां कुशलं पृच्छतीति वक्तव्य इत्यर्थः ॥ ६१ ॥

रा० टी०–सलक्ष्मणः ममार्थाय यथा दुःखक्षयकरो भवेत् तथा कुशलं वक्तव्यः । सार्धाष्टकमेकान्वयि ॥ ६२ ॥

गो० टी०–यमिति । आर्यं श्वशुरं दशरथं नानुस्मरेत् । पितृवत्तस्यप्रक्षकत्वादिति भावः ॥ ६४ ॥

६२ ] ति० टी०–हि निश्चये । यथा दुःखक्षयकरो भवेद्दुःखक्षयहेतुप्रवृत्तिपरो भवेत्तथा वाच्य इत्यर्थः ॥ ६२ ॥

गो० टी०–यथा हीति । रामः यथा दुःखक्षयकरो भवे-

१ आचरन्निति गो. रा. पाठः । २ ममेति गो. पाठः । ३ स्मरेदिति गो. पाठः ।

त्वमस्मिन्कार्यनिर्वाहे[1] प्रमाणं हरियूथप । राघवस्त्वत्समारम्भान्मयि यत्नपरो भवेत् ॥ ६३ ॥
इदं ब्रूयाश्च मे नाथं शूरं रामं पुनः पुनः । जीवितं धारयिष्यामि मासं दशरथात्मज[2] ॥ ६४ ॥
ऊर्ध्वं मासान्न जीवेयं सत्येनाहं ब्रवीमि ते । रावणेनोपरुद्धां मां निकृत्या पापकर्मणा ॥
त्रातुमर्हसि वीर त्वं पातालादिव कौशिकीम् ॥ ६५ ॥
ततो वस्त्रगतं मुक्त्वा दिव्यं चूडामणिं शुभम् । प्रदेयो राघवायेति सीता हनुमते ददौ ॥ ६६ ॥
प्रतिगृह्य ततो वीरो मणिरत्नमनुत्तमम् । अङ्गुल्या योजयामास न ह्यस्य प्राभवद्भुजः ॥ ६७ ॥

---

तथा वक्तव्यमित्यर्थः । कार्यनियोगे कार्यसंघटने । प्रमाणं व्यवस्थापकः ॥ ६९ ॥

६३-६४ ] ति० टी०-किं बहुनास्य कार्यस्य निर्वाहे त्वं प्रमाणम् । यथा कार्यनिर्वाहो भवति तथा कुर्वित्यर्थः । यत एवमतः-राघव इति ॥ ६३ ॥ ६४ ॥

रा० टी०-त्वमिति । हे हरियूथप त्वत्समारम्भात् त्वदुत्साहनात् राघवः मयि यत्नपरो भवेत् अतः अस्मिन् कार्यनिर्वाहे कार्यसाधने त्वमेव प्रमाणम् ॥ ६३ ॥

रा० टी०-इदमिति । हे दशरथात्मज मासम् अवधिभूतमासपर्यन्तं जीवितं धारयिष्यामि मासात् ऊर्ध्वं न जीवेयम् इति सत्येन सत्यं ते अहं ब्रवीमि इदं मम वचः मे नाथं रामं त्वं ब्रूयाः सार्धश्लोक एकान्वयी ॥ ६४ ॥

गो० टी०-राघव इति । त्वत्समारम्भात्त्वदुत्साहात्६६॥

गो० टी०-इदमित्यादि । ऊर्ध्वं मासात् । रावणकृतमासद्वयावधिं न सहिष्य इति भावः । निकृत्या वञ्चनेन । पतालादिव कौशिकम् । अत्रेति करणं द्रष्टव्यम् । इदं च ब्रूया इति पूर्वेणान्वयः । कौशिकः इन्द्रः तत्सम्बन्धिनी श्रीः कौशिकी तामिव । एवं ब्रह्मपुराणे श्रूयते । पुरा वृत्रवधे ब्रह्महत्याभिभूतं निःश्रीकमिन्द्रं भगवान्नारायणो देवैः सह वैष्णवेनाश्वमेधेन निष्कल्मषं कृत्वा त्रैलोक्यराज्येऽभिषिच्य पुरातनीं पौरंदरीं श्रियमुपाह्वयत् । ततोऽशरीरवाक्याद्गवाक्षतीर्थवर्तिनीं तामुपश्रुत्य स देवदेवो देवाश्च तत्र जग्मुः । ततस्तान् दृष्ट्वा सा श्रीः पातालं प्रविवेश । तत्र प्रवेष्टुमशक्नुवन्तो देवाः पुनरप्यशरीरं वाक्यं युष्मासु सर्वलक्षणसंपन्नस्तां प्रतिनेतुमर्हतीत्युपश्रुत्य तमेव पुरुषोत्तमं प्रार्थयामासुः । स तत्र प्रविश्य पातालात्तां समुद्धृत्य तैः सह शक्राय प्रादादिति । महाभारते तु उतथ्यस्य भार्यां यमुनायां स्नान्तीं वरुणो हृत्वा पातालमनयत् । तामुतथ्यो नारदेन याचित्वा तामलब्ध्वा कुपितः पातालह्रदशोषेण तामवापेति श्रूयते । सा कौशिकीति केचित्कथयन्ति ॥ ६७—६९ ॥

६५ ] ति० टी०-ऊर्ध्वं मासादिति । रावणदत्तावध्यवशिष्टं किंचिदधिकं मासद्वयमपि न सहिष्य इति भावः । तत्समाप्तौ त्वदनागमनेऽनार्योऽनार्यमेवाचरेत्, अतोऽर्वागेव मरणं ज्याय इति शीघ्रमागमनायैवमुक्तिरिति बोध्यम् । निकृत्या राक्षसीकर्तृकनिग्रहेणोपरुद्धाम् । पातालादिव कौशिकीं पातालमग्नां भुवं भगवानिव त्रातुमर्हसि । गायत्र्याः सांख्यायनगोत्रत्ववद्भूः कौशिकीति कतकः । कौशिकी देवेन्द्रश्रीः । पुरा किल वृत्रवधाभिभूतस्येन्द्रस्य लक्ष्मीं पातालं प्रविष्टां देवप्रार्थितो नारायण उद्धृत्य पुनरिन्द्राय प्रायच्छदिति पुराणगाथेति तीर्थः ६९॥

रा० टी०-रावणेनेति । पापकर्मणा रावणेनोपरुद्धाम् अत एव निकृत्या राक्षसीकृतपीडयोपलक्षितां मां त्रातुमर्हसि तत्र दृष्टान्तः पातालात् उद्धृतां कौशिकीं कौशिकगोत्रपृथ्वीमिव यथा वराहः पृथिवीं ररक्ष तथेत्यर्थः ॥ ६९ ॥

६६ ] ति० टी०-चूडामणिं शिरोरत्नम् ॥ ६६ ॥

रा० टी०-तत इति । ततोऽनन्तरं वस्त्रगतं दिव्यं चूडामणिं शिरोरत्नं मुक्त्वा उन्मुच्य राघवाय प्रदेय इत्युक्त्वेति शेषः हनुमते ददौ ॥ ६६ ॥

६७ ] ति० टी०-अङ्गुल्या योजयामास दधार । चूडामण्यधिष्ठानहेमपुष्पस्य केशप्रवेशार्थं यद्रन्ध्रं तत्राङ्गुलिं प्रवेशयामासेत्यर्थः । ननु तदा सूक्ष्मरूपत्वात्तत्र भुजासञ्जनमेवोचितमत आह-नहीति । अस्य भुजः सूक्ष्मोऽपि न प्राभवत् तद्रन्ध्रे न प्राविशदित्यर्थः । निषेधस्य प्रसक्तिमूलकत्वात्प्रसक्तेश्च सूक्ष्मरूप एव संभवात् पूर्वं देव्यै प्रदर्शितं महद्रूपं विहाय सूक्ष्मरूपेणैव स्थित इति गम्यत इति तीर्थः । कतकस्तु-अङ्गुल्या योजयामास । सूक्ष्मवासोबद्धमङ्गुल्यां दृढं बबन्धेत्यर्थः । अस्य बन्धने भुजो न प्राभवत्, व्यक्ततया सर्वानुभवप्रसङ्गाद्गोपनीयत्वाच्च भुजो नोचितोऽभूदित्यर्थं इत्याह ॥ ६७ ॥

रा० टी०-प्रतीति । वीरो हनूमान् मणिरत्नं प्रतिगृह्य अङ्गुल्या योजयामास तद्गतच्छिद्रे अङ्गुलिं प्रवेशयामासेत्यर्थः । ननु हनुमद्रूपस्य सुसूक्ष्मत्वात् भुजेनैव कुतो न धृतवानित्यत आह अस्य हनुमतो भुजो न प्राभवत् तच्छिद्रप्रवेशार्हो नाभवदित्यर्थः ॥ ६७ ॥

गो० टी०-प्रतिगृह्येति । मणिरत्नं मणिश्रेष्ठम् । अंगुल्या योजयामास । चूडामणेरधिष्ठानस्य पृष्ठे या केशसरणिः तत्राङ्गुलिं प्रावेशयदित्यर्थः । एवं तनीयसी किमङ्गुलिरित्यत्राह—न हीति । अस्य हनुमतः भुजः न प्राभवन्न स्थूलोऽभवत् । न तदानीं स महाकायः भुजश्च न स्थूलः तेनाङ्गुलिस्तनीयसीत्यर्थः । एतेन देव्यै प्रदर्शितं महद्रूपं विहाय पुरप्रवेशकालिकं सूक्ष्मरूपमङ्गीकृतवानित्यवगम्यते ॥ ७० ॥

---

१ नियोगे इति गो. पाठः । २ ससमेति गो. पाठः । ३ आत्मजः इति गो. पाठः ।

मणिरत्नं कपिवरः प्रतिगृह्याभिवाद्य च । सीतां प्रदक्षिणं कृत्वा प्रणतः पार्श्वतः स्थितः ॥ ६८ ॥
हर्षेण महता युक्तः सीतादर्शनजेन सः । हृदयेन गतो रामं लक्ष्मणं च सलक्षणम् ॥ ६९ ॥
मणिवरमुपगृह्य तं महार्हं जनकनृपात्मजया धृतं प्रभावात् ।
[२]गिरिवरपवनावधूतमुक्तः सुखितमनाः प्रतिसंक्रमं प्रपेदे ॥ ७० ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये सुन्दरकाण्डेऽष्टात्रिंशः सर्गः ॥ ३८ ॥

---

## एकोनचत्वारिंशः सर्गः ।

चूडामणिं गृहीत्वा प्रयाणोन्मुखं हनुमन्तं प्रति जानकी स्वकुशलं निवेद्य मन्नयनाय रामलक्ष्मणौ प्रोत्साहयेति संदिशति । दुस्तरसागरतरणे राघववीराणां शङ्कमानां सीतां वानरप्रभावं संवर्ण्य कैमुत्येन तेषां तरणं समर्थयन्हनुमान्नो चेत्स्वपृष्ठारोपणेन तांस्तारयामीति प्रतिज्ञाय तां समाश्वासयति ।

मणिं दत्त्वा ततः सीता हनूमन्तमथाब्रवीत् । अभिज्ञानमभिज्ञातमेतद्रामस्य तत्त्वतः ॥ १ ॥
मणिं दृष्ट्वा तु रामो वै त्रयाणां संस्मरिष्यति । वीरो जनन्या मम च राज्ञो दशरथस्य च ॥ २ ॥

---

६८–६९ ] ति० टी०–पार्श्वतः स्थितः सीतासमीपे स्थितः ॥ ६८ ॥ ६९ ॥

रा० टी०–मणीति । कपिवरो हनुमान् प्रणतः सन् पार्श्वतः पार्श्वे स्थितः ॥ ६८ ॥

रा० टी०–हर्षेणेति । सीतादर्शनजेन हर्षेण युक्तो हनूमान् हृदयेन मनसा रामं गतः प्राप्तः ॥ ६९ ॥

गो० टी०–मणिरत्नमिति । प्रणतः नम्रगात्रः ॥७१-७२॥

७० ] ति० टी०–महार्हं बहुमूल्यम् । प्रभावात्सामर्थ्यविशेषात् । राक्षसीभिर्यथा न ज्ञायते तथा धृतम् । गिरिवरपवनावधूतमुक्तः पर्वतश्रेष्ठोर्ध्वभागीयपवनकम्पितः, पश्चात्तेन कम्पेन मुक्तः, स इव सुखितमनाः । अयमपि पूर्वं सीताया अदर्शनेन दुःखवशात्कम्पितः, ततस्तद्दर्शनेन ततः कम्पान्मुक्तः, अतः सुखितमनाः प्रतिसंक्रमं लङ्कादुर्गप्राकारं प्राप्तुं प्रपेदे । यत्नमारभतेत्यर्थः ॥ ७० ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये सुन्दरकाण्डेऽष्टात्रिंशः सर्गः ॥ ३८ ॥

रा० टी०–मणीति । जनकनृपात्मजया धृतं वस्त्रे बद्धं प्रभावात् अतिसामर्थ्यात् हेतोर्महार्हमतिपूज्यं मणिवरमुपगृह्य गिरिवरपवनेन शैलश्रेष्ठोर्ध्वभागसंबन्धिवातेन अवधूतः कम्पितः मुक्तः पश्चादवधूतिरहित इव सुखितमनाः महावातस्थानीयसीतादर्शनाभावनिवृत्त्या प्राप्तानन्दो हनुमान् प्रतिसंक्रमं निर्गमं प्रपेदे प्रारभत । मुक्तान्तशब्दः आचारक्विबन्तप्रकृतिकर्तृक्विबन्तो लाक्षणिको वा ॥ ७० ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ सुन्दरकाण्डे अष्टात्रिंशः सर्गः ॥ ३८ ॥

गो० टी०–मणिवरमिति । पवनावधूतमुक्तः महावातकम्पितः तेन रहितश्चेत्यर्थः । प्रतिसंक्रमं प्रतिप्रयाणं प्रपेदे प्राप्तुमुद्युक्तः । अस्मिन्सर्गे सार्धत्रिसप्ततिश्लोकाः ॥ ७३ ॥

इतिश्रीगोविन्दराजविरचिते श्रीरामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने अष्टात्रिंशः सर्गः ॥ ३८ ॥

१] ति० टी०–रामस्याभिज्ञातम् रामेणाभिज्ञातमित्यर्थः १॥

रा० टी०–प्रस्थानकाले हनुमन्तं प्रति सीतोक्तिमाह–मणिमित्यादिभिः । सीता मणिं दत्वा हनूमन्तमब्रवीत् । तदाकारमाह–एतत् मया दत्तमभिज्ञानं चिह्नं रामस्य रामेण तत्त्वतोऽभिज्ञातम् अत एव वीरो रामः मणिं दृष्ट्वा जनन्यादीनां त्रयाणां संस्मरिष्यति एव पाणिग्रहणसमये दशरथसन्निधौ मम जननी मणिं मह्यं ददाविति पौराणिकी कथा सूचिता श्लोकद्वयमेकान्वयि ॥ १ ॥ २ ॥

गो० टी०–मणिमित्यादि । अभिज्ञातं सम्यक्ज्ञातम् ॥१॥

२ ] ति० टी०–त्रयाणां संस्मरिष्यति । कर्मणि शेषे षष्ठी । त्रीनाह–जनन्या इति । अयं मणिर्विवाहकाले मज्जनन्या हस्तान्मत्पित्रादाय दशरथहस्ते मम शिरोभूषणतया दत्त इति मम जनन्याश्च मत्पितुर्दशरथस्य चेति त्रयाणां स्मारक इति भावः ॥२॥

गो० टी०–मणिं त्विति । त्रयाणामिति "अधीगर्थदयेशां कर्मणि" इति षष्ठी । विवाहकाले शिरोमणिदातृत्वात्पित्रोः ग्रहीतृत्वाच्च मम स्मरणमिति भावः । पाणिग्रहणोत्सवे मम श्वशुराभ्यां प्रथमं शिरोभूषणतया एष दत्तः । अतः त्रीनस्मान् युगपत् स्मरिष्यतीत्यर्थ इत्याह कश्चित् । तदनुचितम् । मणिरत्नमिदं दत्तं वैदेह्याः श्वशुरेण मे । वधूकाले तथा बद्धमधिकं मूर्ध्नि शोभते । इत्युपरि वक्ष्यमाणत्वाद्विवाहकाले रामजनन्या अनागमनाच्च ॥ २—३ ॥

---

१ शरीरेण तु विधितः इति गो. पाठः । २ गिरिरिवेति गो. पाठः ।

स भूयस्त्वं समुत्साहचोदितो हरिसत्तम । अस्मिन्कार्य[1]समुत्साहे[2] प्रचिन्तय य[3]दुत्तरम् ॥ ३ ॥
त्वमस्मिन्कार्यनिर्योगे प्रमाणं हरिसत्तम । [4]तस्य चि[5]न्तय यो यत्नो दुःखक्षयकरो भवेत् ॥ ४ ॥
हनूमन्यत्नमास्थाय दुःखक्षयकरो भव । स तथेति प्रतिज्ञाय मारुतिर्भीमविक्रमः ॥ ५ ॥
शिरसाऽऽवन्द्य वैदेहीं गमनायोपचक्रमे । ज्ञात्वा संप्रस्थितं देवी वानरं प[6]वनात्मजम् ॥ ६ ॥
बाष्पगद्गदया वाचा मैथिली वाक्यमब्रवीत् । हनुमन्कुशलं ब्रूयाः सहितौ रामलक्ष्मणौ ॥ ७ ॥
सुग्रीवं च सहामात्यं सर्वान्वृद्धांश्च वानरान् । ब्रूयास्त्वं वानरश्रेष्ठ कुशलं धर्मसंहितम् ॥ ८ ॥
यथा च स महाबाहुर्मां तारयति राघवः । अस्माद्दुःखाम्बुसंरोधात्त्वं समाधातुमर्हसि ॥ ९ ॥
जीवन्तीं मां यथा रामः संभावयति कीर्तिमान् । तत्त्व[7]या हनुमन्वाच्यं वाचा धर्ममवाप्नुहि ॥ १० ॥
नित्यमुत्साहयुक्तस्य वाचः श्रुत्वा मयेरिताः । वर्धिष्यते दाशरथेः पौरुषं मदवाप्तये ॥ ११ ॥
मत्संदेशयुता वाचस्त्वत्तः श्रुत्वैव राघवः । पराक्रमे मतिं वीरो विधिवत्संविधास्यति ॥ १२ ॥
सीतायास्तद्वचः श्रुत्वा हनूमान्मारुतात्मजः । शिरस्यञ्जलिमाधाय वाक्यमुत्तरमब्रवीत् ॥ १३ ॥
क्षिप्रमेष्यति काकुत्स्थो हर्यृक्षप्रवरैर्वृतः । यस्ते युधि विजित्यारीञ्शोकं व्यपनयिष्यति ॥ १४ ॥

---

३ ] ति० टी०—स त्वमस्मिन्समुत्साहे भूयश्चोदितो भविष्यसि तदत्र कार्यसमुत्साहप्रचोदितः सन्यदुत्तरमुत्तरकर्तव्यं तच्चिन्तय ॥ ३ ॥

रा० टी०—स इति । समुत्साहे मणिदर्शनजनितरामयुद्धोत्साहसमये भूयोऽधिकं त्वं चोदितो रामेण प्रेरितो भविष्यसीति शेषः अत एव अस्मिन् कार्यसमुत्साहे तज्जनितप्रेरणे यत् उत्तरं कर्तव्यं तत् प्रचिन्तय ॥ ३ ॥

४ ] ति० टी०—मम का चिन्तने शक्तिरिति चेत्तत्राह—त्वमिति । निर्योगो निर्वाहः । यस्तस्य रामस्य यत्नो दुःखक्षयकरो भवेत्तं चिन्तय ॥ ४ ॥

रा० टी०—त्वमिति । अस्मिन् समुपस्थिते कार्यस्य निर्योगे निर्वाहे त्वमेव प्रमाणं त्वदधीनोऽयमित्यर्थः अतः यो यत्नो दुःखक्षयकरो भवेत् तस्य चिन्तय कर्मत्वाविवक्षया षष्ठी ॥४॥

गो० टी०—त्वमिति । कार्यनिर्योगे कार्यसंघटने । प्रमाणं व्यवस्थापकः । चिन्तयतस्तस्य । तवेति शेषः ॥ ४ ॥

५–८ ] ति० टी०—यत्नमास्थायेति यत्नं रामप्रवृत्त्यर्थमित्यर्थः ॥ ५–८ ॥

रा० टी०—तदेव भङ्ग्यन्तरेणाह—हनूमन्निति । अर्धं पृथक् स इति । तथेति प्रतिज्ञाय आवन्द्य च मारुतिर्गमनायोपचक्रमे । अर्धद्वयमेकान्वयि ॥ ५ ॥

रा० टी०—ज्ञात्वेति । वानरं प्रस्थितत्वं ज्ञात्वा मैथिली अब्रवीत् ॥ ६ ॥

रा० टी०—तदाकारमाह—हनूमन्नित्यादिभिः । रामादीन् कुशलं ब्रूयाः । सार्धश्लोकः संमिलितान्वयी ॥ ७ ॥ ८ ॥

गो० टी०—स तथेति । आवन्द्येति पदच्छेदः ॥ ५ ॥ ६ ॥

गो० टी०—कुशलमिति । ब्रूया इति । धर्मसंहितं धर्मसहितम् । धर्मपुरस्सरम् कुशलं ब्रूया इत्यर्थः ॥ ७ ॥ ८ ॥

९ ] ति० टी०—अम्बूनि संरुध्यन्ते यस्मिन्नित्यम्बुसंरोधः समुद्रः । दुःखरूपात्समुद्रादित्यर्थः । यथा तारयति तथा समाधातुं यत्नं कर्तुम् ॥ ९ ॥

रा० टी०—यथेति । राघवः दुःखाम्बुसंरोधात् दुःखसागरात् यथा मां तारयति तथा समाधातुमर्हसि ॥ ९ ॥

गो० टी०—यथेति । दुःखाम्बुसंरोधात् । अम्बूनि संरुध्यन्ते अनेनेत्यम्बुसंरोधः जलधिः । समाधातुं राममनुकूलयितुम् ॥ ९ ॥

१०–११ ] ति० टी०—वाचा वाकृतसाहाय्येन ॥ १० ॥ ११ ॥

रा० टी०—जीवन्तीमिति । रामः जीवन्तीं मां यथा संभावयति तत् तथा वाच्यः वाचा उक्त्यापि धर्मं सेवकरीतिमवाप्नुहि ॥ १० ॥

रा० टी०—नित्यमिति । मयेरिताः वाचः श्रुत्वा मदवाप्तये नित्यमुत्साहयुक्तस्य दाशरथेः पौरुषं वर्धिष्यते प्रादुर्भविष्यति ॥ ११ ॥

गो० टी०—जीवन्तीमिति । जीवन्तीं संभावयति जीवन्तीं करोतीत्यर्थः । तत्तथा अव्ययमेतत् । वचनस्य प्रयोजनमाह—वाचेति । वाचाधर्मं वाचिकधर्मम् ॥ १० ॥

गो० टी०—तमेव धर्ममुपपादयति द्वाभ्यां—नित्यमित्यादि ॥ ११–१२ ॥

१२–१४ ] ति० टी०—उक्तमेवादराय पुनराह—मत्संदेशयुता इति ॥ १२–१४ ॥

रा० टी०—मदिति । राघवः मत्संदेशयुता वाचः त्वत्तः श्रुत्वैव पराक्रमे मतिं विधिवत्संविधास्यति ॥ १२ ॥

रा० टी०—सीताया इति । हनूमान् शिरसि अञ्जलिमाधाय उत्तरमब्रवीत् ॥ १३ ॥

रा० टी०—तदाकारमाह—क्षिप्रमित्यादिभिः । यः शोकं व्यपनयिष्यति व्यपनेष्यति स काकुत्स्थः क्षिप्रमेष्यति ॥ १४ ॥

---

१ समुत्साहे इति गो. पाठः । २ समारम्भे इति गो. पाठः । ३ सदुत्तरमिति रा. पाठः । ४ एतदर्धद्वयं व्यत्यस्तं गो. पाठे । ५ चिन्तयन् इति गो. पाठः । ६ मारुतात्मजमिति गो. पाठः । ७ तथेति गो. पाठः । ८ युक्तांश्चेति गो. पाठः । ९ वचनमिति गो. पाठः ।

नहि पश्यामि मर्त्येषु नासुरेषु सुरेषु वा । यस्तस्य वमतो बाणान्स्थातुमुत्सहतेऽग्रतः ॥ १५ ॥
अप्यर्कमपि पर्जन्यमपि वैवस्वतं यमम् । स हि सोढुं रणे शक्तस्तव हेतोर्विशेषतः ॥ १६ ॥
स हि सागरपर्यन्तां महीं साधितुमर्हति । त्वन्निमित्तो हि रामस्य जयो जनकनन्दिनि ॥ १७ ॥
तस्य तद्वचनं श्रुत्वा सम्यक्सत्यं सुभाषितम् । जानकी बहु मेने तं वचनं चेदमब्रवीत् ॥ १८ ॥
ततस्तं प्रस्थितं सीता वीक्षमाणा पुनः पुनः । भर्तृस्नेहान्वितं वाक्यं सौहार्दादनुमानयत् ॥ १९ ॥
यदि वा मन्यसे वीर वसैकाहमरिन्दम । कस्मिंश्चित्संवृते देशे विश्रान्तः श्वो गमिष्यसि ॥ २० ॥
मम चैवाल्पभाग्यायाः सांनिध्यात्तव वानर । अस्य शोकस्य महतो मुहूर्तं मोक्षणं भवेत् ॥ २१ ॥
ततो हि हरिशार्दूल पुनरागमनाय तु । प्राणानामपि संदेहो मम स्यान्नात्र संशयः ॥ २२ ॥
तवादर्शनजः शोको भूयो मां परितापयेत् । दुःखाद्दुःखपरामृष्टां दीपयन्निव वानर ॥ २३ ॥
अयं च वीर संदेहस्तिष्ठतीव ममाग्रतः । सुमहांस्त्वत्सहायेषु हर्यृक्षेषु हरीश्वरः ॥ २४ ॥
कथं नु खलु दुष्पारं तरिष्यति महोदधिम् । तानि हर्यृक्षसैन्यानि तौ वा नरवरात्मजौ ॥ २५ ॥

---

१५ ] ति० टी०-वमतः । बाणान्विसृजत इत्यर्थः ॥ १५ ॥

रा० टी०-नहीति । बाणान् वमतः त्यजतः तस्य रामस्य अग्रतः यः स्थातुमुत्सहते तं मर्त्यादिषु न पश्यामि ॥ १५ ॥

१६ ] ति० टी०-पर्जन्य इन्द्रः ॥ १६ ॥

रा० टी०-अपीति । तव हेतोः अर्कादिकमपि रणे सोढुं विशेषतः सर्वेभ्योऽधिकः स रामः शक्तः ॥ १६ ॥

गो० टी०-अप्यर्कमिति । पर्जन्यम् इन्द्रम् । पर्जन्यौ रसदब्देन्द्रावित्यमरः ॥ १६ ॥

१७-१८ ] ति० टी०-महीं साधितुमर्हति । जेतुमुद्युङ्क्ते इत्यर्थः । किमर्थं तत्राह—त्वन्निमित्त इति । त्वत्प्राप्तिप्रयोजन इत्यर्थः ॥ १७ ॥ १८ ॥

रा० टी०-स इति । स रामः महीं सकलभूमिं साधितुं नियोजयितुमर्हति अतः त्वन्निमित्तः रामस्य जयः भवितेवेति शेषः ॥ १७ ॥

रा० टी०-तस्येति । तस्य सम्यक् सुभाषितं वचनं श्रुत्वा तद्वचनं जानकी सत्यं मेने भर्तृस्नेहान्वितं प्रस्थितं हनुमन्तं सौहार्दात् पुनः पुनर्वीक्षमाणा सती बहु अनुमानयत् अन्वमन्यत अतिसत्कृतिमकरोदित्यर्थः, इदं वाक्यमब्रवीत् । श्लोकद्वयमेकान्वयि ॥ १८ ॥ १९ ॥

गो० टी०-स हीति । त्वन्निमित्त इति । जयः भविष्यतीति शेषः ॥ १७ ॥

गो० टी०-तस्येति । सम्यक्सोपपत्तिकम् । सत्यं परमार्थम् । सुभाषितं श्रुतिमधुरम् ॥ १८ ॥

१९-२० ] ति० टी०-भर्तृस्नेहान्वितं रामस्नेहान्वितम् । वाक्यं हनुमद्वाक्यं सौहार्दाद्रामप्रेम्णानुमानयदपूजयत् ॥१९॥२०

रा० टी०-तद्वचनाकारमाह-यदीति । हे वीर यदि मन्यसे निश्चिनोषि तर्हि संवृते आच्छादिते कस्मिंश्चित् देशे एकाहं वस श्वः परदिने विश्रान्तः सन् गमिष्यसि गन्तासि ॥ २० ॥

गो० टी०-वचनं चेदमब्रवीदित्युक्तं विवृणोति-ततस्तमिति । भर्तृस्नेहान्वितम् आत्मनि यो भर्तुः स्नेहस्तेनान्वितम् । स्वविषयभर्तृस्नेहप्रकाशकमिति यावत् । अनुमानयदन्वमानयत् । वक्ष्यमाणोक्तिरूपं संमानवचनमब्रवीदित्यर्थः १९-२२

२१ ] ति० टी०-मोक्षणं भवेत् । अद्य स्थित्वा श्वो गमने इति शेषः ॥ २१ ॥

रा० टी०-निवासे प्रयोजनान्तरमाह-ममेति । तव सान्निध्याद्धेतोः मुहूर्तं शोकस्य मोक्षणं विध्वंसो भवेत् ॥ २१ ॥

२२ ] ति० टी०-ततो हीति । ततोऽपीत्यर्थः । एकाहवासोत्तरं गमनेऽपि पुनरागमनाय तु संदेह एव, तत्संदेहे सति मम प्राणानामपि संदेह एव ॥ २२ ॥

रा० टी०- तत इति । ततोऽनन्तरमपि यदि पुनरागमनाय संशयः तर्हि मम प्राणानामपि संदेहो न स्यात् स्यादेवेत्यर्थः ॥ २२ ॥

२३ ] ति० टी०-तदाह—तवेति । तथा च मज्जीवनमसंभावितमेव पुनरनागमने इति भावः । दुःखाद्दुःखपरामृष्टामतिदुःखप्राप्ताम् । दीपने कर्ता शोकः ॥ २३ ॥

रा० टी०-कञ्चित्कालं स्थितावपि दुःखनिवृत्तिर्न भविष्यतीति बोधयन्ती आह-तवेति । तवादर्शनजः दर्शनविध्वंसजनितः शोकः दुःखाद्दुःखपरामृष्टाम् अतिदुःखितामित्यर्थः, मां दीपयन् दहन्निव परितापयेत् ॥ २३ ॥

गो० टी०-तवेति । दुःखाद्दुःखपरामृष्टां पूर्वदुःखादधिकेन दुःखेन स्पृष्टाम् । दीपयन्निव वर्धयन्निवेत्यर्थः ॥ २३ ॥

२४-२५ ] ति० टी०-अयं संदेहो ममाग्रतः पुरस्तादिव तिष्ठति । कोऽयं तत्राह-त्वत्सहायेष्विति । साक्षात्साधकस्य तव सहायभूतेषु मिलितेषु हर्यृक्षेषु हरीश्वरः सुग्रीवः कथमुदधिं तरिष्यति सैन्यानि कथं तरिष्यन्ति तौ वा कथं तरिष्यत इत्यर्थः ॥ २४ ॥ २५ ॥

---

१ क्षिपत इति गो. पाठः । २ शासितुमीहते इति गो. पाठः । ३ ऽथेति गो. पाठः । ४ गते इति गो. पाठः । ५ शार्दूले इति गो. पाठः । ६ हरीश्वरेति गो. पाठः ।

त्रयाणामेव भूतानां सागरस्येह लङ्घने । शक्तिः स्याद्वैनतेयस्य तव वा मारुतस्य वा ॥ २६ ॥
तदस्मिन्कार्यनिर्योगे वीरैवं दुरतिक्रमे । किं पश्यसे समाधानं त्वं हि कार्यविदां वरः ॥ २७ ॥
काममस्य त्वमेवैकः कार्यस्य परिसाधने । पर्याप्तः परवीरघ्न यशस्यस्ते फलोदयः ॥ २८ ॥
बलैः समग्रैर्युधि मां रावणं जित्य संयुगे । विजयी स्वपुरं यायात्तत्तस्य सदृशं भवेत् ॥ २९ ॥
बलैस्तु संकुलां कृत्वा लङ्कां परबलार्दनः । मां नयेद्यदि काकुत्स्थस्तत्तस्य सदृशं भवेत् ॥ ३० ॥
तद्यथा तस्य विक्रान्तमनुरूपं महात्मनः । भवेदाहवशूरस्य तथा त्वमुपपादय ॥ ३१ ॥
तदर्थोपहितं वाक्यं प्रश्रितं हेतुसंहितम् । निशम्य हनुमाञ्शेषं वाक्यमुत्तरमब्रवीत् ॥ ३२ ॥
देवि हर्यृक्षसैन्यानामीश्वरः प्लवतां वरः । सुग्रीवः सत्यसंपन्नस्तवार्थे कृतनिश्चयः ॥ ३३ ॥
स वानरसहस्राणां कोटीभिरभिसंवृतः । क्षिप्रमेष्यति वैदेहि राक्षसानां निबर्हणः ॥ ३४ ॥
तस्य विक्रमसंपन्नाः सत्त्ववन्तो महाबलाः । मनःसंकल्पसंपाता निदेशे हरयः स्थिताः ॥ ३५ ॥

---

रा० टी०—अयमिति । त्वत्सहायेषु हर्यृक्षेषु सुमहान् हरीश्वरः सुग्रीवः हर्यृक्षसैन्यानि तौ रामलक्ष्मणौ च कथं तरिष्यन्ति अयं संदेहः ममाग्रतः तिष्ठति । श्लोकद्वयमेकान्वयि ॥ २४ ॥ २५ ॥

गो० टी०—अयमिति । अयं वक्ष्यमाणः तिष्ठतीव । मूर्तिभूत इत्यर्थः ॥ २४–२६ ॥

२६ ] ति० टी०—एवंसंदेहे बीजमाह—त्रयाणामेवेति ॥ २६

रा० टी०—संशये हेतुमाह—त्रयाणामिति । इह अस्मिन् लोके भूतानां वैनतेयादीनां त्रयाणामेव सागरस्य लङ्घने शक्तिः स्यात् ॥ २६ ॥

२७ ] ति० टी०—किं समाधानं पश्यसि कं कार्यसिद्ध्युपायं पश्यसि ॥ २७ ॥

रा० टी०—तदिति । तदुक्तहेतोः दुरतिक्रमे कार्यनियोगे कार्यसाधके अस्मिन् सागरतरणसंशये किं समाधानं पश्यसे २७

गो० टी०—तदस्मिन्निति । समाधानं परिहारम् ॥ २७ ॥

२८ ] ति० टी०—ननु किं तैरागतैरहमेव पर्याप्तोऽस्य कार्यस्येत्यत्राह—काममिति । त्वया कार्यसाधने तव यशस्यो यशस्करः फलोदयो जयरूपफलप्राप्तिर्भवति, न तु रामस्येत्यर्थः २८

रा० टी०—स्वनिश्चयमाह—काममिति । अस्य कार्यस्य साधने एकस्त्वमेव पर्याप्तः अतः यशस्यः यशस्करः फलोदयः विजयप्राप्तिः ते तवैव त्वदायत्तेत्यर्थः ॥ २८ ॥

गो० टी०—अहमेव साधयिष्यामीत्याशङ्क्याह—काममिति । हे परवीरघ्न त्वम् अस्य कार्यस्य सर्वराक्षसवधपूर्वकमत्प्रापणरूपस्य परिसाधने कामं पर्याप्तः शक्तः । एवं चेत्फलोदयः शक्तिसमृद्धिः ते यशस्यः तव यशस्करः । न तु ममेति भावः ॥ २८ ॥

२९ ] ति० टी०—किं तदुचितं तत्राह—बलैरिति । समग्रैर्बलैः सहागत्य रावणं संयुगे जित्वा विजयी सन्मां गृहीत्वा यायात्तत्तस्य रामस्य सदृशं भवेत् ॥ २९ ॥

रा० टी०—बलैरिति । बलैरुपलक्षितः रामः संयुगे संग्रामे रावणं जित्य जित्वा विजयी सन् स्वपुरं यायात् मया सह गच्छेत् तत्कर्म तस्य रामस्य सदृशं भवेत् ॥ २९ ॥

गो० टी०—तर्हि तव किं यशस्यमित्याकाङ्क्षायामाह—बलैरिति । जित्य जित्वा । मां गृहीत्वेति शेषः । यायात् राम- इति च शेषः ॥ २९ ॥

३० ] ति० टी०—आदरात्पुनराह—बलैस्त्विति ॥ ३० ॥

रा० टी०—तदेव भङ्ग्यन्तरेणाह—बलैरिति । काकुत्स्थो रामः लङ्कां बलैः सैन्यैः संकुलां कृत्वा यदि मां नयेत् तर्हि तत्तस्य सदृशं भवेत् ॥ ३० ॥

गो०टी०—एतन्न केवलं मम रामस्यापीत्याह—शरैरिति ३०

३१ ] ति० टी०—विक्रान्तं पराक्रमः ॥ ३१ ॥

रा० टी०—तदिति । तदुक्तहेतोः आहवशूरस्य तस्य रामस्य अनुरूपं योग्यं विक्रान्तं विक्रमः यथा भवेत् तथा त्वमुपपादय ॥ ३१ ॥

गो० टी०—तदिति । तस्य अनुरूपं विक्रान्तं यथा भवेत्तथा उपपादय कुरु ॥ ३१ ॥

३२ ] ति० टी०—तदुक्तं सीतावाक्यम् । प्रश्रयः स्नेहः । शेषं शिष्टं प्रकृतोत्तरं वाक्यमब्रवीत् ॥ ३२ ॥

रा० टी०—तदिति । अर्थोपहितं अर्थसाधकं प्रश्रितं सस्नेहं हेतुसंहितं हेतुभिर्ग्रथितं शेषमवशिष्टं वाक्यं सीतावचनं निशम्य श्रुत्वा उत्तरं वाक्यमब्रवीत् ॥ ३२ ॥

गो० टी०—तदर्थोपहितमिति । अर्थोपहितम् अर्थयुक्तम् सहितम् परस्परसंगतम् हेतुसंहितं युक्तियुक्तम् शेषं पूर्वमनुक्तम् उत्तरं वाक्यमब्रवीत् ॥ ३२–३४ ॥

३३–३४ ] ति० टी०—तदेव वाक्यमाह—देवीति ॥ ३३ ॥ ३४

रा० टी०—तदाकारमाह—देवीति । हे देवि तवार्थे कृतनिश्चयः वानरसहस्राणां कोटीभिरभिसंवृतः सुग्रीवः क्षिप्रमेष्यति । श्लोकद्वयमेकान्वयि ॥ ३३ ॥ ३४ ॥

३५ ] ति० टी०—कथमेष्यतीत्यत आह—तस्य विक्रमेति । मनःसंकल्पवदतिदूरपतनशीलाः ॥ ३५ ॥

---

१ अस्येति गो. पाठः । २ तु मे स्याद्यशस्करमिति गो. पाठः । ३ शरैरिति गो. पाठः । ४ सहितमिति गो. पाठः ।

येषां नोपरि नाधस्तान्न तिर्यक्सज्जते गतिः । न च कर्मसु सीदन्ति महत्स्वमिततेजसः ॥ ३६ ॥
असकृत्तैर्महोत्साहैः ससागरधराधरा । प्रदक्षिणीकृता भूमिर्वायुमार्गानुसारिभिः ॥ ३७ ॥
मद्विशिष्टाश्च तुल्याश्च सन्ति तत्र वनौकसः । मत्तः प्रत्यवरः कश्चिन्नास्ति सुग्रीवसंनिधौ ॥ ३८ ॥
अहं तावदिह प्राप्तः किं पुनस्ते महाबलाः । नहि प्रकृष्टाः प्रेष्यन्ते प्रेष्यन्ते हीतरे जनाः ॥ ३९ ॥
तदलं परितापेन देवि शोको व्यपैतु ते । एकोत्पातेन ते लङ्कामेष्यन्ति हरियूथपाः ॥ ४० ॥
मम पृष्ठगतौ तौ च चन्द्रसूर्याविवोदितौ । त्वत्सकाशं महासङ्घौ नृसिंहावागमिष्यतः ॥ ४१ ॥
तौ हि वीरौ नरवरौ सहितौ रामलक्ष्मणौ । आगम्य नगरीं लङ्कां सायकैर्विधमिष्यतः ॥ ४२ ॥
सगणं रावणं हत्वा राघवो रघुनन्दनः । त्वामादाय वरारोहे स्वपुरीं प्रति यास्यति ॥ ४३ ॥
तदाश्वसिहि भद्रं ते भव त्वं कालकाङ्क्षिणी । नचिराद्द्रक्ष्यसे रामं प्रज्वलन्तमिवानलम् ॥ ४४ ॥
निहते राक्षसेन्द्रे च सपुत्रामात्यबान्धवे । त्वं समेष्यसि रामेण शशाङ्केनेव रोहिणी ॥ ४५ ॥
क्षिप्रं त्वं देवि शोकस्य पारं द्रक्ष्यसि मैथिलि । रावणं चैव रामेण द्रक्ष्यसे निहतं बलात् ॥ ४६ ॥
एवमाश्वास्य वैदेहीं हनूमान्मारुतात्मजः । गमनाय मतिं कृत्वा वैदेहीं पुनरब्रवीत् ॥ ४७ ॥
तमरिघ्नं कृतात्मानं क्षिप्रं द्रक्ष्यसि राघवम् । लक्ष्मणं च धनुष्पाणिं लङ्काद्वारमुपागतम् ॥ ४८ ॥
नखदंष्ट्रायुधान्वीरान्सिंहशार्दूलविक्रमान् । वानरान्वारणेन्द्राभान्क्षिप्रं द्रक्ष्यसि संगतान् ॥ ४९ ॥

---

रा० टी०—सागरतरणशङ्कां निवारयन्नाह—तस्येति । मनःसंकल्पवत् संपातो द्रुतगमनं येषां ते हरयः तस्य सुग्रीवस्य निर्देशे स्थिताः सन्तीति शेषः एतेन वानरतरणविषये शङ्का न कार्येति ध्वनितम् ॥ ३९ ॥

गो० टी०—तस्येति । मनःसंकल्पसंपाताः मनोव्यापारतुल्यगमनाः । न सज्जते न विलम्बते ॥ ३९–३७ ॥

३६ ] ति० टी०—तदेव स्पष्टमाह—येषामिति । न सज्जते न प्रतिबद्धा भवति ॥ ३६ ॥

३७ ] ति० टी०—सागरैर्धराधरैश्च सहिता ॥ ३७ ॥

रा० टी०—तेषां पराक्रमं स्फुटयन्नाह—येषामिति । येषामुपर्यादिषु गतिर्न सज्जते ये च महत्सु कर्मसु न सीदन्ति तैर्वायुमार्गानुसारिभिः सागरधराधरसहिता भूमिः प्रदक्षिणीकृता । श्लोकद्वयमेकान्वयि ॥ ३६ ॥ ३७ ॥

३८ ] ति० टी०—प्रत्यवरो हीनबलपराक्रमः ॥ ३८ ॥

रा० टी०—मदिति । मद्विशिष्टा मत्तोऽधिकाः तुल्याश्च वनौकसः सुग्रीवसन्निधौ सन्ति मत्तः प्रत्यवरः हीनस्तत्र कश्चिन्नास्ति ॥ ३८ ॥

गो० टी०—मद्विशिष्टाश्चेति । प्रत्यवरः हीनः । पूर्वं चतुर्णामेवात्र गतिरिति विचारप्रकारमात्रमुक्तम् अत्र तु परमार्थः । यद्यपि बले हनुमानधिकः तथापि वेगे सुग्रीवसन्निहिता नीलादयः सर्वे तुल्या एवेति नानृतोक्तिः ॥३८–३९॥

३९ ] ति० टी०—एकोत्पातेनैकोत्प्लवनेन ॥ ४० ॥

रा० टी०—तेषामधिकत्वोक्तौ प्रयोजनमाह—अहमिति । तावत् यदि अहमिह प्राप्तः तर्हि महाबलाः प्राप्स्यन्तीति किं वक्तव्यम् । ननु तेषां बलवत्त्वे किं गमकमित्यत आह—हि यतः प्रकृष्टा नैव प्रेष्यन्ते इतरे नीचा एव प्रेष्यन्ते प्रेषणाभावस्तेषां बलवत्त्वे गमकमिति तात्पर्यम् ॥ ३९ ॥

४०–४२ ] ति० टी०—ननु भवत्वेवं हरीणामागमनम्, राघवयोः कथं तत्राह--ममेति । महासङ्घौ महासमुदाययुक्तौ ॥ ४१ ॥ ४२ ॥

रा० टी०—तदिति । एकोत्पातेन एकयोत्प्लुत्या ते वानरा लङ्कामेष्यन्ति अतः ते परितापेनालं न कर्तव्य इत्यर्थः शोको व्यपैतु अपगच्छतु ॥ ४० ॥

रा० टी०—रामलक्ष्मणोत्प्लवनशङ्कां निवारयन्नाह—ममेति । महासङ्घौ अतिसमूहविशिष्टौ नृसिंहौ रामलक्ष्मणौ मत्पृष्ठगतौ स्थितौ सन्तौ त्वत्सकाशमागमिष्यतः ॥ ४१ ॥

रा० टी०—ताविति । सायकैः शरैर्विधमिष्यतः विनाशयिष्यतः ॥ ४२ ॥

गो० टी०—तदलमिति । एकोत्पातेन एकयत्नेन ॥४०-४१

गो० टी०—तौ हीति । विधमिष्यतः दहिष्यतः ॥४२-४३

४३ ] ति० टी०—रघूणामानन्दजनकमपत्यम् ॥ ४३ ॥

रा० टी०—सेति । पुरीमयोध्याम् ॥ ४३ ॥

४४–४९ ] ति० टी०—कालकांक्षिणी दिवसगणनतत्परा ॥ ४४--४९ ॥

रा० टी०—तदिति । नचिरात् शीघ्रं रामं द्रक्ष्यसे तत् तस्मात् काङ्क्षिणी भव समाश्वसिहि च ॥ ४४ ॥

रा० टी०—निहत इति । त्वं रामेण समेष्यसि संगमं प्राप्स्यसि ॥ ४५ ॥

---

१ सत्त्वाविति गो. पाठः । २ पुरमिति गो. स्वामिति रा. पाठः । ३ ऽरिमित्रिति गो. पाठः । ४ यास्यसीति गो. पाठः । ५ उपस्थितमिति गो. पाठः ।

शैलाम्बुदनिकाशानां लङ्कामलयसानुषु । नर्दतां कपिमुख्यानामार्ये यूथान्यनेकशः ॥ ५० ॥
स तु मर्मणि घोरेण ताडितो मन्मथेषुणा । न शर्म लभते रामः सिंहार्दित इव द्विपः ॥ ५१ ॥
रुद मा देवि शोकेन मा भूत्ते मनसो भयम् । शचीव भर्त्रा शक्रेण सङ्गमेष्यसि शोभने ॥ ५२ ॥
रामाद्विशिष्टः कोऽन्योऽस्ति कश्चित्सौमित्रिणा समः।अग्निमारुतकल्पौ तौ भ्रातरौ तव संश्रयौ ॥ ५३ ॥
नास्मिंश्चिरं वत्स्यसि देवि देशे रक्षोगणैरध्युषितेऽतिरौद्रे ।
न ते चिरादागमनं प्रियस्य क्षमस्व मत्संगमकालमात्रम् ॥ ५४ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये सुन्दरकाण्डे एकोनचत्वारिंशः सर्गः ॥ ३९ ॥

## चत्वारिंशः सर्गः ।

जानकी मनःशिलया तिलकरचनं काकायेषिकामोचनं च प्रत्यभिज्ञानत्वेन हनुमते संदिश्याभिवाद्य प्रयाणोन्मुखं तं स्त्रीयदुरवस्थानिवेदनचोदनपूर्वकमाशिषा संयोज्य गन्तुमनुमनुते ।

श्रुत्वा तु वचनं तस्य वायुसूनोर्महात्मनः । उवाचात्महितं वाक्यं सीता सुरसुतोपमा ॥ १ ॥
त्वां दृष्ट्वा प्रियवक्तारं संप्रहृष्यामि वानर । अर्धसंजातसस्येव वृष्टिं प्राप्य वसुंधरा ॥ २ ॥

रा० टी०—क्षिप्रमिति ॥ ४६ ॥

रा० टी०—एवमिति । हनुमान् पुनरब्रवीत् ॥ ४७ ॥

रा० टी०—तद्वचनाकारमाह—तमित्यादिभिः । लङ्काद्वारमुपागतं प्राप्तम् ॥ ४८ ॥

रा० टी०—नखेति । तान् वानरान् क्षिप्रं द्रक्ष्यसि ॥४९॥

गो० टी०—तदिति । कालकांक्षिणी भव दिवसगणनायां तत्परा भवेत्यर्थः । नचिरात् अचिरात् ॥ ४४—४६ ॥

गो० टी०—एवमिति । पुनरब्रवीदिति । दार्ढ्याय पुनरुक्तिः ॥ ४७—४९ ॥

५० ] ति० टी०—यूथान्यनेकशः द्रक्ष्यसीति शेषः ॥५०॥

रा० टी०—शैलेति । शैलाम्बुदनिकाशानां शैलाम्बुदसदृशानां यूथानि द्रक्ष्यसीत्यनुकृष्यते ॥ ५० ॥

गो० टी०—शैलाम्बुदेति । द्रक्ष्यसीति शेषः ॥ ५०-५१ ॥

५१-५२ ] ति० टी०—रामस्य सर्वथा त्वत्प्राप्तिचिन्तैवास्ते इत्याह—स त्विति ॥ ५१ ॥ ५२ ॥

रा० टी०—स इति । मन्मथेषुणा मदनिवर्तकबाणसदृशेन शोकेनेत्यर्थः, ताडितो रामः सिंहार्दितो द्विपो हस्तीव शर्म न लभते ॥ ५१ ॥

रा० टी०—रुदेति । शक्रेण शचीव भर्त्रा सह सङ्गमेष्यसि अतो मा रुद रुदिहि ॥ ५२ ॥

गो० टी०—मा रुद इति । मा रुदः रोदनं मा कुरु ॥५२-५३

५३ ] ति० टी०—सौमित्रिणा समः कश्चित् । कोऽपि नास्तीति शेषः ॥ ५३ ॥

रा० टी०—नन्विहातिबलवन्तो राक्षसा इति कथं सङ्गम इत्यत आह—रामादिति । रामाद्विशिष्टः समश्च सौमित्रिणा समो विशिष्टश्च कोऽन्योस्ति न कोऽपीत्यर्थः, तौ भ्रातरौ तव संश्रयौ स्त इति शेषः प्रत्यासत्त्या तयोरेव तृतीयान्तत्वेन पञ्चम्यन्तत्वेन चान्वयः ॥ ५३ ॥

५४ ] ति० टी०—मत्संगमकालमात्रं मया रामस्य यः संगमस्तत्कालमात्रं क्षमस्व प्रतीक्षस्वेत्यर्थः ॥ ५४ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये सुन्दरकाण्डे एकोनचत्वारिंशः सर्गः ॥३९॥

रा० टी०—नेति । ते प्रियस्य चिरादागमनं न शीघ्रमेवागमनमित्यर्थः, अतः अस्मिन्देशे चिरं न वत्स्यसि अतः मत्संगमकालमात्रं क्षमस्व ॥ ५४ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ सुन्दरकाण्डे एकोनचत्वारिंशः सर्गः ॥ ३९ ॥

गो० टी०—नास्मिन्निति । मत्संगमकालमात्रं मम रामेण संगमकालमात्रम् ॥ ५४ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने एकोनचत्वारिंशः सर्गः ॥३९॥

१ ] ति० टी०—आत्महितमात्मदुःखोद्धारप्रयोजनम् ॥ १ ॥

रा० टी०—हनुमद्वचनश्रवणानन्तरं हनुमन्तं प्रति सीतोक्तिमाह—श्रुत्वेति । सीता वाक्यमुवाच ॥ १ ॥

गो० टी०—श्रुत्वेत्यादि ॥ १ ॥

२ ] ति० टी०—अर्धसंजातान्यर्धं वयःप्राप्तानि, ततः परं जलाभावादासन्नशोषाणि सस्यानि यस्याः सा यथा दैवात्संपन्नवृष्ट्या संपन्नसस्या भवति तथाहमपि प्राप्तजीवितनाशमृतोपमात्वद्दर्शनाद्धृतजीवितेति भावः ॥ २ ॥

१ ऽप्रियमिति गो. पाठः ।

यथा तं पुरुषव्याघ्रं गात्रैः शोकाभिकर्शितैः । संस्पृशेयं सकामाहं तथा कुरु दयां मयि ॥ ३ ॥
अभिज्ञानं च रामस्य दद्या हरिगुणोत्तम । क्षिप्तामिषीकां काकस्य कोपादेकाक्षिशातनीम् ॥ ४ ॥
मनःशिलायास्तिलको गण्डपार्श्वे निवेशितः । त्वया प्रणष्टे तिलके तं किल स्मर्तुमर्हसि ॥ ५ ॥
स वीर्यवान्कथं सीतां हृतां समनुमन्यसे । वसन्तीं रक्षसां मध्ये महेन्द्रवरुणोपम[1] ॥ ६ ॥
एष चूडामणिर्दिव्यो मया सुपरिरक्षितः[2] । एतं दृष्ट्वा प्रहृष्यामि व्यसने त्वामिवानघ ॥ ७ ॥
एष निर्यातितः श्रीमान्मया ते वारिसंभवः । अतः परं न शक्ष्यामि जीवितुं शोकलालसा ॥ ८ ॥
असह्यानि च दुःखानि वाचश्च हृदयच्छिदः । राक्षसैः[3] सह संवासं त्वत्कृते मर्षयाम्यहम् ॥ ९ ॥
धारयिष्यामि मासं तु जीवितं शत्रुसूदन । मासादूर्ध्वं न जीविष्ये त्वया हीना नृपात्मज ॥ १० ॥
घोरो राक्षसराजोऽयं दृष्टिश्च न सुखा मयि । त्वां च श्रुत्वा विपज्जन्तं न जीवेयमपि क्षणम् ॥ ११ ॥

रा० टी०—तदाकारमाह—त्वामित्यादिभिः । वृष्टिं वर्षणं प्राप्य अर्धसंजातसस्या वसुन्धरेव त्वां दृष्ट्वा प्रहृष्यामि ॥ २ ॥

गो० टी०—त्वामिति । अर्धसंजातसस्या अर्धोत्पन्नसस्या ॥ २–३ ॥

३ ] ति० टी०—सकामा तत्स्पर्शेच्छावती ॥ ३ ॥

रा० टी०—यथेति । सकामा उत्कटेच्छावती अहं यथा संस्पृशेयं तथा मयि दयां कुरु ॥ ३ ॥

४ ] ति० टी०—अभिज्ञानं चूडामण्यात्मकं दद्या देहि । तथा कोपात्काकस्यैकाक्षिशातनीमिषीकां क्षिप्त्वा काको रक्षित इत्यपरमभिज्ञानं दद्याः । श्रावयेत्यर्थः ॥ ४ ॥

रा० टी०—अभिज्ञानमिति । अभिज्ञानं चूडामणिं रामस्य रामाय दद्याः अभिज्ञानान्तरमाह—काकस्य एकाक्षिनाशिनीमिषीकां चाभिज्ञानं दद्या कथयेरित्यर्थः ॥ ४ ॥

गो० टी०—अभिज्ञानं चेति । काकस्यैकाक्षिशातनीं क्षिप्ताम् इषीकाम् इषीकतृणरूपमभिज्ञानं पूर्वोक्तं दद्याः । अन्यच्च वक्ष्यामीति भावः । तदेवाह—मन इति । तिलके पूर्वतिलके प्रणष्टे सति । गण्डपार्श्वे गण्डस्थले गण्डशैलपार्श्वे वा । मनःशिलायास्तिलकः मनःशिलाकृततिलकः । तत् मनःशिलातिलकनिर्माणं स्मर्तुमर्हसि । इदमप्यभिज्ञानं दद्या इति योजना ॥ ४–६ ॥

५ ] ति० टी०—अथाभिज्ञानान्तरमाह संदेशरूपेण—मनःशिलाया इति । पूर्वतने तिलके नष्टे सति त्वया रामेण मम गण्डपार्श्वे मनःशिलातिलको निवेशितः, तं किल । स्वकृततिलकमित्यर्थः । स्मर्तुमर्हसि । इति मयोक्तमिति ब्रूहीति शेषः ॥ ५ ॥

रा० टी०—मनः शिलाया इति । मम तिलके प्रनष्टे सति मनश्शिलायास्तिलकः गण्डपार्श्वे गण्डैकदेशे निवेशितः तं तिलकं स्मर्तुमर्हसि इदमप्यभिज्ञानं दद्या इति शेषः ॥ ५ ॥

६ ] ति० टी०—अथ केवलसंदेशान्तरमाह—स वीर्यवानिति । अनुमन्यसे । सहस इत्यर्थः ॥ ६ ॥

रा० टी०—स इति । स रामस्त्वं हृतां सीतां कथं समनुमन्यसे सहसे ॥ ६ ॥

७ ] ति० टी०—दिव्य एष चूडामणिरेतावत्कालं सुपरिरक्षितः, एतं व्यसने त्वामिव दृष्ट्वा प्रहृष्यामि । एतत्संनिधाने रक्षोभिभवासंभवादिति भावः ॥ ७ ॥

रा० टी०—एष इति । एषः पित्रा दत्तः चूडामणिः मया संरक्षितः । तत्र हेतुः व्यसने राक्षसकर्तृकपीडायां सत्यां त्वामिव एतं मणिं दृष्ट्वा प्रहृष्यामि ॥ ७ ॥

गो० टी०—एषइति । प्रहृष्यामीति । अस्य चूडामणेस्त्वया बहुशो लालितत्वेन त्वत्स्मारकत्वादिति भावः ॥ ७ ॥

८ ] ति० टी०—स एष निर्यातितो दत्तः । त्वत्प्रत्यभिज्ञानार्थमिति शेषः । अतः शीघ्रमागमने एव कुशलम्, अन्यथा परमं दुःखमिति भावः ॥ ८ ॥

रा० टी०—एष इति । वारिसंभवः एषः मणिः मया निर्यातितः त्वत्प्रत्यभिज्ञानार्थं प्रेपितः अतः परम् अवधिकालादुत्तरं शोकलालसा शोकाक्रान्तचित्ताहं जीवितुं न शक्ष्यामि॥८॥

गो० टी०—एष निर्यातित इति । वारिसंभवः । रत्नं हि रत्नाकरे उत्पद्यते । अतः परं मासात्परम् ॥ ८–१० ॥

९–१० ] ति० टी०—त्वत्कृते त्वत्प्राप्तिप्रत्याशया । मर्षयामि सहामि ॥ ९ ॥ १० ॥

रा० टी०—असह्यानीति । त्वत्कृते त्वत्प्राप्तिनिमित्तं दुःखादीनि मर्षयामि ॥ ९ ॥

रा० टी०—धारयिष्यामीति । मासादूर्ध्वम् अवधिभूतदिनात्परं न जीविष्ये जीवितास्मि ॥ १० ॥

११ ] ति० टी०—यतोऽयं घोरस्तस्य दृष्टिश्च, चाद्बुद्धिः, न सुखा अवधिकालादूर्ध्वंकृतविनाशनिश्चया, अतस्तत्पूर्वमेव मरणौचित्यादवधिकालस्याधिकत्वेऽपि मासादूर्ध्वमेव न जीविष्यामि । किं च त्वां विपज्जन्तं विलम्बं कुर्वन्तं यदि शृणुयां तदा तथा श्रुत्वा मासादर्वागेव क्षणमपि न जीवेयमित्युक्तमिति ब्रूहीति शेषः ॥ ११ ॥



१ उपमः इति गो. पाठः । २ समिति रा. पाठः । ३ राक्षसीनां सुघोराणामिति गो. पाठः ।

वैदेह्या वचनं श्रुत्वा करुणं साश्रुभाषितम् । अथाब्रवीन्महातेजा हनूमान्मारुतात्मजः ॥ १२ ॥
त्वच्छोकविमुखो रामो देवि सत्येन ते शपे । रामे शोकाभिभूते तु लक्ष्मणः परितप्यते ॥ १३ ॥
दृष्टा कथंचिद्भवती न कालः परिदेवितुम् । इमं मुहूर्तं दुःखानामन्तं द्रक्ष्यसि भामिनि ॥ १४ ॥
तावुभौ पुरुषव्याघ्रौ राजपुत्रावनिन्दितौ । त्वद्दर्शनकृतोत्साहौ लङ्कां भस्मीकरिष्यतः ॥ १५ ॥
हत्वा तु समरे क्रूरं रावणं सहबान्धवैः । राघवौ त्वां विशालाक्षि स्वां पुरीं प्रापयिष्यतः ॥ १६ ॥
यत्तु रामो विजानीयादभिज्ञानमनिन्दिते । प्रीतिसंजननं भूयस्तस्य त्वं दातुमर्हसि ॥ १७ ॥
साब्रवीद्दत्तमेवाहो मयाभिज्ञानमुत्तमम् । एतदेव हि रामस्य दृष्ट्वा यत्नेन भूषणम् ॥ १८ ॥
श्रद्धेयं हनुमन्वाक्यं तव वीर भविष्यति । स तं मणिवरं गृह्य श्रीमान्प्लवगसत्तमः ॥ १९ ॥
प्रणम्य शिरसा देवीं गमनायोपचक्रमे । तमुत्पातकृतोत्साहमवेक्ष्य हरियूथपम् ॥ २० ॥
वर्धमानं महावेगमुवाच जनकात्मजा । अश्रुपूर्णमुखी दीना बाष्पगद्गदया गिरा ॥ २१ ॥
हनूमन्सिंहसंकाशौ भ्रातरौ रामलक्ष्मणौ । सुग्रीवं च सहामात्यं सर्वान्ब्रूया अनामयम् ॥ २२ ॥
यथा च स महाबाहुर्मां तारयति राघवः । अस्माद्दुःखाम्बुसंरोधात्त्वं समाधातुमर्हसि ॥ २३ ॥
इदं च तीव्रं मम शोकवेगं रक्षोभिरेभिः परिभर्त्सनं च ।
ब्रूयास्तु रामस्य गतः समीपं शिवश्च तेऽध्वास्तु हरिप्रवीर ॥ २४ ॥

रा० टी०–घोर इति । अयं राक्षसराजः घोरः अतिक्रूरः अत एव मयि सुखासुखहेतुभूता दृष्टिर्न हन्तुमेवेच्छतीत्यर्थः एतेन जीवनं दुर्लभमिति सूचितम् । हेत्वन्तरमाह–विपज्जन्तं त्वां श्रुत्वा क्षणमपि न जीवेयं जीवितुमिच्छेयम् ॥ ११ ॥

गो० टी०–घोर इति । विपज्जन्तं विलम्बमानम् ११–१३

१२ ] ति० टी०–वचनमुक्तसंदेशरूपम् ॥ १२ ॥

रा० टी०–वैदेह्या इति । हनूमानब्रवीत् ॥ १२ ॥

१३] ति०टी०–त्वच्छोकविमुखस्त्वत्स्थित्यपरिज्ञानजशोकेन त्वदुद्धारप्रवृत्तिविमुखः, न तु ज्ञात्वेति सत्येन ते शपे ॥१३॥

रा० टी०–तद्वचनाकारमाह–त्वदित्यादिभिः । अयं पूर्वमपि पठितो व्याख्यातश्च एवमुत्तरश्लोका अपि ॥ १३ ॥

१४–१६ ] ति० टी०–कथंचिद्भवती दृष्टा, अतः परं शोचितुं न कालः। इमं मुहूर्तम्। अस्मिन्नचिरकाले इत्यर्थः॥१४–१६

रा० टी०–दृष्टेति ॥ १४ ॥

रा० टी०–ताविति ॥ १५ ॥

रा०टी०–हत्वेति ॥ १६ ॥

गो० टी०–कथंचिदिति । इमं मुहूर्तम् अस्मिन्मुहूर्ते ॥ १४–२३ ॥

१७–१८ ] ति० टी०–यत्त्वभिज्ञानं राम एव विशिष्य जानीयाद्यच्च तस्य प्रीतिसंजननं तद्भूयः पुनरधिकं च दातुमर्हसि ॥ १७ ॥ १८ ॥

रा० टी०–यदिति । प्रीतिसंजननं प्रीत्युत्पादकं यदभिज्ञानं भूयो विजानीयात् तत् त्वं भूयो दातुमर्हसि ॥ १७ ॥

रा० टी०–सेति । उत्तममभिज्ञानं भूषणं मया दत्तमेव अतः एतदेव दृष्ट्वा रामस्य श्रद्धेयं तव वाक्यं भविष्यति इति सा सीता अब्रवीत् । सार्धश्लोक एकान्वयी ॥ १८ ॥

१९ ] ति० टी०–श्रद्धेयं विश्वसनीयम् ॥ १९ ॥

रा० टी०–स इति । स हनूमान् गमनायोपचक्रमे । अर्धद्वयमेकान्वयि ॥ १९ ॥

२०–२१]ति०टी०–उत्पाते उत्प्लवने कृतोत्साहम् २०-२१

रा० टी०–तमिति । उत्पाते सागरोत्प्लवने कृतः उत्साहो येन अत एव वर्धमानं हनूमन्तम् अश्रुपूर्णमुखी जनकात्मजा उवाच । सार्धश्लोक एकान्वयी ॥ २० ॥ २१ ॥

२२ ] ति० टी०–अनामयमारोग्यम् ॥ २२ ॥

रा० टी०–तद्वचनाकारमाह–हनूमन्निति । हे हनूमन् अनामयं कुशलं रामादीन् ब्रूयाः २२ ॥

२३–२४ ] ति० टी०–त्वं समाधातुमित्यस्य तथेत्यादिः। समाधानं संविधानम्, ‘ अथापि स महाबाहुः ’ इति पाठे यथेत्यपि पूरणीयमेव । यद्यपि श्रुतवृत्तान्तः स्वयमेव यतिष्यति तथापि त्वमपि यथा मां शीघ्रं तारयसि तथा संविधानं कुर्वित्यर्थः ॥ २३ ॥ २४ ॥

रा० टी०–यथेति । अयं पूर्वं व्याख्यातः ॥ २३ ॥

रा० टी०–इदमिति । रामस्य समीपं गतस्त्वं मम शोकवेगं रक्षोभिः परिभर्त्सनं च ब्रूयाः ॥ २४ ॥

गो० टी०–इमं चेति । शिवश्च तेऽध्वास्तु हरिप्रवीरेति । शिवः अव्याहत इत्यर्थः ॥ २४ ॥

१ तथेति गो. पाठः । २ दुःखेति गो. पाठः । ३ क्रूरमिति गो. पाठः । ४ बान्धवामिति गो. पाठः । ५ प्रापयिष्यत इति गो. पाठः । ६ इतीति गो. पाठः । ७ मत्केशेति गो. पाठः । ८ [illegible]मिति गो. पाठः । ९ [illegible]मिति गो. पाठः । १० [illegible]मिति गो. पाठः ।

स राजपुत्र्या प्रतिवेदितार्थः कपिः कृतार्थः परिहृष्टचेताः ।
तदल्पशेषं प्रसमीक्ष्य कार्यं दिशं ह्युदीचीं मनसा जगाम ॥ २९ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये सुन्दरकाण्डे चत्वारिंशः सर्गः ॥ ४० ॥

---

## एकचत्वारिंशः सर्गः ।

मारुतिर्जानक्या गृहीतसंदेशोऽपि राक्षसबलपरीक्षारूपं कार्यमवशिष्टं मन्यमानस्तदुपायत्वेन प्रमदावनभञ्जनं निश्चित्य तदकरोत् ॥

स च वाग्भिः प्रशस्ताभिर्गमिष्यन्पूजितस्तया । तस्माद्देशादपाक्रम्य चिन्तयामास वानरः ॥ १ ॥
अल्पशेषमिदं कार्यं दृष्टेयमसितेक्षणा । त्रीनुपायानतिक्रम्य चतुर्थ इह दृश्यते ॥ २ ॥

---

२५ ] ति० टी०–तत्कार्यं लङ्कागमनप्रयोजनमल्पशेषम् । देवीदर्शनरूपस्य महतः प्रधानकृत्यस्य निष्पन्नत्वात्परबलदर्शनरूपस्यानुषङ्गिकत्वादल्पशेषत्वमित्याशयः ॥ २९ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये सुन्दरकाण्डे चत्वारिंशः सर्गः ॥ ४० ॥

रा० टी०–स इति । राजपुत्र्याः प्रतिपादितः उक्तः अर्थो यस्मै अत एव कृतार्थः अत एव परिहृष्टचेताः स हनुमान् कार्यम् अल्पशेषं किञ्चिदवशिष्टं प्रसमीक्ष्य विचार्य उदीचीं दिशं मनसा जगाम ॥ २९ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ सुन्दरकाण्डे चत्वारिंशः सर्गः ॥ ४० ॥

गो० टी०–स इति । अल्पावशेषम् अल्पावशिष्टम् । प्रसमीक्ष्य विचार्य ॥ २९ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने चत्वारिंशः सर्गः ॥४०॥

---

१ ] ति० टी०–तस्माद्देशादपाक्रम्य सीतासमीपात्किंचिद्दूरं गत्वा ॥ १ ॥

रा० टी०–प्रस्थानानन्तरकालिकां हनुमतश्चिन्तामाह–स इत्यादिभिः । तया सीतया प्रशस्ताभिर्वाग्भिः पूजितः स हनुमान् गमिष्यन् सन् तस्मात् देशादपक्रम्य निर्गत्य चिन्तयामास ॥ १ ॥

गो० टी०–स चेत्यादि । अल्पेति । अभिगम्य तु वैदेहीं निलयं रावणस्य चेत्युक्तकार्यद्वये सीतादर्शनरूपं कार्यं जातम् । इदं कार्यं रावणनिलयपरिज्ञानरूपम् । अल्पशेषम् अल्पावशिष्टम् । सान्तःपुरलङ्कायाः सम्यक् परिज्ञातत्वेऽपि राक्षसबलाबलरावणहृदयापरिज्ञानात्कार्यस्याल्पशेषत्वोक्तिः । इह राक्षसबलाबलरावणहृदयपरिज्ञानरूपकार्ये । त्रीनुपायानतिक्रम्य सामदानभेदानतिक्रम्य चतुर्थो लक्ष्यते साधनतया दण्ड एव दृश्यत इत्यर्थः । उपपत्तिपूर्वकमेतदेव विवृणोति—न सामेति । अनित्यो विजयो यस्माद्दृश्यते युद्ध्यमानयोः । पराजयश्च संग्रामे तस्माद्युद्धं विवर्जयेत् । इति युद्धस्याव्यवस्थितफलकत्वेऽपि सर्वं बलवतः पथ्यमिति न्यायेन सर्वातिशायिबलपराक्रमस्य मम पराजयप्रसङ्ग एव नास्तीत्यभिप्रायेणाह—पराक्रम इति । मम तु इह रक्षोविषये पराक्रम एव रोचत इति संबन्धः । अभिगम्य तु वैदेहीं निलयं रावणस्य चेत्यनुज्ञातस्यातिरिक्तकार्यकरणे दोषमाशङ्क्य परिहरति–कार्य इति । कार्ये विहिते कर्तव्ये बहूनि कार्याणि । न हीति । अल्पस्यापि कर्मणः एको हेतुः साधको न किमुत महतः कर्मण इति भावः । बहुधा बहुभिर्हेतुभिः । पूर्वोक्तसमर्थनायाह—इहैवेति । अहमिहैव । परात्मसंमर्दविशेषतत्त्ववित्परात्मनोर्युद्धतारतम्यतत्त्ववित् । कृतनिश्चयः कृतबलाबलनिश्चयः सन् यदि प्लवगेश्वरालयं व्रजेयं ततः । भर्तृशासनम् सीतादर्शनरावणनिलयसम्यक्परिज्ञानविषयं शासनम् । तावत्साकल्येन कृतं स्यात् । अन्यथा राक्षसबलाबलं कीदृशमिति भर्त्रा पृष्टे निरुत्तरः स्यामिति भावः । कथं न्विति । युद्धं कथं सुखागतं सुखेन प्राप्तं भवेत्तथा कर्तव्यमित्यर्थः । युद्धस्य फलमाह—तथैवेत्यादिना सार्धश्लोकेन । तथैव खलु युद्धकरणे खलु स दशाननः । रणे आत्मबलं स्वपक्षबलं मां च । सारवत् मानयेत्परिच्छिन्द्यात् । बलप्रयायिना सेनान्या सह वर्तत इति सबलप्रयायी तम् । तस्य हृदिस्थितं मतं सीताविषयाध्यवसायं बलं च मत्वा । सुखेन इतः अस्मात् स्थानात् पुनः व्रजे व्रजिष्यामि । इदमिति । नेत्रमनःकान्तं वर्तत इति शेषः । तत इति । समादेक्ष्यति नियोजयिष्यति । इदम् अव्यवहितोत्तरकालिकम् । कपीश्वरालयमित्यनन्तरमितिकरणं द्रष्टव्यम् । इति चिन्तयामासेत्यन्वयः ॥ १–१३ ॥

२ ] ति० टी०–चिन्तयामासेत्युक्तां चिन्तां दर्शयति—अल्पशेषमिति । इयं सीता दृष्टेतीदं प्रधानकार्यं निष्पन्नमिति आनुषङ्गिकं परबलदर्शनमत्रशिष्टमित्यल्पशेषत्वम् । इह कार्ये परबलज्ञानलक्षणे त्रीनुपायान्सामादीनतिक्रम्य चतुर्थो दण्ड एव साधनत्वेन दृश्यते ॥ २ ॥

रा० टी०–चिन्ताकारमाह–अल्पेत्यादिभिः । इयं सीता

---

१ अल्पावशेषमिति गो. पाठः । २ अपक्रम्येति गो. पाठः ।

न साम रक्षःसु गुणाय कल्पते न दानमर्थोपचितेषु युज्यते ।
न भेदसाध्या बलदर्पिता जनाः पराक्रमस्त्वेव ममेह रोचते ॥ ३ ॥
न चास्य कार्यस्य पराक्रमादृते विनिश्चयः कश्चिदिहोपपद्यते ।
हतप्रवीराश्च रणे तु राक्षसाः कथंचिदीयुर्यदिहाद्य मार्दवम् ॥ ४ ॥
कार्ये कर्मणि [2]निर्वृत्ते यो बहून्यपि साधयेत् । पूर्वकार्याविरोधेन स कार्यं कर्तुमर्हति ॥ ५ ॥
नह्येकः साधको हेतुः स्वल्पस्यापीह कर्मणः । यो ह्यर्थं बहुधा वेद स समर्थोऽर्थसाधने ॥ ६ ॥
इहैव तावत्कृतनिश्चयो ह्यहं व्रजेयमद्य प्लवगेश्वरालयम् ।
परात्मसंमर्दविशेषतत्त्ववित्ततः कृतं स्यान्मम भर्तृशासनम् ॥ ७ ॥

दृष्टा प्रधानकार्यं सिद्धमित्यर्थः इदं परबलदर्शनरूपं कार्यमल्पशेषं स्वल्पं सत् शिष्यते इह परबलदर्शनरूपकार्ये तु यतः त्रीन् सामादीन् उपायान् अतिक्रम्य त्यक्त्वा चतुर्थो दण्ड एव उपायः दृश्यते ॥ २ ॥

३ ] ति० टी०—तत्र युक्तिमाह—नेति। ऋजुषु साम फलाय न शूरेषु तदाह—रक्षःस्विति । बलदर्पिता भेदसाध्या न। भेद उपायः। बलवन्तो हि कुतोऽप्यनिष्टं न गणयन्तीत्यर्थः॥३॥

रा० टी०—तदेवोपपादयन्नाह—नेत्यादिभिः । रक्षस्सु साम गुणाय न कल्पते तेषामतिक्रूरत्वात्सामानर्हत्वमित्यर्थः । अर्थोपचितेषु अतिधनवत्सु दानं गुणाय न कल्पते तेषामल्पधनाकाङ्क्षाभावादिति भावः । बलदर्पिता जना भेदसाध्या भेदेनानुकूल्यं प्रापयितुं न शक्या अत एव राक्षसगर्वनिवारकः पराक्रम एव मम रोचते ॥ ३ ॥

४ ] ति० टी०—अस्य कार्यस्य परबलाशयपरिज्ञानरूपस्य सर्वातिशायिपराक्रमवतो मम पराजय एव नास्तीत्याशयेनाह—पराक्रमादृते इति । विनिश्चयो निश्चितोपायः । स्वबलप्रकाशने प्रयोजनान्तरमप्यस्तीत्याह—हतेति । अथ हताः प्रवीराः श्रेष्ठा येषां ते राक्षसा यद्यस्मादिह भाविनि रणे मार्दवमेकेनैवैवं पराक्रमः कृतस्तादृशैरनेकैः कथमस्माकं जयाशेति रणप्रवृत्तिराहित्यं प्राप्नुयुः, अतः पराक्रमात्परबलस्य मनोभङ्गरूपं कार्यं सिद्ध्यतीत्याशयः ॥ ४ ॥

रा०टी०—नेति । पराक्रमात् ऋते विना अस्य सीताप्राप्तिरूपस्य कार्यस्य विनिश्चयः विनिश्चायकः कश्चित्सामादिर्नोपपद्यते अतः इहास्मिन् समये राक्षसाः कथञ्चित् केनाप्युपायेन यदि हतप्रवीराः तर्हि मार्दवं किंचिन्नम्रतामीयुः । एतेन नम्रीभूय यदि सीतां रामाय समर्पयेत्तर्हि राक्षसकुलविध्वंसो न भवेदिति सूचितं तेन हनुमतो दयालुत्वं व्यक्तम् ॥ ४ ॥

५ ] ति० टी०—ननु स्वामिसंदिष्टकार्यातिरिक्तकार्यकरणे दोषः, स्वामिना हि ‘ अभिगम्य तु वैदेहीं निलयं रावणस्य च' इत्येतावदेव संदिष्टमित्याशङ्क्य संदिष्टकार्याविरोधेन स्वामिहितं कार्यान्तरसाधनं दूतस्यालंकार इत्याह—कार्ये इति । कार्ये प्रधानकार्ये निर्वृत्ते । स कार्यं कर्तुमर्हति, न तु संदिष्टमात्रस्य कथंचित्साधक इत्याशयः ॥ ५ ॥

रा० टी०—नन्वभिगम्य तु वैदेहीं निलयं रावणस्य चेत्यादिना दर्शनमात्रनियुक्तेन त्वया नाज्ञापितराक्षसवधः किमर्थमभिकाङ्क्ष्यते इत्यत आह—कार्य इति । कार्ये स्वाम्याज्ञप्तकर्तव्ये कर्मणि निर्वृत्ते सिद्धे सति यो बहूनि कृतकार्यपोषकतया विपुलकार्याणि साधयेत् साधितुमिच्छेत् सः पूर्वकार्याविरोधेन साधितकार्यप्रातिकूल्यराहित्येन कार्यं कर्तुमर्हति ॥ ५ ॥

६ ] ति० टी०—उक्तमेव विवृणोति—नहीति । यस्तु स्वल्पस्यापि कर्मणोऽतिशयितयत्नेन सिद्धिहेतुर्भवत्यसावेको मुख्यः साधको हेतुर्न भवति, अपि तु यो ह्यर्थं प्रयोजनमल्पेन यत्नेन बहुधा कर्तुं वेद स एवार्थसाधने समर्थः ॥ ६ ॥

रा० टी०—ननु कार्ये निष्पन्ने क्रियान्तरकरणं निरर्थकमित्यत आह—नहीति । स्वल्पस्यापि कर्मणः रामकार्यस्य सीताप्राप्तेरित्यर्थः, साधको हेतुरेक एव न बहवः सन्तीत्यर्थः । सीतादर्शनमात्रेण रामकार्यसिद्धिर्न भवतीति तात्पर्यम् अतः अर्थं रामकार्यसाधकहेतुं बहुधा बहुप्रकारेण यो वेद स एव अर्थसाधने समर्थः ॥ ६ ॥

७ ] ति० टी०—तस्मादन्यदपि स्वाम्यभीष्टं कृत्वैव गन्तव्यमित्याह—इहैवेति । यद्यप्यहमिहैव सीतान्वेषण एव तावत्प्रथमं कृतनिश्चयः, तथापि यदि परात्मसंमर्दविशेषतत्त्ववित्परस्यात्मनः स्वस्य च संमर्दे युद्धे यो विशेषस्तत्तत्त्वविद्भूत्वा यदि प्लवगेश्वरालयं सुग्रीवालयं व्रजेयं ततस्तदा भर्तृशासनं सम्यक्कृतं स्यात् । अन्यथा राक्षसबलं कीदृशमिति पृष्टे निरुत्तरः स्यामिति भावः ॥ ७ ॥

रा० टी०—इहेति । इह अस्मिन्नागमने एव परमात्मसंमर्दविशेषतत्त्ववित् परस्य शत्रोः आत्मनो मनसः यः संमर्दविशेषः आत्यन्तिको ध्वंसः तस्य तत्त्ववित् याथार्थ्यवेदिता अत एव कृतः निश्चयः जानकीप्राप्तिविषयकनिश्चयविशेषो येन सोऽहं यदि व्रजेयं ततस्तदा भर्तृशासनं कृतं स्यात् अन्यथा भर्तृशासनकरणे न्यूनता स्यादिति तात्पर्यम् ॥ ७ ॥

१ एवेति गो. पाठः । २ निर्दिष्टे इति गो. पाठः । ३ यदि व्रजेयमिति गो. पाठः ।

कथं नु खल्वद्य भवेत्सुखागतं प्रसह्य युद्धं मम राक्षसैः सह ।
तथैव खल्वात्मबलं च सारवत्समानयेन्मां च रणे दशाननः ॥ ८ ॥
ततः समासाद्य रणे दशाननं समन्त्रिवर्गं सबलं सयायिनम् ।
हृदि स्थितं तस्य मतं बलं च सुखेन मत्वाहमितः पुनर्व्रजे ॥ ९ ॥
इदमस्य नृशंसस्य नन्दनोपममुत्तमम् । वनं नेत्रमनःकान्तं नानाद्रुमलतायुतम् ॥ १० ॥
इदं विध्वंसयिष्यामि शुष्कं वनमिवानलः । अस्मिन्भग्ने ततः कोपं करिष्यति स रावणः ॥ ११ ॥
ततो महत्साश्वमहारथद्विपं बलं समानेष्यति राक्षसाधिपः ।
त्रिशूलकालायसपट्टिशायुधं ततो महद्युद्धमिदं भविष्यति ॥ १२ ॥
अहं च तैः संयति चण्डविक्रमैः समेत्य रक्षोभिरभङ्गविक्रमः ।
निहत्य तद्रावणचोदितं बलं सुखं गमिष्यामि हरीश्वरालयम् ॥ १३ ॥
ततो मारुतवत्क्रुद्धो मारुतिर्भीमविक्रमः । ऊरुवेगेन महता द्रुमान्क्षेप्तुमथारभत् ॥ १४ ॥
ततस्तद्धनुमान्वीरो बभञ्ज प्रमदावनम् । मत्तद्विजसमाघुष्टं नानाद्रुमलतायुतम् ॥ १५ ॥

---

८ ] ति० टी०—एवं निश्चितार्थो युद्धप्रवृत्तिप्रकारं चिन्तयति—कथं न्विति । अद्य खलु ममेहागतमागमनं सुखागतं सुखफलकमागमनं कथं भवेत्, तथा राक्षसैः सह प्रसह्य स्वयमेव बलात्कृत्य युद्धं च कथं मम भवेत्, तथा तथैव करणे सति सारवदूर्जितं स्वबलं मां च स दशाननः कथं मानयेच्छ्लाघयेत् । यद्वा तथैव युद्धकरणे खलु दशानन आत्मबलं मां च सारवत्समानयेत्सम्यक्परिच्छिन्द्यादित्यर्थेन युद्धफलमुक्तम् ॥ ८ ॥

रा० टी०—उपायमेव चिन्तयति-कथमिति । राक्षसैः सह मम युद्धं कथं भवेत् तथा सारवद्बलवत् आत्मबलं स्वसेनां मां च रणे दशाननः स रावणः कथं मानयेत् प्रशंसेत् ॥ ८ ॥

९ ] ति० टी०—ततो मद्बलवशादेव मां रणे समासाद्य वर्तमानं सबलं सयायिनं ससारथिम् । अन्तर्भावितण्यर्थाद्यातेर्णिनौ यापयिता यायी सारथिस्तेन सहितं रावणं ज्ञात्वा हृदि स्थितं तस्य मतमभीष्टं बलं च सुखेनाक्लेशतो मत्वा ज्ञात्वा पुनरितो व्रजे व्रजिष्ये । 'सबलं सयायिनम्' इति पाठः । 'सबलप्रयायिनम्' इत्याधुनिककल्पितः पाठः ॥ ९ ॥

रा० टी०—युद्धेच्छायां प्रयोजनमाह-तत इति । ततः तस्मिन् रणे सयायिनं ससारथिं दशाननं समासाद्य प्राप्य तस्य रावणस्य हृदि स्थितं मतमभिप्रायं बलं च मत्वा ज्ञात्वा इतः लङ्कायाः पुनर्व्रजे ॥ ९ ॥

१०-११] ति० टी०—अथ प्रसह्य रणप्रवर्तनोपायं चिन्तयति—इदमिति । अस्येदं वनं नेत्रमनःकान्तं भवति, अत इदं विध्वंसयामि ॥ १० ॥ ११ ॥

रा० टी०—विचारेण निश्चितमाह-इदमिति । नानाद्रुमलतायुतम् इदं वनम् अस्य रावणस्य मनःकान्तं मनसः प्रियमस्तीति शेषः ॥ १० ॥

रा० टी०—इदमिति । इदं वनं शुष्कं वनमनल इव विध्वंसयिष्यामि अस्मिन् भग्ने सति रावणः कोपं करिष्यति यदि त्वेतच्छ्लोकघटकस्येदमित्यस्य कामदमित्यर्थस्तदा पूर्वस्यापीहैवान्वयः एवं च पूर्वत्रास्तेरध्याहारस्य न प्रयोजनम् ॥ ११ ॥

१२ ] ति० टी०—समानेष्यति मां प्रति युद्धाय प्रापयिष्यति । महद्युद्धं मन्मनस्तोषकृत् ॥ १२ ॥

रा० टी०—तत इति । ततः वनविध्वंसानन्तरं साश्वमहारथद्विपम् अश्वमहारथद्विपसहितं त्रिशूलादीनि आयुधानि यस्मिन् तन्महद्बलं राक्षसाधिपः समानेष्यति अत एव ततस्तस्मिन् समये महद्युद्धं भविष्यति ॥ १२ ॥

१३ ] ति० टी०—ततो हरीश्वरालयं गमिष्यामीति चिन्तयामासेत्यन्वयः ॥ १३ ॥

रा० टी०—अहमिति । चण्डविक्रमैः रक्षोभिः संयति संग्रामे समेत्य संयुध्य रावणचोदितं तद्बलं निहत्य हरीश्वरालयं सुखं गमिष्यामि ॥ १३ ॥

१४-१५ ] ति० टी०—तत एवंनिश्चयानन्तरम् ॥ १४-१५ ॥

रा० टी०—तत इति । ततोऽनन्तरं क्रुद्धः आश्रितकोपः भीमविक्रमो मारुतिः महता ऊरुवेगेन मारुतवत् द्रुमान् क्षेप्तुमारभत् ॥ १४ ॥

रा० टी०—तत इति । ततोऽनन्तरं प्रमदावनं प्रमदाकुलवनिकां बभञ्ज ॥ १५ ॥

गो० टी०—तत इति । ततः तेन चिन्तितेन हेतुना ॥ १४ ॥

---

१ समानयेदिति गो. पाठः । २ सबलप्रयायिनमिति गो. पाठः । ३ दशानन इति गो. पाठः । ४ समादेक्ष्यतीति गो. पाठः । ५ त्विति गो. पाठः । ६ असह्येति गो. पाठः । ७ कपीति गो. पाठः ।

तद्वनं मथितैर्वृक्षैर्भिन्नैश्च सलिलाशयैः । चूर्णितैः पर्वताग्रैश्च बहुधा प्रियदर्शनैः ॥ १६ ॥
नानाशकुन्तविरुतैः प्रभिन्नसलिलाशयैः । ताम्रैः किसलयैः क्लान्तैः क्लान्तद्रुमलतायुतैः ॥ १७ ॥
न बभौ तद्वनं तत्र दावानलहतं यथा । व्याकुलावरणा रेजुर्विह्वला इव ता लताः ॥ १८ ॥
लतागृहैश्चित्रगृहैश्च सादितैर्व्यालैर्मृगैरार्तरवैश्च पक्षिभिः ।
शिलागृहैरुन्मथितैस्तथा गृहैः प्रनष्टरूपं तदभून्महद्वनम् ॥ १९ ॥
सा विह्वलाशोकलताप्रताना वनस्थली शोकलताप्रताना ।
जाता दशास्यप्रमदावनस्य कपेर्बलाद्धि प्रमदावनस्य ॥ २० ॥
ततः स कृत्वा जगतीपतेर्महान्महद्व्यलीकं मनसो महात्मनः ।
युयुत्सुरेको बहुभिर्महाबलैः श्रिया ज्वलंस्तोरणमाश्रितः कपिः ॥ २१ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये सुन्दरकाण्डे एकचत्वारिंशः सर्गः ॥ ४१ ॥

---

गो० टी०—ततस्त्विति । प्रमदावनम् अन्तःपुरवनम् । प्रमदावनमन्तःपुरोचितमित्यमरः ॥ १९ ॥

१६-१७ ] ति० टी०—पर्वताग्रैः क्रीडापर्वताग्रैः । उपलक्षितमिति शेषः ॥ १६ ॥ १७ ॥

रा० टी०—तदिति । मथितैः सलिलाशयैर्भिन्नैर्भञ्जितैर्वृक्षैश्च चूर्णितैः पर्वताग्रैश्च तद्वनमप्रियदर्शनं बभूव ॥ १६ ॥

रा० टी०—नानेति । नानाशकुन्तविरुतैः पक्षिणामुत्कटशब्दैः प्रभिन्नसलिलाशयैश्च क्लान्तैर्म्लानैः किसलयैश्च क्लान्तद्रुमलतानामयुतैश्च उपलक्षितं दावानलहतमिव तद्वनं तत्र तस्मिन् समये न बभौ । सार्धश्लोक एकान्वयी ॥ १७ ॥

गो० टी०—तद्वनमिति । पर्वताग्रैः क्रीडापर्वताग्रैः१६॥१७

१८ ] ति० टी०—व्याकुलं स्रस्तमावरणं यासां ताः, अत एव विह्वलाः स्त्रिय इव ता लता रेजुः ॥ १८ ॥

रा० टी०—व्याकुलेति । व्याकुलानि संचलितानि आवरणानि यासां ताः लताः विह्वला नार्य इव रेजुः ॥ १८ ॥

गो० टी०—व्याकुलावरणा इति । व्याकुलावरणाः आवरणादुपप्लवाद्व्याकुलाः विह्वलाः स्त्रिय इव ॥ १८ ॥

१९ ] ति० टी०—सादितैर्विशीर्णैः । व्यालैः शार्दूलैः ॥१९॥

रा० टी०—लतेति । सादितैर्विध्वंसितैः लतागृहादिभिः आर्तः रवो येषां तैः व्यालैः शार्दूलैः पक्षिभिश्च उन्मथितैः प्रचालितैः शिलागृहैः गृहैस्तदितरनिर्मितभवनैश्च प्रनष्टरूपं तन्महद्वनमभूत् ॥ १९ ॥

गो० टी०—लतागृहैरित्यादि । व्यालमृगैः श्वापदादिहिंस्रमृगैः निर्धुतैः पीडितैः गृहैः केवलगृहैः ॥ १९ ॥

२० ] ति० टी०—प्रमदावनस्यान्तःपुरविहारोचितवनस्य । 'स्यादेतदेव प्रमदवनमन्तःपुरोचितम्' इत्यमरः । दशास्यस्य प्रमदानां स्त्रीणां कामसंवर्धनद्वारावनस्य रक्षकस्यास्य वनस्य सा विह्वलाशोकलताप्रताना चञ्चलाशोकलतासमूहवती, वनस्थली तृणगुल्मलताजलाशयादियुक्ता भूमिः । कपेर्बलाच्छोच्यत इति शोका शोच्यलताप्रताना जाता द्रष्टृचित्तशोकजनिका जातेत्यर्थः ॥ २० ॥

रा० टी०—सेति । विह्वलाः अशोकलताप्रतानाः विस्तृताशोकलताः यस्यां सा वनस्थली प्रमदस्य उत्कृष्टमदस्य अवनं रक्षणं यस्मिन् तस्य नित्यं मदविशिष्टस्येत्यर्थः, दशास्यप्रमदावनस्य रावणस्त्रीसमूहस्य कपेर्बलात् शोकरूपलताप्रतानः लताविस्तारो यस्यां सा जाता ॥ २० ॥

गो० टी०—सेति । शोच्यत इति शोकः । प्रतानं विततिः । अशोकम् अशोच्यम् लताप्रतानं यस्यां सा अशोकलताप्रताना । दशास्यप्रमदावनस्य भोगवर्धनेन रावणवनितारक्षकस्य प्रमदावनस्य अन्तःपुरोद्यानस्य सा वनस्थली तृणगुल्मलतादिविशिष्टप्रदेशः कपेर्बलाद्धि विह्वला लुलिता शोकलताप्रताना च जाता । यद्वा शोकलताः शोकरताः रलयोरभेदः अप्रतानाः अप्सु प्रतानाः कमलकल्हारादयोऽस्यां सा शोकलताप्रताना म्लानजलजेति यावत् । दशास्यप्रमदावनस्य रावणप्रमदावनस्य । "ङ्यापोः संज्ञाछन्दसोर्बहुलम्" इति बहुलवचनाद्ध्रस्वाभावः । दशास्यप्रमदावनस्य वनस्थलीत्यत्र शिलापुत्रकस्य शरीरमितिवदुपचारात् षष्ठी । प्रमदावनस्य सीतारूपप्रमदापालकस्य वनस्थली कपेर्बलाद्विह्वला शोकलताप्रताना च जाता । अशोकलतेत्युपलक्षणम् ॥ २० ॥

२१ ] ति० टी०—जगतीपते राज्ञो रावणस्य । व्यलीकमप्रियम् ॥ २१ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये सुन्दरकाण्डे एकचत्वारिंशः सर्गः ॥ ४१ ॥

रा० टी०—तत इति । बहुभिर्महाबलैर्युयुत्सुः अत एव श्रिया युद्धोत्साहसंपत्त्या ज्वलन् एकः महान् कपिः स हनुमान्

---

१ बभूवाप्रियदर्शनमिति गो. पाठः । २ प्रभिन्नैरिति गो. पाठः । ३ युतमिति गो. पाठः । ४ नाशितैर्महोरगैर्व्यालमृगैश्च निर्धुतैरिति गो. पाठः ।
५ स तस्य कृत्वार्थपतेर्महाकपिरिति गो. पाठः ।

# द्विचत्वारिंशः सर्गः ।

हनुमत्कृतप्रमदवनभङ्गं दृष्ट्वा राक्षस्यः सीतां कोऽयमित्यपृच्छन् । तया च नाहं जानामि प्रायो राक्षस एव भवेदित्युक्ताश्च काश्चन द्रुतं गत्वा सीतावासातिरिक्तसर्ववननाशं रावणाय न्यवेदयन् । तेन च प्रेषितान् किंकरसंज्ञकान् बहून् राक्षसान् मारुतिर्जघान । तच्छ्रुत्वा रावणः प्रहस्तपुत्रं प्रेषयति ॥

ततः पक्षिनिनादेन वृक्षभङ्गस्वनेन च । बभूवुस्त्राससंभ्रान्ताः सर्वे लङ्कानिवासिनः ॥ १ ॥
विद्रुताश्च भयत्रस्ता विनेदुर्मृगपक्षिणः । रक्षसां च निमित्तानि क्रूराणि प्रतिपेदिरे ॥ २ ॥
ततो गतायां निद्रायां राक्षस्यो विकृताननाः । तद्वनं ददृशुर्भग्नं तं च वीरं महाकपिम् ॥ ३ ॥
स तां दृष्ट्वा महाबाहुर्महासत्त्वो महाबलः । चकार सुमहद्रूपं राक्षसीनां भयावहम् ॥ ४ ॥
ततस्तुं गिरिसंकाशमतिकायं महाबलम् । राक्षस्यो वानरं दृष्ट्वा पप्रच्छुर्जनकात्मजाम् ॥ ५ ॥
कोऽयं कस्य कुतो वायं किंनिमित्तमिहागतः । कथं त्वया सहानेन संवादः कृत इत्युत ॥ ६ ॥
आचक्ष्व नो विशालाक्षि माभूत्ते सुभगे भयम् । संवादमसितापाङ्गि त्वया किं कृतवानयम् ॥ ७ ॥
अथाब्रवीत्तदा साध्वी सीता सर्वाङ्गशोभना । रक्षसां कामरूपाणां विज्ञाने का गतिर्मम ॥ ८ ॥

जगतीपतेः रावणस्य मनसः महद्व्यलीकम् अप्रियं दुःखकारणमित्यर्थः, कृत्वा संपाद्य तोरणं बहिर्द्वारमाश्रितः स्थितः ॥२१॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ सुन्दरकाण्डे एकचत्वारिंशः सर्गः ॥ ४१ ॥

गो० टी०—स इति । अर्थपतेः राज्ञो रावणस्य । मनसः व्यलीकम् अप्रियम् पीडनं वा । अलीकं त्वप्रियाकार्यवैलक्ष्यानृतपीडन इति निघण्टुः । युयुत्सुः योद्धुमिच्छुः । तोरणम् उद्यानबहिर्द्वारम् तोरणोऽस्त्री बहिर्द्वारमित्यमरः ॥ २१ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने एकचत्वारिंशः सर्गः ॥ ४१ ॥

१ ] ति० टी०—तत इति ॥ १ ॥

रा० टी०—हनुमत्कर्तृकवनिकाविध्वंसानन्तरकालिकं वृत्तान्तमाह—तत इत्यादिभिः । पक्षिनिनादादिना सर्वे लङ्कानिवासिनः त्रासेन भयेन संभ्रान्ताः उद्विग्नचित्ताः बभूवुः ॥ १ ॥

गो० टी०—ततः पक्षीत्यादि ॥ १–४ ॥

२ ] ति० टी०—प्रतिपेदिरे प्राप्तानि ॥ २ ॥

रा० टी०—विद्रुता इति । भयत्रस्ताः अत एव विद्रुताः मृगपक्षिणः विनेदुः रक्षसां समीपे क्रूराणि भयंकराणि निमित्तानि शकुनाः प्रतिपेदिरे प्रापुः ॥ २ ॥

३–४ ] ति० टी०—गतायां निद्रायाम् । वनभङ्गध्वनिनेत्यर्थः ॥ ३ ॥ ४ ॥

रा० टी०—तत इति । निद्रायां गतायां सत्यां भग्नं वनं महाकपिं च ददृशुः ॥ ३ ॥

रा० टी०—स इति । स हनुमान् ताः राक्षसीः दृष्ट्वा राक्षसीनां भयावहं रूपं चकार ॥ ४ ॥

५ ] ति० टी०—जनकात्मजां पप्रच्छुः । तस्या निर्भिन्नतयावस्थानं मत्वेति भावः ॥ ५ ॥

रा० टी०—तत इति । ततोऽन्तरं गिरिसंकाशं वानरं दृष्ट्वा राक्षस्यो जनकात्मजां पप्रच्छुः ॥ ५ ॥

गो० टी०—ततस्तमित्यादि । उतशब्दो वार्थे । उताप्यर्थविकल्पयोरित्यमरः । संवादो वा कथं कृत इति पप्रच्छुरिति पूर्वेण सम्बन्धः । कः किन्नामकः कस्य कस्य सम्बन्धी पुरुषः कुतः कस्माद्देशादागतः किंनिमित्तं किं प्रयोजनमुद्दिश्य संवादं किं कृतवान् किमुद्दिश्य कृतवान् । सर्वस्यापि पप्रच्छुरिति पूर्वेणान्वयः ॥ ५–७ ॥

६ ] ति० टी०—त्वयानेन कथं संवादः कृत इति च पप्रच्छुः । यद्यपि ता निद्रिता वनभङ्गध्वनिना जागरिता इति संवादज्ञानस्यैवाभावात्तत्कथं प्रश्नो निरवसरः, तथापि निद्रामध्ये किंचिज्जागरेणेयत्संवादश्रवणेऽपि देवमायया पुनर्निद्रेति तत्प्रश्नोपपत्तिरित्याहुः । सीतायास्तद्दर्शनेऽपि निर्भयप्रसन्नमुखतयावस्थानदर्शनादयं कश्चिदेतत्परिचित एतद्वृत्तान्तज्ञानार्थमेव प्रायेणागत इति संभाव्यानया संवादकरणं च संभाव्य तत्प्रश्ननिर्वाह इति कतकः ॥ ६ ॥

७ ] ति० टी०—अथ विशिष्य संवादं पृच्छति—संवादमिति ॥ ७ ॥

रा० टी०—तत्प्रश्नाकारमाह—क इति । अयं कः किंनामेत्यर्थः, त्वया सह संवादः कथं कृतः इत्याचक्ष्व कथय नच संवादसमये तासां निद्रितात्वेन संवादज्ञानाभावात् कथं तद्विषयकः प्रश्न इति वाच्यं संवादसमये किञ्चिन्निद्रापगमेन सीतामुखप्रसादहेतुकतत्सम्बन्ध्यनुमानेन वा तज्ज्ञानसंभवात् । श्लोकद्वयमेकान्वयि ॥ ६ ॥ ७ ॥

८ ] ति० टी०—का गतिरुपायः ॥ ८ ॥

रा० टी०—अथेति । अथ राक्षसीप्रश्नश्रवणानन्तरं सीता अब्रवीत् । तद्वचनाकारमाह—कामरूपाणां रक्षसां विज्ञाने विशे-

१ तामिति रा. पाठः । २ तमिति गो. पाठः । ३ सुन्दरीति गो. पाठः । ४ भीमेति गो. पाठः ।

यूयमेवास्य जानीत योऽयं यद्वा करिष्यति । अहिरेव अहेः पादान्विजानाति न संशयः ॥ ९ ॥
अहमप्यतिभीतास्मि नैव जानामि को ह्ययम् । वेद्मि राक्षसमेवैनं कामरूपिणमागतम् ॥ १० ॥
वैदेह्या वचनं श्रुत्वा राक्षस्यो विद्रुता द्रुतम् । स्थिताः काचिद्गताः काश्चिद्रावणाय निवेदितुम् ॥ ११ ॥
रावणस्य समीपे तु राक्षस्यो विकृताननाः । विरूपं वानरं भीमं रावणाय न्यवेदिषुः ॥ १२ ॥
अशोकवनिकामध्ये राजन्भीमवपुः कपिः । सीतया कृतसंवादस्तिष्ठत्यमितविक्रमः ॥ १३ ॥
न च तं जानकी सीता हरिं हरिणलोचना । अस्माभिर्बहुधा पृष्टा निवेदयितुमिच्छति ॥ १४ ॥
वासवस्य भवेद्दूतो दूतो वैश्रवणस्य वा । प्रेषितो वापि रामेण सीतान्वेषणकाङ्क्षया ॥ १५ ॥
[६]तेनैवाद्भुतरूपेण यत्तत्तव मनोहरम् । नानामृगगणाकीर्णं प्रमृष्टं प्रमदावनम् ॥ १६ ॥
न तत्र कश्चिदुद्देशो यस्तेन न विनाशितः । यत्र सा जानकी [७]देवी स तेन न विनाशितः ॥ १७ ॥
जानकीरक्षणार्थं वा श्रमाद्वा नोपलक्ष्यते । अथवा कः श्रमस्तस्य सैव तेनाभिरक्षिता ॥ १८ ॥
चारुपल्लवपत्राढ्यं यं सीता स्वयमास्थिता । प्रवृद्धः शिंशपावृक्षः स च तेनाभिरक्षितः ॥ १९ ॥

---

षतो ज्ञापने मम का गतिः राक्षसानाम् अविश्वस्तत्वेनान्यकर्तृकबोधाश्रयत्वस्यासंभवात् राक्षसा एव सर्वं जानन्तु इत्यर्थः ८

गो० टी०—अथाब्रवीदित्यादि । अयं यः यादृशः । यद्वा कार्यं करिष्यति तद्यूयमेवाभिजानीतेति संबन्धः । नैनं जानामीति । विवाहकाले रतिसंप्रयोगे प्राणात्यये सर्वधनापहारे । मित्रस्य चार्थेऽप्यनृतं वदेयुः पञ्चानृतान्याहुरपातकानि । इति स्मरणादसत्योक्तिः ॥ ८–१० ॥

९–१० ] ति० टी०—युष्माकमेवैतत्स्वरूपज्ञानमुचितमित्यत्र न्यायमाह—अहिरेवेति ॥ ९ ॥ १० ॥

रा० टी०—यूयमिति । अस्य जात्यादि योऽयं वा यत्करिष्यति वा तत् यूयमेव जानीत । तत्र दृष्टान्तः अहेः सर्पस्य पादान् अहिरेव विजानाति ॥ ९ ॥

रा० टी०—अहमिति । अहमप्यतिभीता हनुमदर्थं भयं प्राप्ताऽस्मीति तात्पर्यम् । अतः कोऽयम् इति नैव जानामि बोधयामि परन्तु आगतमेनं राक्षसं राक्षससदृशं कामरूपिणं वेद्मि बोधयामि ॥ १० ॥

११–१२ ] ति० टी०—वैदेह्या वचनमज्ञानप्रतिपादकम् । अनेनात्मत्राणादौ मृषावादो न दोषायेति ध्वनितम् । काश्चिद्विद्रुताः, काश्चिद्दृढं स्थिता एव, काश्चिद्रावणाय निवेदितुं गताः ॥ ११ ॥ १२ ॥

रा० टी०—वैदेह्या इति । वैदेह्या वचनं श्रुत्वा काश्चिद्राक्षस्यः स्थिताः तूष्णीं बभूवुरित्यर्थः काश्चित्तु रावणाय निवेदितुं द्रुतं गताः ॥ ११ ॥

रा० टी०—रावणस्येति । राक्षस्यः रावणस्य समीपे गत्वेति शेषः, रावणाय रावणं बोधयितुं वानरं न्यवेदिषुः ॥१२॥

गो० टी०—वैदेह्या इति । दिशः दिक्षु वनस्य पार्श्वेष्वित्यर्थः विद्रुताः विलीनाः । निवेदितुं निवेदयितुम् ॥ ११–१५ ॥

१३ ] ति० टी०—सीतया कृतसंवादत्वज्ञानं यथा तथोक्तम् ॥ १३ ॥

रा० टी०—निवेदनप्रकारमाह—अशोकेति । सीतया कृतः संवादो येन सोऽमितविक्रमः कपिः तिष्ठति ॥ १३ ॥

१४–१५] ति० टी०—न निवेदयितुमिच्छति । प्रायेणेयं तं जानातीति तासामाशयः ॥ १४ ॥ १५ ॥

रा० टी०—नेति । तं हरिं वानरम् अस्माभिः पृष्टापि जानकी निवेदयितुं बोधयितुं नेच्छति ॥ १४ ॥

रा० टी०—स्वोत्प्रेक्षितमाह—वासवस्येति । वासवादन्यतरस्य दूतो भवेत् रामेण प्रेषितो वा दूतो भवेत् ॥ १५ ॥

१६ ] ति० टी०—प्रमृष्टं नाशितम् ॥ १६ ॥

रा० टी०—ननु किं तदागमनेनेत्यत आह—तेनेति । यत्तव प्रमदावनं तत् तेन वानरेण प्रमृष्टं विध्वंसितम् ॥ १६ ॥

गो० टी०—तेन त्विति । प्रमृष्टं भग्नमित्यर्थः ॥१६–१९॥

१७ ] ति० टी०—उद्देशः प्रदेशः ॥ १७ ॥

रा० टी०—नेति । तेन वानरेण यः कश्चिदुद्देशः स्थलं न विनाशितः स तत्र वनिकायां नास्ति यत्र देशे सा जानकी स देशस्तु तेन न विनाशितः ॥ १७ ॥

१८ ] ति० टी०—कः श्रम इति । महावनं भग्नवतस्तस्य श्रमोऽसंभावित इत्यर्थः । अतः सा जानक्येव तेनाभिरक्षिता तदाश्रयवृक्षाभङ्गेनेति शेषः ॥ १८ ॥

रा० टी०—तन्मात्रविनाशाभावे को हेतुरित्यत आह—जानकीति । नोपलक्ष्यते निश्चीयते पूर्वपक्ष एव सिद्धान्त इति निश्चित्याह—अथवेति । तस्य अतिभयङ्करस्य कः श्रमः श्रमो न संभवतीत्यर्थः अतः तेन सा सीतैवाभिरक्षिता ॥ १८ ॥

१९ ] ति० टी०—तस्यैवार्थस्य स्थिरीकरणाय पुनः प्रतिपादनम्—चार्विति । तेनाभिरक्षितः । सीतारक्षणार्थमिति शेषः ॥ १९ ॥

---

१ अभीति गो. पाठः । २ ह्यहेरिति गो. पाठः । ३ अयेति गो. पाठः । ४ दिश इति गो. पाठः । ५ आस्थानमुपक्रमुरिति गो. पाठः । ६ तेन वद्भुतेति गो. पाठः । ७ सीतेति गो. पाठः । ८ लभ्यते इति गो. पाठः ।

तस्योग्ररूपस्योग्रं त्वं दण्डमाज्ञातुमर्हसि । सीता संभाषिता येन वनं तेन विनाशितम् ॥ २० ॥
मनःपरिगृहीतां तां तव रक्षोगणेश्वर । कः सीतामभिभाषेत यो न स्यात्त्यक्तजीवितः ॥ २१ ॥
राक्षसीनां वचः श्रुत्वा रावणो राक्षसेश्वरः । चिताग्निरिव जज्वाल कोपसंवर्तितेक्षणः ॥ २२ ॥
तस्य क्रुद्धस्य नेत्राभ्यां प्रापतन्नश्रुबिन्दवः । दीप्ताभ्यामिव दीपाभ्यां सार्चिषः स्नेहबिन्दवः ॥ २३ ॥
आत्मनः सदृशान्वीरान्किंकरान्नाम राक्षसान् । व्यादिदेश महातेजा निग्रहार्थं हनूमतः ॥ २४ ॥
तेषामशीतिसाहस्रं किंकराणां तरस्विनाम् । निर्ययुर्भवनात्तस्मात्कूटमुद्गरपाणयः ॥ २५ ॥
महोदरा महादंष्ट्रा घोररूपा महाबलाः । युद्धाभिमनसः सर्वे हनूमद्ग्रहणोन्मुखाः ॥ २६ ॥
ते कपिं तं समासाद्य तोरणस्थमवस्थितम् । अभिपेतुर्महावेगाः पतङ्गा इव पावकम् ॥ २७ ॥
ते गदाभिर्विचित्राभिः परिघैः काञ्चनाङ्गदैः । आजघ्नुर्वानरश्रेष्ठं शरैरादित्यसंनिभैः ॥ २८ ॥
मुद्गरैः पट्टिशैः शूलैः प्रासतोमरपाणयः । परिवार्य हनूमन्तं सहसा तस्थुरग्रतः ॥ २९ ॥
हनूमानपि तेजस्वी श्रीमान्पर्वतसंनिभः । क्षितावाविद्ध्य लाङ्गूलं ननाद च महाध्वनिम् ॥ ३० ॥
स भूत्वा तु महाकायो हनूमान्मारुतात्मजः । पुच्छमास्फोटयामास लङ्कां शब्देन पूरयन् ॥ ३१ ॥

रा० टी०—चार्विति । यं सीता आस्थिता स शिंशुपावृक्षः तेन वानरेणाभिरक्षितः ॥ १९ ॥

२० ] ति० टी०—आज्ञातुमाज्ञापयितुम् । सीता संभाषितेत्यनेन सापराधग्रहत्वं बोधितम् ॥ २० ॥

रा० टी०—तस्येति । येन सीता संभाषिता वनंच विनाशितं तस्योग्रं दण्डमाज्ञातुमर्हसि ॥ २० ॥

गो० टी०—तस्येति । हे उग्र ! त्वम् आज्ञातुम् आज्ञापयितुम् ॥ २०—२१ ॥

२१ ] ति० टी०—तद्भाषणस्यापराधत्वमुपपादयति—मन इति । त्यक्तजीवितस्त्यक्तजीविताशः । राजपरिग्रहभाषणं पुंसोऽपराध इति भावः ॥ २१ ॥

रा० टी०—मन इति । तव मनःपरिगृहीतां मनसा निरुद्धां तां सीतां यस्त्यक्तजीवितो न स्यात् स कोऽभिभाषेत न कोऽपीत्यर्थः ॥ २१ ॥

२२–२४ ] ति० टी०—संवर्तिते विवर्तिते ईक्षणे नेत्रे येन सः ॥ २२–२४ ॥

रा० टी०—राक्षसीनामिति । कोपेन संवर्तिते आघूर्णिते ईक्षणे यस्य स रावणः चिताग्निरिव जज्वाल ॥ २२ ॥

रा० टी०—तस्येति । अश्रुबिन्दवः सार्चिषो ज्वालासहिताः स्नेहबिन्दवः इव प्रापतन् ॥ २३ ॥

रा० टी०—आत्मन इति । हनूमतो निग्रहार्थं किंकरान् नाम किङ्करनामकान् राक्षसान् व्यादिदेश ॥ २४ ॥

गो० टी०—राक्षसीनामिति । संवर्तितेक्षणः परिवर्तितेक्षणः ॥ २२–२३ ॥

गो० टी०—आत्मन इति । नाम प्रसिद्धौ । किंकरानिति प्रसिद्धानित्यर्थः ॥ २४ ॥

२५–२६ ] ति० टी०—अशीतिः साहस्रम् स्वार्थेऽण् । कूटोऽयस्कारः कूटसदृशाग्र आयुधविशेषः ॥ २५ ॥ २६ ॥

रा० टी०—तेषामिति । किङ्कराणां मध्ये अशीतिसाहस्रं किङ्करास्तस्मात् भवनात् निर्ययुः ॥ २५ ॥

रा० टी०—महोदरा इति । निर्गताः सर्वे किङ्कराः युद्धाभिमनसो बभूवुरिति शेषः ॥ २६ ॥

गो० टी०—किंकराणां संख्यां निर्दिशति--तेषामिति॥२५

गो० टी०—निर्ययुरिति । सर्वं इति विशेष्यम् । कूटो नाम अयस्कारकूटसदृश आयुधविशेषः । मुद्गरः द्रुघणः ॥२६॥

२७ ] ति० टी०—अवस्थितं युद्धाय संनद्धम् ॥ २७ ॥

रा० टी०—ते इति । ते किङ्करा अवस्थितं सावधानं तोरणस्थं कपिं समासाद्य समीपमागत्य पावकं पतङ्गा इव अभिपेतुः ॥ २७ ॥

गो०टी०—त इति । अवस्थितं युद्धाय सन्नद्धमित्यर्थः २७

२८–२९ ]ति० टी०—काञ्चनाङ्गदैः काञ्चनपट्टबन्धैः२८-२९

रा० टी०—ते इति । ते किङ्कराः गदाभिः काञ्चनाङ्गदैः काञ्चनपट्टवद्भिः परिघैश्च शरैश्च आजघ्नुः ॥ २८ ॥

रा० टी०—मुद्गरैरिति । मुद्गरादिभिरुपलक्षिताः प्रासतोमरपाणयः किङ्कराः हनूमन्तं परिवार्य अग्रतस्तस्थुः ॥ २९ ॥

गो० टी०—ते गदाभिरिति । परिघैः परिघपातनैः काञ्चनाङ्गदैः काञ्चनपट्टैः ॥ २८ ॥

गो० टी०—मुद्गरैरिति । पट्टिशो नाम लोहदण्डः तीक्ष्णधारः क्षुरोपम आयुधविशेषः अत्रेत्थंभूतलक्षणे तृतीया । प्रासः कुन्तः तोमरः आयुधविशेषः ॥ २९ ॥

३०–३१ ] ति० टी०—क्षितावाविध्य । लाङ्गूलमिति स्वभावोक्तिरलंकारः ॥ ३० ॥ ३१ ॥

१ उग्र त्वमिति गो. पाठः । २ तद्वनं चेति गो. पाठः । ३ हुताग्निरिति गो. पाठः । ४ अस्रेति गो. पाठः । ५ शूरानिति गो. पाठः । ६ कपीन्द्रमिति गो. पाठः । ७ वेगा इति गो. पाठः । ८ जघ्नुरिति गो. रा. पाठः । ९ शक्तिभिरिति गो. पाठः । १० स्वनमिति गो. पाठः । ११ स्थिति गो. पाठः । १२ धूतमिति गो. पाठः ।

तस्यास्फोटितशब्देन महता चानुनादिना । पेतुर्विहङ्गा गगनादुच्चैश्चेदमघोषयत् ॥ ३२ ॥
जयत्यतिबलो रामो लक्ष्मणश्च महाबलः । राजा जयति सुग्रीवो राघवेणाभिपालितः ॥ ३३ ॥
दासोऽहं कोसलेन्द्रस्य रामस्याक्लिष्टकर्मणः । हनूमाञ्शत्रुसैन्यानां निहन्ता मारुतात्मजः ॥ ३४ ॥
न रावणसहस्रं मे युद्धे प्रतिबलं भवेत् । शिलाभिश्च प्रहरतः पादपैश्च सहस्रशः ॥ ३५ ॥
अर्दयित्वा पुरीं लङ्कामभिवाद्य च मैथिलीम् । समृद्धार्थो गमिष्यामि मिषतां सर्वरक्षसाम् ॥ ३६ ॥
तस्य संनादशब्देन तेऽभवन्भयशङ्किताः । ददृशुश्च हनूमन्तं संध्यामेघमिवोन्नतम् ॥ ३७ ॥
स्वामिसंदेशनिःशङ्कास्ततस्ते राक्षसाः कपिम् । चित्रैः प्रहरणैर्भीमैरभिपेतुस्ततस्ततः ॥ ३८ ॥
स तैः परिवृतः शूरैः सर्वतः स महाबलः । आससादायसं भीमं परिघं तोरणाश्रितम् ॥ ३९ ॥
स तं परिघमादाय जघान रजनीचरान् । सपन्नगमिवादाय स्फुरन्तं विनतासुतः ॥ ४० ॥

---

रा० टी०—हनुमानिति । लाङ्गूलं क्षितावाविध्य उच्चैः पातयित्वा महास्वनं यथा भवति तथा ननाद ॥ ३० ॥

रा० टी०—स इति । शब्देन लङ्कां पूरयन् सन् पुच्छमास्फोटयामास प्राधुनोत् ॥ ३१ ॥

गो० टी०—हनुमानिति । श्रीमानिति तात्कालिकहर्षकृतकान्तिरुच्यते ॥ ३० ॥

गो० टी०—स इति । धृष्टमिति क्रियाविशेषणम् ॥ ३१ ॥

३२ ] ति० टी०—अनुनादिना प्रतिध्वनिमता ॥ ३२ ॥

रा० टी०—तस्येति । अनुनादिना प्रतिध्वनिकारकेण आस्फोटितशब्देन आस्फोटनजनितरवेण विहङ्गाः पेतुः इदं वक्ष्यमाणमुच्चैरघोषयत् स्वाभाविकोच्चारणेनापूरयत् हनुमानिति शेषः ॥ ३२ ॥

गो० टी०—तस्येत्यादि । सानुनादिना सप्रतिध्वनिना यद्वा अनुनादिनः पर्वतगुहादयः तत्सहितेन यद्वा सानुषु प्रतिध्वनिं कुर्वता उच्चैश्चेदमघोषयदिति । स हनुमान् इदं वक्ष्यमाणं वचनमुच्चैरघोषयत् ॥ ३२ ॥

३३–३४ ] ति० टी०—जयति सर्वोत्कर्षेण वर्तते ॥ ३३ ॥ ३४ ॥

रा० टी०—घोषणाकारमाह—जयतीत्यादिचतुर्भिः । रामादिर्जयति ॥ ३३ ॥

रा० टी०—ननु कोऽसीत्यत आह—दास इति । रामस्य दासः शत्रुसैन्यानां निहन्ता हनुमानहमस्मि ॥ ३४ ॥

गो० टी०—घोषणवचनमाह—जयतीत्यादि । अभिपालितः वालिवधेन । अक्लिष्टकर्मण इत्यनेन स्वदास्यं न कर्मकृतं किन्तु स्वरूपप्रयुक्तमित्युच्यते । प्रतिबलं समानबलम् । प्रहरतः राक्षसानिति शेषः । प्रहारमात्रेण वा हनुमद्विशेषणम् । अर्दयित्वेति । मिषतां पश्यताम् अनादरे षष्ठी ॥ ३३–३६ ॥

३५ ] ति० टी०—प्रतिबलं प्रतिस्पर्धार्हबलवत् ॥ ३५ ॥

रा० टी०—ननु रावणस्यातिबलत्वादिह तव का शक्तिरित्यत आह-नेति । सहस्रशः शिलादिभिः प्रहरतो मे युद्धे रावणसहस्रं प्रतिबलं प्रतियोद्धा न भवेत् ॥ ३५ ॥

३६ ] ति० टी०—मिषतामित्यनादरे षष्ठी ॥ ३६ ॥

रा० टी०—अर्दयित्वेति । लङ्कामर्दयित्वा मैथिलीमभिवाद्य प्रणम्य समृद्धार्थः सिद्धप्रयोजनोऽहं सर्वरक्षसां मिषतामवलोकयतां सतां गमिष्यामि रामसमीपमिति शेषः, अनादरद्योतिका षष्ठी ॥ ३६ ॥

३७ ] ति० टी०—संनादशब्देनास्फोटशब्दजप्रतिध्वनिना सिंहनादेन च ॥ ३७ ॥

रा० टी०—तस्येति । तस्य हनूमतः सन्नादशब्देन पूरितस्वनेन ते राक्षसाः भयशङ्किता अभवन् उन्नतं संध्यामेघमिव हनूमन्तं ददृशुश्च ॥ ३७ ॥

गो० टी०—तस्येति । संध्यामेघमिवेति रक्तवर्णत्वात् ३७

३८ ] ति० टी०—स्वामिनो रामस्य संदेशेन नामग्रहणेन कस्यायं भट इति संदेहरहिताः । किं च स्वामिसंदेशेन रावणाज्ञयातिघोरेणाप्यनेन योद्धव्यमेवेति निश्चयात्पक्षान्तरशङ्कारहिताः प्रहरणैरायुधैरभिपेतुः प्राहरन्नित्यर्थः ॥ ३८ ॥

रा० टी०—स्वामीति । स्वामिसंदेशेन जयतीत्यादिना रामनामोच्चारणेन निर्गता शङ्का कोऽयमिति संशयो येषां किंच रावणाज्ञया युद्धविषयकशङ्कारहिताः चित्रैरनेकविधैः प्रहरणैरुपलक्षिता राक्षसाः अभिपेतुः ॥ ३८ ॥

गो० टी०—स्वामिसंदेशेति । ततस्तत इति । अनेनास्य समीपं सहसा गन्तुमशक्ता इत्यवगम्यते ॥ ३८ ॥ ३९ ॥

३९ ] ति० टी०—तोरणाश्रितं तोरणसमीपे स्थापितम् ॥ ३९ ॥

रा० टी०—स इति । तैः राक्षसैः सर्वतः परिवृतः स हनूमान् तोरणाश्रितं बहिर्द्वारे संस्थापितमायसं परिघमाससाद जग्राह ॥ ३९ ॥

४० ] ति० टी०—स प्रसिद्धो विनतासुतः पन्नगमादायेव स हनूमांस्तं परिघमादायेति योजना ॥ ४० ॥

रा० टी०—स इति । स प्रसिद्धो हनूमान् विनतासुतो गरुडः पन्नगमिव परिघमादाय रजनीचरान् जघान ॥ ४० ॥

गो० टी०—स पन्नगमिति । सपरिघत्वमात्रे दृष्टान्तः ।

---

१ सानुनादिनेति गो. पाठः । २ विति गो. पाठः ।

विचचाराम्बरे वीरः परिगृह्य च मारुतिः । सूदयामास वज्रेण दैत्यानिव सहस्रदृक् ॥ ४१ ॥
स हत्वा राक्षसान्वीरः किंकरान्मारुतात्मजः । युद्धाकाङ्क्षी महावीरस्तोरणं समवस्थितः ॥ ४२ ॥
ततस्तस्माद्भयान्मुक्ताः कतिचित्तत्र राक्षसाः । निहतान्किंकरान्सर्वान्रावणाय न्यवेदयन् ॥ ४३ ॥
स राक्षसानां निहतं महाबलं निशम्य राजा परिवृत्तलोचनः ।
समादिदेशाप्रतिमं पराक्रमे प्रहस्तपुत्रं समरे सुदुर्जयम् ॥ ४४ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये सुन्दरकाण्डे द्विचत्वारिंशः सर्गः ॥ ४२ ॥

## त्रिचत्वारिंशः सर्गः ।

रावणप्रेषितान्किंकरान्हत्वा चैत्यप्रासादमदृष्टं मन्यमानस्तद्ध्वंसार्थं कृतोद्योगस्तमारुह्य तत्पालान्स्वहननोद्यतान्हत्वा रामनामगर्जनपूर्वकं स्वपराक्रमं प्रकटयंश्चैत्यस्तम्भमुत्पाट्य भ्रामयंस्तज्जनिताग्निना प्रासादं दग्ध्वान्तरिक्षगतोऽचिरेणेयं पुरी यूयं च नभविष्यथेत्यब्रवीत् ॥

ततः स किंकरान्हत्वा हनूमान्ध्यानमास्थितः । वनं भग्नं मया चैत्यप्रासादो न विनाशितः ॥ १ ॥
तस्मात्प्रासादमप्येवमिमं विध्वंसयाम्यहम् । इति संचिन्त्य हनुमान्मनसा दर्शयन्बलम् ॥ २ ॥
चैत्यप्रासादमुत्प्लुत्य मेरुशृङ्गमिवोन्नतम् । आरुरोह हरिश्रेष्ठो हनूमान्मारुतात्मजः ॥ ३ ॥
आरुह्य गिरिसंकाशं प्रासादं हरियूथपः । बभौ स सुमहातेजाः प्रतिसूर्य इवोदितः ॥ ४ ॥

---

परिगृह्य परिघमिति शेषः । स्फुरन्तं पन्नगमादाय विनतासुत इव स वीरो मारुतिः परिघं परिगृह्याम्बरे विचचारेति संबन्धः ॥ ४०—४१ ॥

४१-४२ ] ति० टी—परिगृह्य परिघमिति शेषः ॥४१॥४२॥

रा० टी०—विचचारेति । वज्रेण दैत्यान् सहस्रदृगिन्द्र इव सूदयामास जघान राक्षसानिति शेषः ॥ ४१ ॥

रा० टी०—स इति । स हनूमान् राक्षसान् हत्वा युद्धाकाङ्क्षी सन् तोरणं समवस्थितः ॥ ४२ ॥

४३ ] ति० टी०—कतिचिद्धतावशेषा छिन्नाः ॥ ४३ ॥

रा० टी०—तत इति । भयात् मरणात् मुक्ताः कथञ्चिदवशिष्टाः कतिचित् राक्षसाः निहतान् किङ्करान् रावणाय न्यवेदयत् ॥ ४३ ॥

गो० टी०—तत इति । तस्मात् भयान्मुक्ताः दूरस्था इत्यर्थः ॥ ४२ ॥ ४३ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने द्विचत्वारिंशः सर्गः ॥४२॥

४४ ] ति० टी०—प्रहस्तपुत्रो जम्बुमाली ॥ ४४ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये सुन्दरकाण्डे द्विचत्वारिंशः सर्गः ॥ ४२ ॥

रा० टी०—स इति । स रावणः निहतं राक्षसानां बलं निशम्य परिवृत्तलोचनः सन् प्रहस्तपुत्रं समादिदेश ॥ ४४ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ सुन्दरकाण्डे द्विचत्वारिंशः सर्गः ॥ ४२ ॥

१ ] ति० टी०—अथ रावणसंदिष्टसेनान्तरागमनात्पूर्वं तूष्णीं स्थित्वा न किंचित्प्रयोजनमिति विचार्य प्रासादभङ्गादि चिकीर्षति—तत इति । ध्यानं विचारः । चैत्यप्रासादो रक्षःकुलदेवताप्रासादः ॥ १ ॥

२ ] ति० टी०—एवं प्रमदवनवत् ॥ २ ॥

रा० टी०—किंकराभिधराक्षसविध्वंसानन्तरकालिकं हनुमद्वृत्तान्तमाह—तत इत्यादिभिः । किंकरान् हत्वा ध्यानं विचारमास्थितः विचाराकारमाह—मया वनं भग्नं चैत्यप्रासादः राक्षसकुलदेवताधिष्ठानीभूतप्रासादविशेषः न विनाशितः तस्मात् बलं स्वपराक्रमं दर्शयन् सन् इमं प्रासादमपि विध्वंसयामि इति अनेन प्रकारेण मनसा संचिन्त्य अवर्ततेति शेषः । श्लोकद्वयमेकान्वयि ॥ १ ॥ २ ॥

गो० टी०—ततः स किंकरानित्यादि ॥ १ ॥

गो० टी०—वनमित्यादि । ध्वंसनफलमाह—दर्शयन् बलमिति । बलदर्शनार्थमित्यर्थः ॥ २ ॥

३-४ ] ति० टी०—प्रासादमुत्प्लुत्यारुरोह ॥ ३ ॥ ४ ॥

रा० टी०—चैत्येति । हनूमानुत्प्लुत्य मेरुशृङ्गमिवोन्नतं चैत्यप्रासादमारुरोह ॥ ३ ॥

रा० टी०—आरुह्येति । प्रासादमारुह्य उदितः प्रतिसूर्य इव हरियूथपो बभौ ॥ ४ ॥

गो० टी०—ध्वंसनप्रकारमाह—चैत्येति । चैत्यं देवायतनम् तद्रूपः प्रासादः चैत्यप्रासादः तम् । आप्लुत्य तोरणाल्लङ्घयित्वा । हरिश्रेष्ठो हनुमान् मारुतात्मज इत्यस्योत्तरश्लोकेनान्वयः । हरियूथपत्वेऽप्यहरिर्भविष्यतीति तद्व्यावृत्त्यर्थं हरि-

---

१ अर्धमेतत् गो. नास्ति । २ पुनरिति गो. पाठः । ३ समुपाश्रितः इति गो. पाठः । ४ ध्यानमास्थित इति गो. पाठः । ५ आप्लुत्येति गो. पाठः ।

संप्रधृष्य तु दुर्धर्षश्चैत्यप्रासादमुन्नतम् । हनूमान्प्रज्वलँल्लक्ष्म्या पारियात्रोपमोऽभवत् ॥ ५ ॥
स भूत्वा सुमहाकायः प्रभावान्मारुतात्मजः । धृष्टमास्फोटयामास लङ्कां शब्देन पूरयन् ॥ ६ ॥
तस्यास्फोटितशब्देन महता श्रोत्रघातिना । पेतुर्विहङ्गमास्तत्र चैत्यपालाश्च मोहिताः ॥ ७ ॥
अस्त्रविज्जयतां रामो लक्ष्मणश्च महाबलः । राजा जयति सुग्रीवो राघवेणाभिपालितः ॥ ८ ॥
दासोऽहं कोसलेन्द्रस्य रामस्याक्लिष्टकर्मणः । हनूमाञ्शत्रुसैन्यानां निहन्ता मारुतात्मजः ॥ ९ ॥
न रावणसहस्रं मे युद्धे प्रतिबलं भवेत् । शिलाभिश्च प्रहरतः पादपैश्च सहस्रशः ॥ १० ॥
धर्षयित्वा पुरीं लङ्कामभिवाद्य च मैथिलीम् । समृद्धार्थो गमिष्यामि मिषतां सर्वरक्षसाम् ॥ ११ ॥
एवमुक्त्वा महाकायश्चैत्यस्थो हरियूथपः । ननाद भीमनिर्ह्रादो रक्षसां जनयन्भयम् ॥ १२ ॥
तेन नादेन महता चैत्यपालाः शतं ययुः । गृहीत्वा विविधानस्त्रान्प्रासान्खड्गान्परश्वधान् ॥ १३ ॥
विसृजन्तो महाकाया मारुतिं पर्यवारयन् । ते गदाभिर्विचित्राभिः परिघैः काञ्चनाङ्गदैः ॥ १४ ॥
आजघ्नुर्वानरश्रेष्ठं बाणैश्चादित्यसंनिभैः । आवर्त इव गङ्गायास्तोयस्य विपुलो महान् ॥ १५ ॥
परिक्षिप्य हरिश्रेष्ठं स बभौ रक्षसां गणः । ततो वातात्मजः क्रुद्धो भीमरूपं समास्थितः ॥ १६ ॥
प्रासादस्य महांस्तस्य स्तम्भं हेमपरिष्कृतम् । उत्पाटयित्वा वेगेन हनूमान्मारुतात्मजः ॥ १७ ॥
ततस्तं भ्रामयामास शतधारं महाबलः । तत्र चाग्निः समभवत्प्रासादश्चाप्यदह्यत ॥ १८ ॥

---

श्रेष्ठ इत्युक्तम् । प्रतिसूर्यः द्वितीयसूर्य इत्यर्थः । अनेन सूर्योदयः सूचितः ॥ ३ ॥ ४ ॥

५ ] ति० टी०—संप्रधृष्य भङ्क्त्वा । पारियात्रः पर्वतविशेषः । औन्नत्यं साधारणो धर्मः ॥ ५ ॥

रा० टी०—समिति । चैत्यप्रासादं संप्रधृष्य पराभवं प्रापय्य लक्ष्म्या स्वविजयसंपत्त्या प्रज्वलन् हनूमान् पारियात्रोपम कुलाचलसदृशः अभवत् ॥ ५ ॥

गो० टी०—संप्रधृष्येति । संप्रधृष्य आक्रम्य । पारियात्रो नाम कुलपर्वतः ॥ ५—७ ॥

६ ] ति० टी०—धृष्टं निर्भयम् ॥ ६ ॥

रा० टी०—स इति । प्रभावात् स्वमहिमातिशयात् महाकायो भूत्वा शब्देन लङ्कां पूरयन् सन् धृष्टं यथा भवति तथा आस्फोटयामास चैत्यं प्रासादं विदारयामास ॥ ६ ॥

७–१२ ] ति० टी०—विहंगाश्चैत्यपालाश्च मोहिताः पेतुः ॥ ७–१२ ॥

रा० टी०—तस्येति । श्रोत्रघातिना तस्य प्रासादस्य स्फोटितशब्देन विमोहिता विहङ्गमाश्चैत्यपालाश्च पेतुः पृथिव्यामिति शेषः ॥ ७ ॥

रा० टी०—अस्त्रविदिति । अस्त्रवित् रामादिर्जयताम् इत्याद्येवमुक्त्वा चैत्यस्थः हनूमान् रक्षसां भयं जनयन् सन् ननाद । श्लोकपञ्चकमेकान्वयि ॥ ८–१२ ॥

गो० टी०—अस्त्रविज्जयतामित्यादि । चैत्यस्थान् चैत्यपालान् ॥ ८—१६ ॥

१३–१५] ति० टी०—शतं ययुः । अनेके इत्यर्थः ॥ १३–१५

रा० टी०—तेनेति । तेन शब्देन हेतुना विविधान् अस्त्रादीन् गृहीत्वा विसृजन्तः सन्तः महाकायाः शतं चैत्यपाला ययुः मारुतिं पर्यवारयँश्च । सार्द्धश्लोक एकान्वयी ॥ १३ ॥

रा० टी०—ते इति । काञ्चनाङ्गदैः काञ्चनपट्टावृत्तैः परिघैः वानरश्रेष्ठम् आजघ्नुः । अर्धद्वयमेकान्वयि ॥ १४ ॥

रा० टी०—आवर्त इति । गङ्गायाः तोयस्य महान् आवर्त इव विपुलो रक्षसां गणः हरिश्रेष्ठं परिक्षिप्य गदादिभिः संताड्य बभौ ॥ १५ ॥

१६ ] ति० टी०—परिक्षिप्येत्यंशे तोयस्यावर्त इवेति दृष्टान्तः ॥ १६ ॥

रा० टी०—तत इति । ततोऽनन्तरं वातात्मजः क्रुद्धोऽभवदिति शेषः । अर्धं पृथक् ॥ १६ ॥

१७ ] ति० टी०—महान्मारुतात्मज इत्यन्वयः ॥ १७ ॥

रा० टी०—प्रासादस्येति । महान् हनूमान् शतधारं तं प्रसिद्धं प्रासादस्य स्तम्भं वेगेन उत्पाटयित्वा उत्पाट्य भ्रामयामास तत्र तस्मिन् स्तम्भे अग्निः समभवत् अत एव प्रासादोऽदह्यत । श्लोकद्वयमेकान्वयि ॥ १७–१८ ॥

गो० टी०—प्रासादस्येति । पवनात्मजः भ्रामयामासेत्यन्वयः । शतधारं धारा कोटिः । वज्रवत् स्थितमित्यर्थः । यद्वा शतधा अरमिति च्छेदः । अरं शीघ्रम् ॥ १७ ॥

१८ ] ति० टी०—उत्पाटयित्वा तं शतधारं स्तम्भं भ्राम-

---

१ च दुर्धर्षमिति गो. पाठः । २ उत्तममिति गो. रा. पाठः । ३ त्विति गो. पाठः । ४ शब्देनेति गो. पाठः । ५ जघ्नुरिति गो. रा. पाठः । ६ महान्तस्येति गो. पाठः । ७ पवनेति गो. पाठः ।

दह्यमानं ततो दृष्ट्वा प्रासादं हरियूथपः । स राक्षसशतं हत्वा वज्रेणेन्द्र इवासुरान् ॥ १९ ॥
अन्तरिक्षस्थितः[1] श्रीमानिदं वचनमब्रवीत् । मादृशानां सहस्राणि विसृष्टानि महात्मनाम् ॥ २० ॥
बलिनां वानरेन्द्राणां सुग्रीववशवर्तिनाम् । अटन्ति वसुधां कृत्स्नां वयमन्ये च वानराः ॥ २१ ॥
दशनागबलाः केचित्केचिद्दशगुणोत्तराः । केचिन्नागसहस्रस्य बभूवुस्तुल्यविक्रमाः ॥ २२ ॥
सन्ति चौघबलाः केचित्सन्ति वायुबलोपमाः । अप्रमेयबलाः [2]केचित्तत्रासन्हरियूथपाः ॥ २३ ॥
ईदृग्विधैस्तु हरिभिर्वृतो दन्तनखायुधैः । शतैः शतसहस्रैश्च कोटिभिश्चायुतैरपि ॥ २४ ॥
आगमिष्यति सुग्रीवः सर्वेषां वो निषूदनः । नेयमस्ति पुरी लङ्का न यूयं न च रावणः ॥
यस्य[3] त्विक्ष्वाकु[4]वीरेण बद्धं वैरं महात्मना ॥ २५ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये सुन्दरकाण्डे त्रिचत्वारिंशः सर्गः ॥ ४३ ॥

---

## चतुश्चत्वारिंशः सर्गः ।

---

रावणेन हनूमन्निग्रहार्थं प्रेषितस्य जम्बुमालिनो हनूमता युद्धे वधः ॥

संदिष्टो राक्षसेन्द्रेण प्रहस्तस्य सुतो बली । जम्बुमाली महादंष्ट्रो निर्जगाम धनुर्धरः ॥ १ ॥
रक्तमाल्याम्बरधरः स्रग्वी रुचिरकुण्डलः । महान्विवृत्तनयनश्चण्डः समरदुर्जयः ॥ २ ॥

---

यामास । तत्र च भ्राम्यमाणे स्तम्भान्तरेण घट्टनवशादग्निः समभवत्तेन प्रासादश्चाप्यदह्यत ॥ १८ ॥

गो० टी०-तत्रेति । अग्निः समभवत् । भ्रामितस्तम्भैः स्तम्भान्तरसंघट्टनादिति भावः ॥ १८ ॥ १९ ॥

१९-२० ] ति० टी०-ततः स राक्षसशतं हत्वा दह्यमानं प्रासादं दृष्ट्वा चान्तरिक्षे स्थित इदं वचोऽब्रवीत् ॥ १९ ॥ २० ॥

रा० टी०-दह्यमान इति । स हनुमान् प्रासादं दह्यमानं दृष्ट्वा वज्रेण असुरान् इन्द्र इव राक्षसशतं हत्वा अन्तरिक्षस्थितः सन् इदमब्रवीत् । सार्द्धश्लोक एकान्वयी ॥ १९ ॥

रा० टी०-तद्वचनाकारमाह-मादृशानामित्यादिभिः । मादृशानां वानरेन्द्राणां सहस्राणि विसृष्टानि सुग्रीवेण प्रेषितानि सन्तीति शेषः अत एव अन्ये अस्मद्भिन्नाः वसुधामटन्ति वयं च अटामः सार्धश्लोक एकान्वयी ॥ २० ॥ २१ ॥

गो० टी०-राक्षसानामुत्साहभङ्गं कारयितुमाह-मादृशानामित्यादि ॥ २०-२२ ॥

२१-२२ ] ति० टी०-एतदुक्तिप्रयोजनं च राक्षसहृदयपीडा ॥ २१ ॥ २२ ॥

रा० टी०-दशेति । केचिद्दशनागबलाः सन्तीति शेषः केचित् नागसहस्रस्य तुल्यबलविक्रमाः बभूवुः ॥ २२ ॥

२३-२५ ] ति० टी०-ओघबला ओघसंख्यातगजबलाः ॥ २३-२५ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये सुन्दरकाण्डे त्रिचत्वारिंशः सर्गः ॥ ४३ ॥

रा० टी०-सन्तीति । केचिदोघबलाः ओघसंख्याकगजबलसदृशबलवन्तः सन्ति ॥ २३ ॥

रा० टी०-ईदृगिति । इदृग्विधैः शतादिसंख्याकैः हरिभिः सह वो युष्माकं निषूदनः सुग्रीवः आगमिष्यति । सार्धश्लोक एकान्वयी ॥ २४ ॥

रा० टी०-नेति । इक्ष्वाकुवीरेण महात्मना यस्येदं वैरं बद्धं प्रवृद्धं तस्य इयं पुरी लङ्का नास्ति नङ्क्ष्यतीत्यर्थः यूयं न रावणश्च न । अर्धद्वयमेकान्वयि ॥ २५ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ सुन्दरकाण्डे त्रिचत्वारिंशः सर्गः ॥ ४३ ॥

गो० टी०-ओघबलाः ओघाख्यसंख्याकबलाः ॥२३-२५॥
इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने त्रिचत्वारिंशः सर्गः ॥ ४३ ॥

---

१-२ ] ति० टी०-अथ जम्बुमाल्यागमनं तद्वधश्च—संदिष्ट इति ॥ १ ॥ २ ॥

---

१ अन्तरिक्षे इति गो. पाठः । २ चान्ये इति गो. पाठः । ३ यस्मादिति गो. पाठः । ४ नाथेनेति गो. पाठः ।

धनुः शक्रधनुःप्रख्यं महद्रुचिरसायकम् । विस्फारयाणो वेगेन वज्राशनिसमस्वनम् ॥ ३ ॥
तस्य विस्फारघोषेण धनुषो महता दिशः । प्रदिशश्च नभश्चैव सहसा समपूर्यत ॥ ४ ॥
रथेन खरयुक्तेन तमागतमुदीक्ष्य सः । हनूमान्वेगसंपन्नो जहर्ष च ननाद च ॥ ५ ॥
तं तोरणविटङ्कस्थं हनूमन्तं महाकपिम् । जम्बुमाली महातेजा विव्याध निशितैः शरैः ॥ ६ ॥
अर्धचन्द्रेण वदने शिरस्येकेन कर्णिना । बाह्वोर्विव्याध नाराचैर्दशभिस्तु कपीश्वरम् ॥ ७ ॥
तस्य तच्छुशुभे ताम्रं शरेणाभिहतं मुखम् । शरदीवाम्बुजं फुल्लं विद्धं भास्कररश्मिना ॥ ८ ॥
तत्तस्य रक्तं रक्तेन रञ्जितं शुशुभे मुखम् । यथाकाशे महापद्मं सिक्तं काञ्चनबिन्दुभिः ॥ ९ ॥
चुकोप बाणाभिहतो राक्षसस्य महाकपिः । ततः पार्श्वेऽतिविपुलां ददर्श महतीं शिलाम् ॥ १० ॥
तरसा तां समुत्पाट्य चिक्षेप जैववद्बली । तां शरैर्दशभिः क्रुद्धस्ताडयामास राक्षसः ॥ ११ ॥

---

३ ] ति० टी०—धनुर्विस्फारयाणो विस्फारयमाणः विस्फारो ज्याघोषः ॥ ३ ॥

रा० टी०—रावणप्रेषितप्रहस्तपुत्रवृत्तान्तमाह—संदिष्ट इत्यादिभिः । राक्षसेन्द्रेण संदिष्टः रक्तमाल्याम्बरधरः रुचिराः सायका यस्मिन् तत् शक्रधनुःप्रख्यं धनुर्विस्फारयाणः प्रहस्तस्य सुतो धनुर्धरोऽनेकधनुर्धरविशिष्टो जम्बुमाली निर्जगाम । श्लोकत्रयमेकान्वयि ॥ १–३ ॥

गो० टी०—संदिष्ट इत्यादि । विवृत्तनयनः मण्डलीकृतनयनः । रुचिरसायकं रुचिरसायकार्हम् । विस्फारयानः विस्फारयमाणः ज्याकर्षणं कुर्वन्नित्यर्थः । वज्राशनिसमस्वनमिति विस्फारणक्रियाविशेषणम् ॥ १–३ ॥

४ ] ति० टी०—समपूर्यत दिगादिसमुदायापेक्षमेकवचनम् ॥ ४ ॥

रा० टी०—तस्येति । तस्य जम्बुमालिनो धनुषो महता विस्तारघोषेण दिक्प्रभृतिः समपूर्यत अन्यत्र वचनविपरिणामेनान्वयः ॥ ४ ॥

गो० टी०—तस्येति । नभः समपूर्यत दिशः प्रादेशश्च समपूर्यन्तेति विभक्तिविपरिणामेनानुषङ्गः ॥ ४ ॥ ५ ॥

५ ] ति० टी०— जहर्ष स्वबलानुरूपशत्रुप्राप्त्या ॥ ५ ॥

रा० टी०—रथेनेति । खरयुक्तेन रथेनागतं तं जम्बुमालिनमुदीक्ष्य स हनुमान् जहर्ष ननाद च ॥ ५ ॥

६ ] ति० टी०—तोरणविटङ्कस्तोरणस्तम्भयोरुपरितिर्यक्प्रतिष्ठापितकपोतपालिकादारु ॥ ६ ॥

रा० टी०—तमिति । तोरणविटङ्कस्थं तोरणविटङ्कः तोरणस्तम्भयोरुपरि तिर्यक्प्रतिष्ठापितकपोतपालिकाकाष्ठं तत्स्थं हनुमन्तं निशितैः शरैः जम्बुमाली विव्याध ॥ ६ ॥

गो० टी०—तमिति । तोरणविटङ्कं तोरणस्य कपोतपालिका । कपोतपालिकायां तु विटङ्कं पुन्नपुंसकमित्यमरः । स्तम्भोपरि तिर्यङ्निहितदार्वित्यर्थः ॥ ६ ॥

७ ] ति० टी०—कर्ण्यङ्कुशाकाराग्रशरविशेषः ॥ ७ ॥

रा०टी०—तदाकारमाह—अर्धेति । अर्धचन्द्रेण अर्धचन्द्राकारशरविशेषेण वदने एकेन कर्णिना अङ्कुशाकाराग्रभागकशरविशेषेण शिरसि दशभिर्नाराचैः शरविशेषैर्बाह्वोः कपीश्वरं विव्याध ॥ ७ ॥

गो० टी०—अर्धचन्द्रेणेति । एकेनेत्येतदर्धचन्द्रस्यापि विशेषणम् । अर्धचन्द्राकाराग्रशरेणेत्यर्थः कर्णिना कर्णवच्छरेण ॥ ७ ॥

८ ] ति० टी०—अम्बुजं रक्ताम्बुजम् ॥ ८ ॥

रा० टी०—तस्येति । शरेण अभिहतं तस्य हनुमतस्ताम्रं मुखं भास्कररश्मिना सूर्यकिरणेन विद्धं विकाशितं फुल्लमम्बुजमिव शुशुभे ॥ ८ ॥

गो० टी०—तस्येति । अम्बुजं रक्तपद्मम् । भास्कररश्मिना विद्धम् अत एव फुल्लमित्यर्थः ॥ ८ ॥

९–१० ] ति० टी०—तत्तस्य रक्तम् । स्रवत इति शेषः । रक्तेन क्षतजेन रञ्जितं मुखमाकाशे काञ्चनबिन्दुभी रक्ताशोकपुष्परसबिन्दुभिः सिक्तं महापद्मं महत्तरं रक्तपद्ममिवेत्यभूतोपमेयम् । अशोकः काञ्चनाह्वयः ॥ ९ ॥ १० ॥

रा० टी०—तदेव भङ्ग्यन्तरेणाह—तदिति । रक्तेन रुधिरेण रञ्जितम् अत एव रक्तमत्यरुणं तस्य मुखं काञ्चनबिन्दुभिः सिक्तम् आकाशे महापद्ममिव शुशुभे ॥ ९ ॥

रा० टी०—चुकोपेति । राक्षसस्य बाणाभिहतो महाकपिः चुकोप पार्श्वे स्थितां अतिविपुलां विशालां महतीं गुर्वीं शिलां ददर्श च ॥ १० ॥

गो० टी०—तत्तस्येति । रक्तं स्रवत एव रक्तम् । रक्तेन शोणितेन । महापद्मं रक्तोत्पलम् । चन्दनबिन्दुभिः रक्तचन्दनबिन्दुभिः ॥ ९ ॥

गो० टी०—चुकोपेत्यर्धम् । राक्षसस्य राक्षसविषये ॥ १०–१३ ॥

११ ] ति० टी०—ताडयामास बिभेद ॥ ११ ॥

रा० टी०—तरसेति । जववान् अतिवेगवान् स एव-

---

१ बाहुरिति गो. पाठः । २ तमिति गो. पाठः । ३ चन्दनेति गो. पाठः । ४ बलवदिति गो. पाठः ।

विपन्नं कर्म तद्दृष्ट्वा हनूमांश्चण्डविक्रमः । सालं विपुलमुत्पाट्य भ्रामयामास वीर्यवान् ॥ १२ ॥
भ्रामयन्तं कपिं दृष्ट्वा सालवृक्षं महाबलम् । चिक्षेप सुबहून्बाणाञ्जम्बुमाली महाबलः ॥ १३ ॥
सालं चतुर्भिश्चिच्छेद वानरं पञ्चभिर्भुजे । उरस्येकेन बाणेन दशभिस्तु स्तनान्तरे ॥ १४ ॥
स शरैः पूरिततनुः क्रोधेन महता वृतः । तमेव परिघं गृह्य भ्रामयामास वेगितः ॥ १५ ॥
अतिवेगोऽतिवेगेन भ्रामयित्वा महोत्कटः । परिघं पातयामास जम्बुमालेर्महोरसि ॥ १६ ॥
तस्य चैव शिरो नास्ति न बाहू जानुनी न च । न धनुर्न रथो नाश्वास्तत्रादृश्यन्त नेषवः ॥ १७ ॥
स हतस्तरसा तेन जम्बुमाली महारथः । पपात निहतो भूमौ चूर्णिताङ्ग इव द्रुमः ॥ १८ ॥
जम्बुमालिं सुनिहतं किंकरांश्च महाबलान् । चुक्रोध रावणः श्रुत्वा क्रोधसंरक्तलोचनः ॥ १९ ॥
स रोषसंवर्तिततामलोचनः प्रहस्तपुत्रे निहते महाबले ।
अमात्यपुत्रानतिवीर्यविक्रमान्समादिदेशाशु निशाचरेश्वरः ॥ २० ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये सुन्दरकाण्डे चतुश्चत्वारिंशः सर्गः ॥ ४४ ॥

## पञ्चचत्वारिंशः सर्गः ।

मारुतिः पूर्वं किङ्कराहृराक्षसानिव मन्त्रिजानपि सप्त यमालयं नीत्वा पुनस्तदेव तोरणमारुह्य तत्रैव तिष्ठति ॥

ततस्ते राक्षसेन्द्रेण चोदिता मन्त्रिणः सुताः । निर्ययुर्भवनात्तस्मात्सप्त सप्तार्चिवर्चसः ॥ १ ॥
महद्बलपरीवारा धनुष्मन्तो महाबलाः । कृतास्त्रास्त्रविदां श्रेष्ठाः परस्परजयैषिणः ॥ २ ॥

---

बलीति कर्मधारयः तां शिलां समुत्पाट्य चिक्षेप क्रुद्धो राक्षसः तां हनुमत्प्रक्षेपितशिलां दशभिः शरैस्ताडयामास ॥ ११ ॥

१२-१६ ] ति० टी०-विपन्नं व्यर्थीकृतम् ॥ १२-१६ ॥

रा० टी०-विपन्नमिति । चण्डविक्रमो हनुमान् विपन्नं विनष्टं कर्म स्वव्यापारं दृष्ट्वा विपुलं बृहत् शालमुत्पाट्यभ्रामयामास ॥ १२ ॥

रा० टी०-भ्रामयन्तमिति । शालवृक्षं भ्रामयंतं कपिं दृष्ट्वा सुबहून् बाणन् चिक्षेप ॥ १३ ॥

रा० टी०-तत्प्रकारमाह-शालमिति । चतुर्भिः शालं चिच्छेद दशभिस्तु वानरं स्तनान्तरे चिच्छेद ॥ १४ ॥

रा० टी०-स इति । शरैः पूरिततनुः स हनुमान् तं पूर्वगृहीतं परिघं गृह्य गृहीत्वा भ्रामयामास ॥ १५ ॥

रा० टी०-अतीति । मदोत्कटो हनुमान् परिघं भ्रामयित्वा जम्बुमालेर्महोरसि पातयामास ॥ १६ ॥

गो० टी०-सालमिति । पञ्चभिर्भुज इत्यादौ विव्याधेत्यध्याहारः ॥ १४-१६ ॥

१७-२० ] ति० टी०-नाश्वा रथेन खरयुक्तेनेत्युक्तेरश्वशब्देनात्र खरा उच्यन्ते ॥ १७-२० ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये सुन्दरकाण्डे चतुश्चत्वारिंशः सर्गः ॥४४॥

रा० टी०-तस्येति । तस्य हनुमता हतस्य जम्बुमालेः शिरः प्रभृतयो नादृश्यन्त विनष्टा इत्यर्थः ॥ १७ ॥

रा० टी०-स इति । तेन हतो जम्बुमाली चूर्णिताङ्गो द्रुम इव भूमौ पपात ॥ १८ ॥

रा० टी०-जम्बुमालिमिति । रावणः जम्बुमालिप्रभृतिं सुनिहतं श्रुत्वा चुक्रोध ॥ १९ ॥

रा० टी०-स इति । स रावणः प्रहस्तपुत्रे निहते सति अमात्यपुत्रान् समादिदेश ॥ २० ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ सुन्दरकाण्डे चतुश्चत्वारिंशः सर्गः ॥ ४४ ॥

गो० टी०-तस्य चैवेति । नाश्वा इति अश्वशब्देनात्र खरा उच्यन्ते । रथेन खरयुक्तेनेति पूर्वमुक्तत्वात् ॥ १७-२० ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने चतुश्चत्वारिंशः सर्गः ॥४४॥

---

१ ] ति० टी०-सप्तार्चिवर्चसोऽग्नितुल्यतेजसः । आर्षो रेफलोपः ॥ १ ॥

२ ] ति० टी०-महद्बलं महती सेना परीवारो येषाम् । कृतास्त्रास्त्रेत्यार्षः संधिः । कृतास्त्राः शिक्षितास्त्रा अस्त्रविदां श्रेष्ठाः । परस्परजयैषिणोऽहमहमिकया स्वस्वोत्कर्षापेक्षिणः ॥ २ ॥

---

१ शालेति रा.पाठः । २ बलोत्कट इति गो. मदोत्कट इति रा. पाठः । ३ बल इति गो. पाठः । ४ विभूषण इति गो.पाठः । ५ चेति गो. पाठः ।

हेमजालपरिक्षिप्तै[1]र्ध्वजवद्भिः पताकिभिः । तोयदस्वननिर्घोषैर्वाजियुक्तैर्महारथैः ॥ ३ ॥
तप्तकाञ्चनचित्राणि चापान्यमितविक्रमाः । विस्फारयन्तः संहृष्टास्तडिद्वन्त इवाम्बुदाः ॥ ४ ॥
जनन्यस्तास्ततस्तेषां विदित्वा किंकरान्हतान् । बभूवुः शोकसंभ्रान्ताः सबान्धवसुहृज्जनाः ॥ ५ ॥
ते परस्परसंघर्षा[2]स्तप्तकाञ्चनभूषणाः । अभिपेतुर्हनूमन्तं तोरणस्थमवस्थितम् ॥ ६ ॥
सृजन्तो बाणवृष्टिं ते रथगर्जितनिःस्वनाः । प्रा[3]वृट्काल इवाम्भोदा विचेरुर्नैर्ऋताम्बुदाः ॥ ७ ॥
अवकीर्णस्ततस्ताभिर्हनूमाञ्शरवृष्टिभिः । अभवत्संवृताकारः शैलराडिव वृष्टिभिः ॥ ८ ॥
स शरान्वञ्चयामास तेषामाशुचरः कपिः । रथवे[4]गांश्च वीराणां विचरन्विमलेऽम्बरे ॥ ९ ॥
स तैः क्रीडन्धनुष्मद्भिर्व्योम्नि वीरः प्रकाशते । धनुष्मद्भिर्यथा मेघैर्मारुतः प्रभुरम्बरे ॥ १० ॥
स कृत्वा निनदं घोरं त्रासयंस्तां महाचमूम् । चकार हनुमान्वेगं तेषु रक्षःसु वीर्यवान् ॥ ११ ॥
तलेना[5]भिहनत्कांश्चित्पादैः कांश्चित्परंतपः । मु[6]ष्टिभिश्चाहनत्कांश्चिन्नखैः कांश्चिद्व्यदारयत् ॥ १२ ॥
प्रममाथोरसा कांश्चिदूरुभ्यामपरानपि । केचित्त[7]स्यैव नादेन तत्रैव पतिता भुवि ॥ १३ ॥

---

३-४ ] ति० टी०-ध्वजवद्भिर्विशिष्टध्वजदण्डयुक्तैः, पताकिभिः प्रशस्तपताकावद्भिर्महारथैर्निर्ययुरिति संबन्धः ॥३॥४॥

रा० टी०-रावणाज्ञापितामात्यपुत्राणां वृत्तान्तमाह-तत इत्यादिभिः । अर्चिवर्चसः वह्नितुल्यतेजसः महान्तः बलपरीवाराः येषां ते कृतास्त्राः शिक्षितास्त्रशस्त्राः ते एव अस्त्रविदः तेषां मध्ये श्रेष्ठाः परस्परजयैषिणः अहमहमिकया स्वस्वविजयाकाङ्क्षिणः चापानि विस्फारयन्तः अत एव तडित्वन्तोऽम्बुदा इव मन्त्रिणः सप्तसुताः हेमजालपरिक्षिप्तैः ध्वजवद्भिः विशेषध्वजविशिष्टैः पताकिभिः पताकाविशिष्टैः तोयदस्वननिर्घोषैः तोयदस्वनसदृशस्वनविशिष्टैः वाजियुक्तैः रथैः भवनान्निर्ययुः । चतुर्णामेकत्रान्वयः ॥ १-४ ॥

गो० टी०-ततस्त इत्यादि । भवनात् तस्मात् रावणभवनात् । सप्तार्चिवर्चस इत्यत्र सप्तार्चीति इकारान्तत्वमार्षम् । कृतास्त्राः शिक्षितास्त्राः । आर्षः सन्धिः । कृतास्त्राणामस्त्रविदां च श्रेष्ठा इति वा । ज्ञानशिक्षे उभे अप्येषां स्त इति भावः । परस्परजयैषिणः प्रत्येकं हनुमज्जयैषिण इत्यर्थः । हेमजालपरिक्षिप्तैः सुवर्णजालविनिर्मितैः । स्वासाधारणचिह्नयुक्तं ध्वजम् । केवलचित्रवस्त्रालंकृता पताका । तोयदस्वननिर्घोषैः तोयदस्वनतुल्यनिर्घोषवद्भिः ॥ १-८ ॥

५ ] ति० टी०-शोकसंभ्रान्ताः । निश्चितमरणबुद्ध्येति शेषः ॥ ५ ॥

रा० टी०-सिंहावलोकनन्यायेन निहतकिंकरगृहवृत्तान्तमाह-जनन्य इति । तेषां पूर्वं निहतकिंकराभिधरक्षसां सबान्धवसुहृज्जनाः जनन्यः किंकरान् हतान् विदित्वा शोकसंभ्रान्ताः बभूवुः ॥ ५ ॥

६ ] ति० टी०-परस्परसंघर्षाः अहमेवाग्रे इति परस्परमभिमानात् । तोरणस्थमवस्थितम् । तत्र स्थितं निश्चलमित्यर्थः ६ ॥

रा० टी०-प्रकृतमाह-ते इति । परस्परसंघर्षाः अग्रिमस्वस्वयुद्धविषयकेच्छावन्तः ते मन्त्रिसुताः हनूमन्तमभिपेतुः ॥ ६ ॥

७ ] ति० टी०-सृजन्तो विसृजन्तः ॥ ७ ॥

रा० टी०-सृजन्त इति । प्रावृट्काले अम्भोदाः जलबिन्दुमोचकाः मेघा इव बाणवृष्टिं सृजन्तः रथगर्जितनिःस्वनाः नैर्ऋताम्बुदाः अम्बुदसदृशनैर्ऋताः विचेरुः ॥ ७ ॥

८ ] ति० टी०-संवृताकारः । अदृश्य इति यावत् ॥ ८ ॥

रा० टी०-अवकीर्ण इति । ताभिः नैर्ऋतपातिताभिः शरवृष्टिभिः अवकीर्णः आच्छन्नः हनूमान् वृष्टिभिः संवृताकारः शैलराडिव अभवत् ॥ ८ ॥

९ ] ति० टी०-वञ्चयामास स्वस्पर्शरहितांश्चकार । तत्रोपायः—आशुचर इति । स्थिरलक्ष्यं हि सुवेधं भवति । रथवेगांश्च वञ्चयामास ॥ ९ ॥

रा० टी०-स इति । आशुचरः स हनूमान् तेषां रक्षसां शरान् रथवेगांश्च अम्बरे विचरन् सन् वञ्चयामास स्वकर्मकस्पर्शरहितान् चकार ॥ ९ ॥

गो० टी०-स शरान् मोघयामास । यथा शराः स्वस्मिन्न पतन्ति तथा चकारेत्यर्थः । रथवेगं च मोघयामासेत्यन्वयः । यथा रथवेगाः स्वप्रहाराय न भवन्ति तथा समचरदित्यर्थः ॥ ९ ॥ १० ॥

१०-१३ ] ति० टी०-' धनुर्मद्भिः ' इति पाठे आर्षं रुत्वम् । धनुष्मद्भिरैन्द्रधनुर्युक्तैः ॥ १०-१३ ॥

रा० टी०-स इति । धनुष्मद्भिस्तैः राक्षसैः व्योम्नि क्रीडन् स हनूमान् धनुष्मद्भिः इन्द्रचापविशिष्टैर्मेघैरम्बरे प्रभुर्मारुत इव प्रकाशते ॥ १० ॥

---

१ स्विति गो. पाठः । २ घर्षादिति गो. पाठः । ३ हृष्टिमन्त इति गो. पाठः । ४ वेगं चेति गो. पाठः । ५ अभ्यहनदिति गो. पाठः । ६ मुष्टिनाभ्यहनदिति गो. पाठः । ७ तस्य निनादेनेति गो. पाठः ।

ततस्तेष्ववपन्नेषु भूमौ निपतितेषु च । तत्सैन्यमगमत्सर्वं दिशो दश भयार्दितम् ॥ १४ ॥
विनेदुर्विस्वरं नागा निपेतुर्भुवि वाजिनः । भग्ननीडध्वजच्छत्रैर्भूश्च कीर्णाभवद्रथैः ॥ १५ ॥
स्रवता रुधिरेणाथ स्रवन्त्यो दर्शिताः पथि । विविधैश्च स्वनैर्लङ्का ननाद विकृतं तदा ॥ १६ ॥
स तान्प्रवृद्धान्विनिहत्य राक्षसान्महाबलश्चण्डपराक्रमः कपिः ।
युयुत्सुरन्यैः पुनरेव राक्षसैस्तदेव वीरोऽभिजगाम तोरणम् ॥ १७ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये सुन्दरकाण्डे पञ्चचत्वारिंशः सर्गः ॥ ४५ ॥

## षट्चत्वारिंशः सर्गः ।

ततः पञ्च सेनापतीन् रावणप्रेषितान्हत्वा हनूमान् पुनश्च तदेव तोरणमधिशिश्ये ॥

हतान्मन्त्रिसुतान्बुद्ध्वा वानरेण महात्मना । रावणः संवृताकारश्चकार मतिमुत्तमाम् ॥ १ ॥
स विरूपाक्षयूपाक्षौ दुर्धर्षं चैव राक्षसम् । प्रघसं भासकर्णं च पञ्चसेनाग्रनायकान् ॥ २ ॥
संदिदेश दशग्रीवो वीरान्नयविशारदान् । हनूमद्ग्रहणे व्यग्रान्वायुवेगसमान्युधि ॥ ३ ॥

रा० टी०–स इति । स प्रसिद्धो हनुमान् महाचमूं त्रासयन् सन् तेषु रक्षःसु वेगं चकार ॥ ११ ॥

रा० टी०–तलेनेति । परंतपो हनुमान् कांश्चित् राक्षसान् तलेन अभिहनत् अभ्यहन् कांश्चिच मुष्टिभिः अहनत् अहन् कांश्चित् नखैर्व्यदारयत् ॥ १२ ॥

रा० टी०–प्रममाथेति । कांश्चित् ऊरुभ्यां प्रममाथ केचिन्नादेन भुवि पतिताः ॥ १३ ॥

गो० टी०–स कृत्वेति । वेगं संहारोद्योगम् ॥ ११ ॥

गो० टी०–तलेनेति । पादैः कांश्चिदिति बहुवचनं वानराणां द्विपात्सु चतुष्पात्सु च ग्रहणात् ॥ १२–१४ ॥

१४ ] ति० टी०–भयार्दितं सदृश दिशो दुद्रावेति शेषः॥१४॥

रा० टी०–तत इति । तेषु अमात्यपुत्रेषु अवपन्नेषु विहिंसितेषु अत एव भूमौ निपतितेषु सत्सु तत्सैन्यं दशदिशोऽगमत् ॥ १४ ॥

१५ ] ति० टी०–नीडं रथस्थं रथ्यधिष्ठानस्थानम् ॥१५॥

रा० टी०–विनेदुरिति । नागाः गजाः विस्वरं यथा भवति तथा विनेदुः वाजिनो भुवि निपेतुः भग्नानि नीडध्वजच्छत्राणि येषां तैः रथैः कीर्णा व्याप्ता भूरभवत् तत्र नीडं रथिस्थितिस्थानम् ॥ १५ ॥

गो० टी०–विनेदुरिति । नीडं ध्वजावयवविशेषणम् १५

१६–१७ ] ति० टी०–स्रवन्त्यो नद्यः । ननाद प्रतिध्वनिना रक्षोराक्षसीध्वनिना च ॥ १६ ॥ १७ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये सुन्दरकाण्डे पञ्चचत्वारिंशः सर्गः ॥ ४५ ॥

रा० टी०–स्रवतेति । स्रवता प्रच्युतेन रुधिरेण स्रवन्त्यः नद्यः पथि दर्शिताः दृष्टाः रामो राज्यमचीकरदित्यादाविव णिच् । विविधैः स्वनैः राक्षसनादैः लङ्का विकृतं ननाद ॥१६॥

रा० टी०–स इति । महाबलः कपिः तान् राक्षसान् विनिहत्य अन्यैः पुनर्युयुत्सुः सन् तत् पूर्वमधिष्ठितं तोरणम् अभिजगाम ॥ १७ ॥

इति श्रीमद्वाल्मिकीयरामायणव्याख्याने रामायणशिरोमणौ सुन्दरकाण्डे पञ्चचत्वारिंशः सर्गः ॥ ४५ ॥

गो० टी०–स्रवतेति । स्रवन्त्यः नद्यः । विकृतं यथा तथा ननाद प्रतिध्वानवती बभूव ॥ १६ ॥ १७ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने पञ्चचत्वारिंशः सर्गः ॥४५॥

१–२ ] ति० टी०–संवृताकारो निगृहीतान्तर्गतभयः । उत्तमां मतिं धैर्यविषयाम् ॥ १ ॥ २ ॥

३ ] ति० टी०–हनुमद्ग्रहणे संदिदेश । व्यग्रान्सर्वत्र कार्ये त्वरावतः ॥ ३ ॥

रा० टी०–मन्त्रिसुतवधानन्तरकालिकं रावणावृत्तान्तमाह–हतानित्यादिभिः । मन्त्रिसुतान्वानरेण हतान् बुद्ध्वा संवृतः आच्छादितः आकारः पूर्वाकृतिर्येन सः भीतियुक्ताकृतिविशिष्ट इत्यर्थः किंच संवृतः स्वीकृतः आकारः प्राप्तकिंचिद्भीतिहेतुकाकृतिर्येन स रावणः उत्तमां मतिं पुनर्युद्धनिश्चयमित्यर्थः चकार ॥ १ ॥

रा० टी०–स इति । सः कृतपुनर्युद्धनिश्चयो रावणः अव्यग्रान् धीरान् विरूपाक्षादीन् पञ्च सेनाग्रनायकान् हनुमद्ग्रहणे हनुमतो ग्रहणार्थं संदिदेश श्लोकद्वयमेकान्वयि ॥२॥३ ॥

१ सन्नेष्विति गो० पाठः । २ प्रथर्षमिति रा० पाठः । ३ ग्रहणव्यग्रानिति गो० पाठः ।

यात सेनाग्रगाः सर्वे महाबलपरिग्रहाः । सवाजिरथमातङ्गाः स कपिः शास्यतामिति ॥ ४ ॥
यत्तैश्च खलु भाव्यं स्यात्तमासाद्य वनालयम् । कर्म चापि समाधेयं देशकालाविरोधितम् ॥ ५ ॥
नह्यहं तं कपिं मन्ये कर्मणा प्रतितर्कयन् । सर्वथा तन्महद्भूतं महाबलपरिग्रहम् ॥ ६ ॥
वानरोऽयमिति ज्ञात्वा नहि शुद्ध्यति मे मनः । नैवाहं तं कपिं मन्ये यथेयं प्रस्तुता कथा ॥ ७ ॥
भवेदिन्द्रेण वा सृष्टमस्मदर्थं तपोबलात् । सनागयक्षगन्धर्वदेवासुरमहर्षयः ॥ ८ ॥
युष्माभिः सहितैः सर्वैर्मया सह विनिर्जिताः । तैरवश्यं विधातव्यं व्यलीकं किंचिदेव नः ॥ ९ ॥
तदेव नात्र संदेहः प्रसह्य परिगृह्यताम् । यात सेनाग्रगाः सर्वे महाबलपरिग्रहाः ॥ १० ॥
सवाजिरथमातङ्गाः स कपिः शास्यतामिति । नावमन्यो भवद्भिश्च कपिर्धीरपराक्रमः ॥ ११ ॥
दृष्टा हि हरयः शीघ्रं मया विपुलविक्रमाः । वाली च सह सुग्रीवो जाम्बवांश्च महाबलः ॥ १२ ॥
नीलः सेनापतिश्चैव ये चान्ये द्विविदादयः । नैवं तेषां गतिर्भीमा न तेजो न पराक्रमः ॥ १३ ॥

गो० टी०—हतानित्यादि । संवृताकारः अन्तर्मनाः मतिं चिन्ताम् ॥ १ ॥

गो० टी०—स इति ॥ २ ॥ ३ ॥

४ ] ति० टी०—यात गच्छत ॥ ४ ॥

रा० टी०—आज्ञापनप्रकारमाह—यातेत्यादिभिः इति । हे सेनाग्रगाः महाबलपरिग्रहाः बृहत्सैन्यग्रहीतारः वाज्यादिसहिताः सन्तो यूयं यात तत्प्रयोजनमाह कपिः शास्यतां निगृह्यतामित्यर्थः ॥ ४ ॥

गो० टी०—यातेत्यादि । इति वक्ष्यमाणप्रकारेण । तमेवाह—यत्तैरित्यादिना । यत्तैः यतमानैः अप्रमत्तैरिति यावत् यतेः कर्तरि क्तः । समाधेयं परिहर्तव्यम् । देशकालविरोधिनं देशकालविरोधीत्यर्थः । महद्भूतं मन्य इत्यनुपज्यते । इन्द्रेण वा अन्यैर्वेति शेषः । वाशब्दस्य विकल्पार्थस्य प्रयोगात् ॥४–६॥

५ ] ति० टी०—यत्तैः सावसानैः । किं चात्र देशकालविरोधि कर्म न कार्यमित्याह—देशकालाविरोधितं तदविरुद्धम् । तदुचितमिति यावत् । समाधेयं कार्यम् ॥ ५ ॥

रा० टी०—यत्नैरिति । वनालयं वानरमासाद्य यत्नैरतिप्रयत्नविशिष्टैर्भवद्भिर्भाव्यं स्यात् देशकालाविरोधितं देशाद्यनुरोधीत्यर्थः कर्म समाधेयं च ॥ ५ ॥

६–७ ] ति० टी०—यत्तैर्भाव्यमित्यत्र हेतुमाह—नहीति । तस्य कर्मणा तं प्रति तर्कयंस्तं कपिं न मन्ये । किं तर्हि मन्यसे तत्राह—सर्वथेति ॥ ६ ॥ ७ ॥

रा० टी०—अतिप्रयत्नेन स्थितौ हेतुमाह—नहीति । महाबलपरिग्रहं वृतं हतसेनायाः परिग्राहकं विध्वंसकमित्यर्थः तं कर्मणा तत्क्रियया प्रतितर्कयन्नहं कपिं न मन्ये किंतु भूतमत्र प्राप्तं तत् सर्वथा महदतिश्रेष्ठं मन्ये ॥ ६ ॥

८ ] ति० टी०—महतो भूतस्येह कः प्रसङ्गस्तत्राह—भवेदिति । सनागेति नागादिसहिता देवादय इत्यर्थः ॥ ८ ॥

९ ] ति० टी०—सहितैः सर्वैर्युष्माभिः सह मया विनिर्जिताः, अतस्तैरवश्यं नोऽस्माकं किंचिद्व्यलीकमप्रियं विधातव्यं विधातुं प्राप्तकालम् ॥ ९ ॥

रा० टी०—ननु तर्हि कोऽयमित्यत आह—भवेदिति । अस्मदर्थम् अस्मद्विनाशार्थं तपोबलादिन्द्रेण सृष्टं भवेत् । अर्थं पृथक् । तत्र हेतुं वदन्नाह—सेति । ये नागादिसहिता महर्षयः मया सहितैः प्रेषितैर्युष्माभिः सह एककालावच्छेदेन विनिर्जिताः तैर्नोऽस्माकं किंचित् व्यलीकमप्रियमवश्यं विधातव्यम् । सार्धश्लोक एकान्वयी ॥ ७ ॥ ८ ॥

गो० टी०—सनागेति । व्यलीकम् अप्रियम् ॥ ७ ॥ ८ ॥

१० ] ति० टी०—तस्मात्तदेव तत्सृष्टभूतमेव परिगृह्यतां बद्धानीयताम् ॥ १० ॥

११ ] ति० टी०—सवाजिरथेत्यादिपुनर्वचनं स्थैर्यार्थम् ॥ ११ ॥

रा० टी०—तदिति । तदिन्द्रसृष्टमेव अत्र संदेहो न अतो महाबलपरिग्रहाः अत एव सवाजिरथमातङ्गाः यूयं यात प्रसह्य हठात् परिगृह्यताम् नन्वेकाकिनस्तस्यार्थे किमर्थमेवं प्रेषणमित्यत आह—धीरपराक्रमः कपिर्भवद्भिर्नावमान्यः तुच्छबुद्ध्या नानादर्तव्यः एतेन तस्य महाबलत्वं सूचितम् श्लोकद्वयं संमिलितान्वयि ॥ ९ ॥ १० ॥

गो० टी०—नावमान्यो भवद्भिश्च हरिर्धीरपराक्रमः इति । अत्र त्रयोदशसहस्रश्लोका गताः । अयं चतुर्दशसहस्रस्यादिः । धीति गायत्र्या चतुर्दशाक्षरम् ॥ ९–१० ॥

१२ ] ति० टी०—सर्वथा महद्भूतमित्यत्र हेतुं निश्चायकमाह—दृष्टा इति ॥ १२ ॥

रा० टी०—ननु वानररूपे कथमेवं पराक्रम इत्यत आह दृष्टा इति । विपुलविक्रमाः वाल्यादयो हरयः मया पूर्वं दृष्टाः । सार्धश्लोक एकान्वयी ॥ ११ ॥

१३ ] ति० टी०—ननु त्वद्दृष्टान्यतम एवायम्, नेत्याह—

१ यत्नैरिति. रा. पाठः । २ कालविरोधिनमिति गो. पाठः । ३ श्लोकोऽयं गो. रा. नास्ति । ४ गन्धर्वा इति गो. पाठः । ५ अर्धद्वयं गो. नास्ति । ६ पूर्वमिति गो. रा. पाठः । ७ नैवमिति गो. रा. पाठः ।

न मतिर्न बलोत्साहो न रूपपरिकल्पनम् । महत्सत्त्वमिदं ज्ञेयं कपिरूपं व्यवस्थितम् ॥ १४ ॥
प्रयत्नं महदास्थाय क्रियतामस्य निग्रहः । कामं लोकास्त्रयः सेन्द्राः ससुरासुरमानवाः ॥ १५ ॥
भवतामग्रतः स्थातुं न पर्याप्ता रणाजिरे । तथापि तु नयज्ञेन जयमाकाङ्क्षता रणे ॥ १६ ॥
आत्मा रक्ष्यः प्रयत्नेन युद्धसिद्धिर्हि चञ्चला । ते स्वामिवचनं सर्वे प्रतिगृह्य महौजसः ॥ १७ ॥
समुत्पेतुर्महावेगा हुताशसमतेजसः । रथैर्मत्तैर्नागैश्च वाजिभिश्च महाजवैः ॥ १८ ॥
शस्त्रैश्च निशितैस्तीक्ष्णैः सर्वैश्चोपहिता बलैः । ततस्तु ददृशुर्वीरा दीप्यमानं महाकपिम् ॥ १९ ॥
रश्मिमन्तमिवोद्यन्तं स्वतेजोरश्मिमालिनम् । तोरणस्थं महावेगं महासत्त्वं महाबलम् ॥ २० ॥
महामतिं महोत्साहं महाकायं महाभुजम् । तं समीक्ष्यैव ते सर्वे दिक्षु सर्वास्ववस्थिताः ॥ २१ ॥
तैस्तैः प्रहरणैर्भीमैरभिपेतुस्ततस्ततः । तस्य पञ्चायसास्तीक्ष्णाः सिताः पीतमुखाः शराः ॥
शिरस्युत्पलपत्राभा दुर्धरेण निपातिताः । ॥ २२ ॥
स तैः पञ्चभिराविद्धः शरैः शिरसि वानरः । उत्पपात नदन्व्योम्नि दिशो दश विनादयन् ॥ २३ ॥
ततस्तु दुर्धरो वीरः सरथः सज्जकार्मुकः । किरञ्शरशतैर्नैकैरभिपेदे महाबलः ॥ २४ ॥

नैवेति । यथास्य भीमा गतिः समुद्रप्लवनरूपा तथा तेषां नैव । यथा चास्य तेजआदि तथा तेषां न ॥ १३ ॥

१४]ति० टी०—रूपपरिकल्पनं यथेप्सितरूपपरिग्रहः॥१४॥

रा० टी०—ननु तेषामेवायमन्यतमोऽस्तु नाहं कपिं मन्ये इति कथमुच्यते इत्यत आह—नेति । एवं एतादृग् गतिप्रभृतिरेतेषां न अत इदं महत् सत्त्वं विज्ञेयम् अतो महत्प्रयत्नमास्थाय अस्य निग्रहः क्रियताम् श्लोकद्वयमेकान्वयि ॥१२॥१३॥

गो० टी०—नैवं तेषामिति । गतिः वेगः रूपपरिकल्पनं यथेष्टरूपग्रहणम् । महदिति । इत्थं महत्सत्त्वं किमपि कपिरूपं सत् व्यवस्थितमिति ज्ञेयमित्यर्थः ॥ ११–१६ ॥

१५ ] ति० टी०—प्रयत्नमित्यार्षं क्लीबत्वम् । कामम् । यद्यपीत्यर्थः ॥ १५ ॥

रा० टी०—काममिति । यद्यपि भवतामग्रतोऽग्रे रणाजिरे स्थातुमिन्द्रादयो न पर्याप्तास्तथापि नयज्ञेन जनेन आत्मा प्रयत्नेन रक्ष्यः हि यतो युद्धसिद्धिः चञ्चला अव्यवस्थिता । श्लोकद्वयमेकान्वयि ॥ १४ ॥ १५ ॥

१६–१९ ] ति० टी०—नयज्ञेन नीतिज्ञेन । आत्मा स्वदेहः । युद्धसिद्धिर्युद्धे जयः ॥ १६–१९ ॥

रा० टी०—ते इति । स्वामिवचनं परिगृह्य रथादिभिरुपहिता युक्तास्ते सेनाग्रगाः समुत्पेतुः । श्लोकद्वयमेकान्वयि ॥ १६ ॥ १७ ॥

रा० टी०—तत इति । उद्यन्तं रश्मिमन्तं सूर्यमिव स्वतेजोरश्मिमालिनम् अत एव दीप्यमानं महाकपिं वीरा ददृशुः॥१८

गो० टी०—ततस्तमित्यादि । स्वतेजोरश्मिमालिनं स्वतेजसा सूर्यम् रश्मिमन्तमिवेत्यत्र उपमा । अत्र रूपकमिति भिदा । तोरणस्थमिति । उत्साहः लोकोत्तरकार्येषु स्थेयान् प्रयत्नः । महासत्त्वं महाध्यवसायम् । द्रव्यासुव्यवसायेषु सत्त्वमस्त्री तु जन्तुष्वित्यमरः । द्वितीयबलशब्दः शक्तिवचनः । बलं रूपे-स्थिनि स्थौल्ये शक्तिरेतश्चमूषु चेति वैजयन्ती ॥ १७–१९ ॥

२० ] ति० टी०—सत्त्वं चित्तम् ॥ २० ॥

रा० टी०—तोरणस्थमिति । तोरणस्थं तं हनूमन्तं समीक्ष्यैव सर्वासु दिक्षु अवस्थिताः ते राक्षसास्तैस्तैः प्रहरणैरायुधैः ततस्ततः स्वस्वाधिष्ठितदिशातः अभिपेतुः श्लोकद्वयमेकान्वयि ॥ १९ ॥ २० ॥

२१ ] ति० टी०—दिक्षु सर्वास्ववस्थिताः । द्राक्तत्समीपमागन्तुं चकिता इति भावः ॥ २१ ॥

२२ ] ति० टी०—तीक्ष्णा मर्मच्छिदः, पीतमुखाः फलभागे स्वर्णरूपिताः । उत्पलपत्राभा एव, न तु तत्पीडार्हा इत्यर्थः॥२२॥

रा० टी०—तस्येति । तस्य हनुमतः शिरसि पीतमुखाः स्वर्णपुङ्खा इत्यर्थः आयसाः पञ्चशराः दुर्धरेण राक्षसेन निपातिताः ॥ २१ ॥

गो० टी०—तस्येति । तीक्ष्णाः क्रूराः शिताः निशिताः पीतमुखाः समीचीनायसनिर्मितत्वेन पीतरेखाग्राः । उत्पलपत्राभाः उत्पलपत्राणि यथा निपात्यन्ते तथा निपातिता इत्यर्थः ॥ २०–२२ ॥

२३ ] ति० टी०—स्वयं नदन् । तेन नादेन दिशो नादयन्नित्यर्थः । उत्पपात तोरणादिति शेषः ॥ २३ ॥

रा० टी०—स इति । पञ्चभिः शरैः शिरसि आविद्धः स हनुमान् नदन् अत एव दशदिशो विनादयन् सन् व्योम्नि आकाशे उत्पपात ॥ २२ ॥

गो० टी०—स कपिरिति । वारयामास स्ववेगेन प्रापयामासेत्यर्थः ॥ २३ ॥

२४ ] ति० टी०—अभिपेदे प्राप्तः ॥ २४ ॥

रा० टी०—तत इति । ततः हनुमदुत्प्लवनानन्तरं दुर्धरः

१ मत्तैश्च मातङ्गैरिति गो. पाठः । २ विविधैरिति गो. पाठः । ३ चिता इति गो. पाठः । ४ तमिति गो. पाठः । ५ महोत्साहमिति गो. पाठः । ६ महावेगमिति गो. पाठः । ७ महाबलमिति गो. पाठः । ८ वीरा इति गो. रा. पाठः । ९ शतैस्तीक्ष्णैरिति गो. पाठः ।

स कपिर्वारयामास तं व्योम्नि शरवर्षिणम् । वृष्टिमन्तं पयोदान्ते पयोदमिव मारुतः ॥ २५ ॥
अर्द्यमानस्ततस्तेन दुर्धरेणानिलात्मजः । चकार [1] निनदं भूयो व्यवर्धत च [2] वीर्यवान् ॥ २६ ॥
स दूरं सहसोत्पत्य दुर्धरस्य रथे हरिः । निपपात महावेगो विद्युद्राशिर्गिराविव ॥ २७ ॥
ततः स मथिताष्टाश्वं रथं भग्नाक्षकूबरम् । विहाय न्यपतद्भूमौ दुर्धरस्त्यक्तजीवितः ॥ २८ ॥
तं विरूपाक्षयूपाक्षौ दृष्ट्वा निपतितं भुवि । [3] तौ जातरोषौ दुर्धर्षावुत्पेततुररिन्दमौ ॥ २९ ॥
स ताभ्यां सहसोत्प्लुत्य विष्ठितो विमलेऽम्बरे । मुद्गराभ्यां महाबाहुर्वक्षस्यभिहतः कपिः ॥ ३० ॥
तयोर्वेगवतोर्वेगं [4] निहत्य स महाबलः । निपपात पुनर्भूमौ सुपर्ण [5] इव वेगितः ॥ ३१ ॥
स सालवृक्षमासाद्य समुत्पाट्य च वानरः । तावुभौ राक्षसौ वीरौ जघान पवनात्मजः ॥ ३२ ॥
ततस्तांस्त्रीन्हतान्ज्ञात्वा वानरेण तरस्विना । अभिगम्य महावेगः प्रहस्य प्रघसो बली ॥ ३३ ॥
भासकर्णश्च संक्रुद्धः शूलमादाय वीर्यवान् । एकतः कपिशार्दूलं यशस्विनमवस्थितौ ॥ ३४ ॥
पट्टिशेन शिताग्रेण प्रघसः प्रत्यपोथयत् । भासकर्णश्च शूलेन राक्षसः कपिकुञ्जरम् ॥ ३५ ॥
स ताभ्यां विक्षतैर्गात्रैरसृग्दिग्धतनूरुहः । अभवद्वानरः क्रुद्धो बालसूर्यसमप्रभः ॥ ३६ ॥
समुत्पाट्य गिरेः शृङ्गं समृगव्यालपादपम् । जघान हनुमान्वीरो राक्षसौ कपिकुञ्जरः ॥
[10] गिरिशृङ्गसुनिष्पिष्टौ तिलशस्तौ बभूवतुः ॥ ३७ ॥
ततस्तेष्ववसन्नेषु सेनापतिषु पञ्चसु । बलं तदवशेषं तु नाशयामास वानरः ॥ ३८ ॥
अश्वैरश्वान्गजैर्नागान्योधैर्योधान्रथै रथान् । स कपिर्नाशयामास सहस्राक्ष इवासुरान् ॥ ३९ ॥
हयैर्नागैस्तुरङ्गैश्च भग्नाक्षैश्च महारथैः । हतैश्च राक्षसैर्भूमी रुद्धमार्गा समन्ततः ॥ ४० ॥

---

तदभियो राक्षसः शरशतैः किरन् सन् अभिपेदे तत्समीपं प्राप ॥ २३ ॥ २४ ॥

२५-२६] ति० टी०—कपिर्व्योम्नि स्थित्वा तं स्वनादेन हुंकारादिरूपेण वारयामास। पयोदान्ते जलदात्ययवर्षाकालान्ते २५।२६

रा० टी०—स इति । स हनुमान् व्योम्नि शरवर्षिणं तं दुर्धरं पयोदान्ते वर्षान्तकाले मारुतो वृष्टिमन्तं पयोदमिव वारयामास ॥ २५ ॥

रा० टी०—अर्द्यमान इति । दुर्धरेण अर्द्यमानः अनिलात्मजः निनदं चकार व्यवर्धत च ॥ २६ ॥

गो० टी०—अर्द्यमानमिति । कदनं युद्धम् ॥ २४ ॥

२७-२९] ति० टी०—रथे निपपातेत्यन्वयः ॥ २७-२९ ॥

रा० टी०—स इति । स हनुमान् दूरं विद्यमाने दुर्धरस्य रथे गिरौ विद्युद्राशिरिव निपपात ॥ २७ ॥

रा० टी०—तत इति । ततो हनुमन्निपातानन्तरं मथिताः हिंसिताः अष्टौ अश्वाः यस्य तं भग्नाक्षकूबरं रथं विहाय दुर्धरः त्यक्तजीवितोऽभवदिति शेषः ॥ २८ ॥

रा० टी०—तमिति । तौ सहैवागतौ विरूपाक्षयूपाक्षौ तं दुर्धरं भुवि निपतितं दृष्ट्वा जातरोषौ सन्तौ उत्पेततुः ॥ २९ ॥

गो० टी०—स दूरमिति । विद्युद्राशिः अशनिः ॥ २६ ॥

गो० टी०—तत इति । कूबरः युगन्धरः ॥ २६ ॥ २८ ॥

३० ] ति० टी०—ताभ्यां कर्तृभ्यां मुद्गराभ्यां करणाभ्यामभिहतः ॥ ३० ॥

रा० टी०—स इति । अम्बरे आकाशे विष्ठितः स हनुमान् ताभ्यां विरूपाक्षयूपाक्षाभ्यां मुद्गराभ्यां करणाभ्यां वक्षसि अभिहतोऽभवदिति शेषः ॥ ३० ॥

३१-३३] ति० टी०—निहत्य वज्रवक्षस्त्वाद्व्यर्थीकृत्य ॥ ३१ ॥

रा० टी०—तयोरिति । वेगवतोः तयोः राक्षसयोर्वेगं निहत्य निष्फलीकृत्येत्यर्थः महाबलो हनुमान् वेगितः सुपर्णो गरुड इव भूमौ पुनर्निपपात ॥ ३१ ॥

रा० टी०—स इति । स भूमिं प्राप्तो हनुमान् शालवृक्षमासाद्य समुत्पाट्य च जघान ॥ ३२ ॥

रा० टी०—तत इति । वानरेण हतान् त्रीन् दुर्धरादीन् ज्ञात्वा एकतः एकदिशातः महावेगः प्रघसः एकतः भासकर्णश्च कपिशार्दूलं हनुमन्तमभिगम्य प्राप्य अवस्थितौ । श्लोकद्वयमेकान्वयि ॥ ३३ ॥ ३४ ॥

गो० टी०—तयोरिति । वेगं विनिहत्य परिहृत्य ॥ २९-३८

३४-३५ ] ति० टी०—एकतोऽवस्थितावित्यन्वयः । परस्परसाहाय्यबुद्ध्यैकदेशे स्थिताविन्यर्थः ॥ ३४ ॥ ३५ ॥

रा० टी०—पट्टिशेनेति । शिताग्रेण पट्टिशेन प्रघसः शूलेन भासकर्णश्च कपिकुञ्जरं प्रत्ययोधयत् ॥ ३५ ॥

३६-४० ] ति० टी०—विक्षतैर्गात्रैरुपलक्षितः ॥ ३६-४० ॥

---

१ कदनमिति गो. पाठः । २ वेगवानिति गो. पाठः । ३ समिति गो. पाठे । ४ उत्पत्येति गो. पाठः । ५ विनिहत्येति गो. पाठः । ६ समविक्रम इति गो. पाठः । ७ पदे इति गो. पाठः । ८ अवस्थितावेति गो. पाठः । ९ ससममिति गो. पाठः । १० अर्धमेतत् गो. नास्ति ।

ततः कपिस्तान्ध्वजिनीपतीन्रणे निहत्य वीरान्सबलान्सवाहनान् ।
तथैव वीरः परिगृह्य तोरणं कृतक्षणः काल इव प्रजाक्षये ॥ ४१ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये सुन्दरकाण्डे षट्चत्वारिंशः सर्गः ॥ ४६ ॥

## सप्तचत्वारिंशः सर्गः ।

हनुमता योद्धुमागतस्याक्षाभिधरावणपुत्रस्य वधः ॥

सेनापतीन्पञ्च स तु प्रमापितान्हनूमता सानुचरान्सवाहनान् ।
निशम्य राजा समरोद्धतोन्मुखं कुमारमक्षं प्रसमैक्षताक्षम् ॥ १ ॥
स तस्य दृष्ट्यर्पणसंप्रचोदितः प्रतापवान्काञ्चनचित्रकार्मुकः ।
समुत्पपाताथ सदस्युदीरितो द्विजातिमुख्यैर्हविषेव पावकः ॥ २ ॥
ततो महान्बालदिवाकरप्रभं प्रतप्तजाम्बूनदजालसंततम् ।
रथं समास्थाय ययौ स वीर्यवान्महाहरिं तं प्रति नैर्ऋतर्षभः ॥ ३ ॥

रा० टी०—स इति । ताभ्यां प्रघसभासकर्णाभ्यां विक्षतैः गात्रैरुपलक्षितः अत एव असृजा रुधिरेण दिग्धाः व्याप्ताः तनूरुहा यस्य अत एव बालसूर्यसमप्रभः वानरः क्रुद्धोऽभवत् ॥ ३६ ॥

रा० टी०—समिति । कपिकुञ्जरो हनुमान् समृगव्यालपादपं मृगव्यालपादपसहितं गिरेः शृङ्गं समुत्पाट्य राक्षसौ जघान ॥ ३७ ॥

रा० टी०—गिरीति । तौ राक्षसौ तिलशः गिरिशृङ्गसुनिष्पिष्टौ बभूवतुः अर्थं पृथक् । तत इति । तेषु पञ्चसु सेनापतिषु अवसन्नेषु विनष्टेषु सत्सु अवशेषमपि बलं वानरो नाशयामास ॥ ३८ ॥

रा० टी०—विनाशनप्रकारमाह—अश्वैरिति । असुरान् सहस्राक्ष इव अश्वादिभिरश्वादीन् कपिर्नाशयामास ॥ ३९ ॥

रा० टी०—हतैरिति । हतैर्नागादिभिर्भग्नाक्षैर्महारथैश्च रुद्धमार्गा भूमिरभवदिति शेषः ॥ ४० ॥

४१ ] ति० टी०—ध्वजिनीपतीन्सेनापतीन् । परिगृह्याश्रित्य स्थित इति शेषः । कृतक्षणो लब्धावसरः ॥ ४१ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये सुन्दरकाण्डे षट्चत्वारिंशः सर्गः ॥ ४६ ॥

रा० टी०—तत इति । कपिर्हनुमान् रणे ध्वजिनीपतीन् निहत्य कृतक्षणः लब्धावसरः सन् तोरणं परिगृह्य प्रजाक्षये काल इव अतिष्ठदिति शेषः ॥ ४१ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ सुन्दरकाण्डे षट्चत्वारिंशः सर्गः ॥ ४६ ॥

गो० टी०—तत इति । ध्वजिनीपतीन् सेनापतीन् । कृतक्षणः दत्तावसरः । अभूदिति शेषः ॥ ३९ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने षट्चत्वारिंशः सर्गः ॥४६॥

१ ] ति० टी०—प्रमापितान्मारितान् । समरोद्धतोन्मुखं समरोद्धतश्चासौ समरायोन्मुखश्च तमक्षं समक्षमवस्थितमक्षाख्यं कुमारं निशम्य दृष्ट्वा प्रसमैक्षत । दृष्ट्या युद्धार्थमाज्ञापयामासेत्यर्थः ॥ १ ॥

रा० टी०—सेनापतिविनाशानन्तरकालिकं रावणवृत्तान्तमाह—सेनेति । राजा स रावणः पञ्चसेनापतीन् प्रमापितान् विध्वंसितान् निशम्य श्रुत्वा समरोद्धतोन्मुखं समरोद्धताय महासंग्रामाय उन्मुखम् उद्युक्तम् अक्षतं क्षतिरहितम् अक्षम् अक्षाभिधं कुमारं प्रसमैक्षत समवालोकत ॥ १ ॥

गो० टी०—सेनापतीनित्यादि । समीक्ष्य विज्ञाय॥ १॥

२ ] ति० टी०—तदेवाह—स इति । सदसि यज्ञशालायां द्विजातिमुख्यैर्हविषोदीरितः प्रेरितः पावक इव समुत्पपात॥२॥

रा० टी०—स इति । तस्य रावणस्य दृष्ट्यर्पणेन दृष्टिप्रचालनेनैव संप्रचोदितः प्रेरितः प्रतापवान् अक्षकुमारः सदसि यागशालायां द्विजातिमुख्यैर्हविषोदीरितः पावक इव समुत्पपात ॥ २ ॥

गो० टी०—स इति । द्विजातिमुख्यैः हविषा उदीरितः अभिवर्धितः पावक इवेत्यन्वयः ॥ २ ॥ ३ ॥

३ ] ति० टी०—महान्स इत्यन्वयः । जाम्बूनदजालेन तत्समूहेन संततं व्याप्तम् ॥ ३ ॥

१ समीक्ष्येति गो. पाठः । २ अमृत इति गो. अक्षतमिति रा. पाठः । ३ महदिति गो. पाठः ।

ततस्तपःसंग्रहसंचयार्जितं प्रतप्तजाम्बूनदजालचित्रितम् ।
पताकिनं रत्नविभूषितध्वजं मनोजवाष्टाश्ववरैः सुयोजितम् ॥ ४ ॥
सुरासुराधृष्यमसङ्गचारिणं तडित्प्रभं व्योमचरं समाहितम् ।
सतूणमष्टासिनिबद्धबन्धुरं यथाक्रमावेशितशक्तितोमरम् ॥ ५ ॥
विराजमानं प्रतिपूर्णवस्तुना सहेमदाम्ना शशिसूर्यवर्चसा ।
दिवाकराभं रथमास्थितस्ततः स निर्जगामामरतुल्यविक्रमः ॥ ६ ॥
स पूरयन्खं च महीं च साचलां तुरङ्गमातङ्गमहारथस्वनैः ।
बलैः समेतैः सहतोरणस्थितं समर्थमासीनमुपागमत्कपिम् ॥ ७ ॥
स तं समासाद्य हरिं हरीक्षणो युगान्तकालाग्निमिव प्रजाक्षये ।
अवस्थितं विस्मितजातसंभ्रमं समैक्षताक्षो बहुमानचक्षुषा ॥ ८ ॥

रा० टी०–तत इति । प्रतप्तजाम्बूनदस्य जालेन संततं व्याप्तं रथं समास्थाय महान् नैर्ऋतर्षभः महाहरिं हनुमन्तं प्रति ययौ ॥ ३ ॥

४ ] ति० टी०–उक्तमेवार्थं विशिष्याह—तत इति । तपःसंग्रहस्य तपोऽनुष्ठानस्य संचयेन समृद्ध्याऽर्जितम् ॥ ४ ॥

रा० टी०–तत इति । तपःसंग्रहस्य तपश्चर्यायाः संचयेन अर्जितं प्राप्तं रत्नविभूषितो ध्वजो यस्मिन् मनोजवैरष्टभिरश्ववरैः सुयोजितम् ॥ ४ ॥

गो० टी०–ततो महदित्यनेनोक्तं विस्तरेणाह—ततस्तपःसंग्रहेत्यादिना । तपःसंग्रहसंचयार्जितं तपोऽनुष्ठानसमूहसंपादितम् समाहितं सज्जीकृतम् अष्टासिनिबद्धबन्धुरम् अष्टासिभिर्निबद्धम् अत एव बन्धुरम् सुन्दरम् 'बन्धुरं सुन्दरे नम्रे' इति विश्वः यद्वा अष्टासिभिर्निबद्धं बन्धुरं यस्य स तथा बन्धुरं फलकासंघाट इत्याहुः । अन्ये घण्टा इत्यप्याहुः । तदानीम् अष्टासिश्चासौ निबद्धबन्धुरश्चेति समासः । यथाक्रमावेशितशक्तितोमरं पङ्क्तितया स्थापितशक्तितोमरम् । प्रतिपूर्णवस्तुना समग्रोपकरणेन शरधनुःकवचादीन्युपकारणानि प्रतिपूर्णमस्तिनेति पाठे अस्तिना धनेनेत्यर्थः । हेमदाम्ना हेममयाश्वादिबन्धनरज्जुना । शशिसूर्यवर्चसा दामसु किंचित्सितवर्णं किंचित्सूर्यवत्पीतवर्णमित्यर्थः । प्रतिपूर्णवस्तुना शशिसूर्यवर्चसा हेमदाम्ना च विराजमानमित्यन्वयः । यद्वा क्वचिच्छशिवर्चसा क्वचित्सूर्यवर्चसा च विराजमानमित्यन्वयः । वितानादिषु शशिवर्चसा हेममयरथाङ्गेषु सूर्यवर्चसा । दिवाकराभमित्याकाशचारित्वे दृष्टान्तः अतो न रविप्रभमित्यनेन पुनरुक्तिः । तच्छब्दद्वयं च पूर्वानुस्मरणार्थम् ॥ ४–६ ॥

५ ] ति० टी०–अत एव व्योमचरमसंगचारिणम् पर्वतादिष्वप्रीति भावः । समाहितं सज्जम् । तूण इषुधिः । अष्टसु दिक्ष्वसिभिः सह निबद्धा बन्धुरा रथफलका यस्मिंस्तम् । यथाक्रमं यथास्थानमावेशितं शक्तितोमरं यस्मिंस्तम् ॥ ५ ॥

रा० टी०–असंगचारिणं निरालम्बगमनशीलम् अत एव व्योमचरम् समाहितं सम्यक् संस्थापितं सतूणमिषुधिसहितम् अष्टभिरसिभिर्निबद्धा बन्धुरा यस्य यथाक्रममावेशितानि शक्तितोमराणि यस्मिन् ॥ ५ ॥

६ ] ति० टी०–प्रतिपूर्णवस्तुना युद्धपरिकरवस्तुना । शशिसूर्यवर्चसा तद्वद्दिमवर्चसा । हेमदामसहितेन वस्तुना विराजमानम् ॥ ६ ॥

रा० टी०–सहेमदाम्ना हेमदामसहितेन शशिसूर्यवर्चसा प्रतिपूर्णवस्तुना युद्धनिखिलसामग्र्या विराजमानं दिवाकराभं रथमास्थितः अमरतुल्यविक्रमः सोऽक्षयकुमारः निर्जगाम । श्लोकत्रयमेकान्वयि ॥ ६ ॥

७ ] ति० टी०–तोरणस्थितं तोरणाश्रयम् आसीनमुपविष्टम् ॥ ७ ॥

रा० टी०–स इति । स कुमारः तुरङ्गादिस्वनैः खादीन् पूरयन् सन् तोरणस्थितं तोरणावलम्बमासीनं कपिमुपागमत् ॥ ७ ॥

गो० टी०–स पूरयन्निति । सः अक्षः । हिः प्रसिद्धौ ॥७॥

८ ] ति० टी०–हरीक्षणः सिंहवत्क्रूरदृष्टिः । युगान्तकालाग्निवत्प्रजाक्षयेऽवस्थितं हरिं समासाद्य तमैक्षत विस्मितं च तं जातसंभ्रमं च बालोऽयं मां योद्धुमिच्छतीति विस्मयः रावणपुत्रत्वाच्च तत्र जातादरत्वम् ॥ ८ ॥

रा० टी०–स इति । हरीक्षणः सिंहवद्भयंकरदृष्टिः सोऽक्षकुमारः प्रजाक्षये कालाग्निमिवावस्थितं विस्मितेन कुमारोऽयं मया कथं योद्धुमिच्छतीति विस्मयेन जातः संभ्रम उद्वेगो यस्मिन् तं हनुमन्तमक्षः बहुमानचक्षुषा अतिगर्वदृष्ट्या ऐक्षत॥८॥

गो०टी०–स तमिति । हरीक्षणः सिंहप्रेक्षणः । प्रजाक्षये अवस्थितं प्राणिनाशे प्रवृत्तम् विस्मितश्चासौ जातसंभ्रमश्च विस्मितजातसंभ्रमः ॥ ८ ॥

१ शोभितमिति गो. पाठः । २ रविप्रभमिति गो. पाठः । ३ संभ्रमः इति गो. पाठः ।

स तस्य वेगं च कपेर्महात्मनः पराक्रमं चारिषु रावणात्मजः ।
विचारयन्स्वं च बलं महाबलो युगक्षये सूर्य इवाभिवर्धत ॥ ९ ॥
स जातमन्युः प्रसमीक्ष्य विक्रमं स्थितः स्थिरः संयति दुर्निवारणम् ।
समाहितात्मा हनुमन्तमाहवे प्रचोदयामास शितैः शरैस्त्रिभिः ॥ १० ॥
ततः कपिं तं प्रसमीक्ष्य गर्वितं जितश्रमं शत्रुपराजयोचितम् ।
अवैक्षताक्षः समुदीर्णमानसं सबाणपाणिः प्रगृहीतकार्मुकः ॥ ११ ॥
स हेमनिष्काङ्गदचारुकुण्डलः समाससादाशुपराक्रमः कपिम् ।
तयोर्बभूवाप्रतिमः समागमः सुरासुराणामपि संभ्रमप्रदः ॥ १२ ॥
ररास भूमिर्न तताप भानुमान्ववौ न वायुः प्रचचाल चाचलः ।
कपेः कुमारस्य च वीर्यसंयुगं ननाद च द्यौरुदधिश्च चुक्षुभे ॥ १३ ॥
स तस्य वीरः सुमुखान्पतत्रिणः सुवर्णपुङ्खान्सविषानिवोरगान् ।
समाधिसंयोगविमोक्षतत्त्वविच्छरानथ त्रीन्कपिमूर्ध्न्यताडयत् ॥ १४ ॥
स तैः शरैर्मूर्ध्नि समं निपातितैः क्षरन्नसृग्दिग्धविवृत्तनेत्रः ।
नवोदितादित्यनिभः शरांशुमान्व्यराजतादित्य इवांशुमालिकः ॥ १५ ॥

---

९ ] ति० टी०–अभिवर्धत तेजसाऽभ्यवर्धतेत्यर्थः ॥ ९ ॥

रा० टी०–स इति । रावणात्मजः सोऽक्षः कपेर्वेगम् अरिषु पराक्रमं च स्वं बलं पराक्रमं च विचारयन् न्यूनाधिकभावं चिन्तयन् सन् युगक्षये सूर्य इव अभिवर्धत अभ्यवर्धत ॥ ९ ॥

गो० टी०–स तस्येति । विधारयन् निर्धारयन् । विचारयन्निति च पाठः ॥ ९–१२ ॥

१०–११ ] ति० टी०–स्थिरः स्थितः सः प्रसमीक्ष्य विक्रमं संदर्शनीयपराक्रमम् । संयति रणे दुःखं निवारणं यस्य तं त्रिभिः शरैः प्रचोदयामास युद्धाय प्रेरयामास ॥ १० ॥ ११ ॥

रा० टी०–स इति । विक्रमं हनुमत्कर्तृकराक्षसविध्वंसादिं प्रसमीक्ष्य संचिन्त्य जातमन्युः अत एव संयति संग्रामे स्थितः समाहितात्मा एकाग्रचित्तः सोऽक्षः संयति दुर्निवारणं स्थिरं हनुमन्तं त्रिभिः शरैः प्रचोदयामास युद्धाय प्रेरयामास ॥ १० ॥

रा० टी०–तत इति । ततः बाणप्रक्षेपानन्तरं जितः श्रमः बाणवेगजनितखेदो येन अत एव समुदीर्णं युद्धाय प्रवृद्धं मानसं यस्य अत एव गर्वितं गर्वितत्वेन प्रतीयमानम् अत एव शत्रुपराजयोचितं शत्रुपराजययोग्यं तं हनुमन्तम् अक्षः गर्वितं प्रसमीक्ष्य विज्ञाय अवैक्षत ॥ ११ ॥

१२ ] ति० टी०–निष्कमुरोभूषणम् । आशुपराक्रमः । तीक्ष्णपौरुष इति यावत् । समागमो युद्धम् । संभ्रमप्रदो भयप्रदः ॥ १२ ॥

रा० टी०–स इति । हेमनिष्काङ्गदाभ्यां सहितं चारु कुण्डलं यस्य सः आशुपराक्रमः स कुमारः कपिं समाससाद निष्कमुरोभूषणं तयोः अक्षहनुमतोः अप्रतिमः उपमारहितः समागमो बभूव ॥ १२ ॥

१३ ] ति० टी०–भूमिर्भूमिस्थप्राणिजातं ररास । वीर्यप्रवृत्तं संयुगम् । वीक्ष्येति शेषः ॥ १३ ॥

रा० टी०–ररासेति । कपेः, कुमारस्य च वीर्यसंयुगम् । अतिवीर्यहेतुकसंग्रामम् अवलोक्येति शेषः, भूप्रभृतिः रासप्रभृतिं न चकार ॥ १३ ॥

गो० टी०–ररासेति । न तताप भानुमान् । सूर्योदयः पूर्वं सूचितः सः न ततापेत्युच्यते ॥ १३ ॥

१४ ] ति० टी०–समाधिर्लक्ष्यदर्शनम्, संयोगः शरसंधानम्, विमोक्षः संहितस्य त्यागः, तेषां तत्त्ववित् । अताडयदपातयत् ॥ १४ ॥

रा० टी०–स इति । तस्य बाणस्य समाधिसंयोगविमोक्षः तत्त्ववित् समाधिर्लक्ष्यदर्शनं संयोगः शरसंधानं विमोक्षः तस्य त्यागः तेषां तत्त्वस्य याथार्थ्यस्य वेदिता वीरः सोऽक्षकुमारः सुवर्णपुङ्खान् स्वर्णमयपुङ्खविशिष्टान् अत एव सुमुखान् उरगानिव त्रीन् पतत्रिणो बाणान् कपिमूर्ध्नि अताडयत् ॥ १४ ॥

गो० टी०–तत इति । समाधिसंयोगविमोक्षतत्त्ववित् समाधिः लक्ष्यवेदनं संयोगः शरसंधानं विमोक्षः तद्विसर्गः तेषां तत्त्ववित् यथार्थवित् ॥ १४ ॥

१५ ] ति० टी०–असृग्दिग्धश्चासौ विवृत्तनेत्रश्च । 'विवृत्तलोचनः' इति पाठे अवसरोचितचक्षुरित्यर्थः नवोदितादित्यसंनिभः । रक्तवर्ण इत्यर्थः । शरांशुमान्स्वमस्तकस्थशररूपांशुमान् । अंशुमालाधृत्सूर्य इव व्यराजत ॥ १५ ॥

---

१ पार्थिवात्मज इति गो. पाठः । २ धारयन्निति गो. पाठः । ३ हिमक्षय इति गो. पाठः । ४ वर्धते इति गो. पाठः । ५ स्थिरं स्थित इति गो. स्थिरमिति रा. पाठः । ६ वीक्ष्येति गो. पाठः । ७ लोचन इति गो. रा. पाठः ।

ततः प्लवङ्गाधिपमन्त्रिसत्तमः समीक्ष्य तं राजवरात्मजं रणे ।
उदग्र[1]चित्रायुधचित्रकार्मुकं जहर्ष चापूर्यत चाहवोन्मुखः ॥ १६ ॥
स मन्दराग्रस्त इवांशुमाली विवृद्धकोपो बलवीर्यसंवृतः ।
कुमारमक्षं सबलं सवाहनं ददाह नेत्राग्निमरीचिभिस्तदा ॥ १७ ॥
ततः स बाणासनशक्रकार्मुकः शरप्रवर्षो युधि राक्षसाम्बुदः ।
शरान्मुमोचाशु हरीश्वराचले बलाहको वृष्टिमिवाचलोत्तमे ॥ १८ ॥
कपिस्ततस्तं रणचण्डवि[2]क्रमं प्रवृद्धतेजोबलवीर्यसायकम् ।
कुमारमक्षं प्रसमीक्ष्य संयुगे ननाद हर्षाद्धनतुल्यनिःस्वनः ॥ १९ ॥
स बालभावाद्युधि वीर्यदर्पितः प्रवृद्धमन्युः क्षतजोपमेक्षणः ।
समाससादाप्रतिमं रणे कपिं गजो महाकूपमिवावृतं तृणैः ॥ २० ॥
स तेन बाणैः प्रसभं निपातितैश्चकार नादं घननादनिःस्वनः ।
समु[3]त्सहेनाशु नभः समा[4]रुजन्भुजोरुविक्षेपणघोरदर्शनः ॥ २१ ॥
तमुत्पतन्तं समभिद्रवद्बली स राक्षसानां प्रवरः प्रतापवान् ।
रथी रथिश्रेष्ठ[5]तरः किरञ्छरैः पयोधरः शैलमिवाश्मवृष्टिभिः ॥ २२ ॥

---

रा० टी०—स इति । सममेककालावच्छेदेन मूर्ध्नि निपातितैः शरैः असृक् रुधिरं क्षरन् प्रस्रावयन् अत एव दिग्धे असृग्व्याप्ते विवृत्तलोचने स्वाभाविकविशालनेत्रे यस्य शरांशुमान् शररूपकिरणविशिष्टः अत एव नवोदितादित्यनिभः सः हनुमान् अंशुमालिकः चन्द्र इव व्यराजत ॥ १५ ॥

गो० टी०—स तैरिति । रक्तसिक्तत्वे दृष्टान्तो नवोदितेति । शराचितत्वे दृष्टान्त आदित्य इवांशुमालिक इति ॥१५॥

१६ ] ति० टी०—आपूर्यत व्यवर्धत ॥ १६ ॥

रा० टी०—तत इति । प्लवगाधिप एव मन्त्रिसत्तमो हनूमान् उदग्राणि अत्युत्तमानि चित्रायुधानि यस्य चित्राणि कार्मुकानि धनूंपि यस्य स एव स इति कर्मधारयः तं राजवरात्मजमक्षं समीक्ष्य जहर्ष अपूर्यत अवर्धत च ॥ १६ ॥

गो० टी०—तत इति । आपूर्यत व्यवर्धत ॥ १६ ॥

१७ ] ति० टी०—मन्दराग्रस्थत्वेन मध्यंदिनस्थत्वं लक्ष्यते ॥ १७ ॥

रा० टी०—स इति । विवृद्धकोपः मन्दराग्रस्थोंऽशुमाली सूर्य इव हनूमान् अक्षं कुमारं नेत्राग्निमरीचिभिः ददाह इव॥१७॥

गो० टी०—स इति । मन्दराग्रस्थः मन्दरो नाम भूमध्यपर्वतः । तदग्रे मध्याह्ने वर्तत इत्यौढ्योक्तिः ॥ १७ ॥

१८ ] ति०टी०—बाणासनमेव शक्रकार्मुकं यस्य सः॥१८॥

रा० टी०—तत इति । बाणासनं धनुरेव शक्रकार्मुकं यस्य शर एव प्रवर्षः अतिवृष्टिर्यस्य स राक्षसाम्बुदः अक्षः हरीश्वराचले शरान् मुमोच । तत्र दृष्टान्तः अचलोत्तमे वृष्टिं बलाहक इव ॥ १८ ॥

गो० टी०—ततः स बाणासनेति । बाणासनचित्रकार्मुकः बाणाः अस्यन्ते क्षिप्यन्तेऽनेनेति बाणासनः बाणविमोक्षकचित्रकार्मुक इत्यर्थः ॥ १८–२२ ॥

१९ ] ति० टी०—तेजआदि सायकान्ताः प्रवृद्धा यस्य॥१९॥

रा० टी०—कपिरिति । रणचण्डविक्रमम् अक्षं कुमारं संयुगे प्रसमीक्ष्य कपिर्हर्षान्ननाद ॥ १९ ॥

२० ] ति० टी०—तृणैरावृतं महाकूपं गजपातनार्थकृतगर्तम् ॥ २० ॥

रा० टी०—स इति । बालभावात् बालत्वाद्धेतोः वीर्यदर्पितः प्रवृद्धः मन्युर्यस्य क्षतजोपमे ईक्षणे यस्य सः अक्षः रणे अप्रतिमं कपिं तृणैरावृतं कूपमिव समाससाद प्राप॥२०॥

२१ ] ति० टी०—घननादनिःस्वनो मेघशब्दसदृशशब्दः । समुत्सहेन समुत्साहेन ह्रस्व आर्षः । भुजयोरूर्वोर्विक्षेपणेन घोरं दर्शनं यस्य सः ॥ २१ ॥

रा० टी०—स इति । तेन कुमारेण प्रसभं निपातितैर्बाणैर्घननादनिःस्वनः भुजोरुविक्षेपणेन घोरं दर्शनं यस्य स मारुतिः समुत्सहेन नभः समुत्साहेन नभस्थानपि समारुजन् । सन् नादं चकार । ह्रस्व आर्ष इति भट्टाः ॥ २१ ॥

२२ ] ति० टी०—समभिद्रवदभ्यद्रवत् ॥ २२ ॥

रा० टी०—तमिति । रथी रथसहितः रथिश्रेष्ठतरः राक्ष-

---

१ चित्रेति गो. पाठः । २ विक्रम इति गो. पाठः । ३ उत्पपातेति गो. पाठः । ४ मारुतिरिति गो. पाठः । ५ तम इति गो. पाठः ।

स ताञ्छरांस्तस्य हरिर्विमोक्षयंश्चचार वीरः पथि वायुसेविते ।
शरान्तरे मारुतवद्विनिष्पतन्मनोजवः संयति [1]भीमविक्रमः ॥ २३ ॥
तमात्तबाणासनमाहवोन्मुखं खमास्तृणन्तं [2]विविधैः शरोत्तमैः ।
अवैक्षताक्षं बहुमानचक्षुषा जगाम चिन्तां स च मारुतात्मजः ॥ २४ ॥
ततः शरैर्भिन्नभुजान्तरः कपिः कुमार[3]वीर्येण महात्मना नदन् ।
महाभुजः कर्मविशेषतत्त्वविद्विचिन्तयामास रणे पराक्रमम् ॥ २५ ॥
अबालवद्बालदिवाकरप्रभः करोत्ययं कर्म [4]महान्महाबलः ।
न चास्य सर्वाहवकर्म[5]शालिनः प्रमापणे मे मतिरत्र जायते ॥ २६ ॥
अयं महात्मा च महांश्च वीर्यतः समाहितश्चातिसहश्च संयुगे ।
असंशयं कर्मगुणोदयादयं सनागयक्षैर्मुनिभिश्च पूजितः ॥ २७ ॥
पराक्रमोत्साहविवृद्धमानसः समीक्षते मां [6]प्रमुखोऽग्रतः स्थितः ।
पराक्रमो ह्यस्य मनांसि कम्पयेत्सुरासुराणामपि शीघ्र[7]कारिणः ॥ २८ ॥

सानां प्रवरः सोऽक्षकुमारः अश्मवृष्टिभिः शैलं पयोधर इव उत्पतन्तं तं हनूमन्तं शरैः किरन् सन् समभिद्रवत् ॥ २२ ॥

२३-२४ ] ति० टी०—शरान्विमोक्षयन्व्यर्थीकुर्वन् । तदुपायः—शरान्तर इति ॥ २३ ॥ २४ ॥

रा०टी०—स इति । शरान्तरे शराणामन्तरं मध्यं यस्मिन् तस्मिन् संयति संग्रामे शरान्तरे शरमध्ये विनिष्पतन्नपि हरिः स हनूमान् तस्य कुमारस्य तान् शरान् विमोक्षयन् स्वकर्मकस्पर्शाभावं प्रापयन् सन् वायुसेविते पथि चचार ॥ २३ ॥

रा० टी०—तमिति । आत्तं बाणासनं धनुर्येन तं विविधैः शरोत्तमैः समास्तृणन्तम् अक्षं स हनूमान् बहुमानचक्षुषा सत्कारसूचकावलोकनेन अवेक्षत चिन्तां जगाम ॥ २४ ॥

गो० टी०—स तानिति । विमोक्षयन् शरीरे असंयोजयन् । लाघवातिशयेनेति भावः ॥ २३ ॥

गो० टी०—तमिति । आस्तृणन्तम् आच्छादयन्तम् । विशिखैः विविधशिखैः । चिन्तां जगाम कथमेतादृशमेनं वधिष्यामीत्येवम् ॥ २४ ॥

२५ ] ति० टी०—एवं शरान्व्यर्थीकुर्वतोऽपि भुजान्तरभेदरूपकर्मविशेषतत्त्वज्ञः पराक्रमविशेषेण चिन्तयामास ॥ २५ ॥

रा० टी०—तदेव भङ्ग्यन्तरेणाह—तत इति । शरैर्भिन्नं भुजान्तरं यस्य स कपिः रणे पराक्रमम् अक्षकुमारबलवत्त्वं विचिन्तयामास ॥ २५ ॥

गो०टी०—इदमेवोपपादयति-ततः शरैरित्यादिना २५-२६

२६ ] ति० टी०—चिन्ताप्रकारः—अबालवदिति । सर्वाहवकर्मशालिनः सर्वप्रकाराहवकर्मशालिनः । अत्रास्मिन्कालेऽस्य प्रमापणे मे मतिर्न जायते । ‘ प्रमापणे मारुतिरत्र जायते ’ इति पाठे ‘ अयं जनः ’ इतिवत्स्वस्यैव हनुमता मारुतिरिति निर्देशः ॥ २६ ॥

रा० टी०—चिन्ताकारमाह—अबालवदिति । बालदिवाकरप्रभः अयं कुमारः अबालवत्कर्म करोति अतः सर्वाहवकर्मशालिनः आहवनिखिलक्रियाविज्ञातुः अस्य प्रमापणे विध्वंसने अत्र अस्मिन्समये मे मतिर्न जायते ॥ २६ ॥

२७ ] ति० टी०—समाहितोऽवहितः । अतिसहोऽतिरणक्लेशसहः । कर्मगुणोदयाद्रणकर्मणो गुणोदयोत्कर्षस्य दर्शनाद्धेतोः पूजित इत्यर्थः ॥ २७ ॥

रा० टी०—अयमिति । महान् आत्मा प्रयत्नो यस्य सः वीर्यतो वीर्येण महान् समाहितः सावधानः संयुगे अतिसहः प्रहाराद्यतिसहनशीलः अयमक्षः कर्मगुणोदयात् प्रहारादिक्रियाप्रकाशात् सनागयक्षैर्नागयक्षसहितैर्मुनिभिः पूजितो भवेदिति शेषः ॥ २७ ॥

गो० टी०—अयमिति । अतिसहः अतिसोढा । कर्मगुणोदयात् युद्धकर्मोत्कर्षाभिवृद्धेः ॥ २७--२९ ॥

२८ ] ति० टी०—पराक्रमविषयोत्साहेन विवृद्धं मानसं यस्य तादृशः सन्मां समीक्षते, न तु कातर्येणेत्यर्थः । प्रमुखो वीरमुख्यः ॥ २८ ॥

रा० टी०—पराक्रम इति । पराक्रमोत्साहाभ्यां विवृद्धं मानसं यस्य सः अत एव प्रमुख्यः योद्धृणां मुख्यः अग्रतः स्थितः कुमारः मां समीक्षते अतः शीघ्रकारिणोऽस्य पराक्रमः सुरासुराणामपि मनांसि कम्पयेत् ॥ २८ ॥

१ चण्डेति गो. पाठः । २ विशिखैरिति गो. पाठः । ३ वीरेणेति गो. पाठः । ४ महदिति गो. पाठः । ५ शोभिन इति गो. पाठः । ६ प्रमुखागत इति गो. पाठः । ७ गामिन इति गो. पाठः ।

न खल्वयं नाभिभवेदुपेक्षितः पराक्रमो ह्यस्य रणे विवर्धते ।
प्रमापणं ह्यस्य ममाद्य रोचते न वर्धमानोऽग्निरुपेक्षितुं क्षमः ॥ २९ ॥
इति प्रवेगं तु परस्य तर्कयन्स्वकर्मयोगं च विधाय वीर्यवान् ।
चकार वेगं तु महाबलस्तदा मतिं च चक्रेऽस्य वधे तदानीम् ॥ ३० ॥
स तस्य तानष्ट वरान्महाहयान्समाहितान्भारसहान्विवर्तने ।
जघान वीरः पथि वायुसेविते तलप्रहारैः पवनात्मजः कपिः ॥ ३१ ॥
ततस्तलेनाभिहतो महारथः स तस्य पिङ्गाधिपमन्त्रिनिर्जितः ।
स भग्ननीडः परिवृत्तकूबरः पपात भूमौ हतवाजिरम्बरात् ॥ ३२ ॥
स तं परित्यज्य महारथो रथं सकार्मुकः खड्गधरः खमुत्पतन् ।
ततोऽभियोगादृषिरुग्रवीर्यवान्विहाय देहं मरुतामिवालयम् ॥ ३३ ॥
कपिस्ततस्तं विचरन्तमम्बरे पतत्रिराजानिलसिद्धसेविते ।
समेत्य तं मारुतवेगविक्रमः क्रमेण जग्राह च पादयोर्दृढम् ॥ ३४ ॥
स तं समाविध्य सहस्रशः कपिर्महोरगं गृह्य इवाण्डजेश्वरः ।
मुमोच वेगात्पितृतुल्यविक्रमो महीतले संयति वानरोत्तमः ॥ ३५ ॥
स भग्नबाहूरुकटीपयोधरः क्षरन्नसृङ्निर्मथितास्थिलोचनः ।
संभिन्नसंधिः प्रविकीर्णबन्धनो हतः क्षितौ वायुसुतेन राक्षसः ॥ ३६ ॥

२९–३० ] ति० टी०–उपेक्षितोऽयं न नाभिभवेत् । अभिभवेदेवेत्यर्थः । स्वकर्मयोगं स्वस्य कर्मणि योगं ज्ञानबलविशेषावस्थानलक्षणमुपायम् ॥ २९ ॥ ३० ॥

रा० टी०–नेति । यतोऽस्य रणे पराक्रमो विवर्धते अत उपेक्षितोऽयं मां नाभिभवेत् अभिभवेदेवेत्यर्थः अतः अस्य प्रमापणं नाशनं मम रोचते हि यतः वर्धमानोऽग्निः उपेक्षितुं न क्षमः ॥ २९ ॥

रा० टी०–इतीति । इति अनेन प्रकारेण परस्य शत्रोः प्रवेगं परस्य वधाय विध्वंसाय स्वकर्मयोगं च तर्कयन् सन् अस्य वधे मतिं चक्रे अत एव वेगं चकार ॥ ३० ॥

गो० टी०–इति प्रवेगमिति । परस्य शत्रोः प्रवेगम् तर्कयन् आलोचयन् स्वकर्मयोगं विधाय युद्धक्रमं च सङ्कल्प्य पूर्वमश्वान् हत्वा ततो रथं भङ्क्ष्यामीति निश्चित्येत्यर्थः॥३०॥

३१ ] ति० टी०–विवर्तने नानाविधमण्डलगमने । समाहिताञ्शिक्षितान्वायुसेविते पथि स्थितः स्थितांश्च ॥ ३१ ॥

रा० टी०–स इति । विवर्तने अनेकविधमण्डलगमने समाहितान् प्राप्तशिक्षानित्यर्थः भारसहान् वरान् तस्य कुमारस्य अष्ट महाहयान् तलप्रहारैः वायुसेविते पथि विद्यमानः कपिः जघान ॥ ३१ ॥

गो० टी०–स तस्येति । विवर्तने सव्यापसव्यभ्रमणेऽपि । भारसहान् रथभारसहान् ॥ ३१ ॥

३२ ] ति० टी०–नीडं रथ्यधिष्ठानस्थानम् ॥ ३२ ॥

रा० टी०–तत इति । तस्य हनूमतस्तलेनाभिहतः स भग्ननीडः भग्ननीडेन सहितः नीडं रथिस्थानं परिवृत्तः कूबरो यस्य हतवाजिः विध्वंसिताश्वः अत एव पिङ्गाधिपमन्त्रिणा सुग्रीवामात्येन निर्जितः पराभूतो महारथः सोऽक्षः भूमौ पपात ॥ ३२ ॥

गो० टी०–तत इति । तलेनाभिहतः अत एव पिङ्गाधिपमन्त्रिनिर्जितः हनुमता निर्जित इत्यर्थः । प्रभग्ननीडः प्रभग्नरथाङ्गः । कूबरः युगन्धरः । वाजिरिति इकारान्तत्वमार्षम्॥३२॥

३३ ] ति० टी०–मरुतामालयं स्वर्गमुत्पतनृषिरिव ॥३३॥

रा० टी०–स इति । तं भग्नं रथं परित्यज्य खमुत्पतन् सन् सोऽक्षकुमारः तपोभियोगात् तपोऽतिबलात् देहं विहाय मरुतां देवानामालयमुत्पतन् ऋषिरिव बभूवेति शेषः ॥ ३३ ॥

गो० टी०–स तमिति । मरुतामालयमुत्पतन् ऋषिरिव अभवदिति शेषः ॥ ३३ ॥ ३४ ॥

३४ ] ति० टी०–पतत्रीति । गरुडवायुसिद्धसेविते तं समेत्य तं पादयोर्जग्राहेत्यन्वयः ॥ ३४ ॥

रा० टी०–कपिरिति । पतत्रिराजानिलसिद्धानां सेवितेऽम्बरे विचरन्तं तमक्षकुमारं क्रमेण समेत्य कपिर्हनूमान् पादयोर्दृढं जग्राह ॥ ३४ ॥

३५–३६ ] ति० टी०–समाविद्धय भ्रामयित्वा । गृह्य इव । असंधिल्यपावार्षौ । गृहीत्वेवेत्यर्थः ॥ ३५ ॥ ३६ ॥

१ त्वेवेति गो. पाठः । २ अस्येति गो. पाठः । ३ महाकपिरिति गो. पाठः । ४ हयान्महाजवानिति गो. पाठः । ५ प्रेति गो. पाठः । ६ तुल्येति गो. पाठः । ७ रुध्येति गो. पाठः । ८ स भग्नेति गो. स भिन्नेति रा. पाठः ।

महाकपिर्भूमितले निपीड्य तं चकार रक्षोधिपतेर्महद्भयम् ।
महर्षिभिश्चक्रचरैः समागतैः[1] समेत्य भूतैश्च सयक्षपन्नगैः ॥
सुरैश्च सेन्द्रैर्भृशजातविस्मयैर्हते[2] कुमारे स कपिर्निरीक्षितः ॥ ३७ ॥
निहत्य तं वज्रिसुतोपमं रणे कुमारमक्षं क्षतजोपमेक्षणम् ।
तमेव[3] वीरोऽभिजगाम तोरणं कृतक्षणः काल इव प्रजाक्षये ॥ ३८ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये सुन्दरकाण्डे सप्तचत्वारिंशः सर्गः ॥ ४७ ॥

---

## अष्टचत्वारिंशः सर्गः ।

रावणेन हितमुपदिश्य प्रेषित इन्द्रजिद्धनुमन्तमभिययौ । हनुमता लाघवातिशयाद्बाणानां मोघीकरणे तं ब्रह्मास्त्रेण बद्ध्वा मोचने शक्तमपि रावणदिदृक्षया तदनुवर्तमानमेनं रावणान्तिकं निनाय ।

ततस्तु[4] रक्षोऽधिपतिर्महात्मा हनूमताक्षे निहते कुमारे ।
मनः समाधाय स[5] देवकल्पं समादिदेशेन्द्रजितं सरोषः[6] ॥ १ ॥
त्वमस्त्रविच्छस्त्रभृतां[7] वरिष्ठः सुरासुराणामपि शोकदाता ।
सुरेषु सेन्द्रेषु च दृष्टकर्मा पितामहाराधनसंचितास्त्रः ॥ २ ॥
त्वदस्त्रबलमासाद्य[8] ससुराः[9] समरुद्गणाः । न शेकुः समरे स्थातुं सुरेश्वरसमाश्रिताः ॥ ३ ॥

---

रा० टी०–स इति । वानरोत्तमः कपिः स हनुमान् तमक्षं गृह्य गृहीत्वा सहस्रशोऽनेकवारं समाविध्य भ्रामयित्वा वेगान्महीतले मुमोच । तत्र दृष्टान्तः महोरगमण्डजेश्वरो गरुड इव ॥ ३५ ॥

रा० टी०–स इति । वायुसुतेन हतः अत एव भग्ना बाह्वादयो यस्य निर्मथितानि अस्थिलोचनानि यस्य भिन्नाः सन्धयो यस्य प्रविकीर्णानि बन्धनानि यस्य राक्षसः क्षितौ अपतदिति शेषः ॥ ३६ ॥

गो० टी०–स तमिति । गृह्य इवेत्यत्र गुणाभाव आर्षः॥३५॥

गो०टी०–स भग्नेति । प्रविकीर्णबन्धनः प्रविकीर्णकक्ष्यादिबन्धनः । प्रभिन्नसंधिरिति संधिबन्धभङ्गस्योक्तत्वात् ॥३६॥

३७ ] ति० टी०–चक्रचरैर्ज्योतिश्चक्रचरैर्ग्रहादिभिः समेत्य समागतैर्जातविस्मयैर्निरीक्षित इत्यन्वयः ॥ ३७ ॥

३८ ] ति० टी०–वज्रिसुतोपमं जयन्ततुल्यम् । कृतक्षणः पुनर्युद्धे कृतोत्साहः ॥ ३८ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये सुन्दरकाण्डे सप्तचत्वारिंशः सर्गः ॥ ४७ ॥

रा० टी०–महाकपिरिति । तमक्षं भूमितले निपीड्य रक्षोधिपतेः महद्भयं चकार । अर्धं पृथक्–महर्षिभिरिति । कुमारे हते सति जातविस्मयैः महर्षिप्रभृतिभिः कपिः स हनुमान् निरीक्षितो बभूवेति शेषः । सार्धश्लोक एकान्वयी ॥३७॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ सुन्दरकाण्डे सप्तचत्वारिंशः सर्गः ॥ ४७ ॥

गो० टी०–महर्षिभिरिति । चक्रचरैः ज्योतिश्चक्रचरैः नभश्चक्रचरैर्वा ॥ ३७ ॥ ३८ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने सप्तचत्वारिंशः सर्गः ॥४७॥

१ ] ति० टी०–मनः समाधाय पुत्रनाशखिन्नमपि चेतो धीरतयाऽप्रकाशितभयं प्रतिष्ठाप्य ॥ १ ॥

रा० टी०–अक्षकुमारविघातानन्तरकालिकं वृत्तान्तमाह–तत इत्यादिभिः । हनूमता अक्षे कुमारे निहते सति रक्षोधिपतिः स रावणः मनः समाधाय स्थिरीकृत्य शोकं विसृज्येत्यर्थः देवकल्पमिन्द्रजितं समादिदेश आज्ञापयामास ॥ १ ॥

गो० टी०–ततस्त्वित्यादि । मनः समाधाय धैर्यं कृत्वेत्यर्थः ॥ १ ॥

२ ] ति० टी०–पितामहाराधनेन संचितास्त्रः प्राप्तब्रह्मास्त्रोऽसीत्यर्थः ॥ २ ॥

रा० टी०–तदाज्ञापनप्रकारमाह–त्वमित्यादिभिः । पितामहाराधनेन संचितानि अस्त्राणि येन अत एव अस्त्रवित् निखिलास्त्रविज्ञाता अत एव शस्त्रभृतां मध्ये वरिष्ठः श्रेष्ठः अत एव सुरासुराणां विरुद्धसुरादीनां शोकदाता अत एव सेन्द्रेषु इन्द्रसहितेषु सुरेषु दृष्टं प्रसिद्धं कर्म यस्य स त्वमसीति शेषः॥२॥

गो० टी०–त्वमिति । अस्त्रवित् ब्रह्मास्त्रवित् । संचितास्त्रः संचितास्त्रविशेषः ॥ २ ॥

३ ] ति० टी०–सुरेश्वरसमाश्रिता अपि रणे स्थातुं न शेकुः ॥ ३ ॥

---

१ महाव्रतैरिति गो. पाठः । २ उग्रमप्रभमिति गो. पाठः । ३ तमेवेति गो. पाठः । ४ स इति गो. पाठः । ५ तदेन्द्रेति गो. पाठः । ६ सरोषमिति गो. पाठः । ७ विदामिति गो. पाठः । ८ तवेति गो. पाठः । ९ नासुरा नेति गो. पाठः ।

न कश्चित्त्रिषु लोकेषु संयुगेन गतश्रमः । भुजवीर्याभिगुप्तश्च तपसा चाभिरक्षितः ॥
देशकालप्रधानश्च त्वमेव मतिसत्तमः ॥ ४ ॥

न तेऽस्त्यशक्यं समरेषु कर्मणां न तेऽस्त्यकार्यं मतिपूर्वमन्त्रणे ।
न सोऽस्ति कश्चित्त्रिषु संग्रहेषु नै वेद यस्तेऽस्त्रबलं बलं च ॥ ५ ॥

ममानुरूपं तपसो बलं च ते पराक्रमश्चास्त्रबलं च संयुगे ।
न त्वां समासाद्य रणावमर्दे मनः श्रमं गच्छति निश्चितार्थम् ॥ ६ ॥

निहताः किंकराः सर्वे जम्बुमाली च राक्षसः । अमात्यपुत्रा वीराश्च पञ्च सेनाग्रगामिनः ॥ ७ ॥
बलानि सुसमृद्धानि साश्वनागरथानि च । महोदरश्च दयितः कुमारोऽक्षश्च सूदितः ॥
न तु तेष्वेव मे सारो यस्त्वय्यरिनिषूदन ॥ ८ ॥

इदं च दृष्ट्वा निहतं महद्बलं कपेः प्रभावं च पराक्रमं च ।
त्वमात्मनश्चापि निरीक्ष्य सारं कुरुष्व वेगं स्वबलानुरूपम् ॥ ९ ॥

---

रा० टी०—त्वदिति । त्वदस्त्रबलमासाद्य प्राप्य सुरेश्वरसमाश्रिता अपि सुरादयः समरे स्थातुं न शेकुः ॥ ३ ॥

गो० टी०—तवेति । तव अस्त्रबलमासाद्य असुराः न नश्यन्तीत्यर्थः ॥ ३ ॥

४ ] ति० टी०—कश्चित्त्वदन्यो न गतश्रमो न । सर्वे प्राप्तश्रमा इत्यर्थः । भुजवीर्याभिगुप्तस्तपसाऽभिरक्षितो देशकालप्रधानश्च मत्या सत्तमः प्रशस्ततरश्च त्वमेवेत्यन्वयः ॥ ४ ॥

रा० टी०—नेति । त्रिषु लोकेषु संयुगेन तव संग्रामेण गतश्रमः गतखेदः कश्चिन्न त्वत्संग्रामं संप्राप्य सर्वः पराजितो भवतीत्यर्थः, अतः भुजवीर्याभिगुप्तः स्वभुजबलेन रक्षितः तपसा स्वतपोबलेन अभिरक्षितश्च देशकालप्रधानः देशकालयोरभिज्ञः मतिसत्तमः त्वमेवासीति शेषः । सार्धश्लोक एकान्वयी ॥ ४ ॥

गो० टी०—न कश्चिदिति । त्रिषु लोकेषु तव संयुगेन गतश्रमः अप्राप्तश्रमः कश्चिन्न । सुप्सुपेति समासः । सर्वे प्राप्तश्रमा इत्यर्थः । हरिहयादयोऽपि श्रमं प्राप्नुवन्तीत्यर्थः । भुजवीर्येति । मतिसत्तमः मतिश्रेष्ठ इत्यर्थः ॥ ४ ॥

५ ] ति० टी०—समरेषु कर्तव्यानां कर्मणां मध्येऽशक्यं नास्ति । 'कर्मणा' इत्येव पाठः सांप्रदायिक इति कतकः । मतिपूर्वमन्त्रणे शास्त्रानुरूपबुद्धिपूर्वकर्तव्यराजकार्यविचारे तेऽकार्यं नास्ति कार्यासाधकविचारो नास्तीत्यर्थः । त्रिषु संग्रहेषु त्रिष्वपि लोकेषु । भोक्तृभिः कर्मणा संगृह्यन्त इति संग्रहा लोकास्तेषु । तेऽस्त्रबलं सहजं च बलं यो न वेद स कश्चिदपि नास्ति । सर्वप्रसिद्धबलद्वयबलवानित्यर्थः ॥ ५ ॥

रा० टी०—नेति । कर्मणां मध्ये किञ्चित्कर्म ते अशक्यं न मतिरूपमन्त्रणे मतिस्वरूपबोधने ते अकार्यम् अकर्तव्यं न यथोचितं सर्वं बोधयसीत्यर्थः, अत एव त्रिषु संग्रहेषु लोकेषु यस्ते अस्त्रबलं पौरुषं च न वेद स नास्ति ॥ ५ ॥

गो० टी०—नेति । समरेषु कर्मणा पुरुषकारेण ते अशक्यं नास्तीत्यर्थः तथा मतिपूर्वमन्त्रणे विवेकपूर्वविचारे अकार्यम् अज्ञातकार्यम् ज्ञातुमशक्यं कार्यं नास्तीत्यर्थः । संग्रहेषु संगृह्यन्ते भोग्यतया स्वीक्रियन्ते भोक्तृभिरिति संग्रहाः लोकाः तेषु त्रिष्वपि यस्तवास्त्रबलं शारीरं बलं च न वेद स नास्ति सर्वलोकप्रख्यातशस्त्रास्त्रबलसंपन्नस्त्वमित्यर्थः ॥ ५ ॥

६ ] ति० टी०—ममानुरूपं मत्सदृशम् । रणावमर्दे युद्धसंघर्षे । त्वां समासाद्य प्राप्य मे मनो जयविषये निश्चितार्थं सच्छ्रमं विषादं न गच्छति । त्वद्बलं स्मृत्वा श्रमिमीत्यर्थः ॥६॥

रा० टी०—ममेति । ते तपोबलादि ममानुरूपं मत्तुल्यमस्तीति शेषः, अतः रणावमर्दे महासंग्रामे त्वां समासाद्य प्राप्य विद्यमानस्य मम मनः निश्चितार्थं निश्चितविजयं सत् श्रमं खेदं न गच्छति ॥ ६ ॥

गो० टी०—ममानुरूपमिति । रणावमर्दे रणसंकटे । निश्चितार्थं निश्चितजयरूपार्थं त्वाम् आसाद्य विचिन्त्य मे मनः श्रमं न गच्छति विषादं न गच्छतीत्यर्थः ॥ ६-८ ॥

७ ] ति० टी०—प्रकृतमाह—निहता इति ॥ ७ ॥

रा० टी०—तत्कर्तव्यं बोधयितुमाह—निहता इति । किंकरादयो निहताः ॥ ७ ॥

८-९ ] ति० टी०—हे अरिनिषूदन ! त्वयि मे यः सार उत्कर्षबुद्धिः स तेषु नत्वेवेत्यन्वयः । यद्वा मे सारः सर्वजगज्जयसामर्थ्यं स त्वय्येव त्वत्साहाय्यनिमित्त एव, न तु तेषु । न तु तत्साहाय्यनिमित्तक इत्यर्थः ॥ ८ ॥ ९ ॥

रा० टी०—बलानीति । ते दयितः प्रियः सहोदरोऽक्षश्च सूदितो निहतः । ननु तर्हि ममापि वधः स्यादित्यत आह—नेति । मे मम संबन्धी यः सारो बलं त्वय्यस्ति सः तेषु निहतेषु नैव । अर्थं पृथक् । एतेनातिप्रबलत्वात्तव वधो न भविष्यतीति ध्वनितम् ॥८॥

---

१ विभागश्च इति गो. पाठः । २ वै न वेद यस्तेऽस्त्रबलं बलं च ते इति गो. पाठः । ३ यायिन इति गो. पाठः । ४ ते दयित इति गो. पाठः । ५ हीति गो. पाठः । ६ निषूदन इति रा. पाठः । ७ मतिमदिति गो. पाठः । ८ समीक्ष्यति गो. पाठः ।

बलावमर्दै[1]स्त्वयि संनिकृष्टे यथागते[6] शाम्यति[2] शान्तशत्रुः[3] ।
तथा समीक्ष्यात्मबलं परं च समारभस्वास्त्रभृतां वरिष्ठ[4] ॥ १० ॥
न[5] वीर सेना गणशो च्यवन्ति न वज्रमादाय विशालसारम् ।
न मारुतस्यास्ति गतिप्रमाणं न चाग्निकल्पः करणेन हन्तुम् ॥ ११ ॥
तमेवमर्थं प्रसमीक्ष्य सम्यक्स्वकर्मसाम्याद्धि समाहितात्मा ।
स्मरंश्च दिव्यं धनुषोऽस्य वीर्यं व्रजाक्षतं कर्म समारभस्व ॥ १२ ॥

रा०टी०–इदमिति । निहतमिदं महद्बलं दृष्ट्वा कपेः प्रभावम् आत्मनः सारं बलं च निरीक्ष्य ज्ञात्वा स्वबलानुरूपं वेगं कुरुष्व ॥९॥

गो० टी०–न हीति । त्वयि मे यः सारः उत्कर्षप्रत्ययः सः तेषु नास्त्येव हीति योजना ॥ ९ ॥

गो० टी०–इदं हीति । इदं किङ्कराध्यक्षकुमारान्तमारकम् मतिमत् प्रशस्तमतियुक्तम् । बलं शारीरम् । प्रभावम् अन्तःशक्तिम् । पराक्रमं पौरुषम् ॥ १० ॥

१० ] ति० टी०–गते युद्धाय निर्गते त्वयि संनिकृष्टे सति बलावमर्दैरनेकबलप्रमथनैर्हेतुभिः शान्तशत्रुरुपशान्तबलः शत्रुर्यथा शाम्यति क्षीणो भवति तथाऽऽत्मबलं परबलं च समीक्ष्यारभस्व । ‘ बलावमर्दैः ’ इति ‘ शान्तशत्रुः ’ इति च पाठे इति कतकः । ‘ बलावमर्द ’ इति ‘ शान्तशत्रो ’ इति च पठित्वा हेऽस्त्रभृतां वरिष्ठ ! त्वयि युद्धाय गते संनिकृष्टे हनूमत्समीपं प्राप्ते, बलावमर्दः सेनानाशो यथा शाम्यति न भवति तथाऽऽरभस्वेत्यर्थं इति तीर्थः ॥ १० ॥

रा० टी०–बलेति । शान्तशत्रौ त्वयि सन्निकृष्टे युद्धसमीपे गते प्राप्ते सति बलावमर्दः मत्सेनाध्वंसः शाम्यति अतः यथा शाम्यति तथा समारभस्व ॥ १० ॥

गो० टी०–बलेति । शान्तशत्रौ शमितशत्रौ शत्रुशमनस्वभाव इति यावत् । “वा दान्तशान्त–” इत्यादिना निपातनाण्णिलोप इडभावश्च । त्वयि संनिकृष्टे कपेरासन्ने सति यथा बलावमर्दः सेनाक्षयः शाम्यति तथा आत्मबलम् परं परबलं च समीक्ष्य समारभस्व । बलनाशात्पूर्वमेव शत्रुशान्तिं कुर्वित्यर्थः ॥ ११ ॥

११ ] ति० टी०–अथ तत्र सेनादिपरिग्रहो व्यर्थ इत्याह–न वीरेति । हे वीर ! सेना न ग्राह्याः यतस्ता गणशः सङ्घशश्च्यवन्ति पलायन्ते नश्यन्ति च । तथा विशालसारमतितैक्ष्ण्यकाठिन्यवत्, अत एव वज्रं तत्तुल्यमायुधजालमादायापि न प्रयोजनं गणशः प्रयुक्तस्य तस्यापि प्रच्यवादेव । गणशो च्यवन्तीत्यत्रोत्वमार्षम् । कुतस्तत्राह—नेति । मरुतोपत्यस्य मारुतस्य गतेः सामर्थ्यस्य प्रमाणं परिच्छेद एतावद्बलं निग्रहीतुं शक्त इति परिच्छेदो नास्ति, अतो लोके निखिलमपि बलं तस्याकिंचित्करमित्यर्थः । किं चाग्निकल्पोऽग्नितुल्योऽसौ करणेन शस्त्रादिरूपेण हन्तुं न शक्यः । ‘ जयत्यतिबलो रामः ’ इत्येतद्घोषणसमये । ‘ हनूमाञ्छत्रुसैन्यानां निहन्ता मारुतात्मजः ’ इत्युक्तेरिह रावणस्य मारुतस्येत्युक्तिर्नासमञ्जसा । पराक्रमातिशयदर्शनादुत्प्रेक्षामात्रेण तु किंचिद्भूतमिति प्रागुक्तम् । केचित्तु गणाञ्शोचयतीति गणशोग्घनूमांस्तस्मिन्सेना नावन्ति, ततो न रक्षन्तीत्यर्थं इति वदन्ति, तत्रावतेर्व्यायतिसमानार्थत्वात्पञ्चमीप्राप्तौ सप्तम्यार्षी । तत्रोत्ववत् । एवं विशालसारमित्यत्र विश अलसारमिति च्छेदं कुर्वन्ति, अलसारं कुण्ठसारं वज्रं तत्तुल्यमप्यायुधमादाय न विशरणं न प्रविशेति च व्याचक्षते अलतेर्धातोः पर्याप्त्यर्थत्वेन पर्याप्तसारमिति व्याख्यातुं योग्यम् । कुण्ठेत्यर्थस्य ततोऽलाभात् ॥ ११ ॥

गो० टी०–न वीरेति । हे वीर ! गणशोचि गणानां शोचयितरि शोचतेर्ण्यन्तात्क्विप् एकदाऽनेकप्रहर्तरीत्यर्थः एवंभूते हनुमति निमित्ते सेनाः नावन्ति न रक्षन्ति युगपदनेकविनाशके सेना अप्रयोजिकेत्यर्थः । अतः सेनाभिः सह मागच्छेत्यर्थः । उपायान्तरं प्रतिषेधति—न वज्रमिति । अलसारं हनुमद्विषये जीर्णसारं वज्रं वज्राख्यमायुधविशेषम् आदाय न विश । तत्समीपमिति शेषः । तत्र हेतुमाह—न मारुतस्येति । अस्य गतिप्रमाणं मारुतस्य नास्ति । मारुतादप्यतिशयितगतिप्रमाण इत्यर्थः । अतस्तरसा यया कयापि दिशा समागम्य प्रहर्तरि न वज्रं किञ्चित्करमिति भावः । यदि समीपमागमिष्यति तदा मुष्ट्यादिभिरेव निहन्यत इत्याशङ्क्याह–न चेति । अग्निकल्पो हनुमान् करणेन मुष्ट्यादिना हन्तुं न शक्यः । अग्नितुल्ये मुष्ट्यादिप्रहाराप्रवृत्तेरिति भावः ॥ १२ ॥

१२ ] ति० टी०–किं बलावष्टम्भेन गन्तव्यमिति शङ्कायां तत्सविशेषमुपदिशति—तमिति । तं मदुक्तमर्थमेवमेव प्रसमीक्ष्यैवमेव तत्त्वमिति निश्चित्य, स्वकर्मसाम्यात्स्वेनैव कर्मणः प्रकृतकार्यस्य साम्यात्सिद्धेः संपादनीयत्वात्त्वं समाहितात्मा समाहितचित्तो भूत्वाऽस्य विषये दिव्यं धनुषो वीर्यं दिव्यास्त्रमोक्षसामर्थ्यं स्मरन्निश्चिन्वन्व्रज, गत्वा चाक्षतं परकीयप्रहाररहितं यथा भवति तथा शत्रुपराभवकर्मारभस्व ॥ १२ ॥

रा० टी०–तमिति । स्वकर्मसाम्यात् स्वक्रियासादृश्यं संस्मृत्य समाहितात्मा एकाग्रचित्तस्त्वं तं स्वविजयरूपम् अर्थं प्रसमीक्ष्य निश्चित्य अस्य स्वकीयस्य धनुषो वीर्यं स्मरन् सन् व्रज अक्षतं परैरविनाश्यं कर्म समारभस्व च ॥ ११ ॥

१ मर्दं इति गो. पाठः । २ क्षाम्यतीति गो. पाठः । ३ क्षत्राविति गो. रा. पाठः । ४ वरिष्ठः इति रा. पाठः । ५ श्लोकोऽयं रा. नास्ति । ६ गतेरिति गो. पाठः ।

न खल्वियं मतिश्रेष्ठ यत्त्वां संप्रेषयाम्यहम् । इयं च राजधर्माणां क्षत्रस्य च मतिर्मता ॥ १३ ॥
नानाशस्त्रेषु संग्रामे वैशारद्यमरिन्दम । अवश्यमेव बोद्धव्यं काम्यश्च विजयो रणे ॥ १४ ॥
ततः पितुस्तद्वचनं निशम्य प्रदक्षिणं दक्षसुतप्रभावः ।
चकार भर्तारमतित्वरेण रणाय वीरः प्रतिपन्नबुद्धिः ॥ ॥ १५ ॥
ततस्तैः स्वगणैरिष्टैरिन्द्रजित्प्रतिपूजितः । युद्धोद्धतकृतोत्साहः सङ्ग्रामं संप्रपद्यत ॥ १६ ॥
श्रीमान्पद्मविशालाक्षो राक्षसाधिपतेः सुतः । निर्जगाम महातेजाः समुद्र इव पर्वणि ॥ १७ ॥
स पक्षिराजोपमतुल्यवेगैर्व्यालैश्चतुर्भिः स तु तीक्ष्णदंष्ट्रैः ।
रथं समायुक्तमसह्यवेगः समारुरोहेन्द्रजिदिन्द्रकल्पः ॥ १८ ॥
स रथी धन्विनां श्रेष्ठः शस्त्रज्ञोऽस्त्रविदां वरः । रथेनाभिययौ क्षिप्रं हनूमान्यत्र सोऽभवत् ॥ १९ ॥
स तस्य रथनिर्घोषं ज्यास्वनं कार्मुकस्य च । निशम्य हरिवीरोऽसौ संप्रहृष्टतरोऽभवत् ॥ २० ॥

---

गो० टी०—तर्हि कथं कर्तव्यं तत्राह—तमिति । तं पूर्वोक्तमर्थम् एवं सम्यक् प्रसमीक्ष्य विचार्य स्वकर्मसाम्यात्स्वकार्यसिद्ध्यर्थम् फलस्यापि हेतुत्वात्पञ्चमी साम्यं समत्वम् अन्यूनातिरिक्तत्वम् समाहितात्मा एकाग्रचित्तः दिव्यं धनुःसम्बन्धि अस्त्रवीर्यमस्त्रबलम् स्मरन् व्रज । अस्त्रबलं विना स निगृहीतुमशक्यः तेन तन्मन्त्रं स्मरन्नेव गच्छेति भावः ॥ १२ ॥

१३ ] ति० टी०—हे मतिश्रेष्ठ प्रशस्तबुद्धे ! अहं त्वामतिप्रियं पुत्रमीदृशे संकटे प्रेषयामि इयं प्रेषणा नोचिता खलु, अथापीयं मती राजधर्माणामस्माकं तथा क्षत्रस्य क्षत्रियस्य च मतैव शास्त्रतः संमतैव ॥ १३ ॥

रा० टी०—नेति । यत् यया मत्या त्वाम् अहं संप्रेषयामि सा इयं मतिः यद्यपि श्रेष्ठा न तथापि राजधर्माणां क्षत्रस्य क्षत्रियस्य इयं मतिर्मता श्रेष्ठेत्यर्थः मतिश्रेष्ठेति भाष्टपाठे तु संबोधनं तत्रोचितेत्यध्याहर्तव्यम् ॥ १२ ॥

गो० टी०—न खल्विति । अहं त्वां संप्रेषयामीति यत् इयं मतिः न श्रेष्ठा खलु नोचितेत्यर्थः । इयं मतिः त्वत्प्रेषणविषया मतिः राजधर्माणां राजनीतिस्वरूपधर्माणाम् क्षत्रस्य तदनुष्ठातुः क्षत्रियस्य च मता उचिता यद्यपि बालस्य प्रेषणमनुचितं तथापि स्वीयेषु सत्सु प्रधानगमनं नीतिशास्त्रविरुद्धमिति त्वां प्रेषयामीति भावः ॥ १४ ॥

१४ ] ति० टी०—अथ राज्ञः क्षत्रियस्य च कृत्यमाह—नानेति । नानाशास्त्रेषु धर्मार्थनीत्यादिशास्त्रेषु संग्रामे च वैशारद्यम् । संपाद्यमिति शेषः । यस्य रणे विजयः काम्यो भवति तेनोक्तं नानाशास्त्रमवश्यं बोद्धव्यमेवेत्यर्थः । यद्वा परस्य नानाशास्त्रेषु यद्वैशारद्यमस्ति तद्योद्धावश्यमेव बोद्धव्यम्, बुद्ध्वापि रणे स्वस्य विजयः प्रार्थ्य एवाहं जेष्याम्येवेति बुद्ध्या युद्धमारभ्यमेव, न तु तादृशशत्रोरपि निवर्तितव्यमित्यर्थः । केचित्तु—'नानाशस्त्रैः' इति 'योद्धव्यम्' इति च पठित्वा नानाशस्त्रकरणकसङ्ग्रामे वैशारद्यं सामर्थ्यं तवास्ति, अतस्त्वयाऽवश्यं योद्धव्यमेव, रणे जयश्च प्रार्थनीय एवेति व्याचक्षते ॥ १४ ॥

रा० टी०—नानेति । रणे विजयः काम्यः त्वया वाञ्छनीयः अतः नानाशस्त्रेषु उक्ते संग्रामे संग्रामप्रकारे वैशारद्यं नैपुण्यमवश्यमेव बोद्धव्यं त्वया संस्मरणीयम् ॥ १३ ॥

गो० टी०—नानेति । नानाशस्त्रैः वैशारद्यं प्रहरणसामर्थ्यम् अवश्यं बोद्धव्यम् स्मर्तव्यमित्यर्थः । रणे विजयश्च काम्यः प्रार्थनीयः । जयार्थं सर्वाण्यस्त्राणि स्मर्तव्यानीत्यर्थः ॥ १५ ॥

१५] ति०टी०—दक्षसुता देवाः । प्रदक्षिणं चकार । भर्तारं राजानं रावणम् । रणायातित्वरेणातित्वरया गन्तुं कृतबुद्धिः १५

रा० टी०—तत इति । पितुः रावणस्य वचनं निशम्य दक्षसुतानां देवानां प्रभाव इव प्रभावो यस्य स मेघनादः रणाय रणं गन्तुं भर्तारं रावणमतित्वरेण प्रदक्षिणं चकार ॥ १४ ॥

गो० टी०—तत इति । दक्षसुतप्रभावः दक्षसुता देवाः । तथोक्तम् विष्णुपुराणे—'मनसा त्वेव भूतानि पूर्वं दक्षोऽसृजत्तथा । देवानृषीन्सगन्धर्वानुरगान् पक्षिणस्तथा' इति ॥ १६ ॥

१६ ] ति० टी०—स्वगणैरन्यैः सभास्थैः राक्षसैः । युद्धे उद्धतश्चासौ कृतोत्साहश्च संप्रपद्यत संप्रापद्यत ॥ १६ ॥

रा० टी०—तत इति । स्वगणैः प्रतिपूजितः युद्धोद्धताय उद्धतयुद्धाय कृतः उत्साहो येन स मेघनादः संग्रामं संप्रपद्यत संप्रापद्यत गन्तुमारभत ॥ १६ ॥

गो० टी०—ततस्तैरिति । 'युद्धोद्धतः कृतोत्साह' इति पाठः ॥ १७ ॥ १८ ॥

१७ ] ति० टी०—पर्वणीति । वर्धमान इति शेषः ॥ १७ ॥

रा० टी०—तदेव भङ्ग्यन्तरेणाह—श्रीमानिति । राक्षसाधिपतेः सुतः पर्वणि समुद्र इव निर्जगाम ॥ १६ ॥ १७ ॥

१८–२० ] ति० टी०—पक्षिराजोपमैरन्योन्यतुल्यवेगैश्च । व्यालैः सर्पैः ॥ १८–२० ॥

---

१ मतिः श्रेष्ठेति गो. रा. पाठः । २ शास्त्रेष्विति गो. पाठः । ३ अदीनसत्त्व इति गो. पाठः । ४ युद्धोद्धतः इति गो. पाठः । ५ प्रत्यपद्यतेति गो. पाठः । ६ पलाशेति गो. पाठः । ७ पर्वसीति गो. पाठः ।

इन्द्रजिच्चापमादाय शितशल्यांश्च सायकान् । हनूमन्तमभिप्रेत्य जगाम रणपण्डितः ॥ २१ ॥
तस्मिंस्ततः संयति जातहर्षे रणाय निर्गच्छति बाणपाणौ ।
दिशश्च सर्वाः कलुषा बभूवुर्मृगाश्च रौद्रा बहुधा विनेदुः ॥ २२ ॥
समागतास्तत्र तु नागयक्षा महर्षयश्चक्रचराश्च सिद्धाः ।
नभः समावृत्य च पक्षिसङ्घा विनेदुरुच्चैः परमप्रहृष्टाः ॥ २३ ॥
आयान्तं सरथं दृष्ट्वा पूर्णमिन्द्रध्वजं कपिः । ननाद च महानादं व्यवर्धत च वेगवान् ॥ २४ ॥
इन्द्रजित्स रथं दिव्यमाश्रितश्चित्रकार्मुकः । धनुर्विस्फारयामास तडिदूर्जितनिःस्वनम् ॥ २५ ॥
ततः समेतावतितीक्ष्णवेगौ महाबलौ तौ रणनिर्विशङ्कौ ।
कपिश्च रक्षोऽधिपतेस्तनूजः सुरासुरेन्द्राविव बद्धवैरौ ॥ २६ ॥
स तस्य वीरस्य महारथस्य धनुष्मतः संयति संमतस्य ।
शरप्रवेगं व्यहनत्प्रवृद्धश्चचार मार्गे पितुरप्रमेयः ॥ २७ ॥

---

रा० टी०—सेति । पक्षिराजोपमया सहिताः तुल्यः परस्परं समो वेगो येषां ते एव ते इति कर्मधारयः तैश्चतुर्भिर्व्यालैः समायुक्तं रथम् इन्द्रकल्पः इन्द्रसदृशः इन्द्रजित् समारुरोह ॥ १८ ॥

रा० टी०—स इति । स इन्द्रजित् यत्र स हनूमान् अभवत् आतिष्ठत तत्र रथेनाभिययौ ॥ १९ ॥

रा० टी०—स इति । स हनूमान् तस्य इन्द्रजितः रथनिर्घोषं कार्मुकस्य ज्यास्वनं निशम्य श्रुत्वा संप्रहृष्टतरोऽभवत् ॥ २० ॥

गो० टी०—स इति । पक्षिराजोपमतुल्यवेगैः पक्षिराजोपमैः अन्योन्यतुल्यवेगैश्च व्यालैः हिंस्रपशुभिः सिंहैरिति यावत् सिंहाश्च रक्षसां वाहनानि भवन्ति ' सर्पहिंस्रपशू व्यालौ ' इत्यमरः ॥ १९ ॥ २० ॥

गो० टी०—स तस्येति । ज्यास्वनमित्यत्र ज्या इति लुप्तषष्ठीविभक्तिकं पृथक्पदम् कार्मुकस्येत्यत्र स्वनमिति वा अध्याहारः ॥ २१ ॥ २२ ॥

२१ ] ति० टी०—शितशल्यांस्तीक्ष्णाग्रान् ॥ २१ ॥

रा० टी०—इन्द्रजिदिति । चापं शितशल्यान् तीक्ष्णाग्रभागान् सायकान् आदाय हनूमन्तमभिप्रेक्ष्य जगाम ॥ २१ ॥

२२ ] ति० टी०—संयति तद्विषये जातहर्षे । दिशश्चेत्युत्पातवर्णनम् रौद्रा मृगाः क्रोष्टृप्रभृतयः ॥ २२ ॥

रा० टी०—तस्मिन्निति । तस्मिन् इन्द्रजिति संयति संग्रामार्थं जातहर्षे अत एव रणाय निर्गच्छति सति सर्वा दिशः कलुषा बभूवुः रौद्राः क्रोष्ट्रादयो मृगाः विनेदुश्च ॥ २२ ॥

गो० टी०—तस्मिंस्तत इति । संयति युद्धे । जातहर्षे जातोत्साहे ॥ २३ ॥

२३ ] ति० टी०—चक्रचरा ग्रहाः परमप्रहृष्टा विनेदुरिति शुभनिमित्तम् ॥ २३ ॥

रा० टी०—समागता इति । तत्र तस्मिन् समये समागताः नागादयः नभः समावृत्य उच्चैर्विनेदुः ॥ २३ ॥

गो० टी०—समागता इति । चक्रचराः संघचारिणः ॥ २४ ॥ २५ ॥

२४ ] ति० टी०—इन्द्रध्वजमिन्द्राकारचिह्नवद्ध्वजम् ॥ २४ ॥

रा० टी०—आयान्तमिति । स हनूमान् इन्द्रध्वजम् इन्द्राकारचिह्नवद्ध्वजविशिष्टं रथं दृष्ट्वा महानादं यथा भवति तथा ननाद व्यवर्धत च ॥ २४ ॥

२५–२६ ] ति० टी०—तडिदूर्जितनिःस्वनं तडिन्निभमूर्जितस्वनं च ॥ २५ ॥ २६ ॥

रा० टी०—इन्द्रजिदिति । दिव्यं रथमाश्रित इन्द्रजित् तडिदूर्जितनिःस्वनं तडिन्निःस्वनसदृशप्रवृद्धनिःस्वनविशिष्टं यथा भवति तथा धनुर्विस्फारयामास ॥ २५ ॥

रा० टी०—तत इति । समेतौ रणाङ्गणे प्राप्तौ रणनिर्विशङ्कौ तौ कपिः रक्षोऽधिपतेः तनूजश्च सुरासुरेन्द्राविव बद्धवैरौ अभवताम् ॥ २६ ॥

गो० टी०—इन्द्रजिरिति । तडिदूर्जितनिःस्वनम् । अत्र तडिच्छब्देन तत्सङ्घातोऽशनिरुच्यते विद्युत्सङ्घातनिःस्वनमिति पूर्वमुक्तत्वात् अशनिवद्दृढनिःस्वनमित्यर्थः ॥ २६ ॥

गो० टी०—तत इति । सुरासुरेन्द्राविव समेतावित्यन्वयः ॥ २७ ॥

२७ ] ति० टी०—व्यहनद्व्यर्थितवान् ॥ २७ ॥

रा० टी०—स इति । प्रवृद्धोऽप्रमेयो हनूमान् संयति संमतस्य धनुष्मतोऽस्य इन्द्रजितः शरप्रवेगं व्यहनत् व्यहन् अवध्यर्यदित्यर्थः पितुर्वायोर्मार्गे चचार च ॥ २७ ॥

गो० टी०—स तस्येति । शरप्रवेगं व्यहनत् चचार चेत्यन्वयः ॥ २८–३० ॥

---

१ सुमहदिति गो. पाठः । २ तूर्णमिन्द्रजितमिति गो. तूर्णमिति रा. पाठः । ३ विननादेति गो. पाठः । ४ च पुत्र इति गो. पाठः । ५ अप्रमेये इति गो. पाठः ।

ततः शरानायततीक्ष्णशल्यान्सुपत्रिणः काञ्चनचित्रपुङ्खान् ।
मुमोच वीरः परवीरहन्ता [1]सुसंततान्वज्रसमानवेगान् ॥ २८ ॥
ततः स तत्स्यन्दननिःस्वनं च मृदङ्गभेरीपटहस्वनं च ।
विकृष्यमाणस्य च कार्मुकस्य निशम्य [2]घोषं पुनरुत्पपात ॥ २९ ॥
शराणामन्तरेष्वाशु [3]व्यावर्तत महाकपिः । हरिस्तस्याभिलक्ष्यस्य मोक्षयंल्लक्ष्यसंग्रहम् ॥ ३० ॥
शराणामग्रतस्तस्य पुनः समभिवर्तत । प्रसार्य हस्तौ हनुमानुत्पपातानिलात्मजः ॥ ३१ ॥
तावुभौ वेगसंपन्नौ रणकर्मविशारदौ । सर्वभूतमनोग्राहि चक्रतुर्युद्धमुत्तमम् ॥ ३२ ॥
हनूमतो वेद न राक्षसोऽन्तरं न मारुतिस्तस्य महात्मनोऽन्तरम् ।
परस्परं निर्विषहौ बभूवतुः समेत्य तौ देवसमानविक्रमौ ॥ ३३ ॥
ततस्तु लक्ष्ये स विहन्यमाने शरेष्वमोघेषु च संपतत्सु ।
जगाम चिन्तां महतीं महात्मा समाधिसंयोगसमाहितात्मा ॥ ३४ ॥

---

२८-२९ ] ति० टी०-सुपत्रिणः कङ्कादिपक्षयुक्तान् सुसंततानविरतान् ॥ २८ ॥ २९ ॥

रा० टी०-तत इति । आयता एव तीक्ष्णशल्याः तीक्ष्णपुङ्खाः तान् सुपत्रिणः शोभनकङ्कपत्रविशिष्टान् सुसन्ततान् अतिदृढानित्यर्थः शरान् वीर इन्द्रजित् मुमोच ॥ २८ ॥

रा० टी०-तत इति । स हनूमान् तत्स्यन्दनस्य इन्द्रजिद्रथस्य निःस्वनं मृदङ्गादेः स्वनं च विकृष्यमाणस्य कार्मुकस्य धनुषो घोरं स्वनं च निशम्य श्रुत्वा पुनरुत्पपात ॥ २९ ॥

३०] ति० टी०-अभिलक्ष्यस्याभिमतलक्ष्यस्य लक्ष्यसंग्रहम् लक्ष्यत्वेन संग्रहणम् मोक्षयन्मोघीकुर्वन् व्यर्थीकुर्वन्निति यावत् शराणामन्तरेषु व्यावर्तत परिवर्तते स्मेत्यर्थः ॥ ३० ॥

रा०टी०-शराणामिति । अभिलक्ष्यस्य विचित्रकर्मकर्तृत्वेन सर्वतो दर्शनीयस्य तस्येन्द्रजितः शराणां लक्ष्यसंग्रहं लक्ष्यसंग्राहकत्वमीक्षयन् त्याजयन् अन्तरेषु वायुपथि मध्येषु व्यवर्तत विविधं पर्यटत् ॥ ३० ॥

गो० टी०-शराणामिति । अभिलक्ष्यस्य लक्ष्यवेधने प्रसिद्धस्य लक्ष्यसंग्रहं लक्ष्यसंग्रहणम् लक्ष्यविषयदृष्टिमिति यावत् मोघयन् वितथयन् ॥ ३१ ॥

३१-३२ ] ति० टी०-अभिवर्तताभ्यवर्तत ततः शरमोक्षसमये पुनरुत्पपात ॥ ३१ ॥ ३२ ॥

रा० टी०-शराणामिति । पुनरनन्तरं तस्य शराणाम् अग्रतः अग्रे समभिवर्तत समभ्यवर्तत कदाचित् तच्छरं वञ्चयित्वा तच्छरेण सह धावन् धावन् ततोऽग्रे निर्गच्छतीत्यर्थः पुनः हस्तौ प्रसार्य उत्पपात ऊर्ध्वमगच्छत् ॥ ३१ ॥

गो० टी०-शराणामग्रत इति । समभिवर्तत समभ्यवर्तत उत्पपात चेत्यन्वयः ॥ ३२ ॥

रा० टी०-ताविति । तौ हनुमदिन्द्रजितौ सर्वभूतमनोग्राहि निखिलप्राणिहृदयापकर्षकं युद्धं चक्रतुः ॥ ३२ ॥

गो० टी०-तावुभाविति । मनोग्राहि मनआकर्षकम् ॥ ३३ ॥

३३ ] ति० टी०-निर्विषहौ दुःसहवेगौ ॥ ३३ ॥

रा० टी०-हृदयापकर्षकत्वमेव स्फुटयन्नाह-हनुमत इति । राक्षसः हनूमतोऽन्तरमवकाशं न वेद हनुमत्कर्तृकशरवञ्चनसमयं नाजानादित्यर्थः तस्येन्द्रजितः अन्तरं शरप्रवाहोपरमाभावेन शरसंधानसमयं मारुतिर्न वेद अतः देवसमानविक्रमौ तौ परस्परं समेत्य निर्विषहौ असह्यौ बभूवतुः ॥ ३३ ॥

गो० टी०-हनूमत इति । अन्तरं छिद्रम् ॥ ३४ ॥

३४ ] ति० टी०-अमोघेषु शरेषु संपतत्स्वपि लक्ष्ये लक्ष्यभूते हनूमति विहन्यमाने शरेभ्यः स्वयमेव मुच्यमाने शरैरभिद्यमाने सतीत्यर्थः हन्तेर्गत्यर्थात्कर्मकर्तरि शानच् समाधिसंयोगेन ध्यानकारणेन तत्स्वरूपज्ञानाय समाहितात्मैकाग्रचित्तः ॥ ३४ ॥

रा० टी०-तत इति । ततः तेषु अमोघेषु शरेषु संपतत्सु सत्सु अत एव लक्ष्ये हनुमति विहन्यमाने ताड्यमाने सत्येव नतु प्राणैर्वियुक्ते सतीत्यर्थः महात्मा अति प्रयत्नवान् समाधेः संयोगेन अतिविचारकालप्राप्त्या समाहितः एकाग्रीकृतः आत्मा मनो येन सः इन्द्रजित् महतीं चिन्तां जगाम हन्तेस्ताडनार्थकत्वं तु माध्वाहत इव द्विप इत्यादौ प्रसिद्धं तुशब्द एवार्थे ॥ ३४ ॥

गो० टी०-ततस्त्विति । अमोघेषु शरेषु संपतत्स्वपि लक्ष्ये लक्ष्यभूते हनुमति विहन्यमाने स्वयं तेभ्यो विमुच्यमाने सति हन्तेर्गत्यर्थात्कर्मकर्तरि लटश्शानजादेशः समाधिसंयोगसमाहितात्मा सम्यगाधीयत इति समाधिः लक्ष्यं तस्मिन् संयोगे शरसंधाने समाहितात्मा अप्रमत्तचित्तः स महात्मा इन्द्रजित् महतीं चिन्तां जगाम ॥ ३६ ॥

---

१ संनतान्वज्रनिपातेति गो. पाठः । २ घोरमिति रा. पाठः । ३ व्यवर्ततेति गो. रा. पाठः ।

ततो मतिं राक्षसराजसूनुश्चकार तस्मिन्हरिवीरमुख्ये
अवध्यतां तस्य कपेः समीक्ष्य कथं निगच्छेदिति निग्रहार्थम् ॥ ३५ ॥
ततः पैतामहं वीरः सोऽस्त्रमस्त्रविदां वरः । संदधे सुमहातेजास्तं हरिप्रवरं प्रति ॥ ३६ ॥
अवध्योऽयमिति ज्ञात्वा तमस्त्रेणास्त्रतत्त्ववित् । निजग्राह महाबाहुं मारुतात्मजमिन्द्रजित् ॥ ३७ ॥
तेन बद्धस्ततोऽस्त्रेण राक्षसेन स वानरः । अभवन्निर्विचेष्टश्च पपात च महीतले ॥ ३८ ॥
ततोऽथ बुद्ध्वा स तदस्त्रबन्धं प्रभोः प्रभावाद्विगताल्पवेगः[1] ।
पितामहानुग्रहमात्मनश्च विचिन्तयामास हरिप्रवीरः ॥ ३९ ॥
ततः स्वायंभुवैर्मन्त्रैर्ब्रह्मास्त्रं चाभिमन्त्रितम्[2] । हनूमांश्चिन्तयामास वरदानं पितामहात् ॥ ४० ॥
न मेऽस्य[3] बन्धस्य च शक्तिरस्ति विमोक्षणे लोकगुरोः प्रभावात् ।
इत्येवमेवं[4] विहितोऽस्त्रबन्धो मयाऽऽत्मयोनेरनुवर्तितव्यः ॥ ४१ ॥
स वीर्यमस्त्रस्य कपिर्विचार्य पितामहानुग्रहमात्मनश्च ।
विमोक्षशक्तिं परिचिन्तयित्वा पितामहाज्ञामनुवर्तते स्म ॥ ४२ ॥

---

३५-३६ ] ति० टी०-ततो ध्यानानन्तरमवध्योऽयमिति ध्यानेन ज्ञात्वा निग्रहार्थं बन्धनार्थं बन्धनमुद्दिश्य कथं निगच्छेत्कथं निश्चेष्टो भवेदिति मतिं विचारं चकार ॥ ३५॥३६ ॥

रा० टी०-तत इति । राक्षसराजसूनुः कपेरवध्यतां समीक्ष्य निग्रहार्थं तत्कृतोपद्रवनिवृत्त्यर्थं कथं कथञ्चित् निगच्छेत् बन्धनं प्राप्नुयादिति तस्मिन् हरिवीरमुख्ये मतिं निश्चयं चकार ॥ ३५ ॥

रा० टी०-तत इति । सुमहातेजा इन्द्रजित् हरिप्रवरं प्रति पैतामहमस्त्रं संदधे ब्रह्मास्त्रसंधानमकरोत् ॥ ३६ ॥

गो० टी०-तत इति । अवध्यतां तस्य कपेः समीक्ष्य निग्रहार्थं कथं निगच्छेत् नीचतां गच्छेदिति मतिं चकार ॥ ३६॥३७॥

३७-३८ ] ति० टी०-ब्रह्मास्त्रेणाप्यवध्यतां ज्ञात्वा तदस्त्रेण तं निजग्राह बबन्ध ॥ ३७ ॥ ३८ ॥

रा० टी०-अवध्य इति । अयं मारुतिरवध्य इति ज्ञात्वा निश्चित्य इन्द्रजित् मारुतात्मजं निजग्राह ॥ ३७ ॥

रा० टी०-तेनेति । राक्षसेन अस्त्रेण करणेन बद्धो वानरः निर्विचेष्टोऽभवत् अत एव महीतले पपात च ॥ ३८ ॥

गो० टी०-अवध्योऽयमिति । निजग्राह बबन्ध॥३८-४०

३९ ] ति० टी०-स हनुमान्स्वस्य तदस्त्रबन्धं ब्रह्मास्त्रबन्धं कृतं बुद्ध्वापि प्रभोर्ब्रह्मणः प्रभावाद्वरदानाद्विगताल्पवेगो विगतोऽप्राप्तोऽल्पोऽपि वेगः पीडा येन तादृशः अभीतचित्त इति यावत् आत्मनः पितामहानुग्रहं मुहूर्तमात्रेण मदस्त्रनिरोधमुक्तिरित्येवंरूपम् ॥ ३९ ॥

रा० टी०-तत इति । प्रभो रामस्य प्रभावात् विगतो निवृत्तोऽल्पवेगो यस्मात् महावेग इत्यर्थः तदस्त्रबन्धं ब्रह्मास्त्रेण बन्धनं बुद्ध्वा आत्मन उपरि पितामहानुग्रहं मुहूर्तमात्रेण मदस्त्रात्ते विनिर्मुक्तिरित्याकारकानुग्रहविशेषं विचिन्तयामास॥३९॥

४० ] ति० टी०-उक्तमेवार्थं स्पष्टयति—तत इति । स्वायंभुवैः स्वयंभूदेवत्यैरनेकविधैर्मन्त्रैरभिमन्त्रितं तत्सिद्धं भवति तादृशं ब्रह्मास्त्रं तत्कृतनिरोधं बुद्ध्वा पितामहाल्लब्धं वररूपं दानं प्रागुक्तरूपं चिन्तयामास ॥ ४० ॥

रा० टी०-तदेव भङ्ग्यन्तरेणाह—तत इति । स्वायंभुवैः स्वयंभूदेवताकैः मन्त्रैरभिमन्त्रितं ब्रह्मास्त्रं पितामहात् वरदानं च चिन्तयामास ॥ ४० ॥

गो० टी०-तत इति । ब्रह्मास्त्रमभिमन्त्रितम् । विज्ञायेति शेषः ॥ ४१ ॥

४१ ] ति० टी०-लोकगुरोः प्रभावान्मे हनूमतोऽस्यास्त्रबन्धस्य विमोक्षणे शक्तिर्नास्तीत्येवं ध्यानेन ज्ञात्वा, एवमनुभूयमानप्रकारेण ममानेन विहित आत्मयोनेरस्त्रबन्धो मयानुवर्तितव्य एव मुहूर्तमात्रं सोढव्य एव ॥ ४१ ॥

रा० टी०-तदाकारमाह-नेति । लोकगुरोर्ब्रह्मणः प्रभावात् हेतोः अस्य बन्धस्य विमोक्षणे मे शक्तिर्नास्ति इति हेतोः एव विहितोऽस्त्रबन्धो मयानुवर्तितव्यः ॥ ४१ ॥

गो० टी०-न म इति । लोकगुरोः प्रभावात् अस्य बन्धस्य मोक्षणे मे शक्तिर्नास्तीत्येवं मत्वा एवं विहितः इन्द्रजिता अनेन प्रकारेण कृतः आत्मयोनेरस्त्रबन्धः मया अनुवर्तितव्य इत्यन्वयः ॥ ४२ ॥

४२ ] ति० टी०-विमोक्षशक्तिं मुहूर्तानन्तरभाविनीं तां चिन्तयित्वा मुहूर्तमात्रं पितामहाज्ञामनुवर्तते स्म ॥ ४२ ॥

रा० टी०-स इति । स हनुमान् वीर्यादिविमोक्षशक्तिं मुहूर्तानन्तरमस्त्रविमुक्तिसामर्थ्यं च परिचिन्तयित्वा परिचिन्त्य पितामहाज्ञामनुवर्तते स्म ॥ ४२ ॥

गो० टी०-स इति । पितामहानुग्रहं विमोक्षहेतुभूतमनुग्रहम् ॥ ४३ ॥

---

१ आत्मवेग इति गो० पाठः । २ चेति गो० नास्ति । ३ ऽस्मेति गो० पाठः । ४ एव मत्वेति गो० पाठः ।

अस्त्रेणापि हि बद्धस्य भयं मम न जायते । पितामहमहेन्द्राभ्यां रक्षितस्यानिलेन च ॥ ४३ ॥
ग्रहणे चापि रक्षोभिर्महन्मे गुणदर्शनम् । राक्षसेन्द्रेण संवादस्तस्माद्गृह्णन्तु मां परे ॥ ४४ ॥
स निश्चितार्थः परवीरहन्ता समीक्ष्यकारी विनिवृत्तचेष्टः ।
परैः प्रसह्याभिगतैर्निगृह्य ननाद तैस्तैः परिभर्त्स्यमानः ॥ ४५ ॥
ततस्ते[2] राक्षसा दृष्ट्वा [3]विनिश्चेष्टमरिन्दमम् । बबन्धुः शणवल्कैश्च द्रुमचीरैश्च संहतैः ॥ ४६ ॥
स रोचयामास परैश्च बन्धं प्रसह्य वीरैरभिगर्हणं च ।
कौतूहलान्मां यदि राक्षसेन्द्रो द्रष्टुं व्यवस्येदिति निश्चितार्थः ॥ ४७ ॥
स बद्धस्तेन वल्केन विमुक्तोऽस्त्रेण वीर्यवान् । अस्त्रबन्धः स चान्यं हि न बन्धमनुवर्तते ॥ ४८ ॥
अथेन्द्रजित्तं द्रुमचीरबद्धं विचार्य वीरः कपिसत्तमं तम् ।
विमुक्तमस्त्रेण जगाम चिन्तामन्[6]येन बद्धोऽप्यनुवर्ततेऽस्त्रम् ॥ ४९ ॥

---

४३ ] ति० टी०—भयं न जायते । तत्र हेतुः—पितामहेत्यादि । आदित्यग्रासप्रवृत्तिसमय एव त्रयाणुग्रहः प्रागुक्तः ॥ ४३
रा० टी०—अस्त्रेणेति । पितामहादिना रक्षितस्य मम अस्त्रेण बद्धस्य बन्धनस्य बन्धनात् भयं न जायते ॥ ४३ ॥
गो० टी०—अस्त्रेणेति । स्वस्यादित्यग्रासानन्तरं पितामहमहेन्द्राभ्यामनिलेन च रक्षितत्वान्न मे भयमित्यर्थः ॥ ४४ ॥
४४ ] ति० टी०—मे महद्गुणदर्शनमस्तीति शेषः । राक्षसेन्द्रेण संवाद इति ॥ ४४ ॥
रा० टी०—इदं बन्धनं गुण एवेति बोधयन्नाह—ग्रहण इति । ग्रहणे सति राक्षसेन्द्रेण संवादो भवितेति शेषः अतो ग्रहणे महत् गुणदर्शनमस्ति तस्मात् परे राक्षसा मां गृह्णन्तु ॥ ४४ ॥
गो० टी०—ग्रहण इति । गुणदर्शनः गुणपर्यवसायी । संवादः ॥ ४५ ॥ ४६ ॥
४५ ] ति० टी०—निश्चितार्थः उक्तरीत्येति भावः । समीक्ष्यकारी विचारपूर्वकं कार्यकर्ता । अभिगतैरभिसृत्य गतैः परैः प्रसह्य बलाद्गृहीत्वा परिभर्त्स्यमानः सन्ननाद । पीडित इवेति भावः ॥ ४९ ॥
रा० टी०—स इति । निश्चितोऽर्थो येन सः समीक्ष्यकारी विचारपूर्वककरणशीलः विनिवृत्ता अस्त्रमहिम्नोपरता चेष्टाकामव्यापारो यस्य स हनुमान् अभिगतैः परितो विद्यमानैः परैः राक्षसैः निगृह्य परिभर्त्स्यमानः सन् ननाद स्वजातियशब्दं चकार ॥ ४९ ॥
४६ ] ति० टी०—शणवल्कैस्तज्जन्यरज्जुभिः सहितै रज्जुरूपेण कृतैर्द्रुमचीरैर्द्रुमवल्कलैः ॥ ४६ ॥
रा० टी०—तत इति । राक्षसाः अरिन्दमं हनुमन्तं विनिश्चेष्टं दृष्ट्वा संहितैः रज्जुत्वेन निर्मितैः शणवल्कैः द्रुमचीरैः द्रुमान्तरवल्कैश्च बबन्धुः ॥ ४६ ॥
गो० टी०—ततस्तमिति । शणवल्कैः शणत्वग्भिः । संहतैः सज्जीकृतैः द्रुमचीरैः वल्कलैः ॥ ४७ ॥
४७ ] ति० टी०—कौतूहलान्मां द्रष्टुं व्यवस्येदिति निश्चितार्थो निश्चितकार्यतत्त्वः सन्स्वस्य तत्संभाषणापेक्षित्वाद्बन्धादिकं रोचयामास ॥ ४७ ॥
रा० टी०—स इति । राक्षसेन्द्रः कौतुकात् हेतोः मां द्रष्टुं यदि कदाचित् व्यवस्येत् निश्चिनुयात् इति हेतोः निश्चितः अर्थः रावणसमीपगमनं येन स हनुमान् प्रसह्य परैः कृतं बन्धनम् अभिगर्हणं दुरुक्ति च रोचयामास ॥ ४७ ॥
गो० टी०—स इति । राक्षसेन्द्रः कौतूहलात् मां द्रष्टुं व्यवस्येदिति निश्चितार्थः सन् बन्धनादिकं रोचयामासेति संबन्धः ॥ ४८ ॥ ४९ ॥
४८ ] ति० टी०—अस्त्रबन्धमोक्षोऽपि तदैवाजायत इत्याह—स इति । वल्केन वल्कलेन तज्जन्यरज्ज्वैव बद्धः । अस्त्रेण तु विमुक्तः । कुतस्तत्राह—अस्त्रबन्धो मन्त्रबन्धोऽन्यं बन्धं नानुवर्तते इतरबन्धेन सह न तिष्ठति तस्मिन्सति मन्त्रबन्धो नश्यतीत्यर्थः ॥ ४८ ॥
रा० टी०—स इति । स हनुमान् तेन राक्षसकृतेन वल्केन तदुपादानकरज्ज्वा बद्धोऽपि अस्त्रेण विमुक्तः अभवदिति शेषः । तत्र हेतुमाह—अस्त्रबन्धः ब्रह्मास्त्रेण बन्धनम् अन्यं बन्धं बन्धनं न अनुवर्तते बन्धनान्तरमवलोक्य निवर्तत इत्यर्थः ॥ ४८ ॥
४९ ] ति० टी०—इममर्थमिन्द्रजिदपि ज्ञातवानित्याह—अथेति । अस्त्रेण विमुक्तं विचार्य ज्ञात्वान्येन बद्धोऽपि हनुमानस्त्रमनुवर्ततेऽस्त्रेण बद्ध इव वर्तत इत्यपि विचार्य चिन्तां जगामेति संबन्धः । 'नान्येन बन्धे ह्यनुवर्ततेऽस्त्रम्' इति पाठे चिन्तास्वरूपमिदम् । राक्षसैः स्वकृतबन्धनवशात्खेदं जगामेत्यर्थः ॥ ४९ ॥
रा० टी०—अथेति । अथ रज्जुबन्धनानन्तरम् इन्द्रजित् द्रुमचीरबद्धम् अत एव अस्त्रेण विमुक्तं कपिसत्तमं तं कपिः सन् चासौ तमन् रावणसभादर्शनमाकाङ्क्षन् च तं तं हनु-

---

१ महान्मे गुणदर्शनः इति गो. पाठः । २ तमिति गो. पाठः । ३ निर्विचेष्टमिति गो. पाठः । ४ निग्रहमिति गो. पाठः । ५ स्विति गो. पाठः । ६ नान्येनेति गो. पाठः ।

अहो महत्कर्म कृतं निरर्थं न राक्षसैर्मन्त्रगतिर्विमृष्टा ।
पुनश्च नास्त्रे विहतेऽस्त्रमन्यत्प्रवर्तते संशयिताः स्म सर्वे ॥ ५० ॥
अस्त्रेण हनुमान्मुक्तो नात्मानमवबुध्यते । कृष्यमाणस्तु रक्षोभिस्तैश्च बन्धैर्निपीडितः ॥ ५१ ॥
हन्यमानस्ततः क्रूरै राक्षसैः कालमुष्टिभिः । समीपं राक्षसेन्द्रस्य प्राकृष्यत स वानरः ॥ ५२ ॥
अथेन्द्रजित्तं प्रसमीक्ष्य मुक्तमस्त्रेण बद्धं द्रुमचीरसूत्रैः ।
व्यदर्शयत्तत्र महाबलं तं हरिप्रवीरं सगणाय राज्ञे ॥ ५३ ॥
तं मत्तमिव मातङ्गं बद्धं कपिवरोत्तमम् । राक्षसा राक्षसेन्द्राय रावणाय न्यवेदयन् ॥ ५४ ॥
कोऽयं कस्य कुतो वापि किंकार्यं कोऽभ्युपाश्रयः । इति राक्षसवीराणां दृष्ट्वा संजज्ञिरे कथाः ॥ ५५ ॥
हन्यतां दह्यतां वापि भक्ष्यतामिति चापरे । राक्षसास्तत्र संक्रुद्धाः परस्परमथाब्रुवन् ॥ ५६ ॥
अतीत्य मार्गं सहसा महात्मा स तत्र रक्षोधिपपादमूले ।
ददर्श राज्ञः परिचारवृद्धान्गृहं महारत्नविभूषितं च ॥ ५७ ॥
स ददर्श महातेजा रावणः कपिसत्तमम् । रक्षोभिर्विकृताकारैः कृष्यमाणमितस्ततः ॥ ५८ ॥
राक्षसाधिपतिं चापि ददर्श कपिसत्तमः । तेजोबलसमायुक्तं तपन्तमिव भास्करम् ॥ ५९ ॥

---

मन्तं विचार्य विनिश्चित्य अन्येन बद्धोऽयम् अस्त्रमनुवर्तते अथ इति हेतोः चिन्तां जगाम अत एव न पौनरुक्त्यम् यदि तु पूर्वं पठितस्य तमित्यस्य अमृतमित्यर्थः तदा कपिसत्तममित्येव छेदः 'तश्चौरामृतपुच्छेपु' इति कोशः ॥ ४९ ॥

गो॰ टी॰–अथेन्द्रजित्त्विति । अन्येन शणवल्कलादिना बद्धः अस्त्रं नानुवर्तते । नास्त्रेण बद्ध इव वर्तत इत्यर्थः । अहो इति । मन्त्रगतिः ब्रह्मास्त्रमन्त्रपद्धतिः न विमृष्टा न पर्यालोचितेत्यर्थः बन्धान्तरेण सहानवस्थानरूपं ब्रह्मास्त्रस्वभावमनालोच्य शणबन्धादिकं राक्षसैः कृतमिति भावः । अस्त्रे विहिते ब्रह्मास्त्रे प्रतिहते अन्यदस्त्रं न प्रवर्तते न प्रभवतीत्यर्थः । तदेव ब्रह्मास्त्रं प्रयुज्यतामित्याशङ्क्याह–पुनश्चेति । पुनर्न प्रवर्तते । प्रयुक्तं ब्रह्मास्त्रं पुनर्न प्रभवतीत्यर्थः । सर्वे इत्यनन्तरमितिकरणं बोध्यम् । इति चिन्तां जगामेति पूर्वेण संबन्धः ॥ ५० ॥५१ ॥

५० ] ति॰ टी॰–चिन्तामाह—अहो इति । पाठान्तरे चिन्तान्तरमिदम् । मया कृतं महत्कर्म निरर्थं कृतं राक्षसैः, यतस्तैर्मन्त्रगतिर्न विमृष्टा न विचारिता । अन्यबन्धे मन्त्रबन्धो नश्यतीति न ज्ञातमित्यर्थः । पुनरस्त्रं तदेव प्रयोज्यं तत्राह–अस्त्रे ब्राह्मे विहते पुनरन्यदस्त्रं तदस्त्रप्रयोगान्तरं न प्रवर्तते, अतः सर्वे वयं संशयिताः संशयितजया एव । मुक्तोऽयं सर्वानपि हन्यादिति भावः ॥ ५० ॥

रा॰ टी॰–चिन्ताकारमाह—अहो इति । यतः राक्षसैः मन्त्रगतिः मन्त्ररीतिः न विमृष्टा विज्ञाता अतः महत् कृतम् अतियत्नेन मया संपादितं कर्म निरर्थं व्यर्थं कृतम् । ननु पुनर्मन्त्रप्रयोगं कुर्वित्यत आह–अस्त्रे विहते दुरनुष्ठानेन निवृत्ते सति अन्यत् अस्त्रं न प्रवर्तते इति हेतोर्वयं सर्वे संशयिताः संशयं प्राप्ताः स्म॥५०॥

५१–५४ ] ति॰ टी॰–अस्त्रविमोक्षं राहुमोक्षवदपरोक्षतया ज्ञातवानपि हनूमान्न तथा ज्ञापयतीत्याह—अस्त्रेणेति । अवबुध्यते अन्तर्भावितण्यर्थतया नावबोधयति स्म अस्त्रमोक्षं न प्रकाशयति स्मेत्यर्थः । तैर्बन्धैर्लौकिकबन्धैः, अत एव कृष्यमाणत्वादिगुणको राक्षसेन्द्रसमीपं प्राकृष्यत ॥ ५१–५४ ॥

रा॰ टी॰–अस्त्रेणेति । अस्त्रेण मुक्तोऽपि हनूमान् आत्मानं न अवबुध्यते मुक्तत्वेन न जानाति अत एव रक्षोभिः कृष्यमाणः सन् बन्धैर्निपीडितोऽस्तीति शेषः ॥ ५१ ॥

रा॰ टी॰–हन्यमान इति । कालमुष्टिभिः क्रूरैः राक्षसैः हन्यमानः स हनूमान् राक्षसेन्द्रस्य समीपं प्राकृष्यत ॥ ५२ ॥

रा॰ टी॰–अथेति । अथानन्तरम् हरिप्रवीरं हनूमन्तं राज्ञे रावणाय व्यदर्शयन् ॥ ५३ ॥

रा॰ टी॰–तमिति । राक्षसाः बद्धं कपिवरं रावणाय न्यवेदयन् ॥ ५४ ॥

गो॰ टी–अस्त्रेणेति । नावबुद्ध्यत नावधृतवान्॥५२–५७॥

५५ ] ति॰ टी॰–कस्य सुत इति शेषः । कोऽभ्युपाश्रयः कस्याश्रयेणैवं निर्भय इत्यर्थः ॥ ५५ ॥

रा॰ टी॰–क इति । अभ्युपाश्रयः अस्य सेव्यः कः इति राक्षसवीराणां कथाः परस्परमुक्तयः संजज्ञिरे बभूवुः ॥ ५५ ॥

५६ ] ति॰ टी॰–यत्र रावणः स्थितस्तत्रत्या राक्षसा एवमब्रुवन्नित्यर्थः ॥ ५६ ॥

रा॰ टी॰–हन्यतामिति । अपरे राक्षसाः हन्यतामित्याद्यब्रुवन् ॥ ५६ ॥

५७–५९ ] ति॰ टी॰–परिचारवृद्धान् वृद्धान्परिचारकानित्यर्थः ॥ ५७–५९ ॥

---

१ बुध्यतेति गो. पाठः । २ काष्ठेति गो. पाठः । ३ वाग्रेति गो. पाठः । ४ व्यथयत इति गो. पाठः । ५ तवेति गो. पाठः ।

स रोषसंवर्तिततामदृष्टिर्दशाननस्तं कपिमन्ववेक्ष्य ।
अथोपविष्टान्कुलशीलवृद्धान्समादिशत्तं प्रतिमुख्यमन्त्रीन् ॥ ६० ॥
यथाक्रमं तैः स कपिश्च पृष्टः कार्यार्थमर्थस्य च मूलमादौ ।
निवेदयामास हरीश्वरस्य दूतः सकाशादहमागतोऽस्मि ॥ ६१ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये सुन्दरकाण्डेऽष्टचत्वारिंशः सर्गः ॥ ४८ ॥

## एकोनपञ्चाशः सर्गः ।

रावणस्य लक्षणसंपदमैश्वर्यं च विलोक्याश्चर्यवैवश्यं प्राप्तो हनुमानयं सुरलोकस्यापि शास्ता यदि बलवताऽधर्मेण न भ्रश्येतेत्युत्प्रेक्षते ।

ततः स कर्मणा तस्य विस्मितो भीमविक्रमः । हनुमान्क्रोधताम्राक्षो रक्षोधिपमवैक्षत ॥ १ ॥
भ्राजमानं महार्हेण काञ्चनेन विराजता । मुक्ताजालवृतेनाथ मुकुटेन महाद्युतिम् ॥ २ ॥
वज्रसंयोगसंयुक्तैर्महार्हमणिविग्रहैः । हैमैराभरणैश्चित्रैर्मनसेव प्रकल्पितैः ॥ ३ ॥

रा० टी०–अतीत्येति । महात्मा स हनुमान् मार्गमतीत्य अतिक्रम्य रक्षोऽधिपपादमूले परिचारवृद्धान् वृद्धपरिचारकान् महारत्नविभूषितं राज्ञो रावणस्य गृहं च ददर्श॥५७॥

रा० टी०–स इति । स प्रसिद्धो रावणः रक्षोभिः इतस्ततः कृष्यमाणं कपिसत्तमं ददर्श ॥ ५८ ॥

रा० टी०–राक्षसेति । तपन्तं भास्करमिव राक्षसाधिपतिं कपिसत्तमो ददर्श ॥ ५९ ॥

गो० टी०–अतीत्येति । परिचारवृद्धान् अमात्यवृद्धान् ॥ ५८–६१ ॥

६० ] ति० टी०–वक्ष्यमाणसंक्षेपः—अथेति । मन्त्रीन् मन्त्रिण इत्यर्थः ॥ ६० ॥

रा० टी०–स इति । रोषेण संवर्तिते ताम्रदृष्टी अरुणनयने यस्य स दशाननः कपिं हनुमन्तमन्ववेक्ष्य उपविष्टान् संस्थितान् कुलशीलवृद्धान् मुख्यमन्त्रीन् मुख्यमन्त्रिणः तं हनुमन्तं प्रति समादिशत् प्रष्टुमाज्ञापयत् ॥ ६० ॥

६१ ] ति० टी०–कार्यं कर्तव्यमर्थस्तत्प्रयोजनं च । समाहारद्वन्द्वः अर्थस्य मूलमुक्तप्रयोजनप्रवर्तकम् । उत्तराशयस्तु दूत्यं कृत्यम्, प्रेरकः सुग्रीव इति ॥ ६१ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये सुन्दरकाण्डेऽष्टचत्वारिंशः सर्गः ॥ ४८ ॥

रा० टी०–यथेति । ते रावणाज्ञप्तैर्मुख्यमन्त्रिभिः कार्यार्थं कार्यं कर्तव्यम् अर्थः कर्तव्यस्य प्रयोजनं च समाहारद्वन्द्वः अर्थस्य कार्यप्रवृत्तेर्मूलं कारणं च पृष्टः स हनुमान् हरीश्वरस्य सुग्रीवस्य सकाशात् समीपात् आगतः दूतोऽहमस्मीति निवेदयामास ॥ ६१ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ सुन्दरकाण्डेऽष्टचत्वारिंशः सर्गः ॥ ४८ ॥

गो० टी०–यथाक्रममिति । कार्यार्थं कर्तव्यार्थम् अर्थस्य कर्तव्यार्थस्य मूलं निमित्तं प्रेषयितारमित्यर्थः । अनयोर्विपृष्ट इत्यनेन संबन्धः श्लोकान्त इतिकरणं बोध्यम् । वक्ष्यमाणसंग्रहोऽयम् ॥ ६२ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्यानेऽष्टचत्वारिंशः सर्गः ॥ ४८ ॥

१–२ ] ति० टी०–तस्येन्द्रजितः । यत्तु रावणस्येति तन्न, तेन हनुमति कस्यापि कर्मणोऽकृतत्वादिति कतकः । पुत्रद्वारा स्वबन्धनकर्मणेत्यर्थ इति तीर्थः ॥ १ ॥ २ ॥

३ ] ति० टी०–वज्रसंयोगेन तद्धटनेन संयुक्तैर्घटितैर्महार्हमणिविग्रहैर्बहुमूल्यमणिप्रधानस्वरूपैः ॥ ३ ॥

रा० टी०–हनुमतो वृत्तमाह–तत इत्यादिभिः । ततः तस्मिन् समये तस्य इन्द्रजितः कर्मणा विस्मितः तस्य रावणस्य कर्मणा सीतापहरणक्रियया क्रोधताम्राक्षः स हनुमान् रक्षोधिपं रावणमवैक्षत कर्मणेति तस्येति चावृत्त्योभयान्वयि ॥१॥

रा० टी०–भ्राजमानमिति । महार्हेण बहुमूल्येन काञ्चनेन सुवर्णमयेन मुक्ताजालवृतेन यथायोग्यं मुक्तासमूहविन्यस्तेन विराजता प्रकाशमानेन मुकुटेन वज्रस्य संयोगेन यथोचितं विन्यासेन संयुक्तैः महार्हमणीनां विग्रहैर्यथोचितं विघटनविशिष्टैर्मनसेव प्रकल्पितैः हैमैः हेममयैः आभरणैर्भ्राजमानम् अत एव महाद्युतिम् ॥ २ ॥ ३ ॥

गो० टी०–ततः स इत्यादि । कर्मणा तस्य विस्मितयुद्धार्थं रावणेनागन्तव्यमिति मया यत्नः कृतः । स तु नीतिज्ञ आसनस्थ एव इन्द्रजिन्मुखेन मां निबध्यानीतवानित्यानयनकर्मणा जातविस्मय इत्यर्थः ॥ १ ॥

गो० टी०–भ्राजमानमित्यादि । वज्रसंयोगसंयुक्तैः वज्रकीलनेन संबद्धैः । अत्र भ्राजमानमित्यनुपज्यते ॥ २ ॥

१ मन्त्रिमुख्यानिति गो. पाठः । २ वीति गो. पाठः । ३ रोषाति गो. पाठः ।

महार्हक्षौमसंवीतरक्तचन्दनरूषितम् । स्वनुलिप्तं विचित्राभिर्विविधाभिश्च भक्तिभिः ॥ ४ ॥
[2]विचित्रं दर्शनीयैश्च रक्ताक्षैर्भीमदर्शनैः । दीप्ततीक्ष्णमहा[3]दंष्ट्रं प्रलम्बं दशनच्छदैः ॥ ५ ॥
शिरोभिर्दशभि[4]र्वीरो भ्राजमानं महौजसम् । नानाव्यालसमाकीर्णैः शिखरैरिव मन्दरम् ॥ ६ ॥
नीलाञ्जनचयप्रख्यं हारेणोरसि राजता । पूर्णचन्द्राभवक्त्रेण स[5]बालार्कमिवाम्बुदम् ॥ ७ ॥
बाहुभिर्बद्धकेयूरैश्चन्दनोत्तमरूषितैः । भ्राजमानाङ्गदै[6]र्भीमैः पञ्चशीर्षैरिवोरगैः ॥ ८ ॥
महति स्फाटिके चित्रे रत्नसंयोगचित्रिते । उत्तमास्तरणास्तीर्णे सूपविष्टं वरासने ॥ ९ ॥
अलंकृताभिरत्यर्थं प्रमदाभिः समन्ततः । वालव्यजनहस्ताभिरारात्समुपसेवितम् ॥ १० ॥
दुर्धरेण प्रहस्तेन महापार्श्वेन रक्षसा । मन्त्रिभिर्मन्त्रतत्त्वज्ञैर्निकुम्भेन च मन्त्रिणा ॥ ११ ॥
उपोपविष्टं रक्षोभिश्चतुर्भिर्बलदर्पितम् । [7]कृत्स्नं परिवृतं लोकं चतुर्भिरिव सागरैः ॥ १२ ॥
मन्त्रिभिर्मन्त्रतत्त्वज्ञैरन्यैश्च शुभ[8]दर्शिभिः । [9]आश्वास्यमानं [10]सचिवैः सुरैरिव सुरेश्वरम् ॥ १३ ॥
अपश्यद्राक्षसपतिं हनूमानतितेजसम् । [11]वेष्टितं मेरुशिखरे सतोयमिव तोयदम् ॥ १४ ॥
स तैः संपीड्यमानोऽपि रक्षोभिर्भीमविक्रमैः । विस्मयं परमं गत्वा रक्षोधिपमवैक्षत ॥ १५ ॥
भ्राजमानं ततो दृष्ट्वा हनुमान्राक्षसेश्वरम् । मनसा चिन्तयामास तेजसा तस्य मोहितः ॥ १६ ॥
अहो रूपमहो धैर्यमहो सत्त्वमहो द्युतिः । अहो राक्षसराजस्य सर्वलक्षणयुक्तता ॥ १७ ॥

४ ] ति० टी०—भक्तिभिः शैवत्रिपुण्ड्रवद्रचनाविशेषैः ॥४॥

रा० टी०—महार्हक्षौमेन पट्टवस्त्रविशेषेण संवीतमाच्छादितं रक्तचन्दनेन रूषितं विविधाभिर्भक्तिभिः सेवनीयकस्तूर्यादिभिः स्वनुलिप्तम् ॥ ४ ॥

गो० टी०—महार्हेति । भक्तिभिः पङ्क्तिभिः । इत्थंभूतलक्षणे तृतीया यथा पङ्क्त्यो भवन्ति तथानुलिप्त इत्यर्थः । पूर्णचन्द्राभवक्त्रेण पूर्णचन्द्रतुल्यनायकरत्नेन वक्त्रं नायकरत्नम् अभितोऽलग्नमुक्तामणिमण्डलम् केयूरं भुजोपरि धार्यमाणमाभरणम् अङ्गदं बाहुमध्यस्थाभरणम् । मन्त्रिभिः प्रशस्तमन्त्रैः अतः सचिवैरित्यपुनरुक्तिः ॥ ३–१६ ॥

५ ] ति० टी०—विचित्रमाश्चर्यभूतैर्दशनच्छदैः प्रलम्बं लम्बदशनच्छदवन्तम् ॥ ५ ॥

६ ] ति० टी०—शिरोभिर्दशभिरिति हनूमतो दर्शनकाले रणे इव भीषणरूपकरणादिति बोध्यम् ॥ ६ ॥

रा० टी०—भीमदर्शनैः रक्ताक्षैररुणनयनैर्विचित्रमाश्चर्यभूतं दीप्ता प्रकाशिता तीक्ष्णा महादंष्ट्रा यस्य दशनच्छदैः ओष्ठैः प्रलम्बं प्रलम्बौष्ठवन्तमित्यर्थः । समस्तपाठे तु भ्राजमानमित्युत्तरेणान्वयः नानाव्यालसमाकीर्णैः अनेकसर्पव्याप्तैः शिखरैर्मन्दरमिव प्रलम्बदशनैर्दशभिः शिरोभिश्च भ्राजमानम् ॥ ५ ॥ ६ ॥

७ ] ति० टी०—हारेणोपलक्षितम् ॥ ७ ॥

रा० टी०—नीलाञ्जनचयवत् प्रख्या प्रतीतिर्यस्य उरसि राजता हारेण शोभितमिति शेषः पूर्णचन्द्राभवक्त्रेण पूर्णचन्द्रसदृशमुखेन च सबालार्कं बालार्कसहितमम्बुदमिव प्रतीयमानम् ॥ ७ ॥

८–११ ] ति० टी०—केयूराङ्गदयोरवान्तरविशेष ऊह्यः ॥ ८–११ ॥

१२ ] ति० टी०—चतुर्भिः सागरैः परिवृतं तं कृत्स्नं लोकं भूमण्डलमिवेत्यर्थः ॥ १२ ॥

१३–१४ ] ति० टी०—मन्त्री बुद्धिसहायः । सचिवः कार्यसहायः ॥ १३ ॥ १४ ॥

रा० टी०—बद्धानि केयूराणि येषु तैः भ्राजमानाः अङ्गदाः येषु तैः चन्दनोत्तमरूषितैः पञ्चशीर्षैरुरगैरिव प्रतीयमानमिति शेषः, केयूरोऽङ्गदावान्तरभेदः ॥ ८ ॥

रा० टी०—रत्नसंयोगेन चित्रिते स्फाटिके स्फटिकनिर्मिते उत्तमास्तरणैरास्तीर्णे चित्रे आश्चर्यभूते वरासने सूपविष्टम् ॥९॥

रा० टी०—आरात् समीपे समन्ततो विद्यमानाभिः प्रमदाभिः समुपसेवितम् ॥ १० ॥

रा० टी०—महापार्श्वेन स्थूलपार्श्ववता प्रहस्तेन रक्षसा मन्त्रतत्त्वज्ञैः मन्त्रिभिश्च मन्त्रिणा निकुम्भेन चोपोपविष्टं चतुर्भिः रक्षोभिः कृत्स्नं लोकं भुवनं परिवृतं तैर्मन्त्रतत्त्वज्ञैर्मन्त्रिभिः दुर्धरादिभिश्चतुर्भिरुपोपविष्टम् सचिवैः मन्त्रिभिः अन्यैर्मन्त्रिभिश्च सुरैः सुरेश्वरमिव आश्वास्यमानं मेरुशिखरे सतोयं तोयदमिव विष्ठितं राक्षसपतिं हनूमान् अपश्यत् त्रयोदशानामेकत्रान्वयः ॥ ११–१४ ॥

१५–१७ ] ति० टी०—रक्षोधिपमवैक्षत, न तु रक्षःकृतपीडामित्यर्थः ॥ १५–१७ ॥

रा० टी०—स इति । तैः रक्षोभिः संपीड्यमानोऽपि स हनूमान् विस्मयं गत्वा रक्षोधिपमवैक्षत ॥ १५ ॥

१ संवीतमिति गो. पाठः । २ विवृत्तैरिति गो. पाठः । ३ दंष्ट्रैरिति गो. पाठः । ४ वीरमिति गो. पाठः । ५ बालकमिति गो. पाठः । ६ पीनैरिति गो. पाठः । ७ कृत्स्नः परिवृतो लोक इति गो. पाठः । ८ बुद्धिरिति गो. पाठः । ९ अन्वास्येति गो. पाठः । १० रक्षोभिरिति गो. पाठः । ११ विष्ठितमिति गो. रा. पाठः ।

यद्यधर्मो न बलवान्स्यादयं राक्षसेश्वरः। स्यादयं सुरलोकस्य सशक्रस्यापि रक्षिता ॥ १८ ॥
अस्य क्रूरैर्नृशंसैश्च कर्मभिर्लोककुत्सितैः । सर्वे बिभ्यति खल्वस्माल्लोकाः सामरदानवाः॥ १९ ॥
अयं ह्युत्सहते क्रुद्धः कर्तुमेकार्णवं जगत् । इति चिन्तां बहुविधामकरोन्मतिमान्कपिः ॥
दृष्ट्वा राक्षसराजस्य प्रभावममितौजसः ॥ २० ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये सुन्दरकाण्डे एकोनपञ्चाशः सर्गः ॥ ४९ ॥

---

## पञ्चाशः सर्गः ।

रावणादिष्टः प्रहस्तो हनुमन्तं तत्स्वरूपं पृच्छन्वनभञ्जनराक्षसहननप्रयोजनं पप्रच्छ । स त्वक्षमगणयन्रावणमुद्दिश्यैव वनभञ्जनराक्षसक्षपणयोः त्वद्दर्शनात्मरक्षयोर्हेतुत्वं निदर्शयन्नात्मनो रामदूतत्वं कथयन्स्वस्य ब्रह्मवरात्तदस्त्रावध्यत्वेऽपि भवद्दर्शनार्थमस्त्रानुसरणं कृतमिति कथयति ।

तमुद्वीक्ष्य महाबाहुः पिङ्गाक्षं पुरतः स्थितम् । [4]रोषेण महताविष्टो रावणो लोकरावणः ॥ १ ॥
शङ्काहतात्मा दध्यौ स कपीन्द्रं तेजसा वृतम् । किमेष भगवान्नन्दी भवेत्साक्षादिहागतः ॥ २ ॥
येन शप्तोऽस्मि कैलासे मया [5]प्रहसिते पुरा । सोऽयं वानरमूर्तिः स्यात्किंस्विद्बाणोऽपि वासुरः॥ ३ ॥

---

रा० टी०—भ्राजमानमिति । भ्राजमानं राक्षसेश्वरं दृष्ट्वा तस्य राक्षसेश्वरस्य तेजसा मोहितः कर्तव्यविषयकविवेकरहितो हनुमान् चिन्तयामास ॥ १६ ॥

रा० टी०—चिन्ताकारमाह—अहो इति । राक्षसराजस्य रूपादिसर्वलक्षणयुक्तता च अहो आश्चर्यम् ॥ १७ ॥

गो० टी०—अहो इत्यादि ॥ १७ ॥

१८ ] ति० टी०—सर्वसंपत्तिमतोऽप्यधर्मवतो महान्दोष इत्याह—यदीति । बलवानेवंविधसमृद्धोऽप्युन्मूलनक्षमोऽधर्मो यद्यस्मिन्न स्यात्तदाऽयं राक्षसेश्वरः शक्रस्य सुरलोकस्यापि विष्णुवद्रक्षिता स्यात् । यद्वा धर्म इत्यर्शआद्यजन्तम् अयं बलवान्राक्षसेश्वरो यद्यधर्मवान्न स्यात्तदा शक्रस्येत्यादि प्राग्वत् । अधर्महतत्वात्तु स्वप्रजानामपि नाशक एवेति भावः ॥ १८ ॥

रा० टी०—यदीति । अयं राक्षसेश्वरः यदि अधर्मः धर्मविरोधी न स्यात् तर्हि सुरलोकस्यापि रक्षिता स्यात् ॥ १८ ॥

गो० टी०—यदीति । अयं रावणकृतः अधर्मः बलवान्न स्याद्यदि तदायं राक्षसेश्वरः सशक्रस्य सुरलोकस्यापि रक्षिता स्यात् ॥ १८ ॥

१९–२० ] ति० टी०—'के न बिभ्यति' इति पाठे के नेति पदच्छेदः ॥ १९ ॥ २० ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये सुन्दरकाण्डे एकोनपञ्चाशः सर्गः ॥ ४९ ॥

रा० टी०—अस्येति । लोककुत्सितैः सर्वजननिन्दितैः नृशंसैः घातुकैः अत एव क्रूरैः अस्य कर्मभिः सामरदानवाः सर्वे लोकाः अस्मात् रावणाद्बिभ्यति ॥ १९ ॥

रा० टी०—अयमिति । क्रुद्धः अयं जगदेकार्णवं कर्तुम् उत्सहते समर्थो भवति इति बहुविधां चिन्तां राक्षसराजस्य प्रभावं दृष्ट्वापि अकरोत् । सार्धश्लोक एकान्वयी ॥ २० ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ सुन्दरकाण्डे एकोनपञ्चाशत्तमः सर्गः ॥ ४९ ॥

गो० टी०—अस्येति । तेन कर्मभिः कृतेन पूर्वोक्तेनाधर्मेण हेतुना ॥ १९ ॥ २० ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने एकोनपञ्चाशः सर्गः ॥ ४९ ॥

---

१ ] ति० टी०—आविष्टः आसीदिति शेषः ॥ १ ॥

रा० टी०—हनुमद्दर्शनानन्तरकालिकं रावणवृत्तान्तमाह—तमित्यादिभिः । पिङ्गे अक्षिणी यस्य तं पुरतः स्थितं हनुमन्तम् उद्वीक्ष्य शङ्काहतात्मा शङ्काव्याप्तचित्तः स प्रसिद्धो रावणः दध्यौ चिन्तयामास । सार्धश्लोक एकान्वयी ॥ १ ॥

गो० टी०—तमुद्वीक्ष्येत्यादि । बाणः महाबलिसुतः । अनेन तेनापि किंचित् शप्तमिति गम्यते । अत्रेतिकरणं द्रष्टव्यम् ॥ १–४ ॥

२ ] ति० टी०—तेजसा वृतम् । दृष्ट्वेति शेषः । शङ्काहतात्मेत्युक्तां शङ्कामेवाह—नन्दी वानरमुख एष प्रमथगणाधिपः ॥ २ ॥

३ ] ति० टी०—शप्तः मन्मुखसदृशमुखैस्तव नाशो भविष्यतीति शापः । बलिसुतो बाणो वा महेश्वरभक्तत्वान्नन्दिना प्रेषित इति शङ्का ॥ ३ ॥

रा० टी०—चिन्ताकारमाह—किमित्यादिभिः । पुरा कैलासगमनसमये मया प्रहसिते वानरमुखसदृशमुखवत्त्वेन प्रहासं प्रापिते सति येनाहं शप्तः सन् मुखसदृशमुखैः त्वद्विनाशो भ-

---

१ ईश्वरमिति गो. पाठः । २ तेनेति गो. पाठः । ३ हरिरिति गो. पाठः । ४ कोपेनेति गो. पाठः । ५ संचालिते इति गो. पाठः ।

स राजा रोषताम्राक्षः प्रहस्तं मन्त्रिसत्तमम् । कालयुक्तमुवाचेदं वचो विपुलमर्थवत् ॥ ४ ॥
दुरात्मा पृच्छ्यतामेष कुतः किं वास्य कारणम्। वनभङ्गे च कोऽस्यार्थो राक्षसानां च तर्जने ॥ ५ ॥
मत्पुरीमप्रधृष्यां वै गमने किं प्रयोजनम् । आयोधने वा किं कार्यं पृच्छ्यतामेष दुर्मतिः॥ ६ ॥
रावणस्य वचः श्रुत्वा प्रहस्तो वाक्यमब्रवीत्। समाश्वसिहि भद्रं ते न भीः कार्या त्वया कपे॥ ७ ॥
यदि तावत्त्वमिन्द्रेण प्रेषितो रावणालयम् । तत्त्वमाख्याहि मा ते भूद्भयं वानर मोक्ष्यसे॥ ८ ॥
यदि वैश्रवणस्य त्वं यमस्य वरुणस्य च । चाररूपमिदं कृत्वा प्रविष्टो नः पुरीमिमाम् ॥ ९ ॥
विष्णुना प्रेषितो वापि दूतो विजयकाङ्क्षिणा । नहि ते वानरं तेजो रूपमात्रं तु वानरम् ॥ १० ॥
तत्त्वतः कथयस्वाद्य ततो वानर मोक्ष्यसे । अनृतं वदतश्चापि दुर्लभं तव जीवितम् ॥ ११ ॥
अथ वा यन्निमित्तस्ते प्रवेशो रावणालये । एवमुक्तो हरिवरस्तदा रक्षोगणेश्वरम् ॥ १२ ॥
अब्रवीन्नास्मि शक्रस्य यमस्य वरुणस्य च । धनदेन न मे सख्यं विष्णुना नास्मि चोदितः ॥ १३ ॥

---

वितेत्युक्तोऽस्मि स भगवान् एष नन्दी वानरमूर्तिः सन् किमिहागतः स प्रसिद्धो बाणोऽसुरो वानरमूर्तिः सन् इहागतो वा । सार्धश्लोक एकान्वयी ॥ २ ॥ ३ ॥

४ ] ति० टी०—कालयुक्तं कालोचितम् ॥ ४ ॥

रा० टी०—स इति । राजा स रावणः मन्त्रिसत्तमं प्रहस्तं विपुलं गम्भीरम् अर्थवत् प्रयोजनविशिष्टम् इदमुवाच ॥ ४ ॥

५ ] ति० टी०—कुतः आगत इति शेषः । किं वा कारणम् को वास्य प्रेरक इत्यर्थः ॥ ५ ॥

रा० टी०—तद्वचनाकारमाह—दुरात्मेत्यादिभिः । कुतः कस्मादागत इति शेषः । अस्यागमनस्य कारणं प्रयोजनं किं, वनभङ्गे राक्षसानां तर्जने च अस्य कोऽर्थः प्रयोजनम् इत्येष दुरात्मा पृच्छ्यताम् ॥ ५ ॥

गो० टी०—दुरात्मा पृच्छ्यतामिति । अस्य विवरणं कुत इत्यादि । कुतः कस्माद्देशादागतः, किं वास्य कारणम्, अस्य कः प्रेरकः । मत्पुरीं प्रतीति शेषः । आयोधने युद्धे । किं कार्यं किं प्रयोजनम् ॥ ५–७ ॥

६–७ ] ति० टी०—मत्पुरीम् उद्दिश्येति शेषः । आयोधने किंकरादिभिर्युद्धे । यद्वा मत्पुरीगमने मत्पुरीप्राप्तावित्यर्थः । आर्षः षष्ठ्यभावः ॥ ६ ॥ ७ ॥

रा० टी०—मदिति । मत्पुरीं प्रतीति शेषः । गमने आगमने किं प्रायोजनम् आयोधने युद्धे वा ते किं कार्यम् इत्येष दुर्मतिः पृच्छ्यताम् ॥ ६ ॥

रा० टी०—रावणस्येति । रावणस्य वचः श्रुत्वा प्रहस्तोऽब्रवीत् । तदाकारमाह—हे कपे ! ते भद्रं कल्याणम् अतो भीर्भीतिर्न कार्या अतः समाश्वसिहि ॥ ७ ॥

८ ] ति० टी०—मोक्ष्यसे बन्धनादिति शेषः ॥ ८ ॥

रा० टी०—समाश्वासनप्रयोजनमाह—यदीत्यादिभिः । यदि तु त्वमिन्द्रेण प्रेषितः तर्हि तत्त्वं यथार्थमाख्याहि । तत्त्वकथने फलमाह—त्वं मोक्ष्यसे अस्माभिर्बन्धनादिति शेषः ॥८॥

गो० टी०—यदि तावत्त्वमिन्द्रेणेत्यादि । यदि वैश्रवणस्येत्यादेः दूतो विजयकाङ्क्षिणेत्यन्तस्य तत्त्वमाख्याहीति पूर्वेण संबन्धः ॥ ८ ॥ ९ ॥

९ ] ति० टी०—चाररूपं चाराणां प्रच्छन्नवेषत्वाच्छद्मकृतवानररूपम् ॥ ९ ॥

रा० टी०—यदीति । यदि वैश्रवणाद्यन्यतमस्य दूतः अत एव प्रेषितस्त्वं नोऽस्माकं पुरीं प्रविष्टः अथ वा अथापि यन्निमित्तः यदर्थं ते प्रवेशः तच्च तर्हि तत्त्वतः कथयस्व अनृतं वदतस्तव जीवितं जीवनं दुर्लभम् । ननु सामान्यवानर एवाहमित्यत आह—वानरं सामान्यवानरसंबन्धि ते तेजो न अद्भुतं तेजोऽस्तीत्यर्थः, ते रूपमात्रं तु वानरम् । सार्धश्लोकत्रयमेकान्वयि ॥ ९–११ ॥

१०–११ ] ति० टी०—कुत एवं चिन्ता तत्राह—नहीति । वानरमितीदमर्थार्णान्तम् ॥ १० ॥ ११ ॥

गो० टी०—न हीत्यादि । अथवेति । यन्निमित्तं कृत्वा ते प्रवेशः तन्निमित्तं कथयस्वेति पूर्वेण संबन्धः ॥ १०॥११ ॥

१२ ] ति० टी०—अथ वेति । अथ चेत्यर्थः । यन्निमित्तो यत्प्रयोजनस्तत्कथयस्वेति संबन्धः । एवमुक्तः प्रहस्तेनेति शेषः । रक्षोगणेश्वरं प्रहस्तमलक्षीकृत्य रावणमेव तथाकृत्वाऽब्रवीदित्युत्तरेणान्वयः ॥ १२ ॥

रा० टी०—एवमिति । एवमुक्तः हरिवरो हनुमान् अब्रवीत् । तद्वचनाकारमाह—शक्रादन्यतमस्य दूतोऽहं नास्मि । अर्धद्वयमेकान्वयि ॥ १२ ॥

गो० टी०—एवमुक्त इत्यादि । रक्षोगणेश्वरमित्यनेन प्रष्टारं प्रहस्तं पृष्ठतः कृतवानिति गम्यते । एषा वानरता राक्षसेन्द्रस्य तवेति शेषः । प्रतियुद्धाः प्रतिप्रहृताः । ममापीति तवैवेत्यर्थः ॥ १२–१६ ॥

१३ ] ति० टी०—वरुणस्य वा दूत इति शेषः । धनदेन विष्णुना च न मे सख्यम्, अतस्ताभ्यां चोदितो नास्मि॥१३॥

---

१ वेति गो. पाठः । २ निमित्तं से इति गो. पाठः । ३ श्रेष्ठ इति गो. पाठः । ४ तत्सेदमित्यर्थः इति भावः ।

जातिरेव मम त्वेषा वानरोऽहमिहागतः । दर्शने राक्षसेन्द्रस्य तदिदं[1] दुर्लभं मया ॥ १४ ॥
वनं राक्षसराजस्य दर्शनार्थे विनाशितम् । ततस्ते राक्षसाः प्राप्ता बलिनो युद्धकाङ्क्षिणः ॥ १५ ॥
रक्षणार्थं च देहस्य प्रतियुद्धा मया रणे । अस्त्रपाशैर्न शक्योऽहं बद्धुं देवासुरैरपि ॥ १६ ॥
पितामहादेष[2] वरो ममापि हि समागतः । राजानं द्रष्टुकामेन मयास्त्रमनुवर्तितम् ॥ १७ ॥
विमुक्तोऽप्यहमस्त्रेण[3] राक्षसैस्त्वभिवे[4]दितः । केनचिद्रामकार्येण आ[5]गतोऽस्मि तवान्तिकम् ॥ १८ ॥
दूतोऽहमिति विज्ञाय राघवस्यामितौजसः । श्रूयतामेव[6] वचनं मम पथ्यमिदं प्रभो ॥ १९ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये सुन्दरकाण्डे पञ्चाशः सर्गः ॥ ५० ॥

---

रा० टी०—धनदेनेति । धनदेन कुबेरेण विष्णुना च मे सख्यं नास्ति अत एव धनदेन विष्णुना च न प्रचोदितोऽस्मि तयोरपि दूतो नास्मीत्यर्थः ॥ १३ ॥

१४-१५ ] ति० टी०—एषा वानराकृतिर्मम जातिरेव जन्मकृतैव, अतो वानर एवाहमिहागतः । वानरस्यात्रागमने किं प्रयोजनं तत्राह—दर्शन इति । राक्षसेन्द्रस्य तव दर्शने दर्शननिमित्तमिहागत इत्यर्थः । तदिदं तव दर्शनं दुर्लभं प्रकारान्तरेणाशक्यलाभमिति ज्ञात्वा तव दर्शनार्थे वनं विनाशितम् । अयं दर्शनोपायो भवत्येवेत्याह—ततः वनभङ्गाद्धेतोरित्यर्थः ॥ १४ ॥ १५ ॥

रा० टी०—जातिरिति । एषा वानरत्वरूपैव मम जातिः अत एव वानर एवाहं यस्येदं दर्शनं मया दुर्लभं तस्य राक्षसेन्द्रस्य तव दर्शनार्थमिहागतः अत एव राक्षराजस्य दर्शनार्थे वनं विनाशितम् । सार्धश्लोक एकान्वयी ॥ १४ ॥

रा० टी०—तत इति । ततः वनविध्वंसानन्तरं युद्धकाङ्क्षिणः प्राप्ताः राक्षसा मया देहस्य स्वशरीरस्य रक्षणार्थं रणे प्रतियुद्धाः प्रतिभटतया स्थिता युद्धाय प्रवर्तिताः ॥ १५ ॥

१६ ] ति० टी०—इदानीं युद्धप्रयोजनमाह—रक्षणार्थमिति । प्रतियुद्धा मया प्रतिभटतया स्थित्वा कृतयुद्धाः, नन्वेवं भावि बन्धाद्यपर्यालोच्य कथं युद्धं कृतं तत्राह—अस्त्रेति । अस्त्रैर्ब्रह्मास्त्रान्तैः, पाशैर्यमपाशान्तैः । एवं चेतरपाशकथापि दूरापास्तेत्युक्तम् । देवासुरैर्मिलितैरपीत्यर्थः ॥ १६ ॥

रा० टी०—अस्त्रेति । अस्त्रपाशैः अस्त्रैः पाशैश्च बद्धुं मुहूर्तादनन्तरं बन्धनं प्रापयितुं देवासुरैरप्यहं न शक्यः एष वरः पितामहात् मम मया समागतः प्राप्तः ॥ १६ ॥

१७] ति० टी०—कुतस्तवैवं बलं तत्राह—पितामहादिति । तदनुग्रहादित्यर्थः । ममापि न तु केवलं तवैवेत्यर्थः । एष वर इति । बलविशेषरूप इत्यर्थः । तर्हि कथं बन्धनमुपगतं तत्राह—राजानमिति । अस्त्रं ब्रह्मास्त्रमनुवर्तितं निवृत्तमप्यनुवर्तितमिव ॥ १७ ॥

रा० टी०—ननु बन्धनशक्त्यभावे कथं बन्धनं प्राप्तोऽसीत्यत आह—राजानमिति । राजानं रावणं द्रष्टुकामेन मया अस्त्रमनुवर्तितं बन्धनं प्राप्तमित्यर्थः, अत एव अस्त्रेण विमुक्तोऽप्यहं राक्षसैः अभिवेदितः त्वत्समीपे प्रापितः ॥ १७ ॥

गो० टी०—तर्हि कथं बद्धोऽसीत्याशङ्क्याह—राजानमिति । पीडितः बद्धः सन् । अस्त्रेण विमुक्तः । हिशब्दोऽवधारणे । ब्रह्मास्त्रस्य साधनान्तरासहत्वादिति भावः ॥ १७ ॥

१८ ] ति० टी०—तदेवाह—विमुक्त इति । विमुक्तोऽपि सास्त्र इवाभिवेदित आनीय तव ज्ञापितः एवं पीडामनुभूय मम दर्शने किं प्रयोजनं तत्राह—केनचिदिति । 'रामकार्येण' इति पाठः पाङ्क्तः ॥ १८ ॥

१९ ] ति० टी०—रामस्य तव च कः संबन्धस्तत्राह—दूत इति । ननु रामदूतेनापि सीतान्वेषणमेव कार्यम् एवंप्रयासेन मद्दर्शने किं फलं तत्राह—श्रूयतामिति । वचनं संदेशवचनम् । तत्कथनार्थमयं प्रयास इति भावः ॥ १९ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये सुन्दरकाण्डे पञ्चाशः सर्गः ॥ ५० ॥

रा० टी०—ननु मद्दर्शने तव किं प्रयोजनमित्यत आह—केनचिदिति । राघवस्याहं दूतः इति विज्ञाय संस्मृत्य केनचित् रामकार्येण हेतुना तवान्तिकमागतोऽस्मि अतो मम वचनं श्रूयताम् । सार्धश्लोक एकान्वयी ॥ १८ ॥ १९ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ सुन्दरकाण्डे पञ्चाशत्तमः सर्गः ॥ ५० ॥

गो० टी०—अस्तु सर्वमेतन्मद्दर्शनार्थं मद्दर्शनं वा किमर्थं तत्राह—केनचिदिति ॥ १८ ॥ १९ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने पञ्चाशः सर्गः ॥ ५० ॥

---

१ दुर्लभे तदिदमिति गो. पाठः । २ देव वरो ममाप्येषोऽभ्युपागत इति गो. पाठः । ३ ह्यहमिति गो. पाठः । ४ पीडित इति गो. पाठः । ५ संप्राप्त इति गो. पाठः । ६ श्रूयतां [illegible] गो. पाठः ।

## एकपञ्चाशः सर्गः ।

हनुमान्रावणं प्रति रामवनागमनमारभ्य स्वीयसीतादर्शनान्तं सकलवृत्तं निवेद्य राममहिमानमनुवर्णयंस्तस्मै सीतायाः प्रत्यर्पणानर्पणे निजजीवितलाभनाशकारणत्वेनोत्कीर्तयति ।

तं समीक्ष्य महासत्त्वं सत्त्ववान्हरिसत्तमः । वाक्यमर्थवदव्यग्रस्तमुवाच दशाननम् ॥ १ ॥
अहं सुग्रीवसंदेशादिह प्राप्तस्तवान्तिके । राक्षसेश हरीशस्त्वां भ्राता कुशलमब्रवीत् ॥ २ ॥
भ्रातुः शृणु समादेशं सुग्रीवस्य महात्मनः । धर्मार्थसहितं वाक्यमिह चामुत्र च क्षमम् ॥ ३ ॥
राजा दशरथो नाम रथकुञ्जरवाजिमान् । पितेव बन्धुर्लोकस्य सुरेश्वरसमद्युतिः ॥ ४ ॥
ज्येष्ठस्तस्य महाबाहुः पुत्रः प्रियतरः प्रभुः । पितुर्निदेशान्निष्क्रान्तः प्रविष्टो दण्डकावनम् ॥ ५ ॥
लक्ष्मणेन सह भ्रात्रा सीतया सह भार्यया । रामो नाम महातेजा धर्म्यं पन्थानमाश्रितः ॥ ६ ॥
तस्य भार्या जनस्थाने भ्रष्टा सीतेति विश्रुता । वैदेहस्य सुता राज्ञो जनकस्य महात्मनः ॥ ७ ॥
मार्गमाणस्तु तां देवीं राजपुत्रः सहानुजः । ऋष्यमूकमनुप्राप्तः सुग्रीवेण च संगतः ॥ ८ ॥

---

१ ] ति० टी०—अथ सुग्रीवसंदेशकथनव्याजेन सामदण्डान्यतरविषयत्वनिश्चयाय न्यायानुसारी न वेति जिज्ञासति—तमित्यादि ॥ १ ॥

रा० टी०—रावणं प्रति हनुमदुक्तिमुपक्रमते—तमिति । महासत्वं तं रावणं समीक्ष्य अर्थवत् सप्रयोजनं वाक्यं हरिसत्तमो हनुमानुवाच ॥ १ ॥

गो० टी०—तं समीक्ष्येत्यादि । समीक्षणोक्तिक्रियाभेदात्तच्छब्दद्वयम् ॥ १ ॥

२ ] ति० टी०—भ्राता हरीश इति स्नेहप्रकाशिका लोकोक्तिः । कुशलमब्रवीत् अप्राक्षीदित्यर्थः ॥ २ ॥

रा० टी०—तद्वचनाकारमाह—अहमित्यादिभिः । सुग्रीवसंदेशात् हेतोः तवान्तिके अहं प्राप्तः । संदेशमेवाह—हे राक्षसेश ! भ्राता हितोपदेशकर्तृत्वेन भ्रातृसदृशः हरीशः सुग्रीवः त्वां कुशलमब्रवीत् ॥ २ ॥

गो० टी०—अहमिति । अहं रामदूत एव संदेशस्तु सुग्रीवस्येति भावः । सुग्रीवसंदेशात्सुग्रीवसंदेशाद्धेतोः संदेशप्रापणार्थमित्यर्थः ‘ संदेशवाग्वाचिकं स्यात् ’ इत्यमरः । इह लङ्कायाम् । भ्राता भ्रातृवद्धितकरः अब्रवीत् अप्राक्षीत् । यद्यपि सुग्रीवेण न संदिष्टं तथापि दूतोक्तं सर्वं स्वाम्युक्तमेवेत्याशयेनोक्तम् ॥ २ ॥

३ ] ति० टी०—क्षमं सुखसंपादकम् ॥ ३ ॥

रा० टी०—भ्रातुरिति । भ्रातुस्तव हितस्य सुग्रीवस्य समादेशं सम्यगादेशः उपदेशो यस्मिन् तत् धर्मार्थसहितम् अत एव इह लोके अमुत्र परलोके च क्षमं योग्यं च वाक्यं शृणु॥३॥

गो० टी०—भ्रातुरिति । समादेशं संदेशरूपमिति वाक्यविशेषणम् । इह अस्मिल्लोके । अमुत्र परलोके । क्षमम् अभ्युदयसाधनम् ॥ ३ ॥ ४ ॥

४–६ ] ति० टी—अथ संदेशं वक्तुमुपोद्घातः—राजेति । पितेव बन्धुः रक्षक इत्यर्थः ॥ ४–६ ॥

रा० टी०—तद्वाक्यमेवाह—राजेत्यादिभिः । सुरेश्वरसमद्युतिः दशरथो नाम राजा अभवदिति शेषः ॥ ४ ॥

रा० टी०—ज्येष्ठ इति । धर्म्यं पन्थानमाश्रितः तस्य दशरथस्य ज्येष्ठः पुत्रः दण्डकावनं प्रविष्टः । श्लोकद्वयमेकान्वयि ॥ ५ ॥ ६ ॥

गो० टी०—धर्म्यं धर्मादनपेतम् “ धर्मपथ्यर्थन्यायादनपेते ” इति यत्प्रत्ययः ॥ ५–७ ॥

७ ] ति० टी०—भ्रष्टा मृताऽपहृता वेति विशिष्य न ज्ञातमित्यर्थः ॥ ७ ॥

रा० टी०—तस्येति । विश्रुता सर्वत्र प्रख्याता वैदेहस्य सुता तस्य रामस्य भार्या जनस्थाने नष्टा हृता ॥ ७ ॥

८ ] ति० टी०—तां मार्गमाणः स रामो ऋष्यमूकं प्राप्तः सुग्रीवेण संगतश्च । अनेनैव ज्ञायते नेदं सुग्रीवसंदेशवाक्यम् । तदा हि ‘ मया चैव सुसंगतः ’ इत्येव वदेत् ॥ ८ ॥

रा० टी०—मार्गमाण इति । देवीं सीतां मार्गमाणः रामः ऋष्यमूकमनुप्राप्तः सुग्रीवेण संगतः सख्यं प्राप्तश्च ॥ ८ ॥

गो० टी०—स मार्गमाण इति । सुग्रीवेण मयेति शेषः । यद्वा लोके वक्तारः स्वात्मानमन्यमिव निर्दिशन्त्यौद्धत्यातिशयात् । यद्वा अत्रानुवादात्पूर्वं सुग्रीवेणैवं वक्तव्यमिति पठितं तथैव हनुमान् पठतीति समादेशप्राधान्यादन्यवाक्यमपि तथोच्यत इति केचित् प्राहुः । यद्वा सुग्रीवसंदेशस्य रामप्रयोजनपरत्वात्संदेशोपयोगितया रामसुग्रीवयोः सख्यादिकं दर्शयति—राजा दशरथ इत्यादिना ॥ ८—११ ॥

---

१ एत्रेति रा. पाठः । २ आलयमिति गो. पाठः । ३ इन्द्रेति गो. पाठः । ४ उपहितमिति गो. पाठः । ५ वने नष्टा सीता पतिमनुव्रतेति गो. स्थानान्नष्टेति रा. पाठः । ६ स मार्गमाण इति गो. पाठः । ७ समागत इति गो. पाठः । ८ अत्रा...

तस्य तेन प्रतिज्ञातं सीतायाः परिमार्गणम् । सुग्रीवस्यापि रामेण हरिराज्यं [1]निवेदितुम् ॥ ९ ॥
ततस्तेन मृधे हत्वा राजपुत्रेण वालिनम् । सुग्रीवः स्थापितो राज्ये [2]हर्यृक्षाणां गणेश्वरः ॥ १० ॥
त्वया विज्ञातपूर्वश्च वाली वानरपुङ्गवः । स[3] तेन निहतः संख्ये शरेणैकेन वानरः ॥ ११ ॥
स सीतामार्गणे व्यग्रः सुग्रीवः सत्यसंगरः । हरीन्संप्रेषयामास दिशः सर्वा हरीश्वरः ॥ १२ ॥
तां हरीणां सहस्राणि शतानि नियुतानि च । दिक्षु सर्वासु मार्गन्ते ह्यधश्चोपरि चाम्बरे ॥ १३ ॥
वैनतेयसमाः केचित्केचित्तत्रानिलोपमाः । असङ्गगतयः शीघ्रा हरिवीरा महाबलाः ॥ १४ ॥
अहं तु हनुमान्नाम मारुतस्यौरसः सुतः । सीतायास्तु कृते तूर्णं शतयोजनमायतम् ॥ १५ ॥
समुद्रं लङ्घयित्वैवं[4] त्वां दिदृक्षुरिहागतः । भ्रमता च मया दृष्टा गृहे ते जनकात्मजा ॥ १६ ॥
तद्भवान्दृष्टधर्मार्थस्तपःकृतपरिग्रहः । परदारान्महाप्राज्ञ नोपरोद्धुं त्वमर्हसि ॥ १७ ॥
नहि धर्मविरुद्धेषु बह्वपायेषु कर्मसु । मूलघातिषु सज्जन्ते बुद्धिमन्तो भवद्विधाः ॥ १८ ॥

---

९-१०] ति० टी०—निवेदितुं प्रतिज्ञातमित्यनुकर्षः ॥९॥१०॥

रा० टी०—तस्येति । तस्य रामस्य समीपे सीतायाः परिमार्गणे तेन सुग्रीवेण प्रतिज्ञातं रामेणापि सुग्रीवस्य हरिराज्यं निवेदितुं प्रतिज्ञातम् ॥ ९ ॥

रा० टी०—तत इति । ततः प्रतिज्ञाकरणानन्तरं तेन रामेण वालिनं हत्वा हर्यृक्षाणां गणेश्वरः तद्योग्यः सुग्रीवः राज्ये स्थापितः ॥ १० ॥

११-१५ ] ति० टी०—त्वया विज्ञातपूर्वो वालीति रावणं प्रति मर्मोक्तिस्तेन रामबलातिशयबोधनम् ॥ ११-१५ ॥

१६ ] ति० टी०—'त्वां दिदृक्षुरिहागतः' इति पाठः । त्वां सुग्रीवभ्रातरं रावणम् । तस्मिन्दृष्टे सर्वलोकवृत्तान्तज्ञः स सीतागतिं वक्ष्यतीति सुग्रीवेणोक्तत्वात्त्वां दिदृक्षुरिहागतः । दैवात्पङ्गूपरि गङ्गापातवत्तव गृहे भ्रमता मया जानकी दृष्टा॥१६॥

रा० टी०—त्वयेति । त्वया विज्ञातपूर्वः पौर्वकालिकत्वनिष्ठविज्ञानविषयीभूतः यो वाली सः एकेन शरेण निहतः ॥ ११ ॥

रा० टी०—स इति । सः कृतोपकारः सुग्रीवः सीतामार्गणे व्यग्रः सन् हरीन् संप्रेषयामास ॥ १२ ॥

रा० टी०—तामिति । हरीणां सहस्रादीनि मार्गन्ते ॥१३॥

रा० टी०—वैनतेय इति । तत्र तेषु वानरेषु केचित् वैनतेयसमाः केचित् असङ्गगतयः आलम्बरहितगतिविशिष्टाः आकाशगामिन इत्यर्थः ॥ १४ ॥

रा० टी०—अहमिति । मारुतस्य औरसः मुख्यः सुतः हनुमान्नामाहं तु सीतायाः कृते सीतार्थं शतयोजनमायतं समुद्रं लङ्घयित्वा तां सीतां दिदृक्षुः सन् इह लङ्कायामागतः अत एव भ्रमता मया ते गृहे जनकात्मजा दृष्टा । श्लोकद्वयमेकान्वयि ॥ १५ ॥ १६ ॥

गो० टी०—स इति । सत्यसङ्गरः सत्यप्रतिज्ञः 'कर्बुरे च प्रतिज्ञाजिसंविदापत्सु सङ्गरः' इत्यमरः ॥ १२ ॥

गो० टी०—तामिति । अधश्चोपरि चाम्बरे पाताले भूमौ आकाशे चेत्यर्थः ॥ १३ ॥

गो० टी०—वैनतेयेति । असङ्गगतय इति शीघ्रत्वे हेतुः ॥ १४ ॥

गो० टी०—अहं त्विति । औरसः सुतः क्षेत्रजत्वव्यावृत्तये औरसपदम् । सीतायास्तु कृते सीतालाभाय तां दिदृक्षुरिति योज्यम् ॥ १५ ॥ १६ ॥

१७ ] ति० टी०—अतः परं यद्वक्तव्यं मित्रपक्षस्य तद्वदामीत्याह—तद्भवानिति । दृष्टधर्मार्थौ धर्मार्थतत्त्वसाक्षात्कारवान् । तपःकृतपरिग्रहस्तपोबलजातधनधान्यादिपरिग्रहः । यत एतादृशस्त्वम्, अतः परदारानुपरोद्धुं नार्हसि । दृष्टधर्मार्थतत्त्वत्वादेव महाप्राज्ञत्वम् ॥ १७ ॥

रा० टी०—तदिति । दृष्टौ साक्षात्कृतौ धर्मार्थौ येन सः तपसा कृतः परिग्रहः धनादिसंग्रहो येन सः अत एव भवान् पूज्यस्त्वं परदारान् उपरोद्धुं नार्हसि ॥ १७ ॥

गो० टी०—एवं सुग्रीवसंबन्धं प्रतिपाद्य सुग्रीवसंदेशं वदति—तद्भवानित्यादिना । दृष्टधर्मार्थः शास्त्रेण विदितधर्मार्थस्वरूप इत्यर्थः । तपःकृतपरिग्रहः तपसि विषये कृतस्वीकारः यद्वा तपसा स्वयं कृतपरिग्रहः । स्वारसिकतपस्क इति यावत् । हेतुगर्भे विशेषणे ॥ १७ ॥

१८] ति० टी०—नन्वनेन मम का हानिस्तत्राह—नहीति । धर्मविरुद्धत्वादेव बह्वपायेषु बह्वनर्थकारणेषु । ननु सर्वापायप्रतीकारसमर्थस्य किमनया बिभीषिकयेत्यत आह—मूलघातिषु । समूलं नष्टस्य कथं प्रतीकारसामर्थ्यमिति भावः ॥ १८ ॥

रा० टी०—नहीति । धर्मात् वेदबोधितकर्मणः विरुद्धेषु अत एव बह्वपायेषु विपुलापायसंपादकेषु अत एव मूलघातिषु कर्मसु भवद्विधाः बुद्धिमन्तो न सज्जन्ते ॥ १८ ॥

गो० टी०—न हीति । धर्मविरुद्धेषु धर्मशास्त्रविरुद्धेषु । धर्म-

---

१ निवेदितमिति गो. पाठः । २ हर्यृक्षाणामिति ... पाठः । ३ रामेणेति गो. पाठः । ४ लङ्घयित्वेति ... पाठः ।

कश्च लक्ष्मणमुक्तानां रामकोपानुवर्तिनाम् । शराणामग्रतः स्थातुं शक्तो देवासुरेष्वपि ॥ १९ ॥
न चापि त्रिषु लोकेषु राजन्विद्येत कश्चन । राघवस्य व्यलीकं यः कृत्वा सुखमवाप्नुयात् ॥ २० ॥
तत्त्रिकालहितं वाक्यं धर्म्यमर्थानुयायि[1] च । मन्यस्व नरशार्दूले[2] जानकी प्रतिदीयताम् ॥ २१ ॥
दृष्टा हीयं मया देवी लब्धं यदिह दुर्लभम् । उत्तरं कर्म यच्छेषं निमित्तं तत्र[3] राघवः ॥ २२ ॥
लक्षितेयं मया सीता तथा शोकपरायणा । गृहे यां नाभिजानासि पञ्चास्यामिव पन्नगीम् ॥ २३ ॥
नेयं जरयितुं शक्या सा सुरैरमरैरपि । विषसंसृष्टमत्यर्थं भुक्तमन्नमिवौजसा ॥ २४ ॥
तपःसंतापलब्धस्ते सोऽयं धर्मपरिग्रहः । न स नाशयितुं न्याय्य[4] आत्मप्राणपरिग्रहः ॥ २५ ॥

---

विरुद्धत्वेऽपि यत्सौख्यावहं तत्कार्यमित्यत्राह–बह्वपायेष्विति । बहुहानिकरेष्वित्यर्थः । अपायाः कथंचित्परिह्रियन्त इत्याशङ्क्याह–मूलघातिष्विति । स्वविनाशकरेष्वित्यर्थः । कर्मसु परदारापहारेषु न सज्जन्ते नोद्युक्ता भवन्ति ॥ १८ ॥

१९ ] ति० टी०–मूलघातित्वमेव प्रपञ्चयति–कश्चेति १९

रा० टी०–ननूक्तविरुद्धकर्मजनितपापं प्रायश्चित्तेनापनेताऽस्मीति तद्विरुद्धकर्माचरणे का नः क्षतिरित्यत आह–क इति। रामकोपानुवर्तिनां रामक्रोधाधीनानां लक्ष्मणमुक्तानां शराणामग्रतः स्थातुं देवासुरेष्वपि कः शक्तः न कोऽपीत्यर्थः ॥ १९ ॥

गो० टी०–कश्चेति । रामकोपानुवर्तिनां रामकोपानुसारेण निर्गतानामित्यर्थः ॥ १९ ॥

२०] ति० टी०–विद्येत विद्यते । व्यलीकमपराधम् ॥२०॥

रा० टी०–नेति । राघवस्य व्यलीकमपराधं कृत्वा यः सुखमवाप्नुयात् सः त्रिषु लोकेषु कश्चन न विद्येत विद्यते । एतेन प्रायश्चित्तेन देहान्तरभोग्यपापनिवृत्तावपि रामप्रसादनमन्तरा तव कल्याणं नैव भविष्यतीति सूचितम् ॥ २० ॥

गो० टी०–न चापीति । व्यलीकम् अप्रियम् ' व्यलीकं त्वप्रियेऽनृते ' इत्यमरः ॥ २० ॥

२१ ] ति० टी०–तत्तस्मात्त्रिकालहितम्, सीतादानेन पूर्वापराधनाशाद्वर्तमानैश्वर्याविरोधाद्भाविशुभहेतुत्वाच्च त्रिकालहितत्वम् । अर्थानुयायिनीति शास्त्रानुगतम् वाक्यं मयोच्यमानम् । 'नरशार्दूल' इति पाङ्कः पाठ इति कतकः । पुरुषश्रेष्ठ इत्यर्थः । तदेव वाक्यमाह–जानकी प्रतिदीयतामिति ॥ २१ ॥

रा० टी०–तदिति । नरशार्दूल हे पुरुषश्रेष्ठ ! तत् उक्तहेतोः त्रिकालहितं सर्वकाले हितकारकं धर्म्यं धर्मादनपेतम् अर्थानुयायि अर्थप्रापकं वाक्यं मन्यस्व अत एव जानकी प्रदीयताम् । ' नरदेवाय ' इति तीर्थपाठः ॥ २१ ॥

गो० टी०–तदिति । तत्तस्मात् अधर्मावहत्वात् रामापराधस्य परिहर्तव्यत्वाच्च । त्रिकालहितं भूतभविष्यद्वर्तमानकालहितम् । दारुणाधर्मस्य स्वपूर्वपुरुषविनाशकत्वेन तत्परिहारस्य भूतकालहितत्वं मन्यस्व । मत्वा प्रतिदीयतामिति योज्यम् ॥ २१ ॥

२२ ] ति० टी०–अत्र सीता नास्तीत्यपह्नवस्त्वशक्य इत्याह—दृष्टा हीति । यतस्त्वद्गृहे मया दृष्टा, अतोऽपलापोऽशक्य इति भावः । किं च यद्वानरकोटिभिरपि दुर्लभं सीतादर्शनं तन्मया लब्धम्, अतः शेषं शिष्टं यदुत्तरं कर्म सीतानयनरूपं तत्र तत्साधने राघवः स एव निमित्तं कारणम् । मत्कृत्यं त्वन्विष्य निवेदनमात्रमिति भावः ॥ २२ ॥

रा० टी०–दृष्टेति । देवी इयं सीता मया दृष्टा अत एव दुर्लभं दूतैः दुखेन लभ्यं तत् यशः इह अस्मिन् काले मया लब्धं शेषमवशिष्टं यदुत्तरमुत्तरकालकं सीतानयनं तत्र राघव एव निमित्तं राघव एव नेष्यतीत्यर्थः ॥ २२ ॥

गो०टी०–जानकीहरणे किं मानं तत्राह—दृष्टा हीति । यत्सीतादर्शनं दुर्लभम् इतरवानरालभ्यं तल्लब्धम् । तर्हि सा नीयतामित्यत्राह—उत्तरमिति । सीतादर्शनोत्तरं यच्छेषं कर्म सीतानयनं तत्र राघवो निमित्तम् आज्ञप्तस्यैव मया कर्तव्यत्वादिति भावः ॥ २२ ॥

२३ ] ति० टी०–पुना रावणहितमाह—लक्षितेति । पन्नगीमिव स्वनाशिकां यां न जानासि सा मया शोकपरायणा लक्षिता । तदीयशोकाग्निनैव पन्नगीविषाग्निनेव त्वन्नगरं दग्धं भविष्यतीति भावः ॥ २३ ॥

रा० टी०–तदेव भङ्ग्यन्तरेणाह–लक्षितेति । गृहे स्थितां पन्नगीमिव यां त्वं नाभिजानासि यत्प्रभावं न वेत्सि सा सीता मया लक्षिता ॥ २३ ॥

गो० टी०–दृष्टयाऽपि मद्वशंवदया सीतया रामः किं करिष्यतीत्याशङ्क्याह—लक्षितेयमिति । तथेति वाचामगोचरत्वोक्तिः । नेयं तव वश्या प्रत्युत पन्नगीव तव प्राणहारिणीति भावः ॥ २३ ॥

२४ ] ति० टी०–ओजसाऽऽहारशक्तिबलेन ॥ २४ ॥

रा० टी०–नेति । अत्यर्थमत्यन्तं विषसंसृष्टम् ओजसा भुक्तमन्नमिव अमरैरपि इयं सीता जरयितुं गोपयितुमित्यर्थः, न शक्या ॥ २४ ॥

गो० टी०–नेयमिति । ओजसा अमरपक्षे प्रतापेन अन्नपक्षे जाठराग्निना ॥ २४ ॥

२५ ] ति० टी०–तपःसंतापेन तपःकरणेन यो लब्धो

---

१ ऽनुबन्धीति गो. पाठः । २ नरदेवायेति गो. नरशार्दूलेति रा. पाठः । ३ य इति गो. पाठः । ४ न्याय्यमिति गो. पाठः ।

अवध्यतां तपोभिर्यां भवान्समनुपश्यति । आत्मनः सासुरैर्देवैर्हेतुस्तत्राप्ययं महान् ॥ २६ ॥
सुग्रीवो न च[1] देवोऽयं[2] न यक्षो न च राक्षसः । मानुषो[3] राघवो राजन्सुग्रीवश्च हरीश्वरः ॥
तस्मात्प्राणपरित्राणं कथं राजन्करिष्यसि ॥ २७ ॥
न तु धर्मोपसंहारमधर्मफलसंहितम्[4] । तदेव फलमन्वेति धर्मश्चाधर्मनाशनः ॥ २८ ॥

---

धर्मपरिग्रहो धर्मसाध्यः परिग्रह ऐश्वर्यम्, आत्मप्राणपरिग्रहश्चात्मप्राणानां चिरकालं परिग्रह आयुर्वृद्धिश्च स परदारपरिग्रहरूपपरमाधर्मेण नाशयितुं न न्याय्यः ॥ २५ ॥

रा० टी०–तप इति । तपःसंतापेन तपसः करणेन लब्धः यः कर्मपरिग्रहः धर्मसाधकः महैश्वर्यमित्यर्थः, सः यश्च आत्मप्राणपरिग्रहः स्वप्राणस्य परिग्रहः चिरजीवित्वमित्यर्थः स च नाशयितुं विध्वंसयितुं न न्याय्यः । एतेन सीतासमर्पणमन्तरा ते सर्वं विनङ्क्ष्यतीति ध्वनितम् ॥ २५ ॥

गो० टी०–तपःकृच्छ्रलब्धमिष्टं महज्जीवनं वृथा मा नाशयेत्याह—तप इति । तपस्संतापः तपश्चर्या । ओदनपाकं पचतीतिवन्निर्देशः तेन लब्धः । परिगृह्यत इति परिग्रहः फलं धर्मपरिग्रहः धर्मफलम् । तादृशो योऽयमात्मप्राणपरिग्रहः आत्मनः प्राणानां च परिग्रहः स्वीकारः जीवनमिति यावत् । स नाशयितुं न न्याय्यं न युक्तम् । अव्ययमेतत् । तपःक्लेशलब्धं तद्व्यतिरिक्तधर्मफलभूतं च यज्जीवनमायुः तन्न विनाशयेत्यर्थः । चकाराभावादित्थमेव योजना ॥ २५ ॥

२६ ] ति० टी०–अपि च यां देवाद्यवध्यतां मन्यसे तत्रापि तपोजन्यसुकृतमेव कारणम्, अतो धर्महानिर्न कार्येति वदति—अवध्यतामिति । तत्राप्ययं महानयमेव तपोमयधर्मस्कन्ध एव हेतुरित्यर्थः ॥ २६ ॥

रा० टी०–ननु मम वरहेतुकावध्यत्वात्कथं विघात इत्यत आह–अवध्यतामिति । तपोभिः तपोहेतुकवरप्राप्त्या सुरादिभिः आत्मनो वध्यतां यां भवान् समनुपश्यति तत्र अयं महान् हेतुः कारणम् ॥ २६ ॥

गो० टी०–सर्वावध्यस्येह मे कोऽयमायुर्विनाशक इत्याशङ्क्य परिहरति—अवध्यतामिति । तपोभिरार्जितां सासुरैर्देवैर्याम् आत्मनोऽवध्यतां भवान् समनुपश्यति । तत्रापि अवध्यतायां सत्यामपि अयं वक्ष्यमाणः हेतुः भवद्वधहेतुरस्ति । महान् अपरिहार्यः ॥ २६ ॥

२७ ] ति० टी०–किं च देवाद्यवध्यस्यापि प्राणत्राणं दुष्करमित्याह—सुग्रीव इति । यस्माद्वरग्रहणवेलायां त्वच्छङ्कितहन्तृभ्योऽन्य एवायं रामश्च अतस्तस्मात्सुग्रीवात्ते प्राणत्राणे सामर्थ्यं नास्तीति भावः ॥ २७ ॥

रा० टी०–हेतुमाह–सुग्रीव इति । अयं सुग्रीवः राघवश्च देवादिर्न किं तु सुग्रीवो हरीश्वरः राघवश्च मानुषः नित्यमनुष्यः एतेन आभ्यां तवाभयदानं नास्तीति सूचितं तस्मात् प्राणपरित्राणं कथं करिष्यसि ॥ २७ ॥

गो० टी०–तमेव हेतुमाह—सुग्रीव इति । न च राक्षस इति पाठः सम्यक् । न च मानुष इति पाठे प्रतिषेधप्रसक्तिरपि नास्तीत्युच्यते । तृणभूता हि मे सर्वे प्राणिनो मानुपादय इत्युत्तरश्रीरामायणे मनुष्यादिभिरवध्यत्वस्याप्रार्थितत्वात् । न च तिर्यञ्च इति न प्रसज्य च प्रतिषिध्यत इति भावः । तस्मात्सुग्रीवात् ॥ २७ ॥

२८ ] ति० टी०–ननु तपोबलान्मे सर्वतो जयो भविष्यतीत्यत आह—न त्विति । यः पुमानधर्मफलसंहितबलवत्तया फलोन्मुखाधर्मसंबद्धस्तं पुरुषं धर्मोपसंहारमपि धर्मोपसंग्रहवन्तमपि न त्वन्वेति, धर्मफलमिति शेषः । किं तु तदेव फलं फलोन्मुखाधर्ममेवान्वेति । ननु धर्मबलादधर्मनाशो भविष्यतीत्यत्राह—धर्मश्चेति । उत्कटोऽधर्मोत्तरभावी धर्मोऽधर्मस्य नाशनः । चादुत्कटाधर्मो धर्मनाशकः । एवं चास्याधर्मस्य त्वत्कृतसकलधर्मापेक्षयोत्कटत्वादुत्तरकालत्वाचायमेव त्वया प्राक्संचितस्य सकलधर्मस्य नाशक इति भावः । केचित्तु 'धर्मोपसंहारमधर्मफलसंहितम्' इति पाठः । धर्मोपसंहारं धर्ममुपसंहियतेऽनेनेति धर्मफलं सुखं तदधर्मफलसंहितं न संभवत्यधर्मफलेन दुःखेन सहानुभवं न भवति, तत्तस्मादेव फलमन्वेति धर्मो धर्मफलं सुखमेवान्वेति, एवमधर्मो दुःखं दुःखरूपं फलमेवान्वेति । अग्रे 'धर्मो नाधर्मनाशनः' इति पाठः । पूर्वकृतो धर्मोऽधर्मस्येदानीं कृतस्य न नाशनः । चादधर्मोऽपि धर्मनाशनो नेत्यर्थ इति वदन्ति । तत्रार्थसामञ्जस्यं व्युत्पन्नैर्विभाव्यम् ॥ २८ ॥

रा० टी०–ननु तपोबलात् मम विध्वंसो नैव भविष्यतीत्यत आह–न त्विति । यः अधर्मफलसंहितः अधर्मसिद्धिं प्राप्तः अधर्मकारीत्यर्थः, तं धर्मोपसंहारं धर्मवन्तमपि नान्वेति प्राप्नोति धर्मफलमिति शेषः, किंतु तदधर्मफलमेव अन्वेति । ननु सर्वेषां किञ्चिदधर्मवत्त्वसत्त्वात् धर्मफलप्राप्तिः केषांचिदपि न स्यादित्यत आह–धर्मो विपुलसत्कर्मानुष्ठानम् अधर्मनाशनः अल्पाधर्मविध्वंसकः एतेन तवाधर्मस्यैवाधिक्यात् धर्मफलं नैव भविष्यतीति सूचितम् ॥ २८ ॥

गो० टी०–ननु किमनेनोपदेशेन कृतानि मया पापानि तैश्चावश्यं फलप्रदैर्भवितव्यमित्याशङ्क्याह—न त्विति । तुशब्द उक्तशङ्काव्यावर्तकः । धर्मः उपसंहियतेऽनेनेति धर्मोपसंहारं धर्मफलम् । फलेन धर्मस्योपसंहियमाणत्वात् । क्लीबत्वमार्षम् । तत् अधर्मफलसंहितं न भवति । कुत इत्यत्राह—तदेव फलमन्वेतीति । धर्मफलमेवानुवर्तते । नन्वधर्मे च विद्यमाने कथं

---

१ हीति गो. पाठः । २ नासुर इति गो. पाठः । ३ न दानवो न गन्धर्वो न यक्षो न च पन्नग इति गो. पाठः । ४ संहित इति गो. पाठः ।

प्राप्तं धर्मफलं तावद्भवता नात्र संशयः । फलमस्याप्यधर्मस्य क्षिप्रमेव प्रपत्स्यसे ॥ २९ ॥
जनस्थानवधं बुद्ध्वा वालिनश्च वधं तथा । रामसुग्रीवसख्यं च बुद्ध्यस्व हितमात्मनः ॥ ३० ॥
कामं खल्वहमप्येकः सवाजिरथकुञ्जराम् । लङ्कां नाशयितुं शक्तस्तस्यैष तु न निश्चयः ॥ ३१ ॥
रामेण हि प्रतिज्ञातं हर्यृक्षगणसंनिधौ । उत्सादनममित्राणां सीता यैस्तु प्रधर्षिता ॥ ३२ ॥
अपकुर्वन्हि रामस्य साक्षादपि पुरन्दरः । न सुखं प्राप्नुयादन्यः किं पुनस्त्वद्विधो जनः ॥ ३३ ॥
यां सीतेत्यभिजानासि येयं तिष्ठति ते गृहे । कालरात्रीति तां विद्धि सर्वलङ्काविनाशिनीम् ॥ ३४ ॥
तदलं कालपाशेन सीताविग्रहरूपिणा । स्वयं स्कन्धावसक्तेन [३]क्षेममात्मनि चिन्त्यताम् ॥ ३५ ॥

---

तत्फलाननुवृत्तिस्तत्राह—धर्मश्चाधर्मनाशन इति । च उक्तशङ्कानिवृत्त्यर्थः । विरोधिनि धर्मे जाग्रति कथमधर्मवार्तापीत्यर्थः "धर्मेण पापमपनुदति" इति श्रुतेः । यद्वा व्यत्ययो वा किं न स्यात्तत्राह—धर्मश्चेति चोऽवधारणे धर्म एवाधर्मनाशनः तथा श्रुतेः न त्वधर्मः प्रमाणाभावादिति भावः ॥ २८ ॥

२९ ] ति० टी०—ननु किं मे धर्मो व्यर्थ एव नेत्याह—प्राप्तमिति । तावत्प्रथमम् । इतः पूर्वमिति यावत् । अस्य परदारहरणरूपस्य । क्षिप्रमेव प्रपत्स्यसे 'अत्युत्कटैः पुण्यपापैः' इति न्यायादिति भावः ॥ २९ ॥

रा० टी०—ननु मत्तपसो वैयर्थ्यं स्यादित्यत आह—प्राप्तमिति । तावत् इतः पूर्वमेव धर्मफलं प्राप्तम् अतः अस्यापहरणरूपस्य अधर्मस्य फलं क्षिप्रमेव प्रपत्स्यसे ॥ २९ ॥

गो० टी०—ननु यदि धर्मः अधर्मनाशनः तर्हि प्राथमिक एव धर्मः आधुनिकानधर्मान्निवर्तयेदित्याशङ्क्याह—प्राप्तमिति । तावच्छब्दः कार्त्स्न्यवाची । कृत्स्नं धर्मफलम् । फलमस्येति । तथा च क्षिप्रं धर्ममाचर अन्यथा सद्यस्ते विनाशो भविष्यतीति भावः । अत्र कर्तव्यत्वेन विधीयमानो धर्मः सीताप्रदानपूर्वकरामविषयशरणागतिरेव । शरस्याशौर्यप्रदृष्ट्या धर्मफलं सर्वं क्षीणमिति हनुमतावगतमिति मन्तव्यम् ॥ २९ ॥

३० ] ति० टी०—अतः स्वहितं चिन्तयेत्याह—जनस्थानेति । सख्यं च बुद्ध्वाऽऽत्मनो हितं बुद्ध्यस्वेत्यन्वयः॥३०॥

रा० टी०—जनस्थानेति । जनस्थानवधादि बुद्ध्वा संस्मृत्य रामसुग्रीवसख्यमेव हितं बुध्यस्व ॥ ३० ॥

गो० टी०—मा भूद्धर्मापेक्षा कार्योपस्थितिरवेक्ष्यतामित्याह—जनस्थानेति । रामसुग्रीवसख्यं चेति परोक्षनिर्देशस्य गतिः पूर्वमुक्ता ॥ ३० ॥

३१ ] ति० टी०—नन्वेवं कटुवादिनस्तव को रक्षकः इति चेत्तत्राह—काममिति । यथेष्टमित्यर्थः । तर्हि कुतस्तन्नाशं न करोपीत्यत्राह—तस्य यस्याहं दूतस्तस्य रामस्यैष मत्कर्तृकलङ्कानाशविषयो निश्चयो न । स्वाम्याज्ञां विना तदनुष्ठानमशक्यमिति भावः ॥ ३१ ॥

रा० टी०—काममिति । लङ्कां नाशयितुमहमेव शक्तः । ननु कुतो न नाशयसीत्यत आह—तस्य रामस्य एषः मत्कर्तृकतादृशलङ्काविध्वंसविषयकः निश्चयो न ॥ ३१ ॥

गो० टी०—काममिति । कामम् अत्यन्तम् अहं सुग्रीवः । तन्नाशनम् तस्य रामस्य । निश्चयः निश्चयविषयः॥ ३१ ॥

३२ ] ति० टी०—तदीयनिश्चयाभावं स्पष्टयति—रामेणेति । स्वामिना स्वकर्तव्यत्वेन प्रतिज्ञातस्यार्थस्य सेवकेनानुष्ठानमयुक्तं कर्तुमिति भावः ॥ ३२ ॥

रा० टी०—रामेणेति । यैः सीता प्रधर्षिता तेषाममित्राणामुत्सादनं रामेण प्रतिज्ञातम् ॥ ३२ ॥

गो० टी०—कथमित्यत्राह—रामेणेति । हर्यृक्षगणसन्निधौ वृद्धसभायां प्रतिज्ञातमनतिक्रमणीयमिति भावः ॥३२ ॥ ३३ ॥

३३ ] ति० टी०—उक्तमेवार्थं दार्ढ्याय पुनरप्याह—अपकुर्वन्निति ॥ ३३ ॥

रा० टी०—अपेति । रामस्य अपकुर्वन् पुरन्दरोऽपि सुखं न प्राप्नुयात् ॥ ३३ ॥

३४ ] ति० टी०—कालरात्री महाप्रलयकर्त्री भगवतः शक्तिः ॥ ३४ ॥

रा० टी०—यामिति । यां सीतेत्येव अभिजानासि सा कालरात्री राक्षसविध्वंससमयनियामिका इति हेतोः तां सर्वलङ्काविनाशिनीं विद्धि जानीहि ॥ ३४ ॥

गो० टी०—यामिति । कालरात्रीति काचिच्छक्तिरिति वदन्ति । 'समी च कालरात्रिश्च भैरवी गणनायिका' इत्यमरशेषः ॥ ३४ ॥

३५ ] ति० टी०—विग्रहः शरीरम् । स्कन्धावसक्तेन स्कन्धसंबद्धकरणेन । आत्मन्यात्मत्राणे ॥ ३५ ॥

रा० टी०—तदिति । स्वयं स्कन्धावसक्तेन स्कन्धयोर्धृतेन सीताविग्रहरूपिणा कालपाशेन अलं न म्रियतामित्यर्थः । तत्र हेतुः—आत्मनि आत्मार्थं क्षेमं चिन्त्यताम् ॥ ३५ ॥

गो० टी०—तदलमिति । कालपाशेन यमपाशेन । अतः सीतां रामाय देहीति हृदयम् ॥ ३५ ॥

---



१ बुद्ध्वा वालीति गो. पाठः । २ वशे इति गो. पाठः । ३ क्षममिति गो. पाठः ।

सीतायास्तेजसा दग्धां रामकोपप्रदीपिताम् । दह्यमानामिमां पश्य पुरीं साट्टप्रतोलिकाम् ॥ ३६ ॥
स्वानि मित्राणि मन्त्रींश्च ज्ञातीन्भ्रातॄन्सुतान्हितान् । भोगान्दारांश्च लङ्कां च मा विनाशमुपानय ॥ ३७ ॥
सत्यं राक्षसराजेन्द्र शृणुष्व वचनं मम । रामदासस्य दूतस्य वानरस्य विशेषतः ॥ ३८ ॥
सर्वाँल्लोकान्सुसंहृत्य सभूतान्सचराचरान् । पुनरेव तथा स्रष्टुं शक्तो रामो महायशाः ॥ ३९ ॥
देवासुरनरेन्द्रेषु यक्षरक्षोरगेषु च । विद्याधरेषु नागेषु गन्धर्वेषु मृगेषु च ॥ ४० ॥
सिद्धेषु किंनरेन्द्रेषु पतत्रिषु च सर्वतः । सर्वत्र सर्वभूतेषु सर्वकालेषु नास्ति सः ॥ ४१ ॥
यो रामं प्रति युध्येत विष्णुतुल्यपराक्रमम् । सर्वलोकेश्वरस्येह कृत्वा विप्रियमीदृशम् ॥
रामस्य राजसिंहस्य दुर्लभं तव जीवितम् ॥ ४२ ॥

देवाश्च दैत्याश्च निशाचरेन्द्र गन्धर्वविद्याधरनागयक्षाः ।
रामस्य लोकत्रयनायकस्य स्थातुं न शक्ताः समरेषु सर्वे ॥ ४३ ॥
ब्रह्मा स्वयंभूश्चतुराननो वा रुद्रस्त्रिनेत्रस्त्रिपुरान्तको वा
इन्द्रो महेन्द्रः सुरनायको वा स्थातुं न शक्ता युधि राघवस्य ॥ ४४ ॥
स सौष्ठवोपेतमदीनवादिनः कपेर्निशम्याप्रतिमोऽप्रियं वचः ।
दशाननः कोपविवृत्तलोचनः समादिशत्तस्य वधं महाकपेः ॥ ४५ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये सुन्दरकाण्ड एकपञ्चाशः सर्गः ॥ ५१ ॥

---

३६–३७ ] ति० टी०–दह्यमानां वर्तमानसमीपे लट् । प्रतोलिका वीथिः ॥ ३६ ॥ ३७ ॥

रा० टी०–सीताया इति । दग्धां दग्धप्रायां रामकोपेन प्रदीपिताम् अत एव दह्यमानां पुरीं लङ्कां पश्य ॥ ३६ ॥

गो० टी०–सीताया इति । अट्टः अट्टालः प्रतोलिका वीथिका ॥ ३६ ॥

रा० टी०–स्वानीति । मित्रादीनि विनाशं मा उपानय प्रापय ॥ ३७ ॥

गो० टी०–स्वानीति । मन्त्रीन् मन्त्रिणः इकारान्तत्वमार्षम् ॥ ३७ ॥

३८] ति० टी०–विशेषतः निष्कृप्योच्यमानं वचनमित्यर्थः। रामदासस्येत्यादिविशेषणत्रयेण राममहिमवेत्तृत्वं स्वस्य परोक्तवाक्यानुवादपूर्वं हितोपदेशाधिकारं नररक्षोतिरिक्तजात्यन्तरत्वेनापक्षपाततो न्याय्यवक्तृत्वं च सूचितम् ॥ ३८ ॥

रा० टी०–सत्यमिति । रामदासस्य मम वचनं विशेषतः शृणुष्व ॥ ३८ ॥

गो० टी०–सत्यमिति । रामदासस्येत्यनेन रामसामर्थ्यपरिज्ञानमुक्तम् दूतस्येत्यनेन हितोपदेशाधिकारः वानरस्येति माध्यस्थ्यम् ॥ ३८ ॥

३९–४० ] ति० टी०–सभूतान्सर्वजातीयप्राणिसहितान् अनेन जगत्स्थित्युत्पत्तिसंहारकर्तृत्वं बोधितम्॥३९॥४०॥

रा० टी०–तद्वचनमेवाह–सर्वानिति । सुसंहृत्य रुद्रादिद्वारा विनाश्य स्रष्टुं कर्तुं शक्तः समर्थः ॥ ३९ ॥

रा० टी०–देवेति । विष्णुः तुल्यपराक्रमो यस्य तं रामं यः प्रतियुध्येत स नास्ति । सार्धश्लोकद्वयमेकान्वयि॥४०॥४१॥

गो० टी०–सर्वानिति । लोकान् भूरादीन् सभूतान् पृथिव्यप्तेजोवाय्वाकाशरूपपञ्चमहाभूतयुक्तान् सचराचरान् चतुर्मुखद्वारा सृष्टजङ्गमाजङ्गमयुक्तान् । संहृत्य प्रलयावसाने रुद्रद्वारा स्वयं च संहृत्य पुनः कल्पादौ तथैव "धाता यथापूर्वमकल्पयत्" इति श्रुत्युक्तरीत्या स्रष्टुं समर्थः । तत्र प्रमाणमाह—महायशा इति । "न तस्येशे कश्चन तस्य नाम महद्यशः" इति हि श्रुतिः । श्रुतिस्मृतिषु तथा प्रसिद्ध इत्यर्थः॥३९–४४॥

४१–४२ ति० टी०–सर्वत्र देशे ॥ ४१ ॥ ४२ ॥

रा० टी०–सर्वेति । रामस्य विप्रियं कृत्वा तव जीवितं दुर्लभम् ॥ ४२ ॥

४३ ] ति० टी०–उक्तमेवार्थं दार्ढ्याय पुनराह—देवाश्चेति ॥ ४३ ॥

रा० टी०–देवा इति । देवादयः रामस्य समरे स्थातुं न शक्ताः ॥ ४३ ॥

४४–४५ ] ति० टी०–रामद्रुहो देवताभिरपि न त्राणमित्याह—ब्रह्मेत्यादि । ब्रह्मा स्वयंभूरित्यनेन हिरण्यगर्भः सर्वादिरुक्तः, चतुराननस्ततः प्राप्तस्रष्टृत्वाधिकारः त्रिनेत्रस्त्रिपुरा-

---

१ प्रपीडितामिति गो. पाठः । २ गणेष्विति गो. पाठः । ३ सर्वेषु इति गो. पाठः । ४ उरगेष्विति गो. पाठः । ५ एवमिति गो. पाठः । ६ उत्तममिति गो. पाठः । ७ त्रातुमिति गो. पाठः । ८ राघवध्यमिति गो. पाठः ।

# द्विपञ्चाशः सर्गः ।

हनुमतः परुषोक्त्या क्रुद्धो रावणस्तद्वधमाज्ञापयति । दूतवधस्य शास्त्रनिषिद्धत्वं दर्शयन्विभीषणस्तं प्रतिषेधति ।

**स तस्य वचनं श्रुत्वा वानरस्य महात्मनः । आज्ञापयद्वधं तस्य रावणः क्रोधमूर्च्छितः ॥ १ ॥**
**वधे तस्य समाज्ञप्ते रावणेन दुरात्मना । निवेदितवतो दौत्यं नानुमेने विभीषणः ॥ २ ॥**

न्तको रुद्रो वेत्यनेन संहाराधिकारी सुरनायको महेन्द्रो महैश्वर्यवानिन्द्रः । उपेन्द्रो विष्णुः पालनाधिकारी एवं त्रिमूर्तिभिरपि रक्षा न सिद्ध्यति रामस्यैव त्रिमूर्तित्वात् ॥४४॥४५॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये सुन्दरकाण्डे एकपञ्चाशः सर्गः ॥ ५१ ॥

**रा० टी०—ब्रह्मेति** । ब्रह्मादयः स्थातुं न शक्ताः ॥ ४४ ॥

**रा० टी०—स इति** । अप्रतिमः सादृश्यरहितः स रावणः कपेर्वचः निशम्य कोपविवृत्तलोचनः सन् महाकपेर्वधं समादिशत् ॥ ४५ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ सुन्दरकाण्डे एकाधिकपञ्चाशत्तमः सर्गः ॥ ५१ ॥

**गो० टी०—मा भूवन् शक्ताः सामान्यदेवाः ईश्वराः शक्ताः स्युरित्याशङ्क्याह—ब्रह्मेति** । अत्र विशेषणान्तरोपादानं तेषां सामर्थ्यविशेषद्योतनार्थम् । एतत्प्रकर्षत्वपरिहाराय व्युत्क्रमेण योजनीयम् । इन्द्रः परमैश्वर्यवान् “ इदि, परमैश्वर्ये ” इत्यस्माद्धातोः “ ऋज्रेन्द्राग्र० ” इत्यादिना निपातनात्साधुत्वम् । त्रैलोक्याधिपतिरपि त्रातुं न शक्त इत्यर्थः तस्य त्रैलोक्याधिपतित्वेऽपि परनिरसनसामर्थ्याभावादशक्ततेत्यत्राह—महेन्द्र इति। वृत्रहननप्रसिद्धसामर्थ्योऽपि न शक्तः। यो वृत्रमवधीदिति तन्महेन्द्रस्य महेन्द्रत्वमिति श्रौतनिर्वचनम्। स्वयं चतुरोऽपि सहायसंपत्त्यभावान्न शक्त इत्यत्राह—सुरनायक इति । स्वतुल्यत्रयस्त्रिंशत्कोटिसुरगणसहायोऽपि न शक्त इत्यर्थः। मा भूत्क्षुद्र इन्द्रः शक्तः सर्वसंहारको रुद्रस्तु शक्तः स्यात्तत्राह—रुद्र इति । संहारकाले प्रजाः रोदयतीति रुद्रः “रोदेर्णिलुक् च” इति रक्प्रत्ययः । कालविशेषे संहारकोऽपीदानीमप्राप्तकालत्वादशक्तः इत्यत्राह—त्रिनेत्र इति । निटिलनयनदहनज्वालाविलोपितमदनोऽपीत्यर्थः । काकतालीयत्वशङ्काव्युदासायाह—त्रिपुरान्तक इति । प्रबलतरमहासुरसंहारकोऽपीत्यर्थः । मा भूत्तस्य शक्तिः “ ब्रह्मणः पुत्राय ज्येष्ठाय श्रेष्ठाय ” इत्युक्तरीत्या रुद्रस्यापि पिता ब्रह्मा शक्तः स्यात् तत्राह—ब्रह्मेति । बृंहतीति ब्रह्मा “ बृहेरम् नलोपश्च” इति मनिन् अमागमो नकारलोपश्च। रुद्रपिता स्वयं कर्मवश्यः कथं शक्नुयात्तत्राह—स्वयंभूरिति । कर्मवश्यत्वेऽपीतरसाधारण्येनानुत्पन्नः स्वयंभूः । स्वयंभूत्वेऽपि सहायसंपत्त्यभावात्कथं त्रायेतेत्यत्राह—चतुरानन इति । युगपदेव सर्ववेदोच्चारणसंपादितातिशयोऽपि न शक्तः । प्रत्येकमशक्तत्वेऽपि किं संभूयागताः शक्नुवन्ति तत्राह—न शक्ता इति । बहुवचनेनायमर्थो लभ्यते । वधमर्हतीति वध्यः दण्डादित्वाद्यः । रामस्य वध्यो रामवध्यः तं त्रातुं न शक्ताः । स्थानविनिग्रहस्य चेत्युचितवधार्हस्य त्राता कः । युधि युद्धे न शक्ताः किंतु शरणं गत्वा त्रातुं शक्ता इत्यर्थः । अत्र “ हिरण्यगर्भः समवर्तताग्रे । न सन्न चासीच्छिव एव केवलः । इन्द्रो मायाभिः पुरुरूप ईयते ” इति परदेवतात्वेन प्रसक्तात्त्रिकादधिकत्वमुक्तम् । राम इत्यनेन वेदान्तोदितानां सद्ब्रह्मादिसामान्यशब्दानां हिरण्यगर्भशिवेन्द्रादिविशेषशब्दानां च व्यक्तिविशेषपरत्वं व्यञ्जितम् । त्रातृत्वेन प्रसक्तप्रधानदेवतानिराकरणप्रकरणे विष्णोरनुपादानात्पारिशेष्याद्राम एव विष्णुरिति प्रतिपादितम् । अस्माच्छ्लोकात्परं स सौष्ठवेति श्लोकः । तस्य तद्वचनमिति श्लोकस्तु उत्तरसर्गादिः । अत्र स प्रमादाल्लिखितः ॥ ४५ ॥ ४६ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने एकपञ्चाशः सर्गः ॥ ५१ ॥

**१ ] ति० टी०—स इति** ॥ १ ॥

**रा० टी०—रावणं प्रति विभीषणोक्तिं वर्णयितुं प्रसङ्गमुत्थापयन्नाह—स इति** । तस्य हनुमतः वचनं श्रुत्वा क्रोधमूर्छितो रावणः तस्य हनुमतो वधमाज्ञापयत् ॥ १ ॥

**गो० टी०—तस्य तद्वचनं श्रुत्वेति** श्लोकः सर्गस्य प्रथमः॥१॥

**२ ] ति० टी०—दौत्यं** स्वीयं दूतकर्म यथावन्निवेदितवतो हनुमतोऽवध्यत्वं मत्वा रावणाज्ञप्तं वधं नानुमेने ॥ २ ॥

**रा० टी०—वध इति** । रावणेन वधे समाज्ञप्ते सति दौत्यं स्वनिष्ठदूतधर्मं निवेदितवतो हनुमतः वधे विभीषणो नानुमेनेऽनुमतिं चकार । वध इत्युभान्वयि ॥ २ ॥

**गो० टी०—वध इति** । दौत्यं दूतकर्म ब्राह्मणादेराकृतिगणत्वात् ष्यञ् तन्निवेदितवतः उक्तवतः । नानुमेने वधमित्यनुवर्तनीयम् । निवेदितमतौ दूत्यमिति पाठान्तरम् । मन्यत इति मतिः कार्यम् । निवेदितमतौ निवेदितकार्यांशे यथार्थवादित्वेनावध्ये हनुमति दूत्यं दूतसंबन्धितया रावणादिष्टं वधम् । “ दूतवणिग्भ्यां चेति वक्तव्यम् ” इति भावकर्मणोर्विहितो यप्रत्ययः अर्थानुगुण्यात्संबन्धमात्रे गमयितव्यः ॥ २ ॥

---

१ तस्य तदिति गो. पाठः ।

तं रक्षोधिपतिं क्रुद्धं तच्च कार्यमुपस्थितम् । विदित्वा चिन्तयामास कार्यं कार्यविधौ स्थितः ॥ ३ ॥
निश्चितार्थस्ततः साम्ना [1]पूज्यं शत्रुजिदग्रजम् । उवाच हितमत्यर्थं वाक्यं वाक्यविशारदः ॥ ४ ॥

क्षमस्व रोषं त्यज राक्षसेन्द्र प्रसीद [2]मे वाक्यमिदं शृणुष्व ।
वधं न कुर्वन्ति परावरज्ञा दूतस्य सन्तो वसुधाधिपेन्द्राः ॥ ५ ॥

[3]राजधर्मविरुद्धं च लोकवृत्तेश्च गर्हितम् । तव चासदृशं वीर कपेरस्य प्रमापणम् ॥ ६ ॥
धर्मज्ञश्च कृतज्ञश्च राजधर्मविशारदः । परावरज्ञो भूतानां त्वमेव परमार्थवित् ॥ ७ ॥
गृह्यन्ते यदि रोषेण त्वादृशोऽपि [4]विचक्षणाः । ततः शास्त्रविपश्चित्त्वं श्रम एव हि केवलम् ॥ ८ ॥
तस्मात्प्रसीद शत्रुघ्न राक्षसेन्द्र दुरासद । युक्तायुक्तं विनिश्चित्य दूतदण्डो विधीयताम् ॥ ९ ॥
विभीषणवचः श्रुत्वा रावणो राक्षसेश्वरः । [5]कोपेन महताऽऽविष्टो वाक्यमुत्तरमब्रवीत् ॥ १० ॥
न पापानां वधे पापं विद्यते शत्रुसूदन । तस्मादि[6]मं वधिष्यामि वानरं पापका[7]रिणम् ॥ ११ ॥

---

३ ] ति० टी०–तच्च कार्यं दूतवधरूपम् । कार्यविधावुचितकृत्यसंपादने स्थितः । निश्चितबुद्धिरित्यर्थः ॥ ३ ॥

रा० टी०–तमिति । तं रावणं क्रुद्धमत एव उपस्थितं संप्राप्तं कार्यं दूतवधक्रियां च विदित्वा कार्यविधौ यथोचितकृत्यसंपादने स्थितः रावणेन संस्थापितः विभीषणः कार्यं स्वकर्तव्यं चिन्तयामास ॥ ३ ॥

गो० टी०–तमिति । तच्च कार्यं दूतवधरूपकार्यम् । कार्यम् अनन्तरानुष्ठेयम् । कार्यविधौ कार्यकरणे । स्थितः निश्चितार्थः । साध्वसाधुविवेकनिश्चितकार्य इत्यर्थः ॥ ३ ॥

४ ] ति० टी०–शत्रुजितं च तमग्रजं च ॥ ४ ॥

रा० टी०–निश्चितेति । निश्चितः अर्थो येन सः शत्रुजिद्विभीषणः पूज्यमग्रजम् अत्यर्थमत्यन्तं हितं वाक्यं साम्ना सामरूपोपायेन उवाच ॥ ४ ॥

गो० टी०–निश्चितार्थ इति । अपूज्येति छेदः ॥ ४ ॥

५ ] ति० टी०–प्रतिज्ञां त्यज्य रोषं क्षमस्वेत्यन्वयः । परावरज्ञाः सर्वकार्यविषयकोत्कर्षापकर्षज्ञाः सन्तो दूतस्य वधं न कुर्वन्ति ॥ ५ ॥

रा० टी०–तद्वचनाकारमाह–क्षमस्वेत्यादिभिः । हे राक्षसेन्द्र ! वसुधाधिपेन्द्राः दूतस्य वधं न कुर्वन्ति इदं मे वाक्यं शृणुष्व अत एव रोषं त्यज अत एव क्षमस्व दूतवाक्यं सहस्व॥५॥

गो० टी०–क्षमस्वेति । परावरज्ञाः त्याज्योपादेयविवेकयुक्ताः ॥ ५ ॥

६] ति० टी०–लोकवृत्तेर्लौकव्यवहारस्य प्रमापणं वधः॥६॥

रा० टी०–राजन्निति । हे राजन् ! कपेः प्रमापणं विघातनं धर्मविरुद्धं वेदोक्ताद्विपरीतम् अत एव लोकवृत्तेः लोकाचारात् गर्हितं निन्दितम् अत एव तव असदृशमयोग्यमस्तीति शेषः ॥ ६ ॥

गो० टी०–राजेति । प्रमापणं मारणम् ॥ ६ ॥

७ ] ति० टी०–कृतज्ञत्वेनापकारिण्येव वधो न्याय्यो न तादृशेऽस्मिन् ॥ ७ ॥

रा० टी०–असदृशत्वमुपपादयन्नाह–धर्मज्ञ इति । धर्मज्ञत्वादिविशिष्टस्त्वमेवासीति शेषः ॥ ७ ॥

गो० टी०–धर्मज्ञश्चेति । भूतानामिति निर्धारणे षष्ठी । भूतानां मध्ये ॥ ७ ॥

८ ] ति० टी०–त्वादृश इति क्विन्नन्तबहुवचनम् । शास्त्रविपश्चित्त्वं शास्त्रपाण्डित्यसंपादनम् श्रमः केवलं श्रम एव व्यर्थप्रयास एवेत्यर्थः ॥ ८ ॥

रा० टी०–गृह्यन्ते इति । त्वादृशो विचक्षणा अपि यदि दोषेण कर्त्रा गृह्यन्ते तदा शास्त्रविपश्चित्त्वं शास्त्रज्ञानं श्रम एव॥८॥

गो० टी०–गृह्यन्त इति । शास्त्रविपश्चित्त्वं विविधं पश्यतीति विपश्चित् तस्य भावः विपश्चित्त्वम् शास्त्रविषये विविधज्ञानोपेतत्वमिति यावत् ॥ ८ ॥

९–१०] ति० टी०–दूतदण्डे दूते विहितो दण्डः॥९॥१०॥

रा० टी०–तस्मादिति । तस्मात् मदुक्तहेतोः प्रसीद चित्तप्रसादं कुरु अत एव युक्तायुक्तं विनिश्चित्य दूतदण्डः दूतोचितक्रिया विधीयताम् ॥ ९ ॥

रा० टी०–विभीषणेति । रावणः उत्तरं वाक्यमब्रवीत् ॥ १० ॥

गो० टी०–तस्मादिति । दूतदण्डः दूतयोग्यदण्डः॥९–१२॥

११ ] ति० टी०–पापकारिणं राजद्रोहिणम् ॥ ११ ॥

रा० टी०–तद्वचनाकारमाह–नेति । शत्रुसूदन हे विभीषण ! पापानां पापकर्माचरणशीलानां वधे पापं न विद्यते तस्माद्धेतोः पापकारिणमिमं वधिष्यामि ॥ ११ ॥

---

१ ऽऽपूज्येति गो. पाठः । २ मद्वाक्यमिति गो. पाठः । ३ राजधर्मेति गो. पाठः । ४ विपश्चित इति गो. पाठः । ५ रोषेणेति गो. पाठः । ६ एनमिति गो. पाठः । ७ चारिणमिति गो. पाठः ।

अधर्ममूलं बहुदोषयुक्तमनार्यजुष्टं वचनं निशम्य ।
उवाच वाक्यं परमार्थतत्त्वं विभीषणो बुद्धिमतां वरिष्ठः ॥ १२ ॥
प्रसीद लङ्केश्वर राक्षसेन्द्र धर्मार्थतत्त्वं वचनं शृणुष्व ।
दूता न वध्याः समयेषु राजन्सर्वेषु सर्वत्र वदन्ति सन्तः ॥ १३ ॥
असंशयं शत्रुरयं प्रवृद्धः कृतं ह्यनेनाप्रियमप्रमेयम् ।
न दूतवध्यां प्रवदन्ति सन्तो दूतस्य दृष्टा बहवो हि दण्डाः ॥ १४ ॥
वैरूप्यमङ्गेषु कशाभिघातो [1]मौण्ड्यं तथा लक्षणसंनिपातः ।
एतान्हि दूते प्रवदन्ति दण्डान्वधस्तु दूतस्य न नः श्रुतोऽस्ति ॥ १५ ॥
कथं च धर्मार्थविनीतबुद्धिः परावरप्रत्ययनिश्चितार्थः ।
भवद्विधः कोपवशे हि तिष्ठेत्कोपं [3]न गच्छन्ति हि सत्त्ववन्तः ॥ १६ ॥
न धर्मवादे न च लोकवृत्ते न शास्त्रबुद्धिग्रहणेषु [4]चाऽपि ।
विद्येत कश्चित्तव वीर तुल्यस्त्वं ह्युत्तमः सर्वसुरासुराणाम् ॥ १७ ॥

१२ ] ति० टी०—अधर्मस्य मूलमधर्ममूलम् । दोषोऽपकीर्तिरूपः ॥ १२ ॥

रा० टी०—अधर्मेति । बहुदोषयुक्तम् अत एव अधर्ममूलम् अत एव अनार्यजुष्टं क्षुद्रैः सेवितं वचनं रावणोक्तिं निशम्य श्रुत्वा परमार्थतत्त्वं परमार्थस्य निश्चायकं वाक्यं विभीषण उवाच ॥ १२ ॥

१३-१४ ] ति० टी०—समयेषु स्वस्वामिनियोगानुष्ठानकालेषु ॥ १३ ॥ १४ ॥

रा० टी०—तद्वचनाकारमाह—प्रसीदेति । हे लङ्केश्वर ! समयेषु स्वस्वामिनियोगकालेषु दूताः सर्वत्र सर्वदेशेषु न वध्याः इति सन्तो वदन्ति तत् धर्मार्थतत्त्वं वचनं शृणुष्व ॥ १३ ॥

गो० टी०—प्रसीदेति । सर्वेषु सर्वत्र सर्वदेशेषु सर्वजातिष्वित्यर्थः ॥ १३ ॥

रा० टी०—नन्वनेन शत्रुत्वमाचरितमिति नास्मिन् दूतत्वमात्रमिति नास्य वधे दोष इत्यत आह—असंशयमिति । हि यतः अप्रमेयं बहु अप्रियम् अनेन कृतम् अतोऽयं प्रवृद्धो महान् शत्रुः तथापि सन्तः दूतवध्यां दूतानां वधं न प्रवदन्ति अत एव दूतस्य दुष्टत्वे इति शेषः, बहवः दण्डाः दृष्टा शास्त्रेष्ववलोकिताः ॥ १४ ॥

गो० टी०—न केवलं दूतोऽयम् अक्षादिवधेन शत्रुश्च तथाच हन्तव्य इत्याशङ्क्याह—असंशयमिति । दूतवध्यां दूतवधम् । स्त्रियां भावे क्यप् हन्तेर्वधादेश आर्षः ॥ १४ ॥

१५ ] ति० टी०—मौण्ड्यं मुण्डनम् । लक्षणसंनिपातो दूतयोग्याङ्कनसंभूत इति तीर्थः । वैरूप्यादीनामेकैकं वा । तथा लक्षणानां संनिपातः सर्वानुष्ठानं वेत्यर्थ इत्यन्ये । नोऽस्माकं श्रुतोऽपि नास्ति दर्शनं तु दूरापास्तमिति भावः ॥ १५ ॥

रा० टी०—तद्दण्डाकारमाह—वैरूप्यमिति । अङ्गेषु वैरूप्यं नासिकाछेदादिना विरूपकरणं कशाभिघातः कशया तोत्रेण अभिघातः ताडनं मौण्ड्यं भ्रुकुट्यादिमुण्डनं लक्षणसंनिपातः ताम्रखण्डदाहादिना ललाटादौ चिह्नकरणम् एतान् दण्डान् दूते प्रवदन्ति दूतस्य वधस्तु नोऽस्माकं न श्रुतोऽस्ति ॥ १५ ॥

गो० टी०—वैरूप्यमिति । लक्षणसन्निपातः दूतयोग्याङ्कनसंबन्धः । नः अस्माभिः ॥ १५ ॥

१६ ] ति० टी०—परावरप्रत्ययनिश्चितार्थ उत्कर्षापकर्षज्ञानेन निश्चितकार्यः ॥ १६ ॥

रा० टी०—ननु क्रोधवशं प्राप्तस्य विवेको न भवतीत्यत आह—कथमिति । परावरप्रत्ययेन उत्कृष्टापकृष्टज्ञानेन निश्चितः अर्थो येन अत एव धर्मार्थयोर्विनीता निविष्टा बुद्धिर्यस्य सः भवद्विधः जनः कोपवशे कथं तिष्ठेत् हि यतः सत्त्ववन्तो जनाः कोपं न गच्छन्ति प्राप्नुवन्ति ॥ १६ ॥

गो० टी०—कथं चेति । धर्मार्थविनीतबुद्धिः धर्मार्थयोः शिक्षितबुद्धिः परावरप्रत्ययनिश्चितार्थः उत्कृष्टापकृष्टपरिज्ञाननिश्चितार्थः अस्मिन् विषये इदं कार्यं परम् इदमवरमिति विवेकनिश्चितकार्य इत्यर्थः । नियच्छन्ति निगृह्णन्ति । सत्त्ववन्तः व्यवसायवन्तः ॥ १६ ॥

१७ ] ति० टी०—किं च त्वं नोपदेश्योऽस्माकमित्याह—नेति । शास्त्राणां बुद्ध्या निश्चयात्मिकया ग्रहणेष्वित्यर्थः ॥१७॥

रा० टी०—स्वविज्ञापितस्वीकरणायैतत्प्रशंसामाह—नेति । धर्मवादादौ तव तुल्यः कश्चिन्न विद्येत विद्यते अतः सर्वसुरासुराणां त्वमेवोत्तमोऽसि ॥ १७ ॥

रा० टी०—तत्र हेतुमाह—पराक्रमेति । पराक्रमोत्साहमनस्विनां पराक्रमोत्साहविशिष्टमनोविशिष्टानां सुरासुराणामपि

१ युक्तमिति गो. पाठः । २ मौढ्यमिति गो. पाठः । ३ नियच्छन्तीति गो. पाठः । ४ चापीति गो. पाठः ।

[ पराक्रमोत्साहमनस्विनां च सुरासुराणामपि दुर्जयेन ।
त्वयाऽप्रमेयेण सुरेन्द्रसंघा जिताश्च युद्धेष्वसकृन्नरेन्द्राः ॥
इत्थंविधस्यामरदैत्यशत्रोः शूरस्य वीरस्य तवाजितस्य ।
कुर्वन्ति वीरा मनसाऽप्यलीकं प्राणैर्विमुक्ता न तु भोः पुरा ते ॥ ]

न चाप्यस्य कपेर्घाते किंचित्पश्याम्यहं गुणम् । तेष्वयं पात्यतां दण्डो यैरयं प्रेषितः कपिः ॥ १८ ॥
साधुर्वा यदि वाऽसाधुः परैरेष समर्पितः । ब्रुवन्परार्थं परवान्न दूतो वधमर्हति ॥ १९ ॥
अपि चास्मिन्हते नान्यं राजन्पश्यामि खेचरम् । [ इह यः पुनरागच्छेत्परं पारं महोदधेः । ]
तस्मान्नास्य वधे यत्नः कार्यः परपुरंजय । भवान्सेन्द्रेषु देवेषु यत्नमास्थातुमर्हति ॥ २० ॥

अस्मिन्विनष्टे नहि भूतमन्यं पश्यामि यस्तौ नरराजपुत्रौ ।
युद्धाय युद्धप्रियदुर्विनीतावुद्योजयेद्दीर्घ भवता विरुद्धौ ॥ २१ ॥
पराक्रमोत्साहमनस्विनां च सुरासुराणामपि दुर्जयेन ।
त्वया मनोनन्दन नैर्ऋतानां युद्धाय निर्नाशयितुं न युक्तम् ॥ २२ ॥

---

दुर्जयेन अत एव अप्रमेयेण बलवत्त्वादिना इयत्तारहितेन त्वया सुरेन्द्रसंघाः नरेन्द्राश्च युद्धेषु असकृज्जिताः ॥ १८ ॥

रा० टी०—इत्थमिति । इत्थंविधस्य तव अलीकमपराधं पुरा प्राणैर्विमुक्ताः अपहृतसर्वस्वा इत्यर्थः वीराः मनसाऽपि न कुर्वन्ति ॥ १९ ॥

गो० टी०—न धर्मवादे इति । धर्मवादे धर्मशास्त्रे । लोकवृत्ते लौकिकाचारे । शास्त्रबुद्धिग्रहणेषु शास्त्रशब्देन शास्त्रार्थ उच्यते । शास्त्रार्थज्ञानतद्धारणेष्वित्यर्थः ॥ १७ ॥

१८ ] ति० टी०—एतदुत्तरम् 'पराक्रमोत्साहमनस्विनां च सुरासुराणामपि दुर्जयेन । त्वयाऽप्रमेयेण सुरेन्द्रसंघा जिताश्च युद्धेष्वसकृन्नरेन्द्राः ॥ इत्थंविधस्यामरदैत्यशत्रोः शूरस्य वीरस्य तवाजितस्य कुर्वन्ति वीरा मनसाप्यलीकं प्राणैर्विमुक्ता न तु भोः पुरा ते' ॥ इति श्लोकद्वयं प्रक्षिप्तमिति कतकः । न चाप्यस्य कपेरिति ॥ १८ ॥

रा० टी०—नेति । अस्य कपेर्घाते किंचित् गुणं न पश्यामि अतः यैरयं कपिः प्रेषितः तेषु अयं प्राणान्तः दण्डः पात्यताम् ॥ २० ॥

गो० टी०—न केवलं दूतस्य वधे शास्त्रविरोधः गुणमपि न किंचित्पश्यामि अतः एतत्प्रेषकेष्वेव वधरूपो दण्डः पात्यतामित्याह—न चेत्यादि । साधुर्वेति समर्पितः प्रेषितः ॥१८॥१९॥

१९ ] ति० टी०—समर्पितः प्रेषितः ॥ १९ ॥

रा० टी०—साधुरिति । परैः रिपुभिः समर्पितः प्रेषितः अत एव परार्थं ब्रुवन् साधुर्वाऽसाधुर्वा एष दूतः वधं नार्हति २१

२० ] ति० टी०—नान्यं पश्यामि । योऽत्रागच्छेदित्यर्थः ॥ २० ॥

रा० टी०—अपीति । अस्मिन् दूते हते सति अन्यं दूतं खेचरम् आकाशगमनशीलं न पश्यामि तस्मात् अस्य वधे यत्नो न कार्यः किंतु सेन्द्रेषु देवेषु तद्विध्वंसार्थं यत्नमास्थातुं भवान् अर्हति । सार्धश्लोक एकान्वयी ॥ २२ ॥

गो० टी०—अस्मिन्हते सति वृत्तान्तं निवेदकाभावाद्रामलक्ष्मणयोरिहागमनाभावेन तव शत्रुक्षयो न स्यात् विमुक्तेऽस्मिन् एतस्मिन्निवेदितवृत्तान्तयोस्तयोरिहागमनादयत्नेन तव शत्रुनाशो भवेदित्यभिप्रेत्याह—अपि चेत्यादिना । इह परं पारम् इह विद्यमानं महोदधेः परं पारम् इदं दक्षिणकूलमित्यर्थः॥२०॥२१॥

२१ ] ति० टी०—नन्वस्मिन्हतेऽन्यस्यानागमने च कामक्षतिर्विपरीतमिष्टमेवेदं तत्राह—अस्मिन्विनष्टे इति । तौ राजपुत्रौ । यो योद्धोद्योजयेत्तं न पश्यामि, ननु तदुद्योगाभावोऽपि ममेष्ट एव नेत्याह—युद्धप्रियेति संबोधनेन रणपराक्रमविजयकीर्ती तवेष्टे किल, ते उभे अप्येतद्विनाशे नश्यत इत्याशयः । रावणस्य रजःप्रकृतित्वात्तत्प्रकृत्यनुसारेण युद्धादिव्यापारेण प्रलोभनम् तत्प्रीत्यर्थमेव दुर्विनीतावित्याद्युक्तिः ॥ २१ ॥

रा० टी०—ननु खेचरदूतरक्षणेन किं साध्यमित्यत आह—अस्मिन्निति । अस्मिन्दूते विनष्टे सति युद्धप्रियावेव दुर्विनीतौ दुष्करशिक्षौ नरराजपुत्रौ युद्धाय य उद्योजयेत् तं दूतमहं न पश्यामि ॥ २३ ॥

गो० टी०—अस्मिन्विनष्ट इति । दीर्घपथावरुद्धौ दूरमार्गेण निरुद्धगमनावित्यर्थः । एतच्छ्लोकानन्तरं पराक्रमोत्साहमनस्विनां चेति श्लोकः । ततो हिताश्चेति श्लोकः । अथ तदेकदेशेनेति श्लोकः । अथ निशाचराणामिति सर्गान्तश्लोकः । अयमेव पाठक्रमः समीचीनः । अन्येऽप्यत्र सर्गे श्लोकाः कल्पिता दृश्यन्ते ॥ २२–२४ ॥

२२ ] ति० टी०—हे नैर्ऋतानां मनोनन्दन ! सुरासुराणा-

---

१ श्लोकद्वयमेतदधिकं रा० पाठे । २ अर्धमेतदधिकं गो० पाठे । ३ दूतमिति गो० पाठः । ४ दीर्घपथावरुद्धाविति गो० पाठः । ५ युद्धायतिरिति गो० पाठः । ६ युक्तेति गो० पाठः ।

हिताश्च शूराश्च समाहिताश्च कुलेषु जाताश्च महागुणेषु ।
मनस्विनः शस्त्रभृतां वरिष्ठाः कोपप्रशस्ताः सुभृताश्च योधाः ॥ २३ ॥
तदेकदेशेन बलस्य तावत्केचित्तवादेशकृतोऽद्य यान्तु ।
तौ राजपुत्रावुपगृह्य मूढौ परेषु ते भावयितुं प्रभावम् ॥ २४ ॥
निशाचराणामधिपोऽनुजस्य विभीषणस्योत्तमवाक्यनिष्टम् ।
जग्राह बुद्ध्या सुरलोकशत्रुर्महाबलो राक्षसराजमुख्यः ॥ २५ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये सुन्दरकाण्डे द्विपञ्चाशः सर्गः ॥ ५२ ॥

## त्रिपञ्चाशः सर्गः ।

रावणाज्ञप्ता निशाचराः पटखण्डैः संवेष्ट्य तैलासेचनपूर्वं प्रज्वलितवालं हनुमन्तमातोद्यघोषानुनादितलङ्कायां संचारयामासुः । राक्षसीमुखाच्छ्रुतैतद्वृत्तान्ता जानक्यग्निं प्रति सशपथं हनुमददाहं प्रार्थयते । गोपुरमारूढो हनुमान्स्वशरीरकृशीकरणेन वालाग्निमुन्मुच्य स्वीकृतपृथुशरीरस्तत्रत्यपरिघं प्रगृह्य तद्रक्षिरक्षांसि जघान ।

तस्य तद्वचनं श्रुत्वा दशग्रीवो महात्मनः । देशकालहितं वाक्यं भ्रातुरुत्तरमब्रवीत् ॥ १ ॥
सम्यगुक्तं हि भवता दूतवध्या विगर्हिता । अवश्यं तु वधादन्यः क्रियतामस्य निग्रहः ॥ २ ॥

मपि दुर्जयेन त्वया पराक्रमे य उत्साहस्तत्र प्रशस्तमनोवतां नैर्ऋतानां मनो युद्धाय प्रवृत्तं निर्नाशयितुं न युक्तम् । नैर्ऋतानामित्यत्र मन इत्यत्र च तन्त्रम् । यद्वा तादृशानां नैर्ऋतानां मनोनन्दन ! तादृशेन त्वया युद्धापत्तिर्युद्धागमो नाशयितुं न युक्तमित्यर्थः ॥ २२ ॥

रा० टी०–ननु किं तद्युद्धप्रवृत्त्येत्यत आह–पराक्रमेति । हे नन्दन राक्षसाभिरामदातः ! युद्धाय समुत्सुकमिति शेषः नैर्ऋतानां मनः निर्नाशयितुं त्वया न युक्तम् ॥ २४ ॥

२३ ] ति० टी०–ननु युद्धे कदाचिद्विपरीतमपि संभाव्येत तत्राह–हिताश्चेति । समाहिता दानादिभिर्वशीकृताः । सुभृताः सम्यक्पालिताः तादृशभृत्यवतो जय एव भावीति भावः ॥ २३ ॥

रा० टी०–हिता इति । महागुणेषु बहुगुणविशिष्टेषु कुलेषु जाताः शूराः नागाश्च सुभृताः अत्यन्तं पोषिताः ॥ २५ ॥

२४] ति० टी०–तत्तस्मादुपगृह्य आयान्त्विति शेषः । परेषु ते प्रभावं भावयितुं प्रकाशयितुम् युक्तमिति शेषः ॥ २४ ॥

रा० टी०–ननु किं तेनेत्यत आह–तदिति । तत् शराधिक्याद्धेतोः केचित्तवादेशकृतः बलस्य सैन्यस्य एकदेशेन सह किंचिद्बलं गृहीत्वेत्यर्थः, अद्य यान्तु रामसमीपमिति शेषः । गमनप्रयोजनमाह–परेषु शत्रुषु ते प्रभावं भावयितुं बोधयितुं मूढौ प्रियावियोगदुःखे अस्वस्थचित्तौ तौ रामलक्ष्मणौ उपगृह्य आयान्त्विति शेषः ॥ २६ ॥

गो० टी०–तदिति । तत्तस्मात्कारणात् । एकदेशेनेति सह योगे तृतीया । बलस्य सैन्यस्य ॥ २५ ॥ २६ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने द्विपञ्चांशः सर्गः ॥ ५२ ॥

२५ ] ति० टी०–उत्तमवाक्यनिष्टं तत्प्रतिपाद्यमर्थतत्त्वं जग्राह ॥ २५ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये सुन्दरकाण्डे द्विपञ्चाशः सर्गः ॥ ५२ ॥

रा० टी०–निशाचराणामिति । राक्षसराजेषु मुख्यः निशाचराणामधिपो रावणः विभीषणस्येष्टमुत्तमवाक्यं बुद्ध्या अन्तःकरणवृत्त्या जग्राह ॥ २७ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ सुन्दरकाण्डे द्विपञ्चाशत्तमः सर्गः ॥ ५२ ॥

१ ] ति० टी०–तस्य विभीषणस्य ॥ १ ॥

रा० टी०–विभीषणवचनस्वीकारानन्तरकालिकं रावणवृत्तान्तमाह–तस्येत्यादिभिः । महात्मनो विभीषणस्य वचनं श्रुत्वा देशकालहितमुत्तरं वाक्यमब्रवीत् ॥ १ ॥

गो० टी०–तस्येत्यादि । देशकालहितं देशकालोचितमिति विभीषणवचनविशेषणम् ॥ १ ॥

२ ] ति० टी०–दूतवध्या दूतवधः । आर्षमिदं साधु॥२॥

रा० टी०–तद्वचनाकारमाह–सम्यगित्यादिभिः । दूतवध्या विगर्हितेति भवता सम्यगुक्तमतः वधादन्यः अस्य निग्रहः दण्डः क्रियताम् ॥ २ ॥

१ कोट्यग्रतरसे इति गो. रा. पाठः । २ नागा इति रा. पाठः । ३ ऽभीति गो. पाठः । ४ वाक्यमिष्टमिति गो. पाठः । ५ महाबल इति गो. पाठः । ६ वधादन्य इति गो. रा. पाठः ।

कपीनां किल लाङ्गूलमिष्टं भवति भूषणम् । तदस्य दीप्यतां शीघ्रं तेन दग्धेन गच्छतु ॥ ३ ॥
ततः पश्यन्त्वमुं, दीनमङ्गवैरूप्यकर्शितम् । सुमित्रज्ञातयः सर्वे बान्धवाः ससुहृज्जनाः ॥ ४ ॥
आज्ञापयद्राक्षसेन्द्रः पुरं सर्वं सचत्वरम् । लाङ्गूलेन प्रदीप्तेन रक्षोभिः परिणीयताम् ॥ ५ ॥
तस्य तद्वचनं श्रुत्वा राक्षसाः कोपकर्कशाः । वेष्टन्ते तस्य लाङ्गूलं जीर्णैः कार्पासिकैः पटैः ॥ ६ ॥
संवेष्ट्यमाने लाङ्गूले व्यवर्धत महाकपिः । शुष्कमिन्धनमासाद्य वनेष्विव हुताशनम् ॥ ७ ॥
तैलेन परिषिच्याथ तेऽग्निं तत्रोपपादयन् । लाङ्गूलेन प्रदीप्तेन राक्षसांस्तानताडयत् ॥ ८ ॥
रोषामर्षपरीतात्मा बालसूर्यसमाननः । [ लाङ्गूलं संप्रदीप्तं तु द्रष्टुं तस्य हनूमतः । ]
स भूयः संगतैः क्रूरै राक्षसैर्हरिपुंगवैः ॥ ९ ॥

गो० टी०—सस्यगुक्तमिति । दूतवध्या दूतवधः ॥२॥३॥

३ ] ति० टी०—दग्धेन दाहकृतेनोपलक्षितो गच्छतु । स्वस्वामिसमीपमिति शेषः ॥ ३ ॥

रा० टी०—ननु को दण्डः इत्यत आह—कपीनामिति । लाङ्गूलं कपीनां भूषणम् अत एव इष्टं भवति अतः अस्य तत् लाङ्गूलं दीप्यतां दग्धेन लाङ्गूलेन विद्धः सन् गच्छतु ॥ ३ ॥

४ ] ति० टी०—ततः स्वीयसमीपगमनानन्तरम् । सुमित्राणि समसुखदुःखा, ज्ञातयो भ्रात्रादयः, बान्धवाः संबन्धिनः, सुहृज्जनाः स्निग्धजनाः, तत्सहिता बान्धवा इत्यर्थः ॥ ४ ॥

रा० टी०—तत इति । ततः पुच्छदाहानन्तरम् अङ्गवैरूप्येण कर्शितं दुःखितममुं वानरं ससुहृज्जनाः सुमित्रादयः पश्यन्तु तत्र मित्राणि तुल्यसुखदुःखवन्तः, ज्ञातयो भ्रात्रादयः, बान्धवाः संबन्धिनः, सुहृज्जनाः स्नेहवन्तः ॥ ४ ॥

गो० टी०—तत इति । समित्रेति । मित्राणि आप्ताः समसुखदुःखा वा सहाया वा ज्ञातयः भ्रात्रादयः बान्धवाः संबन्धिनः सुहृज्जनाः स्निग्धजनाः ॥ ४ ॥

५ ] ति० टी०—अथ रावणः स्वपुरदुर्गमहाबलमहैश्वर्याणि परेभ्यः प्रकाशयितुं सर्वपुरपरावर्तनं दीप्तपुच्छस्याज्ञापयदित्याह—आज्ञापयदिति । परिणीयतामित्याज्ञापयदिति योजना ॥ ५ ॥

रा० टी०—आज्ञापयदिति । प्रदीप्तेन लाङ्गूलेनोपलक्षितोऽयं सचत्वरं सर्वं पुरं रक्षोभिः परिणीयतामिति राक्षसेन्द्र आज्ञापयत् एतेनैतादृशदर्शनेन हतबान्धवानां राक्षसीनां दुःखशान्तिर्भविष्यतीति सूचितम् ॥ ५ ॥

गो० टी०—आज्ञापयदिति । प्रदीप्तेन लाङ्गूलेन युक्तो हनुमान् सचत्वरं सर्वं पुरं परिणीयतां परितो नीयताम् इत्याज्ञापयदित्यन्वयः ॥ ५–७ ॥

६ ] ति० टी०—वेष्टन्ते अवेष्टयन्तेत्यर्थः ॥ ६ ॥

रा० टी०—तस्येति । तस्य रावणस्य वचनं श्रुत्वा कोपकर्कशाः अतिकोपवन्तो राक्षसाः तस्य हनुमतो लाङ्गूलं कार्पासिकैः कार्पासोपादानकैः पटैः वेष्टन्ते अवेष्टन्त ॥ ६ ॥

७–८ ] ति० टी०—शुष्कमिति । आरण्यका यथा शुष्कमिन्धनमासाद्य हुताशनमुत्पादयन्ति तथा जीर्णपटवेष्टितलाङ्गूलं तैलेन परिषिच्य तत्र तेऽग्निमुपपादयन्नुदपादयन्नित्यर्थ इति कतकः । 'हुताशनः' इति पाठे वृद्धौ दृष्टान्तोऽयम् । उपपादयन्नित्यस्य समयोजयन्नित्यर्थः इत्यन्ये । तान्बद्धा नेतॄन् ॥ ७ ॥ ८ ॥

रा० टी०—संवेष्ट्यमान इति । शुष्कमिन्धनमासाद्य वनेषु हुताशन इव व्यवर्धत ॥ ७ ॥

रा० टी०—तैलेनेति । ते रावणाज्ञप्ताः राक्षसाः तैलेन परिषिच्य तत्र लाङ्गूले अग्निमुपपादयन् प्रापयन् प्राज्वालयन्नित्यर्थः । अर्थं पृथक् ॥ ८ ॥

रा० टी०—लाङ्गूलेनेति । भूयः सङ्गतैः राक्षसैः प्रदीपितेन लाङ्गूलेन रोषामर्षपरीतात्मा हनुमान् राक्षसान् अताडयत् । सार्धश्लोक एकान्वयी ॥ ९ ॥

गो० टी०—लाङ्गूलेनेति । अपातयत् लाङ्गूलभ्रामणेन अद्रावयदित्यर्थः ॥ ८ ॥ ९ ॥

९ ] ति० टी०—संगतैर्मिलितै राक्षसैः । स भूयो निबद्ध इति शेषः ॥ ९ ॥

गो० टी०—स भूय इत्यादि । न मे शक्ताः न मे पर्याप्ता इत्यर्थः । मम निग्रहे न समर्था इति यावत् । यदीति । भर्तृहितार्थाय रामहितार्थाय चरन्तं प्रवर्तमानम् मामिति शेषः । भर्तृशासनात् रावणशासनात् यदि बध्नन्ति तावता मे निष्कृतिः प्रतिक्रिया न कृता । इदं बन्धनमकिञ्चित्करमिति भावः । सर्वेषामिति । रामस्य प्रीत्यर्थमिदं विषहिष्ये । रावणादिवधस्य स्वेनैव कर्तव्यत्वेन रामाभिमतत्वाद्राक्षसानामहमीदृशं बन्धनाकर्षणादिरूपं परिभवं सहिष्य इति भावः । रामस्य प्रीत्यर्थमित्यत्र छन्दोभङ्ग आर्षः । लङ्केति । लङ्का रात्रौ

१ इममिति गो. पाठः । २ कर्शिता इति गो. पाठः । ३ वेष्टयन्ति स्मेति गो. पाठः । ४ कार्पासकैरिति गो. पाठः । ५ हुताशन इति गो. रा. पाठः । ६ तत्राभ्यपादयन्निति गो. पाठः । ७ अपातयदिति गो. पाठः । ८ अर्धमेतदधिकं गो. पाठे । ९ एतदादार्धद्वयं व्यत्यस्तं गो. पाठे । १० सत्तम इति गो. पाठः ।

सहस्त्रीबालवृद्धाश्च जग्मुः प्रीतिं निशाचराः । निबद्धः कृतवान्वीरस्तत्कालसदृशीं मतिम् ॥ १० ॥
कामं खलु न मे शक्ता निबद्धस्यापि राक्षसाः । छित्त्वा पाशान्समुत्पत्य हन्यामहमिमान्पुनः ॥ ११ ॥
यदि भर्तृहितार्थाय चरन्तं भर्तृशासनात् । निबध्नन्ते दुरात्मानो न तु मे निष्कृतिः कृता ॥ १२ ॥
सर्वेषामेव पर्याप्तो राक्षसानामहं युधि । किं तु रामस्य प्रीत्यर्थं विषहिष्येऽहमीदृशम् ॥ १३ ॥
लङ्का चारयितव्या [3]मे पुनरेव भवेदिति । रात्रौ नहि सुदृष्टा मे दुर्गकर्मविधानतः ॥ १४ ॥
अवश्यमेव द्रष्टव्या मया लङ्का निशाक्षये । कामं बध्नन्तु मे भूयः पुच्छस्योद्दीपनेन च ॥ १५ ॥
पीडां कुर्वन्ति रक्षांसि न मेऽस्ति मनसः श्रमः । ततस्ते संवृताकारं सत्त्ववन्तं महाकपिम् ॥ १६ ॥

---

दुर्गकर्मविधानतः दुर्गकर्मविधानाद्धेतोः न हि सुदृष्टा नैव सुदृष्टा । यद्वा दुर्गकर्मविधानतः नगरगुप्तिविशेषज्ञानपूर्वकमित्यर्थः । न दृष्टेति हेतोर्मया लङ्का पुनश्चारयितव्या भवेत् विचरित्वा द्रष्टव्या भवेदित्यर्थः । अयं च प्रातःकालः न तूषःकालः प्रातःकालेऽपि तथा व्यवहारोपपत्तेः । काममिति । मनसः श्रम इत्यनन्तरमितिकरणं बोध्यम् ॥ १०–१६ ॥

१० ] ति० टी०–अथ बन्धसंहारशक्तावपि स नोचित इत्यचिन्तयदित्याह—कृतवानिति ॥ १० ॥

रा० टी०–सहेति । निशाचराः प्रीतिं जग्मुः निबद्धो वीरस्तु तत्कालसदृशीं पुच्छदहनसमयोचितां मतिं कृतवान् ॥ १० ॥

११ ] ति० टी०–तां मतिमभिनयति—काममिति । निबद्धस्यापि निबद्धवदवस्थितस्यापि मे न शक्ताः । सर्वथा बन्धनादाविति शेषः । तदेव समर्थयति—छित्त्वेति ॥ ११ ॥

रा० टी०–तन्मत्याकारमाह–काममिति । निबद्धस्यापि मे समीपे राक्षसाः समर्था न अतः पाशान् राक्षसकृतबन्धनानि छित्त्वा इमान् राक्षसान् पुनर्हन्याम् ॥ ११ ॥

१२ ] ति० टी०–तर्हि कुतो न हन्यन्ते तत्राह—यदीति । भर्तुः रामस्य हितार्थाय हितनिमित्तं चरन्तं मां भर्तुः रावणस्य शासनाद्यदि ते मां निबध्नन्ते निबध्नन्तु केवलम्, न तु मे निष्कृतिः कृता, मया कृतस्य प्रतिक्रिया तु न कृता ॥ १२ ॥

रा० टी०–यदीति । भर्तृहितार्थाय चरन्तं मां भर्तृशासनात् रावणाज्ञातः यदीमे मां निबध्नन्ते तदाऽपि मे निष्कृतिः मत्कृतकर्मप्रतिक्रिया न कृता ॥ १२ ॥

१३ ] ति० टी०–यदि तां वधरूपां चिकीर्षेयुस्तदा सर्वान्हनिष्याम्येवेत्याह—सर्वेषामिति । यदि पर्याप्तस्तर्हि क्रियतां शत्रुवधस्तत्राह—रामस्येति । प्रीत्यर्थं सर्वराक्षसवधजप्रीत्यविघ्नार्थमीदृशबन्धनादिकम् ॥ १३ ॥

रा० टी०–सर्वेषामिति । यद्यपि राक्षसानां युधि अहं पर्याप्तः परिपूर्णः निहन्तुं समर्थ इत्यर्थः, तथाऽपि रामस्य प्रीत्यर्थं किंतु किंचित् ईदृशं कर्म विषहिष्ये ॥ १३ ॥

१४ ] ति० टी०–फलान्तरार्थमपि सोढव्यमेवेत्याह—लङ्केति । एतै रावणाज्ञया पुनरेव सकला लङ्का चारयितव्या चारणेन दर्शयितव्या, अतो विषहिष्ये । ननु दृष्टायाः किं पुनर्दर्शनेन तत्राह—रात्राविति । दुर्गकर्मविधानतो दुर्गस्य दुर्गमत्वस्वरूपकर्मविधानाद्धेतोः दुर्गांशे इति शेषः ॥ १४ ॥

रा० टी०–ननु सहनेन कथं रामप्रीतिरित्यत आह–लङ्केति । मम लङ्का पुनश्चारयितव्या भवेत् इति यतः रात्रौ दुर्गकर्मविधानतः दुर्गमक्रियया विधानात् हेतोर्न सुदृष्टा ॥ १४ ॥

१५ ] ति० टी०–निशाक्षये इत्यनेन सीतासंभाषणार्थं कतिपयदिनवासो गम्यते । तथा हि—फाल्गुने रावणेन सीतापहारः आश्विनशुक्लसमाप्तौ हनुमत्प्रेरणया पक्षावधिदानेन वानरान्प्रति दूतप्रेषणम् ततः कार्तिकशुक्लप्रतिपद्यन्वेषणार्थं वानरप्रस्थानम् मार्गशुक्लदशम्यां संपातिदर्शनम् तदा सुग्रीवदत्तमासावधेर्गतत्वस्य वानरैरुक्तिः अग्र एकादश्यां हनुमतो लङ्कागमनम् तद्रात्रिशेषे सीतादर्शनम् ततो द्वादश्यां दिने स्थित्वा रात्रौ सीतायाः सम्यग्दर्शनम् तद्रात्रिशेषे तत्र रावणागमनम् तत्र रावणेन 'मासान्द्वादश भामिनि' इति स्वदत्तावधौ मासद्वयावशेषवचने कतिपयदिनाधिक्यं तु मासत्वानवच्छिन्नत्वेनाल्पान्तरत्वान्न विवक्षितम् । ततस्त्रयोदश्यां प्रातः सीतया सह कथालापः तद्दिन एवाशोकवनिकाभङ्गादि चतुर्दश्यामक्षान्तवधो लङ्कादाहश्च, पूर्णिमायां वा । पूर्वं वासन्तिकवृक्षाणां पुष्पितत्वोक्तिस्तु तद्वर्षे क्षयमासेनोपपादिता उत्पातेन च लक्ष्मणस्य सुग्रीवनिकटे प्रेषणसमये रामेण मासचतुष्टयरूपकृतावधेरपगमोक्तिस्तु प्रागुपपादितरहस्येति दिक् । पुच्छस्योद्दीपनेन चेत्यस्योत्तरश्लोकेनान्वयः ॥ १५ ॥

रा० टी०–अवश्यमिति । निशाक्षये लङ्काऽवश्यं मया द्रष्टव्या अतः कामं मां बध्नन्तु पुच्छस्योद्दीपनेन पीडां कुर्वन्तु च । तत्र हेतुः–मे मनसः श्रमः खेदो नास्ति । सार्धश्लोक एकान्वयी ॥ १५ ॥

१६ ] ति० टी०–मनसः श्रमो मनःखेदो न मेऽस्तीति चिन्तयामासेत्यन्वयः । तत एवम् । तस्य चिन्तानन्तरमित्यर्थः ॥ १६ ॥

रा० टी०–तत इति । संवृतः आच्छादितः आकारो येन तं महाकपिं राक्षसाः परिगृह्य ययुः ॥ १६ ॥

गो० टी०–ततस्त इति । संवृताकारं गूढस्वभावम्

---

१ प्रीता इति गो. पाठः । २ बध्नन्त्यत इति गो. पाठः । ३ वै इति गो. पाठः । ४ बद्धस्यति गो. पाठः । ५ कुर्वन्त्विति गो. पाठः ।

परिगृह्य ययुर्हृष्टा राक्षसाः कपिकुञ्जरम् । शङ्खभेरीनिनादैश्च घोषयन्तः स्वकर्मभिः ॥ १७ ॥
राक्षसाः क्रूरकर्माणश्चारयन्ति स्म तां पुरीम् । अन्वीयमानो रक्षोभिर्ययौ सुखमरिन्दमः ॥ १८ ॥
हनूमांश्चारयामास राक्षसानां महापुरीम् । यथापश्यद्विमानानि विचित्राणि महाकपिः ॥ १९ ॥
संवृतान्भूमिभागांश्च सुविभक्तांश्च चत्वरान् । रथ्याश्च गृहसंबाधाः कपिः शृङ्गाटकानि च ॥ २० ॥
तथा रथ्योपरथ्याश्च तथैव च गृहान्तरान् । चत्वरेषु चतुष्केषु राजमार्गे तथैव च ॥ २१ ॥
घोषयन्ति कपिं सर्वे चार इत्येव राक्षसाः । [स्त्रीबालवृद्धा निर्जग्मुस्तत्र तत्र कुतूहलात् ।
तं प्रदीपितलाङ्गूलं हनुमन्तं दिदृक्षवः ॥ ] दीप्यमाने ततस्तस्य लाङ्गूलाग्रे हनूमतः ॥ २२ ॥
राक्षस्यस्ता विरूपाक्ष्यः शंसुर्देव्यास्तदप्रियम् । यस्त्वया कृतसंवादः सीते ताम्रमुखः कपिः ॥ २३ ॥
लाङ्गूलेन प्रदीप्तेन स एष परिणीयते । श्रुत्वा तद्वचनं क्रूरमात्मापहरणोपमम् ॥ २४ ॥
वैदेही शोकसंतप्ता हुताशनमुपागमत् । मङ्गलाभिमुखी तस्य सा तदासीन्महाकपेः ॥ २५ ॥

महाकपिमिति बुद्धया महत्त्वम् कपिकुञ्जरमिति सजातीयश्रैष्ठ्यम् ॥ १७ ॥

१७-१८ ] ति० टी०—स्वकर्मभी राजद्रोहिणो दुष्टस्यैवं दण्ड इत्येवमादिभिर्घोषयन्तः पूर्ववृत्तान्तस्य सर्वान्प्रति प्रकटं प्रतिपादनं घोषणम् ॥ १७ ॥ १८ ॥

रा० टी०—शङ्खेति । शङ्खभेरीनिनादैर्घोषयन्तो राक्षसाः कपिकुञ्जरं तां पुरीं चारयन्ति स्म ॥ १७ ॥

गो० टी०—शङ्खेति । स्वकर्मभिः आस्फोटनसिंहनादैरित्यर्थः । तां पुरीं घोषयन्तः अत्यन्तसंयोगे द्वितीया चारयन्ति स्म तमिति शेषः ॥ १८ ॥

रा० टी०—अन्वीयमान इति । रक्षोभिरन्वीयमानो हनुमान् सुखं ययौ महापुरीं लङ्कां चारयामास चचार च॥१८॥

गो० टी०—अन्वीयमान इति । चारयामास शोधयामास ॥ १९ ॥

१९ ] ति० टी०—चारयामास स्वार्थे णिच् । चरणेन ददर्शेत्यर्थः ॥ १९ ॥

रा० टी०—अथेति । महांश्चासावकपिः कप्यन्तररहितः कपिर्हनुमान् विचित्राणि विमानादीनि अपश्यच । तत्र चत्वराः द्वारसमीपवहिर्वेदाः संबाधाः निबिडा शृङ्गाटकानि चतुष्पथाः, उपरथ्याः स्वल्पवीथ्यः, गृहान्तराः गृहद्वयमध्यदेशाः । श्लोकद्वयमेकान्वयि ॥ १९ ॥ २० ॥

गो० टी०—अथेति । चत्वरान् गृहवहिरङ्गणानि ॥ २० ॥

२० ] ति० टी०—चत्वरान्द्वारसमीपे वहिर्वेदान् । गृहैः संबाधा निबिडाः । शृङ्गाटकानि चतुष्पथान् ॥ २० ॥

गो० टी०—वीथीश्चेति । शृङ्गाटकानि चतुष्पथानि रथ्याः महावीथीः उपरथ्याः अवान्तरवीथीः गृहकान्तरान् गृहकाणि क्षुद्रगृहाणि अन्तराणि प्रच्छन्नद्वाराणि अन्तर्द्वाराणीत्यर्थः । 'तोरणोऽस्त्री बहिर्द्वारं प्रच्छन्नद्वारमन्तरम्' इति वैजयन्ती । अक्लीवत्वमार्षम् ॥ २१ ॥

२१ ] ति० टी०—उपरथ्याः स्वल्पवीथ्यः गृहान्तरान्गृहद्वयमध्यभागान् । चतुष्केषु चतुष्पथेषु ॥ २१ ॥

रा० टी०—चत्वरेष्विति । चत्वरेषु अङ्गणेषु चतुष्केषु चतुष्पथेषु चचार । रामदूतोऽयमिति कपिं राक्षसाः घोषयन्ति अघोषयन्त ॥ २१ ॥

गो० टी०—चत्वरेष्विति । चत्वरेषु चतसृणां रथ्यानां संभेदेषु चतुष्केषु चतुस्तम्भमण्डपेषु चार एव चारीकः स्वार्थे कप्रत्ययः आर्षो दीर्घः ॥ २२ ॥ २३ ॥

२२ ] ति० टी०—'चारीकः' इति पाठेऽपि चार इत्येवार्थः आर्षं साधुत्वम् चारशब्दात्स्वार्थे आर्ष ईकः ॥ २२ ॥

रा० टी०—दीप्यमान इति । लाङ्गूले दीप्यमाने सति अप्रियं तद्दीपनं देव्याः सीतायाः समीपे शंसुः शशंसुः ॥ २२ ॥

गो० टी०—दीप्यमान इति । शंसुः शशंसुः । आर्षो द्विर्वचनाभावः ॥ २४ ॥

२३ ] ति० टी०—तस्य हनूमतो लाङ्गूलाग्रे दीप्यमाने तदप्रियं देव्याः शंसुः शशंसुः ॥ २३ ॥

रा० टी०—तच्छासनाकारमाह—य इति । यः त्वया कृतः संवादो येन सः कपिः प्रदीप्तेन प्रज्वलितेन लाङ्गूलेनोपलक्षितः सन् परिणीयते ॥ २३ ॥

गो० टी०—यस्त्वयेति । परिणीयते परितो नीयते ॥२५॥

२४ ] ति० टी०—परिणीयते परितोऽपनीयते । आत्मापहरणोपमं तादृग्दुःखजनकम् ॥ २४ ॥

रा० टी०—श्रुत्वेति । आत्मापहरणोपमं दुःखप्रापकत्वेन स्वापहरणसदृशं तद्वचनं श्रुत्वा शोकसंतप्ता वैदेही हुताशनं वह्निमुपागमत् मनसा प्राप्नोत् ॥ २४ ॥

गो० टी०—श्रुत्वेति । उपागमत् उपासितवती ॥ २६ ॥

२५] ति० टी०—उपागमद्ध्यानेनोपासितवती । यद्वा तत्र समीपे ज्वलमानमग्निमुपासितवती ॥ २५ ॥

१ तमिति गो. पाठः । २ वीथीरिति गो. पाठः । ३ गृहकान्तरानिति गो. पाठः । ४ चारीक इतीति गो. पाठः । ५ श्लोकोऽयमधिकः गो. पाठे ।

उपतस्थे विशालाक्षी प्रयता हव्यवाहनम् । यद्यस्ति पतिशुश्रूषा यद्यस्ति चरितं तपः ॥ २६ ॥
यदि वा त्वेकपत्नीत्वं शीतो भव हनूमतः ।
[ यदि किंचिदनुक्रोशस्तस्य मय्यस्ति धीमतः । यदि वा भाग्यशेषो मे शीतो भव हनूमतः ॥
यदि मां वृत्तसंपन्नां तत्समागमलालसाम् । स विजानाति धर्मात्मा शीतो भव हनूमतः ॥
यदि मां तारयेदार्यः सुग्रीवः सत्यसंगरः । अस्माद्दुःखाम्बुसंरोधाच्छीतो भव हनूमतः ॥ ]
ततस्तीक्ष्णार्चिरव्यग्रः प्रदक्षिणशिखोऽनलः ॥ २७ ॥
जज्वाल मृगशावाक्ष्याः शंसन्निव शुभं कपेः । हनूमज्जनकश्चैवं पुच्छानलयुतोऽनिलः ॥
ववौ स्वास्थ्यकरो देव्याः प्रालेयानिलशीतलः ॥ २८ ॥
दह्यमाने च लाङ्गूले चिन्तयामास वानरः । प्रदीप्तोऽग्निरयं कस्मान्न मां दहति सर्वतः ॥ २९ ॥
दृश्यते च महाज्वालः करोति च न मे रुजम् । शिशिरस्येव संपातो लाङ्गूलाग्रे प्रतिष्ठितः ॥ ३० ॥

---

रा० टी०—मङ्गलेति । सा सीता महाकपेर्हनुमतः मङ्गलाभिमुखी मङ्गलप्रापिका आसीत् अत एव प्रयता प्रयतचित्ता सती हव्यवाहनं वह्निमुपतस्थे ॥ २५ ॥

गो० टी०—मङ्गलाभिमुखीति । तस्य हनुमतः मङ्गलाभिमुखी अदाहपरा प्रयता शुद्धिमती 'पवित्रः प्रयतः पूतः' इत्यमरः ॥ २७ ॥

२६ ] ति० टी०—प्रयता शुद्धिमती ॥ २६ ॥

रा० टी०—तत्प्रकारमाह—यदीति । यदि पतिशुश्रूषाद्यस्ति मयीति शेषः, तदा हनमतः शरीर इति शेषः, शीतो भव॥२६॥

गो० टी०—यद्यस्तीति । पतिशुश्रूषादिपदं तत्फलपरम् । शीतो भव तेनेति शेषः, एकपत्नीत्वं पातिव्रत्यम् ॥ २८ ॥

२७ ] ति० टी०—एकपत्नीत्वं पातिव्रत्यम् । शीतो भव हुताशनेति शेषः। अस्याः सीताछायात्वेऽपि स्वस्मिंस्तदभेदबुद्धिसत्वान्नैतदुक्त्यसंगतिः । ततः सीतोपासनानन्तरम्, तीक्ष्णार्चिरप्यनलः प्रदक्षिणशिखो जज्वाल ॥ २७ ॥

रा० टी०—तत इति । ततः सीताप्रार्थनानन्तरं तीक्ष्णमर्चिर्यस्य सोऽनलः कपेः शुभं शंसन्निव मृगशावाक्ष्याः सीताया अग्रे जज्वाल ॥ २७ ॥

गो० टी०—यदि किंचिदिति । किंचिदनुक्रोश इति समस्तं पदम् । तस्य रामस्य भाग्यशेषः । इदानीं निरन्तरदुःखानुभवात् भाग्यप्रसक्तिरेव नास्तीति मन्यमानाया इदं वचनम् ॥ २९ ॥

गो० टी०—मम पातिव्रत्यं यदि हनुमान् जानाति तदा शीतो भवेत्याह—यदि मामिति ॥ ३० ॥

गो० टी०—यदि मां तारयेदिति । मत्तारणे इदमेव ज्ञापकमिति भावः ॥ ३१ ॥

गो० टी०—तत इति । ततः सीतोपगमात् । कपेरनलः कपिवालाग्निः मृगशावाक्ष्याः सीतायाः शुभं शंसन्निव प्रदक्षिणशिखो जज्वालेत्यन्वयः ॥ ३२ ॥

२८ ] ति० टी०—तथा सीतायाः कपेः शिवं स्वकृतं शंसन्निवाभूत् । किं च हनुमज्जनकोऽनिलो वायुः पुच्छानलयुतोऽपि देव्याः संमुखे स्वास्थ्यकरः कपेः स्वास्थ्यसूचकः सन्प्रालेयानिलशीतलो ववौ ॥ २८ ॥

रा० टी०—हनुमदिति । हनुमज्जनकः हनुमत उत्पादकः पुच्छानलयुतः प्रालेयानिलः हिमसंबन्धिवायुसदृशशीतलः अनिलः देव्याः सीतायाः स्वास्थ्यकरः सन् ववौ ॥ २८ ॥

गो० टी०—हनुमदिति । अनिलश्च पुच्छानलयुतोऽपि प्रालेयानिलशीतलः हिममारुतवच्छीतलः सन् देव्याः सीतायाः स्वास्थ्यकरः सुखकरः ववौ । अस्मात्परं दह्यमाने च लाङ्गूल इति श्लोकः । अनयोः श्लोकयोर्मध्ये केचन श्लोकाः कतिपयकोशेषु दृश्यन्ते । बहुकोशेष्वदर्शनादर्थाधिक्याभावाच ते अनादरणीयाः ॥ ३३ ॥ ३४ ॥

२९ ] ति० टी०—सर्वतः प्रदीप्तोऽग्निरित्यन्वयः ॥ २९ ॥

रा० टी०—दह्यमान इति । लाङ्गूले दह्यमाने दहिनो वह्नेः अमानः दाहगर्वाभावः यस्मिन् अदह्यमाने सतीत्यर्थः, किंच लाङ्गूले लाङ्गूलसंबन्धिपटे दह्यमाने सति वानरश्चिन्तयामास । अर्थं पृथक् ॥ २९ ॥

रा० टी०—चिन्ताकारमाह—प्रदीप्त इति । सर्वतः प्रदीप्तोऽयमग्निः मां कस्मान्न दहति । अर्थं पृथक् । दृश्यते इति । लाङ्गूलाग्रे प्रतिष्ठितः महाज्वालोऽग्निर्यो दृश्यते स शिशिरस्य हिमस्य संपातः पिण्ड इव मे रुजं पीडां कस्मान्न करोति चकारः कस्मादित्यर्थं ॥ ३० ॥

गो० टी०—प्रदीप्त इति । रुजं पीडाम् । शिशिरस्येव संपातः शिशिरस्य चन्दनोशीरादेः संपातः संघट्ट इव स्थितः । अत्यन्तशीतल इत्यर्थः । एतेन हेतुविशेषं न पश्यामीत्युक्तम् ॥ ३५ ॥

३० ] ति० टी०—लाङ्गूलाग्रे शिशिरस्य हिमस्य संपातः पिण्ड इव प्रतिष्ठित इत्यन्वयः ॥ ३० ॥

---

१ चास्त्येकपत्नीत्वमिति गो० पाठः । २ श्लोकत्रयमिदमधिकं गो० पाठे । ३ ऽपीति गो० पाठः ।

अथ वा तदिदं व्यक्तं यद्दृष्टं प्लवता मया । रामप्रभावादाश्चर्यं पर्वतः सरितां पतौ ॥ ३१ ॥
यदि तावत्समुद्रस्य मैनाकस्य च धीमतः । रामार्थं संभ्रमस्तादृक्किमग्निर्न करिष्यति ॥ ३२ ॥
सीतायाश्चानृशंस्येन तेजसा राघवस्य च । पितुश्च मम सख्येन न मां दहति पावकः ॥ ३३ ॥
भूयः स चिन्तयामास मुहूर्तं कपिकुञ्जरः । कथमस्मद्विधस्येह बन्धनं राक्षसाधमैः ॥ ३४ ॥
प्रतिक्रियाऽस्य युक्ता स्यात्सति मह्यं पराक्रमे । ततश्छित्त्वा च तान्पाशान्वेगवान्वै महाकपिः ॥ ३५ ॥
उत्पपाताथ वेगेन ननाद च महाकपिः । पुरद्वारं ततः श्रीमाञ्शैलशृङ्गमिवोन्नतम् ॥ ३६ ॥
विभक्तरक्षःसंबाधमाससादानिलात्मजः । स भूत्वा शैलसंकाशः क्षणेन पुनरात्मवान् ॥ ३७ ॥
ह्रस्वतां परमां प्राप्तो बन्धनान्यवशातयत् । विमुक्तश्चाभवच्छ्रीमान्पुनः पर्वतसंनिभः ॥ ३८ ॥
वीक्षमाणश्च ददृशे परिघं तोरणाश्रितम् । स तं गृह्य महाबाहुः कालायसपरिष्कृतम् ॥
रक्षिणस्तान्पुनः सर्वान्सूदयामास मारुतिः ॥ ३९ ॥

३१ ] ति० टी०—तत्रोपपत्तिं चिन्तयति—अथवेति । यद्यस्मात्प्लवता मया सरितां पतौ रामप्रभावात्समुद्रे पर्वतरूपमाश्चर्यं दृष्टम् । ततो रामप्रभावादेवेदमपीत्यर्थः ॥ ३१ ॥

रा० टी०—तत्संभावनामाह—अथवेति । यत् यस्मात् रामप्रभावात् सरितां पतौ सरितां पतौ समुद्रे पर्वतः पर्वतरूपमाश्चर्यं प्लवता मया दृष्टं तत्तस्मादेव इदं वह्निशैत्यं व्यक्तं प्रकटीभूतम् ॥ ३१ ॥

गो० टी०—हेतुविशेषान्निश्चिनोति—अथवेत्यादिना । प्लवता मया सरितां पतौ । आर्षं विसंज्ञाकार्यम् । समुद्रमध्ये पर्वतः पर्वतरूपं यदाश्चर्यम् अद्भुतरूपम् वस्तु दृष्टं तद्वदिदमग्नेः शैत्यं रामप्रभावात् संजातं व्यक्तम् ॥ ३६ ॥

३२ ] ति० टी०—ननु समुद्रप्रेरणेन मैनाकोत्थानं प्रयुज्यते, अग्नेस्तु स्वभाववैपरीत्यं कुतस्तत्राह—यदीति । तावदिति वाक्यालंकारे । रामार्थं रामोपकारार्थं तादृक्संभ्रमो यद्यादरपूर्वकं त्वरा यदि, तदा रामेण नित्यमुपासितोऽग्नी रामोपकारार्थं कथमपि शैत्यं किं न करिष्यतीत्यर्थः ॥ ३२॥

रा० टी०—तदेव द्रढयन्नाह—यदीति । रामार्थं समुद्रस्य मैनाकस्य च यदि संभ्रमः मत्कर्मकादरः तर्हि अग्निः किं न करिष्यति संभ्रममिति शेषः करिष्यत्येवेत्यर्थः ॥ ३२ ॥

गो० टी०—एतदेवोपपादयति—यदीति । संभ्रमः त्वरा । किमग्निर्न करिष्यति संभ्रममिति शेषः । रामार्थं मैनाकस्य संभ्रमो यदि स्यादग्नेस्तादृशः संभ्रमः कुतो न भविष्यतीत्यर्थः॥३७॥

३३ ] ति० टी०—आनृशंस्यमाश्रितजनदया ॥ ३३ ॥

रा० टी०—सीताया इति । सीतायाः आनृशंस्येन स्वाभाविकातिशयकृपया[1] पावको मां न दहति ॥ ३३ ॥

गो० टी०—सीताया इति । आनृशंस्येन दयया ॥ ३८ ॥

३४]ति०टी०—चिन्तयामास अनन्तरकर्तव्यमिति शेषः३४

रा० टी०—भूय इति । मुहूर्तं भूयः संचिन्तयामास । अर्धं पृथक् । चिन्ताकारमाह—कथमिति । अस्मद्विधस्य रामकृपापात्रस्येत्यर्थः, राक्षसाधमैर्बन्धनं कथं न संभवतीत्यर्थः, अतः मह्यं मम पराक्रमे सति अस्य बन्धनस्य प्रतिक्रिया मत्सदृशाचरणं युक्ता स्यात् ॥ ३४ ॥

गो० टी०—भूय इति । स चिन्तयामास अनन्तरकर्तव्यमिति शेषः ॥ ३९ ॥

३५ ] ति० टी०—प्रतिक्रिया लङ्कादहनरूपा । मह्यं मम ॥ ३५ ॥

रा० टी०—तत इति । ततश्चिन्तानन्तरं महाकपिः पाशान् बन्धनानि छित्त्वा अथ समनन्तरमुत्पपात ननाद च । क्रियाभेदान्न पौनरुक्त्यम् ॥ ३५ ॥

३६ ] ति० टी०—उत्पपात पुच्छाग्निना बन्धनेन च सहैवेति शेषः ॥ ३६ ॥

रा० टी०—पुरेति । ततोऽनन्तरं विभक्ता निवृत्ता रक्षःसंबाधा राक्षससंमर्दो यस्मिन् तत् पुरद्वारम् आससाद ॥३६॥

गो० टी०—चिन्तितमेवाह—उत्पपातेति । पुरद्वारमिति विभक्तरक्षस्संबाधं निवृत्तरक्षस्संचारम् ॥ ४० ॥

३७] ति०टी०—विभक्तरक्षःसंबाधं रक्षःसंमर्दरहितम्॥३७॥

रा० टी०—सिंहावलोकनन्यायेन बन्धनच्छेदप्रकारं वर्णयन्नाह—स इति । शैलसंकाशो भूत्वा विद्यमानो यो हनुमान् सः ह्रस्वतां प्राप्तः सन् बन्धनानि अवशातयत् न्यवर्तयत् ॥ ३७ ॥

३८–३९ ] ति० टी०—शैलसंकाशो महान्भूत्वा ह्रस्वतां प्राप्त इत्यनेन देहसौक्ष्म्यात्स्वयमेव बन्धगलनमुक्तम् एवंरीत्या बन्धनान्यवशातयद्दूरीकृतवान् विमुक्त्यनन्तरं पुनः पर्वताकारोऽभवत् ॥ ३८ ॥ ३९ ॥

रा० टी०—विमुक्त इति । इति विमुक्तः बन्धनान्निर्गतो हनुमान् पुनः पर्वतसंनिभोऽभवत् वीक्ष्यमाणः सन् परिघं ददृशे च ॥ ३८ ॥

रा० टी०—स इति । स हनुमान् कालायसपरिष्कृतं

[1] एतदादिः सार्धः श्लोकः गो० नास्ति ।

स तान्निहत्वा रणचण्डविक्रमः समीक्षमाणः पुनरेव लङ्काम् ।
प्रदीप्तलाङ्गूलकृतार्चिमाली प्रकाशितादित्य इवार्चिमाली ॥ ४० ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये सुन्दरकाण्डे त्रिपञ्चाशः सर्गः ॥ ५३ ॥

## चतुष्पञ्चाशः सर्गः ।

लङ्कादहनस्य कार्यशेषत्वं निर्धारयन्हनुमान्निर्गत्य विभीषणभवनवर्ज्यमखिललङ्कां ददाह । लङ्कादहनदर्शनेन विस्मिता देवगन्धर्वादयः परं हर्षमाजग्मुः ।

वीक्षमाणस्ततो लङ्कां कपिः कृतमनोरथः । वर्धमानसमुत्साहः कार्यशेषमचिन्तयत् ॥ १ ॥
किं नु खल्ववशिष्टं मे कर्तव्यमिह सांप्रतम् । यदेषां रक्षसां भूयः संतापजननं भवेत् ॥ २ ॥
वनं तावत्प्रमथितं प्रकृष्टा राक्षसा हताः । बलैकदेशः क्षपितः शेषं दुर्गविनाशनम् ॥ ३ ॥
दुर्गे विनाशिते कर्म भवेत्सुखपरिश्रमम् । अल्पयत्नेन कार्येऽस्मिन्मम स्यात्सफलः श्रमः ॥ ४ ॥
यो ह्ययं मम लाङ्गूले दीप्यते हव्यवाहनः । अस्य संतर्पणं न्याय्यं कर्तुमेभिर्गृहोत्तमैः ॥ ५ ॥

---

कालायसोपादानकं तं परिघं गृह्य गृहीत्वा रक्षिणो द्वारपालकान् सूदयामास जघान ॥ ३९ ॥

गो० टी०—स इति । अवशातयत् अवाशातयत् । अच्यावयदित्यर्थः ॥ ४१–४३ ॥

४० ] ति० टी०—अर्चिमालीत्यत्र नीरेफतार्षी ॥ ४० ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये सुन्दरकाण्डे त्रिपञ्चाशः सर्गः ॥ ५३ ॥

रा० टी०—स इति । स हनुमान् तान् राक्षसान् निहत्वा निहत्य प्रदीप्तलाङ्गूलेन कृता या अर्चिमाला अर्चिषां समूहः तद्वान् स हनुमान् अर्चिमाली आदित्य इव प्रकाशत प्राकाशत अत एव निर्देशादर्चिशब्दोऽपि कल्प्यते ॥ ४० ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ सुन्दरकाण्डे त्रिपञ्चाशत्तमः सर्गः ॥ ५३ ॥

गो० टी०—स तानिति । निहत्वा निहत्य ल्यबभाव आर्षः । लाङ्गूलकृतार्चिमाली लाङ्गूले कृतज्वालामालः । अर्चिमाली तेजःपुञ्जवानादित्य इव प्रकाशत प्राकाशत । अनित्यत्वादडभावः अर्चीतीकारान्तत्वमार्षम् ॥ ४४ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने त्रिपञ्चाशः सर्गः ॥ ५३ ॥

---

१ ] ति० टी०—वीक्षमाण इति ॥ १ ॥

रा० टी०—हनुमत्कर्तृकलङ्काभस्मीकरणं वर्णयितुमाह—वीक्षमाण इत्यादिभिः । वर्धमानः समुत्साहो यस्य स हनुमान् कार्यशेषम् अवशिष्टकृत्यम् अचिन्तयत् ॥ १ ॥

गो० टी०—वीक्षमाण इत्यादि । कृतमनोरथः पर्याप्तमनोरथः ॥ १ ॥ २ ॥

२] ति० टी०—यदेषां भूयः संतापजननं भवेत्तादृशमवशिष्टं सांप्रतं कर्तव्यं किमिति कार्यशेषमचिन्तयदित्यर्थः ॥ २ ॥

रा० टी०—चिन्ताकारमाह—किमित्यादिभिः । यत्कर्म रक्षसां भूयः संतापजननं भवेत् तदवशिष्टं किमपि कर्म कर्तव्यम् ॥ २ ॥

३ ] ति० टी०—तदेव निश्चिनोति—शेषं दुर्गविनाशनमिति ॥ ३ ॥

रा० टी०—अवशिष्टमेव प्रकटयन्नाह—वनमिति । प्रकृष्टाः बलवन्तः राक्षसाः हताः बलैकदेशः सेनायाः कश्चिदंशः क्षयितो विनाशितश्च अतः दुर्गविनाशनमेव शेषं पश्यामीति शेषः ॥ ३ ॥

गो० टी०—वनमिति । बलैकदेशः सेनैकदेशः क्षपितः नाशितः दुर्गविनाशनं पुरविनाशनम् शेषम् अवशिष्टम् ॥ ३ ॥

४ ] ति० टी०—कर्म समुद्रलङ्घनादि । सुखपरिश्रमं सफलप्रयासम् तपश्चर्यादिवदित्यर्थः । उक्तमेव विवृणोति—अल्पेति । अस्मिन्सीतान्वेषणप्रवृत्तिरूपे कार्ये यो मया कृतः श्रमः स त्वल्पेन यत्नेन स्वल्पयत्नेन साध्येन करिष्यमाणलङ्कादाहेन सफलो भविष्यति ॥ ४ ॥

रा० टी०—विनाशनफलमाह—दुर्ग इति । दुर्गे विनाशिते सति कर्म मम क्रिया सुखं सुखरूपः परिश्रमो यस्मिन् तत् भवेत् अतः अल्पयत्नेन साध्ये अस्मिन् दुर्गविनाशनरूपे कार्ये निष्पन्ने सतीति शेषः, मम श्रमः सफलः स्यात् ॥ ४ ॥

गो० टी०—दुर्ग इति । कर्म पूर्वोक्तं वनभङ्गादिकम् समुद्रलङ्घनं दूत्यं वा सुखपरिश्रमं सफलायासम् शक्यमेतदित्याह—अल्पयत्नेनेति । अस्मिन्कार्ये कृते सतीति शेषः ॥ ४ ॥

५ ] ति० टी०—तदेवाह—यो हीति । न्याय्यम् स्वस्य पीडाया अकरणादिति भावः ॥ ५ ॥

रा० टी०—सफलत्वे हेतुमाह—य इति । मम लाङ्गूले दीप्यते प्रकाशते यो हव्यवाहनो वह्निः अस्य संतर्पणमेभिर्गृहोत्तमैः कर्तुं न्याय्यम् ॥ ५ ॥

ततः प्रदीप्तलाङ्गूलः सविद्युदिव तोयदः । भवनाग्रेषु लङ्काया विचचार महाकपिः ॥ ६ ॥
गृहाद्गृहं राक्षसानामुद्यानानि च वानरः । वीक्षमाणो ह्यसंत्रस्तः प्रासादांश्च चचार सः ॥ ७ ॥
अवप्लुत्य महावेगः प्रहस्तस्य [1]निवेशनम् । अग्निं तत्र [2]विनिक्षिप्य श्वसनेन समो बली ॥ ८ ॥
ततोऽन्यत्पुप्लुवे वेश्म महापार्श्वस्य वीर्यवान् । मुमोच हनुमानग्निं कालानलशिखोपमम् ॥ ९ ॥
वज्रदंष्ट्रस्य च तथा पुप्लुवे स महाकपिः । शुकस्य च महातेजाः सारणस्य च धीमतः ॥ १० ॥
तथा चेन्द्रजितो वेश्म ददाह हरियूथपः । जम्बुमालेः सुमालेश्च ददाह भवनं ततः ॥ ११ ॥
रश्मिकेतोश्च भवनं सूर्यशत्रोस्तथैव च । ह्रस्वकर्णस्य दंष्ट्रस्य रोमशस्य च रक्षसः ॥ १२ ॥
युद्धोन्मत्तस्य मत्तस्य ध्वजग्रीवस्य रक्षसः । विद्युज्जिह्वस्य घोरस्य तथा हस्तिमुखस्य च ॥ १३ ॥
करालस्य [3]विशालस्य शोणिताक्षस्य चैव हि । कुम्भकर्णस्य भवनं मकराक्षस्य चैव हि ॥ १४ ॥
[4]नरान्तकस्य कुम्भस्य निकुम्भस्य [5]महात्मनः । यज्ञशत्रोश्च भवनं ब्रह्मशत्रोस्तथैव च ॥ १५ ॥
वर्जयित्वा महातेजा विभीषणगृहं प्रति । क्रममाणः क्रमेणैव ददाह हरिपुंगवः ॥ १६ ॥
तेषु तेषु महार्हेषु भवनेषु महायशाः । गृहेष्वृद्धिमतामृद्धिं ददाह [6]कपिकुञ्जरः ॥ १७ ॥
सर्वेषां समतिक्रम्य राक्षसेन्द्रस्य वीर्यवान् । आससादाथ लक्ष्मीवान्रावणस्य विनेशनम् ॥ १८ ॥
ततस्तस्मिन्गृहे मुख्ये नानारत्नविभूषिते । मेरुमन्दरसंकाशे [7]नानामङ्गलशोभिते ॥ १९ ॥
प्रदीप्तमग्निमुत्सृज्य लाङ्गूलाग्रे प्रतिष्ठितम् । ननाद हनुमान्वीरो युगान्तजलदो यथा ॥ २० ॥

---

गो० टी०—केनोपायेनेदं सुकरमित्याशङ्क्य तमाह—यो हीति । यः अग्निः अतिशीतलतया मम महोपकारं कृतवान् अस्य संतर्पणं न्याय्यमित्यर्थः ॥ ९ ॥

६ ] ति० टी०—तोयदः संध्यातोयदः हनूमतो रक्तवर्णत्वात् ॥ ६ ॥

रा० टी०—तत इति । सविद्युत्तोयदो मेघ इव लङ्काया भवनाग्रेषु विचचार ॥ ६ ॥

गो० टी०—तत इत्यादि । अत्र बन्धविस्रंसनाय पूर्वं तनुसंकोचे कृतेऽपि कार्यार्थमग्निवर्तिः स्थापितेति बोध्यम् । सविद्युदिव तोयद इति सर्वत आवृत्य सञ्चारे दृष्टान्तः ॥६–९॥

७ ] ति० टी०—उद्यानानि गृहारामाः ॥ ७ ॥

रा० टी०—गृहादिति । राक्षसानां गृहात् उन्नतभवनात् गृहम् उद्यानानि गृहारामांश्च वीक्षमाणो हनूमान् प्रासादान् चचार ॥ ७ ॥

८–१३ ] ति० टी०—प्रहस्तस्य प्रधानमन्त्रित्वादादौ तद्गृहेऽग्निप्रक्षेपः प्रथमं तत्संभावनस्यौचित्यात् ॥ ८–१३ ॥

रा० टी०—तत्प्रकारमाह—अवप्लुत्येत्यादिभिः । महावेगो हनूमान् प्रहस्तस्य मुख्यमन्त्रिणः निवेशनं भवनं अवप्लुत्य महापार्श्वस्य वेश्म पुप्लुवे तत्राग्निं मुमोच च । श्लोकद्वयमेकान्वयि ॥ ८ ॥ ९ ॥

रा० टी०—वज्रेति ॥ १० ॥

गो० टी०—वज्रदंष्ट्रस्येत्यादि सार्धश्लोकः ॥ १० ॥

रा० टी०—तथेति ॥ ११ ॥

गो० टी०—जम्बुमालेरित्यर्धम् ॥ ११ ॥

रा० टी०—रश्मीति ॥ १२ ॥

रा० टी०—युद्धोन्मत्तस्येति ॥ १३ ॥

गो० टी०—रश्मिकेतोरित्यादिपञ्चश्लोकी ॥ १२–१५ ॥

१४–१५ ] ति० टी०—भवनं ददाहेत्यनुकर्षः ॥ १४ ॥ १५ ॥

रा० टी०—करालस्येति ॥ १४ ॥

रा० टी०—नरान्तकस्येति ॥ १५ ॥

१६ ] ति० टी०—विभीषणेन स्वस्य वधतो रक्षणाद्विभीषणगृहं वर्जयित्वा प्रतिगृहं क्रममाण इत्यन्वयः ॥ १६ ॥

रा० टी०—वर्जयित्वेति । हरिपुङ्गवो हनूमान् विभीषणगृहं प्रति वर्जयित्वा क्रमेण मुख्यामुख्यानुपूर्व्या क्रममाणः सन् ददाह ॥ १६ ॥

गो० टी०—वर्जयित्वेति । प्रतिवर्जयित्वेति संबन्धः ॥ १६ ॥

१७–२० ] ति० टी०—पूर्वं रावणाद्भीतोऽप्यग्निः सीतातेजःसंबन्धेन निःशङ्कं ददाहेत्युक्तं प्राक् ॥ १७–२० ॥

रा० टी०—तेष्विति । तेषु तेषु भवनेषु ऋद्धिमतां राक्षसानाम् ऋद्धिं ददाह ॥ १७ ॥

गो० टी०—तेषु तेष्विति । भवनेष्विति गृहविशेषणं समृद्धिमत्परम् । ऋद्धिं मणिमुक्ताप्रवालादिकाम् ॥ १७ ॥ १८ ॥

रा० टी०—सर्वेषामिति । सर्वेषां भवनानि समतिक्रम्य रावणस्य निवेशनमाससाद ॥ १८ ॥

रा० टी०—तत इति । तस्मिन् रावणीये मुख्ये गृहे

---

१ निवेशने इति रा. पाठः । २ स निक्षिप्येति गो. पाठः । ३ पिशाचस्येति गो. पाठः । ४ श्लोकार्धयोर्व्यत्यासः गो. पाठे । ५ दुरात्मन इति गो. पाठः । ६ स महाकपिरिति गो. पाठः । ७ सर्वेति गो. पाठः ।

श्वसनेन च संयोगादतिवेगो महाबलः । कालाग्निरिव जज्वाल प्रावर्धत हुताशनः ॥ २१ ॥
प्रदीप्तमग्निं पवनस्तेषु वेश्मसु चारयन् । [ अभूच्छ्वसनसंयोगादतिवेगो हुताशनः । ]
तानि काञ्चनजालानि मुक्तामणिमयानि च ॥ २२ ॥
भवनान्यवशीर्यन्त रत्नवन्ति महान्ति च । तानि भग्नविमानानि निपेतुर्वसुधातले ॥ २३ ॥
भवनानीव सिद्धानामम्बरात्पुण्यसंक्षये । संजज्ञे तुमुलः शब्दो राक्षसानां प्रधावताम् ॥ २४ ॥
स्वे स्वे गृहपरित्राणे भग्नोत्साहोज्झितश्रियाम् । नूनमेषोऽग्निरायातः कपिरूपेण हा इति ॥ २५ ॥
क्रन्दन्त्यः सहसा पेतुः स्तनन्धयधराः स्त्रियः । काश्चिदग्निपरीताङ्ग्यो हर्म्येभ्यो मुक्तमूर्धजाः ॥ २६ ॥
पतन्त्यो रेजिरेऽभ्रेभ्यः सौदामन्य इवाम्बरात् । वज्रविद्रुमवैदूर्यमुक्तारजतसंहतान् ॥ २७ ॥
विचित्रान्भवनाद्धातून्स्यन्दमानान्ददर्श सः । नाग्निस्तृप्यति काष्ठानां तृणानां च यथा तथा ॥ २८ ॥

---

लाङ्गूलाग्रे प्रतिष्ठितं प्रदीप्तमग्निमुत्सृज्य युगान्तजलद इव ननाद। श्लोकद्वयमेकान्वयि ॥ १९ ॥ २० ॥

गो० टी०–तत इत्यादि । सर्वमङ्गलशोभितं सर्वमङ्गलद्रव्ययुक्तं ॥ १९ ॥ २० ॥

२१ ] ति० टी०–श्वसनेन संयोगात्सीताश्वासमिश्रितवायुसंयोगात्। अत एव वायोरपि निर्भयता ॥ २१ ॥

रा० टी०–श्वसनेनेति । श्वसनेन महावायुना संयोगाद्धेतोः महाबलो हुताशनः कालाग्निरिव जज्वाल पवनस्तु प्रदीप्तमग्निं वेश्मसु चारयन् संक्षिपन् सन् प्रावर्धत । सार्धश्लोक एकान्वयी ॥ २१ ॥

गो० टी०–श्वसनेनेति । पूर्वं रावणादिभीतावग्न्यनिलौ इदानीं राक्षसक्षयं देवबलोदयं च प्रत्यासन्नं विदित्वा निश्शङ्काबभूतामिति भावः ॥ २१–२४ ॥

२२ ] ति० टी०–चारयन्निति हेतौ शता । यतश्चारयति स्म ततश्चारणाद्धेतोस्तानि व्यशीर्यन्तेत्यन्वयः ॥ २२ ॥

रा० टी०–तानीति । काञ्चनजालानि महान्ति भवनानि च व्यशीर्यन्त । काञ्चनजालानीति बहुव्रीहिणा भवनविशेषणं वा । अर्धद्वयमेकान्वयि ॥ २२ ॥

२३–२४ ] ति० टी०–भग्नविमानानि भग्नप्रासादानि ॥ २३ ॥ २४ ॥

२५ ] ति० टी०–भग्नोत्साहाश्च ते उज्झितश्रियश्चेत्यर्थः । हा इति तुमुलः शब्दः संजज्ञे इत्यन्वयः ॥ २५ ॥

रा० टी०–तानीति । भग्नानि विमानानि येषां तानि भवनानि पुण्यसंक्षये सिद्धानां भवनानीव वसुधातले निपेतुः ॥२३॥

रा० टी०–संजज्ञ इति । भग्नः उत्सवो येषाम् उज्झिता श्रीर्येषां ते एव ते इति कर्मधारयः स्वे स्वे गृहपरित्राणे प्रधावतां राक्षसानां कपिरूपेण एषोऽग्निरेवायातः हा अतिकष्टम् इति तुमुलः शब्दः संजज्ञे प्रादुर्बभूव । सार्धश्लोक एकान्वयी ॥ २४ ॥ २५ ॥

गो० टी०–संजज्ञ इत्यादि । 'स्वगृहस्य परित्राणे भग्नोत्साहगतश्रियाम्' इति पाठः । स्वगृहस्य परित्राणे भग्नोत्साहोऽर्जितश्रियामिति पाठे उत्साहश्च ऊर्जितश्रीश्च उत्साहोर्जितश्रियौ भग्ने उत्साहोर्जितश्रियौ येषामिति विग्रहः । स्वगृहस्य परित्राणे भग्नोत्साहानां श्रीमतां राक्षसानामिति वार्थः । हा इति "निपात एकजनाङ्" इति प्रकृतिभावः ॥ २५ ॥

२६ ] ति० टी०–पेतुः अग्नाविति शेषः ॥ २६ ॥

रा० टी०–क्रन्दन्त्य इति । अग्निपरीताङ्ग्यः स्तनन्धयधराः गृहीतशिशवः काश्चित् स्त्रियः क्रन्दन्त्यः सत्यः हर्म्येभ्यः पेतुः अभ्रेभ्यः पतन्त्यः सौदामिन्य इव अम्बरात् आकाशवर्तिप्रासादात् पतन्त्यो रेजिरे । सार्धश्लोक एकान्वयी ॥ २६ ॥

गो० टी०–क्रन्दन्त्य इति । काश्चित् स्त्रियः हर्म्येभ्यः पेतुरिति संबन्धः । सुकेशवंश्यानां जननमात्रे रुद्रेण मातृतुल्यत्ववरप्रदानेऽपि तदितरेषु तदभावात् स्तनन्धयधरत्वम् । अन्यजातीयाश्च राक्षसास्तत्र सन्त्येव ॥ २६ ॥

२७ ] ति० टी०–अभ्रेभ्यो मेघेभ्यः ॥ २७ ॥

रा० टी०–वज्रेति । वज्रादिसंहतान् वज्रादिसहितान् भवनात् स्यन्दमानान् विचित्रान् धातून् स्वर्णादीन् स हनुमान् ददर्श ॥ २७ ॥

गो० टी०–पतन्त्य इति । अम्बरात् पतन्त्यः अभ्रेभ्यो मेघेभ्यः पतन्त्यः सौदामिन्यः तडित इव रेजिरे ॥ २७ ॥

गो० टी०–वज्रेति । भवनानिति पुंल्लिङ्गत्वमार्षम् । धातून् सुवर्णादीन् । 'धातुस्तु गैरिके स्वर्णे' इति दर्पः । स्यन्दमानान् स्यन्दतः । अग्नितप्तत्वेन द्रवीभूतस्वर्णादीनित्यर्थः ॥ २८॥

२८ ] ति० टी०–अग्निसंबद्धाद्भवनाद्धेमरजतादिधातून्स्यन्दमानान्ददर्श । यथा काष्ठतृणादिदाहादग्निर्न तृप्यति तथा राक्षसवधे क्रियमाणे हनुमान्किंचिदपि न तृप्यति ॥ २८ ॥

रा० टी०–नेति । यथा काष्ठादीनां दाह इति शेषः अग्निः किंचिन्न तृप्यति तथा राक्षसेन्द्राणां वधे हनुमान् न तृप्यति सकलराक्षसवधमिच्छतीत्यर्थः तेन सीतादुःखदर्शनासहिष्णुत्वं व्यञ्जितम् हनुमान् विशस्तानां हिंसितानां राक्षसानां धारणे

---

१ अचारयदिति गो. पाठः । २ श्लोकार्धमेतदधिकं गो. पाठे । ३ अवेति गो. पाठः । ४ स्वगृहस्येति गो. पाठः । ५ ऊर्जितेति गो. पाठः । ६ परीतेभ्य इति गो. पाठः । ७ सौदामिन्य इति गो. पाठः । ८ संहितानिति गो. पाठः । ९ भवनानिति गो. पाठः ।

हनूमान्राक्षसेन्द्राणां वधे किंचिन्न तृप्यति । न हनूमद्विशस्तानां राक्षसानां वसुंधरा ॥ २९ ॥
हनूमता वेगवता वानरेण महात्मना । लङ्कापुरं प्रदग्धं तद्रुद्रेण त्रिपुरं यथा ॥ ३० ॥

ततः स लङ्कापुरपर्वताग्रे समुत्थितो भीमपराक्रमोऽग्निः ।
प्रसार्य चूडावलयं प्रदीप्तो हनूमता वेगवतोपसृष्टः ॥ ३१ ॥

युगान्तकालानलतुल्यरूपः समारुतोऽग्निर्ववृधे दिवस्पृक् ।
विधूमरश्मिर्भवनेषु सक्तो रक्षःशरीराज्यसमर्पितार्चिः ॥ ३२ ॥

आदित्यकोटीसदृशः सुतेजा लङ्कां समस्तां परिवार्य तिष्ठन् ।
शब्दैरनेकैरशनिप्ररूढैर्भिन्दन्निवाण्डं प्रबभौ महाग्निः ॥ ३३ ॥

तत्राम्बरादग्निरतिप्रवृद्धो रूक्षप्रभः किंशुकपुष्पचूडः ।
निर्वाणधूमाकुलराजयश्च नीलोत्पलाभाः प्रचकाशिरेऽभ्राः ॥ ३४ ॥

---

इति शेषः वसुन्धरा च न तृप्यति निहतसर्वराक्षसवधरणमाकाङ्क्षतीत्यर्थः, तेन पतिवियोगजनितस्वसुतादुःखहेतुकदुःखाक्रान्तत्वं तस्याः सूचितम् । सार्धश्लोक एकान्वयी ॥२८॥२९॥

गो० टी०–नाग्निरिति । काष्ठानां तृणानां चेति संबन्धसामान्ये षष्ठी काष्ठैस्तृणैश्चेत्यर्थः "पूरणगुण–" इत्यादिना षष्ठी वा । अग्निः काष्ठैस्तृणैश्च न तृप्यति हरियूथपः अग्नेः न तृप्यति अग्निना न तृप्यति अग्निप्रक्षेपणेन न तृप्यतीत्यर्थः । एवं वसुन्धरा विशस्तानां राक्षसानां विशस्तैः राक्षसैः न तृप्यतीति योज्यम् । अनेन राक्षसशवाकीर्णा भूरभूदित्यर्थः ॥ २९ ॥

२९-३० ] ति० टी०–वसुंधरा नेति मृतराक्षसानां शयनाय लङ्काभूमिर्न पर्याप्ताऽभूदिति शेषः ॥ २९ ॥ ३० ॥

रा० टी०–हनूमतेति । रुद्रेण त्रिपुरमिव हनुमता लङ्कापुरं प्रदग्धम् ॥ ३० ॥

गो० टी०–क्वचिदिति । शिखाः ज्वालाः ॥ ३० ॥

गो०टी०–हनूमतेति । ननु एतावत्पर्यन्तमल्पबलतयाऽपि तस्य हनुमतः कथमेतादृशी शक्तिरित्यत्राह—रुद्रेण त्रिपुरं यथेति । 'विष्णुरात्मा भगवतो भवस्यामिततेजसः । तस्माद्धनुर्ज्यासंस्पर्शं स विषेहे महेश्वरे ॥' इत्युक्तरीत्या विष्ण्वाप्यायिततेजसा रुद्रेण त्रिपुरं यथा दग्धं तथाऽनेनेति भावः ॥३१॥

३१ ] ति० टी०–लङ्कापुरपर्वताग्रे लङ्कापुराधारभूतत्रिकूटाचलशिखरे । चूडावलयं शिखासमूहम् । प्राप्तोऽभूदिति शेषः ॥ ३१ ॥

रा० टी०–तत इति । लङ्कापुरपर्वताग्रे त्रिकूटाचलशृङ्गे इत्यर्थः, हनूमतोपसृष्टः अत एव समुत्थितोऽग्निः चूडावलयं शिखासमूहं प्रसार्य प्रदीप्तो बभूवेति शेषः ॥ ३१ ॥

गो० टी०–ततस्त्विति । लङ्कापुरपर्वताग्रे लङ्कापुराधारत्रिकूटशिखरे । तद्वर्तित्वात्तस्यास्तथा निर्देशः । पर्वताग्रस्थलङ्कापुर इति परनिपातो वा । चूडावलयं ज्वालाजालमित्यर्थः । तत् प्रसार्य विस्तार्य । प्रदीप्तः विसृष्टः गृहेष्विति शेषः ॥ ३२ ॥

३२ ] ति० टी०–विधूमरश्मिर्विधूमज्वालः । रक्षःशरीररूपाज्येन समर्पिता संपादितार्चिर्ज्वालाविशेषो यस्य सः॥३२॥

रा० टी०–युगान्तेति । भवनेषु राक्षसगृहेषु सक्तः रक्षःशरीराज्येन समर्पितं प्राप्तमर्चिर्येन विधूमरश्मिः समारुतः मारुतसहितः युगान्तकालानलतुल्यरूपोऽग्निः दिविस्पृक् सन् ववृधे ॥ ३२ ॥

गो० टी०–युगान्तेति । दिविस्पृक् अभ्रंलिहः "हलदन्तात्सप्तम्याः संज्ञायाम्" "हृद्युभ्यां ङेरलुग्वक्तव्यः" इति सप्तम्या अलुक् । रक्षःशरीराज्यसमर्पितार्चिः रक्षश्शरीराण्येवाज्यानि तैः समर्पितार्चिः उत्थापितज्वालः ॥ ३३ ॥

३३ ] ति० टी०–तिष्ठन् अभूदिति शेषः । अशनिप्ररूढैरशनिवत्प्रगल्भैः । महाग्निः प्रलयाग्निः ॥ ३३ ॥

रा० टी०–आदित्येति । अशनिप्ररूढैः अशनिशब्दवत्प्रकटितैरनेकैः शब्दैः अण्डं ब्रह्माण्डं भिन्दन् महाग्निः प्रलयवह्निरिव आदित्यकोटीसदृशः सुतेजा वह्निः लङ्कां परिवार्य तिष्ठन् प्रबभौ ॥ ३३ ॥

गो० टी०–आदित्यकोटीति । समाप्तां निःशेषाम् । अशनिप्ररूढैः अशनिवन्निष्ठुरैः । अण्डं ब्रह्माण्डम् ॥ ३४ ॥

३४ ] ति० टी०–आम्बरादम्बरपर्यन्तम् । रूक्षप्रभः क्रूरकान्तिः । किंशुकपुष्पवच्चूडा शिखा यस्य सः । निर्वाणानामथो विच्छिन्नानां खे एव वर्तमानानां धूमानामाकुला राजयो नीलोत्पलाभा अभ्राकाराः सत्यः प्रचकाशिरे ॥ ३४ ॥

रा० टी०–तत्रेति । तत्र तस्मिन् समये अम्बरात् अम्बरं प्राप्य रूक्षा राक्षसविघातकर्तृत्वेन क्रूरा प्रभा यस्य सः किंशुकपुष्पस्येव चूडा यस्य सोऽग्निः अतिप्रवृद्धो बभूवेति शेषः, नी-

---

१ क्वचित्किंशुकसंकाशाः क्वचिच्छाल्मलिसन्निभाः । क्वचित्कुङ्कुमसंकाशाः शिखा वह्नेश्चकाशिरे ॥ इति गो. पाठः । २ विसृष्ट इति गो. पाठः । ३ वेग इति गो. पाठः । ४ दिविस्पृगिति गो. रा. पाठः ।

वज्री महेन्द्रस्त्रिदशेश्वरो वा साक्षाद्यमो वा वरुणोऽनिलो वा ।
[1]रौद्रोऽग्निरर्को धनदश्च सोमो न वानरोऽयं स्वयमेव कालः ॥ ३५ ॥
किं ब्राह्मणः सर्वपितामहस्य लोकस्य धातुश्चतुराननस्य ।
इहागतो वानररूपधारी रक्षोपसंहारकरः प्रकोपः ॥ ३६ ॥
किं वैष्णवं वा कपिरूपमेत्य रक्षोविनाशाय परं सुतेजः ।
अचिन्त्यमव्यक्तमनन्तमेकं स्वमायया सांप्रतमागतं वा ॥ ३७ ॥
इत्येवमूचुर्बहवो विशिष्टा रक्षोगणास्तत्र समेत्य सर्वे ।
सप्राणिसङ्घां सगृहां सवृक्षां दग्धां पुरीं तां सहसा समीक्ष्य ॥ ३८ ॥
ततस्तु लङ्का सहसा प्रदग्धा सराक्षसा साश्वरथा सनागा ।
सपक्षिसङ्घा समृगा सवृक्षा रुरोद दीना तुमुलं सशब्दम् ॥ ३९ ॥
हा तात हा पुत्रक कान्त मित्र हा [3]जीवितेशाङ्ग हतं सुपुण्यम् ।
रक्षोभिरेवं बहुधा ब्रुवद्भिः शब्दः कृतो घोरतरः सुभीतः ॥ ४० ॥
हुताशनज्वालसमावृता सा हतप्रवीरा परिवृत्तयोधा ।
हनूमतः क्रोधबलाभिभूता बभूव शापोपहतेव लङ्का ॥ ४१ ॥

---

लोत्पलाभाः निर्वाणानां सर्वत्र प्रसृतानां धूमानाम् आकुलराजयः निबिडपङ्क्तयः अभ्रा इव प्रचकाशिरे ॥ ३४ ॥

गो० टी०–तत्रेति । अम्बरात् अम्बरपर्यन्तम् । किंशुकपुष्पचूडः तत्तुल्यशिखः । निर्वाणधूमाकुलराजयः पूर्वपूर्वदग्धभवनाग्निनिर्वाणसमयोत्थितधूमैः व्याप्तपङ्क्तयः । अत एव नीलोत्पलाभाः निर्वाणधूमानां नीलवर्णत्वादिति भावः । अभ्राः मेघाः । पुँल्लिङ्गत्वमार्षम् ॥ ३५ ॥

३५–३७ ] ति० टी०–वज्रित्वत्रिदशेश्वरत्वविशिष्टो महेन्द्र इत्यर्थः । रौद्रोऽग्नी रुद्रतृतीयनयनसंबन्ध्यग्निः ॥ ३५–३७ ॥

रा० टी०–वज्रीति । अयं वानरः स्वयं काल एव वज्र्यान्यतमो न ॥ ३५ ॥

गो० टी०–अथ रक्षोवचनम्—वज्रीत्यादि । महेन्द्रः वज्रीत्यादि विशेषणं सामर्थ्यविशेषद्योतनार्थम् । उत्तरत्राप्येवमेव गतिः । यमकालयोर्मूर्तिभेदान्न पुनरुक्तिः । रक्षोपसंहारकर इत्यत्र आर्षः सलोपः । प्रकोपः प्रकोपकृतमूर्तिविशेषः ॥ ३६ ॥ ३७ ॥

रा० टी०–संभावनान्तरमाह–किमिति । सर्वपितामहत्वादिविशिष्टस्य ब्रह्मणः रक्षोपसंहारकरः प्रकोपः वानररूपधारी सन् इहागतः किम् ॥ ३६ ॥

रा० टी०–किमिति । स्वमायया रक्षोविनाशाय कपिरूपम् एत्य अचिन्त्यं चिन्तयितुमशक्यम् अत एव अव्यक्तम् अनन्तं देशकालवस्तुपरिच्छेदशून्यम् अत एव एकं प्रधानं वैष्णवं महाविष्णुसंबन्धि सुतेजो वा किम् ॥ ३७ ॥

गो० टी०–किं वैष्णवमिति । अत्राद्यो वाशब्दोऽवधारणे । 'वा स्याद्विकल्पोपमयोरेवार्थे च समुच्चये' इति विश्वः । द्वितीयो वितर्के । अनन्तं त्रिविधपरिच्छेदरहितम् अव्यक्तं चक्षुराद्यगोचरम् । अचिन्त्यं केवलमनसोऽप्यविषयम् एकम् अद्वितीयं यद्वैष्णवं सुतेजः पूज्यं धाम तदेव स्वमायया स्वासाधारणयाऽऽश्चर्यशक्त्या कपिरूपमेत्य सांप्रतमागतं वा इति योजना । वैष्णवमिति स्वार्थे अण् । विष्णुशरीरान्तर्वर्तीति वार्थः । विशिष्टाः ज्ञानाधिकाः ॥ ३८–४० ॥

३८–३९ ] ति० टी०–विशिष्टा महाबलाः प्रहस्तादय इत्यर्थः । समीक्ष्य इत्येवमूचुरित्यन्वयः ॥ ३८ ॥ ३९ ॥

रा० टी०–इतीति । पुरीं लङ्कां दग्धां समीक्ष्य विशिष्टाः प्रधानाः बहवो रक्षोगणाः तत्र रावणसमीपे समेत्य इत्येवंपूर्वसंभावनामूचुः ॥ ३८ ॥

रा० टी०–तत इति । ततस्तस्मिन् समये प्रदग्धा लङ्का तदभिमानिदेवता सशब्दमधिकशब्दवत् यथा भवति तथा रुरोद ॥ ३९ ॥

४० ] ति० टी०–सुपुण्यमतिशयितमर्जितं पुण्यम् ॥ ४० ॥

रा० टी०–हेति । हा तातेत्यादि बहुधा ब्रुवद्भिः रक्षोभिः घोरतरः शब्दः कृतः ॥ ४० ॥

गो० टी०–हा तातेति । युगपदेव शोके दूराह्वाने च हाशब्दो वर्तते । हा जीवितमित्यत्र संबुद्ध्यलोप आर्षः । हतमिति शेष इत्यन्ये । "अभितःपरितःसमयानिकषाहाप्रतियोगे वा" इति द्वितीया वा । दरिद्रैश्शोच्यत्वाद्विशिनष्टि–भोगयुतं सुपुण्यमिति । सुखाढ्यं सुकृतैकफलं चेत्यर्थः । घोरतरः तीव्रतरः । अत एव सुभीमः भयङ्करः ॥ ४१ ॥

४१ ] ति० टी०–परिवृत्तयोधा पर्यस्तयोधा ॥ ४१ ॥

---

१ रुद्र इति गो. पाठः । २ सर्वस्येति गो. पाठः । ३ जीवितं भोगयुतमिति गो. भोगहतमिति रा. पाठः । ४ सुभीम इति गो. पाठः ।

[1]ससंभ्रमं त्रस्तविषण्णराक्षसां समुज्ज्वलज्ज्वालहुताशनाङ्किताम् ।
ददर्श लङ्कां हनुमान्महामनाः स्वयंभुरो[2]षोपहतामिवावनिम् ॥ ४२ ॥
भङ्क्त्वा वनं पादपरत्नसंकुलं हत्वा तु रक्षांसि महान्ति संयुगे ।
दग्ध्वा पुरीं तां गृहरत्नमालिनीं तस्थौ हनूमान्पवनात्मजः कपिः ॥ ४३ ॥
[ [3]त्रिकूटशृङ्गाग्रतले विचित्रे प्रतिष्ठितो वानरराजसिंहः ।
प्रदीप्तलाङ्गूलकृतार्चिमाली व्यराजतादित्य इवांशुमाली ॥ ]
स राक्षसांस्तान्सुबहूंश्च हत्वा वनं च भङ्क्त्वा बहुपादपं तत् ।
विसृज्य रक्षोभवनेषु चाग्निं जगाम रामं मनसा महात्मा ॥ ४४ ॥
ततस्तु तं वानरवीरमुख्यं महाबलं मारुततुल्यवेगम् ।
महामतिं वायुसुतं वरिष्ठं प्रतुष्टुवुर्देवगणाश्च सर्वे ॥ ४५ ॥
[4]देवाश्च सर्वे मुनिपुङ्गवाश्च गन्धर्वविद्याधरप[5]न्नगाश्च ।
भूतानि सर्वाणि महान्ति तत्र जग्मुः परां प्रीतिमतुल्यरूपाम् ॥ ४६ ॥
भङ्क्त्वा वनं महातेजा हत्वा रक्षांसि संयुगे । दग्ध्वा [6]लङ्कापुरीं [7]भीमां रराज स महाकपिः ॥ ४७ ॥
[8]गृहाग्र्यशृङ्गाग्रतले विचित्रे प्रतिष्ठितो वानरराजसिंहः ।
प्रदीप्तलाङ्गूलकृतार्चिमाली व्यराजतादित्य इवार्चिमाली ॥ ४८ ॥

---

रा० टी०—हुताशनेति । हनुमतः क्रोधबलेन अभिभूता तिरस्कृता अत एव हुताशनज्वालसमावृता अत एव हतप्रवीरा अत एव परित्यक्ताः उद्विग्नचित्ताः योधाः भटाः यस्यां सा लङ्का शापोपहतेव बभूव ॥ ४१ ॥

गो०टी०—हुताशनेति । परित्यक्तयोधा परित्यक्तभटा ॥४२॥

४२–४७ ] त० टी०—स्वयंभुरोषोपहताम् । स्वदिनान्त इति शेषः ॥ ४२–४७ ॥

रा० टी०—सेति । ससंभ्रमाः उद्वेगसहिताः अत एव त्रस्ताः भीताः अत एव विषण्णाः त्रयाणां कर्मधारयः राक्षसाः यस्यां तां समुज्ज्वलन्त्यः अतिप्रकाशयुक्ताः ज्वालाः यस्य स एव हुताशनः तेनाङ्किताम् अत एव स्वयंभुकोपोपहतां दिनान्ते स्वयंभुवः कोपेन विनष्टाम् अवनिमिव लङ्कां हनुमान् ददर्श अत्र स्वयंभुशब्दः शंभुपरः इति न संहारप्रकरणविरोधः ॥४२॥

गो० टी०—ससंभ्रमेति । 'हनुमान्महामनाः' इति पाठः । हनुमान् महात्मेति पाठे विषमवृत्तं वा । स्वयंभुकोपोपहतां प्रलये भगवता दग्धामित्यर्थः ॥ ४३ ॥

रा० टी०—भङ्क्त्वेति । वनादि भङ्क्त्वा रक्षांसि हत्वा लङ्कां दग्ध्वा हनुमान् तस्थौ ॥ ४३ ॥

गो०टी०—भङ्क्त्वेति । रत्नशब्दः श्रेष्ठवाची । तस्थौ संकल्पितकार्यस्य परिसमाप्तत्वादुपरतोद्योगोऽभूदित्यर्थः ॥४४॥४५॥

रा० टी०—स इति । स हनुमान् रक्षोभवनेषु अग्निं विसृज्य मनसा रामं जगाम ॥ ४४ ॥

गो० टी०—स इति । जगाम रामं मनसेति कृतकृत्यत्वाद्रामं गन्तुमियेषेत्यर्थः ॥ ४६ ॥

रा० टी०—तत इति । ततोऽनन्तरं वानरवीरमुख्यं हनुमन्तं सर्वे देवगणाः प्रतुष्टुवुः ॥ ४५ ॥

गो० टी०—ततस्तु तमिति । वरिष्ठमिति बलवतामिति शेषः ॥ ४७–५० ॥

रा० टी०—देवा इति । देवादयः परां प्रीतिं जग्मुः ॥४६॥

गो० टी०—देवाश्चेति । परामित्यस्य विवरणम्—अतुल्यरूपामिति । अस्मिन् सर्गे एकपञ्चाशच्छ्लोकाः । ततो महात्मेति श्लोकः स राक्षसानिति श्लोकोक्तार्थकतया बहुकोशेष्वदर्शनाच्च प्रक्षिप्तः बहुकोशेष्वेतत्सर्गसमाप्तिविपर्ययः उत्तरसर्गारम्भविपर्ययश्च दृश्यते ॥ ५१ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने चतुःपञ्चाशः सर्गः ॥५४ ॥

रा० टी०—भङ्क्त्वेति । रराज शुशुभे ॥ ४७ ॥

४८ ] ति० टी०—गृहाग्र्याणां गृहश्रेष्ठानां शृङ्गाग्रतले प्रासादाग्रभूमौ प्रदीप्तलाङ्गूलेन कृतार्चिर्माला यस्यास्ति सः ॥४८॥

रा० टी०—गृहेति । विचित्रे गृहाग्र्याणां गृहश्रेष्ठानां शृङ्गाग्रतले परप्रासादभूमौ प्रतिष्ठितः अर्चिमाली आदित्य इव प्रदीप्तलाङ्गूलकृतार्चिमाली वानरराजसिंहः व्यराजत । अत एव निर्देशादर्चिशब्दोऽप्यस्तीति प्रतीयते ॥ ४८ ॥

---

१ ससंभ्रमत्रस्तेति गो. पाठः । २ कोपेति गो. पाठः । ३ श्लोकोऽयमधिकः गो. पाठे । ४ श्लोकोऽयं सर्गान्ते गो. पाठे । ५ नागयक्षा इति गो. पाठः । ६ लङ्कां पुरीमिति रा. पाठः । ७ रम्यामिति गो. पाठः । ८ श्लोकोऽयं गो. नास्ति ।

लङ्कां समस्तां [2]संपीड्य लाङ्गूलाग्निं महाकपिः । निर्वापयामास तदा समुद्रे हरि[3]पुंगवः ॥ ४९ ॥
ततो देवाः सगन्धर्वाः सिद्धाश्च परमर्षयः । दृष्ट्वा लङ्कां प्रदग्धां तां विस्मयं परमं गताः ॥ ५० ॥
[ [4]तं दृष्ट्वा वानरश्रेष्ठं हनुमन्तं महाकपिम् । कालाग्निरिति संचिन्त्य सर्वभूतानि तत्रसुः ॥ ]

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये सुन्दरकाण्डे चतुःपञ्चाशः सर्गः ॥ ५४ ॥

---

## पञ्चपञ्चाशः सर्गः ।

---

लङ्कां निःशेषतो भस्मीभूतां विलोक्य जानक्या अपि दाहं संभाव्यात्मानं धिक्कृत्य हनुमान् यावच्छोकाविष्टो भवति तावत्सिद्धचारणादिमुखात्तस्या दाहाभावं श्रुत्वा हर्षं प्राप ।

संदीप्यमानां वित्रस्तां त्रस्तरक्षोगणां पुरीम् । अवेक्ष्य हनुमाँल्लङ्कां चिन्तयामास वानरः ॥ १ ॥
तस्याभूत्सुमहांस्त्रासः कुत्सा चात्मन्यजायत । लङ्कां प्रदहता [5]कर्म किंस्वित्कृतमिदं मया ॥ २ ॥
धन्याः खलु महात्मानो ये बुद्ध्या कोपमुत्थितम् । निरुन्धन्ति महात्मानो दीप्तमग्निमिवाम्भसा ॥ ३ ॥
क्रुद्धः पापं न कुर्यात्कः क्रुद्धो हन्याद्गुरूनपि । क्रुद्धः परुषया वाचा नरः साधूनधिक्षिपेत् ॥ ४ ॥
वाच्यावाच्यं प्रकुपितो न विजानाति कर्हिचित् । नाकार्यमस्ति क्रुद्धस्य नावाच्यं विद्यते क्वचित् ॥ ५ ॥
यः समुत्पतितं क्रोधं क्षमयैव निरस्यति । यथोरगस्त्वचं जीर्णां स वै पुरुष उच्यते ॥ ६ ॥
धिगस्तु मां सुदुर्बुद्धिं निर्लज्जं पापकृत्तमम् । अचिन्तयित्वा तां सीतामग्निदं स्वामिघातकम् ॥ ७ ॥

---

४९-५० ] ति० टी०-समुद्रे निर्वापयामास लाङ्गूलप्रक्षेपणेनेति शेषः ॥ ४९ ॥ ५० ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये सुन्दरकाण्डे चतुःपञ्चाशः सर्गः ॥ ५४ ॥

रा० टी०-लङ्कामिति । समस्तां लङ्कां संपीड्य लाङ्गूलाग्निं समुद्रे निर्वापयामास ॥ ४९ ॥

रा० टी०-तत इति । लङ्कां प्रदग्धां दृष्ट्वा देवादयः परमं विस्मयं गताः ॥ ५० ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ सुन्दरकाण्डे चतुःपञ्चाशः सर्गः ॥ ५४ ॥

---

गो० टी०-लङ्कामित्यादि । लाङ्गूलाग्निं समुद्रे निर्वापयामासेत्यन्वयः ॥ १ ॥ २ ॥

१ ] ति० टी०-संदीप्यमानामिति ॥ १ ॥

रा० टी०-लाङ्गूलनिर्वापणानन्तरकालिकं हनुमतो वृत्तान्तमाह-संदीप्यमानामित्यादिभिः । संदीप्यमानाम् अत एव विध्वस्ताम् अत एव त्रस्ता रक्षोगणाः यस्यां तां लङ्कामवेक्ष्य तस्य हनुमतः त्रास उद्वेगोऽभूत् अत एव आत्मनि स्वात्मविषये कुत्सा निन्दा अजायत अत एव चिन्तयामास च । सार्धश्लोक एकान्वयी ॥ १ ॥

२ ] ति० टी०-कुत्सा चात्मन्यजायतेत्युक्तां कुत्सामाह-लङ्कामिति । किंस्वित्कर्म कृतम् कुत्सितमेव कृतमित्यर्थः ॥ २ ॥

रा० टी०-तच्चिन्ताकारमाह-लङ्कामित्यादि । लङ्कां प्रदहता मया इदं सीतादहनं किं मया कृतम् । अर्थं पृथक् ॥ २ ॥

गो० टी०-तस्येति । कुत्सा निन्दा ॥ ३—८ ॥

३ ] ति० टी०-उक्तकुत्सितकार्यमूलं कोप इति निश्चित्य तद्रहितान्स्तौति—धन्या इति । दुःखातिशयादेव महात्मपदपौनरुक्त्यं न दोषाय ॥ ३ ॥

रा० टी०-धन्या इति । ये महात्मानः अतिप्रयत्नशीलाः उत्थितं कोपमम्भसाऽग्निमिव बुद्ध्या निरुन्धन्ति ते महात्मानः पुरुषश्रेष्ठाः अत एव धन्याः ॥ ३ ॥

४ ] ति० टी०-'क्रुद्धः पापं न कुर्यात्कः' इति पाठे क्रुद्धो यः कश्चित्पापं कुर्यान्न नञ् काकुः अपि तु कुर्यादेव अकरणमशक्यमेवेत्यर्थः । तदेव दर्शयति—क्रुद्धो हन्यादिति ॥ ४ ॥

रा० टी०-क्रोधे दोषानाह-क्रुद्ध इत्यादिभिः । क्रुद्धः गुरूनपि हन्यात् अतः कः क्रुद्धः पापं न कुर्यात्कुर्यादेवेत्यर्थः ॥ ४ ॥

५-७ ] ति० टी०-न जानातीत्येतदेव स्पष्टयति—नाकार्यमिति । क्रुद्धस्याकार्यमयुक्तबुद्ध्याऽकरणीयं न किंचिदप्यस्ति अतो गुरुहननादपि करोत्येवेत्यर्थः ॥ ५-७ ॥

रा० टी०-वाच्येति । प्रकुपितो जनः वाच्यावाच्यं न विजानाति ॥ ५ ॥

रा० टी०-य इति । उरगो जीर्णां त्वचमिव समुत्पतितं कोपं यो निरस्यति स एव पुरुष उच्यते ॥ ६ ॥

---

१ श्लोकोऽयं पञ्चपञ्चाशसर्गारम्भे गो. पाठे । २ संदीप्येति गो. पाठः । ३ सत्त्ववान् इति गो. पाठः । ४ सत्तम इति गो. पाठः । ५ श्लोकोऽयमधिकः गो. पाठे । ६ कर्मेति गो. पाठः । ७ त पुरुषश्रेष्ठा इति गो. पाठः ।

यदि दग्धा त्वियं सर्वा[1] नूनमार्यापि जानकी । दग्धा तेन मया भर्तुर्हतं कार्यमजानता ॥ ८ ॥
यदर्थमयमारम्भस्तत्कार्यमवसादितम् । मया हि दहता लङ्कां न सीता परिरक्षिता ॥ ९ ॥
ईषत्कार्यमिदं कार्यं कृतमासीन्न संशयः । तस्य क्रोधाभिभूतेन मया मूलक्षयः कृतः ॥ १० ॥
विनष्टा जानकी व्यक्तं[2] न ह्यदग्धः प्रदृश्यते । लङ्कायाः कश्चिदुद्देशः सर्वा भस्मीकृता पुरी ॥ ११ ॥
यदि तद्विहतं कार्यं मया प्रज्ञाविपर्ययात् । इहैव प्राणसंन्यासो ममापि ह्यद्य रोचते ॥ १२ ॥
किमग्नौ निपताम्यद्य आहोस्विद्वडवामुखे । शरीरमिह सत्त्वानां दद्मि सागरवासिनाम् ॥ १३ ॥
कथं नु जीवता शक्यो मया द्रष्टुं हरीश्वरः । तौ वा पुरुषशार्दूलौ कार्यसर्वस्वघातिना ॥ १४ ॥
मया खलु तदेवेदं रोषदोषात्प्रदर्शितम् । प्रथितं त्रिषु लोकेषु कपित्वमनवस्थितम् ॥ १५ ॥
धिगस्तु राजसं भावमनीशमनवस्थितम् [3] । ईश्वरेणापि यद्रागान्मया सीता न रक्षिता ॥ १६ ॥

---

रा० टी०—धिगिति । सीतामचिन्तयित्वा विस्मृत्य अन्यत्रानीत्येत्यर्थः, अग्निदम् अग्नये ददाति अग्निं ददाति वस्तुमात्रे क्षिपति वा स तम् अत एव स्वामिघातकम् अत एव पापकृत्तमं पापिश्रेष्ठं मां धिगस्तु ॥ ७ ॥

८ ] ति० टी०—धिगस्तु मामित्यनेनोक्तं स्वधिकारमाह—यदीति । इयं लङ्का सर्वापि नूनं दग्धैव यदि जानक्यप्यत्रत्या दग्धा स्यात्तदा तेनाजानता मया भर्तुः कार्यं हतं भवेत् ॥ ८ ॥

रा० टी०—यदीति । यदीयं लङ्का सर्वा दग्धा तर्हि जानक्यपि दग्धा तेन दाहेन मया भर्तुः कार्यं हतम् ॥ ८ ॥

गो० टी०—यदिति । जानक्यपि यदि दग्धेत्यन्वयः ॥ ९ ॥ १० ॥

९ ] ति० टी०—एतदेव विवृणोति—यदर्थमिति ॥ ९ ॥

रा० टी०—यदर्थमिति । यदि मया सीता न रक्षिता तर्हि यदर्थमयमन्वेषणादेरारम्भः तत्कार्यमवसादितं विनाशितम् ॥ ९ ॥

१० ] ति० टी०—एतत्कार्यं लङ्कादाहरूपमीषत्कार्यमिवाप्रयाससाध्यकार्यमिव कृतमनुष्ठितमासीदत्र न संशयः । भर्तुः कार्यं तु मया सर्वथा नाशितमेवेत्याह—तस्येति । क्रोधाभिभूतेन मया सीतामपरिरक्षता कृतस्य सीतादर्शनरूपस्य कार्यस्य मूलक्षयः कृतः ॥ १० ॥

रा० टी०—ईषदिति । इदं लङ्कादाहादिकार्यमीषत्कार्यमिव मया कृतमासीत् तस्य रामकार्यस्य तु मूलक्षयः मूलविघातः मया कृतः ॥ १० ॥

गो० टी०—ईषत्कार्यमिति । इदं कार्यम् अन्वेषणपूर्वकरावणनिलयपरिज्ञानसीतादर्शनतन्निवेदनरूपं महत्कार्यम् ईषत्कार्यम् ईषदवशिष्टकार्यम् असमग्रप्रायमेव कृतमासीत् रामनिवेदनमात्रावशेषं कृतमासीदित्यर्थः । किं त्विदानीं क्रोधाभिभूतेन क्रोधान्धेन मया तस्य कार्यस्य मूलक्षयः कृतः न संशयः विफलीकृतमित्यर्थः ॥ ११ ॥

११-१२ ] ति० टी०—ननु सीताविनाशनिश्चयस्ते कथं तत्राह—विनष्टेति ॥ ११ ॥ १२ ॥

रा० टी०—विनष्टेति । हि यतः अदग्धः लङ्कायाः कश्चिदुद्देशः न प्रदृश्यते अतः सर्वा पुरी भस्मीकृता अतः जानकी विनष्टा ॥ ११ ॥

गो० टी०—सीतानाशे तत्तथैव स एव तु कुत इत्यत्राह—विनष्टेति ॥ १२ ॥

रा० टी०—यदीति । प्रज्ञाविपर्ययात् बुद्धिवैपरीत्यात् तत् रामसंबन्धि कार्यं मया यदि विहितं तदा ममापि प्राणसंन्यासः प्राणत्यागः इहैव रोचते ॥ १२ ॥

गो० टी०—यदीति । विहतं यदि सीतानाशाद्विनष्टं यदि । प्राणसंन्यासः प्राणत्यागः ॥ १३–१५ ॥

१३–१४ ] ति० टी०—वडवामुखेऽग्नावित्यन्वयः । दद्मि ददामि ॥ १३ ॥ १४ ॥

रा० टी०—किमिति । अग्नौ आहोस्वित् वा वडवामुखे वाडवाग्नौ किं निपतामि आहो वा सागरवासिनां सत्त्वानां सत्त्वेभ्यः शरीरं शकलीकृतदेहं दद्मि ददामि वा ॥ १३ ॥

रा० टी०—कथमिति । कार्यसर्वस्वघातिना मया द्रष्टुं कथं शक्यः ॥ १४ ॥

१५ ] ति० टी०—तदेवेदं कपित्वमनवस्थितमव्यवस्थितकार्यकारीति त्रिषु लोकेषु प्रसिद्धं दर्शितम् । रोषदोषात्क्रोधविषयक्रोधदोषात् ॥ १५ ॥

रा० टी०—मयेति । त्रिषु लोकेषु प्रथितं प्रख्यातम् अनवस्थितम् अव्यवस्थितं यत्कपित्वं तदेवेदं रोषदोषात् मया प्रदर्शितम् ॥ १५ ॥

गो० टी०—मयेति । कपित्वं कापेयम् अनवस्थितं चापलात्मकमित्यर्थः ॥ १६ ॥

१६ ] ति० टी०—राजसं रजोगुणमूलम् भावं चेष्टाविशेषम् अनीशं कार्यासमर्थम् अत एवानवस्थितमव्यवस्थि-

---

१ लङ्केति गो. पाठः । २ नूनमिति गो. पाठः । ३ आहो इति गो. रा. पाठः ।

विनष्टायां तु सीतायां तावुभौ विनशिष्यतः । तयोर्विनाशे सुग्रीवः सबन्धुर्विनशिष्यति ॥ १७ ॥
एतदेव वचः श्रुत्वा भरतो भ्रातृवत्सलः । धर्मात्मा सहशत्रुघ्नः कथं शक्ष्यति जीवितुम् ॥ १८ ॥
इक्ष्वाकुवंशे धर्मिष्ठे गते नाशमसंशयः[1] । भविष्यन्ति प्रजाः सर्वाः शोकसंतापपीडिताः ॥ १९ ॥
तदहं भाग्यरहितो लुप्तधर्मार्थसंग्रहः । रोषदोषपरीतात्मा व्यक्तं लोकविनाशनः ॥ २० ॥
इति चिन्तयतस्तस्य निमित्तान्युपपेदिरे । पूर्वमप्युपलब्धानि साक्षात्पुनरचिन्तयत् ॥ २१ ॥
अथ वा चारुसर्वाङ्गी रक्षिता स्वेन तेजसा । न नशिष्यति कल्याणी नाग्निरग्नौ प्रवर्तते ॥ २२ ॥
नहि धर्मात्मनस्तस्य भार्याममिततेजसः । स्वचरित्राभिगुप्तां[2] तां स्प्रष्टुमर्हति पावकः ॥ २३ ॥
नूनं रामप्रभावेण[3] वैदेह्याः सुकृतेन च । यन्मां दहनकर्मायं नादहद्धव्यवाहनः ॥ २४ ॥
त्रयाणां भरतादीनां भ्रातॄणां देवता च या । रामस्य च मनःकान्ता सा कथं विनशिष्यति ॥ २५ ॥
यद्वा दहनकर्माऽयं सर्वत्र प्रभुरव्ययः । न मे दहति लाङ्गूलं कथमार्यां प्रधक्ष्यति ॥ २६ ॥

---

तफलजनकं धिक् । यद्यस्मादीश्वरेणापि समर्थेनापि मया रागाद्रजोगुणमूलक्रोधवशात्सीता न रक्षिता, अतो धिक् ॥ १६ ॥

रा० टी०—धिगिति । यद्रागात् यद्वशात् मया सीता न रक्षिता तम् अनवस्थितमव्यवस्थितम् अत एव अनीशं कार्यजननासमर्थं राजसं रजोगुणसंबन्धिनं भावम् अनवधानतया स्थितिविशेषं धिगस्तु ॥ १६ ॥

गो० टी०—धिगस्त्विति । राजसं भावं रजोगुणनिबन्धनचेष्टाविशेषम् अनीशं नियामकरहितम् स्वतन्त्रमिति यावत् अनवस्थितं कुर्वत्स्वभावम् ईश्वरेणापि रक्षणसमर्थेनापि रागात् मात्सर्यात् 'रागोऽनुरागे मात्सर्ये रक्तवर्णे कुसुम्भके' इति यादवः । यद्वा रागात् रजोगुणात् आग्रहादिति यावत् ॥ १७—२१ ॥

१७–२० ] ति० टी०—उभौ रामलक्ष्मणौ ॥ १७—२० ॥

रा० टी०—अरक्षणे दोषमाह—विनष्टायामित्यादिभिः१७

रा० टी०—एतदिति ॥ १८ ॥

रा० टी०—इक्ष्वाकुवंश इति ॥ १९ ॥

रा० टी०—तदिति । तत् सीतायाः अरक्षणाद्धेतोः लुप्तो विनाशितः धर्मार्थयोः संग्रहो येन अत एव भाग्यरहितः रोषदोषपरीतात्माऽहं लोकविनाशनः सकलजनविनाशनजनितपापवान् भविष्यामीति शेषः ॥ २० ॥

२१ ] ति० टी०—साक्षादुपलब्धान्यपरोक्षमनुभूतशुभफलान्युपपेदिरे । जातानि दृष्ट्वा पुनरचिन्तयदित्यर्थः ॥ २१ ॥

रा० टी०—इतीति । इति चिन्तयतः तस्य हनूमतः पूर्वमप्युपलब्धानि अनुभूतानि निमित्तानि शुभसूचकदक्षिणनेत्रस्फुरणादीनि उपपेदिरे प्रापुः अतः पुनरचिन्तयत् ॥ २१ ॥

गो० टी०—इतीति । निमित्तान्युपपेदिरे शुभशंसिनिमित्तानि प्रादुर्बभूवुरित्यर्थः ॥ २२ ॥

२२–२३ ] ति० टी०—चिन्तामेव दर्शयति—अथवेति । नाग्निरग्नौ प्रवर्तते इति अग्निरग्निं न दहतीत्यर्थः ॥ २२॥२३॥

रा० टी०—चिन्ताकारमाह—अथवेत्यादिभिः । स्वेन तेजसा तेजोरूपवह्निविशेषेण रक्षिता कल्याणी सीता न नशिष्यति नंक्ष्यति तत्र हेतुः अग्नौ अग्निर्न प्रवर्तते ॥ २२ ॥

रा० टी०—तदेव भङ्ग्यन्तरेणाह—नहीति । स्वचरित्राभिगुप्तां स्वनिष्ठपरमपातिव्रत्यधर्मेण रक्षितां तस्य रामस्य भार्यां पावकः स्प्रष्टुं नार्हति ॥ २३ ॥

गो० टी०—एवं लोकदृष्ट्याऽनर्थमाशङ्क्य तत्त्वदृष्ट्या समाधत्ते—अथवेत्यादिना । नाग्निरग्नौ प्रवर्तते अग्निरग्निं न दहतीत्यर्थः ॥ २३ ॥ २४ ॥

२४ ] ति० टी०—दहनकर्मा भस्मीकरणसहजस्वभावो यत्रतत्तत्प्रभावान्मां तत्सेवकं नादहत् तत एव तां स्प्रष्टुमपि नार्हतीत्यर्थः ॥ २४ ॥

रा० टी०—नूनमिति । रामप्रभावेण अव्याहतप्रतापेन वैदेह्याः सुकृतेन च अयं हव्यवाहनोऽग्निः यत् प्रयत्नवन्तं मां न अदहत् यन्मामित्यत्र कर्मधारयः यदिति सामान्ये नपुंसकं वा ॥ २४ ॥

गो० टी०—नूनमिति । दहनकर्मा भस्मीकरणस्वभावः यत्प्रभावादयं मां नादहत् स तामेव कथं दहतीत्यर्थः ॥२५—३०॥

२५ ] ति० टी०—त्रयाणां भरतलक्ष्मणशत्रुघ्नानां देवतात्वात्तस्यामप्यप्रवृत्ते रामभयाच्चेति भावः ॥ २५ ॥

रा० टी०—त्रयाणामिति । या भरतादीनां देवता पूज्या रामस्य च मनःकान्ता अत्यन्तमीप्सिता सा कथं विनशिष्यति ॥ २५ ॥

२६ ] ति० टी०—सर्वत्र प्रभुरपि यत्सेवकत्वान्मे लाङ्गूलं न दहति ततस्तां कथं धक्ष्यति ॥ २६ ॥

---

१ असंशयमिति गो. पाठः । २ चारित्रेति गो. पाठः । ३ प्रभावेनेति गो. पाठः ।

पुनश्चाचिन्तयत्तत्र हनूमान्विस्मितस्तदा । हिरण्यनाभस्य गिरेर्जलमध्ये प्रदर्शनम् ॥ २७ ॥
तपसा सत्यवाक्येन अनन्यत्वाच्च भर्तरि । असौ विनिर्दहेदग्निं न तामग्निः प्रधक्ष्यति ॥ २८ ॥
स तथा चिन्तयंस्तत्र देव्या धर्मपरिग्रहम् । शुश्राव हनुमांस्तत्र चारणानां महात्मनाम् ॥ २९ ॥
अहो खलु कृतं कर्म दुर्विगाहं हनूमता । अग्निं विसृजता तीक्ष्णं भीमं राक्षससद्मनि ॥ ३० ॥
प्रपलायितरक्षःस्त्रीबालवृद्धसमाकुला । जनकोलाहलाध्माता क्रन्दतीवाद्रिकन्दरैः ॥ ३१ ॥
दग्धेयं नगरी लङ्का साट्टप्राकारतोरणा । जानकी न च दग्धेति विस्मयोऽद्भुत एव नः ॥ ३२ ॥
इति शुश्राव हनुमान्वाचंताममृतोपमाम् । बभूव चास्य मनसो हर्षस्तत्कालसंभवः ॥ ३३ ॥
स निमित्तैश्च दृष्टार्थैः कारणैश्च महागुणैः । ऋषिवाक्यैश्च हनुमानभवत्प्रीतमानसः ॥ ३४ ॥
ततः कपिः प्राप्तमनोरथार्थस्तामक्षतां राजसुतां विदित्वा ।
प्रत्यक्षतस्तां पुनरेव दृष्ट्वा प्रतिप्रयाणाय मतिं चकार ॥ ३५ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये सुन्दरकाण्डे पञ्चपञ्चाशः सर्गः ॥ ५५ ॥

---

रा० टी०—यदिति । यत् यः अयं वह्निः मे लाङ्गूलं न दहति सः आर्यां सीतां कथं प्रधक्ष्यति ॥ २६ ॥

२७ ] ति० टी०—देवीप्रभावात्सिन्धौ मद्विश्रान्तिनिमित्तं गिरिदर्शनहेतुनातिप्रभाववर्ती तां न दहतीत्याह -पुनश्चेति ॥२७॥

रा० टी०—पुनरिति । तत्र तस्मिन् समये विस्मितो हनुमान् जलमध्ये सागरान्तर्देशे हिरण्यनाभस्य गिरेः प्रदर्शनं पुनरचिन्तयत् । एतेन पर्वतादीनामपि सर्वेषां रामाज्ञावशवर्तित्वं सूचितं तेन सीतायाः नाग्नेर्भीतिरिति सूचितम् ॥ २७ ॥

२८–२९ ] ति० टी०—विनिर्दहेत् दाहविषयवाक्यप्रयोगेणेति शेषः । तथा चिन्तयंश्चारणानां वाक्यं शुश्रावेति योजना ॥ २८ ॥ २९ ॥

रा० टी०—तपसेति । तपआदिना असौ सीता अग्निं विनिर्दहेत् अतः तां सीताम् अग्निर्न प्रधक्ष्यति ॥ २८ ॥

रा० टी०—स इति । तत्र तस्मिन् समये देव्याः सीतायाः धर्मपरिग्रहं धर्मे स्थितिं चिन्तयन् हनुमान् चारणानां शुश्राव वचनमिति शेषः ॥ २९ ॥

३०–३१ ] ति० टी०—दुर्विगाहम् केनाप्यसम्भाव्यमित्यर्थः ॥ ३० ॥ ३१ ॥

रा० टी०—तद्वचनाकारमाह–अहो इत्यादिभिः । राक्षससद्मनि अग्निं विसृजता त्यजता हनुमता दुर्विगाहम् अन्यैः कर्तुमशक्यम् अहो आश्चर्यं कर्म कृतम् ॥ ३० ॥

गो० टी०—अहो इत्यादि । विस्मयोद्भुत एव न इति । अयं विस्मयः अद्भुत एव अद्भुतमाश्चर्यं कल्याणं चेत्युणादिवृत्तिः । यद्वा विस्मयः आश्चर्यम् अद्भुतः अभूतपूर्व इत्यर्थः । अद्भुतः अद्भुतरसः तस्य स्थायी भावो विस्मयः । तथा च अद्भुत एव अद्भुतरसतां प्राप्त एव । महानयं विस्मयः । न विस्मयमात्र इत्यर्थः ॥ ३१—३३ ॥

रा० टी०—तत्कमाह–प्रपलायितेति । प्रपलायितैः अतिपलायनं प्राप्तैः रक्षःप्रभृतिभिः समाकुला व्याप्ता जनकोलाहलैः ध्माता शब्दिता अत एव क्रन्दती रुदतीव अद्रिकन्दरैः सह इयं लङ्का दग्धा जानकी तु न दग्धा इति नोऽस्माकमद्भुतोऽभूतपूर्व एव विस्मयः । श्लोकद्वयमेकान्वयि ॥ ३१ ॥ ३२ ॥

३२] ति० टी०—विस्मय आश्चर्यम् । अद्भुतोऽभूतपूर्वः॥३२॥

३३ ] ति० टी०—तत्कालसंभवस्तत्कालजातचारणवाक्यजः ॥ ३३ ॥

रा० टी०—इतीति । इति वाचं हनुमान् शुश्राव अत एव तत्कालसंभवः तस्मिन् काले योग्यः अस्य हनुमतः मनसो हर्षो बभूव ॥ ३३ ॥

३४ ] ति० टी०—दृष्टार्थैर्दृष्टप्रत्ययैर्निमित्तैर्दक्षिणाक्षिस्पन्दनादिभिः कारणैः सीतारामप्रभावपातिव्रत्यादिरूपैर्ऋषिवाक्यैश्चारणवाक्यैः ॥ ३४ ॥

रा० टी०—स इति । दृष्टः बहुवारमनुभूतः अर्थः फलं येषां तैः निमित्तैः दक्षिणनेत्रस्फुरणादिभिः महागुणैः अद्भुतगुणप्रतिपादकैः कारणैः सीतास्थितिबोधकहेतुभिः ऋषिवाक्यैश्च हनुमान् प्रीतमानसोऽभवत् ॥ ३४ ॥

गो० टी०—स इति । निमित्तैः दक्षिणाक्षिस्पन्दादिभिः दृष्टार्थैः दृष्टफलसंवादैः कारणैः सीतापातिव्रत्यरामप्रभावादिभिः ऋषिवाक्यैः चारणवाक्यैः ॥ ३४ ॥

३५] ति० टी०—विदित्वा चारणादिवाक्यैः पुनरेव पुनरपि प्रत्यक्षतो दृष्ट्वा, प्रतिप्रयाणाय किष्किन्धां प्रति गन्तुं मतिं चकार ॥ ३५ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये सुन्दरकाण्डे पञ्चपञ्चाशः सर्गः ॥ ५५ ॥

रा० टी०—तत इति । अक्षताम् अदग्धां तां सीतां विदित्वा ज्ञात्वा प्रत्यक्षतः तां दृष्ट्वा च प्राप्तमनोरथार्थः प्राप्तौ

---

१ अपि सेति गो. पाठः । २ वाक्यमिति गो. पाठः । ३ दुष्करं हीति गो. पाठः । ४ ऽभीक्ष्णमिति गो. पाठः । ५ वेश्मनीति गो. पाठः । ६ कन्दरे इति गो. पाठः । ७ श्लोकोऽयं गो. नास्ति ।

## षट्पञ्चाशः सर्गः ।

हनुमाञ्शिंशुपातोऽवतीर्याभिवादनसमाश्वासनसंप्रश्नपूर्वकं सागरोत्तरतीरगमनायारिष्टगिरिं समारुह्य स्वचरणनिपीडनाद्गिरिवरस्य रसातलप्रवेशनेन ततः समुत्पपात ।

ततस्तु शिंशपामूले जानकीं पर्यवस्थिताम् । अभिवाद्याब्रवीद्दिष्ट्या पश्यामि त्वामिहाक्षताम् ॥ १ ॥
ततस्तं प्रस्थितं सीता वीक्षमाणा पुनः पुनः । भर्तुः स्नेहान्विता[1] वाक्यं हनूमन्तमभाषत ॥ २ ॥
[2]यदि त्वं मन्यसे तात वसैकाहमिहानघ । क्वचित्सुसंवृते देशे विश्रान्तः श्वो गमिष्यसि ॥ ३ ॥
मम चैवाल्पभाग्यायाः सांनिध्यात्तव वानर । शोकस्यास्याप्रमेयस्य मुहूर्तं स्यादपि क्षयः ॥ ४ ॥
गते हि हरिशार्दूल पुनः संप्राप्तये त्वयि । प्राणेष्वपि न विश्वासो मम वानरपुंगव ॥ ५ ॥
अदर्शनं च ते वीर भूयो मां दारयिष्यति । दुःखाद्दुःखतरं प्राप्तां दुर्मनःशोककर्शिताम् ॥ ६ ॥
अयं च वीर संदेहस्तिष्ठतीव ममाग्रतः । सुमहत्सु सहायेषु हर्यृक्षेषु महाबलः ॥ ७ ॥
कथं नु खलु दुष्पारं संतरिष्यन्ति[3] सागरम् । तानि हर्यृक्षसैन्यानि तौ वा नरवरात्मजौ ॥ ८ ॥
त्रयाणामेव भूतानां सागरस्यापि लङ्घने । शक्तिः स्याद्वैनतेयस्य तव वा मारुतस्य वा ॥ ९ ॥
तदत्र कार्यनिर्बन्धे समुत्पन्ने दुरासदे । किं पश्यसि समाधानं त्वं हि कार्यविशारदः ॥ १० ॥
काममस्य त्वमेवैकः कार्यस्य परिसाधने । पर्याप्तः परवीरघ्न यशस्यस्ते बलोदयः ॥ ११ ॥
[4]बलैस्तु संकुलां कृत्वा लङ्कां परबलार्दनः । मां नयेद्यदि काकुत्स्थस्तत्तस्य सदृशं भवेत् ॥ १२ ॥
तद्यथा तस्य विक्रान्तमनुरूपं महात्मनः । भवत्याहवशूरस्य तथा त्वमुपपादय ॥ १३ ॥
तदर्थोपहितं वाक्यं प्रश्रितं हेतुसंहितम् । निशम्य हनुमान्वीरो[5] वाक्यमुत्तरमब्रवीत् ॥ १४ ॥
[6]देवि हर्यृक्षसैन्यानामीश्वरः प्लवतां वरः । सुग्रीवः सत्त्वसंपन्नस्तवार्थे कृतनिश्चयः ॥ १५ ॥
स वानरसहस्राणां कोटीभिरभिसंवृतः । क्षिप्रमेष्यति वैदेहि सुग्रीवः प्लवगाधिपः ॥ १६ ॥
तौ च वीरौ नरवरौ सहितौ रामलक्ष्मणौ । आगम्य नगरीं लङ्कां सायकैर्विधमिष्यतः ॥ १७ ॥
सगणं राक्षसं हत्वा न चिराद्रघुनन्दनः । त्वामादाय वरारोहे स्वां पुरीं प्रति यास्यति ॥ १८ ॥
समाश्वसिहि भद्रं ते भव त्वं कालकाङ्क्षिणी । क्षिप्रं द्रक्ष्यसि रामेण निहतं रावणं रणे ॥ १९ ॥
निहते राक्षसेन्द्रे च सपुत्रामात्यबान्धवे । त्वं समेष्यसि रामेण शशाङ्केनेव रोहिणी ॥ २० ॥
क्षिप्रमेष्यति काकुत्स्थो हर्यृक्षप्रवरैर्युतः[7] । यस्ते युधि [8]विनिर्जित्य शोकं व्यपनयिष्यति ॥ २१ ॥
एवमाश्वास्य वैदेहीं हनूमान्मारुतात्मजः । गमनाय मतिं कृत्वा वैदेहीमभ्यवादयत् ॥ २२ ॥
[9]राक्षसान्प्रवरान्हत्वा नाम विश्राव्य चात्मनः । समाश्वास्य च वैदेहीं दर्शयित्वा परं बलम् ॥ २३ ॥
नगरीमाकुलां कृत्वा वञ्चयित्वा च रावणम् । दर्शयित्वा बलं घोरं वैदेहीमभिवाद्य च ॥ २४ ॥
प्रतिगन्तुं मनश्चक्रे पुनर्मध्येन सागरम् । ततः स कपिशार्दूलः स्वामिसंदर्शनोत्सुकः ॥ २५ ॥

---

मनोरथार्थौ येन मनोवेगवत्त्वसमानाधिकरणेप्सितार्थवानित्यर्थः हनुमान् प्रतिप्रयाणाय मतिं चकार ॥ ३९ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ सुन्दरकाण्डे पञ्चपञ्चाशः सर्गः ॥ ५५ ॥

गो० टी०–तत इति । पूर्वं चारणवाक्यैर्विदित्वा पुनः प्रत्यक्षं दृष्ट्वा ततः प्रतिप्रयाणाय मतिं चकार प्रतियास्यामीति संकल्पितवानित्यर्थः ॥ ३९ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने पञ्चपञ्चाशः सर्गः ॥ ५५ ॥

१–२५ ] ति० टी०–इत आरभ्य 'पुनर्मध्येन सागरम्'

---

१ अन्वितमिति रा. पाठः । २ एतदादिश्लोकाष्टकं गो. नास्ति । ३ तरिष्यतीति रा. पाठः । ४ शरैः स्विति गो. पाठः । ५ तस्या इति गो. पाठः । ६ एतदादिश्लोकषट्कं गो. नास्ति । ७ वृता इति गो. पाठः । ८ विजित्य इति गो. पाठः । ९ एतदादि सार्धश्लोकद्वयं गो. नास्ति ।

आरुरोह गिरिश्रेष्ठमरिष्टमरिमर्दनः । तुङ्गपद्मकजुष्टाभिर्नीलाभिर्वनराजिभिः ॥ २६ ॥
सोत्तरीयमिवाम्भोदैः शृङ्गान्तरविलम्बिभिः । बोध्यमानमिव प्रीत्या दिवाकरकरैः शुभैः ॥ २७ ॥
उन्मिषन्तमिवोद्धूतैर्लोचनैरिव धातुभिः । तोयौघनिःस्वनैर्[1] मन्द्रैः प्राधीतमिव सर्वतः ॥ २८ ॥

---

इत्यन्ताः सार्धचतुर्विंशतिश्लोकाः प्राग्व्याख्यातप्राया एव १-२९

रा० टी०–हनुमत्कर्तृकसीतादर्शनानन्तरकालिकां सीतां प्रति हनुमदुक्तिमाह–तत इति । दिष्ट्या भाग्यवशेन अक्षतां विनाशरहितां त्वां पश्यामि इति वाक्यं जानकीमभिवाद्य अब्रवीत् ॥ १ ॥

गो० टी०–तत इत्यादि ॥ १ ॥

रा० टी०–तत इति । तत आरभ्य पुनर्मध्येन सागरमित्यन्ताः सार्धत्रयोविंशतिश्लोकाः पूर्वमपि पठिताः इति तद्व्याख्यानेनैव व्याख्यातप्रायाः ॥ २—२४ ॥

गो० टी०–ततस्तमिति । प्रस्थितं प्रस्थानोद्युक्तम् ॥ २॥

गो० टी०–वनभङ्गाक्षवधादिना हनुमतः शक्तिं विज्ञाय असौ रामाय निवेद्य स्वयमेव सकलराक्षससंहारपूर्वकं मम नेता मा भूदित्यभिप्रायेणाह–काममिति । अस्य कार्यस्य सर्वराक्षसवधपूर्वकमत्प्रापणरूपकार्यस्य बलोदयः सत्त्वप्रकर्षः, सैन्योत्थापनं वा ते यशस्यः यशस्करः न तु रामस्येति भावः ॥ ३ ॥

गो० टी०–तर्हि रामस्य किं यशस्करमित्यत्राह–शरैरिति। तत् स्वपराक्रमेण मन्नयनम् । तस्य काकुत्स्थस्य सदृशम् एतदेव ममाभिलषितम् । अन्यथा मे कथं वीरपत्नीत्वमिति भावः ॥ ४ ॥

गो०टी०–तच्च त्वदायत्तमेवेत्याह–तद्यथेति । विक्रान्तं विक्रमणम् ॥ ५—८ ॥

रा० टी०–तत इति । ततः गमनेच्छानन्तरं स्वामिसंदर्शनोत्सुकः स हनुमान् अरिष्टं तदभिधं गिरिश्रेष्ठमारुरोह । अर्धद्वयमेकान्वयि ॥ २९ ॥

गो० टी०–ततः स इति । अरिष्टम् अरिष्टाख्यम् ॥ ९ ॥

२६ ] ति० टी०–अरिष्टं तदाख्यम् । नीलाभिर्वनराजिभिः सपरिधानमिवेति शेषः ॥ २६ ॥

रा० टी०–गिरिमेव वर्णयन्नाह–तुङ्गेत्यादिभिः । तुङ्गाः उन्नताः ये पद्मकाः तैर्जुष्टाभिः वनराजिभिः शृङ्गान्तरविलम्बिभिः ॥ २६ ॥

गो० टी०–अथैनं गिरिं चतुर्दशधोत्प्रेक्षते–तुङ्गेत्यादिना। पद्मकाः पद्मवर्णवृक्षाः । परिधानालेख्यस्थानीयतया विशेषणमिति बोध्यम् । सपरिधानमिव स्थितमिति शेषः । उत्तरार्धे सोत्तरीयत्वोत्प्रेक्षणात् । बोध्यमानमिति । शुभैः तरुणैः करैः अंशुभिः हस्तैश्च बोध्यमानमिव स्थितम् । तत्र ज्ञापकमाह–उद्धूतैरिति । उद्धूतैः उद्गतैः लोचनैरिव स्थितैः धातुभिः उन्मिषन्तं पश्यन्तमिव स्थितम् । तोयौघनिःस्वनैः गिरिनदीघोषैः मन्द्रैः गम्भीरैः प्राधीतमिव प्राध्येतुं प्रवृत्तमिव । आदिकर्मणि कर्तरि क्तः अधीयानमिवेत्यर्थः । प्रस्रवणस्वनैः पर्वतमूलाद्बहिः प्रवहन्ति जलानि प्रस्रवणानि तेषां स्वनैः । प्रगीतमिव गातुं प्रवृत्तमिव गायन्तमिवेत्यर्थः । आदिकर्मणि कर्तरि क्तः । देवदारुभिरिति । ऊर्ध्वबाहुमिवेति तपोविशेष उच्यते । प्रपातजलनिर्घोषैः प्रपाताः भृगवः 'प्रपातस्तु तटो भृगुः' इत्यमरः तेषां जलानि तेभ्यः पतन्तो निर्झरा इत्यर्थः तेषां निर्घोषैः प्राक्रुष्टमिव आक्रोशन्तमिव । पूर्ववत् क्तः । शरदि ये घना भवन्ति ते शरद्घनाः । शरत्कालपुष्पिणः सप्तच्छदादयः तैः शुभ्रीभूतैः जरया कम्पमानमिव स्थितमित्यर्थः । 'शरद्घनैः' इतिपाठे बहुवार्षिकवृक्षैरित्यर्थः शरवणैरिति वार्थः । तकारान्तोप्यस्ति । शरवणे जातस्य कृपाचार्यस्य शारद्वत इति नामदर्शनात् । कीचकैः कीचकाख्यैर्वेणुभिः । तदाहामरः– 'वेणवः कीचकास्ते स्युर्ये स्वनन्त्यनिलोद्धताः' इति । आशीविषोत्तमैः निःश्वसन्तमिव सर्पश्रेष्ठनिःश्वासैर्निःश्वसन्तमिव । अमर्षात् हनुमति क्रोधादित्यर्थः।नीहारकृतगम्भीरैः नीहारपूर्णैः गम्भीरैश्च गह्वरैः गुहाभिः ध्याननिरुद्धेन्द्रियस्थानीयैः ध्यायन्तमिव स्थितम् । निरुद्धेन्द्रियद्वारा ध्यानारूढमिव स्थितमित्यर्थः । मेघपादनिभैः मेघावरोहनिभैः पादैः प्रत्यन्तपर्वतैः प्रक्रान्तमिव गन्तुमुद्युक्तमिव । पूर्ववत् क्तः । जृम्भमाणमिव गात्रभङ्गं कुर्वाणमिव । अभ्रमालिभिः मेघमालावद्भिः । बहुधा कीर्णैः हनुमत्पादस्पर्शेन शिथिलैरित्यर्थः । धातुनिष्यन्दः धातुस्रावः । लतापादपानां संघातो यस्मिन्निति व्यधिकरणबहुव्रीहिः। रामदर्शनशीघ्रेण रामदर्शनत्वरावता ॥ १०—२१ ॥

२७ ] ति० टी०–सोत्तरीयमिव कण्ठासक्तोत्तरीयधारिणमिव । बोध्यमानमिव रविकिरणस्पर्शेन सर्वेषां तत्रत्यवस्तूनां विकासादिति भावः ॥ २७ ॥

रा० टी०–शृङ्गमध्ये स्थितैरम्भोदैर्मेघैः सोत्तरीयम् उत्तरीयधारिणमिव दिवाकरैर्बोध्यमानमिव ॥ २७ ॥

२८ ] ति० टी०–उद्धूतैर्लोचनसदृशैर्धातुभिरुन्मिषन्तमिवेत्युत्प्रेक्षा । प्राधीतमिवोच्चैः प्रारब्धाध्ययनमिव तत्स्वनानां महत्त्वात् ॥ २८ ॥

रा० टी०–उद्धूतैरुद्गतैः पक्ष्मरहितैरित्यर्थः लोचनैरिव धातुभिः उन्मिषन्तं विलोकयन्तमिव मन्द्रैः तोयौघनिःस्वनैः प्राधीतं प्रकृष्टाध्ययनविशिष्टमिव ॥ २८ ॥

---

१ मन्द्रैरिति रा. पाठः । २ पर्वतमिति गो. पाठः ।

प्रगीतमिव [1]विस्पष्टं नानाप्रस्रवणस्वनैः । देवदारुभि[2]रुद्धूतैरूर्ध्वबाहुमिव स्थितम् ॥ २९ ॥
प्रपातजलनिर्घोषैः प्राक्रुष्टमिव सर्वतः । [3]वेपमानामिव श्यामैः कम्पमानैः शरद्घनैः ॥ ३० ॥
वेणुभिर्मारुतोद्धूतैः कूजन्तमिव कीचकैः । निःश्वसन्तमिवामर्षाद्धोरैराशीविषोत्तमैः ॥ ३१ ॥
नीहारकृतगम्भीरैर्ध्यायन्तमिव गह्वरैः । मेघपादनिभैः पादैः प्रक्रान्तमिव सर्वतः ॥ ३२ ॥
जृम्भमाणमिवाकाशे शिखरैरभ्रमालिभिः । कूटैश्च बहुधा [4]कीर्णं शोभितं बहुकन्दरैः ॥ ३३ ॥
साल[5]तालैश्च कर्णैश्च वंशैश्च बहुभिर्वृतम् । लतावितानैर्विततैः पुष्पवद्भिरलंकृतम् ॥ ३४ ॥
नानामृग[6]गणैः कीर्णं धातुनि[7]ष्यन्दभूषितम् । बहुप्रस्रवणोपेतं शिलासंचयसंकटम् ॥ ३५ ॥
महर्षियक्षगन्धर्वकिंनरोरगसेवितम् । लतापादपसं[8]बाधं [9]सिंहाधिष्ठितकन्दरम् ॥ ३६ ॥
[10]व्याघ्रादिभिः समाकीर्णं स्वादुमूलफलद्रुमम् । [11]आरुरोहानिलसुतः पर्वतं [12]प्लवंगोत्तमः ॥ ३७ ॥
रामदर्शनशीघ्रेण प्रहर्षेणाभिचोदितः । तेन पादतलक्रान्ता रम्येषु गिरिसानुषु ॥ ३८ ॥
सघोषाः समशीर्यन्त शिलाश्चूर्णीकृतास्ततः । स तमारुह्य शैलेन्द्रं व्यवर्धत महाकपिः ॥ ३९ ॥

---

२९ ] ति० टी०—प्रगीतमिव प्रारब्धगानमिव तत्स्वनानां मन्दत्वात् ॥ २९ ॥

रा० टी०—नानाप्रस्रवणस्वनैः निर्झरशब्दैः विस्पष्टं प्रगीतमिव उद्धूतैः उद्गतैः देवदारुभिः स्थितमूर्ध्वबाहुमिव ॥ २९ ॥

३०–३१ ] ति० टी०—प्रपातजलनिर्घोषैः प्रपातेभ्यो भृगुदेशेभ्यः पतज्जलशब्दैः प्राक्रुष्टमिवारब्धाक्रोशमिव । सर्वत्रादिकर्मणि कर्तरि क्त इत्याहुः । शरद्घनैः सप्तपर्णादिशारदवृक्षसङ्घैः ॥ ३० ॥ ३१ ॥

रा० टी०—प्रयातानामुन्नतदेशेभ्यः प्रपतितानां जलानां निर्घोषैः प्राक्रुष्टमाहूतमिव श्यामैः कम्पमानैः शरद्घनैः शरत्प्रभूतघनसदृशसप्तपर्णादितरुभिर्वेपमानमिव ॥ ३० ॥

रा० टी०—मारुतोद्धूतैः वायुकम्पितैः अत एव कीचकैः सशब्दैर्वेणुभिः कूजन्तमिव आशीविषोत्तमैः निःश्वसन्तमिव ॥३१॥

३२ ] ति० टी०—नीहारकृतगम्भीरैः । नीहारवशेन तत्तद्दर्शनात्तत्कृतगम्भीरत्वं गह्वराणाम् । ध्यायन्तमिव मुद्रितेन्द्रियद्वारम् ध्यानारूढमिव स्थितमित्यर्थः । मेघपादा मेघप्ररोहास्तन्निभैः पादैः प्रत्यन्तपर्वतैः प्रक्रान्तमिवारब्धगमनमिव ॥३२

रा० टी०—नीहारेण कृतो गम्भीरः गाम्भीर्यं येषां तैः निश्चलैरित्यर्थः, गह्वरैः ध्यायन्तमिव मेघपादाः मेघप्ररोहाः तन्निभैः तत्सदृशैः पादैः प्रत्यन्तपर्वतैः सर्वतः प्रक्रान्तमिव ॥३२॥

३३ ] ति० टी०—अभ्रमालाभिः शिखरैर्जृम्भमाणमिव गात्रमोटनं कुर्वाणमिव । कूटैः शृङ्गैः ॥ ३३ ॥

रा० टी०—अभ्रमालिभिः अभ्रसमूहविशिष्टैः शिखरैः जृम्भमाणं गात्रविनामं कुर्वन्तमिव कूटैः शृङ्गैः कीर्णं व्याप्तम् ॥३३॥

३४ ] ति० टी०—लतारूपैर्विस्तृतैर्वितानैः ॥ ३४ ॥

रा० टी०—बहुभिः सालादिभिर्वृतं विततैर्विस्तृतैः लतावितानैरलंकृतम् ॥ ३४ ॥

३५ ] ति० टी०—धातुनिष्यन्दैर्धातुनिर्गमैर्भूषितम् । शिलासंचयेन शिलासमूहेन संकटं नीरन्ध्रम् ॥ ३५ ॥

रा० टी०—धातुनिष्यन्दैर्धातुस्थिरताभिर्भूषितं शिलासंचयेन शिलानां समूहेन संकटं निबिडम् ॥ ३५ ॥

३६–३७ ] ति० टी०—लताभिः पादपैश्च संबाधं व्याप्तम् ॥ ३६ ॥ ३७ ॥

रा० टी०—महर्ष्यादिभिः सेवितं सिंहैरधिष्ठिता कन्दरा यस्य तम् ॥ ३६ ॥

रा० टी०—स्वादुमूलफलाः द्रुमाः यस्मिन् तं पर्वतं रामदर्शनाय शीघ्रं शीघ्रत्वं यस्मिन् तेन प्रहर्षेण अभिचोदितः प्लवगोत्तमो हनुमान् आरुरोह । त्रयोदशानामेकत्रान्वयः ॥ ३७ ॥

३८–३९ ] ति० टी०—रामदर्शने शीघ्रेणातिवेगवता उत्कटेनेति यावत् । तेन हनुमता ॥ ३८ ॥ ३९ ॥

रा० टी०—तेनेति । तेन हनुमता पादतलाभ्यामाक्रान्ताः अत एव चूर्णीकृताः अत एव सघोषाः शिलाः समशीर्यन्त विरूपा अभवन् ॥ ३८ ॥

गो० टी०—तेनेति । चूर्णीकृताः समशीर्यन्त यथा चूर्णीकृता भवन्ति तथा समशीर्यन्तेत्यर्थः ॥ २२ ॥

रा० टी०—स इति । स हनुमान् लवणाम्भसः दक्षिणात् उत्तरं पारं प्रार्थयन् प्राप्यत्वेनेच्छन् सन् शैलेन्द्रमारुह्य व्यवर्धत ॥ ३९ ॥

गो० टी०—स तमिति । दक्षिणात् दक्षिणपारात् । प्रार्थयन् गन्तुमिति शेषः ॥ २३ ॥ २४ ॥

---

१ विस्पष्टैरिति गो. पाठः । २ अत्युच्चैरिति गो. पाठः । ३ पवमानमिति गो. पाठः । ४ कीर्णैरिति गो. पाठः । ५ तालाश्वकर्णैरिति गो. पाठः । ६ गणाकीर्णमिति गो. पाठः । ७ निष्यन्देति रा. पाठः । ८ संघातमिति गो. पाठः । ९ सिंहाध्युषितेति गो. पाठः । १० व्याघ्रसंघसमेति गो. पाठः । ११ तमारुरोह हनुमानिति गो. पाठः । १२ प्लवगात्मज इति गो. पाठः ।

दक्षिणादुत्तरं पारं प्रार्थयँल्लवणाम्भसः । अधिरुह्य ततो वीरः पर्वतं पवनात्मजः ॥ ४० ॥
ददर्श सागरं भीमं [1]भीमोरगनिषेवितम् । स मारुत इवाकाशं मारुतस्यात्मसंभवः ॥ ४१ ॥
प्रपेदे हरिशार्दूलो दक्षिणादुत्तरां दिशम् । स तदा पीडितस्तेन कपिना पर्वतोत्तमः ॥ ४२ ॥
ररास [2]विविधैर्भूतैः [3]प्राविशद्वसुधातलम् । कम्पमानैश्च शिखरैः पतद्भिरपि च द्रुमैः ॥ ४३ ॥
तस्योरुवेगोन्मथिताः पादपाः पुष्पशालिनः । निपेतुर्भूतले [4]भग्नाः शक्रायुधहता इव ॥ ४४ ॥
[5]कन्दरोदरसंस्थानां पीडितानां महौजसाम् । सिंहानां निनदो भीमो नभो भिन्दन्हि शुश्रुवे ॥ ४५ ॥
[7]त्रस्तव्याविद्धवसना व्याकुलीकृतभूषणाः । विद्याधर्यः समुत्पेतुः सहसा धरणीधरात् ॥ ४६ ॥
अतिप्रमाणा [8]बलिनो दीप्तजिह्वा महाविषाः । निपीडितशिरोग्रीवा व्यवेष्टन्त महाहयः ॥ ४७ ॥
किंनरोरगगन्धर्वयक्षविद्याधरास्तथा । पीडितं तं नगवरं त्यक्त्वा गगनमास्थिताः ॥ ४८ ॥
स च भूमिधरः श्रीमान्बलिना तेन पीडितः । सवृक्षशिखरोदग्रः प्रविवेश रसातलम् ॥ ४९ ॥
दशयोजनविस्तारस्त्रिंशद्योजनमुच्छ्रितः । धरण्यां समतां यातः स बभूव धराधरः ॥ ५० ॥

४० ] ति० टी०—प्रार्थयन्गमनप्राप्यत्वेनेच्छन् । अधिरुह्य ततोऽप्यूर्ध्वं गत्वा ॥ ४० ॥

रा० टी०—अधीति । वीरो हनुमान् पर्वतमधिरुह्य सागरं ददर्श ॥ ४० ॥

४१–४२ ] ति० टी०—स हनुमान्मारुत आकाशमिवोत्तरां दिशं प्रपेदे मनसा प्राप ॥ ४१ ॥ ४२ ॥

४३ ] ति० टी०—कम्पविशिष्टशिखरपतद्द्रुमोपलक्षितो वसुधां प्राविशदित्यन्वयः ॥ ४३ ॥

रा० टी०—स इति । स हनुमान् मारुत आकाशमिव दक्षिणात् उत्तरां दिशं प्रपेदे ॥ ४१ ॥

गो० टी०—स मारुत इति । स हरिशार्दूल इति संबन्धः । पितृतुल्यवेगवत्त्वं सूचयति—मारुतस्येति ॥ २५ ॥

रा० टी०—स इति । कपिना पीडितः कम्पमानैर्भूतैर्मृगादिभिः शिखरैश्च पतद्भिर्द्रुमैश्च उपलक्षितः पर्वतोत्तमः ररास वसुधातलं प्राविशच्च । सार्धश्लोक एकान्वयी ॥ ४२ ॥ ४३ ॥

गो० टी०—स तदेति । तैर्भूतैः तत्रत्यजन्तुभिः ॥ २६ ॥

४४–४५ ] ति० टी०—शक्रायुधं वज्रम् ॥ ४४ ॥ ४५ ॥

रा० टी०—तस्येति । तस्य हनुमतः ऊरुवेगेन उन्मथिताः प्रकम्पिताः अत एव भग्नाः पादपाः शक्रायुधहता इव भूतले निपेतुः ॥ ४४ ॥

गो० टी०—तस्येति । रुग्णाः शीर्णा इति यावत् । शक्रायुधहताः वज्रहताः ॥ २७ ॥

रा० टी०—कन्दरेति । कन्दरोदरसंस्थानां सिंहानां निनदः नभो भिन्दन्निव शुश्रुवे । हिशब्द इवार्थे ॥ ४५ ॥

गो० टी०—कन्दरान्तरेति । नभो भिन्दन् भिन्दन्निव । महत्तायां तात्पर्यम् ॥ २८ ॥

४६ ] ति० टी०—त्रस्ताः, अत एव व्याविद्धानि व्यत्यस्तानि वसनानि यासां ताः ॥ ४६ ॥

रा० टी०—त्रस्तेति । त्रस्ताः अत एव व्याविद्धानि विपरीतानि वसनानि यासां ता द्वयोः किंच त्रस्तेन त्रासेन व्याविद्धानि वसनानि यासां ताः इति कर्मधारयः व्याकुलीकृतानि संचलितानीत्यर्थः, भूषणानि यासां ताः विद्याधर्यः धरणीधरात् समुत्पेतुः ॥ ४६ ॥

गो० टी०—स्रस्तेति । स्रस्तानि व्याविद्धानि च वसनानि यासां ताः स्रस्तव्याविद्धवसनाः ॥ २९ ॥

४७–४८ ] ति० टी०—व्यवेष्टन्त कुण्डलीकृतशरीरा अजायन्त । 'व्यचेष्टन्त' इति पाठे पीडया लुठन्तीत्यर्थः ॥ ४७ ॥ ४८ ॥

रा० टी०—अतिप्रमाणा इति । निपीडितं शिलासंघर्षादिना प्राप्तं बहुपीडं शिरोग्रीवं येषां ते अतिप्रमाणाः महाहयः महोरगाः व्यवेष्टन्त कुण्डलीकृतदेहा अभवन् 'व्यचेष्टन्त' इति पाठे पीडया लुठन्तीत्यर्थ इति भट्टाः ॥ ४७ ॥

रा० टी०—किंनरेति । किंनरादयः पीडितं नगवरं त्यक्त्वा गमनमास्थिताः ॥ ४८ ॥

गो० टी०—अतिप्रमाणा इति । निपीडितशिरोग्रीवाः शिथिलपतितशिलातलैरिति शेषः ॥ ३० ॥ ३१ ॥

४९ ] ति० टी०—सवृक्षशिखरैरुदग्र उन्नतो रसातलं प्रविवेश अंशेन भूसमशिखराग्रवृक्षो जात इत्यर्थः ॥ ४९ ॥

रा० टी०—स इति । सवृक्षाः ये शिखराः तैः उदग्र उन्नतः तेन हनुमता निपीडितः स भूमिधरः रसातलं प्रविवेश ॥ ४९ ॥

गो० टी०—स चेति । सवृक्षशिखरोदग्रः सवृक्षैः शिखरैः उदग्रः श्रेष्ठः ॥ ३२ ॥ ३३ ॥

५० ] ति० टी०—तदेव दर्शयति—दशेति ॥ ५० ॥

१ भीमोरगेति गो. पाठः । २ सह तैरिति गो. पाठः । ३ प्रविशन्निति गो. पाठः । ४ रुग्णा इति गो. पाठः । ५ कन्दरान्तरेति गो. पाठः । ६ स इति गो. पाठः । ७ स्रस्तेति गो. पाठः । ८ फणिन इति रा. पाठः । ९ तदेति गो. पाठः ।

स लिलङ्घयिषुर्भीमं सलीलं लवणार्णवम् । कल्लोलास्फालवेलान्तमुत्पपात नभो हरिः ॥ ५१ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये सुन्दरकाण्डे षट्पञ्चाशः सर्गः ॥ ५६ ॥

## सप्तपञ्चाशः सर्गः ।

लङ्कातटादुत्प्लुतो हनुमान्मार्गमध्ये संप्राप्तं मैनाकं संस्पृश्याग्रे गच्छन्महेन्द्रं विलोक्य बन्धुजनहर्षणायोच्चैर्जगर्ज । तच्छ्रवणेन सरभसमुत्थितान्कपिगणाञ्जाम्बवान्हर्षोद्घोषणतो हनुमतः कृतकार्यत्वं कथयति । महेन्द्रशिखरमवतीर्णो हनुमाञ्जाम्बवदादीनभिवाद्य सर्वान्प्रति संग्रहेण सीतादर्शनादिकं निवेदयति । अङ्गदो हनुमन्तं प्रशस्य सविस्तरं सीतादर्शनवृत्तान्तश्रवणोत्कः सर्वैः समं माहेन्द्रविशालशिलातलमाश्रयते ।

आप्लुत्यच महावेगः पक्षवानिव पर्वतः । [1]भुजङ्गयक्षगन्धर्वप्रबुद्धकमलोत्पलम् ॥ १ ॥
सचन्द्रकुमुदं रम्यं सार्ककारण्डवं शुभम् । तिष्यश्रवणकादम्बमभ्रशैवलशाद्वलम् ॥ २ ॥
पुनर्वसुमहामीनं लोहिताङ्गमहाग्रहम् । ऐरावतमहाद्वीपं स्वातीहंसविलासितम् ॥ ३ ॥
वातसंघातजाला[3]र्मिचन्द्रांशु[2]शिशिराम्बुमत् । [4]हनूमानपरिश्रान्तः पुप्लुवे गगनार्णवम् ॥ ४ ॥

रा० टी०—तदेव स्पष्टयति—दशेति । दशयोजनानि विस्तारो यस्य स धराधरः धरण्याः समतां यातः प्राप्तो बभूव ॥ ५० ॥

५१ ] ति० टी०—कल्लोलैरास्फाल्यते स्पृश्यते तादृशो वेलान्तस्तीरप्रान्तो यस्य तं सागरं लिलङ्घयिषुर्नभ उत्पपातेति संबन्धः ॥ ५१ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये सुन्दरकाण्डे षट्पञ्चाशः सर्गः ॥ ५६ ॥

रा० टी०—स इति । कल्लोलास्फालवेलान्तं तरङ्गैः स्फालिततीरोपान्तं भीमं लवणार्णवं सलीलं लीलापूर्वकं लिलङ्घयिषुः हरिः स हनुमान् नभः उत्पपात ॥ ५१ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ सुन्दरकाण्डे षट्पञ्चाशः सर्गः ॥ ५६ ॥

गो० टी०—स इति । कल्लोलास्फालवेलान्तं तरङ्गैरास्फाल्यमानतीरोपान्तम् ॥ ३४ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने षट्पञ्चाशः सर्गः ॥ ५६ ॥

१ ] ति० टी०—आप्लुत्योत्प्लुत्य । आधारं गगनमर्णवत्वेन वर्णयति—भुजङ्गेत्यादि । भुजङ्गादय एव विकसितानि कमलादीनि यस्मिन् ॥ १ ॥

२ ] ति० टी०—चन्द्ररूपेण कुमुदेन श्वेतोत्पलेन सहितम् अर्करूपकारण्डवाख्यजलपक्षिसहितम्, अभ्राणि मेघा एव शैवलानि शाद्वलानि च यत्र तम् ॥ २ ॥

३ ] ति० टी०—लोहिताङ्गो भौमः, महाग्रहो महाग्राहः, स्वातीरूपो हंसो विलासितः कृतविलासो यत्र तत् ॥ ३ ॥

४ ] ति० टी०—वातसंघातो वात्या तज्जालं तत्समूह एवोर्मयो यत्र तम् । चन्द्रकिरणरूपशीतलजलयुक्तम् । मतुवार्षः । अत्र सावयवरूपकम् । गगनस्यार्णवत्वेन चन्द्रादीनां कुमुदादित्वेन च रूपणात् ॥ ४ ॥

रा० टी०—प्लवनकालकं हनुमद्वृत्तान्तमाह—आप्लुत्येत्यादिभिः । पक्षवान् पर्वत इव महावेगो हनुमान् भुजङ्गादय एव प्रबुद्धानि विकसितानि कमलोत्पलानि यस्मिन्, चन्द्ररूपकुमुदेन सहितम् अर्क एव कारण्डवः जलकुक्कुटः तेन सहितं तिष्यश्रवणावेव कादम्बाः कलहंसा यस्मिन्, अभ्रा एव शैवलाः शाद्वलाश्च यस्मिन्, पुनर्वसू एव महामीनौ यस्मिन्, लोहिताङ्गो भौम एव महाग्राहो बृहद्ग्राहो यस्मिन्, ऐरावत एव महाद्वीपो यस्मिन्, स्वात्येव हंसस्तेन विलासितं शोभितं वातसंघातानां वात्यानां जालं समूह एव ऊर्मयो यस्मिन्, चन्द्रांशव एव शिशिराम्बूनि शीतजलानि तद्वद्गगनार्णवं पक्षवान् पर्वत इव महावेगः अपरिश्रान्तो हनुमान् आप्लुत्य उत्प्लुत्य पुप्लुवे । श्लोकचतुष्टयमेकान्वयि ॥ १–४ ॥

गो० टी०—उत्पपात नभो हरिरित्युक्तम् तल्लङ्घनं रूपकेण चतुर्भिर्वर्णयति—सचन्द्रेत्यादिना । कारण्डवः जलकुक्कुटः । कादम्बः कलहंसः । 'कादम्बः कलहंसः स्यात्' इत्यमरः । अभ्रशैवालशाद्वलं मेघस्य शैवालत्वेन पर्यन्तस्थशाद्वलत्वेन च रूपणम् । लोहिताङ्गः अङ्गारकः स एव महाग्रहः महाग्राहः यस्य तम् । ऐरावतस्याभ्रमातङ्गत्वेनाभ्रगामित्वात्तत्र संभवः । विलोलितम् अवगाढम् । वातसङ्घातजातोर्मय एव चन्द्रांशवः तैः शीतलजलवद्भुजङ्गादीनां कमलोत्पलत्वेन रूपणं तत्तद्वर्णभेदेन । अत्र गगनस्यार्णवत्वेन चन्द्रादीनां तदवयवकुमुदादित्वेन च रूपणात्सावयवरूपकम् । तस्य नौरिवेत्युपमया तिलतन्दुलवत्संसृष्टिः ॥ १—४ ॥

१ अर्धमेतत् गो. नास्ति । २ अर्धमेतत् शिशिराम्बुमदिवस्मादग्रे गो. पाठे । ३ जातोर्मीति गो. पाठः । ४ हनुमान्मारुतगतिर्महानौरिव सागरम् । अपारमपरिश्रान्तः इति गो. पाठः ।

ग्रसमान इवाकाशं ताराधिपमिवोल्लिखन् । हरन्निव सनक्षत्रं गगनं सार्कमण्डलम् ॥ ५ ॥
अपारमपरिश्रान्तश्चाम्बुधिं समगाहत । हनूमान्मेघजालानि विकर्षन्निव गच्छति ॥ ६ ॥
पाण्डुरारुणवर्णानि नीलमाञ्जिष्ठकानि च । हरितारुणवर्णानि महाभ्राणि चकाशिरे ॥ ७ ॥
प्रविशन्नभ्रजालानि निष्क्रमंश्च पुनः पुनः । प्रकाशश्चाप्रकाशश्च चन्द्रमा इव दृश्यते ॥ ८ ॥
विविधाभ्रघनापन्नगोचरो धवलाम्बरः । दृश्यादृश्यतनुर्वीरस्तथा चन्द्रायतेऽम्बरे ॥ ९ ॥
तार्क्ष्यायमाणो गगने स बभौ वायुनन्दनः । दारयन्मेघवृन्दानि निष्पतंश्च पुनः पुनः ॥ १० ॥
नदन्नादेन महता मेघस्वनमहास्वनः । प्रवरान्राक्षसान्हत्वा नाम विश्राव्य चात्मनः ॥ ११ ॥
आकुलां नगरीं कृत्वा व्यथयित्वा च रावणम् । अर्दयित्वा महावीरान्वैदेहीमभिवाद्य च ॥ १२ ॥
आजगाम महातेजाः पुनर्मध्येन सागरम् । पर्वतेन्द्रं सुनाभं च समुपस्पृश्य वीर्यवान् ॥ १३ ॥
ज्यामुक्त इव नाराचो महावेगोऽभ्युपागमत् । स किंचिदारात्संप्राप्तः समालोक्य महागिरिम् ॥ १४ ॥
महेन्द्रमेघसंकाशो ननाद स महाकपिः । स पूरयामास कपिर्दिशो दश समन्ततः ॥ १५ ॥
नदन्नादेन महता मेघस्वनमहास्वनः । स तं देशमनुप्राप्तः सुहृद्दर्शनलालसः ॥ १६ ॥

५-६ ] ति० टी०—ताराधिपमुल्लिखन्निव नखैरिति शेषः । हरन्निव गृह्णन्निव ॥ ५ ॥ ६ ॥

रा० टी०—ग्रसमान इति । आकाशमन्तरिक्षं ग्रसमान इव ताराधिपं चन्द्रमसम् उल्लिखन्निव सनक्षत्रं सार्कमण्डलं गगनं हरन्निव मेघजालानि विकर्षन्निव हनुमान् गच्छति । श्लोकद्वयमेकान्वयि ॥ ५ ॥ ६ ॥

गो० टी०—अथ तदेवोत्प्रेक्षया वर्णयति—ग्रसमान इवेत्यादिना ॥ ५ ॥ ६ ॥

७-८ ] ति० टी०—महाभ्राणीत्यस्य कपिनाऽऽकृष्यमाणानीति शेषः ॥ ७ ॥ ८ ॥

रा० टी०—पाण्डरेति । पाण्डरादिवर्णविशिष्टानि महाभ्राणि चकाशिरे ॥ ७ ॥

रा० टी०—प्रविशन्निति । अभ्रजालानि प्रविशन् निष्क्रामंश्च हनुमान् प्रकाशोऽप्रकाशश्च चन्द्रमा इव दृश्यते ॥ ८ ॥

गो० टी०—पाण्डरेति । व्यक्ताव्यक्तवाचित्वेन अरुणशब्दयोः कथंचिदपौनरुक्त्यमुन्नेयम् । यद्वा 'अरुणः कृष्णलोहिते' इत्यमरशेषः । महाभ्राणि चकाशिरे । हनुमत्संपर्कादित्यर्थः । अन्यथा वाजपेयशरद्वर्णनवदभ्रवर्णनस्यासंगतत्वापातः । हनुमतस्तेजस्वीत्यनेन मेघानां नानावर्णत्वापत्तिः सूर्येन्दुसंपर्कवत् ॥ ७ ॥ ८ ॥

९-१० ] ति० टी०—प्रविशन्नित्युक्तमेवार्थं भङ्ग्यन्तरेणाह—विविधेति । विविधेष्वभ्रघनेष्वापन्नो गोचरो मार्गो येन सः । प्रवेशनिष्क्रमाभ्यां दृश्यादृश्यतनुः । अयं श्लोकः प्रक्षिप्त इति भाति ॥ ९ ॥ १० ॥

रा० टी०—तदेव भङ्ग्यन्तरेणाह—विविधेति । विविधेषु अभ्रघनेषु निविडाभ्रेषु आपन्नः प्राप्तः गोचरः मार्गो यस्य धवलमम्बरं यस्य स हनुमान् अम्बरे आकाशे चन्द्रायते ॥९॥

गो० टी०—विविधेति । विविधेष्वभ्रघनेषु मेघसंघातेषु आपन्नगोचरः प्राप्तविषयः । लब्धमार्ग इति यावत् । धवलाम्बरः शुक्लवासाः दृश्यादृश्यतनुः मेघान्तःप्रवेशनिष्क्रमणाभ्यामिति भावः । चन्द्रायते चन्द्र इवाचरति ॥ ९ ॥

रा० टी०—तार्क्ष्येति । मेघवृन्दानि पुनः पुनर्दारयन् निष्पतन् निर्गच्छन् अत एव तार्क्ष्यायमाणो वायुनन्दनः बभौ ॥ १० ॥

गो० टी०—तार्क्ष्यायमाण इति । तार्क्ष्य इवाचरन् तार्क्ष्यायमाणः । उभयत्र "उपमानादाचारे" "कर्तुः क्यङ् सलोपश्च" इति क्यङ् ॥ १०—१३ ॥

११-१२ ] ति० टी०—मेघस्वनवन्महास्वनो यस्य सः ॥ ११ ॥ १२ ॥

रा० टी०—नदन्निति । मेघस्वनमहास्वनः हनुमान् राक्षसान् हत्वा आत्मनो नाम विश्राव्य प्रख्याप्य नगरीं लङ्कामाकुलां कृत्वा महता नादेन नदन् सन् मध्येन तदवच्छेदेन सागरमाजगाम । सार्धश्लोकद्वयमेकान्वयि ॥ ११ ॥ १२ ॥

१३-१६ ] ति० टी०—सुनाभं मैनाकम् ॥ १३—१६ ॥

रा० टी०—पर्वतेन्द्रमिति । सुनाभं पर्वतेन्द्रं समुपस्पृश्य ज्यामुक्तो नाराच इव अभ्युपागमत् ॥ १३ ॥

गो० टी०—पर्वतेन्द्रमिति । सुनाभं मैनाकम् ॥ १४ ॥

रा० टी०—स इति । किंचित् आरात् समीपं संप्राप्तः स हनुमान् महेन्द्रं महागिरिं समालोक्य ननाद ॥ १४ ॥

१ मारुतस्यात्मजः श्रीमान्कपिर्व्योमचरो महानिति गो. पाठः । २ पाण्डरेति गो. पाठः । ३ निष्पतंश्चेति गो. निष्क्रामन्निति रा. पाठः । ४ प्रच्छन्नश्च प्रकाशश्चेति गो. पाठः । ५ तदेति गो. पाठः । ६ बभासे इति गो. पाठः । ७ बलं घोरमिति गो. पाठः । ८ ऽभ्युपागत इति गो. पाठः । ९ अनुसंप्राप्त इति गो. पाठः । १० संकाशमिति गो. पाठः । ११ हरिपुङ्गव इति गो. पाठः ।

ननाद सुमहानादं लाङ्गूलं चाप्यकम्पयत् । तस्य नानद्यमानस्य सुपर्णाचरिते पथि ॥ १७ ॥
फलतीवास्य घोषेण गगनं सार्कमण्डलम् । ये तु तत्रोत्तरे कूले समुद्रस्य महाबलाः ॥ १८ ॥
पूर्वं संविष्ठिताः शूरा वायुपुत्रदिदृक्षवः । महतो वायुनुन्नस्य तोयदस्येव निःस्वनम् ॥
शुश्रुवुस्ते तदा घोषमूरुवेगं हनूमतः ॥ १९ ॥
ते दीनमनसः सर्वे शुश्रुवुः काननौकसः । वानरेन्द्रस्य निर्घोषं पर्जन्यनिनदोपमम् ॥ २० ॥
निशम्य नदतो नादं वानरास्ते समन्ततः । बभूवुरुत्सुकाः सर्वे सुहृद्दर्शनकाङ्क्षिणः ॥ २१ ॥
जाम्बवान्स हरिश्रेष्ठः प्रीतिसंहृष्टमानसः । उपामन्त्र्य हरीन्सर्वानिदं वचनमब्रवीत् ॥ २२ ॥
सर्वथा कृतकार्योऽसौ हनूमान्नात्र संशयः । नह्यस्याकृतकार्यस्य नाद एवंविधो भवेत् ॥ २३ ॥
तस्य बाहूरुवेगं च निनादं च महात्मनः । निशम्य हरयो हृष्टाः समुत्पेतुर्यतस्ततः ॥ २४ ॥
ते नगाग्रान्नगाग्राणि शिखराच्छिखराणि च । प्रहृष्टाः समपद्यन्त हनूमन्तं दिदृक्षवः ॥ २५ ॥

---

गो० टी०—स इति । किंचिदनुसंप्राप्तः मैनाकात्परं कचित् प्रदेशं प्राप्तः ॥ १६ ॥ १६ ॥

रा० टी०—स इति । स हनुमान् नदन् सन् दशदिशः पूरयामास ॥ १६ ॥

रा० टी०—स इति । सुहृदामङ्गदादीनां दर्शने लालसा यस्य सः तं सुहृत्समीपवर्तिनं देशमनुप्राप्तः स हनुमान् ननाद लाङ्गूलमकम्पयच्च ॥ १६ ॥

गो० टी०—स तमिति । लालसः साभिलाषः । तं देशम् सुहृदावाससमीपप्रदेशम् ॥ १७ ॥

१७]ति०टी०—लाङ्गूलं चाप्यकम्पयदिति स्वभावोक्तिः॥१७॥

रा० टी०—तस्येति । सुपर्णाचरिते पथि नानद्यमानस्य तस्य हनुमतः आस्यघोषेण मुखनिर्गतशब्देन गगनं फलति भिद्यते इव ॥ १७ ॥

गो० टी०—तस्येति । नानद्यमानस्य पुनः पुनर्भृशं नदत इत्यर्थः । फलतीव दलतीव ॥ १८ ॥

१८ ] ति० टी०—फलतीव विशीर्यतीव ॥ १८ ॥

१९ ] ति० टी०—ये पूर्वसंविष्ठितास्ते तोयदनिःस्वनमिवोरुवेगं तज्जन्यं घोषं शुश्रुवुरित्यन्वयः ॥ १९ ॥

रा० टी०—ये इति । तत्र प्रसिद्धे समुद्रस्योत्तरे कूले पूर्वं संविष्ठिताः वायुपुत्रं दिदृक्षवः ये वानराः ते वायुनुन्नस्य वायुना प्रेरितस्य तोयदस्य मेघस्य निःस्वनमिव उरुवेगं हनुमतो घोषं शुश्रुवुः । अर्धचतुष्टयमेकान्वयि ॥ १८ ॥ १९ ॥

गो० टी०—ये त्वित्यादि । वातनुन्नस्य वातसंघट्टितस्य । घोषम् ऊरुवेगमिति ऊरुवेगजन्यं घोषमित्यर्थः ॥ १९ ॥ २० ॥

२०]ति०टी०—वानरेन्द्रस्य निर्घोषं तदीयसिंहनादम्॥२०॥

रा० टी०—तदेव भङ्ग्यन्तरेणाह—ते इति । ते वानराः निर्घोषं शुश्रुवुः ॥ २० ॥

गो० टी०—ते दीनमनस इति । अनिष्टश्रवणशङ्कयेति भावः ॥ २१—२४ ॥

२१–२३ ] ति० टी०—सुहृद्दर्शनकाङ्क्षिणस्तेन शब्देन हनुमानेवैतीति निश्चित्य तद्दर्शनलालसाः ॥ २१–२३ ॥

रा० टी०—निशम्येति । नदतो हनुमतो नादं निशम्य श्रुत्वा सर्वे वानराः उत्सुका बभूवुः ॥ २१ ॥

रा० टी०—जाम्बवानिति । हरीन् वानरान् उपामन्त्र्य संबोध्य इदमब्रवीत् ॥ २२ ॥

रा० टी०—तद्वचनाकारमाह—सर्वथेति । हि यतः अकृतकार्यस्य अस्य हनुमत एवंविधः नादो न भवेत् अतः असौ हनुमान् सर्वथा सर्वप्रकारेण कृतकार्यः अत्र संशयो न ॥२३॥

२४ ] ति० टी०—बाहूरुवेगं तज्जन्यशब्दम् निनादं च कण्ठशब्दं च ॥ २४ ॥

रा० टी०—तस्येति । तस्य हनुमतः बाहूरुवेगं निनादं च निशम्य श्रुत्वा हरयो यतस्ततः समुत्पेतुः ॥ २४ ॥

गो० टी०—तस्येति । निशम्य ज्ञात्वेत्यर्थः । यद्वा दृष्ट्वा चेत्यध्याहार्यम् । अन्यथा बाहूरुवेगपदानन्वयात् ॥ २५ ॥

२५ ] ति० टी०—नगाग्रात् स्वाश्रयादूर्ध्वदेशस्थानि नगाग्राणीत्यर्थः ॥ २५ ॥

रा० टी०—ते इति । ते हरयः नगाग्रात् तरूणामूर्ध्वदेशात् नगाग्राणि तरोरूर्ध्वदेशान् शिखरात् शिखराणि च आप्लुत्येति शेषः, हनूमन्तं समपद्यन्त ॥ २५ ॥

---

१ हरिशार्दूल इति गो. पाठः । २ सुपर्णचरिते इति गो. पाठः । ३ तीरे इति गो. पाठः । ४ पुत्रमिति रा. पाठः । ५ गर्जितमिति गो. पाठः ।
६ ततस्ततः इति गो. पाठः ।

ते प्रीताः पादपाग्रेषु गृह्य शाखामवस्थिताः । वासांसि च प्रकाशानि समाविध्यन्त वानराः॥ २६ ॥
गिरिगह्वरसंलीनो यथा गर्जति मारुतः । एवं जगर्ज बलवान्हनूमान्मारुतात्मजः ॥ २७ ॥
तमभ्रघनसंकाशमापतन्तं महाकपिम् । दृष्ट्वा ते वानराः सर्वे तस्थुः प्राञ्जलयस्तदा ॥ २८ ॥
ततस्तु वेगवान्वीरो गिरेर्गिरिनिभः कपिः । निपपात गिरेस्तस्य शिखरे पादपाकुले ॥ २९ ॥
हर्षेणापूर्यमाणोऽसौ रम्ये पर्वतनिर्झरे । छिन्नपक्ष इवाकाशात्पपात धरणीधर ॥ ३० ॥
ततस्ते प्रीतमनसः सर्वे वानरपुंगवाः । हनूमन्तं महात्मानं परिवार्योपतस्थिरे ॥ ३१ ॥
परिवार्य च ते सर्वे परां प्रीतिमुपागताः । प्रहृष्टवदनाः सर्वे तमागतमुपागमन् ॥ ३२ ॥
उपायनानि चादाय मूलानि च फलानि च । प्रत्यर्चयन्हरिश्रेष्ठं हरयो मारुतात्मजम् ॥ ३३ ॥
विनेदुर्मुदिताः केचित्केचित्किलकिलां तथा । हृष्टाः पादपशाखाश्च आनिन्युर्वानरर्षभाः ॥ ३४ ॥
हनूमांस्तु गुरून्वृद्धाञ्जाम्बवत्प्रमुखांस्तदा । कुमारमङ्गदं चैव सोऽवन्दत महाकपिः ॥ ३५ ॥

---

गो० टी०—समुत्पेतुरित्युक्तं विवृणोति—ते नगाग्रादिति । नगाग्रात् वृक्षाग्रात् । समपद्यन्त संघीभूताः ॥ २६ ॥

२६-२७ ] ति० टी०—ते शाखां गृह्य गृहीत्वोर्ध्वदृशा हनुमन्निरीक्षणे पतनभिया शाखां गृहीत्वा धृत्वा पादपाग्रेषु तदग्रशाखासु स्थिताः । वासांसि समाविध्यन्त प्राकम्पयन्त । नृत्यान्तर इवेति भावः । प्रकाशानि निर्मलतया प्रकर्षेण शोभन्ते तादृशानि वासांसि ॥ २६ ॥ २७ ॥

रा० टी०—ते इति । शाखां गृह्य गृहीत्वा पादपाग्रेषु अवस्थिताः ते वानराः प्रकाशानि प्रकाशं प्राप्तानि वासांसि समाविध्यन्त प्राकम्पयन्त अतिहर्षहेतुकगात्रप्रकम्पनद्वारा वस्त्राण्यपि प्रकम्पितानि बभूवुरित्यर्थः ॥ २६ ॥

रा० टी०—गिरीति । गिरिगह्वरसंलीनः मारुतो यथा गर्जति प्रभूतशब्दं करोति एवं मारुतात्मजो जगर्ज ॥ २७ ॥

गो० टी०—त इति । प्रीता इति हेतुगर्भं विशेषणम् । यथा मनुष्याः दूरस्थस्वकीयानयनाय वासांसि धून्वन्ति तथा वानराश्चान्योन्याह्वानाय पुष्पितशाखाः गृहीत्वा प्रशाखाः प्राग्रशाखाः समाविद्धयन्त पर्यभ्रामयन् ॥ २७ ॥ २८ ॥

२८ ] ति० टी०—अभ्रं मेघस्तदुपरि यो मेघस्तत्संकाशम् । अत्युन्नतमेघसमूहसदृशमित्यर्थमन्ये । स्वजीवनदातृत्वेन स्वपूज्यत्वात्प्राञ्जलयः स्थिताः ॥ २८ ॥

रा० टी०—तमिति । आपतन्तं हनुमन्तं दृष्ट्वा सर्वे वानराः प्राञ्जलयः प्रणतिसूचकबद्धयुगुलकराः सन्तस्तस्थुः ॥ २८ ॥

गो० टी०—तमिति । अभ्रघनसंकाशम् अभ्रसमूहतुल्यम् ॥ २९ ॥

२९ ] ति० टी०—ततो गिरेररिष्टाख्याद्रिरेः प्लुतः कपिस्तस्य महेन्द्रस्य गिरेः शिखरे निपपात । अनेनाविश्रममागमनं ध्वनितम् ॥ २९ ॥

रा० टी०—तत इति । ततः प्राञ्जलिसर्ववानरकर्मकदर्शनानन्तरं गिरिनिभो हनुमान् गिरेः अरिष्टाभिधपर्वतात् गिरेः तस्य महेन्द्रस्य शिखरे निपपात ॥ २९ ॥

गो० टी०—ततस्त्विति । निपपात निर्भरमाक्रान्तवान् ॥ ३० ॥

३०-३३ ] ति० टी०—छिन्नपक्षो धरणीधर इवाकाशात्पपात हर्षेणापूर्यमाणः पूर्यमाणहृदयः । पर्वतनिर्झरे निर्झरप्रवर्तके शिखर इत्यर्थमेके । श्रमनिवृत्तये जल एव पतित इत्यन्ये ॥ ३०—३३ ॥

रा० टी०—तदेव भङ्ग्यन्तरेणाह—हर्षेणेति । हर्षेणापूर्यमाणो हनुमान् पर्वतनिर्झरे बहुनिर्झरवत्पर्वते पर्वतस्य निर्झरे वा आकाशात् छिन्नपक्षो धरणीधर इव पपात ॥ ३० ॥

गो० टी०—हर्षेणेति । पपातेति । अच्छिन्नपक्षस्य पातासंभवाच्छिन्नपक्ष इत्युक्तम् ॥ ३१ ॥ ३२ ॥

रा० टी०—तत इति । सर्वे वानरपुङ्गवाः हनुमन्तं परिवार्य उपतस्थिरे ॥ ३१ ॥

रा० टी०—परीति । आगतं तं हनुमन्तं परिवार्य परां प्रीतिमुपागताः वानराः उपागमन् तत्समीपं प्रापुः ॥ ३२ ॥

रा० टी०—उपायनानीति । फलादीन्युपायनान्यादाय हरयः हरिश्रेष्ठं हनुमन्तं प्रत्यर्चयन् प्रत्यार्चयन् ॥ ३३ ॥

गो० टी०—प्रहृष्टवदना इति । प्रहृष्टवदनाः प्रसन्नमुखाः आसन्निति शेषः । अरोगं कुशलिनमित्यर्थः । उपायनानि उपहारान् ॥ ३३ ॥

३४-३५ ] ति० टी०—शाखानयनं हनुमत आसनार्थम् ॥ ३४ ॥ ३५ ॥

रा० टी०—विनेदुरिति । केचिद्वानरर्षभाः किलकिलां स्वजातीयशब्दं विनेदुः चक्रुः, केचित्पादपशाखा आनिन्युः॥ ३४॥

रा० टी०—हनूमानिति । हनुमान् जाम्बवत्प्रमुखान् अवन्दत ॥ ३५ ॥

---

१ शाखाः सुविष्ठिता इति गो. पाठः । २ इव प्रशाखाश्चेति गो. पाठः । ३ तस्यति गो. पाठः । ४ महेन्द्रस्येति गो. पाठः । ५ तमरोगमुपागतमिति गो. पाठः । ६ श्लोकोऽयं गो. नास्ति ।

सताभ्यां पूजितः पूज्यः कपिभिश्च प्रसादितः । दृष्टा दे[1]वीति विक्रान्तः संक्षेपेण न्यवेदयत् ॥ ३६ ॥
निषसाद च हस्तेन गृहीत्वा वालिनः सुतम् । रमणीये वनोद्देशे महेन्द्रस्य गिरेस्तदा ॥ ३७ ॥
हनूमानब्रवीत्पृष्टस्तदा तान्वानरर्षभान् । अशोकवनिकासंस्था दृष्टा सा जनकात्मजा ॥ ३८ ॥
रक्ष्यमाणा सुघोराभी राक्षसीभिरनिन्दिता । एकवेणीधरा बाला रामदर्शनलालसा ॥ ३९ ॥
उपवासपरिश्रान्ता मलिना जटिला कृशा । ततो दृष्टेति वचनं महार्थममृतोपमम् ॥ ४० ॥
निशम्य मारुतेः सर्वे मुदिता वानराभवन् । क्ष्वेडन्त्यन्ये नदन्त्यन्ये गर्जन्त्यन्ये महाबलाः॥ ४१ ॥
चक्रुः [2]किलकिलामन्ये प्रतिगर्जन्ति चापरे । केचिदुच्छ्रितलाङ्गूलाः प्रहृष्टाः कपिकुञ्जराः ॥ ४२ ॥
[3]आयताञ्चितदीर्घाणि लाङ्गूलानि प्रविव्यधुः । अपरे [4]तु हनूमन्तं श्रीमन्तं वानरोत्तमम् ॥ ४३ ॥
आप्लुत्य गिरिशृङ्गेषु संस्पृशन्ति स्म हर्षिताः । उक्तवाक्यं हनूमन्तमङ्गदस्तु तदाऽब्रवीत् ॥ ४४ ॥
सर्वेषां हरिवीराणां मध्ये वाचमनुत्तमाम् । सत्त्वे वीर्ये न ते कश्चित्समो [5]वानर विद्यते ॥ ४५ ॥
यदवप्लुत्य विस्तीर्णं सागरं पुनरागतः । [6]जीवितस्य प्रदाता [illegible]को वानरोत्तम ॥ ४६ ॥

गो० टी०–हनुमांस्त्वित्यादि । कुमारमङ्गदं चेति । स्वामित्वादिति भावः ॥ ३४—३९ ॥

३६–४२ ] ति० टी०–ताभ्यां जाम्बवदङ्गदाभ्यां प्रसादितः प्रसन्नदृष्ट्याकारितात्मनिरीक्षणः ॥ ३६–४२ ॥

रा० टी०–स इति । ताभ्यां जाम्बवदङ्गदाभ्यां कपिभिश्च पूजितः अत एव प्रसादितः विक्रान्तः विक्रमवान् पूज्यो हनुमान् देवी सीता दृष्टेति न्यवेदयत् ॥ ३६ ॥

रा० टी०–निषसादेति । वालिनः सुतमङ्गदं हस्तेन गृहीत्वा महेन्द्रस्य गिरेः वनोद्देशे वनप्रदेशे निषसाद ॥ ३७ ॥

रा० टी०–हनूमानिति । पृष्टो हनुमान् सुघोराभिः राक्षसीभिः रक्ष्यमाणा अनिन्दिता निन्दासंसर्गरहिता रामदर्शनलालसा कृशा अशोकवनिकासंस्था जनकात्मजा मया दृष्टेति वानरर्षभान् अब्रवीत् । सार्धश्लोकद्वयमेकान्वयि ॥ ३८ ॥ ३९ ॥

रा० टी०–तत इति । दृष्टेति मारुतेर्वचनं निशम्य वानराः मुदिता अभवन् । संधिरार्षः, नञ्चनेत्यत्र नेति योगविभागेन त्रिपाद्या क्वचिदसिद्धत्वाभावज्ञापनाद्वा ॥ ४० ॥

गो० टी०–तत इति । भवन् अभवन् अनित्यत्वादडभावः ॥ ४० ॥

रा० टी०–प्रमोदचिह्नान्याह–क्ष्वेडन्तीति । क्ष्वेडनादीनि कुर्वन्ति ॥ ४१ ॥

गो० टी०–क्ष्वेलन्तीति । क्ष्वेलन्ति सिंहनादं कुर्वन्ति नदन्ति अव्यक्तशब्दं कुर्वन्ति । गर्जन्ति वृषभनादं कुर्वन्ति । किलिकिलां स्वजात्युचितकिलिकिलाशब्दम् ॥ ४१ ॥

रा० टी०–के[illegible] ॥ [illegible]ते । केचित् आयताञ्चितानि विस्तारं प्राप्तान्येव दी[illegible]लानि प्रविव्यधुः ॥ ४२ ॥

गो० टी०–केचिदिति । अञ्चितायतदीर्घाणि अत्र दीर्घपदसन्निधानादायतपदं स्थूलपरम् । प्रविव्यधुः लाङ्गूलानुद्धृत्य भूमावताडयन्नित्यर्थः ॥ ४२ ॥

४३ ] ति० टी०–आयताञ्चितदीर्घाणि । आयामो विस्तारः, स्थौल्यमित्यन्ये ॥ ४३ ॥

रा० टी०–अपरे इति । अपरे तु आप्लुत्य हनुमन्तं संस्पृशन्ति ॥ ४३ ॥

गो० टी०–अपरे चेति । संस्पृशन्ति आलिङ्गन्तीत्यर्थः ॥ ४३ ॥ ४४ ॥

४४–४६ ] ति० टी०–गिरिशृङ्गेष्वाप्लुत्य । तेभ्य आप्लुत्येत्यर्थः ॥ ४४–४६ ॥

रा० टी०–उक्तेति । हरिवीराणां मध्ये अङ्गदो हनुमन्तमब्रवीत् ॥ ४४ ॥

रा० टी०–तद्वचनाकारमाह–सत्त्व इति । हे वानर ! यद्यस्मात्सागरमवप्लुत्य त्वमागतः अतः सत्त्वे वीर्ये च ते समः कश्चिन्न विद्यते ॥ ४५ ॥

रा० टी०–जीवितस्येति । नो जीवितस्य जीवनस्य प्रदाता एकस्त्वमेव अत एव त्वत्प्रसादात् सिद्धार्था वयं राघवेण सह समेष्यामः तिष्ठामः ॥ ४६ ॥

गो० टी०–सत्त्व इति । अवप्लुत्य विस्तीर्णमित्यङ्गदेतरव्यावृत्तिः । पुनरागत इत्यङ्गदव्यावृत्तिः ॥ ४९–५० ॥

१ सीतेतीति गो. दृष्टेति रा. पाठः । २ किलिकिलामिति गो. पाठः । ३ अञ्चितायतेति गो. पाठः । ४ चेति गो. पाठः । ५ वानरा वारणोपममिति गो. पाठः । ६ एतदाद्यर्धद्वयं गो. नास्ति ।

त्वत्प्रसादात्समेष्यामः सिद्धार्था राघवेण ह । अहो स्वामिनि ते भक्तिरहो वीर्यमहो धृतिः॥ ४७ ॥
दिष्ट्या दृष्टा त्वया देवी रामपत्नी यशस्विनी । दिष्ट्या त्यक्ष्यति काकुत्स्थः शोकं सीतावियोगजम् ४८
ततोऽङ्गदं हनूमन्तं जाम्बवन्तं च वानराः । परिवार्य प्रमुदिता भेजिरे विपुलाः शिलाः ॥ ४९ ॥
उपविष्टा गिरेस्तस्य शिलासु विपुलासु ते । श्रोतुकामाः समुद्रस्य लङ्घनं वानरोत्तमाः ॥ ५० ॥
दर्शनं चापि लङ्कायाः सीताया रावणस्य च । तस्थुः प्राञ्जलयः सर्वे हनूमद्वदनोन्मुखाः ॥ ५१ ॥
तस्थौ तत्राङ्गदः श्रीमान्वानरैर्बहुभिर्वृतः । उपास्यमानो [2]विविधैर्दिवि देवपतिर्यथा ॥ ५२ ॥
[1]हनूमता कीर्तिमता यशस्विना तथाङ्गदेनाङ्गदनद्धबाहुना ।
मुदा तदाध्यासितमुन्नतं महन्महीधराग्रं ज्वलितं श्रियाऽभवत् ॥ ॥ ५३ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये सुन्दरकाण्डे सप्तपञ्चाशः सर्गः ॥ ५७ ॥

---

## अष्टपञ्चाशः सर्गः ।

---

कपिसेनया समुपविष्टेन जाम्बवता पृष्टो हनुमान्मैनाकावलोकनलङ्कागमनजानकीदर्शनपुनरागमनादि सकलवृत्तं व्यासेन निवेदयति ।

ततस्तस्य गिरेः [3]शृङ्गे महेन्द्रस्य [4]महाबलः । हनुमत्प्रमुखाः प्रीतिं हरयो जग्मुरुत्तमाम् ॥ १ ॥
[5]प्रीतिमत्सूपविष्टेषु वानरेषु महात्मसु । तं ततः प्रतिसंहृष्टः प्रीतियुक्तं महाकपिम् ॥ २ ॥

---

४७-५१ ] ति० टी०—समेष्यामः संगता भविष्यामः । अहो इति । तव स्वामिभक्त्यादिकमाश्चर्यमित्यर्थः ॥४७-५१॥

रा० टी०—अहो इति । ते भक्त्यादिरहो आश्चर्यम् । दिष्ट्या भाग्योदयेन रामपत्नी त्वया दृष्टा ॥ ४७ ॥

रा० टी०—दिष्ट्येति । दिष्ट्या अस्मद्भाग्योदयेन काकुत्स्थो रामः शोकं त्यक्ष्यति ॥ ४८ ॥

रा० टी०—तत इति । अङ्गदप्रभृतीन् परिवार्य प्रमुदिताः वानराः विपुलाः विस्तीर्णाः शिलाः भेजिरे स्थित्यर्थं प्रापयामासुः ॥ ४९ ॥

रा० टी०—उपविष्टा इति । गिरेः शिलासु उपविष्टाः समुद्रलङ्घनादीनि श्रोतुकामाः अत एव हनुमद्वदनोन्मुखाः सर्वे अङ्गदप्रभृतयः तस्थुः । श्लोकद्वयमेकान्वयि ॥ ५० ॥ ५१॥

५२ ] ति० टी०—विविधैर्देवैरुपास्यमान इत्यर्थः ॥ ५२ ॥

रा० टी०—स्थितिप्रकारं बोधयन्नाह—तस्थाविति । विविधैर्देवैरुपास्यमानो देवपतिरिवाङ्गदस्तस्थौ ॥ ५२ ॥

५३ ] ति० टी०-कीर्तिमता हनुमता यशस्विनाङ्गदेनेत्यर्थः। ज्वलितं युक्तम् ॥ ५३ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये सुन्दरकाण्डे सप्तपञ्चाशः सर्गः ॥ ५७ ॥

रा० टी०—हनुमतेति । कीर्तिमता हनुमता यशस्विना अङ्गदनद्धबाहुना अङ्गदेन च अध्यासितम् अधिष्ठितमुन्नतं महीधराग्रं श्रिया शोभया ज्वलितं प्रकाशितमभवत् ॥ ५३ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ सुन्दरकाण्डे सप्तपञ्चाशत्तमः सर्गः ॥ ५७ ॥

गो० टी०—हनूमतेति । कीर्तिमतेति हनुमद्विशेषणम् । यशस्विनेत्यङ्गदविशेषणम् । भृत्यकीर्त्या स्वामिनः कीर्तिः । अन्यथा पौनरुक्त्यात् । यद्वा बुद्धिमत्त्वजन्या कीर्तिः । शौर्यजन्यं यशः ॥ ५१ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने सप्तपञ्चाशः सर्गः ॥ ५७ ॥

---

१-२ ] ति० टी०—हनुमत्प्रमुखाः परस्परं मिलिता इति शेषः ॥ १ ॥ २ ॥

रा० टी०—वानराणां वृत्तान्तमाह—तत इत्यादिभिः । महेन्द्रस्य गिरेः शृङ्गे स्थिताः हनुमत्प्रमुखाः उत्तमां प्रीतिं जग्मुः ॥ १ ॥

गो० टी०—ततस्तस्येत्यादि ॥ १ ॥

रा० टी०—प्रीतीति । वानरेषु सूपविष्टेषु सत्सु प्रीतिसंहृष्टो जाम्बवान् कार्यवृत्तान्तं रामकार्यविषयकवृत्तम् अनिलात्मजमपृच्छत् । सार्धश्लोक एकान्वयी ॥ २ ॥

---

१ अर्धमेतत् गो. नास्ति । २ विबुधैरिति गो. पाठः । ३ शृङ्गे इति रा. पाठः । ४ महाबला इति गो. रा. पाठः । ५ अर्धमेतत् गो. नास्ति ।

जाम्बवान्कार्यवृत्तान्तमपृच्छदनिलात्मजम् । कथं दृष्टा त्वया देवी कथं वा तत्र वर्तते ॥ ३ ॥
तस्यां चापि कथं वृत्तः क्रूरकर्मा दशाननः । तत्त्वतः सर्वमेतन्नः प्रब्रूहि त्वं महाकपे ॥ ४ ॥
संमार्गिता कथं देवी किं च सा प्रत्यभाषत । श्रुतार्थाश्चिन्तयिष्यामो भूयः कार्यविनिश्चयम् ॥ ५ ॥
यश्चार्थस्तत्र वक्तव्यो गतैरस्माभिरात्मवान् । रक्षितव्यं च यत्तत्र तद्भवान्व्याकरोतु नः ॥ ६ ॥
स नियुक्तस्ततस्तेन संप्रहृष्टतनूरुहः । नमस्यञ्शिरसा देव्यै सीतायै प्रत्यभाषत ॥ ७ ॥
प्रत्यक्षमेव भवतां महेन्द्राग्रात्खमाप्लुतः । उदधेर्दक्षिणं पारं काङ्क्षमाणः समाहितः ॥ ८ ॥
गच्छतश्च हि मे घोरं विघ्नरूपमिवाभवत् । काञ्चनं शिखरं दिव्यं पश्यामि सुमनोहरम् ॥ ९ ॥
स्थितं पन्थानमावृत्य मेने विघ्नं च तं नगम् । उपसंगम्य तं दिव्यं काञ्चनं नगमुत्तमम् ॥ १० ॥
कृता मे मनसा बुद्धिर्भेत्तव्योऽयं मयेति च । प्रहतस्य मया तस्य लाङ्गूलेन महागिरेः ॥ ११ ॥
शिखरं सूर्यसंकाशं व्यशीर्यत सहस्रधा । व्यवसायं च तं बुद्ध्वा सहोवाच महागिरिः ॥ १२ ॥
पुत्रेति मधुरां वाणीं मनः प्रह्लादयन्निव । पितृव्यं चापि मां विद्धि सखायं मातरिश्वनः ॥ १३ ॥
मैनाकमिति विख्यातं निवसन्तं महोदधौ । पक्षवन्तः पुरा तत्र बभूवुः पर्वतोत्तमाः ॥ १४ ॥

---

गो० टी०—तमिति । कार्यवृत्तान्तं कार्यविषयवृत्तान्तम् सीतादर्शनविषयवृत्तान्तम् ॥ २ ॥

३ ] ति० टी०—कार्यविषयं वृत्तान्तम् ॥ ३ ॥

रा० टी०—तत्प्रश्नाकारमाह—कथमित्यादिभिः । देवी सीता तत्र लङ्कायां त्वया कथं दृष्टा दशाननो रावणः तस्यां सीतायां कथं वृत्तः प्रवृत्तः सेवते इत्यर्थः, एतत्सर्वं नस्त्वं तत्त्वतः प्रब्रूहि । सार्धश्लोक एकान्वयी ॥ ३ ॥ ४ ॥

गो० टी०—कथमिति । कथं केन प्रकारेण । कथंवृत्तः कीदृग्व्यापारः ॥ ३ ॥

४–५ ] ति० टी०—कथंवृत्तः कीदृग्व्यापारः ॥ ४ ॥ ५ ॥

रा० टी०—संमार्गितेति । देवी कथं संमार्गिता अन्वेषिता श्रुतार्थाः वयं कार्यविनिश्चयं कथं चिन्तयिष्यामः ॥ ५ ॥

गो० टी०—तत्त्वत इति । तत्त्वकथनस्य प्रयोजनमाह—श्रुतार्था इत्यादि ॥ ४ ॥

६–८ ] ति० टी०—चिन्तनीयनिश्चयमेवाह—यश्चेति । रक्षितव्यं रामसंनिधौ गोपनीयम् अवक्तव्यमिति यावत् । अवक्तव्यं च यत्तच्चिन्तयिष्यामः, अतस्तत्पृष्टं सर्वमात्मवान्भवान्व्याकरोतु ॥ ६—८ ॥

रा० टी०—य इति । तत्र रामसमीपे गतैः प्राप्तैरस्माभिः योऽर्थो वक्तव्यः यच्च रक्षितव्यं न वक्तव्यमित्यर्थः तद्भवान् व्याकरोतु कथयतु ॥ ६ ॥

गो० टी०—यश्चेति । तत्र रामसन्निधौ योऽर्थो वक्तव्यः वक्तुमर्हः यच्च रक्षितव्यं गोप्तव्यं तत् आत्मवान् बुद्धिमान् भवान्व्याकरोतु ॥ ५ ॥ ६ ॥

रा० टी०—स इति । तेन जाम्बवता नियुक्तः प्रेरितः स नमन् सीतायै नमस्यन् प्रत्यभाषत ॥ ७ ॥

रा०टी०—तत्प्रतिभाषणाकारमाह—प्रत्यक्षमित्यादिभिः। उदधेः सागरस्य परं पारं काङ्क्षमाणः प्राप्यत्वेनेच्छन्नहं भवतां प्रत्यक्षमेव खमाप्लुतः प्राप्तः ॥ ८ ॥

गो० टी०—प्रत्यक्षमेवेति । इदं न वक्तव्यमेवेति भावः । आप्लुतः आप्लुतोऽस्मि पारं गन्तुमिति शेषः । समाहितः एकाग्रः इत्येतद्भवतां प्रत्यक्षमेवेति संबन्धः ॥ ७ ॥

९ ]ति० टी०—विघ्नरूपमिवेत्युक्तं तदेवाह—काञ्चनमिति । पश्यामि दृष्टमित्यर्थः । तदाश्चर्यत्वादद्यापि पश्यामीत्यर्थः ॥ ९ ॥

रा० टी०—गच्छत इति । गच्छतो मे घोरं विघ्नरूपमिवाभवत् । अर्थं पृथक् । ननु किं तदित्यत आह—काञ्चनमिति । पन्थानमावृत्य स्थितं दिव्यं शिखरं प्रशस्तशिखरवन्तं काञ्चनं नगं पश्यामि अपश्यं तं नगमहं विघ्नं मेने । अर्धद्वयमेकान्वयि ॥ ९ ॥

गो० टी०—गच्छत इत्यादि । विघ्नरूपमिव वस्तुतो न तथेति भावः । पश्यामीत्यादौ व्यत्ययेन लट् । शिखरं विघ्नरूपमिवाभवत् तत् पश्यामीति योजना ॥ ८ ॥

१०–११] ति० टी०—मेने लिडुत्तमपुरुषैकवचनम् । उपसंगम्य प्राप्य ॥ ११ ॥ १२ ॥

रा० टी०—उपेति । काञ्चनं नगमुत्तमं उपसंगम्य अयं नगो मया भेत्तव्यः इति बुद्धिर्निश्चयः मे मनसा कृता ॥ १० ॥

रा० टी०—प्रहतस्येति । मया लाङ्गूलेन प्रहतस्य महागिरेः शिखरं सहस्रधा व्यशीर्यत ॥ ११ ॥

गो० टी०—स्थितमिति । मेने इति लिट्युत्तमपुरुषैकवचनं परोक्षत्वाद्यभावेऽपि छान्दसम् । अमनीपीत्यर्थः ॥ ९ ॥

गो० टी०—उपसंगम्येति । गमनदशायामुरसा पातयामासेति सूचितं विवृणोति—भेत्तव्योऽयमित्यादिना ॥१०–१२॥

१२–१४ ] ति० टी०—व्यवसायं स्वभेदनरूपम्॥१२-१४॥



---

१ वा स इति गो. पाठः । २ अर्धमेतत् गो. नास्ति. । ३ प्रणम्येति गो. पाठः । ४ प्रहतं चेति गो. पाठः । ५ पुत्रेति गो. पाठः ।

छन्दतः पृथिवीं चेरुर्बाधमानाः समन्ततः । श्रुत्वा नगानां चरितं महेन्द्रः पाकशासनः ॥ १५ ॥
वज्रेण भगवान्पक्षौ[1] चिच्छेदैषां सहस्रशः । अहं तु मोचितस्तस्मात्तव पित्रा महात्मना ॥ १६ ॥
मारुतेन तदा वत्स प्रक्षिप्तो वरुणालये[2] । राघवस्य[3] मया साह्ये वर्तितव्यमरिंदम ॥ १७ ॥
रामो धर्मभृतां श्रेष्ठो महेन्द्रसमविक्रमः । एतच्छ्रुत्वा मया तस्य मैनाकस्य महात्मनः[4] ॥ १८ ॥
कार्यमावेद्य चैं गिरेरुद्धतं[5] वै मनो मम । तेन चाहमनुज्ञातो मैनाकेन महात्मना ॥ १९ ॥
स चाप्यन्तर्हितः शैलो मानुषेण वपुष्मता । शरीरेण महाशैलः शैलेन च महोदधौ ॥ २० ॥
उत्तमं जवमास्थाय शेषमध्वानमास्थितः । ततोऽहं सुचिरं कालं जवेना[6]भ्यगमं पथि ॥ २१ ॥
ततः पश्याम्यहं देवीं सुरसां नागमातरम् । समुद्रमध्ये सा देवी वचनं[7] चेदमब्रवीत् ॥ २२ ॥
मम भक्ष्यः[8] प्रदिष्टस्त्वममरैर्हरिसत्तम । ततस्त्वां[9] भक्षयिष्यामि विहितस्त्वं[10] हि मे सुरैः ॥ २३ ॥
एवमुक्तः सुरसया प्राञ्जलिः प्रणतः स्थितः । विवर्णवदनो भूत्वा वाक्यं चेदमुदीरयन्[11] ॥ २४ ॥
रामो दाशरथिः श्रीमान्प्रविष्टो दण्डकावनम् । लक्ष्मणेन सह भ्रात्रा सीतया च परंतप ॥ २५ ॥

---

रा० टी०—व्यवसायमिति । व्यवसायं मत्कर्तृकस्वभेदनयलं बुद्ध्वा मनः प्रह्लादयन्नेव हे पुत्र ! मातरिश्वनो वायोः सखायम् अत एव पितृव्यं महोदधौ निवसन्तं मैनाकमिति विख्यातं मां विद्धि जानीहि इति मधुरां वाणीं स गिरिरुवाच। अर्धचतुष्टयमेकान्वयि ॥ १२ ॥ १३ ॥

रा० टी०—तत्र निवासे कारणमाह—पक्षवन्त इति । पर्वतोत्तमाः पूर्वं पक्षवन्तो बभूवुः अत एव बाधमानाः सन्तः छन्दतः स्वाधीनतया पृथिवीं समन्ततश्चेरुः ॥ १४ ॥

रा० टी०—पितृव्यं चेति । पितृव्यत्वे हेतुमाह—सखायमिति । पितृसखत्वात् पितृव्यत्वव्यपदेश इत्यर्थः ॥ १३ ॥

गो० टी०—पक्षवन्त इति । छन्दतः यथेच्छम्॥१४॥१५॥

१५-१६ ] ति० टी०—छन्दतः स्वेच्छयेत्यर्थः । चरितं प्रजाबाधनरूपम् ॥ १५ ॥ १६ ॥

रा० टी०—श्रुत्वेति । महेन्द्रो नगानां चरितं श्रुत्वा वज्रेण पक्षौ चिच्छेद ॥ १५ ॥

रा० टी०—अहमिति । तदा तस्मिन् समये तव पित्रा अहं वरुणालये प्रक्षिप्तः अत एव तस्मात्पक्षछेदात् मोचितः॥१६

गो० टी०—अहं त्विति । मोक्षणप्रकारमाह—प्रक्षिप्तोऽस्मि महार्णव इति ॥ १६ ॥

१७ ] ति० टी०—मोचनप्रकारमाह—मारुतेनेति । साह्ये साहाय्ये ॥ १७ ॥

रा० टी०—राघवस्येति । धर्मभृतां श्रेष्ठः यो रामः तस्य राघवस्य साह्ये साहाय्ये मया वर्तितव्यम् ॥ १७ ॥

गो० टी०—रामस्य चेति । साह्ये साहाय्ये । साहाय्यकरणे हेतुमाह—रामो धर्मभृतां श्रेष्ठ इति ॥ १७ ॥

१८ ] ति० टी०—तत्र हेतुः—धर्मभृतां श्रेष्ठत्वादि ॥१८॥

रा० टी०—एतदिति । मैनाकस्यैतद्वचः श्रुत्वा मया कार्यं कर्तव्यमावेद्य बोधयित्वा विद्यमानस्य मम मनः उद्धतं प्रवृद्धमभवदिति शेषः ॥ १८ ॥

गो० टी०—एतच्छ्रुत्वेति । उद्यतम् उद्युक्तम् ॥ १८ ॥

१९ ] ति० टी०—उद्धतमग्रे चलितम् ॥ १९ ॥

रा० टी०—तेनेति । तेन मैनाकेन अहमनुज्ञातः सागरलङ्घनाय आज्ञापितोऽभवमिति शेषः । अर्थं पृथक् ॥ १९ ॥

गो० टी०—तेन चेति । अनुज्ञातः अस्मीति शेषः । वपुष्मता पुष्कलवपुषा मानुषेण शरीरेणान्तर्हितः । शैलेन तु शरीरेण महोदधौ सागरोपरि स्थित इति शेषः । स वै दत्तवरः शैलो बभूवावस्थितस्तथेति प्रथमसर्गोक्तेः । प्रतिप्रयाणे च—पर्वतेन्द्रं सुनाभं च समुपस्पृश्य वीर्यवानित्युक्तम् । हिरण्यनाभं शैलेन्द्रं काञ्चनं पश्य मैथिलीति रामेण चोक्तम् ॥ १९-२५ ॥

२०-२२ ] ति० टी०—सशैलो मानुषेण वपुष्मता प्रशस्तेन शरीरेण महाशैलोऽन्तर्हितः । शैलेन शिलारूपेण च महोदधावन्तर्हित इत्यन्वयः ॥ २०-२२ ॥

रा० टी०—स इति । वपुष्मता शोभनावयवविशिष्टेन शैलेन शिलामयेन मानुषेण मनुष्याकृतिना शरीरेणोपलक्षिताः महान्तः शैलाः गिरयो यस्य गिरीणां राजेत्यर्थः, शैलः स मैनाकः महोदधौ अन्तर्हितः ॥ २० ॥

रा०टी०—उत्तममिति । उत्तमं जवं वेगमास्थाय शेषमवशिष्टमध्वानमास्थितोऽभवमिति शेषः, पथि तस्मिन् मार्गे सुचिरं कालमभ्यगमं च ॥ २१ ॥

रा० टी०—तत इति । ततोऽनन्तरं नागमातरं सुरसां समुद्रमध्ये अहं पश्यामि अपश्यं सा सुरसा चेदमब्रवीत्॥२२॥

२३-२५ ] ति० टी०—प्रदिष्टः विहित इत्यर्थः । विहितः प्रापित इत्यर्थः ॥ २३-२५ ॥

रा० टी०—तद्वचनाकारमाह—ममेति । अमरैः मम भक्ष्यः

---

१ चिच्छेद भगवान्पक्षान्वज्रेणेति गो. पाठः । २ ऽस्मि महार्णवे इति गो. पाठः । ३ रामस्य चेति गो. पाठः । ४ महात्मनेति रा. पाठः । ५ तु गिरेरुद्यतं चेति गो. पाठः । ६ वेगेनेति गो. पाठः । ७ मामभाषतेति गो. पाठः । ८ भक्ष इति गो. पाठः । ९ अत इति गो. पाठः । १० चिरस्य मे इति गो. पाठः । ११ उदीरयमिति गो. पाठः ।

तस्य सीता हृता भार्या रावणेन दुरात्मना । तस्याः सकाशं दूतोऽहं गमिष्ये रामशासनात् ॥ २६ ॥
कर्तुमर्हसि रामस्य साहाय्यं विषये सति । अथवा मैथिलीं दृष्ट्वा रामं चाक्लिष्टकारिणम् ॥ २७ ॥
आगमिष्यामि ते वक्त्रं सत्यं प्रतिशृणोमि ते । एवमुक्ता मया सा तु सुरसा कामरूपिणी ॥ २८ ॥
अब्रवीन्नातिवर्तेत कश्चिदेष वरो मम । एवमुक्तः सुरसया दशयोजनमायतः ॥ २९ ॥
ततोऽर्धगुणविस्तारो बभूवाहं क्षणेन तु । मत्प्रमाणाधिकं चैव व्यादितं तु मुखं तया ॥ ३० ॥
तद्दृष्ट्वा व्यादितं त्वास्यं ह्रस्वं ह्यकरवं पुनः । तस्मिन्मुहूर्ते च पुनर्बभूवाङ्गुष्ठसंमितः ॥ ३१ ॥
अभिपत्याशु तद्वक्त्रं निर्गतोऽहं ततः क्षणात् । अब्रवीत्सुरसा देवी स्वेन रूपेण मां पुनः ॥ ३२ ॥
अर्थसिद्धौ हरिश्रेष्ठ गच्छ सौम्य यथासुखम् । समानय च वैदेहीं राघवेण महात्मना ॥ ३३ ॥
सुखी भव महाबाहो प्रीतास्मि तव वानर । ततोऽहं साधुसाध्वीति सर्वभूतैः प्रशंसितः ॥ ३४ ॥
ततोऽन्तरिक्षं विपुलं प्लुतोऽहं गरुडो यथा । छाया मे निगृहीता च न च पश्यामि किंचन ॥ ३५ ॥

---

त्वं प्रदिष्टः ततः तस्माद्धेतोः त्वं सुरैर्विहितः प्रापितोऽतस्त्वां भक्षयिष्यामि ॥ २३ ॥

रा० टी०—एवमिति । सुरसया एवमुक्तोऽहम् इदमुदीरयमुदैरयम् ॥ २४ ॥

रा० टी०—तदाकारमाह—राम इत्यादिभिः ॥ २५ ॥

२६ ] ति० टी०—सकाशं समीपम् ॥ २६ ॥

रा० टी०—तस्येति । रामशासनात् गमिष्ये ॥ २६ ॥

२७–२८ ] ति० टी०—विषये सति तदीयदेशे सति विद्यमाने । मैथिलीदर्शननिवेदनार्थं रामं च दृष्ट्वा ॥ २७॥२८ ॥

रा० टी०—कर्तुमिति । विषये रामदेशे सति हे विद्यमाने साहाय्यं कर्तुमर्हसि। अर्धं पृथक्।नतु रामादहं न बिभेमीति त्वां भक्षयिष्याम्येवेत्यत आह–अथवेति । प्रतिशृणोमि प्रतिज्ञां करोमि । अर्धद्वयमेकान्वयि ॥ २७ ॥

रा० टी०—एवमिति । एष वरः देवानामिति शेषः॥२८॥

गो० टी०—कर्तुमिति । विषये सती स्वराज्ये वसन्ती ॥ २६–२८ ॥

२९ ] ति० टी०—नातिवर्तेत नातिक्रमेत । मां प्राप्तः । मदाहारतां प्राप्तो न गच्छेदित्यर्थः ॥ २९ ॥

३० ] ति० टी०—अर्धगुणविस्तारोऽर्धस्य दशयोजनार्धस्य पञ्चयोजनस्य गुण आवृत्तिस्तद्विस्तारः । दशयोजनविस्तार इति यावत् । पूर्वं दशयोजनविस्तारोक्त्याऽऽवृगुण्येनैवं व्याख्यातम् ॥ ३० ॥

रा० टी०—एवमिति । दशयोजनमायतः स्वाभाविकदशयोजनविस्तृतोऽहं यस्मिन् काले सुरसया एवमुक्तस्तस्मिन् काले अर्धगुणविस्तारः पञ्चयोजनविस्तृतो बभूव तया सुरसया तु क्षणेनैव मत्प्रमाणाधिकं मत्प्रमाणादधिकं मुखं व्यादितं तदास्यं व्यादितं दृष्ट्वा अहं ह्रस्वं सूक्ष्मरूपमकरवम् ॥ २९ ॥ ३० ॥

गो० टी०—एवमुक्त इति । तत इति । अर्धगुणविस्तारः अत्रार्धशब्दः एकदेशवाची । किंचिदधिकविस्तारोऽभवमित्यर्थः । एवमेवार्थः प्रथमसर्गोक्तशतयोजनविस्तारस्तु विरुद्धः तद्ग्रन्थः कल्पितश्चेत्युक्तम् । मत्प्रमाणेति । व्यादितं व्यात्तम् ॥ २९ ॥

३१–३२ ] ति० टी०—ह्रस्वम् स्वशरीरमिति शेषः । तदेवाह—अङ्गुष्ठसंमित इति । देह इति शेषः ॥ ३१ ॥ ३२ ॥

रा० टी०—तस्मिन्निति । अङ्गुष्ठसंमितः योऽहं बभूव सः तद्वक्त्रमभिपत्य प्रविश्य क्षणान्निर्गतोऽस्मि । अर्धद्वयमेकान्वयि ॥ ३१ ॥

रा० टी०—अब्रवीदिति । स्वेन रूपेणोपलक्षिता देवी सुरसा मामब्रवीत् । अर्धं पृथक् ॥ ३२ ॥

गो० टी०—तद्दृष्ट्वेति । ह्रस्वत्वं विशेषयति—अङ्गुष्ठमात्रक इति ॥ ३० ॥ ३१ ॥

३३ ] ति० टी०—समानय मेलय ॥ ३३ ॥

रा० टी०—तद्वचनाकारमाह—अर्थेति । हे हरिश्रेष्ठ ! त्वं गच्छ वैदेहीं समानय संयोजय । सार्धश्लोक एकान्वयी ॥३३॥

गो० टी०—अर्थसिद्ध्या इति । समानय संयोजय॥३२॥

३४–३५ ] ति० टी०—साधुसाध्वीति । अत्र दीर्घ आर्षः ॥ ३४ ॥ ३५ ॥

रा० टी०—तत इति । ततोऽनन्तरं साधु साध्वीति प्रशंसितोऽहं विपुलमन्तरिक्षं गरुड इव प्लुतः । साध्वीति दीर्घ आर्ष इति भट्टाः, विस्मयार्थेऽकारप्रश्लेषे तु नार्षकल्पना ॥३४॥

रा० टी०—छायेति । मे छाया निगृहीता कयाचिदिति शेषः, अतोऽहं किंचिन्न पश्यामि । अर्धं पृथक् ॥ ३५ ॥

गो० टी०—ततोऽहमिति । साधु साध्वीति दीर्घश्छान्दसः ॥ ३३–३६ ॥

---

१ सती इति गो. पाठः । २ प्रमाणानुरूपं चेति गो. प्रमाणाधिकश्चैवेति रा. पाठः । ३ तमिति रा. पाठः । ४ चेति गो. पाठः । ५ मात्रक इति गो. पाठः । ६ सिद्ध्यै इति गो. रा. पाठः ।

सोऽहं विगतवेगस्तु दिशो दश विलोकयम् । न किंचित्तत्र पश्यामि येन मे विहता गतिः ॥ ३६ ॥
अथ मे बुद्धिरुत्पन्ना किंनाम गमने मम । ईदृशो विघ्न उत्पन्नो रूपमत्र न दृश्यते ॥ ३७ ॥
अधोभागे तु मे दृष्टिः शोचतः पतिता तदा । तत्राद्राक्षमहं भीमां राक्षसीं सलिलेशयाम् ॥ ३८ ॥
प्रहस्य च महानादमुक्तोऽहं भीमया तया । अवस्थितमसंभ्रान्तमिदं वाक्यमशोभनम् ॥ ३९ ॥
क्वासि गन्ता महाकाय क्षुधिताया ममेप्सितः । भक्षः प्रीणय मे देहं चिरमाहारवर्जितम् ॥ ४० ॥
बाढमित्येव तां वाणीं प्रत्यगृह्णामहं ततः । आस्यप्रमाणादधिकं तस्याः कायमपूरयम् ॥ ४१ ॥
तस्याश्चास्यं महद्भीमं वर्धते मम भक्षणे । न तु मां सा नु बुबुधे मम वा विकृतं कृतम् ॥ ४२ ॥
ततोऽहं विपुलं रूपं संक्षिप्य निमिषान्तरात् । तस्या हृदयमादाय प्रपतामि नभःस्थलम् ॥ ४३ ॥
सा विसृष्टभुजा भीमा पपात लवणाम्भसि । मया पर्वतसंकाशा निकृत्तहृदया सती ॥ ४४ ॥
शृणोमि खगतानां च वाचः सौम्या महात्मनाम् । राक्षसी सिंहिका भीमा क्षिप्रं हनुमता हता ॥ ४५ ॥

३६-३८ ] ति० टी०—येन गतिर्विहता तत्किंचिन्न पश्यामि नापश्यमित्यन्वयः ॥ ३६-३८ ॥

रा० टी०—स इति । येन मे गतिर्विहता तत् किंचिन्न पश्यामि ॥ ३६ ॥

रा० टी०—अथेति । अथानन्तरं मे बुद्धिः चिन्तोत्पन्ना तदाकारमाह—अत्र यस्य रूपं न दृश्यते ईदृशः उत्पन्नः गमने विघ्नः किं नाम किंनामा ॥ ३७ ॥

रा० टी०—अध इति । शोचतो मम दृष्टिः अधोभागे पतिता तत्राधोभागे सलिलेशयां राक्षसीमद्राक्षम् ॥ ३८ ॥

गो०टी०—अधोभागेनेति।सलिलेशयां सलिले स्थिताम्३७

३९ ] ति० टी०—अवस्थितं निश्चेष्टम् । तथाप्यसंभ्रान्तं भयहीनं मां लक्षीकृत्येदं वाक्यमहमुक्तः इत्यन्वयः ॥ ३९ ॥

रा० टी०—प्रहस्येति ! अवस्थितं निश्चेष्टतया विद्यमानमप्यसंभ्रान्तं मामालक्ष्येति शेषः, महानादं यथा भवति तथा प्रहस्य इदं तयाऽहमुक्तः ॥ ३९ ॥

गो० टी०—प्रहस्येति । अवस्थितं दृढभूतम् । असंभ्रान्तम् अव्यग्रम् ॥ ३८ ॥ ३९ ॥

४० ] ति० टी०—ममेप्सितो भक्षस्त्वम्, अतो मे देहं प्रीणयेत्यन्वयः ॥ ४० ॥

रा० टी०—तद्वचनाकारमाह—क्वेति । क्षुधितायाः ममेप्सितो भक्ष्यस्त्वं क्व गन्तासि न गच्छेरित्यर्थः । ननु किं करोमीत्यत आह—मे देहं प्रीणय तर्पय ॥ ४० ॥

४१ ] ति० टी०—प्रत्यगृह्णामङ्गीकृतवान् । तस्या आस्यप्रमाणादधिकं भवति यथा तथात्मनः कायमपूरयमवर्धयम्४१

रा० टी०—बाढमिति । बाढमित्युक्त्वा तां वाणीं प्रत्यगृह्णाम् अतिष्ठमित्यर्थः । तस्याः आस्यप्रमाणात् अधिकं यथा भवति तथा कायं स्वशरीरम् अपूरयमवर्धयं च ॥ ४१ ॥

गो० टी०—बाढमिति । तस्याः आस्यप्रमाणादधिकं यथा तथा कायम् आत्मदेहम् अपूरयम् अवर्धयम् । मयि वृद्धे साप्यवर्धिष्टेत्यर्थः ॥ ४० ॥

४२ ]ति ०टी०—मां सा न बुबुधे अयं कामरूपी सर्वविघ्ननिर्दलन इति मां न ज्ञातवतीत्यर्थः।मम कृतं विकृतं मया कृतं विकृतं विकारस्वरूपं वक्ष्यमाणसूक्ष्मरूपत्वं च न बुबुधे ॥४२॥

रा० टी०—तस्या इति । तस्याः आस्यं मुखं मम भक्षणे वर्धते सा तु मां मत्सामर्थ्यमित्यर्थः, न बुबुधे आविष्कृतं प्रकटितं मम कृतं रूपं च न बुबुधे ॥ ४२ ॥

गो० टी०—न चेति । अयं कामरूपीति माम् साधु सम्यक् न बुबुधे न ज्ञातवती । मम कृतं निकृतं मया कृतां निकृतिं वा न बुबुधे ॥ ४१ ॥

४३ ] ति० टी०—तदेवाह—तत इति । आदाय कर्तित्वा । प्रपतामि प्रापतम् ॥ ४३ ॥

रा० टी०—यन्न बुबुधे तद्रूपमाह—तत इति । ततोऽनन्तरं विपुलं बृहद्रूपं स्वशरीरं संक्षिप्य सूक्ष्मीकृत्य तस्याः हृदयमादाय संशोध्य ताडनेन हिंसाया अयोग्यं कृत्वेर्थः नभस्तलं प्रयतामि प्रायतम् ॥ ४३ ॥

गो० टी०—निकृतिमेव दर्शयति—ततोऽहमिति ॥ ४२ ॥

४४ ] ति० टी०—विसृष्टभुजा विप्रकीर्णभुजा ॥ ४४ ॥

रा० टी०—सेति । मयाऽतिकृत्तहृदया ताडितान्तरा अत एव विसृष्टौ विकीर्णौ भुजौ यस्याः सा असती लवणाम्भसि निपपात ॥ ४४ ॥

गो० टी०—सेति । विसृष्टभुजा विसृष्टसन्धिकभुजा ॥४३॥

४५ ] ति० टी०—सिंहिका हनुमता हतेति खगतानां वाचः शृणोमि श्रुताः ॥ ४५ ॥

रा० टी०—शृणोमीति । सिंहिका राक्षसी हनुमता हता ताडितेति खगतानां महात्मनां वाचः शृणोमि अशृणवम्॥४५॥

१ ऽपहृतेति गो. पाठः । २ तत इति गो. पाठः । ३ गगने इति गो. पाठः । ४ रूपं यत्रेति गो. पाठः । ५ नेति गो. पाठः । ६ शोचता पातितामयेति गो. पाठः । ७ ततोऽद्राक्षमिति गो. पाठः । ८ च मा साध्विति गो. पाठः । ९ निकृतमिति गो. विष्कृतमिति रा. पाठः । १० नभस्तलमिति रा. पाठः । ११ सिद्धानां चारणैः सहेति गो. पाठः ।

तां हत्वा पुनरेवाहं कृत्यमात्ययिकं स्मरन्। गत्वा च[1] महदध्वानं पश्यामि नगमण्डितम् ॥ ४६ ॥
दक्षिणं तीरमुदधेर्लङ्का यत्र गता[2] पुरी। अस्तं दिनकरे याते रक्षसां निलयं पुरीम्[3] ॥ ४७ ॥
प्रविष्टोऽहमविज्ञातो रक्षोभिर्भीमविक्रमैः। तत्र प्रविशतश्चापि कल्पान्तघनसंप्रभा[4] ॥ ४८ ॥
अट्टहासं विमुञ्चन्ती नारी काप्युत्थिता पुरः। जिघांसन्तीं ततस्तां तु ज्वलदग्निशिरोरुहाम् ॥ ४९ ॥
सव्यमुष्टिप्रहारेण पराजित्य सुभैरवाम्। प्रदोषकाले प्रविशं भीतयाऽहं तयोदितः ॥ ५० ॥
अहं लङ्कापुरी वीर निर्जिता विक्रमेण ते। यस्मात्तस्माद्विजेतासि सर्वरक्षांस्यशेषतः ॥ ५१ ॥
तत्राहं सर्वरात्रं तु विचरञ्जनकात्मजाम्। रावणान्तःपुरगतो न चापश्यं सुमध्यमाम् ॥ ५२ ॥
ततः सीतामपश्यंस्तु रावणस्य निवेशने। शोकसागरमासाद्य न पारमुपलक्षये ॥ ५३ ॥
शोचता च मया दृष्टं प्राकारेणाभिसंवृतम्[5]। काञ्चनेन विकृष्टेन गृहोपवनमुत्तमम् ॥ ५४ ॥
सप्राकारमवप्लुत्य पश्यामि बहुपादपम्। अशोकवनिकामध्ये शिंशपापादपो महान् ॥ ५५ ॥

---

गो० टी०–शृणोमीति । हतेत्यनन्तरमितिकरणं बोध्यम् ॥ ४४ ॥

४६–४८ ] ति० टी०–आत्ययिकं जातकालविलम्बम्। कृत्यं सीतादर्शनं स्मरन्नेव महदध्वानं गत्वोदधेर्दक्षिणं तीरं पश्यामि दृष्टवान् ॥ ४६–४८ ॥

रा० टी०–तामिति। तां हत्वा आत्ययिकं प्राप्तविलम्बमित्यर्थः, कृत्यं कार्यं स्मरन् सन् महदध्वानं गत्वा नगैः पर्वतैः मण्डितं यत्र लङ्कापुरी तत् उदधेर्दक्षिणं तीरं पश्यामि। सार्धश्लोक एकान्वयी ॥ ४६ ॥

रा० टी०–अस्तमिति । रक्षोभिः अविज्ञातोऽहं पुरीं लङ्कां प्रविष्टः ॥ ४७ ॥

रा० टी०–तत्रेति । तत्र लङ्कायां प्रविशतो मम पुरः अग्रे कल्पान्तघनसंनिभा एका नारी उत्थिता ॥ ४८ ॥

गो० टी०–तामिति। कृत्यमात्ययिकं स्मरन्। प्राणान्तिकं तत्कर्म विचिन्तयन्नित्यर्थः ॥ ४६—४८ ॥

४९ ] ति० टी०–मां जिघांसन्तीम् । ज्वलदग्नितुल्यकेशपाशाम् ॥ ४९ ॥

रा० टी०–जिघांसन्तीमिति। जिघांसन्तीं तां सव्यमुष्टिप्रहारेण पराजित्य तया उदितः कथितवृत्तान्तोऽहं प्रविशं प्राविशम्। सार्धश्लोक एकान्वयी ॥ ४९ ॥ ५० ॥

५०–५१ ] ति० टी–सुभैरवामतिशयेन भयंकररूपाम्। प्रविशं प्राविशम् ॥ ५० ॥ ५१ ॥

रा० टी०–तद्वचनाकारमाह–अहमिति । यस्मात् ते त्वया अहं निर्जिता तस्मात् सर्वरक्षांसि त्वं विजेताऽसि॥५१॥

गो० टी०–भीतयेत्यादि भीतया तया नार्या। अशेषत इत्यनन्तरमितिकरणं द्रष्टव्यम् ॥ ४९ ॥ ५० ॥

५२ ] ति० टी०–सर्वरात्रं सर्वां रात्रीम् । अल्पशेषायां रात्रावशोकवनिकायां दर्शनादेवमुक्तिः ॥ ५२ ॥

रा० टी०–तत्रेति। तत्र लङ्कायां सर्वरात्रं विचरन् सन् रावणान्तःपुरगतोऽहं जनकात्मजां नापश्यम् ॥ ५२ ॥

गो० टी०–तत्रेति । सर्वरात्रं सर्वां रात्रिम् । "अहः सर्व—" इत्यादिना समासान्तोऽच्। अत्यन्तसंयोगे द्वितीया। तत्र लङ्कायाम्। विचिन्वन् अनन्तरं रावणान्तःपुरमपि गतः सन् सुमध्यमां नापश्यम् ॥ ५१ ॥ ५२ ॥

५३ ] ति० टी०–उपलक्षय उपालक्षयम् ॥ ५३ ॥

रा० टी०–तत इति। रावणस्य निवेशने सीतामपश्यन्नहं शोकसागरमासाद्य पारं तं नोपलक्षये ॥ ५३ ॥

५४ ] ति० टी०–विकृष्टेन विप्रकृष्टोर्ध्वभागेन अत्युच्चेनेति यावत् । तादृशेन प्रासादेनावृतं किंचित्स्थानं मया दृष्टम् ॥ ५४ ॥

रा० टी०–शोचतेति। विकृष्टेन प्रकृष्टोर्ध्वभागेन प्राकारेण अभिसंवृतम् उत्तमं गृहोपवनं मया दृष्टम् ॥ ५४ ॥

गो० टी०–शोचता चेति। विकृष्टेन विप्रकृष्टेन अतिदीर्घेणेति यावत् ॥ ५३ ॥

५५ ] ति० टी०–ततः प्राकारमवप्लुत्य बहुपादपं गृहोपवनमुद्यानं पश्याम्यपश्यम्।महान्पादपो दृष्ट इति शेषः॥५५॥

रा० टी०–स इति। स दृष्टोपवनोऽहं बहवः पादपाः यत्समीपे तं प्राकारमवप्लुत्य अशोकवनिकामध्ये यो महान् शिंशुपापादपः तमारुह्य काञ्चनं काञ्चनवर्णविशिष्टकदलीवनं पश्यामि अपश्यम्। सार्धश्लोक एकान्वयी ॥ ५५ ॥

गो० टी०–स प्राकारमिति। बहुपादपम् अनेकपादनप्रमाणमिति प्राकारविशेषणम् ॥ ५४ ॥

---



१ चाहं महदध्वानमिति गो. पाठः। २ च सति गो. पाठः। ३ पुरमिति गो. पाठः। ४ संनिभेति गो. रा. पाठः। ५ समावृतामिति गो. पाठः।

तमारुह्य च पश्यामि काञ्चनं कदलीवनम् । अदूराच्छिंशपावृक्षात्पश्यामि वरवर्णिनीम् ॥ ५६ ॥
श्यामां कमलपत्राक्षीमुपवासकृशाननाम् । तदेकवासःसंवीतां रजोध्वस्तशिरोरुहाम् ॥ ५७ ॥
शोकसंतापदीनाङ्गीं सीतां भर्तृहिते स्थिताम् । राक्षसीभिर्विरूपाभिः क्रूराभिरभिसंवृताम् ॥ ५८ ॥
मांसशोणितभक्ष्याभिर्व्याघ्रीभिर्हरिणीं यथा । सा मया राक्षसीमध्ये तर्ज्यमाना मुहुर्मुहुः ॥ ५९ ॥
एकवेणीधरा दीना भर्तृचिन्तापरायणा । भूमिशय्या विवर्णाङ्गी पद्मिनीव हिमागमे ॥ ६० ॥
रावणाद्विनिवृत्तार्था मर्तव्ये कृतनिश्चया । कथंचिन्मृगशावाक्षी तूर्णमासादिता मया ॥ ६१ ॥
तां दृष्ट्वा तादृशीं नारीं रामपत्नीं यशस्विनीम् । तत्रैव शिंशपावृक्षे पश्यन्नहमवस्थितः ॥ ६२ ॥
ततो हलहलाशब्दं काञ्चीनूपुरमिश्रितम् । शृणोम्यधिकगम्भीरं रावणस्य निवेशने ॥ ६३ ॥
ततोऽहं परमोद्विग्नः स्वरूपं प्रत्यसंहरम् । अहं च शिंशपावृक्षे पक्षीव गहने स्थितः ॥ ६४ ॥
ततो रावणदाराश्च रावणश्च महाबलः । तं देशमनुसंप्राप्तो यत्र सीताभवत्स्थिता ॥ ६५ ॥

गो० टी०–अशोकेति । शिंशुपापादपः अस्तीति शेषः ॥ ५५ ॥

५६ ] ति० टी०–पश्यामीति प्राग्वत् । काञ्चनं तद्वर्णम् । अदूराच्छिंशपावृक्षाच्छिंशपावृक्षस्य समीपे ॥ ५६ ॥

५७–५८ ] ति० टी०–तदेकवासःसंवीतां तेन हरणकाले किष्किन्धायां पूर्वं दृष्टेनैवैकवाससा संवीताम् ॥ ५७ ॥ ५८ ॥

रा० टी०–अदूरादिति । शिंशुपावृक्षात् अदूरात् समीपे वरवर्णिनीं गौराङ्गीं श्यामां नित्यं षोडशवार्षिकीत्वेन प्रतीयमानां तत्पौर्वकालिकं यदेकं वासः तेन संवीतां रजसा ध्वस्ताः व्याप्ताः शिरोरुहाः यस्याः तां भर्तृहिते स्थितां व्याघ्रीभिर्हरिणीमिव राक्षसीभिः अभिसंवृतां सीतामहं पश्यामि अपश्यम् । अर्धपट्कमेकान्वयि ॥ ५६–५८ ॥

गो० टी०–अदूरे शिंशुपावृक्षादित्यादि । शिंशुपावृक्षात् शिंशुपावृक्षस्य । श्यामां यौवनमध्यस्थाम् तदेकवासःसंवीतां येन वाससा हृता तेनैकवाससा संवीताम् यद्वा तेन तत्कालदृष्टेन पूर्वदृष्टेन एकेन वाससा संवीताम् वेषान्तरनिस्स्पृहामित्यर्थः । मानसिकत्वकायिकत्वभेदेन शोकसंतापयोर्भेदः ॥ ५६–५८ ॥

५९–६० ] ति० टी०–व्याघ्रीपरिवृतां हरिणीमिव तामपश्यमिति संबन्धः । राक्षसीमध्ये ताभिरेव तर्ज्यमाना सा सदुःखा मया कथंचिदासादितेत्यन्वयः ॥ ५९ ॥ ६० ॥

रा० टी०–सति राक्षसीमध्ये मुहुर्मुहुस्तर्ज्यमाना हिमागमे पद्मिनीव विवर्णाङ्गी रावणात् विनिवृत्तः अर्थः रामसेवा यस्याः अत एव मर्तव्ये मरणे कृतो निश्चयो यया सा सीता कथंचित्तूर्णं मया आसादिता प्राप्ता । सार्धश्लोकद्वयमेकान्वयि ॥ ५९—६१ ॥

गो० टी०–सामयेति । आमयः खेदः तेन सह वर्तत इति सामया । मर्तव्ये मरणे "कृत्यल्युटो बहुलम्" इति साधुः ॥ ५९ ॥ ६० ॥

६१–६२ ] ति० टी०–रावणादिनिवृत्तो विनिवर्तितोऽर्थः सुखभोगरूपो यया । मर्तव्ये मरणे ॥ ६१ ॥ ६२ ॥

रा० टी०–तामिति । तां रामपत्नीं तादृशीम् उक्ततर्जनादिविशिष्टां दृष्ट्वा पश्यन् वृत्तान्तं निरीक्षमाणोऽहं तत्र तस्मिन् शिंशुपावृक्षे अवस्थितः ॥ ६२ ॥

गो० टी०–तां दृष्ट्वेति । पश्यन् परामृशन् ॥ ६१॥६२ ॥

६३ ] ति० टी०–शृणोमि श्रुतवान् । रावणस्य निवेशने तत्समीपे । यद्वा निवेशने सीतासमीपं प्रवेशनकाले ॥ ६३ ॥

रा० टी०–तत इति । ततोऽनन्तरं रावणस्य निवेशने अधिकगम्भीरं हलहलाशब्दं शृणोमि अशृणवम् ॥ ६३ ॥

६४–६५ ] ति० टी०–प्रत्यसंहरं सूक्ष्ममकरवम् । गहने पर्णसमूहगूढप्रदेशे स्थितः ॥ ६४ ॥ ६५ ॥

रा० टी०–तत इति । परमोद्विग्नोऽहं स्वरूपं स्वशरीरं प्रत्यसंहरं सूक्ष्ममकरवं शिंशुपावृक्षे गहने निबिडस्थले स्थितश्चाभवमिति शेषः ॥ ६४ ॥

रा० टी०–तत इति । ततोऽनन्तरं यत्र सीता स्थिताऽभवत् तत्र देशे रावणोऽनुसंप्राप्तः रावणदाराश्च अनुसंप्राप्तावचनविपरिणामेनान्यत्राप्यन्वयः ॥ ६५ ॥

गो० टी०–ततोऽहमिति । गहने पर्णगूढप्रदेशे । पर्णघने निलीन इत्यधस्तादप्युक्तेः ॥ ६३—६५ ॥

१ अदूरे शिंशुपेति गो. पाठः । २ भक्षाभिरिति गो. पाठः । ३ मर्तव्यकृतनिश्चयेति गो. पाठः । ४ प्रतिसंहरन्निति गो. पाठः । ५ तु शिंशुपेति गो. पाठः । ६ देशं समनुप्राप्तेति गो. पाठः ।

[1]तं दृष्ट्वाथ वरारोहा सीता रक्षोगणेश्वरम् । संकुच्योरू स्तनौ पीनौ बाहुभ्यां परिरभ्य च ॥ ६६ ॥
वित्रस्तां परमोद्विग्नां वीक्षमाणामितस्ततः[2] । त्राणं कंचिदपश्यन्तीं वेपमानां तपस्विनीम् ॥ ६७ ॥
तामुवाच दशग्रीवः सीतां परमदुःखिताम् । अवाक्शिराः प्रपतितो बहुमन्यस्व मामिति ॥ ६८ ॥
यदि चेत्त्वं तु मां दर्पान्नाभिनन्दसि गर्विते । [4]द्विमासानन्तरं सीते पास्यामि रुधिरं तव ॥ ६९ ॥
एतच्छ्रुत्वा वचस्तस्य रावणस्य दुरात्मनः । उवाच परमक्रुद्धा सीता वचनमुत्तमम् ॥ ७० ॥
राक्षसाधम रामस्य भार्याममिततेजसः । इक्ष्वाकुवंशनाथस्य स्नुषां दशरथस्य च ॥ ७१ ॥
अवाच्यं वदतो जिह्वा कथं न पतिता तव । किंस्विद्वीर्यं तवानार्य यो मां भर्तुरसंनिधौ ॥ ७२ ॥
अपहृत्यागतः पाप तेनादृष्टो महात्मना । न त्वं रामस्य सदृशो दास्येऽप्यस्य न युज्यसे ॥ ७३ ॥
[7]अजेयः सत्यवाक्शूरो रणश्लाघी च राघवः । जानक्या परुषं वाक्यमेवमुक्तो दशाननः ॥ ७४ ॥
जज्वाल सहसा कोपाच्चितास्थ इव पावकः । विवृत्य नयने क्रूरे मुष्टिमुद्यम्य दक्षिणम् ॥ ७५ ॥
मैथिलीं हन्तुमारब्धः स्त्रीभिर्हाहाकृतं तदा । स्त्रीणां मध्यात्समुत्पत्य तस्य भार्या दुरात्मनः ॥ ७६ ॥

---

६६–७१ ] ति० टी०–परिरभ्य चेति । वित्रस्तेव बभूवेति शेषः ॥ ६६–७१ ॥

रा० टी०–तमिति । सीता रक्षोगणेश्वरं दृष्ट्वा ऊरू संकुच्य संकोच्य बाहुभ्यां स्तनौ परिरभ्य आच्छाद्येत्यर्थः, अवर्ततेति शेषः ॥ ६६ ॥

रा० टी०–वित्रस्तामिति । कश्चित्त्राणं त्राणकारकमपश्यन्तीम् अत एव वित्रस्ताम् अत एव परमोद्विग्नाम् अत एव इतस्ततो वीक्षमाणां तां सीताम् अवाक्शिराः सन् प्रपतितो दशग्रीवः मां बहु अधिकसेवाकर्तृत्वेनाधिकं मन्यस्व दर्पात् मद्दर्पमवलोक्य यदि त्वं मां नाभिनन्दसि तर्हि द्विमासानन्तरं तव रुधिरं पास्यामि इत्युवाच । श्लोकत्रयमेकान्वयि ॥ ६७–६९ ॥

रा० टी०–एतदिति । रावणस्य एतत् रामवियोगस्थितिसूचकं वचः श्रुत्वोवाच ॥ ७० ॥

रा० टी०–तद्वचनाकारमाह—राक्षसेति । हे राक्षसाधम ! रामस्य भार्यां माम् अवाच्यं वदतस्तव जिह्वा कथं न पतिता । सार्धश्लोक एकान्वयी ॥ ७१ ॥

गो०टी०–वित्रस्तामिति । परमोद्विग्नाम् अतीवोद्भ्रान्तहृदयाम् । ततस्ततः वीक्षमाणां नानादिक्षु वीक्षमाणाम् । त्राणमित्यनुपज्यते । अवाक्शिराः अवनतमूर्धा प्रपतितः भूमाविति शेषः । द्वौ मासौ अन्तरमवधिः । ततः पास्यामीति योज्यम् ॥ ६६–७० ॥

७२ ] ति० टी०–किंस्वित् कुत्सितमित्यर्थः ॥ ७२ ॥

रा० टी०–तव बलवत्त्वादिगर्वोऽपि त्वदज्ञानकृत एवेति बोधयन्ती आह–किमिति । भर्तुरसंनिधौ विद्यमानां मां तेन भर्त्रा अदृष्टस्त्वमपहृत्यागतः अतः अजेयत्वादिविशिष्टो यो राघवः तस्य रामस्य सदृशो न। ननु नाहं स्वस्मिन् रामसादृश्यं वदामि किं तु तव दास्यं प्रार्थयामीत्यत आह–अस्य रामपरिग्रहस्य मम दास्येऽपि त्वं न युज्यसे । अर्धचतुष्टयमेकान्वयि ॥ ७२ ॥ ७३ ॥

गो० टी०–किंचिद्वीर्यमिति । किंचिद्वीर्यं कुत इत्यत्राह—यो मामिति । भर्तुरसंनिधौ तेन भर्त्रा अदृष्टः सन् यो मामपहृत्यागतः तस्य तव किंचिद्वीर्यमिति योज्यम्॥७१॥७२॥

७३–७४ ] ति० टी०–तदसंनिधावपहृत्य तेनादृष्ट इति लङ्कामागतः, अन्यथा तदैव ते हननं स्यादित्यर्थः । सादृश्यसंभावनाऽपि दूरापास्तेत्याह—दास्येऽपीति ॥ ७३ ॥ ७४ ॥

रा० टी०–जानक्येति । जानक्या एवं परुषं वाक्यमुक्तो दशाननः चितास्थः पावक इव जज्वाल ॥ ७४ ॥

गो० टी०–जानक्येति । घोरत्वसिद्ध्यै चितास्थ इत्युक्तम् ॥ ७३ ॥

७५ ] ति० टी०–चितास्थपावकत्वेनास्पृश्यता सूचिता ७५

रा० टी०–विवृत्येति । नयने विवृत्य दक्षिणं मुष्टिमुद्यम्य मैथिलीं हन्तुमारब्धः रावण इति शेषः, तदा स्त्रीभिर्हाहा कृतम् ॥ ७५ ॥

गो० टी०–विवृत्येति । आरब्धः रावण इति शेषः । हाहाकृतं हा हेत्येतत्कृतम् ॥ ७४ ॥

७६ ] ति० टी०–हाहाकृतं हाहेति कृतम् ॥ ७६ ॥

रा० टी०–स्त्रीणामिति । तस्य रावणस्य मन्दोदरी नाम या वरा भार्या तया स्त्रीणां मध्यात्समुत्पत्य स रावणः मधुरां वाणीमुक्तः अत एव प्रतिषेधितः । सार्धश्लोक एकान्वयी ॥ ७६ ॥ ७७ ॥

गो० टी०–स्त्रीणामिति । समुत्पत्य रावणसमीपं गतेति शेषः । मण्डोदरी मण्डनभूतोदरी । "मण्डि, भूषायाम्" इत्यस्माद्धातोः पचाद्यच् । मन्दोदरी वा । डडयोरभेदः दम्भो

---

१ तदिति गो. पाठः । २ [illegible] गो. पाठः । ३ ततस्तत इति गो. पाठः । ४ [illegible] गो. पाठः । ५ कुलेति गो. पाठः । ६ किंचिदिति गो. पाठः । ७ यशीयः सत्यवादी चेति गो. पाठः ।

वरा मन्दोदरी नाम तया स प्रतिषेधितः । उक्तश्च मधुरां वाणीं तया स मदनार्दितः ॥ ७७ ॥
सीतया तव किं कार्यं महेन्द्रसमविक्रम । मया सह रमस्वाद्य मद्विशिष्टा न जानकी ॥ ७८ ॥
देवगन्धर्वकन्याभिर्यक्षकन्याभिरेव च । सार्धं प्रभो रमस्वेति[2] सीतया किं करिष्यसि ॥ ७९ ॥
ततस्ताभिः समेताभिर्नारीभिः स महाबलः । उत्थाप्य सहसा नीतो भवनं स्वं निशाचरः ॥ ८० ॥
याते तस्मिन्दशग्रीवे राक्षस्यो विकृताननाः । सीतां निर्भर्त्सयामासुर्वाक्यैः क्रूरैः सुदारुणैः ॥ ८१ ॥
तृणवद्भाषितं तासां गणयामास जानकी । गर्जितं च तथा तासां सीतां प्राप्य निरर्थकम् ॥ ८२ ॥
वृथा गर्जितनिश्चेष्टा राक्षस्यः पिशिताशनाः । रावणाय शशंसुस्ताः सीताव्यवसितं महत् ॥ ८३ ॥
ततस्ताः सहिताः सर्वा विहताशा निरुद्यमाः । परिक्षिप्य समस्तास्ता निद्रावशमुपागताः ॥ ८४ ॥
तासु चैव प्रसुप्तासु सीता भर्तृहिते रता । विलप्य करुणं दीना प्रशुशोच सुदुःखिता ॥ ८५ ॥
तासां मध्यात्समुत्थाप्य त्रिजटा वाक्यमब्रवीत् । आत्मानं खादत क्षिप्रं न सीतामसितेक्षणाम् ॥ ८६ ॥

दाडिममित्यादिवत् । यद्वा मन्दत्वं चाल्पत्वम् 'मूढाल्पापटुनिर्भाग्या मन्दाः' इत्यमरः सूक्ष्मोदरी इत्यर्थः । मन्दा स्थूलपिपीलिकेत्याचक्षते तस्या इव कृशमस्या उदरमित्यर्थः । ननु पूर्वं धान्यमालिन्या प्रतिषिद्ध इत्युक्तम् संप्रति मण्डोदर्येत्युच्यते विप्रतिषिद्धमिदम् मैवम् उभाभ्यामपि प्रतिषिद्धत्वेनान्यतरोक्तावविरोधात् । मण्डोदर्यादिनामपरिज्ञानं च हनुमतस्तदीयव्यवहारात् ॥ ७५—७७ ॥

७७-८१ ] ति० टी०—मन्दोदरी नामेति । पूर्वं धान्यमालिन्या प्रतिषिद्धमित्युक्तम्, इदानीं मन्दोदर्येत्यभिधानादुभाभ्यामपीति कल्पनीयम् । यद्वा मन्दोदर्या एव नामान्तरं धान्यमालिनीत्युक्तम् ॥ ७७—८१ ॥

रा० टी०—तद्वचनाकारमाह—सीतयेति । सीतया तत्स्थापनप्रयत्नेन तव किं कार्यं न किमपीत्यर्थः, अतः सीतया तत्प्रार्थनया किं रिष्यसि न किमपीत्यर्थः, एतेन तत्स्थापनप्रयत्नं त्यजेति सूचितम् मया सह देवकन्यादिभिश्च सार्धं रमस्व सीतासंभाषणादिना कालविलम्बं न कुर्वित्यर्थः । ननु तस्याः पूजनार्थं मया सा प्रार्थ्यते इत्यत आह—मद्विशिष्टा अस्मत्पूज्येत्यर्थः जानकी न स्थास्यतीति शेषः । श्लोकद्वयमेकान्वयि ॥ ७८ ॥ ७९ ॥

रा० टी०—तत इति । ततोऽनन्तरं निशाचरः नारीभिरुत्थाप्य स्वं भवनं नीतः ॥ ८० ॥

गो० टी०—तत इति । ताभिः देवकन्याभिः । अनेन मण्डोदर्यादिवदन्यासामपि निवारयितृत्वमुक्तम् ॥ ७८ ॥

रा० टी०—यात इति । राक्षस्यः सीतां भर्त्सयामासुः ८१

गो० टी०—यात इति । क्रूरैः क्रूरशब्दैः । सुदारुणैः अर्थतोऽपि क्रूरैः ॥ ७९ ॥

८२ ] ति० टी०—निरर्थकम् आसीदिति शेषः ॥ ८२ ॥

रा० टी०—तृणवदिति । तासां राक्षसीनां भाषितं जानकी तृणवद्गणयामास अत एव तासां गर्जितं सीतां प्राप्य निरर्थकमभवदिति शेषः ॥ ८२ ॥

गो० टी०—तृणवदिति । तृणवत् गणयामासेत्यन्वयः ८०

८३ ] ति० टी०—सीताव्यवसितं महत् । मर्तव्यं न तु त्वमङ्गीकर्तव्य इत्येतद्रूपम् ॥ ८३ ॥

रा० टी०—वृथेति । वृथागर्जितेन गर्जितवैयर्थ्येन निश्चेष्टा राक्षस्यः सीतायाः महत् व्यवसितं रावणाय शशंसुः ॥ ८३ ॥

गो० टी०—वृथेति । वृथागर्जितनिश्चेष्टाः वृथागर्जितेन निर्व्यापाराः ॥ ८१ ॥

८४ ] ति० टी०—विहताशाः रावणानुकूल्यमस्माभिरवश्यं संपाद्यमिति तासामाशा, अत एव तद्विषये निरुद्यमाः । परिक्लिश्य । पूर्वव्यापारकृतः क्लेशः ॥ ८४ ॥

रा० टी०—तत इति । सर्वाः राक्षस्यः निरुद्यमाः सत्यः निद्रावशमुपागताः प्राप्ताः ॥ ८४ ॥

गो० टी०—ततस्ता इति । तूष्णीं रक्षतेति रावणोक्ता इति शेषः । परिक्षिप्य परिवार्य ॥ ८२ ॥

८५-८६ ] ति० टी०—विलप्य प्रशुशोच विलापपूर्वकं शोकं चकार ॥ ८५ ॥ ८६ ॥

रा० टी०—तास्विति । प्रसुप्तासु तासु सीता करुणं विलप्य प्रशुशोच ॥ ८५ ॥

रा० टी०—तासामिति । त्रिजटा अब्रवीत् । तद्वचनाकारमाह—आत्मानं खादत जनकस्यात्मजां न खादत एतेन सीताया विनाशाभावः राक्षसीनामासन्नविनाशश्च सूचितः । सार्धश्लोक एकान्वयी ॥ ८६ ॥

गो० टी०—तास्विति । सुदुःखिता प्रशुशोच उत्तरोत्तरं दुःखितवतीत्यर्थः ॥ ८३—८६ ॥

१ अर्धमेतत् गो. नास्ति । २ इहेति गो. पाठः । ३ प्रसाद्येति गो पाठः । ४ तदेति गो. पाठः । ५ विहिताशा इति रा. पाठः । ६ क्षिप्य समन्तात्तामिति गो. पाठः । ७ उत्थायेति रा. पाठः । ८ सीतां विनाशयतेति गो. पाठः ।

जनकस्या[1]त्मजां साध्वीं स्नुषां दशरथस्य च । स्वप्नो ह्यद्य मया दृष्टो दारुणो रोमहर्षणः ॥ ८७ ॥
रक्षसां च विनाशाय भर्तु[2]रस्या जयाय च । अलमस्मान्परित्रातुं राघवाद्राक्षसीगणम् ॥ ८८ ॥
अभियाचाम वैदेहीमेतद्धि मम रोचते । यदि ह्येवंविधः स्वप्नो दुःखितायाः प्रदृश्यते ॥ ८९ ॥
सा दुःखैर्विविधैर्मुक्ता सुखमाप्नोत्यनुत्तमम् । प्रणिपातप्रसन्ना हि मैथिली जनकात्मजा ॥ ९० ॥
[3]अलमेषा परित्रातुं राक्षस्यो महतो भयात् । ततः सा ह्रीमती बाला भर्तुर्विजयहर्षिता ॥ ९१ ॥
अवोचद्यदि तत्तथ्यं भवेयं शरणं हि वः । तां चाहं तादृशीं दृष्ट्वा सीताया दारुणां दशाम् ॥ ९२ ॥
चिन्तयामास [4]विश्रान्तो न च मे निर्वृतं मनः । सं[5]भाषणार्थे च मया जानक्याश्चिन्तितो विधिः ॥ ९३ ॥
[6]इक्ष्वाकुकुलवंशस्तु [7]स्तुतो मम पुरस्कृतः । श्रुत्वा तु गदितां वाचं राजर्षिगण[8]भूषिताम् ॥ ९४ ॥
प्रत्यभाषत मां देवी बाष्पैः पिहितलोचना । कस्त्वं केन कथं चेह प्राप्तो वानरपुङ्गव ॥ ९५ ॥
का च रामेण ते प्रीतिस्तन्मे शंसितुमर्हसि । तस्यास्तद्वचनं श्रुत्वा अहमप्यब्रुवं वचः ॥ ९६ ॥
देवि रामस्य भर्तुस्ते सहायो भीमविक्रमः । सुग्रीवो नाम विक्रान्तो वानरेन्द्रो महाबलः ॥ ९७ ॥
तस्य मां विद्धि भृत्यं त्वं हनूमन्तमिहागतम् । भर्त्रा [9]संप्रहितस्तुभ्यं रामेणाक्लिष्टकर्मणा ॥ ९८ ॥
इदं तु पुरुषव्याघ्रः श्रीमान्दाशरथिः स्वयम् । अङ्गुलीयमभिज्ञानमदात्तुभ्यं यशस्विनि ॥ ९९ ॥

---

८७ ] ति० टी०–रक्षोविनाशकत्वाद्रोमहर्षणः ॥ ८७ ॥

रा०टी०–तत्र कारणमाह–स्वप्न इति । अस्याः सीतायाः भर्तुर्जयाय च स्वप्नो मया दृष्टः । अर्धद्वयमेकान्वयि ॥ ८७ ॥

८८ ] ति० टी०–राक्षसीगणमस्मान्राक्षसीरूपानस्मान्परित्रातुमलमेषा सीतेति शेषः ॥ ८८ ॥

रा० टी०–अलमिति । अस्मान् परित्रातुम् अलं समर्था सीतेति शेषः, अतो वैदेहीमभियाचाम ॥ ८८ ॥

गो० टी०–अलमस्मात्परित्रातुमिति । अलं शक्ता 'अलं भूषणपर्याप्तिशक्तिवारणवाचकम्' इत्यमरः । परित्रातुम् एषेति शेषः ॥ ८७ ॥ ८८ ॥

८९–९० ] ति० टी०–अभियाचाम स्वरक्षणमिति शेषः ॥ ८९ ॥ ९० ॥

रा० टी०–ननु स्वप्नस्य मिथ्यात्वात्किं तद्दर्शनेन सीताभर्तृविजयादीत्यत आह–यदीति । दुःखितायाः एवंविधः स्वप्नो यदि दृश्यते तर्हि सा दुःखिता दुःखैर्विमुक्ता सती सुखमाप्नोति एतेन स्वप्नस्य मिथ्यात्वेऽपि तद्दर्शनजनितफलस्य सत्यत्वं ध्वनितं मतान्तरे स्वप्नस्यापि सत्यत्वमित्यन्यदेतत् ॥ ८९ ॥

रा०टी०–प्रणिपातेति । राक्षस्यो राक्षसीः परित्रातुमलम् । यदि तु राक्षस्य इति संबोधनं तदाऽस्मानिति प्रत्यासत्त्या वक्तव्यम् ॥ ९० ॥

गो० टी०–अपराधिजनप्राणत्राणे हेतुमाह–प्रणिपातेति ॥ ८९ ॥

९१ ] ति० टी०–ततस्त्रिजटावाक्यानन्तरम् । क्वैतावद्भाग्यमिति लज्जिता । तत्कथितस्वप्नसूचितरामविजयहर्षिता ॥ ९१ ॥

रा० टी०–तत इति । ततोऽनन्तरं तत् स्वप्नदर्शनं यदि तथ्यं सत्यं तर्हि शरणं रक्षिका भवेयम् इति भर्तुर्विजयहर्षिता सीता अवोचत् ॥ ९१ ॥

गो०टी०–तत इति । ततः त्रिजटावाक्यानन्तरम् । भर्तुर्विजयहर्षिता त्रिजटाकथितस्वप्नसूचितरामविजयहर्षिता । तत् त्रिजटास्वप्नवाक्यम् । शरणं हि व इत्यत्रेतिकरणं द्रष्टव्यम् ॥ ९० ॥

९२ ] ति० टी०–तत्त्रिजटावाक्यं यदि तथ्यं तदावश्यं शरणं भवेयमित्यवोचदिति संबन्धः ॥ ९२ ॥

रा० टी०–तामिति । तां सीतां तादृशीं सीताया दशां च दृष्ट्वा विश्रान्तोऽहं चिन्तयामास अत एव मे मनो न निर्वृतम् ॥ ९२ ॥

गो० टी०–तां चाहमिति । न च मे निर्वृतं किंतु दुःखितमित्यर्थः ॥ ९१ ॥

९३ ] ति० टी०–चिन्तयामासेति लिङुत्तमः । ईदृश्या अपीदृशं दुःखमिति चिन्तां कृतवानित्यर्थः । मे मनो न च निर्वृतं न चिन्तारहितं जातम् । विधिः प्रकारः ॥ ९३ ॥

रा० टी०–संभाषणार्थे इति । जानक्याः संभाषणार्थे विधिरुपायो मया चिन्तितः अत एव पुरस्कृतः सर्वेरग्रे उक्तः इक्ष्वाकुकुलवंशः मम मया स्तुतः ॥ ९३ ॥

गो०टी०–संभाषणार्थमिति । विधिः उपायः ९२–१०१ ॥

९४–९७ ] ति० टी०–मम स्तुतो मया स्तुतः ॥ ९४–९७ ॥

रा० टी०–श्रुत्वेति । गदितां वाचं श्रुत्वा देवी सीता कस्त्वमित्यादि मां प्रत्यभाषत । तस्याः वचनं श्रुत्वा अहमप्यब्रुवम् । सार्धश्लोकद्वयमेकान्वयि ॥ ९४–९६ ॥

रा० टी०–स्ववचनाकारमाह–देवीति ॥ ९७ ॥

९८–९९ ] ति० टी०–तुभ्यं भर्त्रा तव भर्त्रा ॥ ९८ ॥ ९९ ॥

---

१ आत्मजा साध्वी स्नुषेति गो. पाठः । २ यस्या इति गो. पाठः । ३ अर्धमेतत् गो. नास्ति । ४ विक्रान्त इति गो. पाठः । ५ भाषणार्थमिति गो. पाठः । ६ इक्ष्वाकूणां हीति गो. पाठः । ७ तत इति गो. पाठः । ८ पूजितामिति गो. पाठः । ९ ऽहं प्रेषित इति गो. पाठः ।

तदिच्छामि त्वयाज्ञप्तं देवि किं करवाण्यहम् । रामलक्ष्मणयोः पार्श्वं नयामि त्वां किमुत्तरम्॥ १०० ॥
एतच्छ्रुत्वा विदित्वा च सीता जनकनन्दिनी । आह रावणमुत्पाट्य राघवो मां नयत्विति॥ १०१ ॥
प्रणम्य शिरसा देवीमहमार्यामनिन्दिताम् । राघवस्य मनोह्लादमभिज्ञानमयाचिषम् ॥ १०२ ॥
अथ मामब्रवीत्सीता गृह्यतामयमुत्तमः । मणिर्येन महाबाहू रामस्त्वां बहु मन्यते ॥ १०३ ॥
इत्युक्त्वा तु वरारोहा मणिप्रवरमुत्तमम् । प्रायच्छत्परमोद्विग्ना वाचा मां संदिदेश ह ॥ १०४ ॥
ततस्तस्यै प्रणम्याहं राजपुत्र्यै समाहितः । प्रदक्षिणं परिक्राममिहाभ्युद्गतमानसः ॥ १०५ ॥
उत्तरं पुनरेवाह निश्चित्य मनसा तदा । हनूमन्मम वृत्तान्तं वक्तुमर्हसि राघवे ॥ १०६ ॥
यथा श्रुत्वैव न चिरात्तावुभौ रामलक्ष्मणौ । सुग्रीवसहितौ वीरावुपेयातां तथा कुरु ॥ १०७ ॥
यदन्यथा भवेदेतद्द्वौ मासौ जीवितं मम । न मां द्रक्ष्यति काकुत्स्थो म्रिये साहमनाथवत्॥ १०८ ॥
तच्छ्रुत्वा करुणं वाक्यं क्रोधो मामभ्यवर्तत । उत्तरं च मया दृष्टं कार्यशेषमनन्तरम् ॥ १०९ ॥
ततोऽवर्धत मे कायस्तदा पर्वतसंनिभः । युद्धाकाङ्क्षी वनं तस्य विनाशयितुमारभे ॥ ११० ॥
तद्भग्नं वनखण्डं तु भ्रान्तत्रस्तमृगद्विजम् । प्रतिबुद्ध्य निरीक्षन्ते राक्षस्यो विकृताननाः॥ १११ ॥

रा० टी०—तस्येति । संप्रहितः प्रेषितः ॥ ९८ ॥

रा० टी०—इदमिति ॥ ९९ ॥

१०० ] ति० टी०—त्वयाऽऽज्ञप्तं त्वत्कर्तृकमाज्ञापनम् । उत्तरं समुद्रोत्तरकूलस्थम् । यद्वा किमुत्तरं प्रत्युत्तरं किं ब्रूहीति शेषः ॥ १०० ॥

रा० टी०—तदिति । त्वयाऽऽज्ञप्तं तदुत्तरं किं किंचित् करवाणीत्यहमिच्छामि ॥ १०० ॥

१०१-१०३ ] ति० टी०—उत्पाट्य समूलं नाशयित्वा ॥ १०१-१०३ ॥

रा० टी०—एतदिति । राघव एव मां नयत्विति सीता आह ॥ १०१ ॥

रा० टी०—प्रणम्येति । देवीं सीतां प्रणम्याहमभिज्ञानमयाचिषम् ॥ १०२ ॥

रा० टी०—अथेति । येन रामस्त्वां बहु मन्यते स एष मणिः गृह्यतामिति सीता मामब्रवीत् ॥ १०३ ॥

१०४ ] ति० टी०—संदिदेश काकवृत्तान्तं तिलककरणं च राममात्रैकवेद्यं कथयामासेत्यर्थः ॥ १०४ ॥

रा० टी०—इतीति । इत्युक्त्वा मणिप्रवरं प्रायच्छत् संदिदेश च ॥ १०४ ॥

गो० टी०—इत्युक्त्वेति । वाचा मां संदिदेशेति । स्वरामैकवेद्यं प्रागुक्तं काकासुरवृत्तान्तं तिलकनिर्माणादिकं च संदिष्टवतीत्यर्थः ॥ १०२ ॥

१०५-१०७ ] ति० टी०—इहाभ्युद्गतमानस इहागन्तुं निश्चितमानसः । मम वृत्तान्तं त्वयाऽनुभूतं मद्विषयं रावणराक्षसीवृत्तान्तम् ॥ १०५-१०७ ॥

रा० टी०—तत इति । इह भवतां समीपे अभ्युद्गतं मानसं यस्य सोऽहं राजपुत्र्यै प्रणम्य प्रदक्षिणं परिक्रामं पर्यक्रामम् ॥ १०५ ॥

गो० टी०—तत इति । परिक्रामं पर्यक्रामम् । इहाभ्युद्गतमानसः इहाभ्युद्गते इहाभ्यागमने मानसं यस्य स तथा १०३

रा० टी०—उत्तरमिति । तदा उत्तरं निश्चित्य हे हनुमन् ! राघवे वृत्तान्तं वक्तुमर्हसीति पुनराह ॥ १०६ ॥

रा० टी०—वृत्तान्तमेवाह—यथेति । श्रुत्वैव रामलक्ष्मणौ यथा समुपेयातां तथा कुरु ॥ १०७ ॥

गो० टी०—उत्तरं पुनरेवेदं निश्चित्य मनसा तयेत्यादि । एतत् उपयानं यद्यन्यथा भवेत् यदि नोपेयातामित्यर्थः तदा द्वौ मासौ मम जीवितम् ततः परं न जीवामीत्यर्थः । न मां द्रक्ष्यसि मासद्वयाभ्यन्तरे मां न द्रक्ष्यति चेत् तदा म्रिय इति योज्यम् । मास शब्दोऽत्र पक्षपरः । "पक्षा वै मासा" इति श्रुतेः ॥१०४-१०६॥

१०८ ] ति० टी०—यद्यस्मादन्यथानागमने द्वौ मासौ मम जीवितं भवेत् अनाथवन्म्रिये । राक्षसीकृतवधेनेति भावः ॥ १०८ ॥

रा० टी०—यदिति । यत् यदि अन्यथा विलम्बो भवेत् तर्हि मां काकुत्स्थो न द्रक्ष्यति । तत्र हेतुः—द्वौ मासावेव मम जीवितं जीवनम् अनन्तरमनाथवन्म्रिये ॥ १०८ ॥

१०९-१११ ] ति० टी०—उत्तरं कार्यशेषं लङ्कानाशनरूपम् ॥ १०९-१११ ॥

रा० टी०—तदिति । तत् करुणं वाक्यं श्रुत्वा मां क्रोधो रावणं प्रति कोपोऽभ्यवर्तत। अनन्तरम् उत्तरं कार्यशेषम् अवशिष्टकार्यं मया दृष्टं विचारितम् ॥ १०९ ॥

१ उत्पाट्येति गो. पाठः । २ अद्भुतमिति गो. पाठः । ३ पुनरेवेदमिति गो. पाठः । ४ तयेति गो. पाठः । ५ युद्धकाङ्क्षीति गो. रा. पाठः । ६ तच्चेति गो. पाठः । ७ षण्डमिति गो. पाठः । ८ ... गो. पाठः ।

मां च दृष्ट्वा वने तस्मिन्समागम्य ततस्ततः । ताः समभ्यागता क्षिप्रं रावणायाचचक्षिरे ॥ ११२ ॥
राजन्वनमिदं दुर्गं तव भग्नं दुरात्मना । वानरेण ह्यविज्ञाय तव वीर्यं महाबल ॥ ११३ ॥
तस्य दुर्बुद्धिता राजंस्तव विप्रियकारिणः । वधमाज्ञापय क्षिप्रं यथासौ न[1] पुनर्व्रजेत् ॥ ११४ ॥
तच्छ्रुत्वा राक्षसेन्द्रेण विसृष्टा बहु[2]दुर्जयाः । राक्षसाः किंकरा नाम रावणस्य मनोऽनुगाः ॥ ११५ ॥
तेषामशीतिसाहस्रं शूलमुद्गरपाणिनाम् । मया [3]तस्मिन्वनोद्देशे परिघेण निषूदितम् ॥ ११६ ॥
तेषां तु हतशिष्टा[4] ये ते गता[5] लघुविक्रमाः । निहतं च मया[6] सैन्यं रावणायाचचक्षिरे ॥ ११७ ॥
ततो मे बुद्धिरुत्पन्ना चैत्यप्रासादमुत्तमम्[7] । तत्रस्थान्राक्षसान्हत्वा शतं स्तम्भेन वै पुनः ॥ ११८ ॥
ललामभूतो लङ्काया [8]मया विध्वंसितो [9]रुषा । ततः प्रहस्तस्य सुतं जम्बुमालिनमादिशत् ॥ ११९ ॥
राक्षसैर्बहुभिः सार्धं घोररूपैर्भयानकैः । तमहं बलसंपन्नं राक्षसं रणकोविदम् ॥ १२० ॥
परिघेणातिघोरेण सूदयामि सहानुगम् । तच्छ्रुत्वा राक्षसेन्द्रस्तु मन्त्रिपुत्रान्महाबलान् ॥ १२१ ॥
पदातिबलसंपन्नान्प्रेषयामास रावणः । परिघेणैव तान्सर्वान्नयामि यमसादनम् ॥ १२२ ॥
मन्त्रिपुत्रान्हतान् श्रुत्वा समरे लघुविक्रमान् । पञ्च सेनाग्रगाञ्छूरान्प्रेषयामास रावणः ॥ १२३ ॥
तानहं सहसैन्यान्वै सर्वानेवाभ्यसूदयम् । ततः पुनर्दशग्रीवः पुत्रमक्षं महाबलम् ॥ १२४ ॥
बहुभी राक्षसैः सार्धं प्रेषयामास [10]संयुगे । तं तु मन्दोदरीपुत्रं कुमारं रणपण्डितम् ॥ १२५ ॥
सहसा खं समु[11]द्यन्तं पादयोश्च गृहीतवान् । तमासीनं शतगुणं भ्रामयित्वा व्यपेषयम् ॥ १२६ ॥

रा० टी०–तत इति । ततः मे कायोऽवर्धत ततः युद्धकाङ्क्ष्यहं वनं विनाशयितुमारेभे ॥ ११० ॥

रा० टी०–तदिति । भग्नं तद्वनखण्डं राक्षस्यः प्रतिबुध्य निरीक्षन्ते ॥ १११ ॥

गो० टी०–तच्छ्रुत्वेति । उत्तरम् अनन्तरम् । अनन्तरम् अनन्तरकर्तव्यम् उत्तरकार्यमित्यर्थः ॥ १०७–११९ ॥

११२–११३] ति० टी०–समागम्य मिलित्वा ११२॥११३

रा० टी०–मामिति । ताः राक्षस्यः समागम्य मां दृष्ट्वा क्षिप्रं समभ्यागताः एकीभूताः सत्यः रावणाय आचचक्षिरे ॥ ११२ ॥

रा० टी०–तद्वचनाकारमाह—राजन्निति । दुर्गं दुर्गममपि वनं तव वीर्यमविज्ञाय वानरेण भग्नम् ॥ ११३ ॥

११४–११७] ति० टी०–तस्य दुर्बुद्धितेति बहुव्रीहेस्तल् । न पुनर्व्रजेत् स्वदेशमिति शेषः ११४–११७ ॥

रा० टी०–तस्येति । तस्य वानरस्य दुर्बुद्धिता दुष्टबुद्धिरस्तीति शेषः, अतः यथा येन प्रकारेण असौ वानरः पुनर्न व्रजेत् जीवन्गच्छेत् यथा तेन प्रकारेण तव विप्रियकारिणः तस्य वानरस्य वधं क्षिप्रमाज्ञापय ॥ ११४ ॥

रा० टी०–तदिति । तत् राक्षसीवचनं श्रुत्वा किंकरा नाम राक्षसाः राक्षसेन्द्रेण विसृष्टाः प्रेपिताः ॥ ११५ ॥

रा० टी०–तेषामिति । तेषां किंकराभिधराक्षसानाम् अशीतिसाहस्रं परिघेण मया निषूदितम् ॥ ११६ ॥

रा० टी०–तेषामिति । तेषां राक्षसानां मध्ये ये हतशिष्टाः हननात् अवशिष्टाः ते मया निहतं सैन्यं रावणाय आचचक्षिरे ॥ ११७ ॥

११८ ] ति० टी०–चैत्यप्रासादम् विनाशयितुमिति शेषः ॥ ११८ ॥

रा० टी०–तत इति । ततोऽनन्तरं चैत्यप्रासादं विध्वंसितुमिति शेषः, मे बुद्धिः उत्पन्ना अत एव तत्रस्थान् शतं राक्षसान् हत्वा लङ्कायाः ललामभूतः अलंकारतां प्राप्तः चैत्यप्रासाद इति शेषः, मया विध्वंसितः । सार्धश्लोक एकान्वयी ११८

गो० टी०–तत इति । ततो मे बुद्धिरुत्पन्ना वक्ष्यमाणकार्यविषयेत्यर्थः । तादृशं बुद्धिकार्यमाह—चैत्येत्यादिना । चैत्यप्रासादं नगरमध्यस्थप्रासादम् । ललामभूतः अलंकारभूतः ॥ ११६–११८ ॥

११९–१२६ ] ति० टी०–ललामभूतः चैत्यप्रासाद इति शेषः ॥ ११९–१२६ ॥

रा० टी०–तत इति । ततोऽनन्तरं बहुभिः राक्षसैः सह जम्बुमालिनमादिशत् ॥ ११९ ॥

रा० टी०–तमिति । जम्बुमालिनमहं सूदयामि असूदयम् ॥ १२० ॥

रा० टी०–तदिति । तत् हननं श्रुत्वा पदातिबलसंपन्नान् पदातिबलैः संयुक्तान् मन्त्रिपुत्रान् राक्षसेन्द्रः प्रेषयामास तानहं यमसादनं नयामि अनयम् । सार्धश्लोक एकान्वयी ॥ १२१ ॥ १२२ ॥

१ विल्यमिति गो. पाठः । २ भृशेति गो. पाठः । ३ तस्येति रा. पाठः । ४ शेषा इति गो. पाठः । ५ गत्वेति गो. पाठः । ६ महदिति गो. पाठः । ७ आक्रममिति गो. पाठः । ८ स वै इति गो. पाठः । ९ मयेति गो. पाठः । १० रावण इति गो. पाठः । ११ समुत्क्रान्तमिति गो. पाठः ।

तमक्षमागतं भग्नं निशम्य स दशाननः । तैतश्चेन्द्रजितं नाम द्वितीयं रावणः सुतम् ॥ १२७ ॥
व्यादिदेश सुसंक्रुद्धो बलिनं युद्धदुर्मदम् । तच्चाप्यहं बलं सर्वं तं च राक्षसपुंगवम् ॥ १२८ ॥
नष्टौजसं रणे कृत्वा परं हर्षमुपागतः । महतापि महाबाहुः प्रत्ययेन महाबलः ॥ १२९ ॥
प्रहितो रावणेनैष सह वीरैर्मदोद्धतैः । सोऽविषह्यं हि मां बुद्ध्वा स्वसैन्यमं चावमर्दितम् ॥१३०॥
ब्रह्मणोऽस्त्रेण स तु मां प्रबद्ध्वा चातिवेगिनः । रज्जुभिश्चापि बध्नन्ति ततो मां तत्र राक्षसाः॥१३१ ॥
रावणस्य समीपं च गृहीत्वा मामुपागमन् । दृष्ट्वा संभाषितश्चाहं रावणेन दुरात्मना ॥ १३२ ॥
पृष्टश्च लङ्कागमनं राक्षसानां च तं वधम् । तत्सर्वं च रणे तत्र सीतार्थमुपजल्पितम् ॥ १३३ ॥
तस्यास्तु दर्शनाकाङ्क्षी प्राप्तस्त्वद्भवनं विभो । मारुतस्यौरसः पुत्रो वानरो हनुमानहम् ॥ १३४ ॥
रामदूतं च मां विद्धि सुग्रीवसचिवं कपिम् । सोऽहं दौत्येन रामस्य त्वत्सकाशमिहागतः ॥१३५॥
शृणु चापि समादेशं यदहं प्रब्रवीमि ते । राक्षसेश हरीशस्त्वां वाक्यमाह समाहितम् ॥ १३६ ॥
सुग्रीवश्च महाभाग स त्वां कौशलमब्रवीत् । धर्मार्थकामसहितं हितं पथ्यमुवाच ह ॥ १३७ ॥
वसतो ऋष्यमूके मे पर्वते विपुलद्रुमे । राघवो रणविक्रान्तो मित्रत्वं समुपागतः॥ १३८ ॥

---

रा० टी०—मन्त्रीति । लघुविक्रमान् शीघ्रविक्रमकारिणः मन्त्रिपुत्रान् हतान् श्रुत्वा सेनाग्रगान् पञ्च प्रेषयामास ॥१२३॥

रा० टी०—तानिति । तान् सेनाग्रगान् अहमभ्यसूदयं ततोऽनन्तरम् अक्षं पुत्रं प्रेषयामास । सार्धश्लोक एकान्वयी ॥ १२४ ॥

रा० टी०—तमिति । खं समुत्पतन्तं मन्दोदरीपुत्रमक्षं पादयोर्गृहीतवानहं भ्रामयित्वा व्यपेपयम् । सार्धश्लोक एकान्वयी ॥ १२५ ॥ १२६ ॥

गो० टी०—तच्छ्रुत्वेति । पदातिबलसंपन्नान् पदातिप्रभृतिसैन्यसंपन्नान् ॥ ११९-१३१ ॥

१२७-१२८ ] ति० टी०—द्वितीयं प्रेषितपुत्रापेक्षया द्वितीयम् ॥ १२७ ॥ १२८ ॥

रा० टी०—तमिति । आगतं तमक्षं भग्नं हतं निशम्य इन्द्रजितन्नाम द्वितीयं सुतं सुसंक्रुद्धो रावणः व्यादिदेश। सार्धश्लोक एकान्वयी ॥ १२७ ॥

रा० टी०—तदिति । तत् इन्द्रजित्संबन्ध्यपि बलं तमिन्द्रजितं च नष्टौजसं कृत्वा परं हर्षमहमुपागतः ॥ १२८ ॥

१२९-१३० ] ति० टी०—महता प्रत्ययेन विश्वासेन ॥ १२९ ॥ १३० ॥

रा० टी०—महतेति । महता प्रत्ययेन विश्वासेन वीरैः सह रावणेन प्रहितः प्रेषितः स एष इन्द्रजित् स्वसैन्यमवमर्दितं बुद्ध्वा अत एव मामविषह्यं बुद्ध्वा *बन्धितुमैच्छदिति शेषः । सार्धश्लोक एकान्वयी ॥ १२९ ॥ १३० ॥

१३१-१३२ ] ति० टी०—प्रबद्ध्वा प्रबद्ध्य । राक्षसेभ्य आर्पयदिति शेषः । बध्नन्त्यबध्नन् ॥ १३१ ॥ १३२ ॥

रा० टी०—ब्रह्मण इति । अतिवेगितः स इन्द्रजित् ब्रह्मणोऽस्त्रेण मां प्रबद्ध्वा प्रबध्य राक्षसेभ्यः समर्पयदिति शेषः, तत्र तस्मिन्समये राक्षसाः रज्जुभिश्चापि मां बध्नन्ति अबध्नन् ॥ १३१ ॥

रा० टी०—रावणस्येति । मां गृहीत्वा रावणस्य समीपमुपागमन् राक्षसा इति शेषः । रावणेन दुरात्मना दृष्टोऽहं संभाषितः ॥ १३२ ॥

१३३ ] ति० टी०—सीतार्थमिति कथितमित्यर्थः ॥१३३॥

रा० टी०—पृष्ट इति । लङ्कागमनं राक्षसानां वधं च तत्प्रयोजनमित्यर्थः पृष्टोऽभवमिति शेषः, तत् गमनादि सर्वं सीतार्थम् इति मयोपजल्पितं कथितम् ॥ १३३ ॥

१३४-१३८] ति० टी०—तस्याः सीतायाः १३४-१३८

रा० टी०—तस्या इति । मारुतस्य औरसः पुत्रो हनुमानहं तस्याः सीतायाः दर्शनाकाङ्क्षी सन् त्वद्भवनं प्राप्तः॥१३४॥

गो० टी०—अस्याहमित्यादि । अस्याः सीतायाः । विसंधिरार्षः ॥ १३२ ॥ १३३ ॥

रा० टी०—रामेति । मां रामदूतं विद्धि अत एव दौत्येन कर्मणोपलक्षितः सन् त्वत्सकाशमागतः ॥ १३५ ॥

रा० टी०—शृण्विति । हे राक्षसेश ! यत् समाहितं वाक्यं हरीशस्त्वामाह तदहं ते तुभ्यं प्रब्रवीमि अतः समादेशं त्वं शृणु ॥ १३६ ॥

रा० टी०—तदेव भङ्ग्यन्तरेणाह—सुग्रीव इति । सुग्रीवस्त्वां कौशलमब्रवीत् हितं वाक्यमुवाच ॥ १३७ ॥

रा० टी०—तद्वचनाकारमाह—वसत इति । ऋष्यमूके वसतो मे मित्रत्वं राघवः समुपागतः ॥ १३८ ॥

---

१ तत इन्द्र इति गो. पाठः। २ उपागममिति गो. पाठः। ३ प्रेषित इति गो. पाठः। ४ एवेति गो. पाठः। ५ उत्कटैरिति गो. पाठः। ६ बलमिति गो. पाठः । ७ ब्राह्मेणास्त्रेणेति गो. पाठः । ८ प्राबध्नादिति गो. पाठः । ९ वेगित इति गो. रा. पाठः । १० नयन्निति गो. पाठः । ११ मयेति गो. पाठः। १२ इतीति गो. पाठः। १३ अस्याहमिति गो. पाठः। १४ श्लोकोऽयं गो. नास्ति। १५ तेन इति गो. पाठः । १६ कुशलमिति गो. पाठः । * बद्धुमिति युक्तम्।

तेन मे कथितं राजन्भार्या मे रक्षसा हृता । [ तत्र साहाय्यमस्माकं कार्यं सर्वात्मना त्वया ।
मया च कथितं तस्मै वालिनश्च वधं प्रति ॥ ] तत्र साहाय्यहेतोर्मे समयं कर्तुमर्हसि ॥ १३९ ॥
वालिना हृतराज्येन सुग्रीवेण सह प्रभुः । चक्रेऽग्निसाक्षिकं सख्यं राघवः सहलक्ष्मणः ॥१४०॥
तेन वालिनमाहत्य शरेणैकेन संयुगे । वानराणां महाराजः कृतः संप्लवतां प्रभुः ॥ १४१ ॥
तस्य साहाय्यमस्माभिः कार्यं सर्वात्मना त्विह । तेन प्रस्थापितस्तुभ्यं समीपमिह धर्मतः ॥ १४२ ॥
क्षिप्रमानीयतां सीता दीयतां राघवस्य च । यावन्न हरयो वीरा विधमन्ति बलं तव ॥ १४३ ॥
वानराणां प्रभावोऽयं[६] न केन विदितः पुरा । देवतानां सकाशं च ये गच्छन्ति निमन्त्रिताः ॥१४४॥
इति वानरराजस्त्वामाहेत्यभिहितो मया । मामैक्षत ततो रुष्टश्चक्षुषा प्रदहन्निव ॥ १४५ ॥
तेन वध्योऽहमाज्ञप्तो रक्षसा रौद्रकर्मणा । मत्प्रभावमविज्ञाय रावणेन दुरात्मना ॥ १४६ ॥
ततो विभीषणो नाम तस्य भ्राता महामतिः । तेन राक्षसराजश्च याचितो मम कारणात् ॥ १४७ ॥
नैवं राक्षसशार्दूल त्यज्यतामेष निश्चयः । राजशास्त्रव्यपेतो हि मार्गः संलक्ष्यते त्वया ॥ १४८ ॥

---

गो० टी०—सुग्रीवश्चेति । धर्मार्थकामसहितमिति । तत्र धर्मसाहित्यात् हितं परत्र उपकारकम् अर्थसाहित्यात्पथ्यम् इहोपकारकं चेत्यर्थः ॥ १३४–१३७ ॥

१३९–१४० ] ति० टी०—समयं प्रतिज्ञाम् १३९–१४०

रा० टी०—तेनेति । मे भार्या रक्षसा हृता अतः तत्र कार्ये मे साहाय्यहेतोः समयं कालनियमं कर्तुमर्हसि इति तेन रामेण मे कथितम् ॥ १३९ ॥

रा० टी०—वालिनेति । वालिना हृतं राज्यमप्यस्य तेन सुग्रीवेण मया सह अग्निसाक्षिकं सख्यं राघवश्चक्रे ॥ १४० ॥

१४१ ] ति० टी०—संप्लवतां सम्यक्प्लवतां प्रभुः अहमिति शेषः ॥ १४१ ॥

रा० टी०—तेनेति । तेन रामेण वालिनमाहत्य वानराणां महाराजः कृतोऽहमस्मीति शेषः ॥ १४१ ॥

१४२ ] ति० टी०—तस्य रामस्य । तेन रामसाहाय्यस्य कर्तव्यत्वेन तुभ्यं समीपं तव समीपं प्रस्थापितः। दूत इति शेषः। दूतप्रेषणं विना प्रथममेव युद्धस्याधर्मत्वादिति भावः ॥ १४२ ॥

रा० टी०—तस्येति । तस्य रामसाहाय्यमस्माभिः कार्यम् अतः तेन मया तुभ्यं तव समीपम् इतः प्रस्थापितः दूत इति शेषः ॥ १४२ ॥

१४३ ] ति० टी०—सीतादानाभावे बाधकमाह—यावदिति ॥ १४३ ॥

रा० टी०—प्रस्थापनप्रयोजनमाह—क्षिप्रमिति । हरयो वानराः यावत्ते बलं न विधमन्ति तावदेव राघवस्य सीता आनीयतां दीयतां च ॥ १४३ ॥

१४४–१४५ ] ति० टी०—वानराणामिति । एवं च लङ्कानाशने वानरा असमर्था न इति मन्तव्यमिति भावः। 'राघवाणाम्' इति पाठे मनुष्योऽसमर्थ इति न मन्तव्यमिति भावः ॥ १४४ ॥ १४५ ॥

रा० टी०—नन्वतिबलवतो मे वानराः किं करिष्यन्तीत्यत आह—वानराणामिति । निमन्त्रिताः प्रबलस्वरिपुघाताय देवैराहूताः ये वानराः देवतानां सकाशं समीपं गच्छन्ति तेषां वानराणामयं प्रभावः केन साधारणेन जनेन न विदितः किं च के स्वर्गेऽपि न विदितो न विदित एव॥१४४॥

गो० टी०—सुग्रीवश्चेत्यादिना सुग्रीवोक्तं कियदनूद्य संप्रति शेषं स्वयं वक्ता सन्नाह—वालिनेति ॥ १३८–१४२ ॥

रा० टी०—इतीति । वानरराजः इति त्वामाह अत एव मया त्वमभिहितः त्वमित्यध्याहृतम् ततः मदुक्तश्रवणानन्तरं रुष्टो रावणः चक्षुषा प्रदहन्निव मामैक्षत ॥ १४५ ॥

गो० टी०—इदं वचः सुग्रीवोक्तमेव मयोक्तमित्याह—इतीति ॥ १४३ ॥ १४४ ॥

१४६–१४७ ] ति० टी०—मत्प्रभावं वरदानं लब्ध्वा वध्यत्वरूपम् ॥ १४६ ॥ १४७ ॥

रा० टी०—तेनेति । तेन रावणेनाहं वध्य आज्ञप्तः१४६

रा० टी०—तत इति । तस्य रावणस्य विभीषणो नाम यो भ्राता तेन मम कारणात् राक्षसराजो याचितः ॥ १४७ ॥

गो० टी०—तत इत्यादि । नैवमिति । कर्तव्यमिति शेषः । राजशास्त्रं राजधर्मशास्त्रम् । वेदितव्यं वक्तव्यमित्यर्थः ॥ १४५–१५० ॥

१४८ ] ति० टी०—नैवम् अयमवध्य इत्यर्थः । एष निश्चय एतद्वधनिश्चयः संलक्ष्यते विचार्यते ॥ १४८ ॥

रा० टी०—तत्प्रकारमाह—नेति । एवं भवदुक्तं न अयं न वध्य इत्यर्थः, अतः एषः वधविषयको निश्चयः त्यज्यताम् । तत्र

---

१ राजेति गो. पाठः । २ श्लोकोऽयं गो. पाठे अधिकः । ३ महेति गो. पाठः । ४ उत्पाट्येति गो. पाठः । ५ राघवायेति गो. पाठः । ६ हीति गो. पाठः । ७ क्रुद्ध इति गो. पाठः । ८ ऽसावेति गो. पाठः । ९ सम्यते इति गो. पाठः ।

दूतवध्या न दृष्टा हि राजशास्त्रेषु राक्षस । दूतेन वेदितव्यं च [1]यथाभिहितवादिना ॥ १४९ ॥
सुमहत्यपराधेऽपि दूतस्यातुलविक्रम । विरूपकरणं दृष्टं न वधोऽस्ति हि शास्त्रतः ॥ १५० ॥
विभीषणेनैवमुक्तो रावणः संदिदेश तान् । राक्षसानेतदे[2]वास्य लाङ्गूलं दह्यतामिति ॥ १५१ ॥
ततस्तस्य वचः श्रुत्वा मम पुच्छं समन्ततः । वेष्टितं शणवल्कैश्च प[3]ट्टैः कार्पासकैस्तथा ॥ १५२ ॥
राक्षसाः सिद्धसंनाहास्ततस्ते चण्डविक्रमाः । तदा [4]दीप्यन्त मे पुच्छं [5]हनन्तः काष्ठमुष्टिभिः॥ १५३ ॥
बद्धस्य बहुभिः पाशैर्यन्त्रितस्य च राक्षसैः । [6]न मे पीडा [7]भवेत्काचिद्दिदृक्षोर्नगरीं दिवा ॥ १५४ ॥
ततस्ते राक्षसाः शूरा बद्धं मामग्निसंवृतम् । अघोषयन्राजमार्गे नगरद्वारमागताः ॥ १५५ ॥
ततो[8]ऽहं सुमहद्रूपं संक्षिप्य पुनरात्मनः । विमोचयित्वा तं बन्धं प्रकृतिस्थः स्थितः पुनः॥१५६॥
आयसं परिघं गृह्य तानि रक्षांस्यसूदयम् । ततस्तन्नगरद्वारं वेगेन प्लुतवानहम् ॥ १५७ ॥
पुच्छेन च प्रदीप्तेन तां पुरीं साट्टगोपुराम् । दहाम्यहमसंभ्रान्तो युगान्ताग्निरिव प्रजाः ॥ १५८ ॥
विनष्टा जानकी व्यक्तं न ह्यदग्धः प्रदृश्यते । लं[9]कायाः कश्चिदुद्देशः सर्वा भस्मीकृता पुरी ॥ १५९ ॥
दहता च मया लङ्कां दग्धा सीता न संशयः । रामस्य [10]च महत्कार्यं मयेदं वि[11]फलीकृतम् ॥ १६० ॥
इति शोकसमाविष्टश्चिन्तामहमुपागतः । [12]ततोऽहं वाचमश्रौषं चारणानां शुभाक्षराम् ॥ १६१ ॥
जानकी न च दग्धेति विस्मयोदन्तभाषि[13]णीम् । ततो मे बुद्धिरुत्पन्ना श्रुत्वा तामद्भुतां गिरम् ॥ १६२ ॥

---

हेतुमाह-राजशास्त्रेण व्यपेतः विरुद्धः मार्गः त्वया संलक्ष्यते ज्ञायते एतेनायं वधः शास्त्रविरुद्ध इति सूचितम् ॥ १४८ ॥

१४९-१५२ ] ति० टी०-वेदितव्यं निवेदनीयम् । एवं चैवमुक्तिर्दूतस्य नापराध इत्यर्थः ॥ १४९-१५२ ॥

रा० टी०-तत्रापि हेतुमाह-दूतेति । राजशास्त्रे दूतवध्या दूतानां वधो न दृष्टा किंतु दूतेनोक्तमिति शेषः, वेदितव्यमेव ॥ १४९ ॥

रा० टी०-सुमहतीति । दूतस्यापराधे सुमहत्यपि विरूपकरणं दृष्टं वधो न दृष्टः ॥ १५० ॥

रा० टी०-विभीषणेनेति । विभीषणेनोक्तो रावणः एतत् लाङ्गूलमेव दह्यतामिति राक्षसान् संदिदेश ॥ १५१ ॥

रा० टी०-तत इति । तस्य रावणस्य वचः श्रुत्वा मम पुच्छं शणवल्कादिभिर्वेष्टितम् ॥ १५२ ॥

१५३-१६१ ] ति० टी०-हनन्तः मामिति शेषः । आर्षमेतत् ॥ १५३-१६१ ॥

रा० टी०-राक्षसा इति । सिद्धः सन्नाहो बन्धनं यैः ते राक्षसाः काष्ठमुष्टिभिर्हनन्तो घ्नन्तः सन्तो मे पुच्छमदीप्यन्त अदीपयन्त ॥ १५३ ॥

गो० टी०-राक्षसा इत्यादि । यन्त्रितस्य आवृतस्य१५१

रा० टी०-बद्धस्येति । बद्धस्यापि मम काचित्पीडा नाभवत् ॥ १५४ ॥

रा० टी०-तत इति । ते राक्षसाः नगरद्वारमागताः सन्तः अग्निसंवृतं मां राजमार्गे अघोषयन् ॥ १५५ ॥

गो० टी०-तत इति । नगरद्वारमागताः सन्तः राजमार्गे अघोषयन्निति योजना ॥ १५२-१५४ ॥

रा० टी०-तत इति । अहम् आत्मनो बन्धं विमोचयित्वा विमोच्य प्रकृतिस्थः सन् स्थितोऽस्मीति शेषः ॥ १५६ ॥

रा० टी०-आयसमिति । परिघं गृह्य गृहीत्वा रक्षांसि असूदयं ततोऽनन्तरं नगरद्वारमाप्लुतवान् ॥ १५७ ॥

रा० टी०-पुच्छेनेति । पुच्छेन पुरीं लङ्कां दहामि अदहम् ॥ १५८ ॥

गो० टी०-पुच्छेन चेति । अट्टं वलभिः ॥१५५-१५८

रा० टी०-विनष्टेति । यतः पुरी लङ्का मया भस्मीकृता अत एव लङ्कायाः कश्चिदुद्देशः अदग्धो न दृश्यते अत एव जानकी विनष्टा ॥ १५९ ॥

रा० टी०-तदेव भङ्ग्यन्तरेणाह-दहतेति । मया सीता दग्धा अत एव रामस्य कार्यं मया विफलीकृतम् इति शोकसमाविष्टोऽहं चिन्तामुपागतः । सार्धश्लोक एकान्वयी ॥१६०॥

रा० टी०-तत इति । विस्मयपूर्वकमुदन्तं वृत्तान्तं भाषन्ते तच्छीलिनां चारणानां जानकी न दग्धेति वाचम श्रौषम् ॥ १६१ ॥

गो० टी०-अथाहमिति । विस्मयोदन्तभाषितां भाषितविस्मयोदन्ताम् उक्ताद्भुतवार्तामित्यर्थः । विस्मयवृत्तान्तव्यवहृतामिति वा ॥ १५९ ॥

१६२ ] ति० टी०-विस्मयकारी य उदन्तो वृत्तान्तस्तद्भाषिणां तं वदताम् ॥ १६२ ॥

---

१ यथार्थं हितेति गो. पाठः । २ अस्येति गो. पाठः । ३ जीर्णैः कार्पासजैरिति गो. पाठः । ४ दह्यन्तेति गो. पाठः । ५ निघ्नन्त इति गो. पाठः । ६ अर्धमेतत् गो. नास्ति । ७ भवदिति रा. पाठः । ८ आप्लुतवानहमिति गो. रा. पाठः । ९ लङ्कायामिति गो. पाठः । १० हीति गो. पाठः । ११ वितथीकृतमिति गो. पाठः । १२ अथेति गो. पाठः । १३ भाषितामिति गो. पाठः ।

अदग्धा जानकीत्येवं निमित्तैश्चोपलक्षितम् । दीप्यमाने तु लाङ्गुले न मां दहति पावकः ॥ १६३ ॥
हृदयं च प्रहृष्टं मे वाताः सुरभिगन्धिनः । तैर्निमित्तैश्च दृष्टार्थैः कारणैश्च महागुणैः ॥ १६४ ॥
ऋषिवाक्यैश्च दृष्टार्थैरभवं हृष्टमानसः । पुनर्दृष्टा च वैदेही विसृष्टश्च तया पुनः ॥ १६५ ॥
ततः पर्वतमासाद्य तत्रारिष्टमहं पुनः । प्रतिप्लवनमारेभे युष्मद्दर्शनकाङ्क्षया ॥ १६६ ॥
ततः श्वसनचन्द्रार्कसिद्धगन्धर्वसेवितम् । पन्थानमहमाक्रम्य भवतो दृष्टवानिह ॥ १६७ ॥
राघवस्य प्रसादेन भवतां चैव तेजसा । सुग्रीवस्य च कार्यार्थं मया सर्वमनुष्ठितम् ॥ १६८ ॥
एतत्सर्वं मया तत्र यथावदुपपादितम् । तत्र यन्न कृतं शेषं तत्सर्वं क्रियतामिति ॥ १६९ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये सुन्दरकाण्डेऽष्टपञ्चाशः सर्गः ॥ ५८ ॥

---

रा० टी०–तत इति । तां गिरं श्रुत्वा जानकी अदग्धेति मे बुद्धिर्निश्चयः उत्पन्ना निमित्तैः शुभसूचकशकुनैश्चोपलक्षितं तदेव निश्चितम् ॥ १६२ ॥

गो० टी०–तत इति । निमित्तैश्चोपलक्षिता शकुनादिभिश्च सीता न दग्धेति ज्ञातेत्यर्थः ॥ १६० ॥

१६३ ] ति० टी०–उपलक्षितम् तददहनमिति शेषः । निमित्तैः शुभसूचकैः । निमित्तान्याह—दीप्यमानेत्यादि १६३

रा० टी०–निमित्तान्येव बोधयन्नाह–दीप्यमान इति । न दहति अदहत् हृदयं च प्रहृष्टं सुरभिगन्धिनो वाता ववुरिति शेषः ॥ १६३ ॥

गो० टी०–दीप्यमान इति । हृदयं प्रहृष्टम् आसीदिति शेषः । सुरभिगन्धिनः आसन्निति शेषः ॥ १६१ ॥

१६४–१६५ ] ति० टी०–दृष्टार्थैर्दृष्टसंवादैः, महागुणैः कारणैर्मत्प्रवृत्तिकारणैः सीतारामरूपैः ॥ १६४ ॥ १६५ ॥

रा० टी०–तैरिति । दृष्टार्थैः पूर्वमनुभूतफलकैर्निमित्तैरुक्तैर्निमित्तैर्महागुणैः अस्मद्धितसंपादकैः सिद्धार्थैः ऋषिवाक्यैश्च हृष्टमानसोऽहमभवम् ॥ १६४ ॥

गो० टी०–तैरिति । दृष्टार्थैः दृष्टफलैः निमित्तैः शकुनैः कारणैः नेत्रस्फुरणादिभिः । महागुणैः फलव्याप्तैः । सिद्धार्थैः अबाधितार्थैः । तत्र हेतुत्वेन ऋषिपदोपादानम् ॥ १६२ ॥

रा० टी०–पुनरिति । पुनरनन्तरं वैदेही दृष्टा तया वैदेह्या विसृष्टः अत्रागमनाय आज्ञापितोऽभवमिति शेषः ॥१६५॥

गो० टी०–पुनरित्यर्धमेकं वाक्यम् । विसृष्टः प्रेषितोऽस्मि ॥ १६३ ॥

१६६–१६९]ति० टी०–आरेभे । लिङ्गुत्तमः १६६–१६९

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये सुन्दरकाण्डेऽष्टपञ्चाशः सर्गः ॥ ५८ ॥

रा० टी०–तत इति । ततोऽनन्तरम् अरिष्टं पर्वतमासाद्य प्रतिप्लवनमारेभे ॥ १६६ ॥

गो० टी०–तत इति । तत्र लङ्कासमीपं सामीप्ये सप्तमी । तत्र वर्तमानम् अरिष्टं पर्वतम् ॥ १६४ ॥

रा० टी०–तत इति । श्वसनादिसेवितं पन्थानमाक्रम्य भवतो दृष्टवानहमस्मीति शेषः ॥ १६७ ॥

गो० टी०–तत इति । भवतो दृष्टवानिह भवतः युष्मान् इह समुद्रतीरे ॥ १६५ ॥

रा० टी०–राघवस्येति । राघवस्य प्रसादेन तेजसा च भवतां सुग्रीवस्य च कार्यार्थं कर्मव्यसिद्ध्यर्थं मया सर्वमनुष्ठितं संपादितम् ॥ १६८ ॥

रा० टी०–एतदिति । तत्र सागरादौ जातम् एतत्सर्वं कर्म मया उपपादितं यत् मया न कृतमत एव शेषमवशिष्टं तत्सर्वं क्रियतां भवद्भिरिति शेषः ॥ १६९ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ सुन्दरकाण्डेऽष्टपञ्चाशत्तमः सर्गः ॥ ५८ ॥

गो० टी०–राघवस्येति । भवतां चैव तेजसा भवदनुग्रहेणेत्यर्थः । सुग्रीवस्य च कार्यार्थम् स्वामिकार्यस्यावश्यकर्तव्यत्वादिति भावः । कार्यार्थं कार्यवस्तु क्लीबत्वमार्षम् । अस्यानुवादवाक्यविस्तरस्य प्रयोजनं वानराणां श्रवणकुतूहलातिशयप्रकाशनम् ॥ १६६ ॥ १६७ ॥

अस्मिन् सर्गे सार्धषट्षष्ट्युत्तरशतश्लोकाः ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्यानेऽष्टपञ्चाशः सर्गः ॥ ५८ ॥

---

१ पवमिति गो. पाठः । २ लक्षितेति गो. पाठः । ३ दृष्ट्वा च वैदेहीमिति गो. पाठः । ४ पवनेति गो. पाठः ।

# एकोनषष्टितमः सर्गः ।

वानरान्प्रत्याञ्जनेयः सीतादुरवस्थां निवेदयन्वैदेहीं प्रत्यानीयैव रामदर्शनमुचितमिति मन्वानो जाम्बवदादीनां पूर्ववीर्याणि वर्णयंस्तान्युद्धाय प्रोत्साहयति ।

एतदाख्याय तत्सर्वं हनूमान्मारुतात्मजः । भूयः समुपचक्राम वचनं वक्तुमुत्तरम् ॥ १ ॥
सफलो राघवोद्योगः सुग्रीवस्य च संभ्रमः । शीलमासाद्य सीताया मम च प्रीणितं मनः ॥ २ ॥
आर्यायाः सदृशं शीलं सीतायाः प्लवगर्षभाः । तपसा धारयेल्लोकान्क्रुद्धा वा निर्दहेदपि ॥ ३ ॥
सर्वथातिप्रकृष्टोऽसौ रावणो राक्षसेश्वरः । यस्य तां स्पृशतो गात्रं तपसा न विनाशितम् ॥ ४ ॥
न तदग्निशिखा कुर्यात्संस्पृष्टा पाणिना सती । जनकस्य सुता कुर्याद्यत्क्रोधकलुषीकृता ॥ ५ ॥

---

१ ] ति० टी०–एतदिति । उत्तरं पराक्रमयुक्तत्वात्सर्वतोऽधिकम् ॥ १ ॥

रा० टी०–हनुमत्कर्तृकलङ्कावृत्तान्तवर्णनमुक्त्वा तत्कर्तृकवृत्तान्तरं वर्णयितुमुपक्रमते–एतदिति । हनुमान् तत्स्वाचरितमेतत्सर्वमाख्याय उत्तरं श्रेष्ठं वचनमुक्त्यन्तरं वक्तुं भूयः समुपचक्राम आरेभे ॥ १ ॥

गो० टी०–एतदिति । तदेतदाख्याय उत्तरं वचनं वक्तुमुपचक्रामेत्यन्वयः ॥ १ ॥

२ ] ति० टी०–संभ्रम आदरः उत्साह इत्यर्थः । सीतायाः शीलं सद्वृत्तं पातिव्रत्यमासाद्य दृष्ट्वा राघवोद्योगादेः साफल्यज्ञानेन मम मनः प्रीणितं तुष्टम् । 'मम च प्रवणं मनः' इति पाठेऽपि प्रवणं संतोपप्रवणमित्यर्थः ॥ २ ॥

रा० टी०–तदाकारमाह–सफल इत्यादिभिः । सीतायाः शीलं रामैकनिष्ठस्वभावम् आसाद्य विज्ञाय मम मनःप्रीणितं तृप्तम् अत एव राघवोद्योगः सुग्रीवस्य संभ्रमः राघवादरश्च सफलः ॥ २ ॥

गो० टी०–अथ संप्रत्येव रावणं जित्वा सीतया सहैवास्माभिः प्रतियातव्यमिति हृदि निधायाह–सफल इति । संभ्रमः त्वरा उत्साह इति यावत् । कुतः साफल्यमित्याशङ्क्य सीतापातिव्रत्योपलम्भादित्याह–शीलमिति । शीलं वृत्तम् पातिव्रत्यमिति यावत् । अहं तु प्रागेव तदेकशरण इत्याह–मम चेति । प्रवणं प्रह्वं तत्परमिति यावत् । सीताचारित्रस्य न किंचिदसाध्यमस्तीति भावः ॥ २ ॥

३ ] ति० टी०–सदृशम् पतिव्रतानामरुन्धत्यादीनां सदृशमित्यर्थः ॥ ३ ॥

रा० टी०–आर्याया इति । आर्यायाः सीतायाः सदृशं शीलं यस्या अस्ति सेति शेषः, तपसा स्वधर्मबलेन लोकान् धारयेत् वा यदि क्रुद्धा तर्हि निर्दहेदपि ॥ ३ ॥

गो० टी०–तर्हि तं दुरात्मानं रावणं स्पृशन्तमेव किमिति नादहदित्याशङ्क्य तस्यापि तपःसंपत्तिसद्भावादित्याह–तपसेत्यादिना । यद्वा रावणतपःकथनद्वारा सीतायाः पातिव्रत्यातिशयमाह–तपसेत्यादिना । तपसा अतिप्रवृद्ध इत्यन्वयः कोपप्रसादाभ्यां सर्वलोकनिग्रहानुग्रहसमर्थोऽसौ रावणः सर्वथा महातपःसंपन्नः अत एव सीतास्पर्शेऽप्यविनाशित इत्यर्थः॥३॥

४ ] ति० टी०–तर्हि रावणं किमिति नादहदित्यत आह–सर्वथेति । अतिप्रकृष्टः महातपःसंपन्न इत्यर्थः । तां सीतां स्पृशतोऽपि यस्य गात्रं तपसा न नाशितमिति संबन्धः ॥ ४ ॥

रा० टी०–सर्वथेति । तां सीतां स्पृशतः अपहरणाय स्पर्शं कुर्वतः यस्य रावणस्य गात्रं पाणिः तपसा सीतातपोबलेन न विनाशितं सोऽसौ रावणः सर्वथा सर्वप्रकारेण अतिप्रकारेण अतिप्रकृष्टः प्रतिभातीति शेषः, एतेनेदं महदाश्चर्यमिति सूचितम् ॥ ४ ॥

५ ] ति० टी०–नैतावता सीताशीलं दुर्बलमित्याशङ्क्यमित्याह–नेति । यत्क्रुद्धा सीता कुर्यात्तत्स्पृष्टाऽग्निशिखापि न कुर्यात् । इयं तु भर्तुः पराक्रमकीर्तये नाद्यापि क्रुध्यतीति भावः । अक्रुद्धाया अपि स्पर्शमात्रेण प्राप्तो नाशस्तु रावणतपसा निवारित इति ध्येयम् ॥ ५ ॥

रा० टी०–तदेव पोपयन्नाह–नेति । क्रोधकलुषीकृता जनकस्य सुता यद्दहनं न कुर्यात्तद्दहनं पाणिसंस्पृष्टा अग्निशिखा न कुर्यात् एतेन सीतायाः सामर्थ्यातिशयः सूचितः तेन सीतायाः अधिकः कोपो न जात इति ध्वनितम् ॥ ५ ॥

गो० टी०–तर्हि सीताशीलं दुर्बलमस्माकं किमुपकरिष्यतीत्याशङ्क्य नेत्याह–न तदिति । सीताशीलमेव बलीयस्त्वादुपकरिष्यतीत्यर्थः । क्रोधकलुषीकृतेति वचनाद्भर्तृमुखेन वैरनिर्यातनं वीरपत्नीधर्मः । अन्यथा महालाघवं भर्तुरित्यपि पारतन्त्र्यपालनाय तादृक्क्रोधाकरणाद्रावणो जीवतीति गम्यते । एतदेवोक्तं प्राक्–असंदेशात्तु रामस्य तपसश्चानुपालपालनात् । न त्वां कुर्मि दशग्रीव भस्म भस्मार्हतेजसेति ॥४॥

---

१ प्रवणमिति गो. पाठः । २ अर्धमेतत् गो. नास्ति । ३ क्रुद्धो वेति गो. पाठः । ४ वृद्ध इति गो. पाठः । ५ राक्षसाधिप इति गो. पाठः । ६ ऽऽत्मजेति गो. पाठः

जाम्बवत्प्रमुखान्सर्वाननुज्ञाप्य महाकपीन् । अस्मिन्नेवंगते कार्ये भवतां च निवेदिते ॥
न्याय्यं स्म सह वैदेह्या द्रष्टुं तौ पार्थिवात्मजौ ॥ ६ ॥
अहमेकोऽपि पर्याप्तः सराक्षसगणां पुरीम् । तां लङ्कां तरसा हन्तुं रावणं च सैराक्षसम् ॥ ७ ॥
किं पुनः सहितो वीरैर्बलवद्भिः कृतात्मभिः । कृतास्त्रैः प्लवगैः शक्तैर्भवद्भिर्विजयैषिभिः ॥ ८ ॥
अहं तु रावणं युद्धे ससैन्यं सपुरःसरम् । सहपुत्रं वधिष्यामि सहोदरयुतं युधि ॥
ब्राह्ममस्त्रं च रौद्रं च वायव्यं वारुणं तथा ॥ ९ ॥
यदि शक्रजितोऽस्त्राणि दुर्निरीक्ष्याणि संयुगे । तान्यहं निहनिष्यामि विधमिष्यामि राक्षसान् ॥
भवतामभ्यनुज्ञातो विक्रमो मे रुणद्धि तम् । मयाऽतुला विसृष्टा हि शैलवृष्टिर्निरन्तरा ॥ ११ ॥
देवानपि रणे हन्यात्किंपुनस्तान्निशाचरान् । भवतामननुज्ञातो विक्रमो मे रुणद्धि माम् ॥ १२ ॥
सागरोऽप्यतियाद्वेलां मन्दरः प्रचलेदपि । न जाम्बवन्तं समरे कम्पयेदरिवाहिनी ॥ १३ ॥

---

६ ] ति० टी०—इदानीं भृत्यजयस्यापि स्वामिसंबन्धित्वसत्त्वेन वयमेव सीतापातिव्रत्यं सहायमासाद्य रावणं जित्वा देव्या सह राघवौ द्रक्ष्यामह इत्याह—जाम्बवदिति । जाम्बवदादीननुज्ञाप्याऽऽज्ञां कुर्वन्त्विति संप्रार्थ्य । अस्मिन्कार्ये सीतान्वेषणरूपे । एवंगते उक्तप्रकारं प्राप्ते । तत्प्रकारविशिष्टे च भवतां निवेदिते सति तौ पार्थिवात्मजौ वैदेह्या संद्रष्टुं न्याय्यमित्यब्रवीदिति शेषः ॥ ६ ॥

रा० टी०—जाम्बवदिति । एवमनेन प्रकारेण गते सिद्धिं प्राप्ते अस्मिन् कार्ये भवतां समीपे निवेदिते सति जाम्बवत्प्रमुखान् कपीन् अनुज्ञाप्य तदाज्ञां गृहीत्वेत्यर्थः, वैदेह्या सह पार्थिवात्मजौ द्रष्टुं न्याय्यमस्माकमिति शेषः । सार्धश्लोक एकान्वयी ॥ ६ ॥

गो० टी०—एवं स्थिते युष्मदनुमत्या भृत्यविजयोऽपि स्वामिन एवेति कृत्वा सीतारामपदावलम्बादहमेव रावणं निर्जित्य सीतापुरस्कारेणैव राघवौ द्रक्ष्यामीत्याह—जाम्बवदिति ॥५॥६॥

७ ] ति० टी०—तया संदर्शने उपपत्तिमाह—अहमिति । एवं च राक्षसान्हत्वा देव्यानयनं कृत्वा देव्या सहैव तौ द्रक्ष्याम इत्यर्थः ॥ ७ ॥

८ ] तिं० टी०—कृतास्त्रैर्देवांशत्वादस्त्रप्रयोगसमर्थैः ॥ ८ ॥

रा० टी०—ननु रामसुग्रीवयोर्लङ्कागमनमन्तरा कथमेव भविष्यतीत्यत आह—अहमिति । लङ्कां रावणं च हन्तुम् अहमेकः पर्याप्तो यदि तर्हि भवद्भिः सहितः पर्याप्तश्चेत् किं वक्तव्यम् । अर्धचतुष्टयमेकान्वयि ॥ ७ ॥ ८ ॥

गो० टी०—न चाशक्तिशङ्का कार्येति बहुधा प्रपञ्चयन्नाह—अहमित्यादिना ॥ ७–९ ॥

९ ] ति० टी०—उक्तमेवार्थं संभ्रमेण पुनराह—अहं त्विति । अहमेवेत्यर्थः ॥ ९ ॥

१० ] ति० टी०—यद्यपि दुर्निरीक्ष्याणि तथापि तान्यहं निहनिष्यामि ब्रह्मणो वरदानान्निवारयामि । पराहत्तैस्तैरेव राक्षसान्विधमिष्यामि निहनिष्यामि ॥ १० ॥

रा० टी०—तान्प्रोत्साहयितुं पुनः स्वपराक्रममाह—अहमिति । सैन्यादिविशेषणविशिष्टं रावणं युधि वधिष्यामि॥९॥

रा० टी०—ब्राह्ममिति । ब्रह्मास्त्रादीनि शक्रजितो यदि यान्यस्त्राणि तानि च भवतामभ्यनुज्ञातोऽहं निहनिष्यामि अत एव राक्षसान् विधमिष्यामि । ननु कथमेवं भवतो निश्चय इत्यत आह—मे विक्रमः तं रावणं रुणद्धि पीडयतीत्यर्थः । अर्धचतुष्टयमेकान्वयि ॥ १० ॥ ११ ॥

गो० टी०—ब्राह्ममित्यादि । अभ्यनुज्ञातः अभ्यनुज्ञानात् पञ्चम्यास्तसिः । मे विक्रमः तं रावणम् रुणद्धि हन्तीत्यर्थः ॥ १०–१२ ॥

११ ] ति० टी०—रुणद्धि रोत्स्यति ॥ ११ ॥

रा० टी०—मयेति । मया विसृष्टा प्रवर्तिता शैलवृष्टिः देवानपि हन्यात् राक्षसान् हन्यादिति किम् ॥ १२ ॥

१२ ] ति० टी०—भवतामननुज्ञातः अनुज्ञां विना मे विक्रमो राक्षसवधप्रवृत्तिर्मां रुणद्धीत्यर्थः । अतः पूर्वमेव मया न पराक्रान्तमित्यर्थः ॥ १२ ॥

रा० टी०—नन्वेवं सति तत्रैव रावणः कुतो न हतः इत्यत आह—भवतामिति । भवताम् अननुज्ञात आज्ञात आज्ञाया अभावाद्धेतोर्मे विक्रमो मां रुणद्धि हन्तुं न्यवारयदित्यर्थः । अर्धं पृथक् ॥ १३ ॥

१३ ] ति० टी०—इदानीं सर्वेऽपि भवन्तस्तद्वधे समर्था इत्याह—सागरोऽपीति ॥ १३ ॥

रा० टी०—अन्येषामपि सामर्थ्यं वर्णयन्नाह—सागर इत्यादिभिः । सागरो वेलां स्वावधिमतियात् अतियायात् अतिक्रमेत् मन्दरश्च प्रचलेत् जाम्बवन्तं तु अरिवाहिनी रिपुसेना न कम्पयेत् ॥ १४ ॥

---

१ हरीनिति गो. पाठः । २ महाबलमिति गो. पाठः । ३ शूरैरिति गो. पाठः । ४ ऐन्द्रमिति गो. पाठः । ५ दुर्निरीक्षाणीति गो. पाठः । ६ अर्धमेतत् गो. नास्ति ।

सर्वराक्षससङ्घानां राक्षसा ये च पूर्वजाः । अलमेकोऽपि[1] नाशाय वीरो वालिसुतः कपिः ॥ १४ ॥
प्लवगस्योरुवेगेन नीलस्य च महात्मनः । मन्दरोऽप्यवशीर्येत किं पुनर्युधि राक्षसाः ॥ १५ ॥
सदेवासुरयक्षेषु गन्धर्वोरगपक्षिषु । मैन्दस्य प्रतियोद्धारं शंसत द्विविदस्य वा ॥ १६ ॥
अश्विपुत्रौ महावेगावेतौ प्लवगसत्तमौ । एतयोः प्रतियोद्धारं न पश्यामि रणाजिरे ॥ १७ ॥
[ [3]पितामहवरोत्सेकात्परमं दर्पमास्थितौ । अमृतप्राशिनावेतौ सर्ववानरसत्तमौ ॥
अश्विनोर्माननार्थं हि सर्वलोकपितामहः । सर्वावध्यत्वमतुलमनयोर्दत्तवान्पुरा ॥
वरोत्सेकेन मुक्तौ च प्रमथ्य महतीं चमूम् । सुराणाममृतं वीरौ पीतवन्तौ प्लवङ्गमौ ॥
एतावेव हि संक्रुद्धौ सवाजिरथकुञ्जराम् । लङ्कां नाशयितुं शक्तौ सर्वे तिष्ठन्तु वानराः ]
मयैव निहता लङ्का दग्धा भस्मीकृता पुरी । राजमार्गेषु सर्वेषु नाम विश्रावितं मया ॥ १८ ॥
जयत्यतिबलो रामो लक्ष्मणश्च महाबलः । राजा जयति सुग्रीवो राघवेणाभिपालितः ॥ १९ ॥
अहं कोसलराजस्य दासः पवनसंभवः । हनूमानिति सर्वत्र नाम विश्रावितं मया ॥ २० ॥
अशोकवनिकामध्ये रावणस्य दुरात्मनः । अधस्ताच्छिंशपामूले साध्वी करुणमास्थिता ॥ २१ ॥
राक्षसीभिः परिवृता शोकसंतापकर्शिता । मेघरेखापरिवृता चन्द्ररेखेव निष्प्रभा ॥ २२ ॥
अचिन्तयन्ती वैदेही रावणं बलदर्पितम् । पतिव्रता च सुश्रोणी अवष्टब्धा च जानकी ॥ २३ ॥

---

गो० टी०–सागरोऽपीत्यादि । अतियात् आर्षं ह्रस्वत्वम् ॥ १३ ॥

१४–१७ ] ति० टी०–ये च पूर्वजा राक्षसास्तेषां नाशायैकोऽपीत्यन्वयः ॥ १४–१७ ॥

रा० टी०–सर्वेति । सर्वराक्षससंघानां मध्ये ये पूर्वजाः अतिबला इत्यर्थः, तेषामपि नाशाय एकोऽप्यङ्गदोऽलम् ॥१५॥

रा० टी०–प्लवगस्येति । नीलस्योरुवेगेन मन्दरोऽपि अवशीर्येत ॥ १६ ॥

रा० टी०–सेति । देवादिसहितेषु गन्धर्वादिषु मध्ये मैन्दस्य द्विविदस्य वा प्रतियोद्धारं यूयं शंसत कथयत न कोऽपि प्रतियोद्धाऽस्तीत्यर्थः ॥ १७ ॥

रा० टी०–अश्वीति । अश्विपुत्रौ यौ प्लवगसत्तमौ तयोः प्रतियोद्धारं न पश्यामि ॥ १८ ॥

गो० टी०–सर्वेति । पूर्वकाः तेषामिति शेषः ॥१४–२१॥

१८ ] ति० टी०–मयैव निहता निहतप्राया । एवं च सर्वैर्मिलित्वा नाशनीयेति किं वाच्यमिति भावः । नामेति सुग्रीवादेरिति शेषः ॥ १८ ॥

रा० टी०–इदानीं राक्षसविघाते न बहुश्रम इति बोधयन्नाह––मयेति । मयैव लङ्का दग्धा अत एव भस्मीकृता राजमार्गेषु नाम च मया विश्रावितम् ॥ १९ ॥

गो० टी०–मयैवेति । दग्धत्वेप्यङ्गारावस्था भवति सापि नास्तीत्याह–भस्मीकृतेति ॥ २२ ॥

१९–२० ] ति० टी०–तदेवाह–जयतीति ॥१७॥२०॥

रा० टी०–विश्रावणप्रकारमाह–जयतीति द्वाभ्याम् ॥ २० ॥ २१ ॥

गो० टी०–नामविश्रावणमेवाह–जयतीति । जयति सर्वोत्कर्षेण वर्तते । तदुक्तं हरिणा–'जयिर्जयाभिभवयोरा्द्यर्थेऽसावकर्मकः । उत्कर्षप्राप्तिरा्द्यार्थो द्वितीयेर्थे सकर्मकः ॥' इति ॥ २३ ॥ २४ ॥

२१–२२ ] ति० टी०–सीतादुःखविमर्शेऽपि संप्रत्येव समानेतुमुचितेत्याशयेन तद्दशां वर्णयति–अशोकेत्यादि २१॥२२

रा० टी०–द्रुतं प्रपतितं सीतावृत्तमाह––अशोकेति । राक्षसीभिः परिवृता अत एव मेघरेखया परिवृता आच्छादिता चन्द्ररेखेव निष्प्रभा रावणमचिन्तयन्ती अगणयन्ती सर्वात्मना राममनुरक्ता अत एव पुरन्दरे पौलोमीव रामेण रमातिस्मरणेन युक्तेति शेषः, अत एव अनन्यचिन्ता राक्षसीमध्ये मुहुर्मुहुः तर्ज्यमाना प्रमदानाम् अवनमतिरश्चा यस्मिन् पुरुषागम्ये इत्यर्थः, रावणस्याशोकवनिकामध्ये शिंशपामूले अधस्तात् निम्नदेशे राक्षसीभिः अवष्टब्धा निरुद्धा जानकी मया दृष्टा । सार्धश्लोकपञ्चकमेकान्वयि ॥ २२–२६ ॥

गो० टी०–अथ सीतादुर्दशाविमर्शेऽपि संप्रत्यसौ समानेतव्येत्याशयेन तद्दशां दर्शयति––अशोकेत्यादिना ॥२५–२६॥

२३ ] ति० टी०–अचिन्तयन्ती योग्यत्वेनागणयन्ती । अगणने हेतुः––पतिव्रतेति । अगणनाच्चावष्टब्धा निरुद्धा अस्तीति शेषः ॥ २३ ॥

---

१ रीति गो. पाठः । २ पनसस्येति गो. पाठः । ३ श्लोकचतुष्टयमेतदधिकं गो. पाठे । ४ पुनरिति गो. पाठः । ५ सर्वत्रेति गो. पाठः । ६ वृक्षे इति गो. पाठः ।

अनुरक्ता हि वैदेही रा[1]मे सर्वात्मना शुभा । अनन्य[2]चिन्ता रामेण[3] पौलोमीव पुरन्दरे ॥ २४ ॥
तदेकवासःसंवीता रजोध्वस्ता तथैव च । [ [4]शोकसंतापदीनाङ्गी सीता भर्तृहिते रता । ]
सा मया राक्षसीमध्ये तर्ज्यमाना मुहुर्मुहुः ॥ २५ ॥
राक्षसीभिर्विरूपाभिर्दृष्टा हि प्रमदावने । एकवेणीधरा दीना भर्तृचिन्तापरायणा ॥ २६ ॥
अधःशय्या विवर्णाङ्गी पद्मिनीव [5]हिमोदये । रावणाद्विनिवृत्तार्था मर्तव्यकृतनिश्चया ॥ २७ ॥
कथंचिन्मृगशावाक्षी विश्वासमुपपादिता । ततः संभाषिता चैव सर्वमर्थं [6]प्रकाशिता ॥ २८ ॥
रामसुग्रीवसख्यं च श्रुत्वा प्रीतिमुपागता । नियतः समुदाचारो भक्तिर्भर्तरि चोत्तमा ॥ २९ ॥
यन्न हन्ति दशग्रीवं स महात्मा [7]दशाननः । निमित्तमात्रं रामस्तु वधे तस्य भविष्यति ॥ ३० ॥
सा प्रकृत्यैव तन्वङ्गी तद्वियोगाच्च कर्शिता । प्रतिपत्पाठशीलस्य विद्येव तनुतां गता ॥ ३१ ॥
एवमास्ते महाभागा सीता शोकपरायणा । यदत्र प्रतिकर्तव्यं तत्सर्वमुपकल्प्यताम् ॥ ३२ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये सुन्दरकाण्डे एकोनषष्टितमः सर्गः ॥ ५९ ॥

---

२४ ] ति० टी०—रामेण रामप्रीत्यानन्यचिन्ता पौलोमीव नहुषरुद्धा पौलोमीव ॥ २४ ॥

गो० टी०—पतिव्रता चेत्यादि । पौलोमीव पुरन्दर इति नहुषनिर्बन्ध इति भावः ॥ २७–२९ ॥

२५–२७ ] ति० टी०—तदेकवास इति व्याख्यातम् । राक्षसीभिस्तर्ज्यमाना दृष्टेत्युत्तरेणान्वयः ॥ २५–२७ ॥

रा० टी०—एकेति । हिमोदये पद्मिनी कमलिनीव विवर्णाङ्गी रावणाद्धेतोर्विनिवृत्तः अर्थो रामसेवा यस्याः सा सीता कथंचित् विश्वासमुपपादिता प्रापिता । श्लोकद्वयमेकान्वयि ॥ २७ ॥ २८ ॥

गो० टी०—सा मयेत्यादि । प्रमदावने अशोकवनिकायाम् । विनिवृत्तार्था त्यक्तप्रयोजना रावणप्रलोभनवाक्यैरवशीकृतेत्यर्थः । सर्वमर्थं रामोद्योगादिकं दर्शिता बोधिता ॥ ३०–३३ ॥

२८ ] ति० टी०—कथंचिदादौ तूष्णीं रामकथाप्रस्तावेन सर्वमर्थं रामसुग्रीववृत्तान्तम् ॥ २८ ॥

रा० टी०—तत इति । संभाषिता अत एव सर्वमर्थं प्रकाशिता प्रबुद्धा सीता रामसुग्रीवसख्यं श्रुत्वा प्रीतिमुपागता प्राप्ता ॥ २९ ॥

२९ ] ति० टी०—तदेवाह—रामसुग्रीवसख्यं चेति । नियतः समुदाचारो दृढपातिव्रत्यं भर्तर्युत्तमा भक्तिश्चास्ति॥२९॥

३० ] ति० टी०—इयत्यापि सामग्र्या यद्दशाननं शापादिना न हन्ति तत्स दशाननो महात्मा तपोबलेन शापायोग्य इति भावः । अथापि सीतावरोधजन्यपापेन मृतप्राय एव स इत्याह—निमित्तमात्रमिति । अतोऽस्माभिरपि सुशक्यवध एव स इति भावः ॥ ३० ॥

रा० टी०—नियत इति । नियतः समुदाचारः सीतासदाचरणं भर्तरि रामे उत्तमा भक्तिश्च यद्यस्माद्दशग्रीवं न हन्ति तस्माद्दशाननो महात्मा प्रतीयते इति शेषः, एतेन रावणो मृतप्राय एवेति सूचितम् अत एव रामः तस्य रावणस्य वधे निमित्तमात्रं भविष्यति । सार्धश्लोक एकान्वयी ॥ ३०॥३१॥

गो० टी०—नियत इति । समुदाचारः चारित्रमिति यावत् । नन्वेवंमाहात्म्या सीता स्वयमेव रावणं किमिति न हन्तीत्याशङ्क्याह—यन्न हन्तीति । दशग्रीवं न हन्तीति यत् तत्र कारणं स दशाननः महात्मा महानुभावः । शापनिबन्धनदुर्मरणाभावादिति भावः अतस्तस्य वधे रामस्तु राम एव निमित्तमात्रं भविष्यति तथा तस्योत्कर्षात् सीता तु निमित्तकारणमिति शेषः । भर्त्रैव वैरनिर्यातनं वीरपत्नीधर्मः अन्यथा भर्तुर्महल्लाघवमिति मनीषया न स्वयं हन्ति न त्वसामर्थ्यादिति भावः ॥ ३४ ॥ ३५ ॥

३१–३२]ति० टी०—तत्पापकारणमाह—सेति ॥३१ ३२॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये सुन्दरकाण्डे एकोनषष्टितमः सर्गः ॥५९॥

रा० टी०—सीतास्वरूपं निर्वक्ति—सेति । प्रकृत्यैव तन्वङ्गी सीता तद्वियोगात् रामवियोगजदुःखात् कर्शिता अतिकृशत्वं प्राप्ता अत एव प्रतिपत्पाठशीलस्य जनस्य विद्येव तनुतां गता ॥ ३२ ॥

रा० टी०—एवमिति । सीता एवमास्ते अतः अत्र समये यत्प्रतिकर्तव्यं तत् उपकल्प्यताम् ॥ ३३ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ सुन्दरकाण्डे एकोनषष्टितमः सर्गः ॥ ५९ ॥

---

१ राममिति गो. रा. पाठः । २ चित्तेति गो. पाठः । ३ चेति गो. पाठः । ४ अर्धमेतदधिकं गो. पाठे । ५ हिमागम इति गो. पाठः । ६ च दर्शितेति गो. पाठः । ७ कृतागसमिति गो. पाठः ।

## षष्टितमः सर्गः ।

स्वस्वीयपराक्रमप्रशंसाकृतोत्साहेऽङ्गदे रावणादिरक्षःक्षपणपूर्वकं सीतासमानयनं समुपक्रामति विरुद्धविमर्शो जाम्बवान्सयुक्त्युपन्यासं तं प्रतिषेधति ।

तस्य तद्वचनं श्रुत्वा वालिसूनुरभाषत । [ अयुक्तं तु विना देवीं दृष्टवद्भिश्च वानर ॥
समीपं गन्तुमस्माभी राघवस्य महात्मनः । ] अश्विपुत्रौ महावेगौ बलवन्तौ प्लवङ्गमौ ॥ १ ॥
पितामहवरोत्सेकात्परमं दर्पमास्थितौ । अश्विनोर्माननार्थं हि सर्वलोकपितामहः ॥ २ ॥
सर्वावध्यत्वमतुलमनयोर्दत्तवान्पुरा । वरोत्सेकेन मत्तौ च प्रमथ्य महतीं चमूम् ॥ ३ ॥
सुराणाममृतं वीरौ पीतवन्तौ महाबलौ । एतावेव हि संक्रुद्धौ सवाजिरथकुञ्जराम् ॥ ४ ॥
लङ्कां नाशयितुं शक्तौ सर्वे तिष्ठन्तु वानराः । अहमेकोऽपि पर्याप्तः सराक्षसगणां पुरीम् ॥ ५ ॥
तां लङ्कां तरसा हन्तुं रावणं च महाबलम् । किं पुनः सहितो वीरैर्बलवद्भिः कृतात्मभिः ॥ ६ ॥
कृतास्त्रैः प्लवगैः शक्तैर्भवद्भिर्विजयैषिभिः । वायुसूनोर्बलेनैव दग्धा लङ्केति नः श्रुतम् ॥ ७ ॥
दृष्टा देवी न चानीता इति तत्र निवेदितुम् । न युक्तमिव पश्यामि भवद्भिः ख्यातपौरुषैः ॥ ८ ॥
नहि वः प्लवने कश्चिन्नापि कश्चित्पराक्रमे । तुल्यः सामरदैत्येषु लोकेषु हरिसत्तमाः ॥ ९ ॥
जित्वा लङ्कां सरक्षौघां हत्वा तं रावणं रणे । सीतामादाय गच्छामः सिद्धार्था हृष्टमानसाः ॥ १० ॥
तेष्वेवं हतशेषेषु राक्षसेषु हनूमता । किमन्यदत्र कर्तव्यं गृहीत्वा याम जानकीम् ॥ ११ ॥

---

गो० टी०–फलितमुपसंहरति—एवमिति । उपपद्यताम् अनुष्ठीयताम् ॥ ३६ ॥

अस्मिन् सर्गे सार्धषट्त्रिंशच्छ्लोकाः ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने एकोनषष्टितमः सर्गः ॥५९॥

१—७ ] ति० टी०–तस्येति ॥ १—७ ॥

रा० टी०–हनुमद्वचनश्रवणानन्तरकालिकामङ्गदोक्तिं वर्णयन्नाह—तस्येति । तस्य हनुमतो वचनं श्रुत्वा वालिसूनुरङ्गदोऽभाषत । अर्थं पृथक् । तद्भाषणाकारमाह—अश्वीत्यादिभिः । महावेगौ अश्विपुत्रौ प्लवङ्गमौ पितामहवरोत्सेकाद्धेतोः परमं दर्पमास्थितौ स्त इति शेषः ॥ १ ॥

रा० टी०–सकारणं वरस्वरूपमाह—अश्विनोरिति । माननार्थं सर्वलोकपितामहः अनयोरश्विपुत्रयोः सर्वावध्यत्वं सर्वकर्तृकवध्यत्वाभावं दत्तवान् ॥ २ ॥

रा० टी०–वरोत्सेकेनेति । वरोत्सेकेन मत्तौ तावश्विपुत्रौ सुराणां चमूं प्रमथ्य अमृतं पीतवन्तौ अतः संक्रुद्धौ एतावश्विपुत्रावेव लङ्कां नाशयितुं शक्तौ अतः सर्वे वानराः तिष्ठन्तु । श्लोकद्वयमेकान्वयि ॥ ३ ॥ ४ ॥

रा० टी०–अहमिति । अहमप्येकः लङ्कां रावणं च हन्तुं पर्याप्तो यदि तर्हि विजयैषिभिर्भवद्भिः सहितः पर्याप्तश्चेत्किं वक्तव्यम् । अर्धचतुष्टयमेकान्वयि ॥ ५ ॥ ६ ॥

रा० टी०–वायुसूनोरिति । वायुसूनोर्बलेनैव लङ्का दग्धा । अर्थं पृथक् ॥ ७ ॥

गो० टी०–तस्येत्यादि ॥ १ ॥

गो० टी०–अयुक्तं त्विति । वानरा इति संबोधनम् ॥ २–६ ॥

८ ] ति० टी०–दृष्ट्वा देवी नानीता इति तत्र रामसमीपे निवेदितुं न युक्तमिव पश्यामि ॥ ८ ॥

रा० टी०–दृष्टेति । देवी सीता दृष्टा आनीता तु न इति तत्र रामस्य समीपे भवद्भिर्निवेदितुं न युक्तमिव पश्यामि ॥८॥

९–१० ] ति० टी०–तुल्यः अस्तीति शेषः ॥ ९ ॥ १० ॥

रा० टी०–नेति । हे हरिसत्तमाः ! वो युष्माकं प्लवनादौ तुल्यः सामरदैत्येषु कश्चिन्न ॥ ९ ॥

रा० टी०–जित्वेति । सरक्षौघां राक्षससमूहवतीं लङ्कां जित्वा सीतामादाय वयं गच्छामः अत एव निर्देशात्संहितादन्तता वा कल्प्या ॥ १० ॥

११ ] ति० टी०–अन्यत्कर्तव्यं किमस्ति काकुरत्र अपि तु जानकीग्रहणपूर्वकगमनादन्यन्न किमपीत्यर्थः ॥ ११ ॥

रा० टी०–तेष्विति । हनूमता हतशेषेषु राक्षसेषु सत्सु जानकीं गृहीत्वा याम रामसमीपं यामः अन्यत् इतो भिन्नम् अत्र अस्मिन् समये किं कर्तव्यम् इदमेव कर्तव्यमित्यर्थः ॥ ११ ॥

---

१ श्लोकोऽयं गो. अधिकः । २ एतदादि सार्धश्लोकपट्कं गो. नास्ति । ३ निवेदनमिति गो. पाठः । ४ अयुक्तमिति गो. पाठः । ५ श्लोकोऽयं गो. नास्ति । ६ वीरैश्चेति गो. पाठः ।

रामलक्ष्मणयोर्मध्ये न्यस्याम जनकात्मजाम् । किं व्यलीकैस्तु तान्सर्वान्वानरान्वानरर्षभान् ॥ १२ ॥
वयमेव हि गत्वा तान्हत्वा राक्षसपुंगवान् । राघवं द्रष्टुमर्हामः सुग्रीवं सहलक्ष्मणम् ॥ १३ ॥
तमेवं कृतसंकल्पं जाम्बवान्हरिसत्तमः । उवाच परमप्रीतो वाक्यमर्थवदर्थवित् ॥ १४ ॥
नैषा बुद्धिर्महाबुद्धे यद्ब्रवीषि महाकपे । विचेतुं वयमाज्ञप्ता दक्षिणां दिशमुत्तमाम् ॥ १५ ॥
नानेतुं कपिराजेन नैव रामेण धीमता । कथंचिन्निर्जितां सीतामस्माभिर्नाभिरोचयेत् ॥ १६ ॥
राघवो नृपशार्दूलः कुलं व्यपदिशन्स्वकम् । प्रतिज्ञाय स्वयं राजा सीताविजयमग्रतः ॥ १७ ॥
सर्वेषां कपिमुख्यानां कथं मिथ्या करिष्यति । विफलं कर्म च कृतं भवेत्तुष्टिर्न तस्य च ॥ १८ ॥
वृथा च दर्शितं वीर्यं भवेद्वानरपुङ्गवाः । तस्माद्गच्छाम वै सर्वे यत्र रामः सलक्ष्मणः ॥
सुग्रीवश्च महातेजाः कार्यस्यास्य निवेदने ॥ १९ ॥

न तावदेषा मतिरक्षमा नो यथा भवान्पश्यति राजपुत्र ।
यथा तु रामस्य मतिर्निविष्टा तथा भवान्पश्यतु कार्यसिद्धिम् ॥ २० ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये सुन्दरकाण्डे षष्टितमः सर्गः ॥ ६० ॥

---

१२-१४ ] ति० टी०-न्यस्याम स्थापयाम । तान्सर्वान्किष्किन्धायामागतान्वानरान्व्यलीकैरप्रियैर्दुःखैः योजयित्वेति शेषः । तथा कृत्वा किं फलमिति शेषः । 'किं परिक्लिश्य तान्' इति पाठान्तरम् ॥ १२—१४ ॥

रा० टी०-रामेति । जनकात्मजां रामलक्ष्मणयोर्मध्ये न्यस्याम संस्थापयाम वानरर्षभान् सर्वान् वानरान् प्रति व्यलीकैः अप्रियैः रामादिकर्तृकौदासीन्यवचनैः किं न किमपीत्यर्थः ॥ १२ ॥

रा० टी०-उपसंहरन्नाह—वयमिति । वयमेव राक्षसपुङ्गवान् हत्वा राघवं द्रष्टुमर्हामः ॥ १३ ॥

रा० टी०-तमिति । एवमुक्तप्रकारेण कृतसंकल्पमङ्गदं जाम्बवान् अर्थवद्वाक्यमुवाच ॥ १४ ॥

१५ ] ति० टी०-नैषा बुद्धिः युक्तेति शेषः । तत्र हेतुमाह—विचेतुमिति ॥ १९ ॥

रा० टी०-तद्वचनाकारमाह—नेत्यादिभिः । यतः दक्षिणां दिशं विचेतुमेव वयमाज्ञप्ताः नानेतुं सीतामिति शेषः, अतः यद्ब्रवीषि तद्विषयिणी एषा बुद्धिर्निश्चयो न कर्तव्येति शेषः । सार्धश्लोक एकान्वयी ॥ १९ ॥

१६ ] ति० टी०-प्रथमं जय एव दुर्लभः, कथंचिज्जयेऽपि यदि न रोचयेत्तदा कार्यनाश इति भावः ॥ १६ ॥

रा० टी०-ननु सीतानयनाज्ञाया अभावेऽपि तदनुकूलाचरणात् तत्प्रीतिरेव भविष्यतीत्यत आह—कथंचित् अस्माभिर्निर्जितां रावणनिर्जयेनानीतां सीतां स्वकं कुलं स्ववीर्यगुप्तत्वरूपकुलधर्मं व्यपदिशन् कथयन् सन् राघवः कथंचिन्नाभिरोचयत् ॥ १६ ॥

१७ ] ति० टी०-अरुचौ हेतुः—कुलं व्यपदिशन्निति, प्रतिज्ञायेति च । अग्रतः कपिमुख्यानामित्यन्वयः ॥ १७ ॥

१८ ] ति० टी०-अरुचौ फलवैपरीत्यं दर्शयति—विफलमिति ॥ १८ ॥

रा० टी०-प्रतिज्ञायेति । कपिमुख्यानामग्रतः स्वकं स्वसंपाद्यं सीताविजयं सीताहेतुकस्वकर्तृकरावणपराभवपूर्वकस्वोत्कर्षप्राप्तिं प्रतिज्ञाय मिथ्या कथं करिष्यति न करिष्यतीत्यर्थः, अतः तस्य रामस्य तुष्टिर्न भवेत् अस्मत्कर्तृकसीतानयनेनेति शेषः, अतः कृतमपि कर्म विफलं भवेत् । सार्धश्लोक एकान्वयी ॥ १७ ॥ १८ ॥

१९ ] ति० टी०-अस्य कार्यस्य निवेदने मतिं कृत्वेति शेषः ॥ १९ ॥

रा० टी०-वृथेति । हे वानरपुङ्गवाः ! दर्शितं रावणविषये प्रकटितमपि वीर्यं वृथा आज्ञामन्तरा निरर्थकं भवेत् तस्मात् अस्य कृतस्य कार्यस्य सीतादर्शनस्य निवेदने बोधनार्थं यत्र रामः तत्र वयं सर्वे गच्छाम । सार्धश्लोक एकान्वयी ॥ १९ ॥

२० ] ति० टी०-अथ जाम्बवानङ्गदक्रोधपरिहाराय तन्मतं बहुमान्य सुहृद्भावेन निवर्तयति—न तावदिति । हे राजपुत्र ! यथा भवान्पश्यति विचारयति एषा मतिर्नोऽस्माकमक्षमा न, किंतु युक्तैव । यथा रामस्य मतिर्निविष्टाऽवस्थिता तथा कार्यसिद्धिं भवान्पश्यत्वित्यर्थः ॥ २० ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये सुन्दरकाण्डे षष्टितमः सर्गः ॥ ६० ॥

रा० टी०-स्वोक्ते अङ्गदसंमतिसंपादनार्थमाह—नेति । हे राजपुत्र ! यतो भवान् यथा यथावत् पश्यति विचारयति अतः



---

१ एतदादि श्लोकयुग्मं गो. नास्ति । २ एतदादि सार्धं श्लोकपञ्चकं गो. नास्ति ।

# एकषष्टितमः सर्गः ।

महेन्द्रतः किष्किन्धाभिमुखं समुत्पतिताः कपयो मार्गप्राप्ते दधिमुखरक्षिते सुग्रीवप्रियतमे मधुवनेऽवतेरुः प्राप्ताङ्गदानुज्ञैः कीशैर्मधुवनफलोपभोगे प्रारब्धे संक्रुध्यागतं प्रतिषेद्धारं दधिमुखं ते नखदशनप्रहारैः प्रजहुः ।

ततो जाम्बवतो वाक्यमगृह्णन्त वनौकसः । अङ्गदप्रमुखा वीरा हनूमांश्च महाकपिः ॥ १ ॥
प्रीतिमन्तस्ततः सर्वे वायुपुत्रपुरःसराः । महेन्द्राग्रात्समुत्पत्य पुप्लुवुः प्लवगर्षभाः ॥ २ ॥
मेरुमन्दरसंकाशा मत्ता इव महागजाः । छादयन्त इवाकाशं महाकाया महाबलाः ॥ ३ ॥
सभाज्यमानं भूतैस्तमात्मवन्तं महाबलम् । हनूमन्तं महावेगं वहन्त इव दृष्टिभिः ॥ ४ ॥
राघवे चार्थनिर्वृत्तिं कर्तुं च परमं यशः । समाधाय समृद्धार्थाः कर्मसिद्धिभिरुन्नताः ॥ ५ ॥
प्रियाख्यानोन्मुखाः सर्वे सर्वे युद्धाभिनन्दिनः । सर्वे रामप्रतीकारे निश्चितार्था मनस्विनः ॥ ६ ॥
प्लवमानाः खमाप्लुत्य ततस्ते काननौकसः । नन्दनोपममासेदुर्वनं द्रुमशतायुतम् ॥ ७ ॥
यत्तन्मधुवनं नाम सुग्रीवस्याभिरक्षितम् । अधृष्यं सर्वभूतानां सर्वभूतमनोहरम् ॥ ८ ॥
यद्रक्षति महावीरः सदा दधिमुखः कपिः । मातुलः कपिमुख्यस्य सुग्रीवस्य महात्मनः ॥ ९ ॥
ते तद्वनमुपागम्य बभूवुः परमोत्कटाः । वानरा वानरेन्द्रस्य मनःकान्तं महावनम् ॥ १० ॥

---

एषा मतिर्भवन्निश्चयो नोऽस्माकमक्षमा अयुक्ता न तथापि यथा येन प्रकारेण रामस्य मतिर्निश्चयः निविष्टा प्राप्ता तथा तेनैव प्रकारेण कार्यसिद्धिं भवान् पश्यतु विचारयतु ॥ २० ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ सुन्दरकाण्डे षष्टितमः सर्गः ॥ ६० ॥

गो० टी०–अथ जाम्बवानङ्गदवाक्यं बहु मन्यमानः सुहृद्भावेन प्रतिषेधति—**न तावदिति** । अक्षमा अयुक्ता न किन्तु युक्तैवेत्यर्थः । यद्यपि सम्यगुक्तं समर्थैश्चापि रामाज्ञानुसारेण कर्तव्यम् न स्वातन्त्र्येणेत्यर्थः ॥ ७ ॥

अस्मिन्सर्गे सार्धपञ्चश्लोकाः ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने षष्टितमः सर्गः ॥ ६० ॥

---

१ ] ति० टी०–अगृह्णन्त युक्तियुक्तत्वेनामन्यन्त ॥ १ ॥

रा० टी०–जाम्बवद्वचनश्रवणानन्तरकालिकं वानराणां वृत्तान्तमाह—**तत इत्यादिभिः** । अङ्गदप्रमुखा हनूमांश्च वनौकसः जाम्बवतो वाक्यमगृह्णन्त ॥ १ ॥

गो० टी०–तत इत्यादि ॥ १ ॥

२ ] ति० टी०–पुप्लुवुः प्लवन्तो जग्मुः ॥ २ ॥

३ ] ति० टी०–आकाशं छादयन्त इवेत्युत्प्रेक्षा ॥ ३ ॥

४ ] ति० टी०–सभाज्यमानं पूज्यमानम् । भूतैः सिद्धादिभिः । दृष्टिभिर्वहन्त इव प्रीतिपूर्वकानिमिषदर्शनाद्दृष्टीनां वाहकत्वोत्प्रेक्षा ॥ ४ ॥

५ ] ति० टी०–राघवे कार्यनिर्वृत्तिं कार्यसिद्धिं समाधाय निश्चित्य तस्यात्मनश्च परमं यशः कर्तुं च निश्चित्य पुप्लुवुरिति संबन्धः । कर्मसिद्धिभिः सीतादर्शनलङ्कादहनकर्मभिरुन्नता उन्नतचित्ताः ॥ ५ ॥

रा० टी०–**प्रीतिमन्त इति** । आकाशं छादयन्त इव मत्ता महागजा इव महाकायाः भूतैः सिद्धादिभिः सभाज्यमानं पूज्यमानं हनूमन्तं दृष्टिभिः अनिमिषावलोकनैः वहन्त इव समृद्धः संपन्नः अर्थः प्रयोजनं येषां ते कर्मसिद्धिभिः सीतादर्शनलङ्कादहनादिभिः उन्नता उद्धतचित्ताः वायुपुत्रपुरःसराः प्रीतिमन्तः सर्वे वानराः राघवे राघवस्य अर्थनिर्वृत्तिं कार्यसिद्धिं कर्तुं संपादयितुं परमं यशः समादाय प्राप्य महेन्द्रात्समुत्पत्य पुप्लुवुः जग्मुः । चतुर्णामेकत्रान्वयः ॥ २–५ ॥

गो० टी०–**प्रीतिमन्त इत्यादि** । सभाज्यमानं संपूज्यमानम् । वहन्त इव दृष्टिभिरिति । प्रीतिपूर्वकानिमिषदर्शनाद्दृष्टिष्वारोप्य नयन्त इवेत्युत्प्रेक्षा । अर्थनिर्वृत्तिम् अर्थसिद्धिम् समाधाय निश्चित्य संकल्प्य वा समृद्धार्थाः सिद्धकार्याः कर्मसिद्धिभिः कार्यसिद्धिभिः उन्नताः इतरेभ्य उत्कृष्टाः । रामप्रतीकारे रामप्रत्युपकारे । पुप्लुवुरिति पूर्वेण संबन्धः ॥२–७॥

६ ] ति० टी०–रामप्रतीकारे रामकर्तव्ये रावणप्रतीकारे निश्चितार्थाः अभूवन्निति शेषः ॥ ६ ॥

रा० टी०–**प्रियेति** । सर्वे प्रियाख्याने उन्मुखाः समुत्सुकाः बभूवुः । सर्वे रामप्रतीकारे रामार्थं रावणनिग्रहे निश्चितार्था अत एव सर्वे युद्धाभिनन्दिनश्च बभूवुरिति शेषः ॥ ६ ॥

७–८ ] ति० टी०–वनं सुग्रीवस्य मधुवनम् ॥ ७ ॥ ८ ॥

९ ] ति० टी०–दधिमुखस्तन्नामा ॥ ९ ॥

१० ] ति० टी०–परमोत्कटास्तत्रत्यमधुपानादावत्युत्कटोत्कण्ठावन्तः । महावनाख्यं वनमित्यर्थः ॥ १० ॥

---



१ महेन्द्राद्रिं परित्यज्येति गो. पाठः । २ लतेति गो. पाठः । ३ वीर्यं इति गो. पाठः ४ कान्ततमं महदिति गो. पाठः ।

ततस्ते वानरा हृष्टा दृष्ट्वा मधुवनं महत् । कुमारमभ्ययाचन्त मधूनि मधुपिङ्गलाः ॥ ११ ॥
ततः कुमारस्तान्वृद्धाञ्जाम्बवत्प्रमुखान्कपीन् । अनुमान्य ददौ तेषां निसर्गं मधुभक्षणे ॥ १२ ॥
ते[1] निसृष्टाः कुमारेण धीमता वालिसूनुना । हरयः समपद्यन्त द्रुमान्मधुकराकुलान् ॥ १३ ॥
भक्षयन्तः सुगन्धीनि मूलानि च फलानि च । जग्मुः प्रहर्षं ते सर्वे बभूवुश्च मदोत्कटाः ॥ १४ ॥
ततश्चानुमताः सर्वे सु[2]संहृष्टा वनौकसः । मुदिताश्च ततस्ते च प्रनृत्यन्ति ततस्ततः ॥ १५ ॥

गायन्ति केचित्प्रहसन्ति केचिन्नृत्यन्ति केचित्प्रणमन्ति केचित् ।
प[3]ठन्ति केचित्प्रचरन्ति केचित्प्लवन्ति केचित्प्रलपन्ति केचित् ॥ १६ ॥
परस्परं केचिदुपाश्रयन्ति परस्परं केचिदतिब्रुवन्ति ।
द्रुमाद्द्रुमं केचिदभिद्रवन्ति क्षितौ नगाग्रान्निपतन्ति केचित् ॥ १७ ॥
महीतलात्केचिदुदीर्णवेगा महाद्रुमाग्राण्यभिसंपतन्ति ।
गायन्तमन्यः प्रहसन्नुपैति रु[5]दन्तमन्यः प्ररुदन्नुपैति ॥ १८ ॥

---

रा० टी०—प्लवमाना इति । काननौकसः वानराः नन्दनोपमं नन्दनसदृशं वनमासेदुः प्रापुः ॥ ७ ॥

रा० टी०—यदिति । अभिरक्षितं सर्वतो रक्षायुक्तम् अत एव सर्वभूतानामधृष्यं यत् दधिमुखो नाम सुग्रीवस्य मातुलः रक्षति रक्षयति यच्च सुग्रीवस्य मनःकान्तं महावनम् अनेकवनिकाविशिष्टं मधुवनं नाम वनं तत् उपागम्य प्राप्य ते वानराः परमोत्कटा तत्रत्यमधुपानेनातिमत्ताः बभुवुः । श्लोकत्रयमेकान्वयि ॥ ८–१० ॥

गो० टी०—यत्तन्मधुवनमित्यादि । परमोत्कटाः परमोत्सुकाः ॥ ८–१० ॥

११ ] ति० टी०—मधुपिङ्गला मधुपिङ्गलवर्णाः ॥ ११ ॥

रा० टी०—मधुपानप्रकारमाह—तत इति । मधुपिङ्गलाः मधुवत् पिङ्गलवर्णाः ते वानराः मधुवनं दृष्ट्वा कुमारं तद्रक्षकं मधून्ययाचन्त ॥ ११ ॥

गो० टी०—तत इति । मधुपिङ्गलाः मधुवत्पिङ्गलवर्णाः वानराः ॥ ११ ॥

१२ ] ति० टी०—अनुमान्य कृतानुमतिकान्कृत्वा । निसर्गमाज्ञाम् ॥ १२ ॥

रा० टी०—तत इति । कुमारः जाम्बवत्प्रमुखान् अनुमान्य सत्कृत्य निसर्गं स्वभावसिद्धं मधु पुष्पविशेपरसं तेषां भक्षणे भक्षणार्थं ददौ ॥ १२ ॥

गो० टी०—ततः कुमार इति । अनुमान्य अनुमतिं कारयित्वा । निसर्गं विसर्जनम् अनुमतिमिति यावत् ॥ १२ ॥

१३ ] ति० टी०—निसृष्टाः कृताज्ञाः ॥ १३ ॥

रा० टी०—ते इति । कुमारेण वालिसूनुनाऽङ्गदेन च निसृष्टाः प्रेरिताः ते हरयः मधुकरैः आकुलान् व्याप्तान् द्रुमान् समपद्यन्त प्राप्नुवन् ॥ १३ ॥

गो० टी०—ततश्चेति । पूर्वमेव सीतादर्शनात्प्रहृष्टाः ततः मधुवनभङ्गे अङ्गदेनानुमताः सन्तस्ततो मुदिताः तत्प्रेरिताः प्रनृत्यन्तोऽभवन् ॥ १३ ॥

१४ ] ति० टी०—भक्षयन्तः अभक्षयन्नित्यर्थः ॥ १४ ॥

रा० टी०—भक्षयन्त इति । मूलानि फलानि च भक्षयन्तो वानराः प्रहर्षं जग्मुः मदोत्कटाः बभूवुश्च ॥ १४ ॥

१५ ] ति० टी०—अनुमता मधुपानादौ कृतानुमतिकाः । हर्षमुदोर्बाह्याभ्यन्तरत्वकृतो भेदः ॥ १५ ॥

रा० टी०—तत इति । अनुमताः अङ्गदसंमतिविषयीभूताः सुसंहृष्टाः प्राप्तसंतोषाः अत एव मुदिताः सर्वे वानराः ततस्ततः तत्तत्तरुसंनिधौ नृत्यन्ति ॥ १५ ॥

१६ ] ति० टी०—तत्र बाह्यमानन्दसूचकमाह—गायन्तीति ॥ १६ ॥

रा० टी०—सर्वेषां तत्कालिकक्रियामाह—गायन्तीत्यादिभिः ॥ १६ ॥

गो० टी०—मधुवनभङ्गाभ्यनुज्ञानकृतं वानरहर्षविकारमेव वर्णयति सर्गशेषेण—‘गायन्ति केचित् प्रणमन्ति केचिन्नृत्यन्ति केचित्प्रहसन्ति केचित् । पतन्ति केचिद्विचरन्ति केचित्प्लवन्ति केचित्प्रलपन्ति केचित्’ इति पाठः । प्रणमन्ति अवाक्शिरसः पतन्ति । पतन्ति ऊर्ध्वपादाः पृष्ठेन पतन्ति ॥ १४—१७ ॥

१७ ] ति० टी०—अतिब्रुवन्ति विवादं कुर्वन्ति । नगाग्राद्वृक्षाग्रात् ॥ १७ ॥

रा०टी०—परस्परमिति।अतिब्रुवन्ति विवादं कुर्वन्ति१७॥

१८ ] ति० टी०—गानरोदनहासा मधुपानमत्तधर्माः॥१८॥

रा० टी०—महीतलादिति । उदीर्णवेगाः अतिवेगवन्तः केचित् महीतलात् महाद्रुमाग्राणि अभिसंपतन्ति ॥ १८ ॥

---

१ एतदादि श्लोकद्वयं गो. नास्ति । २ संप्रहृष्टा इति गो. पाठः । ३ पतन्ति केचिद्विचरन्तीति गो. पतन्तीति रा. पाठः । ४ उपाक्रमन्त इति गो. पाठः । ५ हसन्तमिति गो. पाठः ।

तुदन्तमन्यः प्रणुदन्नुपैति [ तुदन्तमन्यः प्रणदन्नुपैति । ]
समाकुलं तत्कपिसैन्यमासीत् । [ मधुप्रपानोत्कटसत्त्वचेष्टम् । ]
न चात्र कश्चिन्न बभूव मत्तो न चात्र कश्चिन्न बभूव दृप्तः ॥ १९ ॥
ततो वनं तत्परिभक्ष्यमाणं द्रुमांश्च विध्वंसितपत्रपुष्पान् ।
समीक्ष्य कोपाद्दधिवक्त्रनामा निवारयामास कपिः कपींस्तान् ॥ २० ॥
स तैः प्रवृद्धैः परिभर्त्स्यमानो वनस्य गोप्ता हरिवृद्धवीरः ।
चकार भूयो मतिमुग्रतेजा वनस्य रक्षां प्रति वानरेभ्यः ॥ २१ ॥
उवाच कांश्चित्परुषाण्यभीतमसक्तमन्यांश्च तलैर्जघान ।
समेत्य कैश्चित्कलहं चकार तथैव साम्नोपजगाम कांश्चित् ॥ २२ ॥
स तैर्मदादप्रतिवार्यवेगैर्बलाच्च तेन प्रतिवार्यमाणैः ।
प्रधर्षणे त्यक्तभयैः समेत्य प्रकृष्यते चाप्यनवेक्ष्य दोषम् ॥ २३ ॥
नखैस्तुदन्तो दशनैर्दशन्तस्तलैश्च पादैश्च समापयन्तः ।
मदात्कपिं ते कपयः समन्तान्महावनं निर्विषयं च चक्रुः ॥ २४ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये सुन्दरकाण्डे एकषष्टितमः सर्गः ॥ ६१ ॥

---

१९-२० ] ति० टी०-तुदन्तं व्यथयन्तम् । समाकुलमुत्कटमत्तचेष्टम् । दृप्तोऽतिमत्तः ॥ १९ ॥ २० ॥

रा० टी०-तुदन्तमिति । तुदन्तं व्यथयन्तमन्यः प्रणदन् अतिनादं कुर्वन्नुपैति प्राप्नोति अतः तत् कपिसैन्यं समाकुलं तुमुलमासीत् । तत्र हेतुः—यो मत्तो न बभूव सोऽत्र कश्चिन्न अत एव यो दृप्तो न बभूव सोऽप्यत्र न बभूव ॥ १९ ॥

रा० टी०-तत इति । परिभक्ष्यमाणं वनं विध्वंसितपत्रपुष्पान् द्रुमांश्च समीक्ष्य दधिवक्त्रनामा कपिः तान् विध्वंसनादिकर्तॄन् निवारयामास ॥ २० ॥

गो० टी०-समाकुलमिति । मधुप्रपानोत्कटसत्त्वचेष्टं मत्तचित्तचेष्टम् ॥ १८—२२ ॥

२१-२२ ] ति० टी०-प्रवृद्धैः प्रवृद्धमदैः ॥ २१ ॥ २२ ॥

रा० टी०-स इति । प्रवृद्धैः तैर्वानरैः परिभर्त्स्यमानो वनस्य गोप्ता स दधिवक्त्रनामा वानरेभ्यो वनस्य रक्षां प्रति भूयो मतिं चकार ॥ २१ ॥

रा० टी०-उवाचेति । अभीतं यथा भवति तथा कांश्चित् परुषाणि उवाच अन्यान् असक्तम् अत्यासंजनरहितं यथा भवति तथा तलैर्जघान कैश्चित् कलहं चकार कांश्चित् साम्ना सामरूपोपायेन जगाम ॥ २२ ॥

२३ ] ति० टी०-मदादप्रतिवार्यो निवारयितुमशक्यो वेगो येषां तैः । तेन दधिमुखेन बलात्प्रतिवार्यमाणैः । प्रधर्षणे दोषं राजदण्डमनवेक्ष्य, अत एव त्यक्तभयैः समेत्य प्रकृष्यते स्म २३

रा० टी०-स इति । अप्रतिवार्याः वेगाः येषां तैः अत एव तेन रक्षकेण अप्रतिवार्यमाणैः त्यक्तभयैः तैर्वानरैः उद्धर्षणे रक्षकपराभवे दोषं राजदण्डमनवेक्ष्य अपरिगणय्य समेत्य एकीभूय स रक्षकः बलात् प्रकृष्यते पुच्छादिग्रहणेन इतस्ततो नीयते ॥ २३ ॥

२४ ] ति० टी०-समापयन्तो मृतकल्पं कुर्वन्तः । महावनं निर्विषयं निर्गतमधुफलादिभोज्यम् ॥ २४ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये सुन्दरकाण्डे एकषष्टितमः सर्गः ॥ ६१ ॥

रा० टी०-नखैरिति । कपिं नखैस्तुदन्तो व्यथयन्तः समापयन्तः मृतप्रायं कुर्वन्तः ते कपयः समन्तान्महावनं निर्विषयं फलादिभ्यो रहितं चक्रुः ॥ २४ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ सुन्दरकाण्डे एकषष्टितमः सर्गः ॥ ६१ ॥

गो० टी०-नखैरिति । निर्विषयं निर्गतमधुमूलादिभोग्यवस्तुकं चक्रुरित्यर्थः ॥ २३ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने एकषष्टितमः सर्गः ॥६१॥

---

१ रुदन्तमिति गो. पाठः । २ प्रणदन्निति रा. पाठः । ३ पादोऽयमधिकः गो. पाठे । ४ पि धृष्येति गो. पाठः । ५ संप्रतिवार्यवानरैरिति गो. पाठः । ६ प्रधर्षित इति गो. उद्धर्षणे त्यक्तेति रा. पाठः । ७ तमिति गो. पाठः । ८ समग्रा इति गो. पाठः ।

## द्विषष्टितमः सर्गः ।

हनुमता कृतानुमतिकाः कपयः सक्षोभं मधुवनं प्रविश्य कृतमधुपानाः संगीतकनृत्तादिक्षीबवृत्तं चेष्टयन्तः निषेधप्रवृत्तान्वनरक्षकांस्ताडयामासुः । ततो निर्गतेषु रक्षकेषु दधिमुखे तन्निवेद्य पुनस्तेन साकंनिषेद्धुं प्रवृत्तेष्वङ्गदो दधिमुखं संताड्य भूमौ निष्पिपेष । ततो निर्गता दधिमुखादयो वनरक्षकाः सुग्रीवाय तन्निवेदयितुं किष्किन्धामेत्य रामसमीपस्थंसुग्रीवचरणौ प्रणेमुः ।

तानुवाच हरिश्रेष्ठो हनूमान्वानरर्षभः । अव्यग्रमनसो यूयं मधु सेवत वानराः ॥ १ ॥
अहमावर्जयिष्यामि युष्माकं परिपन्थिनः । श्रुत्वा हनूमतो वाक्यं हरीणां प्रवरोऽङ्गदः ॥ २ ॥
प्रत्युवाच प्रसन्नात्मा पिबन्तु हरयो मधु । अवश्यं कृतकार्यस्य वाक्यं हनुमतो मया ॥ ३ ॥
अकार्यमपि कर्तव्यं किमङ्ग पुनरीदृशम् । अङ्गदस्य मुखाच्छ्रुत्वा वचनं वानरर्षभाः ॥ ४ ॥
साधु साध्विति संहृष्टा वानराः प्रत्यपूजयन् । पूजयित्वाङ्गदं सर्वे वानरा वानरर्षभम् ॥ ५ ॥
जग्मुर्मधुवनं यत्र नदीवेग इव द्रुमम् । ते प्रविष्टा मधुवनं पालानाक्रम्य शक्तितः ॥ ६ ॥
अतिसर्गाच्च पटवो दृष्ट्वा श्रुत्वा च मैथिलीम् । पपुः सर्वे मधु तदा रसवत्फलमाददुः ॥ ७ ॥
उत्पत्य च ततः सर्वे वनपालान्समागतान् । [3]ते ताडयन्तः शतशः [4]सक्ता मधुवने तदा ॥ ८ ॥
मधूनि द्रोणमात्राणि बाहुभिः परिगृह्य ते । [5]पिबन्ति कपयः केचित्सङ्घशस्तत्र हृष्टवत् ॥ ९ ॥

१ ] ति० टी०–पुनरुक्तमेव विस्तरेणाह—तानिति ॥१॥

रा० टी०–वानरकर्तृकरक्षकपराभवानन्तरकालिकं वृत्तान्तमाह—तामित्यादिभिः। हे वानराः ! युष्माकं परिपन्थिनः रिपून् अहम् आवर्जयिष्यामि अतो यूयं मधु सेवत पिबत इति वचो हनुमान् तान् वानरान् उवाच । सार्धश्लोक एकान्वयी ॥ १ ॥

गो० टी०–तानित्यादि । तान् दधिमुखकलहव्याकुलितान् । अन्ये तु तानुवाचेत्यादिना पूर्वसर्गोक्तं संक्षेपेणानूद्य उपरि गच्छतीत्याचक्षते । अपरे तु सर्गमुखे केचिच्छ्लोकाः पतिता इत्याहुः ॥ १ ॥

२–३ ति० टी०–आवर्जयिष्यामि निवारयिष्यामि॥२॥३॥

रा० टी०–श्रुत्वेति । हनुमतो वाक्यं श्रुत्वा अङ्गदः प्रत्युवाच । तदाकारमाह—कृतकार्यस्य हनुमतः अकार्यमपि वाक्यम् अस्माभिरवश्यं कर्तव्यम् ईदृशं कार्यं कर्तव्यमिति किम् अतः मधु पिबत । अर्धचतुष्टयमेकान्वयि ॥ २ ॥ ३ ॥

गो० टी०–श्रुत्वेत्यादि । अङ्गेति संबोधने निपातः २॥३

४–५ ] ति० टी०–ईदृशमेतन्मात्रार्थकम् ॥ ४ ॥ ५ ॥

रा० टी०–अङ्गदस्येति । वानराः वचनं प्रत्यपूजयन् ॥ ४ ॥

गो० टी०–अङ्गदस्येति । अङ्गदस्य स्वामिनः मुखाद्वचनं हनुमदुक्तं श्रुत्वा ॥ ४ ॥

रा० टी०–पूजयित्वेति । अङ्गदं पूजयित्वा यत्र मधुवनं तत्र वानरर्षभाः सर्वे वानराः नदीवेग इव जग्मुः ॥ ५ ॥

गो० टी०–पूजयित्वेति । जग्मुर्मधुवनमिति प्रदेशभेदविवक्षया । यद्वा दधिमुखनिवारणेन भीतानां हनुमदङ्गदाभ्यां पुनरनुज्ञापनेन पुनर्जग्मुरित्यर्थः ॥ ५ ॥

६ ] ति० टी०–यत्र मधुवनं यत्र मार्गे गमनेन मधुवनं प्राप्यते तेन मार्गेण जग्मुः ॥ ६ ॥

७ ] ति० टी०–ते पटवो हनुमांश्च मैथिलीं दृष्ट्वाऽन्ये तन्मुखात्तां लङ्कास्थां श्रुत्वा महत्कार्यकरणेन भयराहित्यादतिसर्गादङ्गदाद्यनुज्ञानान्मधुवनं प्रविष्टाः पालान्बलादाक्रम्य बद्धा मधु पपू रसवत्फलं चाददुः, भक्षणार्थमिति शेषः ॥ ७ ॥

रा० टी०–ते इति । मैथिलीं दृष्ट्वा श्रुत्वा च आगताः सर्वे वानराः अतिसर्गात् अङ्गदाज्ञातः शक्तितः सामर्थ्यात् पालान् मधुवनरक्षकान् आक्रम्य मधु पपुः फलमाददुश्च । अत्र दर्शनं हनुमत्कर्तृकं श्रवणं त्वितरकर्तृकमिति विवेकः । सार्धश्लोक एकान्वयी ॥ ६ ॥ ७ ॥

गो० टी०–त इति । वीर्यतः बलात् । अतिसर्गादङ्गदाभ्यनुज्ञानात् । दृष्ट्वा श्रुत्वा च मैथिलीं दर्शनश्रवणाभ्यां च हेतुना वनपालानाक्रम्य आक्षिप्य ॥ ६ ॥ ७ ॥

८–९ ] ति० टी०–मधुवने सक्ता भक्षणार्थं लग्नाः॥८॥९॥

रा० टी०–उत्पत्येति । समागतान् शतशो वनपालान् ताडयन्तः सर्वे वानराः ततस्तस्मिन् मधुवने सक्ता बभूवुरिति शेषः ॥ ८ ॥

गो० टी०–उत्पत्येति । सक्तान् वनपालने रतान् ॥ ८ ॥

रा० टी०–मधूनीति । संघशो विद्यमानाः केचित्कपयो द्रोणमात्राणि अष्टाढकप्रमाणानि मधूनि बाहुभिः परिगृह्य हृष्टवत् संतोषकारकं यथा भवति तथा पिबन्ति ॥ ९ ॥



१ वारयिष्यामीति गो. पाठः । २ वीर्यत इति गो. पाठः । ३ ताडयन्ति स्मेति गो. पाठः । ४ सक्तानिति गो. पाठः । ५ अर्धमेतत् गो. नास्ति । ६ महाकार्येति युक्तं भाति ।

घ्नन्ति स्म सहिताः सर्वे भक्षयन्ति तथापरे । केचित्पीत्वापविध्यन्ति मधूनि मधुपिङ्गलाः ॥ १० ॥
मधूच्छिष्टेन केचिच्च जघ्नुरन्योन्यमुत्कटाः । अपरे वृक्षमूलेषु शाखा गृह्य व्यवस्थिताः ॥ ११ ॥
अत्यर्थं च मदग्लानाः पर्णान्यास्तीर्य शेरते । उन्मत्तवेगाः प्लवगा मधुमत्ताश्च हृष्टवत् ॥ १२ ॥
क्षिपन्त्यपि तथान्योन्यं स्खलन्ति च तथापरे । केचित्क्ष्वेडान्प्रकुर्वन्ति केचित्कूजन्ति हृष्टवत् ॥ १३ ॥
हरयो मधुना मत्ताः केचित्सुप्ता महीतले । धृष्टाः केचिद्धसन्त्यन्ये केचित्कुर्वन्ति चेतरत् ॥ १४ ॥
कृत्वा केचिद्वदन्त्यन्ये केचिद्बुध्यन्ति चेतरत् । येऽप्यत्र मधुपालाः स्युः प्रेष्या दधिमुखस्य तु ॥१५॥
तेऽपि तैर्वानरैर्भीमैः प्रतिषिद्धा दिशो गताः । जानुभिश्च प्रघृष्टाश्च देवमार्गं च दर्शिताः ॥ १६ ॥
अब्रुवन्परमोद्विग्ना गत्वा दधिमुखं वचः । हनूमता दत्तवरैर्हतं मधुवनं बलात् ॥
वयं च जानुभिर्घृष्टा देवमार्गं च दर्शिताः ॥ १७ ॥

---

गो० टी०—मधूनीति । मधूनि मधुपटलानि द्रोणमात्राणि द्रोणप्रमाणानि आढकप्रमाणानि घ्नन्ति स्म पीतावशिष्टानि मधुपटलानि भिन्दन्ति स्म ॥ ९ ॥

१०-११ ] ति० टी०—अपविद्ध्यन्ति प्रक्षिपन्ति मधूनि ते । मधुपटलानि ॥ १० ॥ ११ ॥

रा० टी०—घ्नन्तीनि । मधुपिङ्गलाः सहिताः सर्वे वानरा मधूनि मधुपटलानि घ्नन्ति ताडयन्ति अपरे भक्षयन्ति पिबन्ति केचित्पीत्वा अपविध्यन्ति प्रक्षिपन्ति ॥ १० ॥

रा० टी०—मध्विति । उत्कटाः मधुमत्ताः केचित् मधूच्छिष्टेन उच्छिष्टमधुना अन्योन्यं जघ्नुः अपरे शाखाः गृह्य गृहीत्वा वृक्षमूले व्यवस्थिताः ॥ ११ ॥

गो० टी०—केचिदिति । अपविध्यन्ति अवक्षिपन्ति । मधूच्छिष्टेन सिक्थकेन 'मधूच्छिष्टं तु सिक्थकम्' इत्यमरः । उत्कटाः मत्ताः ॥ १० ॥ ११ ॥

१२-१३ ] ति० टी०—उन्मत्तवेगा उन्मत्तानां वेगो येषां ते । यद्वाऽतिशयितवेगा इत्यर्थः ॥ १२ ॥ १३ ॥

रा० टी०—अत्यर्थमिति । मधुमत्ताः अत एव मदग्लानाः मदहेतुकग्लानिविशिष्टाः अत एव उन्मत्तभूताः उन्मत्तत्वं प्राप्ताः प्लवगाः पर्णानि आस्तीर्य शेरते ॥ १२ ॥

गो० टी०—उन्मत्तभूता इति । हृष्टवत् हर्षयुक्तमिति क्रियाविशेषणम् । हृष्टार्हमिति वार्थः । क्षिपन्ति उत्क्षिप्य पातयन्ति स्खलन्ति पादेन नुदन्तीत्यर्थः ॥ १२ ॥

रा० टी०—क्षिपन्तीति । केचित् अन्योन्यं क्षिपन्ति क्षेपयन्ति अपरे स्खलन्ति केचित् क्ष्वेडान् विलासान् प्रकुर्वन्ति केचित् हृष्टवत् हर्षकारकं यथा भवति तथा कूजन्ति ॥ १३ ॥

गो० टी०—केचिदिति । क्ष्वेलां सिंहनादम् 'क्ष्वेला तु सिंहनादः स्यात्' इत्यमरः । कूजन्ति पक्षिवच्छब्दायन्ते ॥१३॥

१४ ] ति० टी०—इतरद्रोदनम् ॥ १४ ॥

रा० टी०—हरय इति । मधुना मत्ताः केचित् हरयः हसन्ति अन्ये इतरत् रोदनादि कुर्वन्ति ॥ १४ ॥

१५ ] ति० टी०—केचिदन्यत्कृत्वान्यद्वदन्ति । केचिदुक्तवचनार्थं विद्यमानं परित्यज्यान्यमेव बुध्यन्ते ॥ १६ ॥

रा० टी०—कृत्वेति । केचित् कृत्वा किंचित्कर्म संपाद्य वदन्ति अन्ये केचित् इतरत् कृतकार्यात् भिन्नं कार्यं बुध्यन्ति । अर्थं पृथक् । ये इति । अत्र मधुवने दधिमुखस्य प्रेष्याः भृत्याः ये मधुपालाः स्युः अतिष्ठन् तेऽपि भीमैर्वानरैः प्रतिषिद्धाः सन्तः दिशो गताः पलायिताः । अर्धद्वयमेकान्वयि ॥ १६ ॥

गो० टी०—कृत्वेति । अन्ये अवाच्यं किंचिद्ग्राम्यं कर्म कृत्वा हसन्ति । इतरत्तद्विलक्षणं ग्राम्यं कर्म केचित्कुर्वन्ति । केचिदन्यत् ग्राम्यं कर्म कृत्वा अस्माभिरिदं कृतमिति वदन्ति उच्चारयन्ति । केचिदितरद् बुध्यन्ति एवं करिष्यामीति संकल्पयन्तीत्यर्थः ॥ १४ ॥ १६ ॥

१६-१७ ] ति० टी०—प्रतिषिद्धास्ताडनादिना निरस्ताः । जानुभिः प्रघृष्टा जानुषु गृहीत्वा आकृष्टाः । देवमार्गमपानद्वारमिति तीर्थः । देवमार्गं दर्शिताः पादौ गृहीत्वोर्ध्वं प्रक्षिप्ता इत्यर्थः । कर्णावङ्गुलीभिर्धृत्वोर्ध्वीकृता इति वार्थ इत्यन्ये १६-१७

रा० टी०—जानुभिरिति । जानुभिः जानुग्रहणैः प्रघृष्टाः आकृष्टा अनन्तरं देवमार्गम् आकाशं दर्शिताः प्रक्षेपेण प्रापिता इत्यर्थः अत एव परमोद्विग्नाः केचित् रक्षकाः दधिमुखं गत्वा प्राप्य हनूमता दत्तः वरः यथेच्छं मूलफलादिस्वीकारो येभ्यः तैः मधुवनं हतं विनाशितं वयं च जानुभिर्घृष्टाः सन्तः देवमार्गं प्रदर्शिताः इति वचः अब्रुवन् । अर्धचतुष्टयमेकान्वयि ॥१६॥१७॥

गो० टी०—जानुभिरिति । जानुभिः प्रकृष्टाः जान्न्यवलम्ब्य कृष्टा इत्यर्थः । देवमार्गम् अपानद्वारम् । देवशब्दो वायुवाची उपनिषदि वायुलोके देवलोकशब्दप्रयोगात् । दर्शिताः दर्शनं कारिताः दृशेरुपसंख्यानादणि कर्तुः कर्मत्वम् "ण्यन्तात्कर्तुश्च कर्मणः" इति तस्यैवाभिधेयत्वं च ॥ १६-१८ ॥

---

१ पिबन्तीति गो. पाठः । २ शाखामिति गो. पाठः । ३ मत्ता इति गो. पाठः । ४ च तदेति गो. पाठः । ५ क्ष्वेलामिति गो. पाठः । ६ कृत्वेति गो. पाठः । ७ तु प्रकृष्टा इति गो. पाठः । ८ प्रेति गो. पाठः । ९ कृष्टा इति गो. पाठः ।

[1]तदा दधिमुखः क्रुद्धो वनपस्तत्र वानरः । हतं मधुवनं [2]दृष्ट्वा सान्त्वयामास तान्हरीन् ॥ १८ ॥
[3]एतागच्छत गच्छामो वानरान[4]तिदर्पितान् । [5]बलेनावारयिष्यामि प्रभुञ्जानान्मधूत्तमम् ॥ १९ ॥
श्रुत्वा दधिमुखस्येदं वचनं वानरर्षभाः । पुनर्वीरा मधुवनं तेनैव [6]सहिता ययुः ॥ २० ॥
मध्ये चैषां दधिमुखः [7]सुप्रगृह्य महातरुम् । सम[8]भ्यधावन्वेगेन सर्वे ते च प्लवङ्गमाः ॥ २१ ॥
ते शिलाः पादपांश्[9]चैव पाषाणानपि वानराः । गृहीत्वाभ्यागमन्क्रुद्धा यत्र ते कपिकुञ्जराः ॥ २२ ॥
[[10] ते स्वामिवचनं वीरा हृदयेष्ववसज्य तत् । त्वरया ह्यभ्यधावन्त सालतालशिलायुधाः ॥
वृक्षस्थांश्च तलस्थांश्च वानरान्बलदर्पितान् । अभ्यक्रामँस्ततो वीरा पालास्तत्र सहस्रशः ॥]
[11]बलान्निवारयन्तश्च आसेदुर्हरयो हरीन् । संदष्टोष्ठपुटाः क्रुद्धा भर्त्सयन्तो मुहुर्मुहुः ॥ २३ ॥
अथ दृष्ट्वा दधिमुखं क्रुद्धं वानरपुङ्गवाः । अभ्यधावन्त वेगेन हनुमत्प्र[12]मुखास्तदा ॥ २४ ॥
[13]सवृक्षं तं महाबाहुमापतन्तं महाबलम् । [14]वेगवन्तं विजग्राह बाहुभ्यां कुपितोऽङ्गदः॥ २५ ॥
मदान्धो [15]नैनं कृपां चक्रे आर्यकोऽयं ममेति सः । अथैनं निष्पिपेषाशु वेगेन वसुधातले ॥ २६ ॥
स भग्नबाहूरुमुखो विह्वलः शोणितोक्षितः । [16]प्रमुमोह महावीरो मुहूर्तं कपिकुञ्जरः ॥ २७ ॥
[ [17]स समाश्वस्य सहसा संक्रुद्धो राजमातुलः । वानरान्वारयामास दण्डेन मधुमोहितान् ॥ ]
स कथंचिद्विमुक्तस्तैर्वानरैर्वानरर्षभः । उवाचैकान्त[18]मागत्य स्वान्भृत्यान्समुपागतान् ॥ २८ ॥

---

१८ ] ति० टी०—तान्स्वसंबन्धिनः पालान् ॥ १८ ॥

रा० टी०—तदेति । तदा रक्षकगमनानन्तरकाले मधुवनं हतं श्रुत्वा क्रुद्धो वनपो दधिमुखः तानागतान् हरीन् सान्त्वयामास ॥ १८ ॥

१९-२० ] ति० टी०—एतागच्छत अग्रे इति शेषः । गच्छामः वयमप्यागच्छाम इत्यर्थः ॥ १९ ॥ २० ॥

रा० टी०—सान्त्वप्रकारमाह—एतेति । यूयम् एत वानरान् गच्छत वयं गच्छामः मधूत्तमं प्रभुञ्जानान् वानरान् वयमावारयिष्यामः ॥ १९ ॥

रा० टी०—श्रुत्वेति । दधिमुखस्य वचनं श्रुत्वा तेन दधिमुखेन सह वानरर्षभाः मधुवनं पुनर्ययुः ॥ २० ॥

गो० टी०—इहेति । गच्छाम इति तैः साहित्येन बहुवचनम् आत्मनि वहुवचनं वा ॥ १९-३३ ॥

२१-२२ ] ति० टी०—सर्वे ते च । समभ्यधावन्निति शेषः ॥ २१ ॥ २२ ॥

रा० टी०—मध्य इति । तेषां प्रेष्याणां मध्ये स्थितः दधिमुखः महातरुं सुप्रगृह्य वेगेन समभ्यधावत् प्लवङ्गमाश्च समभ्यधावन् ॥ २१ ॥ २२ ॥

रा० टी०—तत्प्रकारमाह—ते इति । पाणिभिः शिलापादपांश्च गृहीत्वा यत्र कपिकुञ्जराः तत्र क्रुद्धाः सन्तोऽभ्यगमन् ॥ २३ ॥

२३-२५ ] ति० टी०—हरयः पालाः । हरीन्हनुमदादीन् ॥ २३-२५ ॥

रा० टी०—बलादिति । क्रुद्धाः अत एव संदष्टौष्ठपुटाः अत एव मुहुर्मुहुर्भर्त्सयन्तः वारयन्तो हरयः हरीन् आसेदुः प्रापुः ॥ २४ ॥

रा० टी०—अथेति । दधिमुखं दृष्ट्वा हनुमत्प्रमुखाः अभ्यधावन्त ॥ २५ ॥

रा० टी०—सेति । सवृक्षं वृक्षसहितमापतन्तं तं दधिमुखम् अङ्गदो विजग्राह ॥ २६ ॥

२६-२८ ] ति० टी०—आर्यकः सुग्रीवमातुलत्वात्पूज्यः ॥ २६—२८ ॥

रा० टी०—मदान्धा इति । मदान्धो दधिमुखः ममायमार्यकः स्वामीति बुद्ध्या कृपां न चक्रे अथातः सोऽङ्गदः एनं दधिमुखं वेगेन वसुधातले निष्पिपेष ॥ २७ ॥

रा० टी०—स इति । भग्नबाहूरुमुखः अत एव शोणितोक्षितो दधिमुखः प्रमुमोह ॥ २८ ॥

रा० टी०—स इति । तैः अङ्गदप्रमुखैः कथंचिद्विमुक्तः स दधिमुखः एकान्तमागत्य स्वान् भृत्यानुवाच ॥ २९ ॥

---

१ तत इति गो. पाठः । २ श्रुत्वेति गो. पाठः । ३ इहेति गो. पाठः । ४ बलेति गो. पाठः । ५ बलेन वारयिष्यामो मधु भक्षयतो वयमिति गो. पाठः । ६ सहसेति गो. पाठः । ७ प्रगृह्य तरसेति गो. पाठः । ८ धावदिति गो. रा. पाठः । ९ चापि पर्वतांश्चापीति गो. पाठः । १० श्लोकद्वयमेतदधिकं गो. पाठे। ११ श्लोकोऽयं गो. नास्ति। १२ प्रमुखा इति गो. पाठः । १३ तं सवृक्षमिति गो. पाठः। १४ आर्यकं प्राहरत्तत्रेति गो. पाठः। १५ च नवेदैनमिति गो. पाठः। १६ मुमोह सहसेति गो. पाठः। १७ श्लोकोऽयमधिकः गो. पाठे। १८ आश्रित्येति गो.पाठः।

एतागच्छत गच्छामो भर्ता नो यत्र वानरः । सुग्रीवो विपुलग्रीवः सह रामेण तिष्ठति ॥ २९ ॥
सर्वे चैवाङ्गदे दोषं श्रावयिष्याम पार्थिवे । अमर्षी वचनं श्रुत्वा घातयिष्यति वानरान् ॥ ३० ॥
इष्टं मधुवनं ह्येतत्सुग्रीवस्य महात्मनः । पितृपैतामहं दिव्यं देवैरपि दुरासदम् ॥ ३१ ॥
स वानरानिमान्सर्वान्मधुलुब्धान्गतायुषः । घातयिष्यति दण्डेन सुग्रीवः ससुहृज्जनान् ॥ ३२ ॥
वध्या ह्येते दुरात्मानो नृपाज्ञापरिपन्थिनः । अमर्षप्रभवो रोषः सफलो मे भविष्यति ॥ ३३ ॥
एवमुक्त्वा दधिमुखो वनपालान्महाबलः । जगाम सहसोत्पत्य वनपालैः समन्वितः ॥ ३४ ॥
निमेषान्तरमात्रेण स हि प्राप्तो वनालयः । सहस्रांशुसुतो धीमान्सुग्रीवो यत्र वानरः ॥ ३५ ॥
रामं च लक्ष्मणं चैव दृष्ट्वा सुग्रीवमेव च । समप्रतिष्ठां जगतीमाकाशान्निपपात ह ॥ ३६ ॥
सं निपत्य महावीरः सर्वैस्तैः परिवारितः । हरिर्दधिमुखः पालैः पालानां परमेश्वरः ॥ ३७ ॥
स दीनवदनो भूत्वा कृत्वा शिरसि चाञ्जलिम् । सुग्रीवस्याशु तौ मूर्ध्ना चरणौ प्रत्यपीडयत् ॥ ३८ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये सुन्दरकाण्डे द्विषष्टितमः सर्गः ॥ ६२ ॥

## त्रिषष्टितमः सर्गः ।

दधिमुखे सुग्रीवं प्रति मधुवनविध्वंसं प्रस्तावयति लक्ष्मणः सुग्रीवं दधिमुखवृत्तं पृच्छति । तथा श्रुतदधिमुखवृत्तो लक्ष्मणः कपीनां हर्षोदयाज्ज्ञानक्याः शुद्धिं निर्धारयति । दधिमुखं समाश्वास्य तेऽङ्गदादीञ्छीघ्रं प्रेषयितुं तं संदिदिशुः ।

ततो मूर्ध्ना निपतितं वानरं वानरर्षभः । दृष्ट्वैवोद्विग्नहृदयो वाक्यमेतदुवाच ह ॥ १ ॥
उत्तिष्ठोत्तिष्ठ कस्मात्त्वं पादयोः पतितो मम । अभयं ते प्रदास्यामि सत्यमेवाभिधीयताम् ॥ २ ॥

---

२९-३२ ] ति० टी०-भर्ता राजा ॥ २९—३२ ॥

रा० टी०-तदाकारमाह—एत इति । यत्र सुग्रीवः तत्र गच्छामः ॥ ३० ॥

रा० टी०-सर्व इति । वयं सर्वे अङ्गदे दोषं पार्थिवे सुग्रीवसमीपे श्रावयिष्याम श्रावयिष्यामः अतः अमर्षी सुग्रीवः वानरान् अङ्गदादीन् घातयिष्यति ॥ ३१ ॥

रा० टी०-तदेव भङ्ग्यन्तरेणाह—इष्टमिति । हि यत एतत् विनाशितं मधुवनं सुग्रीवस्य इष्टम् अतः इमान् वानरान् सुग्रीवो घातयिष्यति । अर्धचतुष्टयमेकान्वयि ॥ ३२ ॥ ३३ ॥

गो० टी०-स इति । गतायुष इत्यधिक्षेपवचनम् ॥ ३४॥

३३-३५ ] ति० टी०-नृपाज्ञापरिपन्थिनस्तदाज्ञाविरुद्धकर्तारः । अमर्षप्रभवोऽक्षमाजन्यः ॥ ३३—३५ ॥

रा० टी०-वध्या इति । नृपाज्ञया परिपन्थिनः विरोधिनः एते वध्या अत एव मे रोषः सफलो भविष्यति ॥३४॥

रा० टी०-एवमिति । दधिमुखः एवमुक्त्वा जगाम॥३५॥

रा० टी०-निमेषेति । स दधिमुखः यत्र सुग्रीवः तत्र निमेषान्तरमात्रेण प्राप्तः ॥ ३६ ॥

गो० टी०-वध्या ह्येत इति । अमर्षप्रभवः अक्षमाजन्यः । रोषस्य तज्जन्यत्वं च यो यस्मै न सहते तस्मै कुद्ध्यतीति प्रसिद्धम् ॥ ३५ ॥ ३६ ॥

गो० टी०-निमेषान्तरेति । निमेषान्तरमात्रेण निमेषावकाशमात्रेण । वनालयः वानरः ॥ ३७ ॥

३६-३७ ] ति० टी०-समप्रतिष्ठां समतलाम् । जगतीं भूमिम् । दृष्ट्वेत्यनुकर्षः ॥ ३६ ॥ ३७ ॥

रा० टी०-राममिति । रामप्रभृतिं दृष्ट्वा समप्रतिष्ठां समतलां जगतीं भूमिं निपपात प्राप्नोत् ॥ ३७ ॥

गो० टी०-रामं चेति । समप्रतिष्ठां समतलाम् । जगतीं भूमिम् ॥ ३८—४० ॥

अस्मिन्सर्गे चत्वारिंशच्छ्लोकाः ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने द्विषष्टितमः सर्गः ॥ ६२ ॥

३८ ] ति० टी०-तौ सर्ववानरपूज्यौ चरणावित्यन्वयः ३८

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये सुन्दरकाण्डे द्विषष्टितमः सर्गः ॥ ६२ ॥

रा० टी०-समिति । तैः भृत्यैः परिवारितः दधिमुखः संनिपत्य दीनवदनो भूत्वा शिरसि अञ्जलिं कृत्वा मूर्ध्ना सुग्रीवस्य चरणौ प्रत्यपीडयत् । अर्धचतुष्टयमेकान्वयि ॥३८॥३९॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ सुन्दरकाण्डे द्विषष्टितमः सर्गः ॥ ६२ ॥

१-२ ] ति० टी०-तत इति ॥ १ ॥ २ ॥

---

१ एते तिष्ठन्त्विति गो. पाठः । २ सर्वे इति रा. पाठः । ३ वध्या इति गो. पाठः । ४ भाविन इति गो. पाठः । ५ नो इति गो. पाठः । ६ संनिपत्येति गो. पाठः । ७ शुभाविति गो. पाठः । ८ भवद्भिः सर्वमिति गो. पाठः । ९ अभिधीयत इति रा. पाठः ।

[1]किं संभ्रमाद्धितं कृत्स्नं ब्रूहि यद्वक्तुमर्हसि । कच्चिन्मधुवने स्वस्ति श्रोतुमिच्छामि वानर ॥ ३ ॥
स [2]समाश्वासितस्तेन सुग्रीवेण महात्मना । उत्थाय स महाप्राज्ञो वाक्यं दधिमुखोऽब्रवीत् ॥ ४ ॥
नवर्क्ष[3]जरता राजन्न त्वया न च वालिना । वनं निसृष्टपूर्वं ते नाशितं तत्तु वानरैः ॥ ५ ॥
[4]न्यवारयमहं सर्वान्सहैभिर्वनचारिभिः । अचिन्तयित्वा मां हृष्टा भक्षयन्ति पिबन्ति च ॥ ६ ॥
एभिः [5]प्रधर्षणायां च वारितं वनपालकैः । [6]मामप्यचिन्तयन्देव भक्षयन्ति वनौकसः ॥ ७ ॥
शिष्टमत्रापविद्ध्यन्ति भक्षयन्ति तथापरे । निवार्यमाणास्ते सर्वे [11]भ्रुकुटिं दर्शयन्ति हि ॥ ८ ॥
इमे हि संरब्धतरास्तदा[12] तैः संप्रधर्षितः[13] । निर्वार्यन्ते[14] वनात्तस्मात्क्रुद्धैर्वानरपुंगवैः ॥ ९ ॥
ततस्तैर्बहुभिर्वीरैर्वानरै[15]र्वानरर्षभाः । संरक्तनयनैः क्रोधाद्धरयः संप्रधर्षिताः ॥ १० ॥
पाणिभिर्निहताः केचित्केचिज्जानुभिराहताः । प्रकृष्टाश्च तै[16]र्दा कामं देवमार्गं च दर्शिताः ॥ ११ ॥
एवमेते हताः शूरास्त्वयि तिष्ठति भर्तरि । कृत्स्नं मधुवनं चैव प्रकामं तैश्च[17] भक्ष्यते ॥ १२ ॥

---

रा० टी०–दधिमुखप्रणामानन्तरकालिकं वृत्तान्तमाह–तत इत्यादिभिः । वानरर्षभः सुग्रीवः निपतितं दृष्ट्वैव उद्विग्नहृदयः सन् उवाच ॥ १ ॥

रा० टी०–तदाकारमाह–उत्तिष्ठेति । अभयं रिपुहेतुकभयनिवृत्तिं ते प्रदास्यामि ॥ २ ॥

गो० टी०–तत इत्यादि । उद्विग्नहृदयः भीतहृदयः । मातुलस्यापि पादपतनं स्वामित्वानुसारेण ॥ १–३ ॥

३–४ ] ति० टी०–किंसंभ्रमात्कस्य भयात् इहागतोऽसीति शेषः । यत्कृत्स्नं हितं तद्ब्रूहि, यतस्त्वं सर्वमुचितमनुचितं च वक्तुमर्हसि ॥ ३ ॥ ४ ॥

रा० टी०–किमिति । यत् किं किञ्चित् हितं स्वस्य मम वा पथ्यं तद्वक्तुमर्हसि ब्रूहीत्यर्थः, मधुवने स्वस्ति च ब्रूहि । तत्र हेतुः संभ्रमादादरात् श्रोतुमिच्छामि ॥ ३ ॥

रा० टी०–स इति । सुग्रीवेण समाश्वासितः समहाप्राज्ञः महाप्रज्ञासहितः स दधिमुखः उत्थायाब्रवीत् प्राज्ञाशब्दस्वार्थिकाणन्तः क्लीबभावस्त्वजादित्वात् ॥ ४ ॥

५–६ ] ति० टी०–नैव निसृष्टपूर्वं वानरेभ्यो यथेच्छभोगाय कदापि नानुज्ञातम् ॥ ५ ॥ ६ ॥

रा० टी०–तदाकारमाह–नेति । यद्वनम् ऋक्षरजःप्रभृतिभिर्निसृष्टपूर्वं यथेच्छभोगाय पूर्वं दत्तं न तद्वनं ते वानरैर्नाशितम् ॥ ५ ॥

रा० टी०–न्यवारयमिति । अहं न्यवारयं तथापि मामचिन्तयित्वा अपरिगणय्य भक्षयन्ति पिबन्ति ॥ ६ ॥

गो० टी०–नैवेति । न निसृष्टपूर्वं यथेच्छभोगाय न दत्तपूर्वम् । वानरैः अङ्गदप्रमुखैः । अन्यथा सुग्रीववाक्ये अङ्गदानुवादविरोधात् । भक्षितमिति वनैकदेशमधुपटलविषयम् ॥ ४ ॥

७ ] ति० टी०–एभिर्हनुमदाद्यैः प्रधर्षणायामारब्धायां वनपालकैर्वारितम्, ममापि । अपिनेतरान्पालकानचिन्तयन्नचिन्तयन्तः ॥ ७ ॥

रा० टी०–एभिरिति । एभिर्वनरक्षिभिः प्रधृष्यमाणाः भर्त्स्यमाना वारिताश्च ते वानराः भक्षयन्ति पिबन्ति च ॥७॥

गो० टी०–एभिरिति । अचिन्तयित्वा अगणयित्वा । मधूनीति फलानामुपलक्षणम् भक्षयन्ति पिबन्ति चेत्युक्तेः । यद्वा मधून्येव भक्षयन्ति भक्षवत्कुर्वन्तीत्यर्थः ॥ ९ ॥

८ ] ति० टी०–भ्रुकुटिं वक्रे भ्रुवौ ॥ ८ ॥

रा० टी०–शिष्टमिति । अपरे भक्षयन्ति शिष्टमवशिष्टम् अपविध्यन्ति प्रक्षिपन्ति च निवार्यमाणाः सन्तः भ्रूकुटिं दर्शयन्ति ॥ ८ ॥

गो० टी०–शिष्टमिति । शिष्टम् अवशिष्टम् मधुपटलम् । अत्र मधुवने । अपविध्यन्ति ध्वंसयन्ति भक्षयन्ति मधुपटलमित्यर्थः ॥ ६ ॥

९–१२ ] ति० टी०–इमे मदीयाः संरब्धतरा निवारणायातियत्नवन्तः ॥ ९—१२ ॥

रा० टी०–इमे इति । संरब्धतराः निवारणफलकयत्नवन्तः इमे वानराः क्रुद्धैर्वानरपुङ्गवैः संप्रधर्षिताः सन्तः तस्माद्वनात् निर्वाप्यन्ते ॥ ९ ॥

रा० टी०–तदेव भङ्ग्यन्तरेणाह–तत इति । हरयः मदनुयायिवानराः बहुभिस्तैर्वानरैः संप्रधर्षिताः ॥ १० ॥

रा० टी०–तत्प्रकारमाह–पाणिभिरिति । प्रकृष्टाः प्रगृह्य आकृष्टाः सन्तः देवमार्गमाकाशं दर्शिताः प्रक्षेपेण प्रापिताः ॥ ११ ॥

---

१ श्लोकोऽयं गो. नास्ति । २ तु विश्वासित इति गो.पाठः । ३ रजसेति गो. रा. पाठः । ४ ऽपीति गो. पाठः । ५ भक्षितं तच्चेति गो. पाठः । ६ श्लोकोऽयं गो. नास्ति । ७ प्रधर्षिताश्चैव वानरा वनरक्षिभिरिति गो. प्रधृष्यमाणाश्च वारिता इति रा. पाठः । ८ मधूनि चिन्तयित्वेमामिति गो. पाठः । ९ चिन्तयित्वा ते इति रा. पाठः । १० पिबन्ति चेति गो. रा. पाठः । ११ भ्रुवौ वै इति गो. पाठः । १२ तथेति गो. पाठः । १३ धर्षिता इति गो. रा. पाठः । १४ निर्वाप्यन्तइति रा. वार्यन्त इति गो, पाठः । १५ वानरर्षभेति गो. पाठः । १६ यथेति गो, पाठः । १७ प्रेति गो. पाठः ।

एवं विज्ञाप्यमानं तं सुग्रीवं वानरर्षभम् । अपृच्छत्तं महाप्राज्ञो लक्ष्मणः परवीरहा ॥ १३ ॥
किमयं वानरो राजन्वनपः प्रत्युपस्थितः । [1]किं चार्थमभिनिर्दिश्य दुःखितो वाक्यमब्रवीत् ॥१४॥
एवमुक्तस्तु सुग्रीवो लक्ष्मणेन महात्मना । लक्ष्मणं प्रत्युवाचेदं वाक्यं वाक्यविशारदः ॥ १५ ॥
आर्य लक्ष्मण संप्राह वीरो दधिमुखः कपिः । अङ्गदप्रमुखैर्वीरैर्भक्षितं मधु वानरैः ॥ १६ ॥
नैषामकृत[2]कार्याणामीदृशः स्याद्व्य[3]तिक्रमः । वनं [4]यदभिपन्नास्ते साधितं कर्म [5]तद्ध्रुवम् ॥ १७ ॥
वारयन्तो भृशं प्राप्ताः पाला जानुभिराहताः । तथा न गणितश्चायं कपिर्दधिमुखो बली ॥ १८ ॥
पतिर्मम वनस्यायमस्माभिः स्थापितः स्वयम् । दृष्टा देवी न संदेहो न चान्येन हनूमता ॥ १९ ॥
न ह्यन्यः साधने हेतुः कर्मणोऽस्य हनूमतः । कार्यसिद्धिर्हनुमति मतिश्च हरिपुङ्गवे ॥ २० ॥
व्यवसायश्च वीर्यं च श्रुतं चापि प्रतिष्ठितम् । जाम्बवान्यत्र नेता स्यादङ्गदश्च महाबलः ॥ २१ ॥
हनूमांश्चाप्यधिष्ठाता न तत्र गतिरन्यथा । अङ्गदप्रमुखैर्वीरैर्हतं मधुवनं किल ॥ २२ ॥
[9]विचित्य दक्षिणामाशामागतैर्हरिपुङ्गवैः । आगतैश्च प्रहृष्टं तद्यथा मधुवनं हि तैः ॥ २३ ॥

---

रा० टी०–एव मिति । एवमुक्तप्रकारेण एते शराः हताः तैर्वानरैः कृत्स्नं वनं भक्ष्यते अभक्ष्यत ॥ १२ ॥

गो० टी०–इमे हीति । हिशब्दः पादपूरणे संप्रधर्षणचिह्नस्य दृश्यमानत्वाभिप्रायेण प्रसिद्धिपरो वा ॥७–१३॥

१३–१६ ] ति० टी०–विज्ञाप्यमानम् दधिमुखेनेति शेषः ॥ १३—१६ ॥

रा० टी०–एवमिति । एवं विज्ञाप्यमानं सुग्रीवं लक्ष्मणोऽपृच्छत् ॥ १३ ॥

रा० टी०–तत्प्रश्नाकारमाह–किमिति । हे राजन् ! अयं वनपः किं किमर्थं प्रत्युपस्थितः किमर्थमभिनिर्दिश्य बोधयित्वा दुःखितः सन् अब्रवीत् ॥ १४ ॥

रा० टी०–एवमिति । एवमुक्तः सुग्रीव उवाच ॥ १५ ॥

रा० टी०–तदाकारमाह–आर्येति । अङ्गदप्रमुखैः मधु मधुवनसंबन्धिमूलफलादि भक्षितम् इति दधिमुखः कपिः संप्राह ॥ १६ ॥

गो० टी०–आर्येत्यादि । अङ्गदप्रमुखैरिति । अत्र विशिष्यानुवादाद्दधिमुखवाक्ये वानरपुङ्गवैरित्यत्रापि विशेषपरत्वं बोध्यम् ॥ १४ ॥ १५ ॥

१७] ति० टी०–यद्यथा वनमभिपन्ना नाशयितुं प्रवृत्ताः१७

रा० टी०–नेति । अकृतकार्याणाम् अनिष्पादितमत्प्रयोजनानां वानराणाम् ईदृशो व्यतिक्रमो न स्यात् । यद्यस्माद्धेतोस्ते वानराः वनमभिपन्नाः विध्वंसितुं प्रवृत्ताः तस्माद्धेतोः कर्म मत्प्रयोजनं ध्रुवं साधितं वानरैरिति शेषः ॥ १७ ॥

गो० टी०–नैषामिति । वनं प्रमथितं भग्नम् । धर्षितम् आक्रान्तम् । मधु च भक्षितम् । यथा येन प्रकारेण । एषामकृतकृत्यानामीदृश उपक्रमो न स्यादिति मन्य इति योजना ॥ १६ ॥ १७ ॥

१८ ] ति० टी०–वारयन्तः हेतौ शता वारणाद्धेतोर्जानुभिराहताः पालाः प्राप्ताः ॥ १८ ॥

१९ ] ति० टी०–देवी दृष्टेत्यत्र न संदेहः । तत्राप्यन्येन न, किं तु हनूमतेत्यर्थः ॥ १९ ॥

रा० टी०–वारयन्त इति । वारयन्तः प्राप्ताः पालाः वनरक्षकाः जानुभिर्भृशमाहता बभूवुरिति शेषः तथा वनस्य पतिः अस्माभिः स्थापितः अयं दधिमुखो न गणितः अतः देवी सीता दृष्टा तत्रापि हनूमतैव दृष्टा नान्येन संदेहः अत्र संशयो न । श्लोकद्वयमेकान्वयि ॥ १८ ॥ १९ ॥

गो० टी०–कृतकृत्यत्वं विशेषयति—वनमित्यादिना ॥ १८—२३ ॥

२०–२३ ] ति० टी०–अन्यः हनूमतोऽन्य इत्यर्थः । हरिपुंगवे हनूमति कार्यसिद्धिर्मतिश्च ॥ २०—२३ ॥

रा० टी०–हनुमत एव दर्शने हेतुं वदन्नाह–नेति । यस्मिन् व्यवसायादि प्रतिष्ठितं तस्मिन् हनुमत्येव कार्यसिद्धिः अतः अस्य दधिमुखवर्णितस्य कर्मणः वाटिकाविध्वंसस्य साधने हेतुर्मुख्यकारणं हनूमतोऽन्यो न इति मतिर्मम निश्चयः सार्धश्लोक एकान्वयी ॥ २० ॥

रा० टी०–कार्यसिद्धिमन्तरा वानरकर्तृकमधुवनविध्वंसस्यासंभवं द्योतयन्नाह–जाम्बवानिति । यत्र सैन्ये जाम्बवान्नेता मुख्यः अङ्गदो हरीश्वरः सर्ववानरनियन्ता हनूमान् अधिष्ठाता संमतिदाता तत्र सैन्ये अन्यथागतिः अन्यायेन गमनं न संभवतीति शेषः ॥ २१ ॥

---

१ कमिति गो. पाठः । २ कृत्यानामिति गो. पाठः । ३ उपक्रम इति गो. पाठः । ४ यदेति गो. पाठः । ५ वानरैरिति गो. पाठः । ६ एतदादिः सार्धश्लोको गो. नास्ति । ७ मतिश्चैव तस्मिन्वानरपुङ्गवे इति गो. पाठः । ८ तस्येति गो. पाठः । ९ सार्धोऽयं श्लोकः षोडशोत्तरं गो. पाठे रा. नास्ति । १० निश्चित्येति गो. पाठः ।

धर्षितं च वनं कृत्स्नमुपयुक्तं तु वानरैः । पातिता वनपालास्ते तदा जानुभिराहताः ॥ २४ ॥
एतदर्थमयं प्राप्तो वक्तुं मधुरवागिह । नाम्ना दधिमुखो नाम हरिः प्रख्यातविक्रमः ॥ २५ ॥
दृष्टा सीता महाबाहो सौमित्रे पश्य तत्त्वतः । अभिगम्य यथा सर्वे पिबन्ति मधु वानराः ॥ २६ ॥
न चाप्यदृष्ट्वा वैदेहीं विश्रुताः पुरुषर्षभ । वनं दत्तवरं दिव्यं धर्षयेयुर्वनौकसः ॥ २७ ॥
ततः प्रहृष्टो धर्मात्मा लक्ष्मणः सहराघवः । श्रुत्वा कर्णसुखां वाणीं सुग्रीववदनाच्च्युताम् ॥ २८ ॥
प्राहृष्यत भृशं रामो लक्ष्मणश्च महायशाः । श्रुत्वा दधिमुखस्यैवं सुग्रीवस्तु प्रहृष्य च ॥ २९ ॥
वनपालं पुनर्वाक्यं सुग्रीवः प्रत्यभाषत । प्रीतोऽस्मि सोऽहं यद्भुक्तं वनं तैः कृतकर्मभिः ॥ ३० ॥
धर्षितं मर्षणीयं च चेष्टितं कृतकर्मणाम् । गच्छ शीघ्रं मधुवनं संरक्षस्व त्वमेव हि ॥
शीघ्रं प्रेषय सर्वांस्तान्हनूमत्प्रमुखान्कपीन् ॥ ॥ ३१ ॥

इच्छामि शीघ्रं हनुमत्प्रधानाञ्शाखामृगांस्तान्मृगराजदर्पान् ।
प्रष्टुं कृतार्थान्सह राघवाभ्यां श्रोतुं च सीताधिगमे प्रयत्नम् ॥ ॥ ३२ ॥
प्रीतिस्फीताक्षौ संप्रहृष्टौ कुमारौ दृष्ट्वा सिद्धार्थौ वानराणां च राजा ।
अङ्गैः प्रहृष्टैः कार्यसिद्धिं विदित्वा बाह्वोरासन्नामतिमात्रं ननन्द ॥ ३३ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये सुन्दरकाण्डे त्रिषष्टितमः सर्गः ॥ ६३ ॥

---

रा० टी०–अङ्गदेति । अङ्गदप्रमुखैर्वानरैः उपयुक्तं भोगोपयोगि कृत्स्नं मधुवनं हतं वनं वनपजातं धर्षितं च ॥ २२ ॥

२४-२५ ] ति० टी०–उपयुक्तं भुक्तम् ॥ २४ ॥ २५ ॥

रा० टी०–पातिता इति । जानुभिराहताः ते वनपालाः पातिताः एतदर्थं वक्तुं मधुरवाक् नाम्ना दधिमुखनामा इह प्राप्तः सार्धः श्लोक एकान्वयी ॥ २३ ॥ २४ ॥

२६ ] ति० टी०–यथा मधु पिबन्ति तथा सीता दृष्टेत्यन्वयः ॥ २६ ॥

रा० टी०–दृष्टेति । यतो वानराः अभिगम्य मधु यथा यथावत्पिबन्ति अतः सीता दृष्टा इति पश्य जानीहि ॥ २५ ॥

२७-२८ ] ति० टी०–दत्तवरं वरत्वेन देवैरस्माकं दत्तम् ॥ २७ ॥ २८ ॥

रा० टी०–नेति । वैदेहीमदृष्ट्वा विश्रुता प्रख्याता वनौकसः दत्तवरम् अस्माभिः प्राप्ताभयं वनं न धर्षयेयुः ॥२६॥

गो० टी०–न चेति । वनमिति मधुवनधर्षणमेव सीतादर्शने लिङ्गमिति भावः । दत्तवरं दिव्यमित्यनेन ऋक्षरजसे ब्रह्मणा दत्तमित्यवगम्यते ॥ २४ ॥ २५ ॥

रा० टी०–तत इति । सुग्रीववदनात् च्युतां वाणीं श्रुत्वा राघवः प्रहृष्टोऽभवदिति शेषः ॥ २७ ॥

गो० टी०–श्रुत्वेति । द्वितीयसुग्रीवशब्दस्य शोभनग्रीव इत्यवयवार्थो विवक्षितः क्रियाभेदेनापुनरुक्तिर्वा ॥२६॥२७॥

२९ ] ति० टी०–एकः सुग्रीवशब्दः शोभनग्रीवपरः ॥२९॥

रा० टी०–प्राहृष्यतेति । एवं सुग्रीववचनसदृशं दधिमुखस्य वाक्यं श्रुत्वा रामः प्राहृष्यत सुग्रीवादीन् प्रहर्षयामास अन्तर्भावितणिजर्थः सुग्रीवः शोभनग्रीवाविशिष्टः सुग्रीवस्तु वनपालं पुनः प्रत्यभाषत । सार्धश्लोक एकान्वयी ॥ २८ ॥

३०-३१ ] ति० टी०–कृतकर्मभिः साधितकृत्यैः॥३०--३१

रा० टी०–प्रतिभाषणाकारमाह–प्रीत इति । कृतकर्मभिः साधितास्मत्प्रयोजनैस्तैर्वानरैर्यद्वनं भुक्तं तेनाहं प्रीतोऽस्मि अतः कृतकर्मणां वानराणां धर्षितं प्रागल्भ्यं चेष्टितं ध्वंसानुकूलव्यापारश्च मर्षणीयं क्षन्तव्यम् ॥ २९ ॥

रा० टी०–गच्छेति । मधुवनं गच्छ त्वमेव संरक्षस्व हनुमत्प्रमुखान् शीघ्रं प्रेषय ॥ ३० ॥

३२ ] ति० टी०--तान्द्रष्टुमिच्छामि सीताधिगमे तत्प्राप्तौ कृतं प्रयत्नं च श्रोतुमिच्छामि ॥ ३२ ॥

रा० टी०–प्रेषणे हेतुमाह–इच्छामीति । मृगराजदर्पान् सिंहवद्दर्पविशिष्टान् कृतार्थान् शाखामृगान् द्रष्टुं शीघ्रमिच्छामि । तत्र हेतुः सीताधिगमे सीतादर्शनप्राप्त्यर्थं प्रयत्नं यत्नविशेषं श्रोतुं शीघ्रमिच्छामि ॥ ३१ ॥

गो० टी०–इच्छामीति । हनुमत्प्रधानान् हनुमत्प्रमुखान् कृतार्थान् कृतकृत्यान् प्रयत्नं प्रयासम् । तेभ्यः श्रोतुमिच्छामीत्यन्वयः ॥ २८ ॥

३३ ] ति० टी०--अथ सुग्रीवः स्वोद्योगसाफल्यदर्शनाद्धृष्टं ननन्देत्याह—प्रीतीति । प्रीत्या संतोषेण स्फीताक्षौ विक-

---

१ चेति गो. पाठः । २ वारयन्तश्च सहितास्तथेति गो. पाठः । ३ तथेति गो. पाठः । ४ बल इति गो. पाठः । ५ मर्षितमिति गो. पाठः । ६ श्लोकोऽयं गो. नास्ति । ७ संहृष्टः धर्मात्मेति गो. पाठः । ८ आसन्नां सोऽतिमात्रमिति गो. पाठः ।

## चतुःषष्टितमः सर्गः ।

सुग्रीवेणाज्ञापितो दधिमुखो मधुवनमेत्याङ्गदं क्षमयन्सुग्रीवस्त्वां शीघ्रमाह्वयतीति न्यवेदीत् । हनुमदादिभिः समं प्रस्थितोऽङ्गदः सुग्रीवमभिगम्य श्रीरामं सप्रणामं जानकीदर्शनादि निवेदयति ।

सुग्रीवेणैवमुक्तस्तु हृष्टो दधिमुखः कपिः । राघवं लक्ष्मणं चैव सुग्रीवं चाभ्यवादयत् ॥ १ ॥
स प्रणम्य च सुग्रीवं राघवौ च महाबलौ । वानरैः सहितः शूरैर्दिवमेवोत्पपात ह ॥ २ ॥
स यथैवागतः पूर्वं तथैव त्वरितं गतः । निपत्य गगनाद्भूमौ तद्वनं प्रविवेश ह ॥ ३ ॥
स प्रविष्टो मधुवनं ददर्श हरियूथपान् । विमदानुद्धतान्सर्वान्मेहमानान्मधूदकम् ॥ ४ ॥
स तानुपागमद्वीरो बद्ध्वा करपुटाञ्जलिम् । उवाच वचनं श्लक्ष्णमिदं हृष्टवदङ्गदम् ॥ ५ ॥
सौम्य रोषो न कर्तव्यो यदेभिः परिवारणम् । अज्ञानाद्रक्षिभिः क्रोधाद्भवन्तः प्रतिषेधिताः ॥ ६ ॥
श्रान्तो दूरादनुप्राप्तो भक्षयस्व स्वकं मधु । युवराजस्त्वमीशश्च वनस्यास्य महाबल ॥ ७ ॥

सितनेत्रौ । संप्रहृष्टौ पुलकितगात्रौ सिद्धार्थाविव दृष्ट्वा संप्रहृष्टैः पुलकितैरङ्गैरुपलक्षितः कार्यसिद्धिं बाह्वोरासन्नां हस्तप्राप्तामिव विदित्वा ननन्द ॥ ३३ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये सुन्दरकाण्डे त्रिषष्टितमः सर्गः ॥ ६३ ॥

रा० टी०–प्रीतीति । सिद्धार्थौ निष्पन्नप्रयोजनौ अत एव संप्रहृष्टौ अत एव प्रीत्या हनुमदादिविषयकातिस्नेहेन स्फीते अक्षिणी ययोः तौ कुमारौ रामलक्ष्मणौ दृष्ट्वा प्रहृष्टैः अङ्गैः दक्षिणनेत्रादिभिः करणैर्बाह्वोरासन्नां प्राप्तामिव कार्यसिद्धिं विदित्वा वानराणां राजा सुग्रीवः अतिमात्रम् अत्यतं ननन्द ॥ ३२ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ सुन्दरकाण्डे त्रिषष्टितमः सर्गः ॥ ६३ ॥

गो० टी०–अथ प्रत्युपकारार्थं सुग्रीवः स्वोद्योगसाफल्यदर्शनात् भृशं ननन्देत्याह–प्रीतिस्फीताक्षौ । संप्रहृष्टौ कुमारौ दृष्ट्वा सिद्धार्थौ वानराणां च राजा । अङ्गैः संहृष्टैकर्मसिद्धिं विदित्वा बाह्वोरासन्नां सोऽतिमात्रं ननन्द । प्रीत्या संतोषेण । संप्रहृष्टौ रोमस्विति शेषः । हृषितरोमाणावित्यर्थः । "हृषेर्लोमसु" इति विकल्पादिडभावः । एवम् अङ्गैः संहृष्टैरित्यत्रापि द्रष्टव्यम् । कर्मसिद्धिं बाह्वोरासन्नां हस्तप्राप्तां विदित्वा निश्चित्येत्यर्थः । जागतं वैश्वदेवीवृत्तम् । पञ्चाश्वैश्छिन्ना वैश्वदेवी ममौ याविति लक्षणात् । अस्मिन्सर्गे एकोनत्रिंशच्छ्लोकाः ॥ २९ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने त्रिषष्टितमः सर्गः ॥ ६३ ॥

---

१–३ ] ति० टी०–सुग्रीवेणेति ॥ १ ॥ ३ ॥

रा० टी०–सुग्रीवाज्ञाश्रवणानन्तरकालिकदधिमुखवृत्तान्तमाह–सुग्रीवेणेत्यादिभिः । सुग्रीवेणैवमुक्तो दधिमुखः राघवादीन् अभ्यवादयत् ॥ १ ॥

रा० टी०–स इति । वानरैः सहितः स दधिमुखः दिवमाकाशमार्गमुत्पपात ॥ २ ॥

रा० टी०–स इति । यथा त्वरितं पूर्वमागतः तथैव गतः गमनवान् स दधिमुखः गगनाद्भूमौ निपत्य वनं मधुवनं प्रविवेश ॥ ३ ॥

गो० टी०–सुग्रीवेणेत्यादि । सहितैः स्नेहातिरेकेणान्योन्यं युक्तैः । वानरैः सहितैरिति पाठः ॥ १—३ ॥

४–५ ] ति० टी०–विमदत्वमूचकम्—मेहमानान्मधूदकमिति । मेहमानान्मूत्रयतः । मधुपरिणामभूतमुदकं मधुदकम् । एवं मूत्रणान्मधूनां जीर्णता बोधिता, अत एव विमदान् ॥४॥५॥

रा० टी०–स इति । मधुवनं प्रविष्टः स दधिमुखः मधुरूपमुदकं मेहमानान् मूत्रयतः विमदान् हरियूथपान् ददर्श ॥४॥

गो० टी०–स प्रविष्ट इति । विमदानित्यत्र हेतुमाह मेहमानानिति । मेहमानान् मेहयतः मूत्रयत इत्यर्थः । एतेन मूत्रणान्मधूनि जीर्णानीति गम्यते । अत एव विमदत्वम् । मधूनि च उदकानि च मधूदकमिति द्वन्द्वैकवद्भावः । उदकानि चात्र अनुपानत्वेन पीतानि तादृह वाग्भटः—अनुपानं हिमं वारि यवगोधूमयोर्हितम् । दध्नि मद्ये विषे क्षौद्रे कोष्णं पिष्टमयेषु चेति ॥ ४ ॥

रा० टी०–स इति । स दधिमुखः करपुटाञ्जलिं बद्ध्वा हृष्टवत् हर्षकारकं वचनमङ्गदमुवाच ॥ ५ ॥

गो० टी०–स तानिति । करपुटाञ्जलिं करतलयोरञ्जलिम् । सम्यक् संयुक्तकरतलाञ्जलिमित्यर्थः ॥ ५ ॥

६–७ ] ति० टी०–एभी रक्षिभिरज्ञानात्क्रोधाच्च भवन्तः प्रतिषेधिता इति यदेतत्परिवारणं प्रति रोषो न कर्तव्य इत्यर्थः ॥ ६ ॥ ७ ॥

---

१ सहितैरिति गो. पाठः । २ उत्थितानिति गो. पाठः । ३ अभिवारित इति गो. पाठः । ४ अर्धमेतत् गो. नास्ति ।

मौर्ख्यात्पूर्वं कृतो रोषस्तद्भवान्क्षन्तुमर्हति । यथैवं हि पिता तेऽभूत्पूर्वं हरिगणेश्वरः ॥ ८ ॥
तथा त्वमपि सुग्रीवो नान्यस्तु हरिसत्तम । आख्यातं हि मया गत्वा पितृव्यस्य तवानघ ॥ ९ ॥
इहोपयानं सर्वेषामेतेषां वनचारिणाम् । भवदागमनं श्रुत्वा सहैभिर्वनचारिभिः ॥ १० ॥
प्रहृष्टो न तु रुष्टोऽसौ वनं श्रुत्वा प्रधर्षितम् । प्रहृष्टो मां पितृव्यस्ते सुग्रीवो वानरेश्वरः ॥ ११ ॥
शीघ्रं प्रेषय सर्वांस्तानिति होवाच पार्थिवः । श्रुत्वा दधिमुखस्यैतद्वचनं श्लक्ष्णमङ्गदः ॥ १२ ॥
अब्रवीत्तान्हरिश्रेष्ठो वाक्यं वाक्यविशारदः । शङ्के श्रुतोऽयं वृत्तान्तो रामेण हरियूथपाः ॥ १३ ॥
अयं च हर्षादाख्याति तेन जानामि हेतुना । तत्क्षमं नेह नः स्थातुं कृते कार्ये परंतपाः ॥ १४ ॥
पीत्वा मधु यथाकामं विक्रान्ता वनचारिणः । किं शेषं गमनं तत्र सुग्रीवो यत्र वानरः ॥ १५ ॥

---

रा० टी०—तदाकारमाह—सौम्येति । हे सौम्य अज्ञानात् भवत्संपादितकार्यविषयकज्ञानाभावात् रक्षिभिः भवन्तः प्रतिषेधिताः अतः यदेभिः परिवारणम् एतत्करणकनिवारणं तत्संस्मृत्येति शेषः रोषो न कर्तव्यः किंच एभिर्वानरैः सह भवन्तः प्रतिषेधिताः अतो यत्परिवारणमस्मत्कर्तृकनिवारणं तत्संस्मृत्य रोषो न कर्तव्यः ॥ ६ ॥

गो० टी०—सौम्येति । एभिः वानरैः अभिवारितः अभिवारितोऽसीति यत् अत्रार्थे रोषो न कर्तव्यः । भवन्त इति पूजायां बहुवचनम् । न च हनुमदादिकमादाय बहुवचनम् उत्तरश्लोकेऽपि युवराजस्त्वमित्युक्तेः अज्ञानात्क्रोधात् । अज्ञानप्रयुक्तक्रोधादित्यर्थः अभिवारितमिति पाठे लिङ्गव्यत्यय आर्षः । केचित्तु अज्ञानात् क्रोधाच भवन्तः प्रतिषेधिता इत्येतत् परिवारितं परिवारणं प्रति रोषो न कर्तव्य इति योजयन्ति ॥६॥

रा० टी०—श्रान्त इति । दूरादनुप्राप्तः अत एव श्रान्तस्त्वं स्वकं मधु भक्षयस्व पिब स्वकीयत्वे हेतुः यतस्त्वं युवराजः अत एव अस्य वनस्य ईशः स्वामी असीति शेषः ॥ ७ ॥

गो० टी०—क्रोधाद्वारणे कृते कृतो रोषो न कर्तव्यः स्यादित्याशङ्क्य क्रोधस्याज्ञानकृतत्वादित्याह—युवराज इति । दोषः निवारणरूपापराधः ॥ ७ ॥

८ ] ति० टी०—रोषः कृतः । मदीयैरिति शेषः ॥ ८ ॥

रा० टी०—मौर्ख्यादिति । यथा पूर्वं ते पिता हरिगणेश्वरः तथा त्वं सुग्रीवोऽपि अन्यो न अतः मौर्ख्यात् अज्ञानात् पूर्वं कृतो यो रोषस्तत् क्षन्तुं भवानर्हति सार्धश्लोक एकान्वयी ॥ ८ ॥

९-१२ ] ति० टी०—तथा सुग्रीवस्त्वमपि त्वं च हरीश्वरः ॥ ९ ॥ १२ ॥

रा० टी०—आख्यातमिति । सर्वेषाम् एतेषां भवतामिहोपयानमागमनं तव पितृव्यस्य समीपे गत्वा मयाऽऽख्यातं कथितम् ॥ ९ ॥

रा० टी०—भवदिति । असौ सुग्रीवः वनं प्रधर्षितं श्रुत्वापि भवदागमनं श्रुत्वा प्रहृष्ट एव न तु रुष्टः ॥ १० ॥

रा० टी०—प्रहृष्ट इति । प्रहृष्टस्ते पितृव्यः तान् वानरान् शीघ्रं प्रेषय इत्युवाच ॥ ११ ॥

रा० टी०—श्रुत्वेति । अङ्गदः एतत् श्रुत्वा अब्रवीत्॥१२॥

गो० टी०—आख्यातं हीति । उपयातम् आगमनम् ॥ ८ ॥ ११ ॥

१३ ] ति० टी०—शङ्के दधिमुखस्य पराहत्यागमनात् १३

१४ ] ति० टी०—किं चायं हर्षादाख्याति । सुग्रीवसंदेशमिति शेषः । तेन च हेतुना जानामि रामेण श्रुतोऽयं वृत्तान्त इति । तत्तस्मादकार्ये वनविध्वंसनरूपे कृते सतीह स्थातुं नोऽस्माकं न क्षमं न युक्तम् ॥ १४ ॥

रा० टी०—तदाकारमाह—शङ्के इति । हे हरियूथपाः अयं दधिमुखः हर्षादाख्याति किंचित्कथयति तेन हेतुना अयम् अस्मदीयो वृत्तान्तः रामेण श्रुत इत्यहं शङ्के अनुमिनोमि जानामि निश्चिनोमि च हे परन्तपाः तत्तस्माद्धेतोः कार्ये कृते सति इह स्थातुं नोऽस्माकं न क्षमम् सार्धश्लोक एकान्वयी ॥ १३ ॥ १४ ॥

गो० टी०—शङ्क इति । अयं वृत्तान्तः अस्मदागमनवृत्तान्तः ॥ १२ ॥

१५ ] ति० टी०—किं शेषम् । न किमपि शिष्टमित्यर्थः । गमनम् । उचितमिति शेषः ॥ १५ ॥

रा० टी०—पीत्वेति । यथाकामं मधु पीत्वा विद्यमानाः ये वनचारिणः तेषां कृत्यं शेषमवशिष्टं किं न किंचिदित्यर्थः अतः यत्र सुग्रीवः तत्र गमनं कुरुतेति शेषः ॥ १५ ॥

गो० टी०—पीत्वेति । किं शेषं न किंचिदपि शिष्टमित्यर्थः । किंतु मे गुरुः सुग्रीवो यत्र वर्तते तत्र गमनमेव शेषमित्यर्थः । किंशेषं गमनं तत्र सुग्रीवो यत्र मे गुरुरिति पाठे

---

१ श्लोकोऽयं गो. नास्ति । २ यातमिति गो. पाठः । ३ स स्वदिति गो. पाठः । ४ हरियूथपैरिति गो. पाठः । ५ इदमिति गो. पाठः । ६ अर्धमेतत गो. नास्ति । ७ मे गुरुरिति गो. पाठः ।

सर्वे यथा मां वक्ष्यन्ति समेत्य हरिपुङ्गवाः । तथास्मि कर्ता कर्तव्ये भवद्भिः परवानहम् ॥ १६ ॥
नाज्ञापयितुमीशोऽहं युवराजोऽस्मि यद्यपि । अयुक्तं कृतकर्माणो यूयं धर्षयितुं बलात् ॥ १७ ॥
ब्रुवतश्चाङ्गदस्यैवं श्रुत्वा वचनमुत्तमम् । प्रहृष्टमनसो वाक्यमिदमूचुर्वनौकसः ॥ १८ ॥
एवं वक्ष्यति को राजन्प्रभुः सन्वानरर्षभ । ऐश्वर्यमदमत्तो हि सर्वोऽहमिति मन्यते ॥ १९ ॥
तव चेदं सुसदृशं वाक्यं नान्यस्य कस्यचित् । सन्नतिर्हि तवाख्याति भविष्यच्छुभयोग्यताम् ॥ २० ॥
सर्वे वयमपि प्राप्तास्तत्र गन्तुं कृतक्षणाः । स यत्र हरिवीराणां सुग्रीवः पतिरव्ययः ॥ २१ ॥
त्वया ह्यनुक्तैर्हरिभिर्नैव शक्यं पदात्पदम् । कचिद्गन्तुं हरिश्रेष्ठ ब्रूमः सत्यमिदं तु ते ॥ २२ ॥
एवं तु वदतां तेषामङ्गदः प्रत्यभाषत । साधु गच्छाम इत्युक्त्वा खमुत्पेतुर्महाबलाः ॥ २३ ॥
उत्पतन्तमनूत्पेतुः सर्वे ते हरियूथपाः । कृत्वाऽऽकाशं निराकाशं यन्त्रोत्क्षिप्ता इवोपलाः ॥ २४ ॥

---

अस्माकं गमनं किंशेषं किंचिच्छेषम् । तच्च गमनशेषं च सुग्रीवो यत्र तत्र गमनमिति संबन्धः ॥ १३ ॥

१६ ] ति० टी०—कर्तव्ये कर्तव्येऽर्थे । भवद्भिः परवानहम् भवदधीन इत्यर्थः ॥ १६ ॥

रा० टी०—सर्वे इति । सर्वे हरिपुङ्गवाः समेत्य यथा मां वक्ष्यन्ति तथाऽहं कर्ताऽस्मि । तत्र हेतुः कर्तव्ये भवद्भिरहं परवान् भवदधीन इत्यर्थः ॥ १६ ॥

गो० टी०—विनयपूर्वकं सर्वसंमेलनं समर्थयते—सर्व इति तथास्मि कर्ता आह्वानं करिष्यामीत्यर्थः कर्तव्ये कार्ये भवद्भिः अहं परवान् भवद्भिर्यथा नियुक्तं तथा करिष्यामि गन्तव्यमित्युक्तं गमिष्यामः स्थातव्यमित्युक्तं स्थास्याम इत्यर्थः ॥ १४ ॥

१७–१८ ] ति० टी०—यद्यप्यहं युवराजोऽस्मि युष्मानाज्ञापयितुं नेशश्च । तत्र हेतुः—कृतकर्माणो यूयम् कृतकर्मणो युष्मानित्यर्थ आर्षमिदम् । तथाप्यतः परं बलाद्धर्षयितुं न युक्तम् ॥ १७ ॥ १८ ॥

रा० टी०—नेति । यतः कृतकर्माणो यूयं धर्षयितुमयुक्तम् अतः यद्यप्यहं युवराजः तथाप्याज्ञापयितुं नेशोऽस्मि कृतकर्माणो यूयमिति समुदायस्य कर्मत्वविवक्षया तस्य प्रातिपदिकत्वाभावान्न द्वितीया ॥ १७ ॥

रा० टी०—ब्रुवत इति । एवं ब्रुवतोऽङ्गदस्य समीपे वनौकस इदमूचुः ॥ १८ ॥

गो० टी०—युवराजत्वात् भवानेव कर्तव्याकर्तव्यनियन्तेत्यत आह—नाज्ञापयितुमिति । ईशः स्वतन्त्रः । कृतकर्माणः कृतोपकाराः यूयं मया धर्षयितुम् अनादर्तुं परतन्त्रीकर्तुमिति यावत् । अयुक्तम् अयुक्ता इत्यर्थः आर्षमव्ययमेतत् शक्यमितिवत्सामान्योपक्रमान्नपुंसकैकत्वनिर्देश इत्यप्याहुः १९॥१६

१९ ] ति० टी०—अहम् । प्रभुरिति शेषः ॥ १९ ॥

रा० टी०—तदाकारमाह—एवमिति । हे राजन् यतः सर्वो जनः ऐश्वर्यमदमत्तः सन् अहमेव प्रभुरिति मन्यते अतः एवं भवद्वचनसदृशं कः प्रभुर्वक्ष्यति प्रभुरिति उभयान्वयि॥१९॥

गो० टी०—एवमिति । अहमिति मन्यते गर्विष्ठो भवतीति यावत् ॥ १७ ॥

२० ] ति० टी०—सन्नतिर्विनयः भविष्यच्छुभयोग्यतां भाविनीं भाग्योन्नतिम् आख्याति सूचयति ॥ २० ॥

रा० टी०—तवेति । इदं वाक्यं तवैव सुसदृशं योग्यं हि युक्तमिदं यतः इयं सन्नतिः तव भविष्यच्छुभयोग्यतामाख्याति कथयति ॥ २० ॥

गो० टी०—तव चेति । सन्नतिः विनयः ॥ १८ ॥

२१–२२ ] ति० टी०—अत्र देशे प्राप्ता वयं यत्र सुग्रीवस्तत्र गन्तुं कृतक्षणाः कृतोत्साहाः ॥ २१ ॥ २२ ॥

रा० टी०—सर्व इति । हरिवीराणामव्ययः पतिः सुग्रीवो यत्र तत्र गन्तुं कृतक्षणाः जातोत्साहाः सन्तः वयं सर्वे प्राप्ताः २१

रा० टी०—त्वयेति । त्वया अनुक्तैः अनाज्ञापितैः हरिभिः पदात्स्थानात् पदं पादमात्रमपि गन्तुं न शक्यम् इदं सत्यं ब्रूमः ॥ २२ ॥

गो० टी०—सर्वे वयमिति । कृतक्षणाः कृतावसराः । अवसरप्रतीक्षा इति यावत् ॥ १९ ॥ २० ॥

२३ ] ति० टी०—महाबलास्ते गच्छाम इत्युक्त्वा खमुत्पेतुरित्यन्वयः ॥ २३ ॥

रा० टी०—एवमिति । एवं वदतां तेषां मध्ये अङ्गदः प्रत्यभाषत गमनाय आज्ञापयत् अत एव महाबलाः अङ्गदप्रभृतयः खमुत्पेतुः ॥ २३ ॥

गो० टी०—एवं त्विति । बाढमित्यङ्गीकारं । इतिशब्दः काकाक्षिन्यायेन पूर्वापरयोरन्वेति । एवं तेषां वदतां तेषु वदत्सु अङ्गदः बाढमिति प्रत्यभाषत । गच्छाम इत्युक्त्वापि उत्पपात ॥ २१ ॥

२४ ] ति० टी०—तत्र क्रममाह—उत्पतन्तमिति ।



---

१ यूथपा इति गो. पाठः । २ मयेति गो. पाठः । ३ अव्ययमिति गो. पाठः । ४ बाढमिति गो. पाठः । ५ अचलाइति गो. पाठः ।

अङ्गदं पुरतः कृत्वा हनूमन्तं च वानरम् । तेऽम्बरं सहसोत्पत्य वेगवन्तः प्लवङ्गमाः ॥ २५ ॥
विनदन्तो महानादं घना वातेरिता यथा । अङ्गदे समनुप्राप्ते सुग्रीवो वानरेश्वरः ॥ २६ ॥
उवाच शोकसंतप्तं रामं कमललोचनम् । समाश्वसिहि भद्रं ते दृष्टा देवी न संशयः ॥ २७ ॥
नागन्तुमिह शक्यं तैरतीतसमयैरिह । अङ्गदस्य प्रहर्षाच्च जानामि शुभदर्शन ॥ २८ ॥
न मत्सकाशमागच्छेत्कृत्ये हि विनिपातिते । युवराजो महाबाहुः प्लवतामङ्गदो वरः ॥ २९ ॥
यद्यप्यकृतकृत्यानामीदृशः स्यादुपक्रमः । भवेत्तु दीनवदनो भ्रान्तविप्लुतमानसः ॥ ३० ॥
पितृपैतामहं चैतत्पूर्वकैरभिरक्षितम् । न मे मधुवनं हन्यादहृष्ट्वा जनकात्मजाम् ॥ ३१ ॥
कौसल्या सुप्रजा राम समाश्वसिहि सुव्रत । दृष्टा देवी न संदेहो न चान्येन हनूमता ॥ ३२ ॥

निराकाशं निरवकाशम् । यन्त्रेत्यादिना दूरोत्पातेन शीघ्रगमनं सूचितम् ॥ २४ ॥

रा० टी०–उत्पतन्तमिति । उत्पतन्तमङ्गदप्रभृतिमनु ते अवशिष्टाः सर्वे हरियूथपाः आकाशं निराकाशमवकाशरहितं कृत्वा यन्त्रोत्क्षिप्ताः उपला इव उत्पेतुः ॥ २४ ॥

गो० टी०–उत्पतन्तमिति । निराकाशं निरवकाशम् २२

२५ ] ति० टी०–सहसोत्पत्य वातेरिता घना इव विनदन्तः जग्मुरिति शेषः । शीघ्रगतया सादृश्यम् ॥ २५ ॥

रा० टी०–गमनप्रकारं बोधयन्नाह—अङ्गदमिति । ते जाम्बवत्प्रभृतयः प्लवङ्गमाः अङ्गदं हनूमन्तं च पुरतोऽग्रे कृत्वा सहसोत्पत्य वातेरिता घना इव महानादं यथा भवति तथा विनदन्तः सन्तः जग्मुरिति शेषः सार्द्धश्लोक एकान्वयी ॥ २५ ॥

गो० टी०–तेऽम्बरमिति । अत्र जग्मुरित्यध्याहार्यम् ॥ २३ ॥ २५ ॥

२६–२७ ] ति० टी०–समनुप्राप्ते निकटमागते सुग्रीवो राममुवाचेत्यन्वयः ॥ २६ ॥ २७ ॥

२८ ] ति० टी०–दृष्टत्वे हेतुः—नेति । अङ्गदप्रहर्षश्च हेत्वन्तरम् ॥ २८ ॥

रा० टी०–अङ्गदे इति । अङ्गदे समनुप्राप्ते दृश्यमाने सतीत्यर्थः सुग्रीवः राममुवाच ॥ २६ ॥

रा० टी०–तदाकारमाह—समिति । यतः अतीतसमयैः इहागन्तुं न शक्यम् अतः तदागमनादित्यर्थः, अङ्गदस्य प्रहर्षाच्च देवी सीता दृष्टेत्यहं जानामि निश्चिनोमि अतः समाश्वसिहि सार्धश्लोक एकान्वयी ॥ २७ ॥ २८ ॥

२९ ] ति० टी०–विनिपातितेऽसाधिते ॥ २९ ॥

रा० टी०–नेति । कृत्ये सीतादर्शने विनिपातिते अनिष्पादिते सति अङ्गदः मत्सकाशं नागच्छेत् यदि अङ्गदो नागच्छेत्तर्हि अन्ये नागच्छेयुरिति किं वक्तव्यमिति काव्यार्थापत्तिरलङ्कारो ध्वनितः ॥ २९ ॥

गो० टी०–नेति । विनिपातिते विघ्निते ॥ २६ ॥

३० ] ति० टी०–यद्यपीति । अकृतकृत्यानामन्येषां वानराणां कपिस्वभावचाञ्चल्यादीदृशमधुवनभङ्गादिरूप उपक्रमो व्यापारो यद्यपि स्यात्तथाप्यङ्गदो दीनवदनत्वादिगुणको भवेत् ॥ ३० ॥

रा० टी०–नन्वसाधितकार्याणामप्यागमनं लोके दृष्टमित्यत आह—यद्यपीति । यद्यपि अकृतकृत्यानामपि ईदृशः उपक्रमः समीपागमनं स्यात् संभवेत् तथापि भ्रान्तिविप्लुतमानसः सन् सोऽङ्गदः दीनवदनो भवेत् एतेन दीनवदनाभावस्य सीतादर्शने लिङ्गत्वं बोधितम् ॥ ३० ॥

गो० टी०–यद्यपीति । अकृतकृत्यानाम् अकृतकार्याणाम् ईदृशः मधुवनभङ्गरूपः उपक्रमः उद्योगः यदि स्यात्तदाङ्गदो दीनवदनत्वादिविशिष्टो भवेत् ॥ २७ ॥

३१ ] ति० टी०–कुतस्तत्राह—पितृपैतामहं पितृपितामहक्रमागतम् ॥ ३१ ॥

रा० टी०–पितृ इति । जनकात्मजाम् अदृष्ट्वा मे मधुवनं न हन्यात् ॥ ३१ ॥

गो० टी०–पितृपैतामहमिति । पिता चासौ पितामहश्च । पित्रा ब्रह्मणा ऋक्षरजसे दत्तं पितृपैतामहम् । प्लवगेश्वरः अङ्गदः ॥ २८ ॥

३२ ] ति० टी०–कौसल्या सुप्रजाः । सीतास्थितिपरिज्ञानेन भवतो जीवनलाभादिदानीं कौसल्या सुपुत्रवत्यभूदिति भावः । तत्रापि हनूमतैव न तु ततोऽन्येनेत्यर्थः ॥ ३२ ॥

रा० टी०–कौसल्येति । देवी दृष्टा तत्रापि हनुमतैव अत एव कौशल्या सुप्रजा शोभनपुत्रवती अस्तीति शेषः अतः समाश्वसिहि ॥ ३२ ॥

गो० टी०–कौसल्येति । हे राम ! कौसल्या सुप्रजाः सुप्रजावती । "नित्यमसिच् प्रजामेधयोः" इत्यसिच्प्रत्ययः एवं देव्याः स्थानज्ञानेन भवतः सत्तालाभादिदानीं कौसल्या सुप्रजावती अभूदिति शेषः ॥ २९ ॥ ३० ॥

१ अर्धमेतत् गो. नास्ति । २ वानराधिप इति गो. पाठः । ३ शोकोपहतमिति गो. पाठः । ४ अतीते समये हि नः इति गो. पाठः । ५ अर्धमेतत् गो. नास्ति । ६ युवतां प्रवरोऽङ्गद इति गो. पाठः । ७ स इति गो. पाठः । ८ अदृष्ट्वा प्लवगेश्वर इति गो. पाठः ।

न[1]ह्यस्य कर्मणो हेतुः[2] साधने तद्विधो भवेत् । हनू[3]मतीह सिद्धिश्च मतिश्च मतिसत्तम ॥ ३३ ॥
व्यवसायश्च [4]शौर्यं च श्रुतं चापि प्रतिष्ठितम् । जाम्बवान्यत्र नेता स्यादङ्गदश्च [5]हरीश्वरः ॥ ३४ ॥
हनूमांश्चाप्यधिष्ठाता न [6]तत्र गतिरन्यथा । मा भूश्चिन्तासमायुक्तः संप्रत्यमितविक्रम ॥ ३५ ॥
[7]यदा हि दर्पितोदग्राः संगताः काननौकसः । नैषामकृतकार्याणामीदृशः स्यादुपक्रमः ॥ ३६ ॥
वनभङ्गेन जानामि मधूनां भक्षणेन च । ततः किलकिलाशब्दं शुश्रावासन्नमम्बरे ॥ ३७ ॥
हनूमत्कर्मदृप्तानां [8]नदतां काननौकसाम् । किष्किन्धामुपयातानां सिद्धिं कथयतामिव ॥ ३८ ॥
ततः श्रुत्वा निनादं तं कपीनां कपिसत्तमः । आयताञ्चितलाङ्गूलः सोऽभवद्धृष्टमानसः ॥ ३९ ॥
आजग्मुस्तेऽपि हरयो रामदर्शनकाङ्क्षिणः । अङ्गदं पुरतः कृत्वा हनूमन्तं च वानरम् ॥ ४० ॥
तेऽङ्गदप्रमुखा वीराः प्रहृष्टाश्च [9]मुदान्विताः । निपेतुर्हरिराजस्य समीपे राघवस्य च ॥ ४१ ॥
हनूमांश्च महाबाहुः प्रणम्य शिरसा ततः । नियतामक्षतां देवीं राघवाय न्यवेदयत् ॥ ४२ ॥
[10]दृष्टा देवीति हनुमद्वदनादमृतोपमम् । आकर्ण्य वचनं रामो हर्षमाप सलक्ष्मणः ॥ ४३ ॥
निश्चितार्थं ततस्तस्मिन्[11]सुग्रीवं पवनात्मजे । लक्ष्मणः प्रीतिमान्[12]प्रीतो बहुमानादवैक्षत ॥ ४४ ॥
प्रीत्या च [13]परमोपेतो राघवः परवीरहा । बहुमानेन महता हनूमन्तमवैक्षत ॥ ४५ ॥

इत्यार्षे श्रीमद्रामायणेवाल्मीकीय आदिकाव्ये सुन्दरकाण्डे चतुःषष्टितमः सर्गः ॥ ६४ ॥

---

३३-३४ ] ति० टी०-अस्य कर्मणः साधने तद्विधो हेतुरपरो न भवेन्नास्ति । इह हनुमत्येतत्कार्यसाधिका सिद्धिर्ब्रह्मवरजन्या मतिश्चास्ति । हि यतः । व्यवसाय उद्यमः नेता प्रधानः ॥ ३३ ॥ ३४ ॥

रा० टी०-हनुमत एव दर्शने हेतुमाह—नेति । तद्विधः परमोत्तमबुद्धिधारको हनुमान् अस्य वाटिकाविध्वंसरूपस्य कर्मणः साधने हेतुर्न भवेत् अतः हनुमत्येव सिद्धिः इतीह अस्मिन् समये मतिर्मम निश्चयः ॥ ३३ ॥

रा टी०-हनुमतः साधने योग्यतामाह—व्यवसाय इति । व्यवसायप्रभृति प्रतिष्ठितं हनुमतीत्यनुकृष्यते । अर्धं पृथक्! जाम्बवानिति । यत्र सैन्ये जाम्बवत्प्रभृतिः नेत्रादिः तत्र अन्यथा गतिः उत्पथगमनं न स्यात् एतेन सीतादर्शनजनितानन्द एवोत्पथगमने हेतुरिति सूचितम् ॥ ३४ ॥

गो० टी०-जाम्बवानिति । यत्र कार्ये नेता मन्त्री बलेश्वरः सेनापतिः अधिष्ठाता संरक्षक इत्यर्थः । तस्य कार्यस्य गतिः सिद्धिः अन्यथा विपरीता न भवेत् । संप्रति चिन्तासंयुक्तो मा भूः ॥ ३१ ॥ ३२ ॥

३५ ] ति० टी०-अधिष्ठाता कार्यकरणोद्योगवान् ॥३५॥

रा० टी०-मेति । यदा यदि काननौकसः दर्पितोदग्राः प्रवृद्धदर्पाः सन्तः सङ्गताः तर्हि चिन्तासमायुक्तस्त्वं मा भूः॥३५॥

३६-३८ ] ति० टी०-यदाहि । यत इत्यर्थः ॥३६-३८॥

रा० टी०-उपसंहरन्नाह-नेति । अकृतकार्याणामेषामीदृश आनन्दहेतुकोपद्रवकारक उपक्रमो न स्यात् अत एव वनभङ्गादिना जानामि सीतादर्शननिष्पत्तिं निश्चिनोमि ॥ ३६ ॥

रा० टी०-तत इति । ततः सुग्रीवकर्तृकोक्त्यनन्तरं सिद्धिं कथयतामिव किष्किन्धामुपयातानां काननौकसाम् आसन्नं समीपवर्तिनं किलकिलाशब्दं शुश्राव । सार्धश्लोक एकान्वयी ॥ ३७ ॥ ३८ ॥

गो० टी०-तत इत्यादि । सिद्धिं कथयतामिव । उत्साहेनेति शेषः ॥ ३३ ॥

३९-४१ ] ति० टी०-आयताञ्चितलाङ्गूल इति स्वभावोक्त्यलंकारः ॥ ३९ ॥ ४१ ॥

रा० टी०-तत इति । कपीनां नादं श्रुत्वा हृष्टमानसः अत एव आयताञ्चितं लाङ्गूलं यस्य स सुग्रीवोऽभवत् ॥ ३९ ॥

रा० टी०-आजग्मुरिति । रामदर्शनकाङ्क्षिणस्ते हरय आजग्मुः समीपं प्रापुः ॥ ४० ॥

रा० टी०-ते इति । प्रहृष्टाः प्राप्तसंतोषाः अत एव मुदान्विताः अङ्गदप्रमुखाः समीपे निपेतुः ॥ ४१ ॥

गो० टी०-तत इति । आयताञ्चितलाङ्गूलः आयतः दीर्घीकृतः अञ्चितः माल्यवच्छृङ्गे समास्थापितः ॥ ३४ ॥३५॥

गो० टी०-त इति । प्रहृष्टाः सञ्जातपुलकाः ॥ ३६ ॥

४२-४५ ] ति० टी०-नियतां पातिव्रत्यसंपन्नाम् अक्षतां शरीरेण कुशलिनीम् ॥ ४२ ॥ ४५ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये सुन्दरकाण्डे चतुःषष्टितमः सर्गः ॥ ६४ ॥

---

१ अन्य इति गो. पाठः । २ ऽस्य हनूमत इति गो. पाठः । ३ मति हीति गो. पाठः । ४ वीर्यं च सूर्ये तेज इव ध्रुवमिति गो. पाठः । ५ बलेश्वर इति गो. पाठः । ६ तस्येति गो. रा. पाठः । ७ एतदादिः सार्धः श्लोकः गो. नास्ति । ८ नर्दतामिति गो. पाठः । ९ मुदान्विता इति गो. पाठः । १० श्लोकोऽयं गो. नास्ति । ११ सुग्रीव इति गो. पाठः । १२ प्रीतमिति गो. पाठः । १३ रममाणोऽथेति गो. पाठः ।

## पञ्चषष्टितमः सर्गः ।

सीताप्रवृत्तिं प्रति रामेण पृष्टो हनुमाञ्छिंशपामूले राक्षसीमध्ये तस्याः स्थितिं निवेदयंस्तदुक्ताभिज्ञाननिवेदनपूर्वकं संदेशं कथयति ।

ततः प्रस्रवणं शैलं ते गत्वा चित्रकाननम् । प्रणम्य शिरसा रामं लक्ष्मणं च महाबलम् ॥ १ ॥
युवराजं पुरस्कृत्य सुग्रीवमभिवाद्य च । प्रवृत्तिमथ सीतायाः प्रवक्तुमुपचक्रमे ॥ २ ॥
रावणान्तःपुरे रोधं राक्षसीभिश्च तर्जनम् । रामे समनुरागं च यथा च नियमः कृतः ॥ ३ ॥
एतदाख्याय ते सर्वे हरयो रामसंनिधौ । वैदेहीमक्षतां श्रुत्वा रामस्तूत्तरमब्रवीत् ॥ ४ ॥
क्व सीता वर्तते देवी कथं च मयि वर्तते । एतन्मे सर्वमाख्यात वैदेहीं प्रति वानराः ॥ ५ ॥
रामस्य गदितं श्रुत्वा हरयो रामसंनिधौ । चोदयन्ति हनूमन्तं सीतावृत्तान्तकोविदम् ॥ ६ ॥
श्रुत्वा तु वचनं तेषां हनूमान्मारुतात्मजः । प्रणम्य शिरसा देव्यै सीतायै तां दिशं प्रति ॥ ७ ॥

---

रा० टी०–हनूमानिति । हनुमान् प्रणम्य नियतां यतचित्ताम् अक्षतां विनाशरहितां देवीं सीतां राघवाय न्यवेदयत् ॥ ४२ ॥

रा० टी०–दृष्टेति । हनुमद्वदनान्निःसृतम् अमृतोपमं दृष्टा देवीति वचनमाकर्ण्य रामो हर्षमाप ॥ ४३ ॥

रा० टी०–निश्चितार्थमिति । पवनात्मजे निश्चितः अर्थः सीतादर्शनं येन तं सुग्रीवं हनुमन्तं च प्रीतिमान् लक्ष्मणोऽवैक्षत प्रीत्याऽतिप्रेम्णोपलक्षितः परमया लक्ष्म्या अपि परया सीतयेत्यर्थः, उपेतो मनसा संयुक्तो राघवश्च महता प्रशंसनीयेन बहुमानेनावैक्षत श्लोकद्वयं संमिलितान्वयि ॥ ४४–४५ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ सुन्दरकाण्डे चतुःषष्टितमः सर्गः ॥ ६४ ॥

गो० टी०–हनुमांश्चेति । नियतामिति । अक्षतत्वेऽप्यनियतत्वे वैयर्थ्यम् नियतत्वेऽपि क्षतत्वे च तथा । ततः आवश्यकमुभयं संग्रहेण दर्शयति ॥ अस्मिन्सर्गे सार्धैकोनचत्वारिंशच्छ्लोकाः ॥ ३७ ॥ ३९ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने चतुःषष्टितमः सर्गः ॥ ६४ ॥

१-२ ] ति० टी०–तत इति ॥ १ ॥ २ ॥

रा० टी०–वानरप्राप्त्यनन्तरकालिकं वृत्तान्तमाह–तत इत्यादिभिः । ते हनुमत्प्रभृतयः सीतायाः प्रवृत्तिं वृत्तान्तं प्रवक्तुमुपचक्रमुः । श्लोकद्वयमेकान्वयि ॥ १ ॥ २ ॥

गो० टी०–तत इति । प्रवृत्तिं वार्ताम् ॥ १ ॥ २ ॥

३ ] ति० टी०–नियमो रावणकृतावधिरूपः । 'दशमो वर्तते मासो द्वौ तु शेषौ प्लवंगम' इति सीतोक्तेः । तं चेति शेषः ॥ ३ ॥

रा० टी०–तदुक्तिप्रकारं बोधयन्नाह–रावणेति । रावणान्तःपुरे रोधं निरोधं राक्षसीभिस्तर्जनं च सीतायाः इति शेषः यथा येन प्रकारेण नियमः दशमो वर्तते मासो द्वौ च शेषौ प्लवङ्गमेत्यादिनोक्तोऽवधिः कृतः सीतयेति शेषः एतत्सर्वं रामसंनिधौ ते हरय आख्याय अतिष्ठन्तेति शेषः सार्धश्लोक एकान्वयी ॥ ३ ॥

गो० टी०–रावणेति । रोधं निरोधम् । यश्चायं समयः कृतः । मासद्वयादूर्ध्वं हनिष्यामीति यः संकेतो रावणेन कृत इत्यर्थः । मासशब्दः पक्षपर इत्युक्तं प्राक् । तमिति शेषः ॥ ३—६ ॥

४-५ ] ति० टी०–रामसंनिधौ । स्थिता इति शेषः ॥ ४-५ ॥

रा० टी०–वैदेहीमिति । अक्षताम् अहिंसितां वैदेहीं श्रुत्वा उत्तरं श्रेष्ठं वचनं रामोऽब्रवीत् । अर्धं पृथक् । तद्वचनाकारमाह–क्वेति । सीता क्व वर्तते मयि कथं केन भावेन वर्तते वैदेहीं प्रति वैदेहीसंबन्धि एतत्सर्वं यूयमाख्यात केन भावेन इत्युक्त्या द्रुतस्वकर्तृकरावणवधाभावजनितसीतामर्षविषयकसंभावना सूचिता । अर्धद्वयमेकान्वयि ॥ ४ ॥ ५ ॥

६ ] ति० टी०–चोदयन्ति प्रेरयन्ति स्म ॥ ६ ॥

रा० टी०—रामस्येति । रामस्य वचनं श्रुत्वा हरयो वानराः सीतावृत्तान्तकोविदं हनुमन्तं चोदयन्ति वृत्तान्तकथनाय प्रैरयन्त ॥ ६ ॥

७ ] ति० टी०–सीतायै प्रणम्य तां दिशं प्रति च प्रणम्येत्याकर्षः ॥ ७ ॥

रा० टी०–श्रुत्वेति । हनुमान् तेषां वचनं श्रुत्वा सीतायै तां दक्षिणां दिशं प्रति च प्रणम्य यथा येन प्रकारेण सीताया दर्शनमभवदिति शेषः तथा वाक्यमुवाच । सार्धश्लोक एकान्वयी ॥ ७ ॥

गो० टी०–श्रुत्वा त्वित्यादि । प्रणामश्च सीतायाः

---



१ चक्रमुरिति गो. रा. पाठः । २ यश्चायं समय इति गो. पाठः । ३ आख्यान्तीति गो. पाठः । ४ सर्वे इति गो. पाठः ।

उवाच वाक्यं वाक्यज्ञः सीताया दर्शनं यथा । [1]तं मणिं काञ्चनं दिव्यं दीप्यमानं स्वतेजसा॥ ८ ॥
दत्त्वा रामाय हनुमांस्ततः प्राञ्जलिरब्रवीत् । समुद्रं लङ्घयित्वाहं शतयोजनमायतम् ॥ ९ ॥
अगच्छं जानकीं सीतां मार्गमाणो दिदृक्षया । तत्र लङ्केति नगरी रावणस्य दुरात्मनः ॥ १० ॥
दक्षिणस्य समुद्रस्य तीरे वसति दक्षिणे । तत्र सीता मया दृष्टा रावणान्तःपुरे सती ॥ ११ ॥
त्वयि संन्यस्य जीवन्ती रामा राम मनोरथम् । दृष्टा मे राक्षसीमध्ये तर्ज्यमाना मुहुर्मुहुः ॥ १२ ॥
राक्षसीभिर्विरूपाभी रक्षिता प्रमदावने । दुःखमापद्यते देवी त्वया वीर सुखोचिता ॥ १३ ॥
रावणान्तःपुरे रुद्धा राक्षसीभिः सुरक्षिता । एकवेणीधरा दीना त्वयि चिन्तापरायणा ॥ १४ ॥
अधःशय्या विवर्णाङ्गी पद्मिनीव हिमागमे । रावणाद्विनिवृत्तार्था मर्तव्यकृतनिश्चया ॥ १५ ॥
देवी कथंचित्काकुत्स्थ त्वन्मना मार्गिता मया । इक्ष्वाकुवंशविख्यातिं शनैः कीर्तयतानघ ॥ १६ ॥
सा मया नरशार्दूल शनैर्विश्वासिता तदा । ततः संभाषिता देवी सर्वमर्थं च दर्शिता ॥ १७ ॥
रामसुग्रीवसख्यं च श्रुत्वा हर्षमुपागता । नियतः समुदाचारो भक्तिश्चास्याः सदा त्वयि॥ १८ ॥

---

स्मरणकृत इति बोध्यम् । सीताया दर्शनं यथेति । येन प्रकारेण सीतादर्शनं जातं तेन प्रकारेणोवाचेत्यन्वयः ॥ ७ ॥

८-९ ] ति० टी०-यथा येन प्रकारेण सीताया दर्शनं जातं तत्परं वाक्यमुवाचेत्यर्थः ॥ ८ ॥ ९ ॥

रा० टी०-तदेव भङ्ग्यन्तरेणाह-तमिति । तं सीतया दत्तं मणिं रामाय दत्त्वा हनुमानब्रवीत् ॥ ८ ॥

रा० टी०-तद्वचनाकारमाह--समुद्रमिति । शतयोजनमायतं समुद्रं लङ्घयित्वा सीतां मार्गमाणोऽहम् अगच्छं सागरदक्षिणतीरमिति शेषः ॥ ९ ॥

गो० टी०-समुद्रमिति । दिदृक्षया न तु श्रोतुमिच्छया । मार्गमाण इत्यर्थः ॥ ८ ॥

१०]ति०टी०-देव्या दिदृक्षया तां मार्गमाणोऽगच्छम्॥१०॥

रा० टी०-तत्रेति । तत्र प्रसिद्धे दक्षिणस्य समुद्रस्य तीरे रावणस्य लङ्केति नगरी वसति अस्ति ॥ १० ॥

गो०टी०-तत्रेति । तत्र लङ्घने कृते सति ॥ ९ ॥

११]ति०टी०-तीरे दक्षिणसमुद्रसंबन्धिद्वीपसंनद्धतीरे॥११॥

रा० टी०-तत्रेति । तत्र लङ्कायां रावणान्तःपुरे सती सीता मया दृष्टा अर्धं पृथक् ॥ ११ ॥

गो० टी०-तत्र दृष्टेति । हे राम ! रामा सीता त्वयि मनोरथं स्वाभिलाषम् संन्यस्य जीवन्ती त्वदभिलाषेण धृतजीवितेत्यर्थः ॥ १० ॥ ११ ॥

१२ ] ति० टी०-हे राम, रामा सा सीता त्वयि मनोरथं सम्यङ् न्यस्य त्वदतिरिक्तविषयमनोरथाभाववती भूत्वा जीवन्ती धृतप्राणा मया दृष्टा ॥ १२ ॥

रा० टी०-तदेव भङ्ग्यन्तरेणाह-त्वयीति । राक्षसीमध्ये मुहुर्मुहुस्तर्ज्यमाना मनोरथं त्वयि संन्यस्य जीवन्ती रामा सीता मया दृष्टा ॥ १२ ॥

१३-१४ ] ति० टी०-सुखोचिता देवी त्वया विना दुःखमापद्यते इत्यन्वयः ॥ १३ ॥ १४ ॥

१५-१६ ] ति० टी०-अधःशय्या भूशयना ॥ १५-१६ ॥

रा० टी०-राक्षसीभिरिति । त्वया सुखोचिता अक्षता अहिंसिता सीता प्रमदावने राक्षसीभिः करणैर्दुःखमापद्यते प्राप्नोति ॥ १३ ॥

गो० टी०-दुःखमित्यर्थम् । असाद्यते आसीदति । आर्षो यत् ॥ १२ ॥

रा० टी०-रावणेति । राक्षसीभिः सुरक्षिता अधः भूमौ शय्या शयनं यस्याः हिमागमे पद्मिनीव विवर्णाङ्गी तत्वेन प्रतीयमाना रावणाद्धेतोः विनिवृत्तः अर्थः त्वत्सेवारूपपरमप्रयोजनं यस्या अत एव मर्तव्ये मरणे कृतः निश्चयो यया सा देवी सीता इक्ष्वाकुवंशविख्यातिं कीर्तयता मया कथञ्चित् मार्गिता श्लोकत्रयमेकान्वयि ॥ १४-१६ ॥

गो० टी०-रावणान्तःपुर इत्यादि । एकवेणीधरा त्रिधा विभागं विना बद्धः केशपाशः एकवेणीत्युच्यते । अधःशय्याः स्थण्डिलशायिनी मर्तव्ये मरणे कृतनिश्चया ॥१३-१६

१७ ] ति० टी०-सर्वमर्थं रामसुग्रीवसख्यादि दर्शिता ज्ञापिता ॥ १७ ॥

रा० टी०-सेति । सा मार्गिता सीता शनैर्विश्वासिता रामदूतोऽयमिति विश्वासं प्रापिता ततोऽनन्तरं संभाषिता कृतप्रभा अत एव सर्वमर्थं वृत्तान्तं दर्शिता बोधिता ॥ १७ ॥

गो० टी०-तत इति । सर्वमर्थं च दर्शिता सुग्रीवसख्यप्रभृतिसर्वमर्थं च बोधिता ॥ १६ ॥

१८ ] ति० टी०-नियत इति । समुदाचारो गोत्रास्खलनादिव्यवहारो भक्तिश्च त्वयि त्वय्येव सदा नियतः । नान्यत्रेत्यर्थः ॥ १८ ॥

---



१ अर्धद्वयमेतत् गो. नास्ति । २ संन्यस्य त्वयीति गो. पाठः । ३ आसाद्यते देवी तथाऽदुःखोचिता सतीति गो. पाठः । ४ विश्वासमुपपादितेति गो. पाठः । ५ प्रीतिमिति गो. पाठः । ६ तथेति गो. पाठः ।

एवं मया महाभाग दृष्टा जनकनन्दिनी । उग्रेण तपसा युक्ता त्वद्भक्त्या पुरुषर्षभ ॥ १९ ॥
अभिज्ञानं च मे दत्तं यथावृत्तं तवान्तिके । चित्रकूटे महाप्राज्ञ वायसं प्रति राघव ॥ २० ॥
विज्ञाप्यः पुनरप्येष रामो वायुसुत त्वया । अखिलेन यथादृष्टमिति मामाह जानकी ॥ २१ ॥
अयं चास्मै प्रदातव्यो यत्नात्सुपरिरक्षितः । ब्रुवता वचनान्येवं सुग्रीवस्योपशृण्वतः ॥ २२ ॥
एष चूडामणिः श्रीमान्मया ते यत्नरक्षितः । मनःशिलायास्तिलकं तत्स्मरस्वेति चाब्रवीत् ॥ २३ ॥
[ त्वया प्रणष्टे तिलके तं किल स्मर्तुमर्हसि ॥ ]
एष निर्यातितः श्रीमान्मया ते वारिसंभवः । एनं दृष्ट्वा प्रमोदिष्ये व्यसने त्वामिवानघ ॥ २४ ॥
जीवितं धारयिष्यामि मासं दशरथात्मज । ऊर्ध्वं मासान्न जीवेयं रक्षसां वशमागता ॥ २५ ॥
इति मामब्रवीत्सीता कृशाङ्गी धर्मचारिणी । रावणान्तःपुरे रुद्धा मृगीवोत्फुल्ललोचना ॥ २६ ॥

---

रा० टी०–रामेति । रामसुग्रीवसख्यं श्रुत्वा हर्षं प्रमोदमुपागता प्राप्ता । अर्थं पृथक्--नियत इति । अस्या मद्बुद्धिस्थायाः सीतायास्त्वयि भक्तिः परप्रीतिः तथा समुदाचारः तदनुकूलानुचरणं नियतः नियमेन वर्तमानोऽस्तीति शेषः ॥ १८ ॥

गो० टी०–नियत इति । समुदाचारः परपुरुषाचिन्तकत्वादिः त्वयि भक्तिश्च । वर्तत इति शेषः । तपसा अनशनेन ॥ १७ ॥ १८ ॥

१९-२० ] ति० टी०–उग्रेण तपसा त्वद्भक्त्या च युक्ता ॥ १९ ॥ २० ॥

रा० टी०–एवमिति । उग्रेण तपसा त्वद्भक्त्या च युक्ता जनकनन्दिनी एवमुक्तप्रकारेण मया दृष्टा ॥ १९ ॥

रा० टी०–अभिज्ञानमिति । चित्रकूटे वायसं जयन्तं प्रति तवान्तिके यद्वृत्तं वृत्तान्तं तदभिज्ञानं मत्संवादचिह्नं मे मह्यं दत्तं कथितमित्यर्थः ॥ २० ॥

गो० टी०–अभिज्ञानमिति । अभिज्ञानं चिह्नभूतं वाक्यम् तवान्तिके पूर्वं यथा येन प्रकारेण जातं तथा दत्तमित्यर्थः। तदेव दर्शयति—चित्रकूट इति । सदस्यवक्तव्यत्वात् सूचनोक्तिः ॥ १९ ॥

२१ ] ति० टी०–यथा दृष्टं राक्षसीतर्जनादि तद्विज्ञाप्येत्यन्वयः ॥ २१ ॥

रा० टी०–सीतायाः वचनान्तरमाह--विज्ञाप्य इति । वायुसुत यथा येन प्रकारेण त्वया दृष्टं तथा अखिलेन निःशेषम् एषः मद्धृदये स्थितो रामः त्वया विज्ञाप्यः वक्तव्य इति मां जानकी आह ॥ २१ ॥

गो० टी०–विज्ञाप्यश्चेति । अखिलेनेति । रावणागमनादिकमित्यर्थः ॥ २० ॥

२२ ] ति० टी०–उपशृण्वतः सुग्रीवस्य समक्षं दातव्य इत्यब्रवीदिति शेषः ॥ २२ ॥

रा० टी०–अयमिति । एवं वचनानि उपशृण्वतः सुग्रीवस्य समीपे ब्रुवता त्वया यत्नात् त्वत्प्रयत्नं विज्ञाप्य सुपरिरक्षितः स्वदेह इति शेषः अयं वृत्तान्तसमूहः त्वया प्रदातव्यः वक्तव्य इत्यर्थः ॥ २२ ॥

गो० टी०–अयं चास्मा इत्यादि । सुग्रीवस्योपशृण्वतः सुग्रीवे समीपे शृण्वति सति एवं एष चूडामणिरित्यारभ्य रक्षसां वशमागतेत्यन्तवक्ष्यमाणप्रकारेण वचनानि रामं प्रति मयोक्तवचनानि ब्रुवता त्वया अयं मणिरित्यर्थः प्रदातव्यः ॥ २१–२४ ॥

२३ ] ति० टी०–एष इति । दत्तस्तं पश्य । यन्मनःशिलायास्तिलकं त्वया कृतं तत्स्मरस्वेति चाब्रवीत् ॥ २३ ॥

रा० टी०–एष इति । यत्नरक्षितः एष मया दत्तो यो मणिः तं तत् पूर्वं त्वया कृतं मनःशिलायाः तिलकं च स्मरस्व इत्यब्रवीत् सीतेति शेषः ॥ २३ ॥

२४ ] ति० टी०–एष वारिसंभवो मणिर्निर्यातितः प्रेषितः एनमेतत्त्वत्प्रेषितमङ्गुलीयकम् ॥ २४ ॥

रा० टी०–एष इति । यया मया वारिसंभवः एष मणिः निर्यातितः प्रेषितः सा व्यसने दुःखे स्थिताऽहम् एतत् त्वत्प्रेषिताङ्गुलीयकं त्वामिव पश्यामि ॥ २४ ॥

२५–२६ ] ति० टी०–मासात् । विद्यमानाद्दशमादूर्ध्वमित्यर्थः ॥ २५ ॥ २६ ॥

रा० टी०–जीवितमिति । मासादूर्ध्वं न जीवेयम् ॥२५॥

रा० टी०–इतीति । सीता मामित्यब्रवीत् ॥ २६ ॥

गो० टी०–इति मामिति । मृगीवोत्फुल्ललोचना । त्रासातिशयादिति भावः ॥ २५ ॥

---

१ भागेति गो. पाठः। २ च मत्ख्यात्र इति गो. पाठः। ३ इह यदिति गो. पाठः। ४ सुपरिरक्षित इति गो. पाठः। ५ तिलको गण्डपार्श्वे निवेशित इति गो. पाठः । ६ अर्धमेतदधिकं गो. पाठे। ७ एतामिति गो. एतदिति रा. पाठः।

एतदेव मयाख्यातं सर्वं राघव यद्यथा । सर्वथा सागरजले संतारः प्रविधीयताम् ॥ २७ ॥
तौ जाताश्वासौ राजपुत्रौ विदित्वा तच्चाभिज्ञानं राघवाय प्रदाय ।
देव्या चाख्यातं सर्वमेवानुपूर्व्याद्वाचा संपूर्णं वायुपुत्रः शशंस ॥ ॥ २८ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये सुन्दरकाण्डे पञ्चषष्टितमः सर्गः ॥ ६५ ॥

## षट्षष्टितमः सर्गः ।

सीताप्रेषितचूडामणिं वक्षसि निक्षिप्य सकरुणं बहुधा विलपन्रामः पुनर्हनुमन्तं सीतावचनं निवेदयितुमनुयुङ्क्ते ।

एवमुक्तो हनुमता रामो दशरथात्मजः । तं मणिं हृदये कृत्वा रुरोद[1] सहलक्ष्मणः ॥ १ ॥
तं तु दृष्ट्वा मणिश्रेष्ठं राघवः शोककर्शितः । नेत्राभ्यामश्रुपूर्णाभ्यां सुग्रीवमिदमब्रवीत् ॥ २ ॥
यथैव धेनुः स्रवति स्नेहाद्वत्सस्य वत्सला । तथा ममापि हृदयं मणिश्रेष्ठ[2]स्य दर्शनात् ॥ ३ ॥
मणिरत्नमिदं दत्तं वैदेह्याः श्वशुरेण मे । वधूकाले यथा बद्धमधिकं मूर्ध्नि शोभते ॥ ४ ॥
अयं हि जलसंभूता मणिः [3]प्रवरपूजितः । यज्ञे परमतुष्टेन दत्तः शक्रेण धीमता ॥ ५ ॥

---

२७-२८ ] ति० टी०-संतारः संतारोपायः । प्रविधीयतां प्रविचार्यताम् ॥ २७ ॥ २८ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये सुन्दरकाण्डे पञ्चषष्टितमः सर्गः ॥ ६५ ॥

रा० टी०-एतदिति । यथा यथावत् तदेतत् सर्वमाख्यातम् अतः सागरजले संतारः संतरणोपायः प्रविधीयतां क्रियताम् ॥ २७ ॥

गो०टी०-एतदेवेति । सन्तीर्यतेऽनेनेति संतारः सेतुः २६ ॥

रा० टी०-ताविति । जाताश्वासौ प्राप्ताश्वासनौ राजपुत्रौ विदित्वा सर्वम् अभिज्ञानं प्रदाय देव्या सीतया आख्यातं संपूर्णं वायुपुत्रो वाचा शशंस ॥ २८ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ सुन्दरकाण्डे पञ्चषष्टितमः सर्गः ॥ ६५ ॥

गो० टी०-ताविति । पूर्ववद्वैश्वदेवीवृत्तम् । समुद्रतरणे सुरसानिरसनादिकम् अक्षवधलङ्कादहनादिकं सजातीयेभ्यः पूर्वमुक्तमपि प्रभुसंनिधावात्मश्लाघायां पर्यवस्येदिति नोक्तमिति ध्येयम् । स्ववृत्तान्तं सर्वमाख्यातवानिति सामान्येन वक्तुं युक्तत्वेऽप्यङ्गदसन्निधौ प्रपञ्चनं गोप्यविशेषगोपनार्थम् । अत्र त्वप्रपञ्चनम् अकथनीयाकथनार्थं चेति ज्ञेयम् ॥ २७ ॥

अस्मिन्सर्गे सार्धसप्तविंशतिश्लोकाः ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने पञ्चषष्टितमः सर्गः ॥ ६५ ॥

---

१-२ ] ति० टी०-एवमिति ॥ १ ॥ २ ॥

रा० टी०-अभिज्ञानप्राप्त्यनन्तरकालिकं रामवृत्तान्तमाह एवमित्यादिभिः । रुरोद आनन्दाश्रूणि मुमोच ॥ १ ॥

रा० टी०-तमिति । शोककर्शितो राघवः तं हनुमत्समर्पितं मणिश्रेष्ठं दृष्ट्वा अश्रुपूर्णाभ्यां नेत्राभ्यामुपलक्षितः सन् सुग्रीवमब्रवीत् ॥ २ ॥

गो० टी०-एवमित्यादि ॥ १ ॥ २ ॥

३ ] ति० टी०-वत्सस्येत्यत्रापि दर्शनादिति संबध्यते । तथा स्नेहात्स्रवतीत्यनुकर्षः ॥ ३ ॥

रा० टी०-तदाकारमाह-यथेति । वत्सस्य दर्शनात् स्नेहात् वत्सला धेनुः यथा स्रवति तथा मणिश्रेष्ठस्य दर्शनात् मम हृदयमपि स्रवति ॥ ३ ॥

गो० टी०-यथैवेति । यथा वत्सला वत्से स्नेहवती धेनुः वत्सस्य स्नेहाद्वत्सविषयकस्नेहात् स्रवत्येव द्रवत्येव तथा मणिरत्नस्य मणिश्रेष्ठस्य दर्शनान्मम हृदयं द्रवति ॥ ३ ॥

४ ] ति० टी०-मे श्वशुरेण जनकेन वधूकाले वधूत्वसंपादके काले विवाहकाले वैदेह्याः शिरोभूषणाय सीतामातृहस्तादृहीत्वा दशरथहस्ते दत्तम् । तच्च तस्मिन्काले यथाधिकं शोभते तथा मूर्ध्नि बद्धमित्यर्थः ॥ ४ ॥

रा० टी०-मणीति । वधूकाले सीतावधूत्वप्राकट्यसमये मे श्वशुरेण वैदेह्या वैदेह्यै दत्तम् इदं मणिरत्नं मूर्ध्नि यथा यथावद्बद्धं सत् अधिकं शोभते अशोभिष्ट ॥ ४ ॥

गो० टी०-मणेरागतिमाह-मणिरत्नमिति । मे श्वशुरेण जनकेन वधूकाले वधूप्रतिग्रहकाले विवाहकाल इत्यर्थः । यथा शोभते तथा बद्धमित्यन्वयः ॥ ४ ॥

५ ] ति० टी०-जनकस्याप्येतदागमः कुतस्तत्राह—अयं हीति । प्रवरैः श्रेष्ठैर्देवैः पूजितः ॥ ५ ॥

रा० टी०-अयमिति । प्रवरैर्देवैः पूजितः जलसंभूतोऽयं मणिः यज्ञे परमतुष्टेन शक्रेण दत्तः जनकायेति शेषः ॥ ५ ॥

---



१ प्ररुरोद सलक्ष्मण इति गो. पाठः । २ रत्नस्येति गो. पाठः । ३ सज्जनैरिति गो. पाठः ।

इमं दृष्ट्वा मणिश्रेष्ठं तथा तातस्य दर्शनम् । अद्यास्म्यवगतः सौम्य वैदेहस्य तथा विभोः ॥ ६ ॥
अयं हि शोभते तस्याः प्रियाया मूर्ध्नि मे मणिः । अद्यास्य दर्शनेनाहं प्राप्तां तामिव चिन्तये ॥ ७ ॥
किमाह सीता वैदेही ब्रूहि सौम्य पुनः पुनः । परासुमिव तोयेन सिञ्चन्ती वाक्यवारिणा ॥ ८ ॥
इतस्तु किं दुःखतरं यदिमं वारिसंभवम् । मणिं पश्यामि सौमित्रे वैदेहीमागतं विना ॥ ९ ॥
चिरं जीवति वैदेही यदि मासं धरिष्यति । क्षणं वीर न जीवेयं विना तामसितेक्षणाम् ॥ १० ॥
नय मामपि तं देशं यत्र दृष्टा मम प्रिया । न तिष्ठेयं क्षणमपि प्रवृत्तिमुपलभ्य च ॥ ११ ॥
कथं सा मम सुश्रोणी भीरुभीरुः सती तदा । भयावहानां घोराणां मध्ये तिष्ठति रक्षसाम् ॥ १२ ॥
शारदस्तिमिरोन्मुक्तो नूनं चन्द्र इवाम्बुदैः । आवृतो वदनं तस्या न विराजति सांप्रतम् ॥ १३ ॥
किमाह सीता हनुमंस्तत्त्वतः कथयस्व मे । एतेन खलु जीविष्ये भेषजेनातुरो यथा ॥ १४ ॥

---

गो० टी०—जनकेनापि कुतस्तल्लब्धं तत्राह—अयं हीति ॥ ५ ॥

६–७ ] ति० टी०—तथा यथा सीतादर्शनमवगतः प्राप्तस्तथा तातस्य दशरथस्य प्राप्तः तद्धस्ते जनकेन दानात्तस्य स्मरणम् तथा वैदेहस्य राज्ञो जनकस्य सपत्नीकस्य दर्शनं प्राप्त इत्यर्थः ॥ ६ ॥ ७ ॥

रा० टी०—इममिति । मणिश्रेष्ठं दृष्ट्वा तातस्य दशरथस्य तथा वैदेहस्य च दर्शनमद्यावगतः प्राप्तोऽस्मि ॥ ६ ॥

रा० टी०—अयमिति । अयं मणिः तस्याः सीतायामूर्ध्नि शोभते अतः अस्य मणेर्दर्शनेन तां सीतां प्राप्तामिव चिन्तये ॥ ७ ॥

गो० टी०—मणिं तु दृष्ट्वा रामो वै त्रयाणां संस्मरिष्यतीति सीतयोक्तप्रकारेण स्मरति—इममिति । इमं दृष्ट्वा तातस्य दशरथस्य वैदेहस्य जनकस्य दर्शनमद्यावगतः प्राप्तोऽस्मि । तदा ताभ्यां तस्या मूर्ध्नि बद्धत्वादिति भावः । इह वैदेहग्रहणं सीताजनन्या अप्युपलक्षणम् । सीतावाक्ये वीरो जनन्या मम चेत्युक्तेः । तत्र त्रयाणां संस्मरिष्यतीति त्रयग्रहणं बहुमात्रोपलक्षणम् । इह वैदहस्यापि स्मरणोक्तेः ॥ ६–८ ॥

८ ] ति० टी०—परासुं मूर्च्छितं मां जीवनाय वाक्यवारिणा सिञ्चन्ती किमाह तद्ब्रूहि ॥ ८ ॥

रा० टी०—किमिति । हे सौम्य परासुं मूर्च्छितं तोयेनेव वाक्यवारिणा सिञ्चन्ती सीता किमाह पुनः पुनर्ब्रूहि तद्वचनमिति शेषः ॥ ८ ॥

९ ] ति० टी०—वैदेहीं विना आगतं मणिं पश्यामि, इतः किं दुःखतरम् ॥ ९ ॥

रा० टी०—इत इति । वैदेहीं विना आगतम् इमं मणिं यत् पश्यामि तस्मादितः किं दुःखतरं न किमपीत्यर्थः ॥ ९ ॥

गो० टी०—इतस्त्विति । आगतं मणिमित्यन्वयः॥९–११

१० ] ति० टी०—यदि मासं धरिष्यति जीविष्यति तदा चिरं जीवति जीविष्यतीत्यर्थः । तां विना यथाहं न जीवेयं तथा मां विना सापि न जीविष्यतीत्यर्थः ॥ १० ॥

रा० टी०—चिरमिति । यदि मासं धरिष्यति प्राणानिति शेषः तदा वैदेही चिरं जीवति अहं तु तां सीतां विना क्षणमपि न जीवेयं जीवितुमिच्छामि ॥ १० ॥

११ ] ति० टी०—प्रवृत्तिमुपलभ्य क्षणमपि न तिष्ठेयम् । स्थातुं न शक्यमित्यर्थः ॥ ११ ॥

रा० टी०—नयेति । प्रवृत्तिं वृत्तान्तम् उपलभ्य ज्ञात्वा क्षणमपि न तिष्ठेयम् अतः यत्र मम प्रिया दृष्टा तं देशं मामपि नय ॥ ११ ॥

१२ ] ति० टी०—भीरुभीरुरत्यन्तं भीरुः ॥ १२ ॥

रा० टी०—कथमिति । भीरुभीरुः अत्यन्तभीरुरित्यर्थः, मम प्रिया रक्षसां मध्ये कथं तिष्ठति ॥ १२ ॥

गो० टी०—कथमिति । भीरुभीरुः अत्यन्तभीरुः ॥१२।१३

१३ ] ति० टी०—अम्बुदैरावृतस्तिमिरोन्मुक्तः शारदश्चन्द्र इव तस्या वदनं न राजति ॥ १३ ॥

रा० टी०—शारद इति । तिमिरोन्मुक्तः शशरहितः अम्बुदैरावृतः शारदश्चन्द्र इव तस्याः सीतायाः वदनं सांप्रतं न राजति ॥ १३ ॥

१४ ] ति० टी०—एतेन तद्वाक्यश्रवणरूपेण ॥ १४ ॥

रा० टी०—किमिति । सीता किमाह त्वं कथय तत्प्रयोजनमाह—भेषजेनौषधेनातुर इवाहं जीविष्ये ॥ १४ ॥

गो० टी०—किमाहेति । तत्त्वतः संकोचेन न किंचित् गोपनीयमिति भावः ॥ १४ ॥

---

१ यथेति गो. पाठः । २ अस्याद्येति गो. पाठः । ३ यदिममिति गो. पाठः । ४ सौम्येति गो. पाठः । ५ आवृतमिति गो. पाठः । ६ राक्षसैरिति गो. पाठः ।

मधुरा मधुरालापा किमाह मम भामिनी । मद्विहीना वरारोहा हनुमन्कथयस्व मे ॥
दुःखादुःखतरं प्राप्य कथं जीवति जानकी ॥ ॥ १९ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये सुन्दरकाण्डे षट्षष्टितमः सर्गः ॥ ६६ ॥

---

## सप्तषष्टितमः सर्गः ।

हनूमता रामाय सीतोक्तस्य चित्रकूटवृत्तवायसवृत्तान्ताभिज्ञानस्य विस्तरेण कथनम् । सीतायाः करुणविलपनस्य स्वकृततत्सांत्वनस्य चाभिधानम् ॥

एवमुक्तस्तु हनुमान्राघवेण महात्मना । सीताया भाषितं सर्वं न्यवेदयत राघवे ॥ १ ॥
इदमुक्तवती देवी जानकी पुरुषर्षभ । पूर्ववृत्तमभिज्ञानं चित्रकूटे यथातथम् ॥ २ ॥
सुखसुप्ता त्वया सार्धं जानकी पूर्वमुत्थिता । वायसः सहसोत्पत्य विददार स्तनान्तरम् ॥ ३ ॥
पर्यायेण च सुप्तस्त्वं देव्यङ्के भरताग्रजः । पुनश्च किल पक्षी स देव्या जनयति व्यथाम् ॥ ४ ॥
ततः पुनरुपागम्य विददार भृशं किल । ततस्त्वं बोधितस्तस्याः शोणितेन समुक्षितः ॥ ५ ॥
वायसेन च तेनैवं सततं बाध्यमानया । बोधितः किल देव्या त्वं सुखसुप्तः परंतप ॥ ६ ॥
तां तु दृष्ट्वा महाबाहो दारितां च स्तनान्तरे । आशीविष इव क्रुद्धस्ततो वाक्यं त्वमूचिवान् ॥ ७ ॥

---

१९ ] ति० टी०—मधुरा मधुराकारा ॥ १९ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये सुन्दरकाण्डे षट्षष्टितमः सर्गः ॥ ६६ ॥

रा० टी०—तदेव भङ्ग्यन्तरेणाह--मधुरेति । मम भामिनी प्रिया किमाह कथं च जीवति तत् कथयस्व ॥ १९ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ सुन्दरकाण्डे षट्षष्टितमः सर्गः ॥ ६६ ॥

गो० टी०—मधुरेति । मधुरा सुन्दरी । मधुरालापा । येन तद्वचनानुवादेऽपि भवद्वचनं मधुरं भवतीत्यर्थः ॥ १९ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने षट्षष्टितमः सर्गः ॥ ६६ ॥

---

१ ] ति० टी०—एवमिति ॥ १ ॥

रा० टी०—रामं प्रति हनुमदुक्तिमाह—एवमित्यादिभिः। राघवेण एवमुक्तो हनुमान् सीतायाः सर्वं भाषितं राघवे तत्समीपे न्यवेदयत ॥ १ ॥

गो० टी०—एवमित्यादि ॥ १ ॥ २ ॥

२–७] ति० टी०—यथातथं यथापूर्वं वृत्तं तथोक्तवती २–७

रा० टी०—निवेदनप्रकारमाह—इदमित्यादिभिः । राघवे अभिज्ञानं मत्प्राप्तिचिह्नं यथातथं यथाजातं तथेत्यर्थः चित्रकूटे इदं पूर्ववृत्तं पूर्वकालकवृत्तान्तं जानकी उक्तवती ॥ २ ॥

रा० टी०—इदमर्थमाह-सुखेत्यादिभिः । त्वया सार्द्धं सुखसुप्ता जानकी पूर्वं त्वदुत्थानात्पूर्वकाले उत्थिताऽभवदिति शेषः, वायसो जयन्तस्तु स्तनान्तरे विददार विदारणानुकूलव्यापारं चकार ॥ ३ ॥

रा० टी०—विदारणप्रकारं बोधयन्नाह-पर्यायेणेति । हे भरताग्रज देव्यङ्के पर्यायेण त्वं सुप्तः तदा पक्षी वायसः देव्याः व्यथां स्पर्शादिना अस्वास्थ्यं पुनः पुनर्जनयति । पुनः पुनर्जनयतीत्यनेनायं रावणवधयोग्योऽस्ति नवेति परीक्षार्थमागत इति व्यक्तम् ॥ ४ ॥

रा० टी०—तत इति । ततः बहुविधोपद्रवकरणानन्तरं पुनरुपागम्य प्राप्य भृशमत्यन्तं विददार विदरणानुकूलव्यापारं चकार ततोऽनन्तरं शोणितेन रुधिरबिन्दुना समुक्षित इव त्वं तस्याः तया बोधितः शोणितोक्षितसादृश्यं च अत्यरुणबिन्दुविशिष्टसीतापटविशेषाच्छादितत्वेन । समुक्षितशब्दः आचारक्विन्तप्रकृतिककर्तृक्विन्तः प्रातिभासिकं व्याख्यानं तु हेयमेव अप्राकृताङ्गस्य रुधिरस्रावहेतुभूतविदारित्वस्यासंभवात् । अत एव 'यो वेत्ति भौतिकं देहं रामस्य परमात्मनः । स सर्वस्माद्बहिः कार्यः श्रौतस्मार्तविधानतः ।' इत्यादि संगच्छते ॥ ५ ॥

रा० टी०—वायसेनेति । वायसेन बाध्यमानया देव्या सुखसुप्तो बोधितस्त्वं तां देवीं स्तनान्तरे दारितामिव दृष्ट्वा आशीविष इव क्रुद्धः कोपाभासवांस्त्वं हे मारुते स्तनान्तरे नखाग्रैः केन दारितमिव सरोषेण भोगिना कः क्रीडतीति वाक्यमूचिवान् चवैशब्दाविवार्थौ । श्लोकत्रयमेकान्वयि ॥ ६–८ ॥

---

१ अर्धमेतत् गो. नास्ति । २ स्तनान्तरं इति गो. रा. पाठः । ३ स्विति गो. पाठः । ४ निःश्वसन्नभ्यभाषथा इति गो. पाठः ।

नखाग्रैः केन ते भीरु रादितं वै स्तनान्तरम् । कः क्रीडति सरोषेण पञ्चवक्त्रेण [1]भोगिना ॥ ८ ॥
निरीक्षमाणः सहसा वायसं समुदैक्षथाः । नखैः सरुधिरैस्तीक्ष्णैस्तामेवाभिमुखं स्थितम् ॥ ९ ॥
सुतः किल स शक्रस्य वायसः पततां वरः । धरान्तरगतः शीघ्रं पवनस्य गतौ समः ॥ १० ॥
ततस्तस्मिन्महाबाहो कोपसंवर्तितेक्षणः । वायसे त्वं [3]व्यधाः क्रूरां मतिं मतिमतां व[4]रे ॥ ११ ॥
स द[5]र्भसंस्तराद्गृह्य ब्रह्मास्त्रेण न्ययोजयः । स दीप्त इव कालाग्निर्जज्वालाभि[6]मुखं खगम् ॥ १२ ॥
स[7] त्वं प्रदीप्तं चिक्षेप दर्भं तं वायसं प्रति । ततस्तु वायसं दीप्तः स दर्भोऽनुजगाम ह ॥ १३ ॥
[8]भीतैश्च संपरित्यक्तः सुरैः स[9]र्वैश्च वायसः । त्रींल्लोकान्संपरिक्रम्य त्रातारं नाधिगच्छति ॥ १४ ॥
पुन[10]रप्यागतस्तत्र त्वत्सकाशमरिन्दम । [11]त्वं तं निपतितं भूमौ [12]शरण्यां शरणागतम् ॥ १५ ॥
वधार्हमपि काकुत्स्थ कृपया परिपालयः । मोघमस्त्रं न शक्यं तु कर्तुमित्येव राघव ॥ १६ ॥
[13]ततस्तस्याक्षि काकस्य हिनस्ति स्म स दक्षिणम् । [14]वायसस्त्वां नमस्कृत्य रा[15]ज्ञो दशरथस्य च ॥ १७ ॥
विसृष्टस्तु तदा काकः प्रतिपेदे स्वमालयम् । एवमस्त्रविदां श्रेष्ठः सत्त्ववाञ्छीलवानपि ॥ १८ ॥
किमर्थमस्त्रं रक्षःसु न [16]योजयसि राघव । न दा[17]नवा न गन्धर्वा नासुरा न मरुद्गणाः ॥ १९ ॥

---

गो० टी०—पूर्वं संकुचितं विस्तृणीते—सुखेत्यादिना । उभावपि पर्यायेण सुप्ताविति त्वया सार्धमित्युक्तम् ॥ ३–६ ॥

गो० टी०—तां त्वित्यादि । दारितां विदारिताम् ॥७-१९

८–९] ति० टी०—रादितम् । दारितमित्यर्थः ॥ ८ ॥ ९ ॥

रा० टी०—निरीक्ष्यमाण इति । रुधिरैः रुधिरसदृशात्यरुणपटबिन्दुभिः शोभमानः निरीक्ष्यमाण इतस्ततोवलोकमानः स प्रबुद्धस्त्वं तां सीताम् अभिमुखं स्थितं वायसं समुदैक्षथाः ॥ ९ ॥

१० ] ति० टी०—धरान्तरगतः पातालस्थः ॥ १० ॥

रा० टी०—सुत इति । गतौ पवनस्य समः वायसः शीघ्रं धरान्तर्गतः देशान्तरं प्राप्तः ॥ १० ॥

११ ] ति० टी०—व्यधा अकृथाः ॥ ११ ॥

रा० टी०—तत इति । ततोऽनन्तरं कोपेन सीताङ्गस्पर्शहेतुकपरमकल्याणप्राकट्यकारकस्वीकृतक्रोधाभासेन संवर्तिते ईक्षणे यस्य स त्वं वायसे वायसकल्याणार्थं क्रूरां भयकारिणीं कठिनामनिवर्त्यामित्यर्थो वा मतिं व्यधाः अगृह्णाः 'क्रूरौ कठिनभीषणौ' इति कोशः ॥ ११ ॥

१२ ] ति० टी०—दर्भसंस्तरादेकं कुशं गृह्य गृहीत्वेत्यर्थः ॥ १२ ॥

रा० टी०—स इति । स त्वं दर्भसंस्तरात् दर्भमयास्तरणात् गृह्य दर्भं गृहीत्वा ब्रह्मास्त्रेण ब्रह्मास्त्रत्वसंपादकदृष्टिविशेषेण न्ययोजयः स दर्भः दीप्तः कालाग्निरिव खगं यथा भवति तथाभिमुखं जज्वाल ॥ १२ ॥

१३–१५ ] ति० टी०—चिक्षेप चिक्षेपिथ । आर्षः प्रयोगः ॥ १३–१५ ॥

रा० टी०—स इति । यं दर्भं वायसं प्रति त्वं चिक्षेप स दर्भः वायसमनुजगाम ॥ १३ ॥

रा० टी०—भीतैरिति । भीतैः सुरैः संपरित्यक्तो वायसः त्रातारं नाधिगच्छति प्राप्नोत् ॥ १४ ॥

रा० टी०—पुनरिति । तत्र तस्यां धरण्यां त्वत्सकाशं पुनरप्यागतो यस्तं वधार्हमपि शरणागतं शरणाय स्वरक्षणायागतम् अत एव भूमौ निपतितं वायसं कृपया त्वं परिपालयः पर्यपालयः सीताङ्गस्पर्शमात्रेण तत्कल्याणप्रकटनमपहाय कोपप्रकटनद्वारा किमर्थं कृतमिति तु न भ्रमितव्यं, प्रार्थनयैव परमकल्याणं क्रियत इति स्वाभाविकपरमात्मरीतेः । तथाहि करुणावानपि व्यक्तं शक्तस्त्वामपि देहिनाम् । अप्रार्थितो न गोपायेदिति तत्प्रार्थनामतिरिति पुराणम् । सार्धश्लोक एकान्वयी ॥ १५ ॥

१६ ] ति० टी०—परिपालयः पर्यपालयः । शरीरावधेनेति भावः । इत्येवेति हेतोः ॥ १६ ॥

रा० टी०—मोघमिति । अस्त्रं मोघं सर्वथा विफलं कर्तुं न शक्यमिति हेतोरेव काकस्य दक्षिणमक्षि भवान् हिनस्ति ॥१६

१७–१९ ] ति० टी०—ततस्तदागमनोत्तरम् । हिनस्ति स्माहिनः ॥ १७–१९ ॥

रा० टी०—वायस इति । विसृष्टः वधान्मुक्तः काको धृष्टो वायसः त्वां नमस्कृत्य स्वर्गं दशरथस्य दशरथं च नमस्कृत्य

---

१ दारित स्विति गो.रा.पाठः । २ चर इति गो. पाठः । ३ कृथा इति गो.पाठः । ४ वरः इति रा.पाठः । ५ दर्भमिति गो. पाठः । ६ सुख इति गो. पाठः । ७ क्षिप्तवाँस्त्वं प्रदीप्तं इति गो. पाठः । ८ स पित्रा चेति गो. पाठः । ९ च स महर्षिभिरिति गो. पाठः । १० एवेति गो. पाठः । ११ स इति गो. पाठः । १२ शरण्य इति गो. पाठः । १३ भवानिति गो. पाठः । १४ राम त्वां स इति गो. पाठः । १५ राज्ञे दशरथाय चेति गो.पाठः । १६ योजयति धरवाः इति गो. पाठः । १७ नागा नाप्सरा इति गो. पाठः ।

तव राम रणे शक्तास्तथा प्रतिसमासितुम् । तवैं वीर्यवतः कच्चिन्मयि यद्यस्ति संभ्रमः ॥ २० ॥
क्षिप्रं सुनिर्शितैर्बाणैर्हन्यतां युधि रावणः । भ्रातुरादेशमाज्ञाय लक्ष्मणो वा परंतपः ॥ २१ ॥
स किमर्थं नरवरो न मां रक्षति राघवः । शक्तौ तौ पुरुषव्याघ्रौ वाय्वग्निसमतेजसौ ॥ २२ ॥
सुराणामपि दुर्धर्षौ किमर्थं मामुपेक्षतः । ममैव दुष्कृतं किंचिन्महदस्ति न संशयः ॥ २३ ॥
समर्थौ सहितौ यन्मां न रक्षेते परंतपौ । वैदेह्या वचनं श्रुत्वा करुणं साधुभाषितम् ॥ २४ ॥
पुनरप्यहमार्यां तामिदं वचनमब्रवम् । त्वच्छोकविमुखो रामो देवि सत्येन ते शपे ॥ २५ ॥
रामे दुःखाभिभूते च लक्ष्मणः परितप्यते । कथंचिद्भवती दृष्टा न कालः परिशोचितुम् ॥ २६ ॥
इदं मुहूर्तं दुःखानामन्तं द्रक्ष्यसि भामिनि । तावुभौ नरशार्दूलौ राजपुत्रौ परंतपौ ॥ २७ ॥
त्वद्दर्शनकृतोत्साहौ लङ्कां भस्मीकरिष्यतः । हत्वा च समरे रौद्रं रावणं सहबान्धवम् ॥ २८ ॥
राघवस्त्वां वरारोहे स्वपुरीं नयिता ध्रुवम् । यत्तु रामो विजानीयादभिज्ञानमनिन्दिते ॥ २९ ॥
प्रीतिसंजननं तस्य प्रदातुं तत्त्वमर्हसि । साभिवीक्ष्य दिशः सर्वा वेण्युद्ग्रथनमुत्तमम् ॥ ३० ॥
मुक्त्वा वस्त्राद्ददौ मह्यं मणिमेतं महाबल । प्रतिगृह्य मणिं दोर्भ्यां तव हेतो रघुप्रिय ॥ ३१ ॥

स्वमालयं प्रतिपेदे दशरथं नमस्कृत्येत्यनेन पलायनसमये दशरथोपदेशेनैव रामशरणमागत इति ध्वनितम् । एतेन तस्मिन्काले आखेटाद्यन्यतमनिमित्तेन तस्य त्रिलोकीमध्ये आगमो जात इति ध्वनितम् ॥ १७ ॥

रा० टी०—एवमिति । रक्षस्तु अलं किमर्थं न योजयसि ॥ १८ ॥

रा० टी०—नेति । दानवादयः तव त्वां रणे प्रतिसमासितुं निवर्तयितुं न शक्ताः ॥ १९ ॥

गो० टी०—न नागा इति । प्रतिसमासितुं प्रतिमुखं स्थातुम् ॥ २०–२५ ॥

२०–२४ ] ति० टी०—हे राम ! रणे तव त्वां प्रति समासितुं न शक्तास्तथा तद्वत् काकवदित्यर्थः । संभ्रम आदरः ॥ २०–२४ ॥

रा० टी०—तवेति । संभ्रम आदरो यद्यस्ति तर्हि रावणो हन्यताम् ॥ २० ॥

रा० टी०—भ्रातुरिति । लक्ष्मणो नरवरः सरामो वा मां किमर्थं न रक्षति ॥ २१ ॥

रा० टी०—शक्ताविति ॥ २२ ॥

रा० टी०—ममेति ॥ २३ ॥

रा० टी०—वैदेह्या इति । वैदेह्या वचनं श्रुत्वा इदमहमब्रवम् ॥ २४ ॥

२५ ] ति० टी०—त्वच्छोकविमुखस्त्वच्छोकेन कार्यान्तरविमुखः ॥ २५ ॥

रा० टी०—इदमर्थमाह—त्वदित्यादिभिः । त्वच्छोकेन विमुखः विकृतमुखत्वेन प्रतीयमानः सन् रामः परितप्यते रामे दुःखाभिभूते तत्त्वेन प्रतीयमाने सति लक्ष्मणः परितप्यते ॥२५

गो० टी०—त्वच्छोकेति । त्वच्छोकविमुखः त्वच्छोकेन कार्यान्तरविमुखः ॥ २६—२८ ॥

२६ ] ति० टी०—भवती मया दृष्टा । अतः परं परिशोचितुं न कालस्तव योग्य इति शेषः । चिरं लङ्कायामासितुं न कालो योग्य इति पाठान्तरेऽर्थः ॥ २६ ॥

रा० टी—कथञ्चिदिति । सीता भवती कथंचित् दृष्टा अतः परिशोचितुं कालो न । तत्र हेतुः—इदं मुहूर्तमारभ्येति शेषः दुःखानामन्तं विध्वंसं द्रक्ष्यसि ॥ २६ ॥

२७–२९ ] ति० टी०—इदं मुहूर्तम् । अस्मिन्नेव मुहूर्ते इत्यर्थः ॥ २७–२९ ॥

रा० टी०—ताविति ॥ २७ ॥

रा० टी०—हत्वेति । नयिता नेता ॥ २८ ॥

रा० टी०—यदिति । यत् येन रामो विजानीयात् मत्कर्तृकत्वद्दर्शनं निश्चिनुयात् तत् तस्य रामस्य प्रीतिसंजननमभिज्ञानं प्रदातुं त्वमर्हसि ॥ २९ ॥

गो० टी०—हत्वेति । नयते नेष्यते । वर्तमानसामीप्ये वर्तमानवत् प्रयोगः ॥ २९ ॥ ३० ॥

३०–३१ ] ति० टी०—वेण्युद्ग्रथनं वेण्याद्युद्ग्रथनयोग्यम् ॥ ३० ॥ ३१ ॥

रा० टी०—सेति । सा सीता वेण्युद्ग्रथनं वेण्याद्युद्ग्रथनार्हमेतं मणिं वस्त्रान्मुक्त्वा निष्कृष्य मह्यं ददौ ॥ ३० ॥

१ न च सर्वे इति गो. पाठः । २ राममिति गो. पाठः । ३ तस्येति गो. पाठः । ४ निशितैरिति गो. पाठः । ५ अवेक्षेते इति गो. पाठः । ६ साश्विति गो. पाठः । ७ अस्मिन्मुहूर्ते इति गो. पाठः । ८ अनिन्दितायिति गो. पाठः । ९ स्वामिति गो. पाठः । १० नयते इति गो. पाठः । ११ त्वमिहार्हसीति गो. पाठः । १२ दिव्यमिति गो. पाठः । १३ रघूद्वहेति गो. पाठः ।

शिरसा संप्रणम्यैनामहमागमने त्वरे । गमने च कृतोत्साहमवेक्ष्य वरवर्णिनी ॥ ३२ ॥
विवर्धमानं च हि मामुवाच जनकात्मजा । अश्रुपूर्णमुखी दीना बाष्पगद्गदभाषिणी ॥ ३३ ॥
ममोत्पतनसंभ्रान्ता शोकवेगसमाहता । मामुवाच ततः सीता सभाग्योऽसि महाकपे ॥ ३४ ॥
यद्द्रक्ष्यसि महाबाहुं रामं कमललोचनम् । लक्ष्मणं च महाबाहुं देवरं मे यशस्विनम् ॥ ३५ ॥
सीतयाप्येवमुक्तोऽहमब्रुवं मैथिलीं तथा । पृष्ठमारोह मे देवि क्षिप्रं जनकनन्दिनि ॥ ३६ ॥
यावत्ते दर्शयाम्यद्य ससुग्रीवं सलक्ष्मणम् । राघवं च महाभागे भर्तारमसितेक्षणे ॥ ३७ ॥
साब्रवीन्मां ततो देवी नैष धर्मो महाकपे । यत्ते पृष्ठं सिषेवेऽहं स्ववशा हरिपुङ्गव ॥ ३८ ॥
पुरा च यदहं वीर स्पृष्टा गात्रेषु रक्षसा । तत्राहं किं करिष्यामि कालेनोपनिपीडिता ॥ ३९ ॥
गच्छ त्वं कपिशार्दूल यत्र तौ नृपतेः सुतौ । इत्येवं सा समाभाष्य भूयः संदेष्टुमास्थिता ॥ ४० ॥
हनूमन्सिंहसंकाशौ तावुभौ रामलक्ष्मणौ । सुग्रीवं च सहामात्यं सर्वान्ब्रूया अनामयम् ॥ ४१ ॥
यथा च स महाबाहुर्मां तारयति राघवः । अस्माद्दुःखाम्बुसंरोधात्[3]त्वमाख्यातुमर्हसि ॥ ४२ ॥

[4]इदं च तीव्रं मम शोकवेगं रक्षोभिरेभिः परिभर्त्सनं च ।
ब्रूयास्तु रामस्य गतः समीपं शिवश्च तेऽध्वास्तु हरिप्रवीर ॥ ४३ ॥
एतत्तवार्या [5]नृप संयता सा सीता वचः प्राह विषादपूर्वम् ।
एतच्च बुद्ध्वा [6]गदितो यथा त्वं श्रद्धत्स्व सीतां कुशलां समग्राम् ॥ ४४ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये सुन्दरकाण्डे सप्तषष्टितमः सर्गः ॥ ६७ ॥

---

रा० टी०–प्रतीति । मणिं प्रतिगृह्य आगमने आगमनार्थमहं त्वरे ॥ ३१ ॥

गो० टी०–सामिवीक्ष्य दिश इति । दिगवलोकनं राक्षस्यो दृष्ट्वा रावणाय वक्ष्यन्तीति भयेन वेण्यामुद्ग्रथ्यत इति वेण्युद्ग्रथनम् वेणीधार्यमित्यर्थः । मुक्त्वा वस्त्रादिति वस्त्राञ्चलेन ग्रथितं मणिं मुक्त्वा ततः ददावित्यर्थः ॥ ३१ ॥

अस्मिन्सर्गे सार्धसप्तत्रिंशच्छ्लोकाः ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने सप्तषष्टितमः सर्गः ॥६७॥

३२ ] ति० टी०–त्वरे त्वरावाञ्जात इत्यर्थः ॥ ३२ ॥

रा० टी०–गमन इति । अश्रुपूर्णमुखी सीता उवाच । सार्धश्लोक एकान्वयी ॥ ३२ ॥ ३३ ॥

३३–३८ ] ति० टी०–विवर्धमानम् । समुद्रतरणायेति शेषः ॥ ३३–३८ ॥

रा० टी०–वचनाकारं बोधयन्नाह—ममेति । ममोत्पतनेन संभ्रान्ता सीता रामं लक्ष्मणं च यत्त्वं द्रक्ष्यसि तस्मात्त्वं सभाग्योऽसि इति सीता मामुवाच। श्लोकद्वयमेकान्वयि ३४॥३५

रा० टी०–सीतयेति । यावत् राघवादीन् ते दर्शयामि तावत् मे पृष्ठमारोह इति सीतयोक्तोऽहमब्रुवम् । श्लोकद्वयमेकान्वयि ॥ ३६ ॥ ३७ ॥

रा० टी०–सेति । स्ववशा रामाज्ञारहितेत्यर्थः, अहं यत्ते पृष्ठं सिषेवे स एष धर्मो न इति सा सीता मामब्रवीत् ॥ ३८॥

३९–४४ ] ति० टी०–कालेनोपनिपीडिता । परायत्तेति शेषः ॥ ३९–४४ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये सुन्दरकाण्डे सप्तषष्टितमः सर्गः ॥ ६७ ॥

रा० टी०–मच्छङ्कासंभावनया वचनान्तरमप्याह–पुरेति । कालेन परमात्मेच्छारूपसमयविशेषेण उपनिपीडिता प्राप्तपीडाऽहं यत् स्पृष्टा तत्र किं करोमि तस्मिन् काले न किञ्चित् कर्तुं योग्यमित्यर्थः ॥ ३९ ॥

रा० टी०–गच्छेति । संदेष्टुं वक्तुं भूय आस्थिता ॥४०॥

रा० टी०–तदाकारमाह–हनूमन्नित्यादिभिः ॥ ४१ ॥

रा० टी०–यथेति ॥ ४२ ॥

रा० टी०–इदमिति । अध्वा मार्गः शिवः कल्याणप्रदोऽस्तु ॥ ४३ ॥

रा० टी०–एतदिति । आर्या तव सीता एतदुक्तं वचः प्राह प्रियायाः एतद्वचो गदितस्त्वं बुद्ध्वा निश्चित्य समग्रां पतिव्रताग्रगण्यां सीतां कुशलां श्रद्धत्स्व ॥ ४४ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ सुन्दरकाण्डे सप्तषष्टितमः सर्गः ॥ ६७ ॥

---

१ संदिग्धेति गो. पाठः । २ सार्धषट्श्लोका गो. न सन्ति । ३ त्वं समाधातुमर्हसीति गो. पाठः । ४ इममिति गो. पाठः । ५ नृप राजसिंहेति गो. पाठः । ६ गदितं मयेति गो. पाठः ।

# अष्टषष्टितमः सर्गः ।

हनूमता रामाय सीताकृतवानरकर्तृकसमुद्रतरणचिन्तोद्भावनस्य स्वकृततत्परिहारस्य च कथनम् ।

अथाहमुत्तरं देव्या पुनरुक्तः ससंभ्रमम्[1] । तव स्नेहान्नरव्याघ्र सौहार्दादनुमान्य च[2] ॥ १ ॥
एवं बहुविधं वाच्यो रामो दाशरथिस्त्वया । यथा मां प्राप्नुयाच्छीघ्रं हत्वा रावणमाहवे ॥ २ ॥
यदि वा मन्यसे वीर[3] वसैकाहमरिन्दम । कस्मिंश्चित्संवृते देशे विश्रान्तः श्वो गमिष्यसि ॥ ३ ॥
मम चाप्यल्पभाग्यायाः सांनिध्यात्तव वानर । अस्य शोकविपाकस्य मुहूर्तं स्याद्विमोक्षणम् ॥ ४ ॥
गते हि त्वयि विक्रान्त[4] पुनरागमनाय वै । प्राणानामपि संदेहो मम स्यान्नात्र संशयः ॥ ५ ॥
तवादर्शनजं[5] चापि भयं मां परितापयेत् । दुःखाद्दुःखपराभूतां दुर्गतां दुःखभागिनीम् ॥ ६ ॥
अयं च वीर संदेहस्तिष्ठतीव ममाग्रतः । सुमहांस्त्वत्सहायेन[6] हर्यृक्षेषु[7] असंशयः[8] ॥ ७ ॥
कथं नु खलु दुष्पारं तरिष्यन्ति महोदधिम् । तानि हर्यृक्षसैन्यानि तौ वा नरवरात्मजौ ॥ ८ ॥
त्रयाणामेव भूतानां सागरस्येह लङ्घने । शक्तिः स्याद्वैनतेयस्य वायोर्वा[9] तव चानघ ॥ ९ ॥
तदस्मिन्कार्यनियोगे[10] वीरैवं दुरतिक्रमे । किं पश्यसि समाधानं ब्रूहि वाक्यविदां वर ॥ १० ॥
काममस्य त्वमेवैकः कार्यस्य परिसाधने । पर्याप्तः परवीरघ्न यशस्यस्ते बलोदयः ॥ ११ ॥

---

१ ] ति० टी०—तव स्नेहान्मयि सौहृदात्सुहृद्भावान्मामनुमान्य संमान्य ससंभ्रमो गन्तुं सत्वरोऽहमुत्तरं कार्यं प्रति पुनः पुनरुक्तः ॥ १ ॥

रा० टी०—हनूमन्तं प्रति सीतावचनान्तराणि वर्णयितुमाह—अथेति । हे नरव्याघ्र तव स्नेहात् सौहार्दात् सर्वकालं कापट्यसंसर्गरहितान्तःकरणाच्च हेतोः अनुमान्य मां सत्कृत्य उत्तरं श्रेष्ठं वचः देव्या सीतया पुनरहमुक्तः ॥ १ ॥

गो० टी०—अथेत्यादि । हे नरव्याघ्र तव स्नेहात् मयीति शेषः । सौहार्दात् सुहृद्भावात् आप्तत्वादिति यावत् । अनुमान्य संमान्य । उत्तरं ततःपरम् उत्तरं कार्यं वा । पुनर्देव्याहमुक्त इत्यन्वयः । ससंभ्रमः गमनत्वरान्वित इत्यर्थः ॥ १।२॥

२–३ ] ति० टी०—यथा मां प्राप्नुयात्तथा यतस्वेति शेषः ॥ २ ॥ ३ ॥

रा० टी०—तदाकारमाह—एवमित्यादिभिः ॥ २ ॥

रा० टी०—यदीति ॥ ३ ॥

गो० टी०—यदि वेत्यादि । शोकविपाकस्य शोकवृद्धेरित्यर्थः ॥ ३–९ ॥

४ ] ति० टी०—एकदिनवासफलमाह—मम चेति । तव सांनिध्यादल्पभाग्याया ममास्य महतः शोकविपाकस्य शोकरूपस्य पापफलस्य मुहूर्तं मोक्षणं स्यादित्यन्वयः ॥ ४ ॥

रा० टी०—वासे हेतुमाह—ममेति । तव सांनिध्यात् अस्यानुभूयमानस्य मम शोकविपाकस्य अत्यन्तशोकस्य मुहूर्तं विमोक्षणं विध्वंसः स्यात् ॥ ४ ॥

५–६ ] ति० टी०—पुनरागमनाय प्रतीक्षमाणाया मम प्राणानामपि संदेहः स्यादिति योजना ॥ ५ ॥ ६ ॥

रा० टी०—गते इति । पुनरागमनायापि त्वयि गते सति मम प्राणानां संदेहः स्यात् ॥ ५ ॥

रा० टी०—तत्र हेतुमाह—तवेति । तवादर्शनजं दर्शनाभावजनितं भयं दुःखाद्दुःखेन दुःखपरंपरया पराभूताम् अत एव दुःखभागिनीं मां परितापयेत् ॥ ६ ॥

७ ] ति० टी०—उत्तरकार्यविषयामुक्तिमाह—अयं चेति । असंशयो बाधकसंशयरहितः ॥ ७ ॥

रा० टी०—अयमिति । हे वीर त्वत्सहायेषु हर्यृक्षेषु असंशयः निश्चितमित्यर्थः अयं संदेहस्तिष्ठति ॥ ७ ॥

८–१० ] ति० टी०—संदेहमेवाह—कथं न्विति ॥ ८–१० ॥

रा० टी०—इदमर्थमाह—कथमित्यादिभिः ॥ ८ ॥

रा० टी०—तत्र हेतुमाह—त्रयाणामिति ॥ ९ ॥

रा० टी०—तदिति । दुरतिक्रमे अस्मिन् कार्यनियोगे कार्यसाधने किं समाधानमुपायं पश्यसि जानासि तद्ब्रूहि ॥ १० ॥

गो० टी०—तदस्मिन्निति । कार्यनियोगे कार्यगतौ । दुरतिक्रमे दुर्निर्वहे ॥ १०—२२ ॥

११ ] ति० टी०—यद्यपि त्वमेव पर्याप्तः । सकलराक्षसवधपूर्वं मन्मोचन इति शेषः । तथापीदृशो बलोदयस्तवैव यशस्यो यशोवर्धकः स्यात् ॥ ११ ॥

रा० टी०—काममिति ॥ ११ ॥

---

१ श्रम इति गो. पाठः । २ चै इति गो. पाठः । ३ वीर्यवन्निति गो. पाठः । ४ विक्रान्ते इति गो. पाठः । ५ तवादर्शनजः शोको भूय इति गो. पाठः । ६ सहायेष्विति गो. रा. पाठः । ७ हरीश्वरेति गो. पाठः । ८ असयेति गो. पाठः । ९ तव वा मारुतस्य वेति गो. पाठः । १० कार्येति गो. पाठः ।

बलैः समग्रैर्यदि मां हत्वा रावणमाहवे । विजयी स्वपुरीं रामो नयेत्तत्स्याद्यशस्करम् ॥ १२ ॥
यथाहं तस्य वीरस्य वनादुपधिना हृता । रक्षसा तद्भयादेव तथा नार्हति राघवः ॥ १३ ॥
बलैस्तु संकुलां कृत्वा लङ्कां परबलार्दनः । मां नयेद्यदि काकुत्स्थस्तत्तस्य सदृशं भवेत् ॥ १४ ॥
तद्यथा तस्य विक्रान्तमनुरूपं महात्मनः । भवत्याहवशूरस्य तथा त्वमुपपादय ॥ १५ ॥
तदर्थोपहितं वाक्यं प्रश्रितं हेतुसंहितम् । निशम्याहं ततः शेषं वाक्यमुत्तरमब्रवम् ॥ १६ ॥
देवि हर्यृक्षसैन्यानामीश्वरः प्लवतां वरः । सुग्रीवः सत्त्वसंपन्नस्त्वदर्थे कृतनिश्चयः ॥ १७ ॥
तस्य विक्रमसंपन्नाः सत्त्ववन्तो महाबलाः । मनःसंकल्पसदृशा निदेशे हरयः स्थिताः ॥ १८ ॥
येषां नोपरि नाधस्तान्न तिर्यक्सज्जते गतिः । न च कर्मसु सीदन्ति महत्स्वमिततेजसः ॥ १९ ॥
असकृत्तैर्महाभागैर्वानरैर्बलसंयुतैः । प्रदक्षिणीकृता भूमिर्वायुमार्गानुसारिभिः ॥ २० ॥
मद्विशिष्टाश्च तुल्याश्च सन्ति तत्र वनौकसः । मत्तः प्रत्यवरः कश्चिन्नास्ति सुग्रीवसंनिधौ ॥ २१ ॥
अहं तावदिह प्राप्तः किं पुनस्ते महाबलाः । नहि प्रकृष्टाः प्रेष्यन्ते प्रेष्यन्ते हीतरे जनाः ॥ २२ ॥
तदलं परितापेन देवि मन्युरपैतु ते । एकोत्पातेन ते लङ्कामेष्यन्ति हरियूथपाः ॥ २३ ॥
मम पृष्ठगतौ तौ च चन्द्रसूर्याविवोदितौ । त्वत्सकाशं महाभागे नृसिंहावागमिष्यतः ॥ २४ ॥
अरिघ्नं सिंहसंकाशं क्षिप्रं द्रक्ष्यसि राघवम् । लक्ष्मणं च धनुष्मन्तं लङ्काद्वारमुपागतम् ॥ २५ ॥
नखदंष्ट्रायुधान्वीरान्सिंहशार्दूलविक्रमान् । वानरान्वारणेन्द्राभान्क्षिप्रं द्रक्ष्यसि संगतान् ॥ २६ ॥
शैलाम्बुदनिकाशानां लङ्कामलयसानुषु । नर्दतां कपिमुख्यानां नचिराच्छ्रोष्यसे स्वनम् ॥ २७ ॥
निवृत्तवनवासं च त्वया सार्धमरिन्दमम् । अभिषिक्तमयोध्यायां क्षिप्रं द्रक्ष्यसि राघवम् ॥ २८ ॥

---

१२ ] ति० टी०–यदि तु रामो रावणं हत्वा मां नयेत्, तदा तन्नयनं तस्य यशस्करं स्यात् अतस्तेनैवागत्य मोचनं युक्तमिति भावः ॥ १२ ॥

रा० टी०–बलैरिति ॥ १२ ॥

१३–१४ ] ति० टी०–उपधिना छलेन ॥ १३ ॥ १४ ॥

रा० टी०–यथेति । उपधिना कापट्येन रक्षसाऽपहृताऽहं यथा तद्भयात्त विनश्येयमिति शेषः तथा राघवोऽर्हति ॥ १३ ॥

रा० टी०–उक्तमेव भङ्ग्यन्तरेणाह–बलैरिति ॥ १४ ॥

१५ ] ति० टी०–यथा तस्यानुरूपं विक्रान्तं भवति तथा त्वमेवोपपादय ॥ १५ ॥

रा० टी०–भवन्तं प्रत्युक्त्वा मां प्रत्याह–तदिति ॥१५॥

१६–२२ ] ति० टी०–शेषं शिष्टम् ॥ १६–२२ ॥

रा० टी०–तदिति । अहम् । अर्थोपहितं तद्वाक्यं निशम्य श्रुत्वा शेषं स्थिरम् उत्तरं वाक्यमब्रुवम् ॥ १६ ॥

रा० टी०–तदाकारमाह–देवीति ॥ १७ ॥

रा० टी०–तस्येति । निदेशे आज्ञायाम् ॥ १८ ॥

रा० टी०–येषामिति ॥ १९ ॥

रा० टी०–असकृदिति ॥ २० ॥

रा० टी०–मदिति । प्रत्यवरो न्यूनबलः कश्चिन्नास्ति ॥ २१ ॥

रा० टी०–अहमिति । तत्रस्थानां महत्त्वे हेतुमाह–प्रकृष्टा महान्तो न प्रेष्यन्ते किंतु इतरे अवस्थादिना लघव एव प्रेष्यन्ते ॥ २२ ॥

२३–२८ ] ति० टी०–मन्युर्दैन्यम् ॥ २३—२८ ॥

रा० टी०–तदिति । यतः एकोत्पातेन केवलोत्प्लवनेन हरियूथपाः लङ्कामेष्यन्ति तत्तस्मात् हेतोस्ते परितापेनालं, न कर्तव्य इत्यर्थः ॥ २३ ॥

रा० टी०–रामकर्तृकोत्प्लवनस्यादृष्टत्वात् तदागमनं कथमिति तदाशङ्कां निवारयन्नाह–ममेति ॥ २४ ॥

रा० टी०–अरिघ्नमिति ॥ २५ ॥

रा० टी०–नखेति ॥ २६ ॥

रा० टी०–शैलेति ॥ २७ ॥

रा० टी०–निवृत्तेति । त्वया सार्धमभिषिक्तं राघवमयोध्यायां क्षिप्रं द्रक्ष्यसि ॥ २८ ॥

गो० टी०–तदलमिति । मन्युः दैन्यम् । मन्युर्दैन्ये क्रतौ क्रुधीत्यमरः ॥ २३—२८ ॥

---

१ स्वामिति गो. पाठः । २ तवार्थे इति गो. पाठः । ३ संपाता इति गो. पाठः । ४ दर्पितैरिति गो. पाठः । ५ वै इति गो. पाठः । ६ वानरेन्द्राभानिति रा. पाठः ।

ततो मया वाग्भिरदीनभाषिणी शिवाभिरिष्टाभिरभिप्रसादिता ।
उवाह शान्तिं मम मैथिलात्मजा तवातिशोकेन तथातिपीडिता ॥ २९ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये सुन्दरकाण्डेऽष्टषष्टितमः सर्गः ॥ ६८ ॥

---

२९ ] ति० टी०—पूर्वमुक्तया मदुक्त्या श्रुतेन त्वच्छोकेनातिपीडिताप्यदीनभाषिणी सा मया शिवाभिर्वाग्भिरभिप्रसादिता शान्ति दुःखनिवृत्तिमुवाह । प्रापेत्यर्थः ॥ २९ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये सुन्दरकाण्डेऽष्टषष्टितमः सर्गः ॥ ६८ ॥

सुन्दरे सुन्दरीं सीतामक्षतां मारुतेर्मुखात् ।
श्रुत्वा हृष्टस्तथैवास्तु स रामः सततं हृदि ॥
मनोभिरामं नयनाभिरामं श्रोत्राभिरामं वचसोऽभिरामम् ।
एवं सदा सर्वगतोऽभिरामं वंदे सदा दाशरथिं च रामम् ॥
श्रीराम राम रामेति रमे रामे मनोरमे ।
सहस्रनाम तत्तुल्यं रामनाम वरानने ॥
राम राम तव नाम निर्मलं चिन्तयामि भवबन्धमुक्तये ।
वन्दितं सुरनरेन्द्रमौलिभिर्ध्यायितं मनसि योगिभिः सदा ॥

रा० टी०—तत इति । ततस्तस्मिन् समये तवातिशोकेन अतिपीडता मैथिलात्मजा इष्टाभिः ईप्सिताभिः वाग्भिः अभिप्रसादिता सती ममाग्रे शान्तिमुवाह प्राप ॥ २९ ॥

विष्ण्वादयो यस्य भिया त्रिलोकीं
संपालयन्ते नितरां सुरेशाः ।
तद्रामपादाब्जकृपाभिरत्र
समाप्तिनी सुन्दरकाण्डटीका ॥ १ ॥
वाल्मीकीयकृतिप्राप्तसुन्दरार्थप्रकाशकः ।
रामप्रीतिं सृजनयेत् रामायणशिरोमणिः ॥ २ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ सुन्दरकाण्डे अष्टषष्टितमः सर्गः ॥ ६८ ॥

गो० टी०—ततो मयेति । तव शोकेनापि नैव दंशानित्यादिमदुक्त्या श्रुतेन तदा मम पुरस्तादभिपीडिता अदीनभाषिणा मया शिवाभिः इष्टाभिः वाग्भिः अभिप्रसादिता शान्तिं दुःखनिवृत्तिम् जगाम ॥ २९ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने अष्टषष्टितमः सर्गः ॥ ६८ ॥

इत्थं कौशिकवंशमौक्तिकमणिर्गोविन्दराजाभिधो
वात्स्यश्रीशठकोपदेशिकपदद्वन्द्वैकसेवारतः ।
पूर्वाचार्यकृता विलोक्य विविधा व्याख्या मुहुर्जानकीकान्तस्याप्रतिमाज्ञयैव तिलकं सौन्दर्यकाण्डे व्यधात् ॥ १ ॥

---

१ भाषिणेति गो. पाठः । २ जगामेति गो. पाठः । ३ ऽभीति गो. पाठः ।

इति श्रीवाल्मीकिरामायणे विवृतित्रयसनाथं
सुन्दरकाण्डं समाप्तम् ।

## 'गुजराती' मुद्रणालयस्थानि क्रय्यसंस्कृतपुस्तकानि ।

| | मूल्यं | मार्गव्ययः |
|---|---|---|
| १ श्रीमद्भगवद्गीता प्रथमो गुच्छः Bhagavat-Geeta with 7 commentaries श्रीमच्छंकराचार्यविरचितं भाष्यम्, आनन्दगिरिकृतं शांकरभाष्यव्याख्यानम्, आनन्दतीर्थीय ( माध्व ) भाष्यम्, जयतीर्थविरचिता प्रमेयदीपिका टीका, रामानुजभाष्यम्, पुरुषोत्तमजीप्रकाशिता अमृततरङ्गिणी, नीलकण्ठविरचितो भावप्रदीपः, एतैः समेता मञ्जुलैरायसाक्षरैर्मुद्रिता पृष्ठान्यष्टशतपरिमितानि सुचिक्कणानि । मूल्यम् रू. ... ... ... ... | ६-०-० | ०-७-० |
| २ श्रीमद्भगवद्गीता द्वितीयो गुच्छः Bhagavat-Geeta with 8 other commentaries—निम्बार्कमतानुयायिश्रीकेशवकाश्मीरिभट्टाचार्यपादप्रणीता—'तत्त्वप्रकाशिका,' श्रीमधुसूदनसरस्वतीकृता—'गूढार्थदीपिका,' श्रीशङ्करानन्दप्रणीता—'तात्पर्यबोधिनी,' श्रीधरस्वामिकृता—'सुबोधिनी,' श्रीसदानन्दविरचितः—'भावप्रकाशः,' श्रीधनपतिसूरिविरचिता—'भाष्योत्कर्षदीपिका,' दैवज्ञपण्डितश्रीसूर्यविरचिता—'परमार्थप्रपा,' पूर्णप्रज्ञमतानुसारिश्रीराघवेन्द्रकृतः—'अर्थसंग्रहः' इत्येताभिर्व्याख्याभिः सहिता । अत्र श्लोकाः स्थूलतमाक्षरैष्टीकाश्च स्थूलाक्षरैर्मुद्रिताः, वृद्धा मा क्लेशिषतेति । मू. रू. ... ... ... ... ... | १०-०-० | ०-१५-० |
| ३ उत्तरगीता Uttara-Geeta with Gaudpadiya commentary—गौडपादीयदीपिकाख्यव्याख्यायुता भगवत्पादश्रीशंकराचार्याणां परमगुरुभिः श्रीशुकाचार्याणां च शिष्यैः श्रीगौडपादाचार्यैः प्रणीतेयं व्याख्येत्येतावत्कथनमलमस्या महिमानमवगमयितुम् । मूल्यम् रू. ... | ०-३-० | ०-०-६ |
| ४ श्रीमद्वाल्मीकिरामायणम् । Valmiki Ramayana with 3 well-known commentaries, सर्वतन्त्रस्वतन्त्रप्रतिभेन शब्देन्दुशेखरादिनानानिबन्धप्रणेत्रा श्रीमन्नागेशभट्टेन स्वशिष्यस्य सतो जीविकाप्रदातुः शृङ्गवेरपुराधीशस्य वीरमणेः श्रीरामराजस्य नाम्ना प्रणीतया रामायणतिलकाख्यया टीकया, पण्डितश्रीवंशीधर-शिवसहायाभ्यां प्रणीतया रामायणशिरोमण्याख्यया टीकया, श्रीगोविन्दराजप्रणीतया भूषणाख्यया टीकया च सह मुद्रयितुमारब्धमस्माभिः । तच्च सप्तभिः खण्डैः समापयिष्यामः । | | |
| बालकाण्डम् । प्रथमं खण्डम् Bal Kand उपरिनिर्दिष्टटीकात्रयोपेतम् । मूल्यम् रू. ... | ३-०-० | ०-५-० |
| अयोध्याकाण्डम् । द्वितीयखण्डम् Ayodbya Kand उर्ध्वनिर्दिष्टटीकात्रयोपेतम् । मू. रू. | ५-०-० | ०-७-० |
| अरण्यकाण्डम् । तृतीयखण्डम् । Aranya Kand उपरिनिर्दिष्टटीकात्रयोपेतम् । मू. रू. ... | २-१२-० | ०-४-० |
| किष्किन्धाकाण्डम् । चतुर्थखण्डम् । Kishkindha Kand उपरिनिर्दिष्टटीकात्रयोपेतम् । मू. रू. ... ... ... ... ... ... ... | २-१०-० | ०-४-० |
| सुन्दरकाण्डम् । पञ्चमखण्डम् । Sundar Kand उपरिनिर्दिष्टटीकात्रयोपेतम् । मू. रू. | ३-०-० | ०-४-० |
| ५ स्तोत्रमुक्ताहारः—Stotra-muktahar containing 256 Stotras अस्मिन् २५६ स्तोत्राणि संगृहीतानि । यद्यपि सन्ति भूरीणि स्तोत्रपुस्तकानि मुद्रितानि भूरिभिस्तथापि न तेष्वियतां स्तोत्ररत्नानां संग्रहः । अस्माभिः पूर्वममुद्रितानां स्तोत्राणां पुस्तकानि काश्यादिक्षेत्रेभ्यो भूयसा प्रयासेन द्रविणव्ययेन च समासाद्य तेभ्यश्च प्रसादगुणयुक्तानि स्तोत्राणि संकलय्य संशोध्य च तानि भाविकजनानां कृतेऽत्र समावेशितानि तदाशास्महे श्रद्धावन्तो जनाः सफलयिष्यन्ति प्रयत्नमस्माकममुमिति । मूल्यम् रू. ... ... ... ... ... | ०-८-० | ०-२-० |
| स्तोत्रमुक्ताहारः—द्वितीयोभागः । स्तोत्रसंख्या २५७—४१६ मूल्यम् रू.... ... ... | ०-८-० | ०-२-० |

६ संस्कारमयूखः—Samskar Mayukha मीमांसकनीलकण्ठभट्टसुतशंकरभट्टकृतः । अत्र संस्काराणां स्वरूपं कालः इतिकर्तव्यता वर्णधर्मा आश्रमधर्माश्च विस्तरतो मूलवचनोपन्यासपुरःसरं निरूपिताः । मूलवचनानि चाप्रतिपत्तिविप्रतिपत्तिसंभावनास्थलेषु क्रमेण पर्यायशब्दप्रदर्शनेन मीमांसकाभिमतन्यायानुसरणेन च व्याख्यातानि । अन्ते कातीयसूत्रानुसारिप्रयोगाश्च दत्ताः । पूर्वं

वाराणस्यादिषु मुद्रितोऽप्ययं वर्णपदवाक्यभ्रंशविपर्ययादिदोषप्रचुरतयाऽप्रविभक्तविषयतया च भृशंदुर्बोधो विपरीतबोधकरश्चासीत्। अस्माभिस्तु ग्रन्थकृतैव पुनः शोधितस्य वर्धितस्य चास्य ग्रन्थस्य पुस्तकमा-साद्य विषयांश्च प्रविभज्य शोधने च महान्तमायासमास्थाय मुद्रितः। मू. रू. ... ... मूल्यं ०—१२—० मार्गव्ययः ०—१—०

७ आचारमयूखः—**Achara Mayukha** नीलकंठभट्टकृतः। प्रातःस्मरणादिशयनान्तस्या ह्निकक्रियाकलापस्य निरूपणपरो ग्रन्थः मूल्यम् रू.। ... ... ... ... ... ०—८—० ०—१—०

८ मनुस्मृतिः—**Manu Smriti** कुल्लूकभट्टकृतटीकया, ग्रन्थान्तरेषु मनुनाम्नोल्लिखितैरि-दानींतनमनुस्मृतिपुस्तकेष्वनुपलभ्यमानैः श्लोकैः, पद्यानां वर्णानुक्रमकोशेन, विषयानुक्रमेण च सहिता। सूक्ष्मेक्षिकया संशोधिता च। मू. रू. ... ... ... ... ... ... १—८—० ०—३—०

९ विदुरनीतिः—**Vidura-Niti with a commentary** संस्कृतटीकोपेता नीति-शास्त्राभ्यासिनां विद्यार्थिनामतीवोपयोगिनी। मू. रू. ... ... ... ... ... ०—४—० ०—१—०

१० वेदान्तरहस्यम्—**Vedanta Rahasya** वेदान्तवागीशभट्टाचार्यविरचितम्। अत्राद्वैत-मतसिद्धान्तो निरूपितः। उपपत्तिश्च प्रदर्शिता। भाषाऽतिसरला प्रौढा च। मूल्यम् रू. ... ०—१—० ०—०—६

११ विशिष्टाद्वैतमतविजयवादः—**Vishishtadvaita-Mata-Vijaya-Vada** नरहरिपण्डितकृतः। अत्र विशिष्टाद्वैतमते परेषामाक्षेपान्निराकृत्य विशिष्टाद्वैत एवोपनिषदां तात्पर्यं व्यवस्थापितम्। मू. रू. ... ... ... ... ... ... ... ०—१—० ०—६—०

१२ रघुवंशमहाकाव्यम्—**Raghuvamsha With Mallinatha's commentary** श्रीकालिदासकृतम् मल्लिनाथकृतसंजीविन्याख्यटीकासहितम्। मू. रू. ... ... ०—१०—० ०—३—०

१३ रघुवंशमहाकाव्यं—Only First Five Sargas of the Same with Commentary मल्लि-नाथकृतटीकोपेतम्। सर्गाः १—५ मूल्यम् रू. ... ... ... ... ... ०—४—० ०—१—०

१४ कुमारसंभवं महाकाव्यम्—**Kumar Sambhav with 3 known commentaries** कविवरश्रीकालिदासविरचितमिदं सप्तमसर्गपर्यन्तं मल्लिनाथकृतसंजीविन्या चारि-त्र्यवर्धनकृतशिशुहितैषिण्या च संवलितं, तत आसमाप्ति सीतारामकृतसंजीविन्याऽलंकृतं सुल-लितैरायसाक्षरैर्मुद्रितमतीव दर्शनीयमस्ति। मू. रू. ... ... ... ... ... १—४—० ०—२—०

१५ कारिकावली सिद्धान्तमुक्तावलीसहिता—**Karikavalee with Siddhanta-Muktavali and other notes** न्यायवैशेषिकदर्शनयोर्व्युत्पित्सूनां कृते प्रणीतेषु प्रकरणग्रन्थेषु सिद्धान्तमुक्तावलीसमुद्भासिता कारिकावली मूर्धाभिषिक्तेत्यत्र न विदुषां वैमत्यं किंतु तत्र दीधितिकृदुपसृतया विवेकसरण्या संक्षेपतः सूक्ष्मतमानामर्थानामुपनिबद्धतया प्रायः खिद्यन्ति नव्या-श्छात्राः, इति तेषामुपकारायास्माभिः प्रायः सर्वेषु विषमस्थलेष्वतिविस्तृतां सरलां सुबोधां च टिप्पणीं पण्डित-जीवरामशास्त्रिभिः कारयित्वा तया सहेयं दृढतरेषु सुचिक्कणेषु पत्रेषु स्थूलाक्षरैर्मुद्रिता। सार्ध-शताभ्यधिकपत्रयुतामपीमां सर्वसौलभ्यायाल्पीयसा मूल्येन वितरामः। मू. रू. ... ... ... ०—७—० ०—१—३

१६ वैशेषिकदर्शनम्—**Vaisheshika Darshana with several commentaries** श्रीशंकरमिश्रकृत—वैशेषिकसूत्रोपस्कार—जयनारायणतर्कपञ्चाननभट्टाचार्यप्रणीत—विवृति—चन्द्रकान्तभट्टाचार्यप्रणीत—भाष्यसहितम्। मू. रू. ... ... ... ... २—०—० ०—३—०

१७ वादार्थसंग्रहः (प्रथमो भागः)—**Vadartha Samgraha** First Part अत्र शेषकृष्णकृतं स्फोटतत्त्वनिरूपणं, श्रीकृष्णमौनिकृता स्फोटचन्द्रिका, गोडबोलेकृतः प्रातिपदिकसंज्ञावादः, वाक्यवादः, हरियशोमिश्रकृता वाक्यदीपिकेति पञ्च ग्रन्थाः संकलिताः। पण्डितानां प्रौढच्छात्राणां च बहुतरमुपकारकः। मू. रू. ... ... ... ... ... ... ... ०—६—० ०—०—६

१८ वादार्थसंग्रहः (द्वितीयो भागः)—Second Part अत्र भवानन्दसिद्धान्तवागीशकृतं षट्कारकविवे-चनम्, जयरामभट्टाचार्यकृतः कारकवादः समासवादश्च, एवकारवादश्चेति चत्वारो ग्रन्थाः सन्ति। मू. रू. ०—६—० ०—०—६

१९ वादार्थसंग्रहः (तृतीयो भागः)—Third Part अत्र कृष्णाचार्यकृतः 'वादसुधाकरः' मौनि-श्रीकृष्णकृतः 'लघुविभक्त्यर्थनिर्णयः' रामकिशोरकृता—'शाब्दबोधप्रकाशिका' चेति शाब्दिकानां त्रयो ग्रन्थाः सन्ति। मू. रू. ... ... ... ... ... ... ०—८—० ०—१—०

